2-3

श्रीराधाकृष्णाभ्यां नमः

# श्रीमद्भागवत-अन्वितार्थप्रकाशिका

( श्रीगंगासहायविरचिता )

## प्रथमतः पञ्चमस्कन्धपर्यन्ता

दशमं फलम्




सम्पादकः

श्रीदलसुखरामात्मजः कृष्णशङ्करः शास्त्री

'अभिनव शुकः' वेदान्ताचार्यः साहित्यतीर्थः श्रीभागवतसुधानिधिः



वि० सं० २०२५ ]

[ ई० सन १९६८

श्रीकृष्णः शरणं मम

श्रीराधाकृष्णाभ्यां नमः

श्रीगंगासहायविरचिता

# श्रीमद्भागवत-अन्वितार्थप्रकाशिका

प्रथमतः पञ्चमस्कन्धपर्यन्ता



सम्पादकः

श्रीदलसुखरामात्मजः कृष्णशङ्करः शास्त्री

अभिनवः शुकः' वेदान्ताचार्यः साहित्यतीर्थः श्रीभागवतसुधानिधिः

ई० सन् १९६८ ] [ वि० सं० २०२५

Rs 50

**प्रकाशकाः**

कृष्णशङ्करः शास्त्री
जशवन्तराय वहोरा
पंडित देवेन्द्र विजय
वसंतलाल मशरूवाला

कृष्णराज ठाकरसी
चतुर्भुजदास सेठ
नवनीतलाल सेठ
रवीन्द्रभाई सेठ

बी० के० बिड़ला
गिरिधारीलाल मेहता
महेन्द्रभाई शाह
इन्द्रकान्त सेठ

सदस्याः—श्रीभागवतविद्यापीठः। "दिव्यगिरिः" सोला अहमदावाद

( सर्वेऽधिकाराः प्रकाशकाधीनाः )

Rs 50

**प्राप्तिस्थानानि**

श्रीमणिलाल गान्धी — खारीपोल रोड नडियाद, गुजरात
श्रीभाईदास मगनलाल — गिरिकुंज ह्युझीसरोड बम्बई–७
श्रीहंसराज द्वारकादास — २२ वालकेश्वर बम्बई–६
श्रीशान्तिलालजी शाह — श्रीमाली सोसायटी : नवरंगपुरा अहमदावाद–९
श्रीप्राणलाल आचार्य — श्रीगुर्जर छात्र सहायक समिति, कर्णघंटा वाराणसी

कार्यालयः—शेठ श्रीचतुर्भुजदास चिमनलाल : श्रीभागवतविद्यापीठ, पूर्णिमा, अहमदावाद—६

मुद्रक—नरेन्द्रकुमार प्राणलाल आचार्य, आचार्य मुद्रणालय, कर्णघण्टा, वाराणसी।

श्रीकृष्णः शरणं मम

# श्रीमद्भागवतम्

श्री अन्वितार्थप्रकाशिका

अथ प्रथमः स्कन्धः

## प्रथमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

॥ ॐ नमो भगवते वासुदेवाय ॥

नन्दधामनि चिदेकरसेऽद्वितीये तस्मिन् पदेऽस्तु मम चित्तमगोचरेऽपि । यत्तद्व्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति ॥ १ ॥
यावन्निरञ्जनमजं पुरुषं जरन्तं संचिन्तयामि सकले जगति स्फुरन्तम् । तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥ २ ॥
प्रेम्णा मुकुन्दपदकञ्जयुगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या । गङ्गासहायजरठो हरितोषहेतोः स्कन्धेऽन्वताय कुरुते प्रथमे प्रयत्नम् ॥ ३ ॥
प्रथमस्यादिमे सर्वशास्त्रसारादिवृद्धये । षट् प्रश्नाः शौनकादीनां श्लोकाः सार्द्धत्रिबाहवः ( २३॥ ) ॥ अनुष्टुभो
( २६॥ ) व्यंग्निऋक्षाण्युवाचेत्येकमीरितम् ॥ ४ ॥

इह खलु भगवति श्रीकृष्णाख्ये भास्वति यथासमयमात्मानं प्रकाश्यान्तर्हिते नानाशास्त्रपुराणेतिहासादीनां सर्वजननिकायत्रायकत्वरूपेष्वर्थेषु यामिकेष्विव कालेन दैवाद्वैगुण्योदायालस्येनेव केषुचित्प्रसुप्तेषु तेष्वेव मध्ये कैश्चित्कैश्चित्प्रत्युत 'जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः॥' इत्यादितोऽवगतैरर्थाकारैरनर्थैश्चौरैरिवोद्भूय तत्तत्प्रणेतृपर्य्यन्तानां सर्वेषां चित्तप्रसादरूपेषु महाधनेष्वपहृतेषु 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।' इति, 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्।' इति श्रीगीतोक्तनिमित्तलब्धलक्षणतया यादोमृगपक्षिमनुष्यदेवेषु मत्स्यवराहहंसरामवामनरूप इव 'कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह। कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः।' इति वचनव्यंजितश्रीकृष्णप्रतिमूर्तिताकत्वेन ममाहमेवाभिरूपः कैवल्यादिति निरस्ततद्भिनान्यसादृश्यतया श्रीशुकपरीक्षिद्भ्यां श्रीकृष्ण एव पुराणेषु श्रीमद्भागवताख्यशास्त्रचूडामणिरूपोऽवततार। तत्प्रेरणया प्रथमत एवाचार्यचूडामणिः श्रीकृष्णद्वैपायनः स्वाभीष्टदैवतध्यानलक्षणं मङ्गलमाचरति—जन्माद्यस्येति। 'अत्र सर्वमपि भागवतं बहुभिष्टीकाकारैः स्वस्वमतानुसारेण बहुधा व्याख्यातम्। तत्रापि प्रथमश्लोकस्तु चिन्तामणिरिवानंतार्थदः स्वस्वमतिकौशलेन प्रकृतानुपयुक्तबहुविषयपरत्वेनापि कैश्चिद्व्याख्यातः। तत्र भारतं कर्ममीमांसोपबृंहकं भागवतं तु ब्रह्ममीमांसोपबृंहकमिति मन्यमानैरस्माभिस्तु श्रीभागवतप्रतिपाद्या मुख्या विषया निराकारसाकारब्रह्मणी। तत्प्राप्त्युपायभूतौ भक्तियोगौ तदुपकारकः कर्मयोगश्चेति तत्परतया यथाशक्ति सर्वमताविरोधेन व्याख्यायते। अर्थेषु अन्वयात् अकार्येभ्यश्च इतरतो हेतोः यतः परमेश्वरात् अस्य जन्मादि भवति। यश्च अभिज्ञः स्वराट् च यश्च हृदा आदिकवये ब्रह्म तेने। यत् तत्र सूरयोपि मुह्यन्ति। यथा तेजोवारिमृदां विनिमयो भासते तथा यत्र त्रिसर्गः अमृषा भासते तं स्वेन धाम्ना सदा निरस्तकुहकं परं सत्यं धीमहीत्यन्वयः।

अर्थेषु कार्येषु परमेश्वरस्य सद्रूपेणान्वयादकार्येभ्यश्च खपुष्पादिभ्यः इतरतः तद्व्यतिरेकाद्धेतोः यतः परमेश्वरात् अस्य विश्वस्य जन्मादि जन्मस्थितिभङ्गं भवति यद्वा अन्वयशब्देनानुवृत्तिरितरशब्देन व्यावृत्तिः। अनुवृत्तत्वात् त्वद्रूपं ब्रह्म कारणं मृत्युवर्णादिवत्। व्यावृत्तत्वाद्विश्वं कार्यं घटकुण्डलादिवत् इत्यर्थः। यद्वा सावयवत्वादन्वयव्यतिरेकाभ्यां निर्णीतं यदस्य जन्मादि तद्यतो भवति इति सम्बन्धः। यद्वा अन्वयादुपादानकारणात् इतरश्च निमित्तकारणादुपादाननिमित्तोभयरूपाद्यतोऽस्य जन्मादि भवति। यश्च अभिज्ञः चैतन्यात्मा यद्वा अर्थेषु सृज्यवस्तुषु अभिज्ञः इत्यन्वयः। यः स्वराट् स्वेनैव राजते। स्वतः सिद्धज्ञान इत्यर्थः। यः हृदा मनसैव आदिकवये ब्रह्म वेदं स्वतत्त्वं वा तेने प्रकाशितवान्। यत् यस्मिन् ब्रह्मणि सूरयोऽपि मुह्यन्ति। मुह्यन्तीत्यादि परमेश्वरविशेषणं वा। यथा तेजोवारिमृदां विनिमयः अन्यस्मिन्नन्यावभासः अधिष्ठानसत्तया सद्वत्प्रतीयते। तथा यत्र यस्मिन् त्रिसर्गः त्रयाणां मायागुणानां तमोरजःसत्त्वानां सर्गो भूतेन्द्रियदेवतारूपो मृषा सन् अमृषा सत्यः यत्सत्यतया मिथ्यासर्गोऽपि सत्यवत्प्रतीयते। तत्र तेजसि किरणे वारिबुद्धिर्मृगतृष्णायाम्। मृदि जलबुद्धिः काचादौ। मृदि तेजोबुद्धी रत्नादौ। इत्याद्यन्यदपि ज्ञेयम् इत्यध्यारोपः। अथापवादः। स्वेन स्वस्वरूपेणैव धाम्ना तेजसा सदा निरस्तं कुहकं मायारूपं कपटं यस्मिन् तं परं प्रकृष्टं सत्यं कालत्रयेऽप्यबाध्यं परमेश्वरं शिष्यसहिता वयं धीमहि ध्यायेम। ध्यायतेर्लिङि छान्दसम् 'व्यत्ययो बहुलम् इतिव्यत्ययादात्मनेपदम्। 'छन्दस्युभयथा' इति उभयसंज्ञतया आर्द्धधातुकत्वाच्छबभावः। सार्वधातुकत्वात्सीयुटः सलोपः। ध्यायतेः संप्रसारणं च' इति क्विपि विहितमपि बाहुलकात् लिङ्यपि संप्रसारणम्। पूर्वरूपम् 'हल इति दीर्घः। अत्र गायत्र्या च समारम्भ इति लक्षणोक्तेः। गायत्र्यर्थोऽपि दर्शितः। सर्वगायत्रीमन्त्राव्यभिचारि धीमहिपदं च प्रयुक्तम्, अत्यन्तगोप्याया गायत्र्याः प्रकाशरूपेण पठनानर्हतया गायत्र्यर्थेन प्रारम्भः। तत्र जन्माद्यस्य यत इत्यनेन सवितुरित्यस्यार्थ उक्तः। यतः सूते इति सविता अत्र स्थितिप्रलयावप्युपलक्षणीयौ। परमित्यनेन वरेण्यपदस्यार्थः उक्तः उभयोरपि श्रेष्ठवाचकत्वात्। सत्यमित्यनेन भर्गपदस्यार्थः उक्तः। यतो ब्रह्मैव सदन्यदसत्यं तत्पदार्थस्तु विशेषणतया न स्वतन्त्रः। यद्वा तत्प्रसिद्धं स्वराडित्यनेन देवपदस्यार्थ उक्तः। यतो दीव्यति स्वतः प्रकाशते इति देवः। स्वेनात्मनैव राजते इति स्वराट्। प्रकाशोऽत्र ज्ञानं तस्य द्योतनात्मकत्वात्। यदुक्तं 'ज्योतिर्वज्ज्ञानानि भवन्ति' इति। तेन स्वतः सिद्धज्ञानः स्वप्रकाशः। अन्येषां तु तदधीनप्रकाशतया न स्वप्रकाशता। तेने ब्रह्मेत्यादिपदपञ्चकेन धियो यो नः प्रचोदयात् इति वाक्यस्यार्थ उक्तः। यो हि ब्रह्मणोऽपि वेदप्रदानेन प्रज्ञां प्रावर्तयत् स एव सर्वेषामस्माकं जीवानां बुद्धिवृत्तीः प्रवर्त्तयति न त्वन्य इति वाक्यार्थः। धीमहीति तुल्यमेव। अत्र श्लोके सर्गादीनि दश लक्षणान्यपि दर्शितानि। तथाहि 'जन्माद्यस्य यत' इत्यनेन

नानि तृतीयचतुर्थपञ्चमस्कन्धव्युत्पाद्यानि सूचितानि। 'तेने ब्रह्म हृदा य आदिकवय' इत्यनेन भक्तानुग्रहलक्षणं पोषणं षष्ठस्कन्धव्युत्पाद्यं सूचितम्। 'मुह्यन्ति यत सूरय' इत्यनेन कर्मवासनारूपा ऊतिः सप्तमस्कन्धव्युत्पाद्या सूचिता। मन्वन्तरेशानुकथने अष्टमनवमस्कन्धप्रमेये स्थानमध्ये एवान्तर्भूते तेजोवारिमृदां विनिमयः इत्यनेन निरोधो दशमस्कन्धार्थो दर्शितः। 'धाम्ना स्वेन सदा निरस्तकुहकम्' इत्यनेन मुक्तिरेकादशस्कन्धार्थो दर्शितः। 'सत्यं पर'मित्यनेनाश्रयो द्वादशस्कन्धार्थो दर्शितः। धामहीत्यात्मनेपदोत्तमपुरुषप्रयोगादधिकारी प्रथमस्कन्धार्थः। तेनैव ध्यानोपलक्षितसाधनानुष्ठानरूपो द्वितीयस्कन्धस्यार्थः। इति कृत्स्नभागवतार्थसूचनम्। धीमहीति तत्पदार्थत्वं पदार्थतदैक्यकथनद्वारेण शास्त्रस्य विषयो दर्शितः। तत्र श्रवणं मननं च कृतवतस्तृतीयं निदिध्यासनमिह प्रतिपाद्यते। मननवतो विजातीयप्रत्ययनिवारणस्य मनोनिग्रहद्वारा व्युत्पाद्यमानत्वात् चतुर्लक्षणमीमांसारूपत्वं चास्य सूचितम्। तथाहि पूर्वार्द्धेन जन्माद्यस्य यत इति न्यायः साक्षादेव दर्शितः। अन्वयादित्यनेन तत्तु समन्वयादिति। अर्थेष्वभिज्ञ इत्यनेन ईक्षतेर्नाशब्दमिति। तेने ब्रह्म हृदेत्यादिना शास्त्रयोनित्वादिति। मुह्यन्ति यत् सूरय इत्यनेन एतेन सर्वे व्याख्याता इत्यन्तो न्यायकलापः सूचित इति समन्वयाध्यायो व्याख्यातः। तेजोवारिमृदामित्यादिना तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादिन्यायसूचनादविरोधाध्यायार्थः। धीमहीत्यनेन सहकार्यान्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदित्यादिन्यायसूचनात् साधनाध्यायार्थः। धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परमिति फलाध्यायार्थः। अविद्या तत्कार्यनिवृत्त्युपलक्षितपरमानन्दरूपावशेषात् एवं सति पारमहंसी संहितेति समाख्योपपद्यते। परमहंसानां वेदान्तवाक्यार्थनिदिध्यासनपरत्वात्। अत्रत्योपाख्यानानां तत्तात्पर्य्यकत्वात्। अत्र स्वरूपतटस्थलक्षणादिकं टीकाविशेषभागे स्फुटयिष्यत इति प्रथमोऽर्थः। अत्र सात्वतास्तु वर्णयन्ति। पञ्चीकृतपञ्चमहाभूतोपहितं शुद्धचैतन्यं तदभिमानिचिदाभासविराड्जीवान्तर्य्यामिरूपम् ओत इत्यनुरुद्ध इति चाख्यायते। एवमपञ्चीकृतमहाभूतोपहितं शुद्धचैतन्यं तदभिमानिचिदाभासहिरण्यगर्भान्तर्यामिरूपम्। अनुज्ञाता इति प्रद्युम्न इति चाख्यायते। एवं स्थूलसूक्ष्मभूतकारणीभूतं यन्मायात्वकम् अव्याकृतं तदुपहितं शुद्धचैतन्यं तन्निष्ठचिदाभासोपलक्षितम्। अनुज्ञात इति संकर्षण इति चाख्यायते। अनुपहितं तु चैतन्यं सर्वानुस्यूतसन्मात्रं सर्वसाक्षिपरमानन्दघनम् अविकल्प इति वासुदेवः इति चाख्यायते। संकर्षणप्रद्युम्नानिरुद्धानामपि वासुदेवत्वं वर्तत एव। उपाधिकृतः केवलं नामविशेषः। अत्र वासुदेवः परमात्मा संकर्षणो जीवः प्रद्युम्नो मनः अनिरुद्धोऽहंकार इति प्रक्रिया तु नादरणीया तद्वचनविरोधात् श्रुतिविरोधाच्चेत्याद्युत्पत्त्यसंभवादित्य-

धिकरणे व्याख्यातम्। एवंस्थिते श्लोकयोजना। अन्वयात् कार्यमात्रेऽन्वितात् इतरतः पृथगपि स्थितात्। यतः अस्य ब्रह्माण्डस्य जन्मादि भवति। यश्चार्थेष्वभिज्ञः सर्वज्ञः यश्च प्रोतसंज्ञः अनिरुद्धाख्यः स्वराट् ब्रह्माण्डावच्छिन्नचिदाभासो हि विराड् जीवः। अयं तु तद्बिम्बभूतस्तदन्तर्यामी स्वयमेव राजत इति स्वराट् बिम्बभूतत्वेन अन्यानपेक्षत्वात्। यश्च अनुज्ञातसंज्ञः प्रद्युम्नाख्यः। आदिकवये सूक्ष्मभूतावच्छिन्नचिदाभासाय हिरण्यगर्भसूत्रादिसंज्ञकाय जीवाय ब्रह्म वेदं तदन्तर्यामिरूपेण बिम्बभूतो यस्तन्मनसैव तेने इति हिरण्यगर्भवैलक्षण्यं स्पष्टमेवोक्तम्। यत् यत्र त्रिगुणात्मकमायाप्रतिबिम्बस्य जगत्कारणस्य बिम्बभूते सर्वान्तर्यामिणि संकर्षणाख्ये सूरयोऽपि मुह्यन्ति भ्राम्यन्ति। स्थूलसूक्ष्मप्रपञ्चद्वयं भ्रान्त्या कल्पयन्ति प्रधान-परमाण्वादिरूपेण वा भ्राम्यन्ति। यत्र च वासुदेवाख्ये तेजोवारिमृदां यथा विनिमयः तथा। त्रिविधः सर्गः त्रिसर्गः आध्यात्मिक आधिभौतिक आधिदैविकश्चेति स यत्र मृषा सर्वथा असन्नेत्यर्थः। अपह्नववचनो मृषाशब्दः। त्रयाणमनिरुद्ध-प्रद्युम्नसंकर्षणोपाधीनां सर्गः संसर्गो यत्र मृषेति वा तदेवमनुपहितत्वेन स्वेन धाम्ना सदा निरस्तकुहकं निवृत्ता विद्या तत्कार्यं बिम्बभूतत्वेनोपाधितद्धर्मैरसंस्पृष्टम्। अत एव परं सत्यं वासुदेवाख्यं ध्यायेमेति निर्गलितोऽर्थः। अत्रानिरुद्ध-पुरुषावतारी नारायणः प्रलयोदकशायी भुवनकमलमूलभूत इति। अथ सविशेषब्रह्मपक्षः तत्त्वं च अप्राकृतसत्त्वादिगुणवत्त्वम्। अनन्तकल्याणगुणपूर्णत्वं च तत्र पूर्वार्द्धं समानमेव। उत्तरार्द्धे तु ननु ध्यानविषयत्वेन साकारताऽभिप्रेता आकाराणां च त्रिगुणसृष्टत्वेनानित्यत्वप्रसक्तिरित्यत आह—तेज इति। यथा अज्ञानां तेजसि वारीदमिति वारिणि स्थलमिति मृदि काचादौ च वारीदमिति बुद्धिः। तथैव यत्र पूर्णचिन्मयाकारे त्रिसर्गः त्रिगुणसर्गोऽयमिति बुद्धिर्मृषैवेत्यर्थः। सच्चिदानन्दविग्रहत्वेन साकारत्वेऽप्यनित्यत्वाभावात्। ननु तत्रापि केचिद्विवदन्ते इत्यत आह—धाम्ना स्वरूपशक्त्या निरस्ताः कुहकाः कुतर्काः येन तम्। 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।' इति वचनात्। अयमर्थः सर्वेषां वैष्णवानामनुकूलः। अथवा सविशेषं ब्रह्म श्रीकृष्णाख्यं श्रीभागवते तस्य मुख्यतया प्रतिपादनात् अतस्तत्परतयाऽपि व्याख्यायते। अस्य श्रीभगवतो यतो यत्र वसुदेवगृहे जन्मादि आदिशब्देन ऐश्वर्यप्रकटनपूर्ववृत्तकथनादिकं ततः इतरतश्च इतरत्र नन्दगृहे स एवायं भगवान् अनु अयात् अगच्छत्। यश्च भगवान् अर्थेषु कंसवञ्चनव्रजवात्सल्यादिषु अभिज्ञः। स्वराट् स्वतन्त्रः यश्च आदिकवये ब्रह्मणे हृदा संकल्पमात्रेणैव ब्रह्म ब्रह्मात्मकं वत्सबालकादि तेने प्रकाशयामास। यत् यत्र योगमायावैभवे सूरयो भवनारदादयोऽपि मुह्यन्ति। यथा लौकिकदेहेषु तेजोवारिमृदां तेजोजलभूमिरूपाणां तेजोऽबन्नाख्यानां दृश्यभूतानामुपलक्षणतया वाय्वाका-शयोरपि च विनिमयः परस्परमेलनम्। यथा यथावत् सत्यरूपोऽस्ति तथा यत्र भगवति त्रिसर्गः त्रिवृत्करणेन देहसर्गः त्रिभिर्गुणैः सर्गो वा अनभिज्ञैर्मृषैवोच्यते। भगवद्विग्रहस्य चिदेकरूपस्य भूतसृष्टत्वात्। भगवद्विग्रहस्य दृश्यत्वं तु भगवदिच्छयैव। अत एव भागवतामृतधृतनारायणाध्यात्मवचनं 'नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः। तामृते परमानन्दं कः पश्येतामितं प्रभुम्।' इति तत्रत्या कारिकाः च ततः स्वयंप्रकाशत्वशक्त्या स्वेच्छाप्रकाशया सोऽभिव्यक्तोऽपि भवेन्नेत्रे न नेत्रविषयत्वतः इति। स्वेन धाम्ना श्रीमथुराख्येन सर्वत्र तदानीं कृपया दर्शितेन श्रीविग्रहेण च सदा निरस्तं कुहकं जीवानामविद्या येन तं परं सत्यं सद्भ्यो हितं श्रीकृष्णं धीमहीति। अथ भक्तियोगपक्षः यतो भक्तियोगादाद्यस्य भगवतो जन्म भक्तकर्तृकदर्शनार्थं प्रादुर्भावः तथा इतरतः इतरेष्वर्थेषु निष्कामकर्मयोगज्ञानयोगेष्वन्वयात् यत्साहित्याच्च आद्यस्य जन्म उपासकेषु परमात्मत्वेन ब्रह्मत्वेन च साक्षात्कारो भवेत् इत्यन्वयः। यतोऽयं भक्तियोगः ज्ञानयोगादिषु अपि अभितः सर्वभावेन ज्ञायते इत्यभिज्ञः। "घञर्थे कविधानम्" इति स्थानादिभिन्नेष्वपि दर्शनात् कर्मणि कः। अभितोज्ञा ज्ञानं यस्य इति आर्षो वा प्रयोगः। ज्ञानयोगादेर्भक्तियोगं विना अकिञ्चित्करत्वात् "नैष्कर्म्यमप्यच्युतभाववर्जितम्" इत्याद्युक्तेः। भक्तियोगस्तु स्वराट् स्वतन्त्रः तत्र भगवत्कृपया स्वयमेवापरोक्षज्ञानोदयात्। "अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्'। इति विधिवाक्यात्। तथा "यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा"। इत्यादिवाक्याच्च यश्च भक्तियोगः ब्रह्म हृदि यस्य ब्रह्मणि हृदयस्येति वा तेने ब्रह्महृदा नारदेन आदिकवये व्यासाय तेने कृपया प्रकाशितः। यत् यत्र सूरयो वसिष्ठादयोऽपि मुह्यन्ति। यत्र त्रिसर्गः सत्त्वादिगुणभेदात्त्रैविध्यं मृषा अवास्तवः। वस्तुतः भक्तेर्गुणातीतत्वात् यथा दुग्धादौ तेजोवारिमृदां विनिमयो मेलनं निस्तेजोऽपि निर्जलमपि निर्धूलिकमपि दुग्धं तप्तमिति जलवदिति मलिनमिति तत्तन्मेलनाद्भवति। तथैव त्रिगुणातीतो भक्तियोगः पुरुषवर्तिसत्त्वादिगुणयोगात् सात्त्विको राजसस्तामसश्चोच्यते। न चात्र प्रमाणाभाव इति शंक्यम्। स्वेन धाम्ना स्वस्वरूपेणालौकिकमाधुर्य्यमयेन भक्तानामनुभवगोचरीभूतेनैव निरस्ताः कुहकाः कुतर्कवन्तो येन तं न ह्यनुभूयमानेऽर्थे प्रमाणा-पेक्षेति भावः। तं सत्यं सतां हितं परमुत्कृष्टं निर्गुणं भक्तियोगं धीमहि। अथ ज्ञानयोगपक्षः। तत्र वस्तुतो ज्ञानं परमात्मैव तत्परतया त्वादिपक्षो व्याख्यात एव। परन्त्वत्र ज्ञानयोगः साधनरूपः साधनचतुष्टयसंपत्तेरारभ्य वेदान्तश्रवणमनननिदिध्या-सनादिरात्मसाक्षात्कारपर्यन्तो व्यापारः। यतो यत्र ज्ञानयोगे आदौ अन्वयात् अध्यारोपात् इतरतः अपवादाच्च हेतोः अस्य

जगतो जन्मादि वर्ण्यते। अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपंच्यत इत्युक्तेः। अग्रे च यः सर्वेष्वर्थेष्वभिज्ञः करणरूपपरब्रह्मज्ञानेन कार्यमात्रस्य वेदयिता। यथा सौम्यैकेन मृत्पिण्डेन ज्ञातेन सर्वं मृन्मयं विज्ञातं स्यादित्यादिश्रुतेस्तथा प्रतिपादकः। अन्तर्भावितण्यर्थोऽत्र जानाति। यश्च स्वराट् कर्माद्यनपेक्षः मुख्यो वा यश्च ब्रह्महृदा ब्रह्मणा आदिकवये नारदाय तेने प्रकाशितः। यद्वा छान्दोग्यसप्तमप्रपाठके सनत्कुमारेण नारदाय प्रकाशितः। यद्वा कठवल्लीषु यमेन नाचिकेतसे प्रकाशितः आत्मसाक्षात्कारे जाते तु यथा तेजोवारिमृदां तेजोजलभूमिरूपाणां भूतानां विनिमयो मेलनं त्रिवृत्करणं शास्त्रे वर्णितमपि वास्तवाभावान्मृषा तथा यत्र त्रयाणां श्रवणमनननिदिध्यासनानां सर्गः आत्मसाक्षात्कारे मुख्योपकारकोऽपि वस्तुतो मृषैव। स्वेन धाम्ना स्वरूपसाक्षात्कारेण सदा निरस्तं कुहकं माया तत्कार्यं च येन तम्। सत्यं सद्भ्यो मुमुक्षुभ्यो हितं परं प्रकृष्टं साधनं ज्ञानयोगं धीमहि। अथ निष्कामकर्मयोगपक्षः। यतो निष्कामकर्मणः अन्वयादितरतश्चान्वयव्यतिरेकाभ्याम् अर्थेषु चतुःषु पुरुषार्थेषु आद्यस्य प्रथमपुरुषार्थस्य धर्माख्यस्य जन्म भवति। यश्च अभिज्ञः अभिलाषिणो ज्ञा विद्वांसो यस्मिन् सः। "प्रादिभ्यो धातुजस्येति" बहुव्रीहिः। तथा यः स्वराट् मुख्यपुरुषार्थमोक्षोपकारकत्वात् प्रथमत्वाच्चेति यश्च ब्रह्म हृदा जैमिनिना आदिकवये मुख्यधीमते स्वशिष्याय तेने। यत् यत्र च सूरयोऽपि मुह्यन्ति। यत्र च कर्मयोगो होमादिषु तेजोऽग्निः वारि जलं मृच्छब्देन पार्थिवं हविरादि येषां यथा यथावत् मंत्रादिपूर्वकं विनिमयः उपयोगो भवति। यत्र च नित्यनैमित्तिकरूपे द्विविधे तृतीयस्य काम्यस्य सर्गः करणं त्रिसर्गः मृषैव अनुचित एव। नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयमिति मोक्षे द्विविधस्यैवोपयोगात्। संख्याशब्दानां वृत्तौ त्र्यंशादौ पूरणपरत्वम्। स्वेन धाम्ना धर्माख्यापूर्वेण निरस्तं कुहकं कामनारूपं येन तं परं सत्यं निष्कामकर्मयोगं धीमहीति। श्लोकद्वये शार्दूलविक्रीडितं छन्दः॥ १॥

**धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।**
**श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्॥ २॥**

एवं परमेश्वरमनुस्मृत्याविर्भावयिषितस्य श्रीभागवतस्य सर्वशास्त्रेभ्यः श्रैष्ठ्यमनुबन्धचतुष्कदर्शनमुखेन दर्शयति—धर्म इति। महामुनिः श्रीनारायणः तेन प्रथमं संक्षेपतः चतुःश्लोकीरूपेण ततो विस्तरेण च कृते प्रकाशिते अत्र अस्मिन् श्रीमति भागवते प्रोज्झितं प्रकर्षेण उज्झितं कैतवं कपटं फलाभिसंधिरूपं यस्मिन् सः। प्रशब्देन मोक्षाभिसंधिरपि निरस्तः। निर्मत्सराणां परोत्कर्षासहनं मत्सरस्तद्रहितानां सतां शिष्टानां परमः ईश्वराराधनलक्षणः धर्मः निरूप्यते। अत्र शिष्टा अपि काम्ये कर्मणि प्रवर्त्तमानाः कश्चिन्मत्सरमवलम्बन्ते तद्व्यावृत्त्यर्थं निर्मत्सराणामिति तथा अत्र शिवदं परमसुखप्रदं तापत्रयस्य आध्यात्मिकादिकस्य उन्मूलनं नाशकं वास्तवं परमार्थभूतं वस्तु वेद्यं यद्वा वस्तुतोंशो जीवो वस्तुतः कार्यं जगच्च तत्सर्वं वस्त्वेव न ततः पृथगिति वेद्यम्। त्रयस्तापाश्च आध्यात्मिक आधिभौतिक आधिदैविकश्च। तत्राध्यात्मिको द्वेधा शारीरो मानसश्च। आद्यो ज्वरादिजः द्वितीयः शोकादिजः। आधिभौतिको मानुषपश्वादिजः आधिदैविको यक्षभूतादिजः। परैः शास्त्रैः तदुक्तसाधनैर्वा ईश्वरो हृदि किंवा सद्यः एवावरुद्ध्यते स्थिरीक्रियते। वाशब्दः कटाक्षे। किंतु विलम्बेन कथंचिदेव। अत्र तु कृतिभिः पुण्यशालिभिः शुश्रूषुभिः श्रोतुमिच्छद्भिरेव तत्क्षणादेवावरुद्ध्यते। यद्वा अत्र ईश्वरः कृतिभिः शुश्रूषुभिः सद्यस्तत्क्षणादेव हृद्यवरुध्यते। अतः परैः शास्त्रैः किं वा साध्यमिति। अत्र महामुनिकृते इति कर्तृतः श्रैष्ठ्यम्। धर्मः प्रोज्झितकैतव इति कर्मकाण्डेभ्यः निर्मत्सराणामित्यधिकारितः वेद्य वास्तवमित्यादिना ज्ञानकाण्डशास्त्रेभ्यः चतुर्थपादेन देवकाण्डशास्त्रेभ्यः श्रैष्ठ्यं दर्शितम्। अत्र परमात्मरूपं वस्तु विषयः। तापत्रयोन्मूलनं प्रयोजनं सन्तोऽधिकारिणः विषयप्रयोजनयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः। इत्यनुबन्धा दर्शिताः। अन्यत्र शास्त्रे ईश्वरे मनो निरुध्येत इत्येव पुरुषार्थः। अत्र तु ईश्वरो हृद्यवरुद्ध्यते अतो निर्गन्तुं न शक्नोति। तच्चावरोधनं सद्य एव विनापि श्रद्धयेति काऽपि श्रीकृष्णाकर्षिणीयं महाविद्येति सूच्यते। अत्रेतिपदस्य त्रिरुक्तिरवधारणार्था। अत्रैवेश्वरोऽवरुद्ध्यते। अत्रैव वास्तवं वस्तु वेद्यम्। अत्रैव प्रोज्झितकैतवो धर्मो निरूप्यत इति॥ २॥

**निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्। पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः॥३॥**

निगमेति। हे रसिकाः! हे भावुकाः! रसविशेषभावनाचतुराः अहो आश्चर्यं शुको मुनिः पक्षिविशेषश्च। तस्य मुखात् भुवि गलितं नारायणब्रह्म नारदव्यासाख्यशाखापरम्परया शुकेन प्राप्तं न तूच्चपातात्स्फुटितं शुकमुखस्पृष्टं फलममृतस्वादु भवति इति प्रसिद्धेः। अमृतं परमानन्दः स एव द्रवो रसः तेन संयुतं रसं रसस्वरूपमेव त्वगस्थ्यादिहेयांशरहितमित्यर्थः। अत्र रसतादात्म्यविवक्षणात् रसं फलमिति सामानाधिकरण्यम्। अतो मत्त्वर्थस्याविवक्षणान्न मतुप्। निगमो वेद एव कल्पतरुः तस्य फलम् इदं भागवतम् आलयं लयो मोक्षस्तमभिव्याप्य मुहुः पिबत। अतो मोक्षेऽपीदं न त्याज्यम्। अत्र रसमात्रोक्तौ गलितस्य रसस्य पातुमशक्यत्वम्। फलमात्रोक्तौ पानासंभवो हेयांशप्रसक्तिश्चेत्युभयमुक्तम्। द्रुतविलम्बितं छन्दः॥ ३॥

नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः। सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥ ४ ॥

नैमिष इति। अस्य श्लोकस्यादौ ओमिति पठ्यते स मङ्गलार्थः। अनिमिषो विष्णुरलुप्तदृष्टित्वात् तस्य क्षेत्रे नैमिषे नैमिषाख्ये। अयं शब्दः तालव्योपधो वा तन्नामकारणं टीकान्तरे द्रष्टव्यम्। शौनकादयः ऋषयः स्वः स्वर्गे गीयत इति स्वर्गायो हरिः। कर्मणि घञ्। स एव लोकः भक्तानां निवासस्थानं तस्मै तत्प्राप्तय इत्यर्थः। सहस्रं समाः संवत्सराः अनुष्ठानकालो यस्य तत् सत्रं सत्रसंज्ञकं कर्मोद्दिश्य आसत उपविविशुः। यद्वा आसत अकुर्वतेत्यर्थः। अत्र यथा पशोरालभनमालभते पार्ष्णिग्रहणमुपयान्तीत्यादिषु धात्वर्थस्य कर्मणैवोक्तत्वादविवक्षया कृञर्थमात्रविवक्षा एवमत्र धात्वर्थस्योपवेशनस्यानुपयुक्तस्याविवक्षणेन प्रत्ययोच्चारणमात्रार्थतया सामान्यकृञर्थे एवाऽऽसधातुः ॥ ४ ॥ त इति। तुः पादपूर्त्तौ प्रातःकाले नित्यकर्मणि हुता एव पुनर्नैमित्तिककर्मणि हुता अग्नयो यैः ते मुनयः एकदा आसीनं सत्कृतं सूतम् आदरात् इदं वक्ष्यमाणं पप्रच्छुः ॥ ५ ॥ त्वयेति। हे अनघ सूत! त्वया सेतिहासानि इतिहासो भारतादिस्तत्सहितानि पुराणानि उत समुच्चये यानि धर्मशास्त्राणि तान्यपि त्वया खलु निश्चितम् अधीतानि आख्यातानि व्याख्यातान्यपि ॥ ६ ॥

किंच—यानीति। हे सूत! यानि पुराणादीनि विदां विदुषां श्रेष्ठो भगवान् बादरायणः व्यासः वेद जानाति तथा परावरे निर्गुणसगुणे ब्रह्मणी परं ब्रह्म अवरं प्रकृत्यादि इति वा विदन्तीति ते अन्ये मुनयश्च यानि विदुः ॥ ७ ॥ वेत्थेति। हे सौम्य साधो! तेषां व्यासादीनामनुग्रहात् त्वं तत्सर्वं पुराणादिकं तत्त्वतः वेत्थ जानासि। यतो गुरवः स्निग्धस्य शिष्यस्य गुह्यं रहस्यमपि ब्रूयुः उत ब्रूयुरेव अतस्तैः तुभ्यं रहस्यमपि कथितमित्यर्थः ॥ ८ ॥ तत्रेति। हे आयुष्मन्! तत्र पुराणादिषु यत्पुंसाम् अञ्जसा शीघ्रं ग्रन्थार्जवेन वा एकान्ततः श्रेयः साधनं भवता विनिश्चितं तत् नः अस्मान् शंसितुमर्हसि ॥ ९ ॥ ननु बहुशास्त्रश्रवणेन ते निश्चिन्वन्तु इत्याशङ्क्याहुः—प्रायेणेति। हे सभ्य साधो! अस्मिन्कलौ युगे जनाः प्रायेण अल्पायुषः केऽपि दीर्घायुषश्चेत् मन्दा अलसा केपि अमन्दाश्चेन्मन्दमतयः केऽपि सुमतयश्चेन्मन्दभाग्याः केऽपि सभाग्याश्चेदुपद्रुताः रोगादिभिः। यद्वा अल्पायुषस्तत्रापि मन्दा इत्यादि ॥ १० ॥ भूरीणीति सार्द्धम्। भूरीणि कर्माणि अनुष्ठेयानि येषु तानि श्रोतव्यानि शास्त्राणि तदुक्तसाधनानि वा विभागशः अनुष्ठानप्रकारभेदैः। शास् आर्षः। भूरीणि बहूनि सन्ति। अतः हे साधो! अत्र एतेषु श्रोतव्येषु यत्सारं येन च आत्मा बुद्धिः संप्रसीदति सम्यगुपशाम्यति तत् श्रद्दधानानां नोऽस्माकं ब्रूहि। तच्च श्रवणकीर्त्तनादिकमित्यग्रे ज्ञास्यते ॥ ११ ॥ सूतेति सार्द्धम्। हे सूत! ते तत्र भद्रमस्तु इत्यौत्सुक्येन आशीर्वादः। वस्तुतस्तु भद्रं ते भद्रं व इतीदृशं वाक्यालङ्कार इव बहुस्थलेषूपलभ्यते। तस्य प्रकृतार्थे त्वल्प एवोपयोग इति शैलीविशेष एवायं वात्सल्यादिद्योतकः। स्वच्छन्दवाच्यो भगवानस्त्येषां ते सत्वन्तो भक्ताः। त एव सात्वन्तः। स्वार्थेऽण्। तस्याश्रवणमार्षं तेषां सात्वताम्। यद्वा सत्वन्तो भक्ताः सन्त्यस्य सत्वान् विष्णुः स भजनीयो येषां ते सात्वताः। भक्तिरिति सूत्रेणाण तेषां सात्वताम्। नुडभाव आर्षः। यद्वा सातिः सुखार्थः सौत्रो धातुः। ततः क्विपि सात् विष्णुः सोऽस्ति येषां ते सात्वतां भक्तानां पतिः भगवान् वसुदेवस्य भार्यायां देवक्यां यस्य कार्यस्य चिकीर्षया जातः तत् कार्यं त्वं जानासि। अतः अङ्ग हे सूत! तत् कार्यं शुश्रूषमाणानां नोऽस्माकम् अनुवर्णितुं वर्णयितुम् अर्हसि। वर्णयतेरदन्तपाठसामर्थ्याण्णिज्विकल्पे तदभावपक्ष इदम् ॥ १२ ॥ यस्येति अर्द्धम्। यस्य हरेः अवतारोऽपि भूतानां क्षेमाय पालनाय भवाय समृद्धये च भवति किं पुनः साक्षात्स एव ॥ १३ ॥ आपन्न इति। घोरां संसृतिं संसरणम् आपन्नः। विवशो मरणकाले मृत्युवशगोऽपि यस्य नाम गृणन् जनः अजामिलतुल्योऽपि ततः संसृतेः सद्यो विमुच्येत तत् यतो भगवन्नाम्नोभयमपि अविद्यालक्षणं तमः भयमूलं महाकालो वा स्वयमेव बिभेति ॥ १४ ॥ यदिति। हे सूत। यस्य पादः संश्रयो येषाम् अत एव प्रशमोऽयनं वर्त्माश्रयो वा येषां ते मुनयः उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यः पुनन्ति। स्वर्धुनी गंगा तस्या आपस्तु तत्पादान्निःसृता ननु तत्रैव तिष्ठन्ति। अतस्तत्सम्बन्धेनैव पुनन्त्योऽपि अनुसेवया पुनन्ति ननु सद्यः इति मुनीनामुत्कर्षः। स्वर्धुन्याप इत्यत्र पदद्वयं चेत्संधिरार्षः। ऐकपद्ये समासान्ताभाव आर्षः ॥ १५ ॥ को वेति। शुद्धिः आत्मप्रसादः तत्कामः को वा जनः पुण्यः श्लोको यशो येषां तैः मनुव्यासादिभिरीड्यानि स्तुत्यानि कर्माणि यस्य तस्य भगवतः कलिमलापहं यशः न शृणुयात्। अपि तु सर्व एव शृणुयात् ॥ १६ ॥ तस्येति। लीलया कलाः ब्रह्मरुद्रादिमूर्त्तीः दधतस्तस्य भगवतः उदाराणि महान्ति विश्वसृष्ट्यादीनि सूरिभिः नारदादिभिः परिगीतानि कर्माणि श्रद्दधानानां नोऽस्माकं ब्रूहि ॥ १७ ॥ अथेति। अथ हे धीमन्! स्वैरं यथेच्छम् आत्ममायया लीलाः असुरवधाद्याः विदधतः कुर्वतः ईश्वरस्य हरेः शुभाः अवताराणां मत्स्यादीनां कथाः आख्याहि पूर्वत्रात्र च दधतः इति विदधत इति च। वर्त्तमानकाल-प्रयोगादवताराणां लीलानां च नित्यत्वमुक्तम्। श्रीकृष्णावतारप्रश्नेन तच्चरितप्रश्नोऽपि जात एवेति ज्ञेयम् ॥ १८ ॥ वयमिति। यदित्यादि सामान्ये नपुंसकम्। यो विक्रमः शृण्वतां रसज्ञानं पदे पदे प्रतिक्षणं स्वादुतोऽपि स्वादु भवति तस्मिन्नुत्तमश्लोकस्य

भगवतो विक्रमे अन्ये तृप्यन्तु नाम वयं तु न वितृप्यामः। अलमिति न मन्यामहे अयमर्थः। त्रेधा ह्यलंबुद्धिर्भवति उदरादिभरणेन वा रसाज्ञानेन वा स्वादुविशेषाभावाद्वा तत्र शृण्वतामित्यनेन श्रोत्रस्याकाशत्वाद्विक्रमस्य चामूर्तत्वादभरणम्। रसज्ञानामित्यनेन चाज्ञानतः पशुवत्तृप्तिर्निराकृता। पदे पदे स्वादु इत्यनेन इक्षुभक्षणवद्रसान्तरालाभे तृप्तिर्निराकृता। तेन यागादिषु तु तृप्ताः स्म इति सूच्यते ॥ १९॥ कृतवानिति। किलेति ऐतिह्ये गूढः कपटमानुषः मायामनुष्यः भगवान् केशवः रामेण सह अतिमर्त्यानि मर्त्यानतिक्रान्तानि गोवर्द्धनोद्धरणादीनि वीर्याणि कृतवान् तान्वदेति शेषः। पूर्वप्रश्ने पु गतार्थोऽपि उत्कण्ठावशात् पुनः प्रश्नः॥ २०॥ कलिमिति। कलिम् आगतम् आज्ञाय ज्ञात्वा तद्भिया विष्णुपदं गन्तुकामाः दीर्घसत्रेण निमित्तेन हरेः कथायां सक्षणाः प्राप्तावसरा वयम् अस्मिन्वैष्णवे क्षेत्रे नैमिषे आसीनाः स्मः॥ २१॥ त्वमिति। पुंसां सत्त्वहरं दुस्तरं कलिं निस्तितीर्षतां नोऽस्माकम् अर्णवं निस्तितीर्षतां कर्णधारो नाविक इव धात्रा त्वं दर्शितः॥ २२॥ ब्रूहीति। योगेश्वरे ब्रह्मण्ये धर्मस्य वर्मणि कवचवद्रक्षके कृष्णे स्वां काष्ठां मर्यादां स्वरूपं प्रापञ्चिकजनदृष्ट्यविषयतां वा उपेते सति अधुना धर्मः कं शरणं गत इति ब्रूहि। अत्र पुंसामेकान्ततः श्रेय इति प्रथमः प्रश्नः। अतः साधोऽत्रेति सर्वशास्त्रसारविषयो द्वितीयः। सूत जानासीति देवक्यां भगवान् किमर्थं जात इति तृतीयः। तस्य कर्माण्युदाराणीति लीलाविषयस्तुर्यः। अथाख्याहि हरेरिति अवतारविषयः पञ्चमः। ब्रूहि योगेश्वरे कृष्ण इति षष्ठः। तत्प्रत्युत्तराण्येव सप्रसङ्गानि सर्वं श्रीमद्भागवतमिति ज्ञेयम्। संक्षेपतस्तु स वै पुंसामित्यादिकमाद्यद्वितीययोरुत्तरम्। तृतीयस्य सामान्यतः भावयत्येष सत्त्वेनेति। तुर्यस्य स एवेदं ससर्जाग्रे इत्यादि। पञ्चमस्य प्रश्नस्य तृतीयोऽध्यायः। षष्ठप्रश्नस्य चोत्तरं कृष्णे स्वधामोपगते इत्यादिः श्लोको भविष्यति॥ २३॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिका। प्रथमस्यादिमेऽध्याये निर्मिता कृपया सताम्॥
इति भागवते प्रथमस्कन्धे प्रथमोऽध्यायः॥ १॥

—:❀:—

# अथ द्वितीयोऽध्यायः

## व्यास उवाच

**इति संप्रश्नसंहृष्टो विप्राणां रौमहर्षणिः। प्रतिपूज्य वचस्तेषां प्रवक्तुमुपचक्रमे॥ १॥**

द्वितीयेऽध्याये तु सूतः प्रश्नानामुत्तराणि च। केषांचिदुक्तवांस्तत्र श्लोकास्तु श्रुतिवह्नयः। उवाचयुग्मं षट्त्रिंशत्ताद्युक्ता अनुष्टुभः॥ २॥

इतीति। विप्राणामिति। एवंभूतैः संप्रश्नैः सम्यक् हृष्टो रोमहर्षणस्य पुत्र उग्रश्रवास्तेषां वचः प्रतिपूज्य सत्कृत्य प्रवक्तुमुपचक्रमे प्रारम्भं कृतवान्॥ १॥ अत्र मुनिभिः प्रथमं सर्वशास्त्रसाररूपः आत्मप्रसादकश्च विषयः पृष्टस्तत्रैतदुत्तराय शुकं शरणं व्रजामि। स एव सर्वशास्त्रसारज्ञ एषामात्मप्रसादं कर्तुं शक्तश्चेति विचार्य सूतः श्रीशुकं शरणीकरोति—यमिति। प्रव्रजन्तं संन्यस्य गच्छन्तम् अनुपेतम् उपनयनार्थमनुपसन्नम् एकाकिनं वा निकटमप्राप्तं वा अपेतकृत्यं कृत्यशून्यं नैष्ठिकत्वात् कर्ममार्गे अप्रवर्त्तमानं यं विरहात्कातरो भीरुः द्वैपायनो व्यासः 'हे पुत्र! आगच्छ' इति आजुहाव आहूतवान्। अत्र ह्रस्वदीर्घान्तर्भूतलघुगुरुमात्रान्यासयोग्ये पद्ये प्लुतासंभवान्न प्लुतः। पुत्रशब्दस्य वाक्यान्तवर्तित्वाभावस्यापि सुवचत्वात् सर्वप्लुतविकल्पाच्च। तदा तन्मयतया शुकरूपतया तरवः अभिनेदुः प्रतिध्वनिमिषेण हे पुत्रेति प्रत्युत्तरं ददुः। यदि तवाहं पुत्रस्तदा कश्चित्त्वमपि मे पुत्रः। अतः पितापुत्रभावो मिथ्येति व्यञ्जयामासुः। पितुः स्नेहानुबन्धपरिहाराय यो वृक्षरूपेणोत्तरं दत्तवान् इत्यर्थः। तं सर्वभूतानां हृन्मनः अयते योगबलेन प्रविशति तं मुनिं श्रीशुकं प्रति आनतः प्रणतोऽस्मि। सर्वभूतहृत्प्राप्तत्वात्स एव ममाप्यन्तः प्रविश्य मन्मुखेन भागवतं वदतु। अन्येऽपि कथाकरणे एवं ध्यायेदिति विधिश्च सूचितः॥ २॥ य इति। यः श्रीशुकः अन्धं गाढं तमः संसाराख्यम् अतिशयेन सुखेनैव तितीर्षतां तरितुमिच्छतां संसारिणां करुणया एतेन परीक्षिदादयः सर्वे संसारिणोऽनेन तारणीया

न केवलः परीक्षित् इत्युक्तम्। स्वः निजः असाधारणः अनुभावः प्रभावो यस्य तत्। अखिलानां श्रुतीनां सारम् एकम् अनुपमम् आत्मानं कार्यकारणसंघातमधिकृत्य प्रवर्त्तमानम् अध्यात्ममात्मतत्त्वं तस्य दीपं प्रकाशकं पुराणेषु गुह्यं रहस्यं श्रीभागवतम् आह स्म। तं मुनीनां गुरुं व्याससूनुं श्रीशुकमुपयामि शरणं व्रजामि ॥ ३ ॥ नारायणमिति। नारायणादीन्नमस्कृत्य ततः जयेत्यनेन संसारमिति जयं शास्त्रमुदीरयेत्। 'अष्टादश पुराणानि रामस्य चरितं तथा। जयेति नाम चैतेषां प्रवदन्ति मनीषिणः।' इत्युक्तेः। यद्वा अत्र नरनारायणौ अधिष्ठातृदेवते नरोत्तममिति पुरुषोत्तमः श्रीकृष्णो देवता सरस्वती देवी शक्तिः चकाराद्व्यासऋषिः। व्यासमिति पाठे स्पष्टमेव। बीजं तु प्रणवो ज्ञेयः छन्दो गायत्री तान्नमस्कृत्य ततो जयं जयेति लोडन्तं क्रियापदम् उदीरयेत्। अत्र हे श्रीकृष्णेति संबोधनमाक्षेपलभ्यम्। उदीरयेदिति स्वयं तथोदीरयन्नन्यान्पौराणिकानुपशिक्षयति ॥ ४ ॥ मुनय इति। हे मुनयः। लोकानां मङ्गलं यथा स्यात्तथा भवद्भिः अहं साधु सम्यक् पृष्टः पृष्टोऽस्मि यत् यतो हेतोः येन संप्रश्नेन प्रश्नमात्रेण आत्मा सुष्ठु प्रसीदति स कृष्णविषयः संप्रश्नः कृतः सर्वशास्त्रसारोद्धारप्रश्नस्यापि कृष्णे पर्यवसानात् ॥ ५ ॥ आदौ प्रथमं प्रश्नमुत्तरयति—स इति। यथा भक्त्या आत्मा सम्यक् प्रसीदति सा अहैतुकी। हेतुः फलाभिसंधानं तद्रहिता हेतुं विनैवोत्पद्यमाना वा अप्रतिहता विघ्नैरनभिभूता च अत्रोक्षजे भक्तिः यतो धर्मात् भवति स वै स एव निष्कामकर्मरूपः पुंसां पर उत्कृष्टो धर्मः स एवैकान्तिकं श्रेयः। अन्यस्तु प्रवृत्तिलक्षणो धर्मः। अपर इति। अत्र पुंसां पुंमात्राणामेव धर्मः परः परमः श्रीहरिश्रवणकीर्तनादिरूपः यतः अहैतुकी निर्गुणा प्रेमलक्षणा भक्तिर्भवेत्। अतो हरिकीर्त्तनादिरूपा साधनभक्तिः प्रेमलक्षणा तु साध्या भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुमित्यादिवचनादिति भागवताः ॥ ६ ॥ यत्तु शास्त्रे धर्मस्य ज्ञानाङ्गत्वं प्रसिद्धं तदपि भक्तिद्वारेत्याह—वासुदेव इति। भगवति वासुदेवे प्रकर्षेण योजितः भक्तियोगः आशु शीघ्रं वैराग्यं जनयति तथा यद् अहैतुकं शुष्कतर्काद्यगोचरं तत् ज्ञानमपि जनयति। अत्र भागवताः ज्ञानशब्देन भगवद्रूपगुणमाधुर्यानुभवमेव गृह्णन्ति ॥ ७ ॥ धर्म इति। यो धर्म इति प्रसिद्धः स यदि पुंसां विष्वक्सेनस्य कथासु रतिं नोत्पादयेत् तर्हि स्वनुष्ठितोऽपि सन्नयं हि केवलं श्रम एव ज्ञेयः। क्षयिष्णुस्वर्गादितुच्छफलदत्वेन निष्फलप्रायत्वात् ॥ ८ ॥ हरिभक्तिद्वारा तदितरवैराग्यादात्मज्ञानपर्यन्तः परो धर्म इत्युक्तं तत्र धर्मादर्थश्च कामश्चेत्यादिमतं निराकरोति—धर्मस्येति। अपवर्गो मोक्ष एव आपवर्गः। स्वार्थेऽण्। स प्रयोजनमस्य सः आपवर्ग्यः। 'स्वर्गादिभ्यो यत्' इति यत्। तस्य मोक्षप्रयोजनकस्य धर्मस्य अर्थाय फलत्वाय अर्थः धनं नोपकल्पते योग्यो न भवति। धर्मस्य मोक्षं फलं नत्वर्थ इत्यर्थः। धर्म एव एकान्तं नियतं फलं यस्य तस्य अर्थस्य कामो लाभाय न हि स्मृतः। धनस्य कामो न फलं किन्तु धर्म इत्यर्थः ॥ ९ ॥ कामस्येति। कामस्य विषयभोगस्येन्द्रियप्रीतिर्लाभः फलं न भवति किंतु यावता जीवेत। तङार्षः। तावानेव कामस्य लाभो जीवनपर्याप्त एव कामः सेव्य इत्यर्थः। जीवस्य जीवनस्य कर्मभिः कर्मानुष्ठानद्वारा य इह प्रसिद्धः स्वर्गादिः सोऽर्थो न भवति किन्तु तत्त्वजिज्ञासैवेति ॥ १० ॥ तत्त्वजिज्ञासा जीवनस्य फलमुक्तं तच्च तत्त्वम्। मतभेदान्नानाविधं तत्र परमार्थतत्त्वमाह—वदन्तीति। यद् अद्वयं द्वैतरहितं ज्ञानं यच्च औपनिषदैर्ब्रह्मेति शब्द्यते कथ्यते हैरण्यगर्भैः परमात्मेति शब्द्यते सात्वतैर्भगवानिति शब्द्यते तदेव कर्मभूतं तत्त्वविदः तत्त्वं वदन्ति ॥ ११ ॥ तत्तत्वमपि भक्त्यैवाप्यते इत्याह—तदिति। श्रद्दधाना मुनयः ज्ञानवैराग्याभ्यां युक्तया श्रुतेन शास्त्रश्रवणेन गृहीतया भक्त्या आत्मनि आत्मानमात्मभूतं तत् तत्त्वं पश्यन्ति। तत्र औपनिषदाः क्षेत्रज्ञं परमेश्वरं पश्यन्ति। हैरण्यगर्भाः हृदये अन्तर्यामिणं पश्यन्ति। सात्वता मनसि स्फुरन्तं विष्णुं पश्यन्ति ॥ १२ ॥ अत इति। हे द्विजश्रेष्ठाः! अतः उक्तहेतोः पुंभिः वर्णाश्रमविभागशः वर्णाश्रमविभागानुसारेण। शस् आर्षः। स्वनुष्ठितस्य सम्यक्कृतस्य धर्मस्य हरितोषणमेव संसिद्धिः फलं नान्यत् ॥ १३ ॥

तस्मादिति। तस्मादेकेन एकाग्रेण मनसा सात्वतां पतिर्भगवान् नित्यदा श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च। नित्यशब्दाद्दा आर्षः ॥ १४ ॥ यदिति। यस्य भगवतोऽनुध्या अनुध्यानं सैव असिः खड्गः तेन युक्ता विवेकिनः ग्रन्थिमहङ्कारं स्वहेतुत्वेन निबध्नाति यत् कर्म तच्छिन्दति भगवत्कृपयाऽहङ्कारनाशेन तन्मूलककर्मणो नाशात् तस्य कथायां रतिं को न कुर्यात्। अत्र कर्म त्रिविधं प्रारब्धं संचितमागामि च। तत्र प्रारब्धस्य भोगादेव नाश आगामिसंचितयोरत्र नाशः। यद्वा यथा स्वसंचितधनेभ्यः पृथक्कृत्य क्वचिदेकदिनभोग्यं धनं ग्रन्थौ निबध्नन्ति जनास्तथैव ग्रन्थिनिबन्धनं वर्त्तमानजन्मभोग्यं प्रारब्धकर्मापि छिन्दन्तीति प्रारब्धस्याप्यत्र भर्जनेन कार्याक्षमता ॥ १५ ॥ शुश्रूषोरिति। हे विप्राः! महतां सेवया श्रद्दधानस्य जातश्रद्धस्य पुंसः पुण्यतीर्थं सद्गुरुस्तस्य निषेवणं स्यात्तस्माच्च शुश्रूषोर्जातश्रवणेच्छस्य तस्य वासुदेवकथासु रुचिः स्यादित्यन्वयः। "निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ।" इत्यमरः। पुण्यतीर्थनिषेवणादिभिर्निष्पापस्य महत्सेवा तया च तद्धर्मश्रद्धा ततः श्रवणेच्छा ततो रुचिरिति स्वामिपादाः ॥ १६ ॥ शृण्वतामिति। पुण्ये श्रवणकीर्त्तने यस्य सः सतां सुहृत् हितकारी कृष्णः स्वकथां शृण्वताम् अन्तःस्थः हृदयस्थः सन् हृदि यानि अभद्राणि कामादिवासनाः ताः विधुनोति नाशयति ॥ १७ ॥ नष्टेति। नित्यं भागवतानां भागवतशास्त्रस्य वा सेवया अभद्रेषु पापेषु नष्टप्रायेषु सत्सु उत्तमश्लोके भगवति नैष्ठिकी निश्चला

भक्तिर्भवति। सर्वाभद्रनाशस्य ज्ञानोत्तरकालत्वात्प्रायग्रहणम् ॥ १८ ॥ तदेति। तदा भक्तिप्रादुर्भावे रजस्तमश्च तथा ये कामलोभादयो भावाश्च आदिना क्रोधादयः एतैः रजआदिभिः अनाविद्धम् अनभिभूतं सत्त्वे सत्त्वगुणे सत्त्वमूर्तौ भगवति वा स्थितं चेतः प्रसीदति उपशाम्यति। रजस्तमोभ्यां भावो येषामिति कामादिविशेषणं वा ॥ १९ ॥ एवमिति। एवं भगवद्भक्तियोगतः प्रसन्नमनसः अत एव मुक्तसङ्गस्य अन्यत्र विरक्तस्य पुंसः भगवत्तत्त्वविज्ञानमात्मसाक्षात्कारः भगवद्रूप-गुणमाधुर्याद्यनुभवो वा जायते ॥ २० ॥ भिद्यत इति। आत्मनि स्वरूपभूते ईश्वरे दृष्टे साक्षात्कृत एव तदनन्तरमेवेत्यर्थः। हृदयमेव ग्रन्थिः चिज्जडग्रथनरूपोऽहङ्कारः भिद्यते। ततः सर्वे संशयाः असंभावनाद्याः छिद्यन्ते। ततश्च अस्य पुंसः कर्माणि अनारब्धफलानि क्षीयन्ते। सर्वत्र कर्मकर्त्तरि लट्। भक्तास्त्वाहुः—आत्मन्येव मनस्येवेश्वरे दृष्टे किं पुनः साक्षाद्दृष्टे इति स्फूर्तिसाक्षात्कारावुक्तौ। तथा च 'सतां कृपा महत्सेवा श्रद्धा गुरुपदाश्रयः। भजनेषु स्पृहा भक्तिरनर्थापगमस्ततः। निष्ठा रुचिरथासक्तो रतिः प्रेमाथदर्शनम्। हरेर्माधुर्यानुभव इत्यर्थाः स्युश्चतुर्दश।' इति ॥ २१ ॥ अत इति। अत एव कवयः नित्यं परमया मुदा अनेन साधनदशायामपि कष्टाभाव उक्तः। आत्मप्रसादिनीं मनःशोधिनीं वासुदेवे भगवति भक्तिं कुर्वन्ति ॥ २२ ॥ तदेवोपपादयितुं ब्रह्मादीनां त्रयाणामेकात्मकत्वेऽपि वासुदेवस्याधिक्यमाह—सत्त्वमिति। इह यद्यपि सत्त्वं रजस्तम इति प्रकृतेर्गुणाः इह तैस्तैर्युक्त एक एव परः पुरुषः अस्य विश्वस्य स्थित्यादये स्थितिसृष्टिप्रलयार्थं हरिविरिञ्चिहरा इति संज्ञाः। सुविति योगविभागात्समासः। कले नलेति नामेति नैषधीये दर्शनात्। धत्ते। तत्र तेषां मध्ये नृणां श्रेयांसि शुभफलानि सत्त्वतनोर्वासुदेवादेव स्युः। अत्र भगवतोऽवतारो द्विधा। चिच्छक्त्या मायाशक्त्या च। चिच्छक्त्या मत्स्यकूर्माद्या भजनीया एव। मायाशक्त्या च रजआदिभिर्ब्रह्मविष्णुरुद्रास्तेषु विष्णुरेव सेव्यः। विष्णोरपि मायासत्त्वारब्धशरीरकत्वं नास्ति इत्याहुः ॥ २३ ॥ पार्थिवादिति। यथा पार्थिवात् पृथिवीविकारात् स्वतःप्रवृत्तिप्रकाशरहितात् दारुणः काष्ठाद्धूमः प्रवृत्तिस्वभावः श्रेष्ठः तस्माच्च त्रयीमयः वेदोक्तकर्मप्रचुरः अग्निः प्रकाशस्वभावः श्रेष्ठः तथा तमसः लयात्मकात् रजः विक्षेपकं श्रेष्ठं तस्माच्च सत्त्वं श्रेष्ठं यत् यतस्तत् साक्षाद्ब्रह्मदर्शनं ब्रह्मणः प्रकाशकम्। अतस्तद्गुणोपाधीनां ब्रह्मादीनां यथोत्तरं वैशिष्ट्यम् ॥ २४ ॥ भेजिर इति। अथ अतो हेतोः अग्रे पुरा मुनयः विशुद्धं सत्त्वं विशुद्धसत्त्वमूर्तिं भगवन्तमधोक्षजं हरिं भेजिरे। अतो ये तान्मुनीन् अनु अनुवर्त्तन्ते ते इह संसारे क्षेमाय कल्पन्ते ॥ २५ ॥ मुमुक्षव इति। अथ अतः मुमुक्षवो मोक्षमिच्छवस्तु घोररूपान् भूतपतीन् उपलक्षणतया पितृप्रजेशादीनपि हित्वा शान्ताः अनसूयवः देवतान्तरनिन्दारहिताश्च सन्तः नारायणस्य कलाः मूर्तीः भजन्ति ॥ २६ ॥ रज इति। रजस्तमसी प्रकृती स्वभावौ येषां ते अत एव पितृभूतादिभिः समं शीलं येषां ते तु श्रिया सह ऐश्वर्यं प्रजा चेप्सन्ति। तादृशाः सन्तः पितृभूतप्रजेशादीन् भजन्ति ॥ २७ ॥ वासुदेवेति। अत्र वेदादीनि सर्वाणि वासुदेवपराणीति द्वयोः पिण्डार्थः। अन्वयः स्पष्ट एव। तत्र वेदाः वासुदेवः परस्तात्पर्यगोचरो येषां तादृशाः सन्ति न तु मखपराः। एवं मखा यज्ञा अपि वासुदेवाराधनार्थाः योगाः योगशास्त्राणि अपि वासुदेवप्राप्त्युपायाः स्वासनप्राणायामादिपराः। एवमग्रेऽपि क्रियाः कर्माणि ॥ २८ ॥ वासुदेवेति। ज्ञानं ज्ञानशास्त्रं तपः ज्ञानं धर्मः धर्मशास्त्रं दानं व्रतादिविषयं गतिः स्वर्गादिफलम् ॥ २९ ॥ स इति। स एव विभुर्भगवान् अगुणः स्वतो निर्गुणोऽपि सन् अग्रे पुरा सदसद्रूपया कार्यकारणात्मिकया गुणमय्या आत्ममायया इदं विश्वं ससर्ज। एतदपि चतुर्भिः श्लोकैः तस्य कर्माण्युदाराणि इति तुर्यप्रश्नस्योत्तरम् ॥ ३० ॥ तयेति। विज्ञानेन चिच्छक्त्या विजृम्भतः अत्यूर्जितोपि भगवान् तया मायया विलसितेषु उद्भूतेषु एषु गुणेषु आकाशादिषु अन्तःप्रविष्टः सन् गुणवानिव मदधीना एते इत्यभिमानवानिव आभाति न तु वस्तुतः ॥ ३१ ॥

यथेति। यथा वह्नित्वेन एकोऽपि वह्निः स्वाभिव्यञ्जकेषु दारुषु अवहितः स्थितः सन् नानेव भाति तथा विश्वात्मा पुमान् परमेश्वरः भूतेषु प्राणिषु स्थितो नानेव भाति। अन्तर्यामिणोऽपि प्रतियोनिभेदात् नानात्वमुच्यते क्षेत्रज्ञरूपेण वा ॥ ३२ ॥ असाविति। असौ भगवान् भूतसूक्ष्माणि इन्द्रियाणि च आत्मा मनश्च तैर्गुणमयैर्भावैः स्वनिर्मितेषु भूतेषु देवनरतिर्यगादिषु निर्विष्टः प्रविष्टः सन् तद्गुणान् तत्तदनुरूपान् विषयान् अनुभवति। भोजयतीति अन्तर्भावितणिजर्थो वा ॥ ३३ ॥ सूत जानासीति प्रश्नस्य साधारणमुत्तरमाह—भावयतीति। देवतिर्यङ्नरादिषु ये लीलावतारास्तेषु अनुरतो लोकभावनः लोकस्य कर्ता पालको वा एष हरिः सत्त्वेन लोकान् भावयति पालयति। कृष्णावतारस्य विशेषतः प्रयोजनं तु कुन्तीस्तुतौ वक्ष्यते ॥ ३४ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो द्वितीये प्रथमस्य व्यधादिमाम्।

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां द्वितीयोऽध्यायः ॥ २ ॥

——:*:——

# अथ तृतीयोऽध्यायः

सूत उवाच

जगृहे पौरुषं रूपं भगवान्महदादिभिः । संभूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥

तृतीयेऽध्यायेऽवताराः कथिताः पुरुषादयः । तेषां कर्माणि चोक्तानि श्लोका मार्गणसिन्धवः । अनुष्टुभः सप्तवेदा उवाचेत्येकमेव तु ॥ ३ ॥

अथाख्याहि हरेर्धीमन्नित्यस्योत्तरमारभते—जगृह इति । भगवान् आदौ लोकानां सिसृक्षया महदादिभिः महदहङ्कारपञ्चतन्मात्रैः संभूतं सुनिष्पन्नम् एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोडश कला अंशा यस्मिन् तत् पौरुषं रूपं जगृहे । यद्यपि भगवद्विग्रहो नैवंभूतः तथापि विराड् जीवान्तर्यामिणो भगवतो विराड्रूपेणोपासनार्थमेवमुक्तमिति श्रीस्वामिपादाः । भागवतास्तु भगवान् महदादिभिः लोकानां सिसृक्षया सम्यग्भूतं परमार्थसत्यं 'युक्तेक्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ॥' इत्यमरः । षोडशकलं राकाचन्द्रवत्पूर्णं पौरुषं पुरुषसंज्ञं रूपमवतारं जगृहे इत्यर्थमाहुः ॥ १ ॥ कोऽसौ भगवानित्यपेक्षायां भगवन्तं पुरुषरूपग्रहीतारं विशिनष्टि—यस्येति । योगः समाधिस्तद्रूपां निद्रां वितन्वतो विस्तारयतः अम्भसि एकार्णवे शयानस्य यस्य नाभिरेव ह्रदस्तस्मिन् यदम्बुजं तस्माद्विश्वसृजां दक्षमरीच्यादीनां पतिः ब्रह्मा पाद्मे कल्पे आसीत् स भगवान् पौरुषं रूपं जगृहे इति पूर्वत्रैव सम्बन्धः ॥ २ ॥ कीदृशं रूपं जगृहे तदाह—यस्येति । यस्य गृहीतस्य पौरुषरूपस्य अवयवानां पादादीनां संस्थानैः लोकानां पातालादीनां विस्तरः विस्तारः । अशब्देपि घञभाव आर्षः । कल्पितः तत्पौरुषं रूपं जगृहे । यो भगवानम्भसि शेते स्म तस्य भगवतो वास्तवं रूपं तु यत् विशुद्धं रजः आद्यसंभिन्नम् अतएवोर्जितं निरतिशयं सत्त्वं तद्धै तदेव ॥ ३ ॥ एतच्च योगिनां प्रत्यक्षमित्याह—पश्यन्तीति । सहस्रं पादाः ऊरवः भुजाः आननानि च तैरद्भुतम् । सहस्रं मूर्द्धानः अक्षीणि नासिकाश्च यस्मिन् तत् । सहस्रं मौलयः अम्बराणि कुण्डलानि च तैरुल्लसच्छोभमानम् । अदः रूपं योगिनः अदभ्रमनल्पं ज्ञानात्मकं यच्चक्षुः तेन पश्यन्ति । सर्वत्र सहस्रशब्दोऽपरिमितवाची ॥ ४ ॥ एतदिति । एतदादि नारायणरूपं नानावताराणां निधानं कार्यावसाने प्रवेशस्थानं बीजमुद्गमस्थानं न च बीजवद्विकारि किंतु अव्ययं च न त्वन्यावतारवदाविर्भावतिरोभावशालि तथा यस्य अंशो ब्रह्मा तस्यांशो मरीच्यादिस्तेन देवतिर्यङ्नरादयः सृज्यन्ते अतः सर्वप्राणिनां बीजं निधानं च ॥ ५ ॥ स इति । यः पौरुषं रूपं जगृहे स एव देवः पद्मनाभ इत्येके । कौमारार्षप्राजापत्यमानवादिसर्गेषु प्रथमं कौमाराख्यं सर्गमास्थितः सन् ब्रह्मा ब्राह्मणः सनत्कुमारादिरूपो भूत्वा अखण्डितं ब्रह्मचर्यं चचार । प्रथमद्वितीयादिशब्दा निर्देशमात्रापेक्षया न तु क्रमापेक्षया ॥ ६ ॥ द्वितीयमिति । यज्ञेशो भगवान् अस्य विश्वस्य भवाय क्षेमाय रसातलगतां महीम् उद्धरिष्यन् द्वितीयमवतारं सौकरं सूकराकारं वपुः उपादत्त गृहीतवान् । उद्धरिष्यन्निति कर्मोक्तिः । एवमग्रेऽपि ॥ ७ ॥

तृतीयमिति । सः भगवान् ऋषिषु सर्गं प्रादुर्भावम् उपेत्य तत्र च तृतीयमवतारं देवर्षित्वं नारदरूपम् उपेत्य यतस्तन्त्राद्भगवद्धर्मरूपाणां कर्मणां नैष्कर्म्यं कर्मबन्धमोचकत्वं भवति तत् सात्वतं वैष्णवं तन्त्रं पाञ्चरात्रागमम् आचष्ट उक्तवान् ॥ ८ ॥ तुर्ये इति । धर्मस्य या कला अंशः भार्या मूर्तिनाम्नी तस्यां सर्गे प्रादुर्भावे तुर्ये चतुर्थे अवतारे नरनारायणाख्यौ ऋषी भूत्वा आत्मनो मनसो यः शमः निग्रहः तेन उपेतं दुश्चरं तपः अकरोत् । द्वयोरेकावतारत्वम् ॥ ९ ॥ पञ्चम इति । पञ्चमोऽवतारः सिद्धेशः कपिलो नाम प्रसिद्धः । भगवान् कालेन विप्लुतं नष्टं तत्त्वानां ग्रामस्य समूहस्य निर्णयो यस्मिन् तत् सांख्यं नाम शास्त्रम् । आसुरये तन्नाम्ने ब्राह्मणाय प्रोवाच ॥ १० ॥ षष्ठ इति । षष्ठेऽवतारे अनसूयया अत्रिपत्न्या वृतः प्रार्थितः सन् 'अनसूयाऽब्रवीद्देवान्नत्वा ब्रह्मेशकेशवान् । यूयं यदि प्रसन्ना मे वरार्हा यदि वाऽप्यहम् । प्रसादाभिमुखाः सर्वे मम पुत्रत्वमेष्यथ ।' इति ब्रह्माण्डोक्तेः । वक्ष्यमाणरीत्या अत्रिणा च वृत इति शेषः । अत्रेः अपत्यत्वं प्राप्तः दत्तात्रेय इति प्रसिद्धः । भगवान् अलकार्य प्रह्लादादिभ्यः आदिशब्दात् यदुहैहयादिभ्यश्च आन्वीक्षिकीम् आत्मविद्याम् ऊचिवान् । षष्ठे अत्रेति असन्धिः सहिताया अविवक्षणात् ॥ ११ ॥ तत इति । ततः सप्तमेऽवतारे रुचेः सकाशात् आकूत्यां यज्ञो नामाभ्यजायत स यामाद्यैः स्वपुत्रैः सुरगणैः सह स्वायम्भुवमनोरनन्तरम् अपात् । लङ् । तत्र स्वयमिन्द्रोभूदित्यर्थः ॥ १२ ॥ अष्टम इति । अष्टमेऽवतारे तु उरुक्रमो भगवान् सर्वाश्रमैर्नमस्कृतं वर्त्म धीराणां धीरान् दर्शयन् सम्बन्धविवक्षया कर्मणि षष्ठी । धीराणां वर्त्मेत्यन्वयो वा ।

नाभेः सकाशात् मेरुदेव्यामृषभाख्यो जातः ॥ १३ ॥ ऋषिभिरिति। हे विप्राः ! उशत्तमः अतिशयेन प्रजापालनं वाञ्छन्। वष्टेः शत्रन्तात्तमप्। सोऽयं भगवानृषिभिः याचितः प्रार्थितः सन् नवमं पार्थवं वपुः पृथुरूपं राजदेहं पाठान्तरे पृथोरिदं पार्थवं भेजे। तेनावतारेण इमां भूमिम् ओषधीः उपलक्षणतया सर्वाणि वस्तूनि दुग्ध अदुग्ध। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। दुहिर्द्विकर्मकः। अत्र तेन पृथ्वीदोहनेन सोऽयमवतारः। उशत्तमः कमनीयतम इति भिन्नं वाक्यं स्वामिपादा व्याचख्युः। तत्र यद्यपि कर्मणि शता प्रतीयते तथापि प्रशस्तमात्रे तात्पर्यं न तु कर्मणि शतृप्रत्यये। एवमग्रेऽप्युशत्तमशब्दे ॥ १४ ॥

रूपमिति। स भगवान् मात्स्यं रूपं जगृहे तत्र च चाक्षुषमन्वन्तरे य उदधीनां संप्लवः संश्लेषस्तस्मिन्मही एव महीमयी चिन्मयं ब्रह्मेतिवत्स्वार्थे मयट्। तस्यां नावि नौकारूपायां मह्यामित्यर्थः। वैवस्वतं मनुम् आपत्। लङ्। मन्वन्तरावसाने प्रलया-संभवात्सत्यव्रतायेयं माया दर्शितेति स्वामिपादाः। विष्णुधर्मोत्तरे मन्वन्तरावसानेऽपि प्रलय उक्तः। भागवतामृतेऽप्येवम्। केचित्तु मन्वन्तराणां क्रमनियाभावात्तत्र कल्पे चाक्षुष एवान्ते मनुरभूदिति तत्र प्रलयो उक्तः एवेत्याहुः। वैवस्वतमिति भाविनि संज्ञा ॥ १५ ॥ सुरेति। विभुर्भगवान् अमृतोत्पादनाय उदधिं मथ्नतां सुरासुराणां कार्याय एकादशेऽवतारे कमठः कच्छपस्तद्रूपेण पृष्ठे मन्दराचलं दध्रे ॥ १६ ॥ धान्वन्तरमिति। धान्वन्तरं धन्वन्तरिरूपं द्वादशमं द्वादशमभूत्। मडार्षः। अमृतानयनमस्य कर्म ज्ञेयम् एवमग्रेऽपि। मोहिन्या विमोहिनीयरूपया स्त्रिया त्रयोदशमं रूपम्। मडार्षः। धृत्वा अन्यान् असुरान् मोहयन् सन् सुरान् अपाययत्। अमृतमिति शेषः ॥ १७ ॥ चतुर्दशमिति। चतुर्दशं नारसिंहं रूपं बिभ्रत् सन् ऊर्जितं बलैश्वर्याद्यैः प्रवृद्धं दैत्येन्द्रं हिरण्यकशिपुं कटकृत् कटस्य निर्माता एरकां कटप्रकृतिभूतं निर्ग्रन्थितृणं यथा दृणाति तथा करजैर्नखैर्वक्षसि ददार ॥ १८ ॥ पञ्चदशमिति। पञ्चदशं वामनकं रूपं कृत्वा। ह्रस्वार्थे कन्। पदत्रयं याचमानः। हेतौ शानच्। पदत्रययाचनेन त्रिविष्टपं स्वर्गलोकं प्रत्यादित्सुः बलिसकाशाद् ग्रहितुमिच्छुरित्यर्थः। बलेः अध्वरम् अगात् ॥ १९ ॥ अवतारे इति। षोडशमे षोडशेऽवतारे। मडार्षः। नृपान् ब्रह्मद्रुहः ब्राह्मणद्रोहिणः पश्यन् कुपितः महीं त्रिः त्रिगुणान् सप्तकृत्वः सप्तवारान् एकविंशति-वारान् इत्यर्थः। अत्र सप्तकृत्व इति कृत्वसुचाभिहिताया अभ्यावृत्तिक्रियायाः पुनरभ्यावृत्तिगणने त्रिरित्यत्र सुच्। निःक्षत्रां

म् अकरोत् ॥ २० ॥ तत इति। ततः षोडशादग्रे सप्तदशेऽवतारे पराशरात् सत्यवत्यां जातः स भगवान् पुंसो जनान् अल्पमेधसः मन्दबुद्धीन् दृष्ट्वा "नित्यमसिच्" इत्यत्र नित्यग्रहणान्नञ्दुःसुभ्योऽन्यत्रापि असिच् इति काशिका। आर्षो वा प्रयोगः। वेदतरः शाखाः चक्रे ॥ २१ ॥ नरदेवत्वमिति। अतः सप्तदशात् परमष्टादशे सुराणां कार्यस्य रावणवधादेः चिकीर्षया नरदेवत्वं राजत्वं श्रीरामरूपं प्राप्तः सन् समुद्रनिग्रहादीनि वीर्याणि चक्रे ॥ २२ ॥ एकोनेति। एकोनविंशे विंशतिमे विंशतितमे चावतारे तलोपश्छन्दोऽनुरोधेन। वृष्णिषु रामकृष्णौ इति नामभ्यां प्रसिद्धे जन्मनी प्रादुर्भावौ प्राप्य भगवान् भुवो भारम् अहरत् ॥ २३ ॥ तत इति। ततः एकविंशेऽवतारे कलौ संप्रवृत्ते सति सुरद्विषां सम्मोहाय वेदमार्गच्यावनाय कीकटेषु गयाप्रदेशे अजनस्य सुतः। जिनसुत इति पाठे जिनोऽपि। अजन एव नाम्ना बुद्धौ भविस्यति ॥ २४ ॥ अथेति। अथ द्वाविंशे असौ जगत्पतिः युगस्य कलेः सन्ध्यायां भविष्यत्सन्धौ कलेरन्ते राजसु दस्युप्रायेषु प्रसह्यकारकतुल्येषु सत्सु विष्णुयशसः तन्नामकब्राह्मणस्य सकाशात् नाम्ना कल्किरिति ख्यातः जनिता जनिष्यते ॥ २५ ॥ अवतारा इति। हे द्विजाः ! यथा अविदासिनः उपक्षयशून्यात् "दसु उपक्षये" इत्यस्मात् णिनिः। सरसः सहस्रशः कुल्याः सारणीति प्रसिद्धाः क्षुद्रप्रवाहाः स्युः। तथा अनन्तशुद्धसत्त्वनिधेः हरेः अवताराः असंख्येया संख्यातुमशक्याः। असंख्याता इति वा पाठः। हयग्रीवहंसादेरनेन संग्रहः। अथ क्रममनादृत्योक्तानुक्ता-वतारसंग्रहपद्यम्। "मत्स्यः कूर्मो वराहो नृहरिवटुपरश्वायुधा रामकृष्णौ बुद्धः कल्की कुमारर्षभमनुपृथवो मोहिनी व्यासयज्ञौ। दत्तो देवर्षिनारायणकपिलहयग्रीववैधेशहंसा विष्णोरंशा जयन्ति ध्रुववरदगजत्राणकृद्भ्यां सहैते।" इति ॥ २६ ॥ विभूतीराह— ऋषय इति। सप्रजापतयः प्रजापतिभिः सहिता ऋष्यादयः तथा तद्वत् अन्येऽपि महौजसो महासामर्थ्या एते सर्वे हरेरेव कलाः विभूतयः ॥ २७ ॥

तत्र विशेषमाह—एत इति। एते च प्रागुक्ताः चशब्दादनुक्ताश्च पुंसः प्रथमनिर्दिष्टस्य पुरुषस्य अंशकलाः केचिदंशाः मत्स्यकूर्मवराहाद्याः केचित्कलाः कुमारनारदादय आवेशाः तत्र कुमारनारदादिषु ज्ञानभक्तिशक्त्यंशावेशः पृथ्वादिषु क्रियाशक्त्यं-शावेशः ते चावेशा महाशक्त्या अल्पशक्त्या चेति द्विविधाः। प्रथमा कुमारनारदाद्याः अवतारशब्देनोच्यन्ते। द्वितीया मरीचि-मन्वाद्याः विभूतिशब्देनेति भेदो ज्ञेयः। तत्र मत्स्यादीनामवतारत्वेन सर्वज्ञत्वसर्वशक्तित्वेऽपि यथोपयोगमेव ज्ञानक्रियाशक्त्या-विष्करणम्। कुमारनारदादिष्वाधिकारिकेषु यथोपयोगमंशकलावेशः। तत्र नृसिंहपरशुरामकल्किपुरुषेष्वैश्वर्यस्य नारदव्यास-वराहबुद्धेषु धर्मस्य रामधन्वन्तरियज्ञपृथुषु यशसः बलमोहिनीवामनेषु श्रियः दत्तात्रेयमत्स्यकुमारकपिलेषु ज्ञानस्य नरनारायणकूर्म-ऋषभेषु वैराग्यस्याविष्कारः। श्रीकृष्णे तु सर्वेषामेवेति ! इह यो विंशतितमत्वेन गणितः श्रीकृष्णाख्यस्तु स्वयं भगवान् साक्षा-न्नारायण एवाविर्भूतः। एते सर्वेऽपि युगे युगे तत्तत्समये इन्द्रारिभिर्दैत्यैः व्याकुलं लोकं मृडयन्ति। सुखयन्ति। अत्र भागवताः।

जगृहे इत्याद्यश्लोके योऽयं भगवान् पुरुषरूपं जगृहे। स परव्योमाधिनाथो वासुदेवाख्यः स एव श्रीकृष्णः तेन गृहीतं यत्षोडशकलं रूपं स महाविष्णुः प्रकृतीक्षणकर्त्ता संकर्षणांशः कारणार्णवशायी महत्तत्त्वस्रष्टा प्रथमः पुरुषः तस्यैवांशा अवताराः मत्स्याद्याः यस्माम्भसीत्युक्तः पद्मनाभः प्रद्युम्नांशो गर्भोदशायी द्वितीयः यस्तु पूर्वाध्याये हरिविरिञ्चिहरेतिसंज्ञा इत्यत्र हरिरिति पठितः स क्षीरोदशायी अनिरुद्धांशस्तृतीयः पुरुषो ज्ञेय इति पुरुषत्रयम्। एते त्रयोऽपि वासुदेवांशाः! अत्र प्रथमः प्रकृतेरन्तर्यामी द्वितीयः समष्टिविराजः तृतीयो व्यष्टीनामिति त्रय एवांशेनान्तर्यामिणः। तदुक्तम्—"एकं तु महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम्। तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते।" इति। कृष्णस्तु भगवान् न त्वंशः न चांशी पुरुषः किं तु यः पुरुषस्यावतारी परव्योमाधिनाथो वासुदेवो भगवान् स एवेत्यर्थः। ननु भागवते "तत्रांशेनावतीर्णस्य" इत्यादौ वहुषु स्थलेषु कृष्णस्यांशत्वमुक्तं ततोऽनेनैकेनैव वाक्येन कृष्णस्य पूर्णत्वं कथं व्यवतिष्ठताम्। अत्रोच्यते। श्रीभागवतशास्त्रारम्भे जन्मगुह्याध्यायोऽयं सर्वभगवदवतारवाक्यानां सूचकत्वात्। सूत्रं तत्र च "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।" इति परिभाषासूत्रम्। यत्र यत्रावताराः श्रूयन्ते तत्रान्यान् पुरुषांशत्वेन जानीयात्। कृष्णं तु स्वयं भगवत्त्वेनेति प्रतिज्ञारूपमिदं सर्वत्रोपतिष्ठते। परिभाषा ह्येकदेशस्था सकलं शास्त्रमभिप्रकाशयति यथा वेश्मप्रदीप इति प्राञ्चः। सा च शास्त्रे सकृदेव पठ्यते न त्वभ्यासेनेति अनेनैकेनापि सर्वाणि वाक्यानि व्यवस्थाप्यन्ते। तेषां वाक्यानां प्राकरणिकत्वेन लैङ्गिकत्वेन वा दुर्वलत्वात्। अस्य च श्रुतिरूपत्वेन प्रावल्यात्। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवायेऽपारदौर्वल्यमर्थविप्रकर्षात्" इति न्यायात्। श्रीधरस्वामिपादैरपि तत्र तत्रैवनेव समाहितम् इति प्राहुः॥ २८॥

जन्मेति। यः नरः प्रयतः शुचिः सन् एतत् गुह्यं रहस्यं भगवतो जन्म सायं प्रातश्च भक्त्या गृणन् कीर्त्तयन् भवेत् स दुःखग्रामात् संसारात् विमुच्यते॥ २९॥ विमुच्यते इत्युक्तं तत्र श्रवणादिजनितविद्यया अविद्यानिवृत्तौ जीवस्य देहद्वयसंबन्धनिवृतौ मुक्तिर्भवति इत्याह—एतदिति पञ्चभिः। अरूपस्य चिदात्मनः चिद्रूपस्य आत्मनो जीवस्य आत्मनि आत्मस्थाने एतत्स्थूलं रूपं शरीरं भगवतो या माया तस्या गुणैर्महदादिरूपैर्विरचितम् आत्मस्थाने शरीरं कृतम्॥ ३०॥ यथेति। यथा वाय्वाश्रितो मेघौघः अबुद्धिभिः अज्ञैर्नभसि आरोपितः यथा वा पार्थिवो रेणुस्तद्वतं धूसरत्वाद्यनिले एवं द्रष्टरि आत्मनि दृश्यत्वादिधर्मकं शरीरमारोपितमित्यर्थः॥ ३१॥ अत इति। अतः स्थूलशरीरात् परमन्यत् यत् अदृष्टं चाश्रुतं च यद्वस्तु तस्य भवात् अदृष्टत्वादश्रुतत्वाच्च हेतोरित्यर्थः। अव्यूढाः करचरणादिपरिणामरहिता ये गुणाः पृथिव्यादयः तैर्व्यूहितं रचितम् आकारविशेषरहितमित्यर्थः। बृंहितमित्यपि पाठः। यच्चाकारविशेषवद्वस्तु तदस्मदादिवत् दृश्यते श्रूयते वा इन्द्रादिवत्। इदं तु न तथा अत एवाव्यक्तं सूक्ष्मम्। यत् यतः सूक्ष्मात् पुनर्भवः पुनर्जन्म संभवति स च जीव उत्क्रान्तिगत्या गतिभिर्हेतुर्जीवोपाधित्वेन कल्पितः। अन्यथा उत्क्रान्त्यादीनां तेन विना असंभवः। अतःकल्पितो जीवो जीवेन निर्मुक्त इत्यादौ लिङ्गदेहेऽपि जीवशब्दः प्रयुज्यते तदपि रूपात्मन्यारोपितमित्यनुषङ्गः॥ ३२॥ यत्रेति। यत्र यदा इमे सदसद्रूपे स्थूलसूक्ष्मरूपे अविद्यया आत्मनि कृते कल्पिते इति रूपया स्वसंविदा स्वरूपसम्यग्ज्ञानेन प्रतिसिद्धे भवतः तत् दर्शनं ज्ञानैकरूपं ब्रह्म तदा जीवो ब्रह्मैव भवतीत्यर्थः॥ ३३॥ ननु संसृतिकारणरूपमायाया विद्यमानत्वात् कथं ब्रह्मता तत्राह—यदीति। यदि यदा वैशारदी विशारदः सर्वज्ञः ईश्वरस्तदीया एषा देवी अविद्यारूपेण आवरणविक्षेपौ कुर्वत्येव संसारचक्रेण क्रीडन्ती माया उपरता निवृत्ता सती मतिः विद्यारूपेण परिणता भवति तदा सदसद्रूपं जीवोपाधिं दग्ध्वा निरिन्धनाग्निवत्स्वयमेवोपरमेत् तदा पुरुषः सम्पन्नः ब्रह्मस्वरूपं प्राप्त एवेति तत्त्वज्ञाः विदुः। तदा स्वे महिम्नि परमानन्दरूपे महीयते पूज्यते विराजत इति॥ ३४॥

यथा जीवस्य जन्मादिमाया तथेश्वरस्य जन्मादिमायेत्याह—एवमिति। यथा जीवस्य जन्मादि एवं वेदगुह्यानि वेदे रहस्यभूतानि हृत्पतेरन्तर्यामिणो भगवतोऽपि अजनस्यापि सतः जन्मानि अकर्त्तुरपि सतः कर्माणि कवयो वर्णयन्ति। सारार्थसंदर्शिन्यां तु भगवत इत्यादिषट्श्लोकी एवं व्याख्याता। ननु पातालादिविग्रहो विराडप्युपास्यत्वेनोक्तः स कथमवतारेषु न गण्यते इत्यत आह। एतत्समष्टिव्यष्टिविराडात्मकं जगत् चिदात्मनः प्राकृतरूपरहितस्य भगवतो रूपं स्थूलं शरीरं मायाया गुणैर्महत्तत्त्वादिभिः पृथिव्यन्तैस्तत्त्वैर्विरचितम्। आत्मनि स्वस्मिन्नेतदन्तर्यामिण्यधिष्ठाने स्थितमित्यर्थः। अतो विशुद्धसत्त्वरूपमत्स्यकूर्माद्यवतारमध्ये मायिकरूपी विराडेव न पठित इति भावः। कस्मिन् किमिवेत्यत आह। यथा नभसि आकाशे मेघसमूहः अनिले च पृथ्वीविकारो रेणुस्तथैव आत्मनि एतद्विराडरूपमिति पूर्वेणैवान्वयः। तेन मञ्चस्थः पुरुषो यथा मञ्च उच्यते तथा भगवति स्थितो विराडपि भगवानुच्यत इत्यर्थः। एवमेवाधिष्ठितधर्मो दृश्यत्वमपि द्रष्टरि भगवत्यदृश्येऽपि आरोपितमित्यर्थः। अबुद्धिभिरल्पबुद्धिभिः ततश्च भगवानयं विराट् दृश्यः प्रथमदशास्थैर्योगिभिराराध्य इत्युपपन्नम्। एवं सूक्ष्मं रूपं योगिभिरुपास्यत्वेनोक्तमपि मायिकमेवेत्याह अत इति। व्याख्यानं प्राग्वत्। तेन च समष्टिव्यष्टिविराजां जीवत्वात्तत् स्थूलसूक्ष्मयो रूपयोर्मायिकत्वात् तत्र चेश्वरत्वमारोपितमेव नतु साहजिकमिति भावः। यदुक्तं 'विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः। ईशस्य यत्त्रिभिर्हीनं तुरीयं तत् प्रचक्षते।' इति॥

अत्रापि वक्ष्यते। 'अमुनी भगवद्रूपे मयाते अनुवर्णिते। उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः।' इति। यत्रेति। यत्र भगवति इमे सदसद्रूपे उक्तलक्षणे मायिकस्थूलसूक्ष्मरूपे प्रतिषिद्धे भवतः तेनामायिकं तु रूपं तस्य न प्रतिषिद्धमिति भावः। केन स्वैषां भक्तानां संविदा अनुभवेन ते कथं भगवति न स्त इत्यत आह। अविद्यया आत्मनि जीवे एव कृते अध्यस्ते न त्वीश्वरे ततश्च तस्य ब्रह्मणो दर्शनं साक्षात्कारः स्यात्। यद्येषा माया देवी उपरता स्यात् तथा वैशारदी भगवद्विषयिणी मतिः पुरुषस्य स्यात्। संपन्न एव तन्मतिमानेव पुरुषः संपन्नोऽन्यस्तु दरिद्र इत्यर्थः। विदुस्तत्त्वज्ञाः स्वे महीम्नि स्वीये माहात्म्ये वर्तमानः स महीयते पूज्यते। एवमिति। एवमुक्तशरीरद्वयप्रतिषेधेन अजनस्य जन्मानि अकर्त्तुः कर्माणि च भगवतः सन्ति। जीवस्य तु मायासम्बन्धेन जातान्यतो हेयानि। भगवतस्तु मायाप्रतिषेधेन उपादेयानीत्याह। वेदेषु वेदैर्वा गुह्यानि रहस्यत्वेन च संवृत्य स्थापितानि तात्त्विकानि अतो विराड्रूपस्यैवंभूतत्वाभावादवतारमध्ये तस्य न गणनेति प्रकरणार्थः॥ ३५॥ जीवादीश्वरस्य स्वातन्त्र्यमेव विशेष इत्याह—स इति। अमोघलीलः आत्मतन्त्रः षड्गुणेशः षडिन्द्रियनियन्ता स ईश्वरः इदं विश्वं सृजति अवति अत्ति संहरति भूतेषु च अन्तर्हितः सन् षाड्वर्गिकमिन्द्रियषड्वर्गविषयं जिघ्रति दूरादेव गन्धवद् गृह्णन्ति नतु अस्मिन् षाड्वर्गिके सज्जत इत्यर्थः॥ ३६॥ नेति। कश्चिदपि कुमनीषः अल्पबुद्धिर्जन्तुः मनोवचोभिर्मनसा रूपाणि वचसा नामानि च संतन्वतः विस्तारयतः वचोभिरिति बहुत्वं श्रुत्यभिप्रायेण। मनोवचोभिः सहेति वा अस्य धातुर्भगवतः ऊतीर्लीलाः अज्ञो जनः नटस्य चर्या कौशलतत्त्वमिव निपुणेन तर्कादिकौशलेनापि न अवैति न जानाति। भक्तिरसकास्तु कुमनीषः जन्तुः केवलं ज्ञानी नामरूपे मिथ्येति ब्रुवाणो भगवतो लीलास्वादं नानुभवति। प्रेमी भक्त एवानुवति यथा नटस्य अभिनेतुः चर्यामभिनयास्वादमज्ञो रसवासनाहीनो नावैति सहृदय एवानुभवति तथेत्यभिप्रायेण व्याचक्षते॥ ३७॥ स इति। यः अमायया कौटिल्यराहित्येन सन्ततया निरन्तरया अनुवृत्त्या आनुकूल्येन तस्य भगवतः पादसरोजयोर्गन्धं भजेत। स एव धातुः परस्य दुरन्तवीर्यस्य रथाङ्गपाणेर्हरेः पदवीं स्वरूपं लीलातत्त्वास्वादं वा वेद॥ ३८॥ अथेति। यता भगवत्तत्त्वं सर्वे एव न जानन्ति। अथ अतः भगवन्तः सर्वज्ञाः भवन्तो धन्याः कृतार्थाः। कुतः यद्यस्मादित्थं प्रश्नैर्वा अखिललोकनाथे वासुदेवे सर्वात्मकमैकान्तिकम् आत्मभावं मनोवृत्तिं कुर्वन्ति। यत्र यस्मिन् भावे सति भूयः उग्रः परिवर्त्तो जन्ममरणाद्यावर्तो न भवति॥ ३९॥ इदमिति सार्द्धम्। भगवान् ऋषिर्व्यासः लोकस्य निःश्रेयसाय ब्रह्मसम्मितं सर्ववेदतुल्यम् उत्तमश्लोकस्य चरितं यस्मिन् तत् धन्यं यशस्यं स्वस्त्ययनं कल्याणकरं महत् इदं भागवतं तन्नाम पुराणं चकार॥४०॥ तदिदमिति। व्यासेन दधिमथनादुद्धृतं नवनीतमिव यत् सर्ववेदेतिहासानां सारं सारं सम्यगुद्धृतं तदेवेदं भागवतं कर्मभूतं व्यास एव आत्मवतां वरं सुतं शुकं ग्राहयामास॥ ४१॥ स इति। स शुकस्तु गङ्गायां प्रायेण मृत्युपर्यन्तानशनसंकल्पेन उपविष्टं परमर्षिभिः परीतं महाराजं परीक्षितं संश्रावयामास॥ ४२॥ कृष्ण इति। धर्मज्ञानादिभिः षड्भिरैश्वर्यैः सहैव श्रीकृष्णसूर्ये स्वधाम उपगते अन्तर्हिते सति परे तु स्वधाम्नो द्वारकातः उप समीपं प्रभासं गते इत्यर्थमाहुः। तथा च कृष्णः सूर्यः मथुरा उदयशैलः प्रभासोऽस्ताचलः शिष्टाः कोकाः दुष्टा नीहाराः पापानि तमांसीति एकदेशविवर्त्तिरूपकेण सूचितं प्रकाशकाभावात् नष्टदृशां नृणां प्रकाशोद्गमाय अधुना एष भागवताख्यः पुराणरूपोऽर्कः उदितः सूर्येऽस्तंगते सूर्य एवोदेति सूर्यस्य प्रतिमूर्तिः सूर्य एवेति धर्मः कं शरणं गत इत्यस्योत्तरमिदम्॥ ४३॥ तत्रेति सार्द्धम्। हे विप्राः! तत्र सभायां भागवतं कीर्त्तयतः भूरितेजसः विप्रर्षेः श्रीशुकात् तस्य शुकस्यानुग्रहात् तत्र सभायां निविष्टः अहं तद्भागवतमध्यगमं ज्ञातवानस्मि। सोऽहं यथाऽधीतं यथामति च वो युष्मान् श्रावयिष्यामि अन्वयभेदात्तत्र पदावृत्तिरदोषः॥ ४४॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो निरमात् प्रथमस्य तृतीयके।

इति श्रीमद्भागवते प्रथमस्कन्धे तृतीयोऽध्यायः॥ ३॥

—:❀:—

# अथ चतुर्थोऽध्यायः

व्यास उवाच

इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् । वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥

चतुर्थे भारतादीनां शास्त्राणामपि गुम्फने । व्यासस्यापरितोषोक्तिः श्लोकाः सार्द्धास्त्रिवह्नयः । उवाचत्रयमङ्ग्राढ्याः पञ्चत्रिंशदनुष्टुभः ॥ ४ ॥

इतीति । इति एवं प्रसन्नतया श्रावयिष्यामीति ब्रुवाणं सूतं संस्तूय स्तुत्वा दैर्घ्यमार्षम् । ततस्तुगभावः सिद्धः । दीर्घसत्त्रिणां मुनीनां मध्ये वृद्धः कुलपतिर्गणमुख्यः बह्वृच ऋग्वेदी अत एतद्गुणविशिष्टत्वात्तैः प्रष्टृत्वेन व्यवस्थापित शौनकः अब्रवीत् ॥ १ ॥ हे सूत सूत महाभाग ! हे वदतां वर ! यत् यां कथां भगवान् शुक आह स्म तां पुण्यां भागवतीं कथां नोऽस्मभ्यं वद ॥ २ ॥ कस्मिन्निति । इयं कथा कस्मिन् युगे प्रवृत्ता ? कस्मिन् वा स्थाने प्रवृत्ता ? केन हेतुना वा प्रवृत्ता ? भारतादिकृतवतो व्यासस्यैतन्निर्माणवृत्तौ किं कारणमित्यर्थः । कुत इति सर्वविभक्तिकस्तसिः । केन संचोदितः प्रेरितः कृष्णः मुनिर्व्यासः संहितां कृतवान् चक्रे ॥ ३ ॥ तस्येति । तस्य व्यासस्य पुत्रः शुकस्तु महायोगी समदृक् समं ब्रह्म पश्यति । अतो निर्विकल्पकः निरस्तभेदः किंच एकस्मिन्नेवान्तः समाप्तिर्यस्या तथाभूता मतिर्यस्य सः । यतः उन्निद्रः निद्रा अविद्या तत उद्गतः अविद्याशयनादुद्बुद्धः "या निशा सर्वभूतानां तस्यां जागर्ति संयमी । इत्युक्तेः । अत एव गूढः अप्रकटः मूढ इव ईयते प्रतीयते ॥ ४ ॥ दृष्ट्वेति । आत्मजं शुकं प्रव्रजन्तम् अनुयान्तम् अनुगच्छन्तम् ऋषिं व्यासम् अनग्नमपि दृष्ट्वा जले क्रीडन्त्यो देव्यः अप्सरसः ह्रिया लज्जया स्ववस्त्राणि परिदधुः नग्नस्य सुतस्य शुकस्य दर्शने तु लज्जाभावात् न परिदधुः । तच्चित्रं वीक्ष्य मुनौ व्यासे पृच्छति सति देव्यः व्यासं जगदुः । तव वृद्धस्यापि स्त्रीपुंभिदा अयं पुमानियं स्त्री इति भेदः अस्ति । विविक्तदृष्टेः निर्विकारदृष्टेः सुतस्य शुकस्य तु यूनोऽपि स्त्रीपुंभिदा नास्ति । वयं कलाभिज्ञाः स्त्रीपुंसयोर्नयनदर्शनेनैव तदन्तस्तत्त्वं जानीम इति भावः ॥ ५ ॥ कथमिति । कुरवो जाङ्गलाश्च देशविशेषाः तान् संप्राप्तः । ततो गजसाह्वये गजेन सहित आह्वयो नाम यस्य तस्मिन् हस्तिनापुरे हस्ती नाम राजा तेन निर्मितत्वात् । उन्मत्तमूकजडवत् विचरन् स शुकः पौरैः शुकत्वेन कथमालक्षितः ज्ञातः ॥ ६ ॥ कथमिति । हे तात ! यत्र संवादे एषा सात्वती भागवती श्रुतिः संहिता प्रवृत्ताऽऽसीत् स पाण्डवेयस्य राजर्षेः परीक्षितः तादृशेन मुनिना सह संवादः कथं वा समभूत् ॥ ७ ॥ स इति । हि यतः स महाभागः शुकः गृहमेधिनां गृहेषु तदाश्रमे तेषां गृहमेधिनामाश्रमं तीर्थीकुर्वन् पवित्रीकुर्वन् पवित्रीकरणायैव नतु भिक्षार्थमित्यर्थः । अर्जयन् वसतीतिवत् प्रयोजने सति गोदोहनमात्रं यावता गौर्दुह्यते तावन्मात्रं कालमवेक्षते प्रतीक्षते । भागवतव्याख्यानं तु बहुकालापेक्षम् ॥ ८ ॥ वक्तुरद्भुतत्वमुक्त्वा श्रोतुरप्याह—अभिमन्युसुतमिति । हे सूत ! अभिमन्योः सुतं परीक्षितं भागवतेषु उत्तमं प्राहुः । अतस्तस्य महाश्चर्यरूपं जन्म यत्र ब्रह्मास्त्रस्यापि प्रतिघातः तथा कर्माणि च कालिनिग्रहादीनि नोऽस्मभ्यं गृणीहि कथय ॥ ९ ॥ स इति । पाण्डूनां पाण्डवानां मानवर्द्धनः सम्राट् चक्रवर्ती सः परीक्षित् कस्य वा हेतोः अधिराट्श्रियम् अधिराजां सम्पदम् अनादृत्य गङ्गायां प्रायेण मरणपर्यन्तमनशनसंकल्पेन उपविष्टोऽभूत् ॥ १० ॥ नमन्तीति । अङ्ग हे सूत ! ह स्फुटं शत्रवोऽपि आत्मनः शिवाय धनानि आनीयार्पयित्वा यस्य पादनिकेतं चरणपीठं नमन्ति । अहो ! स वीरः युवा एव सन् दुस्त्यजां श्रियं राज्यसम्पदम् असुभिः प्राणैः सहैव उत्स्रष्टुं कथम् ऐषत् ऐच्छत् । आर्षस्तङ् छत्वाभावश्च । "एष्टृ गतौ" इत्यस्य वा ॥ ११ ॥ शिवायेति । ये जनाः उत्तमश्लोकपरायणा भवन्ति ते लोकस्य शिवाय सुखाय भवाय समृद्ध्यै यद्वा भवनिवृत्त्यै मशकार्थो धूम इतिवत् भवं संहर्त्तुं वा । "क्रियार्थ०" इत्यादिना चतुर्थी । भूतये ऐश्वर्याय च जीवन्ति न त्वात्मार्थम् । एवं सत्यसौ राजा निर्विद्य विरज्यापि परेषामाश्रयं कलेवरं कुतो हेतोर्मुमोच । नहि परोपजीवनं स्वयं त्यक्तुमुचितमित्यर्थः ॥ १२ ॥ तदिति । इह यत्किंचन पृष्टोऽसि तत्सर्वं नोऽस्मभ्यं समाचक्ष्व । यद्यस्मात् त्वां वाचां विषये गिरां गोचरेऽर्थे छान्दसादन्यत्र अत्रैवर्णिकतया वैदिकव्यतिरेकेण स्नातं पारगं मन्ये । इदं तु वेदपुराणयोर्भेदव्यवस्थयोक्तं तत्त्वं तु टीकायाः शेषभागे ज्ञेयम् ॥ १३ ॥

द्वापरे इति । युगानां वैवस्वतमन्वन्तरीयसत्यादीनां सप्तविंशतिसंख्यानां पर्ययोऽतिक्रमो यस्मिन् तस्मिन् द्वापरे सति 'पर्ययोऽतिक्रमस्तस्मिन्' इत्मरः । अष्टाविंशः द्वापरः श्रीकृष्णावतारसम्बन्धेन ज्ञेयः । तत्र तृतीये सन्ध्याख्ययुगाख्यसन्ध्यांशाख्येषु भागेषु तृतीये सन्ध्यांशाख्ये भागे द्वापरान्ते समनुप्राप्ते सति यद्वा कृतयुगापेक्षया तृतीये द्वापरे युगे युगस्य द्वापरस्य

पर्ययेऽवसाने सति हरेः कलया पराशरात् वासव्याम् उपरिचरस्य वसोर्वीर्याज्जातायां सत्यवत्यां योगी ज्ञानी व्यासो जातः ॥ १४ ॥ स इति । स व्यासः कदाचित्काले शुचि शुद्धं सरस्वत्या नद्या जलम् उपस्पृश्य आचम्य उपलक्षणतया स्नानसन्ध्यादि च कृत्वा ततः रविमण्डले उदिते सति विविक्तदेशे चित्तैकाग्र्यार्थम् एकान्ते स्थाने आसीनो बभूवेति शेषः। अनेनैव बदरिकाश्रमः सूचितः ॥ १५ ॥ परावरेति त्रिकम् । मुनिर्मननशीलः अमोघदृक् अप्रतिहतज्ञानः परावरज्ञः भूतभविष्यज्ञः स ऋषिः व्यासः अव्यक्तं रंहो वेगो यस्य तेन कालेन युगधर्माणां व्यतिकरं संकरं नाशं वा प्राप्तं दिव्येन चक्षुषा वीक्ष्य तथा भुवि युगे युगे तत्कृतं कालकृतं भौतिकानां पञ्चभूतकार्याणां भावानां शरीरादीनां शक्तिह्रासं च वीक्ष्य तथा जनान् अश्रद्दधानान् निःसत्त्वान् धैर्यशून्यान् रजस्तमोमयान् वा दुर्मेधान् मन्दमतीन् । असिजभाव आर्षः । ह्रसितायुषः दुर्भगान् दुर्भाग्यांश्च वीक्ष्य सर्वेषां वर्णानामाश्रमाणां च यत् हितं तत् दध्यौ दिव्येन चक्षुषेत्यस्य दध्यावित्यनेन वा सम्बन्धः॥ १६–१८ ॥ चातुर्होत्रमिति । चत्वारो होतारो होत्रध्वर्यूद्गात् ब्रह्माणस्तैर्निर्वृत्तं वैदिकं कर्म चातुर्होत्रं प्रजानां कर्माधिकृतानां शुद्धं शुद्धिकरं शुद्धशब्दात् 'तत्करोति०' इति णिजन्तात् अच् । वीक्ष्य विचार्य यज्ञानां सन्तत्यै अविच्छेदाय एकमविभक्तं वेदम् ऋगादिभेदेन चतुर्विधं व्यदधात् ॥ १९ ॥ ऋगिति । व्यासेन एकस्मादेव वेदात् ऋग्यजुःसामाथर्वाख्याश्चत्वारो वेदा उद्धृताः । इतिहासाः भारताद्याः पुराणानि ब्राह्मादीनि चेति समाहारद्वन्द्वः । तच्च वेदार्थस्य बृंहकत्वात् पञ्चमो वेदः उच्यते ॥ २० ॥ तत्रेति । तत्र पैलऋषिः ऋग्वेदधरः अभूत् । कविः क्रान्तदर्शी जैमिनिः सामगः अभूत् । उत तथा एको वैशम्पायन एव यजुषां विषये निष्णातः कुशलोऽभूत् ॥ २१ ॥ अथर्वेति । दारुणः अभिचारकर्मप्रवृत्त्या क्रूरः सुमन्तुर्मुनिः अथर्वाङ्गिरसामथर्वणां विषये निष्णातः आसीत् । मे मम पिता रोमहर्षणः इतिहासपुराणानां विषये निष्णातः आसीत् ॥ २२ ॥

त इति । ते पूर्वोक्ता एते ऋषयः पैलादयः स्वं स्वं वेदमनेकधा व्यस्यन् विभक्तवन्तः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति आडभाव आर्षः । स्यतेर्वा रूपम् । ततश्च ते वेदाः शिष्यैः प्रशिष्यैः शिष्यशिष्यैः तच्छिष्यैः प्रशिष्यशिष्यैः शाखिनः तत्तन्नामपर्वशाखावन्तोऽभवन् ॥ २३ ॥ त एवेति । ये पूर्वमतिमेधाविभिर्द्धार्यन्ते स्म त एव वेदाः यथा दुर्मेधैः दुर्मेधोभिः । असिजभाव आर्षः । एवंप्रकारेण कृपणवत्सलः दीनेषु स्निग्धः भगवान् व्यासः वेदविभागं चकार ॥ २४ ॥ स्त्रीति सार्द्धम् । कर्मरूपे श्रेयसि श्रेयःसाधने मूढानामनधिकारिणां स्त्रीणां शूद्राणां द्विजबन्धूनां त्रैवर्णिकेषु हीनानां च त्रयी श्रुतिगोचरा सती अनधिकारित्वात् श्रवणविषयो नास्ति । अतस्तेषाम् । एवमनेन करिष्यमाणभारतप्रकारेण इह लोके श्रेयः भवेत् इति हेतोः मुनिना व्यासेन कृपया भारतं नामाख्यानं कृतम् । गोचरशब्दस्य नियतपुंस्त्वेन गोचर इति वा पाठः ॥ २५ ॥ एवमिति द्वयम् । हे द्विजाः ! एवं सदा भूतानां श्रेयसि प्रवृत्तस्यापि व्यासस्य यदा सर्वात्मकेन अनेकोद्देशवताऽपि कर्मणा । यद्वा स्वार्थे कः । सर्वात्मना सर्वप्रकारेणापि हृदयं नातुष्यत् कृतार्थमात्मानं नामन्यत । ततो न अतिप्रसीदत् हृदयं यस्य स धर्मवित् शुचौ सरस्वत्यास्तटे विविक्ते एकान्ते स्थितः चित्ताप्रसक्तिहेतुं वितर्कयन् स्वगतमिदं प्रोवाच ॥ २६–२७ ॥ धृतेति । धृतव्रतेन मया हि निर्व्यलीकेन निष्कपटेन चेतसा छन्दांसि गुरवः अग्नयश्च मानिताः पूजिताः तेषामनुशासनं च गृहीतम् ॥ २८ ॥ भारतेति । यत्र भारते स्त्रीशूद्रादिभिरपि उतशब्दात्त्रैवर्णिकैश्च धर्मादिः चतुर्वर्गः दृश्यते । तस्य भारतस्य व्यपदेशेन मिषेण आम्नायार्थो वेदार्थश्च दर्शितः ॥ २९ ॥ अथेति । अथापि तथापि बताश्चर्ये मे दैह्यः देहे भव आत्मा जीवः आत्मना स्वरूपेण विभुस्तपोज्ञानादिभिः परिपूर्णोऽपि असम्पन्न इव अपूर्ण इव तादात्म्यमप्राप्त इवाभाति न केवलमसम्पन्न इव । किंतु ब्रह्मवर्चसं वेदश्रवणाध्ययनाध्यापनोत्कर्षजं तेजस्तद्वान् ब्रह्मवर्चसी अपि असत्तम इवाभाति । यद्वा ब्रह्मवर्चसे साधवो ब्रह्मवर्चस्याः तेषु सत्तमोऽपि उसत्तम इति वा पाठः । समासान्ताभावे आर्षे विन्प्रत्ययान्तपाठे ब्रह्मवर्चस्वी अपीत्यर्थः ॥ ३० ॥ किं वेति । किंवा अथवा परमहंसानां प्रियाः भागवता धर्माः प्रायेण भूयस्त्वेन न निरूपिताः । हि यतः ते एव भागवतधर्माः परमहंसा वा अच्युतस्य प्रियाः । अत एवात्मा असम्पन्न इवाभाति । अत्र भक्तिरसिकाः प्राहुः । भागवतधर्मशब्देनात्र भक्तिरेव व्याख्यातुं शक्या न तु ज्ञानम् । नारदेनाग्रे भगवद्यशोवर्णनस्यैवोपदेशात् । अतः परमहंसा अपि भक्ता एव अतः पारमहंसी संहितेयमिति ज्ञानिभिरत्र स्वत्वं नारोपणीयमिति ॥ ३१ ॥ तस्येति । एवम् आत्मानं खिलं न्यूनं मन्यमानस्य खिद्यतः खेदं प्राप्नुवतः । परस्मैपदमार्षम् । तस्य कृष्णस्य व्यासस्य प्रागुदाहृतं सरस्वतीतीरस्थमाश्रमं नारदः अभ्यागात् । अत्र भगवदवतारत्वादसंभावितावप्यसर्वज्ञता-चित्ताप्रसादौ व्यासस्य श्रीकृष्णेनैव सर्वशास्त्रशिरोमणेर्भागवतस्य प्रादुर्भावार्थमेव बलादुपपादितौ । ततो नारदोपदेशात् भागवते प्रादुर्भूते सर्वज्ञताचित्तप्रसादावुद्भावितौ ॥ ३२ ॥ तमिति । मुनिर्व्यासः सुरपूजितं तं नारदमागतमभिज्ञाय सहसा प्रत्युत्थाय विधिवत्पूजयामास । विधिं ब्रह्माणमिव विधिवत् वच्छब्दः इवार्थस्तेन समास इत्यप्याहुः ॥ ३३ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायश्चतुर्थे प्रथमस्य व्यधादिमाम् ।

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्थोऽध्यायः ॥ ४ ॥

——:*:——

# अथ पञ्चमोऽध्यायः

## सूत उवाच

**अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः। देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १॥**

पञ्चमे सर्वधर्मेभ्यो हरिकीर्तनगौरवम्। व्यासाय नारदः स्माह श्लोकास्तत्र खवार्धयः (४०)॥

चत्वार्युवाचेति (४) साङ्घ्रिचन्द्रबाणा (५१।) अनुष्टुभः ॥ ५॥

अथ तमिति। अथ सुखम् आसीनः बृहच्छ्रवाः महायशाः वीणापाणिः मुखप्रसत्त्या स्मयन्निव यद्वा अहो महानपि मुह्यतीति विस्मयमान इव शता आर्षः। उप समीपे आसीनम् आतिथ्येऽर्घपाद्यादिभिरुपासनां कुर्वन्तमेवेति वा तं विप्रर्षिं व्यासं प्राह स्म ॥ १॥ पाराशर्येति। हे पाराशर्य हे महाभाग! भवतः शारीरः शरीराभिमानो आत्मा तेन आत्मना शरीरेण कच्चित्परितुष्यति तथा मानसः आत्मा मनोऽभिमानी तेन आत्मना मनसा कच्चित्परितुष्यति नो एव वा भङ्गिभेदेन व्याध्याधिराहित्यप्रश्नः ॥ २॥ जिज्ञासितमिति। यः त्वं सर्वैरर्थैः धर्मादिभिः परिबृंहितं पूर्णं भारतं कृतवान् अतस्तस्य ते महत्सर्वोपकारकम् अद्भुतमपूर्वम् अपि जिज्ञासितं ज्ञातुमिष्टं धर्मादि यत्तत् सर्वं सुसम्पन्नम् एव। अपिशब्दादनुष्ठितं च। अयीति पाठे सम्बोधनम्। य इत्यत्र यदिति पाठे यत इत्यर्थः ॥ ३॥ जिज्ञासितमिति। हे प्रभो! यत्सनातनं नित्यं परं ब्रह्म तदपि त्वया जिज्ञासितं वेदान्तसूत्रकरणेन विचारितम्। अत्र इच्छार्थता न विवक्षिता। अन्यत्रापि क्वचित् अजिज्ञासितमद्धर्म इत्यादौ अधीतम् अधिगतमनुभवगोचरीकृतमित्यर्थः। अथापि त्वम् अकृतार्थ इव आत्मानं शोचसि तत्किमर्थमिति शेषः ॥ ४॥ अस्तीति। त्वया उक्तम् इदं सर्वं भारतनिर्माणादि मे मम अस्ति एव तथापि मे आत्मा शारीरो मानसश्च न परितुष्यते। तङार्षः। अतः वयम् अगाधो गम्भीरो बोधो यस्य तम्। आत्मभवो ब्रह्मा तस्य आत्मनः देहात् भूतं जातं त्वाम् अव्यक्तमस्फुटं तस्य अपरितोषस्य मूलं पृच्छामहे। तङार्षः। हे इति भिन्नं पदं वा ॥ ५॥ अगाधबोधतां प्रपञ्चयन्नाह—स वा इति। यः गुणैः असङ्गः अनभिभूत एव सन् मनसा संकल्पमात्रेण एव विश्वं सृजति गुणैर्विश्वं सृजतीति वा अवति अत्ति च सः परावरेशः कार्यकारणयोर्नियन्ता पुराणः पुरुषः भगवान् यत् यस्माद्धेतोर्भवता उपासितः अतो वै निश्चितं भवान् समस्तं गुह्यं वेद ॥ ६॥ त्वमिति। त्वं त्रिलोकीं पर्यटन् अर्क इव सर्वदर्शी योगबलेन प्राणवायुरिव सर्वप्राणिनामन्तश्चरः सन्नात्मसाक्षी बुद्धिवृत्तिज्ञः अतः परावरे ब्रह्मणि धर्मतो व्रतैः स्नातस्य परे धर्मतो योगेन निष्णातस्य 'अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥' इति याज्ञवल्क्यः। अवरे च ब्रह्मणि वेदाख्ये व्रतैः स्वाध्यायनियमैर्निष्णातस्य मे अलमत्यर्थं यत् न्यूनं तद्विचक्ष्व वितर्कय ॥ ७॥ भवतेति। भवता भगवतः अमलं यशः अनुदितप्रायं प्रायेणानुक्तमेवास्ति येनैव भगवद्यशोरहितेन केवलेन धर्मादिज्ञानेन शुष्कवेदान्तदर्शनेन वा असौ भगवान् न तुष्येत। तङार्षः। अहं तद्दर्शनं शास्त्रं ज्ञानं च खिलं न्यूनं मन्ये। तद्दर्शनकर्तुस्तवापि चित्ताप्रसादश्चेदन्येषां का वार्त्ता ॥ ८॥

यथेति। हे मुनिवर्य! हि यस्मात् यथा त्वया भगवन्महिमतो निकृष्टा अपि धर्मादयः अर्थाः प्राधान्येन अनुकीर्त्तिताः। चकारात्तत्साधनानि च कीर्त्तितानि तथा प्राधान्येन वासुदेवस्य महिमा न अनुवर्णितः। अतो भगवद्यशोऽनुदितप्रायम् ॥ ९॥ नेति। चित्रपदं ललितपदयुक्तं विचित्रान्नादिस्थानं चापि यद्वचःकथाप्रसङ्गः कर्ह जगदपि पवित्रयति तत् जगत्पवित्रं हरेर्यशः कर्म न प्रगृणीत। अत एव यत्र उशिक् कमनीयं ब्रह्म पद्मखण्डं च क्षयो निवासो येषां ते मानसाः सत्त्वप्रधाने मनसि मानसाख्ये सरसि च वर्त्तमाना हंसा यतयः मरालाश्च कर्हिचित् अपि न निरमन्ति नितरां न रमन्ते। तङभाव आर्षः। बुधाः तद्वचः वायसं तीर्थम् उच्छिष्टान्नादिपूर्णं गर्तमिव काकतुल्यानां कामिनां रतिस्थानम् उशन्ति मन्यन्ते। अत्र वचःशब्देन अग्रपद्ये वाग्विसर्गशब्देन च कथाप्रसङ्ग एवोच्यते नतु वाक्यमात्रम्। तथा सति नाभागो नभगापत्यमित्यादीनां हरिगुणरहितानां वायसतीर्थत्वं स्यात्। एवं चात्रत्याः सर्वे कथाप्रसङ्गा हरियशोङ्किताः पुराणान्तरेषु च बहवो हरियशोरहिता एता एवेति ॥ १०॥ तद्वागिति। अवद्धवत्यपि अपशब्दादियुक्तेऽपि गाढादिबन्धरहितेऽपि वा यत्र सम्यग्बन्धोऽपि नास्ति कुतो रसालङ्कारादिरित्यर्थः। यस्मिन् वाग्विसर्गे प्रतिश्लोकम् अनन्तस्य यशोभिरङ्कितानि नामानि भवन्ति अत एव च यत् यं वाग्विसर्गं यानि

नामानि वा साधवः शृण्वन्ति गायन्ति गृणन्ति च स चासौ वाग्विसर्गः कथाप्रसङ्गः जनानां समूहो जनता तस्या अघानां विप्लवो नाशको भवति। विप्लवतेरन्तर्भावितण्यर्थादच्। अघानां विप्लवो यस्मादिति व्यधिकरणो बहुव्रीहिर्वा ॥ ११ ॥ नैष्कर्म्यमिति। कर्मनिवृत्तिप्राप्यत्वान्निष्कर्म ब्रह्म तदेकाकारत्वारूपत्वान्नैष्कर्म्यं निष्कर्मतारूपं निरञ्जनम्। अज्यतेऽनेन तदञ्जनमुपाधिस्तन्निवर्त्तकमपि ज्ञानमच्युते भावो भक्तिस्तद्वर्जितं चेत् अलमत्यर्थं न शोभते सम्यगापरोक्ष्याय न कल्पते। तदा यत्पुनः शश्वदभद्रं साधनकाले फलकाले च दुःखरूपं काम्यं कर्म यदप्यकारणमकाम्यं तच्च तदपि कर्म ईश्वरे नार्पितं चेत् कुतः शोभेत। बहिर्मुखतया सत्त्वशोधकत्वाभावात्। प्रेमभक्तास्तु अलमतिशयेन निरञ्जनमुपाधिरहितमपरोक्षमपि ज्ञानम् अच्युते यो भावश्चिदानन्दविग्रहत्वभावना तद्रहितं चेत् न शोभते । मायाशवलतालक्षणापकर्षभावनया भक्तिसत्त्वेऽपि मोक्षसाधकं न भवतीत्यर्थः। भगवतोऽचिन्त्यशक्त्या नष्टस्याप्युपाधेः पुनः पुनः प्ररोहात् 'जीवन्मुक्ताः प्रपद्यन्ते क्वचित्संसारवासनाम्॥' इत्युक्तेरिति व्याचख्युः ॥ १२ ॥ अथो इति। यतो भक्तिरहितानि ज्ञानवाक्चातुर्यकर्मकौशलानि व्यर्थान्येव। अथो अतः कारणात् हे महाभाग! भवान् अमोघा यथार्था दृक् धीर्यस्य शुचि शुद्धं श्रवो यशो यस्य सत्ये रतः धृतानि व्रतानि येन तादृशश्चास्ति। अतः त्वम् अखिलस्य लोकस्य बन्धमुक्तये तत् सर्वजनप्रियम् उरुक्रमस्य विचेष्टितं विविधां लीलां समाधिना चित्तैकाग्र्येण अनुस्मर। स्मृत्वा वर्णयेत्यर्थः। वाक्यभेदान्मध्यमपुरुषो नानुप्रपन्नः ॥ १३ ॥

तत इति। तत उरुक्रमचेष्टितात् पृथक वस्तुनि विषयादौ दृग् यस्य अत एव उरुक्रमचेष्टितात् अन्यथाऽन्यप्रकारेण यत् किञ्चन अर्थान्तरं विवक्षतः वक्तुमिच्छतो जनस्य तया विवक्षया कृतैः स्फुरितैर्वक्तव्यत्वेनोपस्थितैः रूपैर्नामभिश्च दुःस्थिताऽनवस्थिता सती मतिः कुत्रचित् कदाचित्क्वापि विषये वातेन आहता आघूर्णिता नौरिव आस्पदं स्थानं न लभेत। तादृशवाक्यस्य विवक्षाऽप्यनर्थावहा किं पुनर्वचनं तदनुष्ठानं वेति भावः ॥ १४ ॥ हरियशो विना भारतादिषु कृतं धर्मवर्णनमपि प्रत्युत विरुद्धं जातमित्याह—जुगुप्सितमिति। धर्मकृते मुनिर्विवक्षुर्भगवद्गुणानामिति विदुरोक्तरीत्या हरिधर्मग्रहणार्थमेव जुगुप्सितं निन्द्यं काम्यकर्मादिकम् अनुशासतः उपदिशतस्त्वत्तः सकाशादेव स्वभावरक्तस्य विषयेपूत्पत्तित एव रागिणो लोकस्य महान् व्यतिक्रम उपप्लवो जातः। यतः यस्य तव वेदव्यासस्य वाक्यतो "देवान् पि ॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्।" इत्यादिविधावेव धर्म इति स्थितः। आग्रहवान् इतरः प्राकृतो जनः तस्य धर्मस्य निवारणं "न कर्मणा न प्रजया" इत्यादि "सर्वधर्मान् परित्यज्य" इत्यादि वा न मन्यते। गार्हस्थ्यानधिकारिविषयमेतदिति कल्पयति। तथा च तेषां वचः "तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः। गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः।" इत्यादि ॥ १५ ॥ विचक्षणः निपुणः कश्चिदेव निवृत्तितः सर्वक्रियानिवृत्त्या अनन्तपारस्य न अन्तः कालतः पारं च देशतः यस्य तस्य अस्य विभोः सुखं निर्विकल्पसुखात्मकं स्वरूपं वेदितुं ज्ञातुमर्हति। नतु अविचक्षणः अतो हेतोः ततो भवान् प्रशस्यः। "इतराभ्योपि" इति प्रथमान्तात्तसिः। त्वमिति शेषः। अतो मध्यमपुरुषः। भवन्निति पाठे संबोधनम्। अनात्मनो देहाद्यभिमानिनः अत एव गुणैः सत्त्वादिभिः प्रवर्त्तमानस्य जनस्य श्रेयसे विभोश्चेष्टितं दर्शय ॥ १६ ॥त्यक्त्वेति। "सर्वधर्मान् परित्यज्य" इति वचनात् स्वधर्मं त्यक्त्वापि हरेश्चरणाम्बुजं भजन् जनः यदि अपक्व एव ततो भजनात्कथंचित्पतेत् भ्रश्येत् म्रियेत वा तदा यत्र क्व वा नीचयोनावपि अमुष्य भक्तिरसिकस्याभद्रमभूत्किं नाभूदेवेत्यर्थः। भक्तिवासनासद्भावादिति अभजताम् अभजद्भिस्तु सम्बन्धमात्रविवक्षया षष्ठी। केवलं स्वधर्मतः को वा अर्थः आप्तः प्राप्तः ॥१७॥ तस्यैवेति। यत् उपरि ब्रह्मपर्यन्तम् अधः स्थावरपर्यन्तं च भ्रमताम् भ्रमद्भिर्जीवैर्न लभ्यते। षष्ठी तु पूर्ववत्। कोविदो विवेकी जनस्तस्यैव भगवद्भक्तियोगस्य हेतोः प्रयतेत तत् विषयजं सुखं तु गभीररंहसा कर्मोद्बोधनसमर्थेन कालेन उद्बोधितात् अन्यतः प्राचीनकर्मण एव सर्वत्र नरकादावपि दुःखवत् लभ्यत एव। यथा दुःखं प्रयत्नं विनापि लभ्यते तद्वत्। अतो विषयसुखलाभाय यत्नमकृत्वा भक्त्यै यत्नः कार्यः ॥ १८ ॥ न वै इति। अङ्ग हे मुने! मुकुन्दसेवी जनो जातु कदाचित्कथंचन कुयोनिगतोऽपि अन्यवत् केवलकर्मठो यथा संसृतिमाव्रजति तथा संसृतिं न वै आव्रजेत् नैवाविशेत्। यतः असौ जनः रसग्रहः भक्तिरसग्राही अतः मुकुन्दाङ्घ्रेरुपगूहनमालिङ्गनं पुनः पुनः स्मरन् विहातुं नेच्छेत् ॥ १९ ॥

इदमिति। इदं विश्वं हि भगवानिव इव एवार्थे भगवानेवेत्यर्थः। यतो निर्विकाराद् भगवतो जगतः स्थाननिरोधसंभवाः स्थितिलयोत्पादा भवन्ति। स भगवांस्तु तस्मादितः अधिकदेशवृत्तित्वात् ईश्वरात्प्रपञ्चो न पृथक्। ईश्वरस्तु प्रपञ्चात् पृथगित्यर्थः। यद्वा इदं विश्वं भगवान् इतर इव यः सजीवोऽपि भगवान् तद्व्यतिरिक्तश्चेतनाचेतनः प्रपञ्चो नास्ति। भक्तास्तु इदं विश्वं भगवानिव सदिव चेतनमिवेति नतु भगवानेवेत्यर्थं इत्याहुः। तद्धि भवान् स्वयमेव वेद। तथापि वै निश्चितं भवतस्तव प्रादेशमात्रमेकदेशमात्रम् "आचार्यवान्पुरुषो वेद" इत्यादि श्रुत्यर्थसंपादनाय प्रदर्शितम् ॥ २० ॥ त्वमिति। हे अमोघदृक्! त्वम् आत्मानं परस्य पुंसः परमात्मनः कलामंशभूतम् अजमपि जगतः शिवाय प्रजातम् आत्मना स्वयमेवावेहि। तत्तस्मात् महानुभवस्य हरेरभ्युदयः पराक्रमः अधि अधिकं गण्यतां निरूप्यताम् ॥ २१ ॥ इदं हीति। यत् उत्तमश्लोकस्य हरेर्गुणानामनुवर्णनं तत् इदमेव

हि पुंसः श्रुतस्य शास्त्रश्रवणस्य वा स्विष्टस्य सम्यग्यजनस्य सूक्तस्य सद्वचनस्य बुद्धिदत्तयोः ज्ञानदानयोः अविच्युतः नित्योऽर्थः फलं कविभिर्निरूपितः नान्यत् श्रुतादौ भावे निष्ठा। सर्वशास्त्रवाक्यानां भगवत्येव तात्पर्यात् ॥ २२ ॥ अहमिति। हे मुने! अहं पुरा पूर्वकल्पे अतीतभवे पूर्वजन्मनि वेदवादिनां कस्याश्चन दास्याः सकाशात् अभवं जात आसं तथा बालक एवाहं प्रावृषि वर्षोपलक्षिते चातुर्मास्ये निर्विविक्षतां निर्वेशमेकत्र वासं कर्त्तुमिच्छतां योगिनां शुश्रूषणे निरूपितः नियुक्तः ॥ २३ ॥ ते इति। यद्यपि ते मुनयो योगिनः तुल्यदर्शनाः शुश्रूषकेषु अशुश्रूषकेषु च समदृष्टयस्तथापि अपेतान्यखिलानि चापलानि यस्मात्तस्मिन् दान्ते नियतेन्द्रिये अधृतक्रीडनके त्यक्तक्रीडासाधने अनुवर्तिनि अनुकूले अल्पभाषिणि शुश्रूषमाणे अर्भके बाले मयि स्वाभाविककृपालुतया कृपां चक्रुः ॥ २४ ॥ उच्छिष्टेति। तैर्वेदवादिभिर्द्विजैः अनुमोदितोऽनुज्ञातोऽहम् उच्छिष्टस्य लेपान् पात्रलग्नान् सकृत् भुञ्जे स्म। तेषां नित्यमेकवारभोजित्वात् अहमपि नित्यं सकृत् भुक्तवान्। तेन भोजनेनापास्तकिल्विषो जातः। एवं प्रवृत्तस्य विशुद्धचेतसो मे तेषां धर्मे परमेश्वरभजने एवात्मनो मनसो रुचिः प्रजायते स्मेत्यनुषङ्गः। यद्वा अन्यस्यापि एवंप्रवृत्तस्य तद्धर्मे एवात्मरुचिः प्रजायते ॥ २५ ॥ तत्रेति। अंग हे मुने! तत्रान्वहं प्रतिदिनं मनोहराः कृष्णकथाः प्रगायतां तेषाम् अनुग्रहेण ताः कथाः आसमन्तात् अशृणवं श्रुतवानस्मि। श्रद्धया ताः कथाः विशृण्वतः मे अनुपदं प्रतिक्षणं मम प्रियं श्रवो यस्य तस्मिन् हरौ रुचिरभवत्। अतो ममेत्यस्य न पौनरुक्त्यम्। मे श्रद्धया ममैव स्वतःसिद्धया नतु बलाज्जनितया इति वाऽन्वयः ॥ २६ ॥

तस्मिन्निति। हे महामुने! तदा तस्मिन् प्रियश्रवसि भगवति लब्धरुचेर्ममास्खलिता अप्रतिहता मतिरभवदित्यनुषङ्गः। यया मत्या अहं परे प्रपञ्चातीते ब्रह्मरूपे मयि सदसत् स्थूलं सूक्ष्मं चैतच्छरीरं स्वमायया स्वाविद्यया कल्पितं नतु वस्तुतोऽस्तीति तत्क्षणमेव अपश्ये अपश्यमिति। तद्भावार्थः। प्रेमभक्तास्तु यया मत्या स्वमायया हेतुना वर्तमानं यदेतत् सदसत् स्थूलं सूक्ष्मं च शरीरं तद्ब्रह्मणि श्रीकृष्णविषय एव कल्पितमपश्यम्। स्थूलं शरीरं भगवत्प्रणत्यादौ सूक्ष्मं श्रवणदर्शनादिषु इति व्याचख्युः ॥ २७ ॥ एवं शुद्धे त्वंपदार्थे ज्ञाते देहादिकृतविक्षेपनिवृत्तये तत्कारणभूतरजस्तमोनिवर्त्तिका दृढा भक्तिर्जातेत्याह—इत्थमिति। इत्थं महात्मभिर्मुनिभिर्योगिभिः संकीर्त्यमानम् अमलं हरेर्यशः अनुसवं त्रिकालं शरत्प्रावृषिकौ द्वौ ऋतू व्याप्य विशृण्वतो मे मम आत्मनां जीवानां रजस्तमसी अपहन्तीति सा भक्तिः प्रवृत्ताऽभूत् ॥ २८ ॥ तस्येति द्वयम्। दीनवत्सलाः चातुर्मास्यानन्तरं गमिष्यन्तस्ते योगिनः एवमुक्तप्रकारेण भगवत्यनुरक्तस्य प्रश्रितस्य नम्रस्य हतैनसः नष्टपापस्य श्रद्दधानस्य दान्तस्य जितेन्द्रियस्य अनुचरस्य शुश्रूषमाणस्य तस्य शुद्धत्वंपदार्थस्य बालस्य मे ममोपरि कृपया यत्साक्षात् भगवता ब्रह्मगे उदितं गुह्यतमं ज्ञानं भागवताख्यं शास्त्रं तत् अन्ववोचन् उपदिष्टवन्तः। साधनभूतधर्मतत्त्वज्ञानं गुह्यं तत्साध्यं विविक्तात्मज्ञानं गुह्यतरं तत्प्राप्येश्वरज्ञानं गुह्यतमम् ॥ २९-३० ॥ येनेति। येन ज्ञानेन एव अहं वेधसः जगत्कर्त्तुः भगवतो वासुदेवस्य मायाया अनुभावम् अविदं लब्धवान् ज्ञातवान् "विद्लृ लाभे" येन च तस्य भगवतः पदं स्वरूपं वैकुण्ठाख्यं वा गच्छन्ति तदन्ववोचन्निति ॥ ३१ ॥ एतदिति। हे ब्रह्मन्! यत् ईश्वरे सर्वनियन्तरि ब्रह्मणि अप्रच्युतपूर्णरूपे भगवति कर्म भावितं समर्पितं तदेतत् तापत्रयस्याध्यात्मिकादेश्चिकित्सितं भेषजं निवर्त्तकं सत्त्वशोधकं संसूचितम् ॥ ३२ ॥ संसारहेतोरपि कर्मणस्तापत्रयनिवर्त्तकत्वं सामग्रीभेदेन सदृष्टान्तमाह—आमय इति। हे सुव्रत! यथा भूतानां यः आमयो रोगः येन घृतादिना जायते तदेव केवलमामयं रोगकारणभूतं द्रव्यं तमामयं न पुनाति न निवर्त्तयतीत्यर्थः। किंतु चिकित्सितं द्रव्यान्तरैर्भावितं सत्पुनात्येव। पुनातिरत्र निवर्तनार्थः। यद्वा य आमयो येन घृतादिना जायते तदेव घृतादि द्रव्यं चिकित्सितम् औषधान्तरभावनया चिकित्सारूपतां नीतं सत् आमयं न पुनाति न रक्षति नाशयतीत्यर्थः। पुनातिरत्र रक्षणार्थे। चिकित्सितमिति चिकित्साशब्दात्तत्करोतीति णिच् ततः क्तः ॥ ३३ ॥ दार्ष्टान्तिके योजयति—एवमिति। एवमेव सर्वे नित्याः काम्या नैमित्तिकाश्च क्रियायोगाः स्वतः नृणां संसृतेर्हेतव अपि ते एव परे परमेश्वरे कल्पिताः समर्पिताः सन्तः आत्मविनाशाय कर्मनिवृत्तये कल्पन्ते समर्था भवन्ति। अत्र च प्रथमं महत्सेवा ततश्च तत्कृपा ततः तद्धर्मश्रद्धा ततो भगवत्कथाश्रवणं ततो भगवति रतिः तया च देहद्वयविवेकात्मज्ञानं ततो दृढा भक्तिस्ततो भगवत्तत्त्वज्ञानं ततस्तत्कृपया सर्वज्ञत्वादिभगवद्गुणाविर्भाव इति क्रमो दर्शितः इति स्वामिचरणाः। सारार्थसन्दर्शिन्यां तु "सतां कृपा महत्सेवा श्रद्धा गुरुपदाश्रयः। भजनेषु स्पृहा भक्तिरनर्थापगमस्ततः। स्यान्निष्ठा रुचिरासक्ती रतिः प्रेमा ततः परम्।" इति द्वादश भूमिकाः अत्रोक्ताः। ततो दर्शनसाक्षान्माधुर्यानुभवौ उत्तराध्याये वक्ष्येते इत्युक्तम् ॥ ३४ ॥ यदिति। हि यस्मात् हेतोः अत्र कर्मभूमौ भगवदर्पितत्वाद्भगवत्परितोषणं निष्कामं यत् कर्म क्रियते यत् भक्तियोगसमन्वितं ज्ञानं तत् तस्य भगवत्परितोषणकर्मण एवाधीनम्। भगवदर्पितकर्मणाऽन्तःकरणशुद्धिस्ततो भक्तिस्ततो वासनानिवर्त्तकं ज्ञानमिति क्रमः ॥ ३५ ॥ कुर्वाणा इति। यत्र यदा भगवतः शिक्षया "यत्करोषि यदश्नासि" इत्यादिरूपया कर्माणि कुर्वाणा भवन्ति तदा श्रीकृष्णस्य गुणनामानि असकृत् मुहुर्मुहुर्गृणन्ति श्रीकृष्णमनुस्मरन्ति च। अतो भगवदर्पितं कर्म भक्तियुक्तं ज्ञानं जनयतीति भावः ॥ ३६ ॥ नम इति। वयं भगवते वासुदेवाय तुभ्यं नमः नमनं धीमहि मनसा कुर्वीमहि आर्षः प्रयोगः। तथा प्रद्युम्नाय अनिरुद्धाय संकर्षणाय च नमः धीमहि इत्यनुषङ्गः। प्रणवादिस्त्रयस्त्रिंशदक्षरात्मको मन्त्रः इति सारार्थसन्दर्शिनी। मान्त्रिकास्तु वासुदेवादिभिः ककारादीनां ग्रहणात् क्लीमिति कामबीजरूपो मन्त्रो बोध्यते इत्याहुः ॥ ३७ ॥

इतीति। इति मन्त्रमूर्त्ति मन्त्रध्यानोक्तमूर्त्ति वस्तुतस्तु अमूर्त्तिकं यज्ञपुरुषं भगवन्तं यः मूर्त्तीनां वासुदेवादीनाम् अभिधानेन नामचतुष्टयेन यजते पञ्चरात्रोक्तविधिना वासुदेवाय नमः प्रद्युम्नाय नमः इत्येवं षोडशोपचारैर्यः पूजयेत स पुमान् सम्यग्दर्शनः सम्यग्ज्ञानवान् भवति। अमूर्तिकमित्यस्य मन्त्रोक्तव्यतिरिक्तमूर्त्तिशून्यमिति स्वामिचरणाः। प्राकृतमूर्त्तिरहितमिति भक्ताः॥ ३८॥ इममिति। हे ब्रह्मन्! केशवः इमं पूर्वोक्तं स्वस्य निगममुपदेशं मयाऽनुष्ठित इति अवेत्य ज्ञात्वा मे मह्यं ज्ञानं स्वानुभवम् ऐश्वर्य-मणिमादिकं स्वस्मिन् भावं प्रेम भक्ति चादात्॥ ३९॥ त्वमपीति। अदभ्रमनल्पं श्रुतं यस्य हे अदभ्रश्रुत! येन विश्रुतेन बुद्धेन विदां विदुषां बुभुत्सितं बोद्धुमिच्छा समाप्यते पुनर्जिज्ञासा न भवेत्। तत् विभोर्भगवतः विश्रुतं यशः त्वमपि आख्याहि कथय। अन्यथा प्रकारान्तरेण तु दुःखैर्मुहुः अर्दितात्मनां पीडितमनसां जीवानां संक्लेशस्य निर्वाणं शान्तिं विवेकिनः न उशन्ति न मन्यन्ते॥ ४०॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः प्रथमस्याध्याये पञ्चमे व्यधात्।

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चमोऽध्यायः॥ ५॥

—:❀:—

## अथ षष्ठोऽध्यायः

### सूत उवाच

एवं निशम्य भगवान्देवर्षेर्जन्म कर्म च। भूयः पप्रच्छ तं ब्रह्मन्व्यासः सत्यवतीसुतः॥ १॥

षष्ठे तु नारदः स्माह हरिकीर्त्तनजं स्वकम्। सद्भाग्यं पूर्वजन्मोत्थं पद्यान्यत्राङ्कवह्नयः ( ३९ )॥

अनुष्टुभस्त्वभ्रवेदा ( ४० )॥ उवाचेति चतुष्टयम्॥ ६॥

एवमिति। हे ब्रह्मन् शौनक! सत्यवतीसुतो भगवान् व्यासः देवर्षेर्जन्म कर्म च एवं निशम्य भूयः पुनरपि तं नारदं पप्रच्छ॥ १॥ भिक्षुभिरिति। तव विज्ञानस्य आदेष्टृभिः उपदेशकैः भिक्षुभिः विप्रवसिते विप्रोषिते दूरदेशगमने कृते सति। भावे क्तः सम्प्रसारणाभाव आर्षः। आद्ये बाल्ये वयसि वर्त्तमानः भवान् ततोऽनन्तरं किम् अकरोत्। त्वच्छिष्योऽहमपि तथा चिकीर्षामीति भावः॥ २॥ स्वायम्भुवः स्वयंभुवः ब्रह्मणः पुत्र! ते तव परं बाल्यादुत्तरं वयः आयुः कया वृत्त्या वर्त्तितं व्यतीतम्। रामो राज्यमचीकरदित्यादाविव स्वार्थे णिच् ततः क्तः। ते त्वया परं वयः कथं नीतमिति स्वामिचरणाः। तत्र त्वयेत्यर्थे ते इति सुबन्तप्रतिरूपकमव्ययम्। मरणकाले प्राप्ते इदं दासीपुत्रभूतं कलेवरं शरीरं च कथम् उदस्राक्षीः त्यक्तवानसि॥ ३॥ प्राकल्पेति। हे सुरसत्तम! एष कल्पपर्यन्तः कालः ते तव प्राक्कल्पः पूर्वकल्पः विषयो यस्याः तामेतां जन्मवृत्तान्तानुसन्धानरूपां स्मृतिं कथं न व्यधात् व्यवधाय न खण्डितवान्। अडागमाभाव आर्षः। हि यस्मात् एष कालः सर्वेषां निराकृतिर्नाशो यस्मात् ईदृशोऽस्ति वाक्यभेदान्न एष इत्यस्य पौनरुक्त्यदोषः। न ह्येवेति क्वचित् पाठः। तत्रैकवाक्यतैव॥ ४॥ भिक्षुभिरिति। द्वितीय-श्लोकव्याख्यया व्याख्यातप्रायः अकारषम् अकार्षम्। रषयोर्विश्लेषश्छन्दोऽनुरोधेन॥ ५॥ एकात्मजेति। एक एवाहमात्मजो यस्याः सा योषित् मूढा किंकरी च मे जननी न अन्या गतिः पालनहेतुर्यस्य तस्मिन् आत्मजे मयि स्नेहस्यानुबन्धनमनुवृत्तिं चक्रे॥ ६॥ सा इति। मम योगक्षेमम् अप्राप्तप्राप्तिर्योगः प्राप्तस्य रक्षा क्षेमं पालनसाधनमित्यर्थः। इच्छती अपि सा अस्वतन्त्रा पराधीना अतो योगक्षेमे न कल्पा न समर्था आसीत्। हि यस्मात् लोकः यथा दारुमयी योषा स्त्री पुत्तलिका यन्त्रयितुर्वशे तिष्ठति तथा ईशस्य वशे तिष्ठति॥ ७॥ अहमिति। दिग्देशकालेषु अव्युत्पन्नः अनभिज्ञः पञ्चहायनः पञ्चवर्षः बालकः अहं च तदपेक्षया मातृकर्तृका या ममापेक्षा तया सा मां नात्यजदत इत्यर्थः। तस्या मातुः स्नेहानुबन्धस्यापेक्षया कदा विरमेदिति

प्रतीक्षयेत्यर्थः । इति स्वामिचरणाः । तस्मिन् ब्रह्मकुले ऊषिवान् वासं कृतवान् ॥ ८ ॥ एकदेति । एकदा निशि गां दुहन्तीं दुहतीं दोग्धुमित्यर्थः । नुमार्षः । हेतौ शतृप्रत्ययः । गेहान्निर्गतां कृपणां दीनां तां पथि मार्गे पदा पादेन आस्पृष्टः ईषदाक्रान्तःकालेन मृत्युना चोदितः कश्चित् सर्पः अदशत् ॥ ९ ॥

तदेति । तदा तत् मातुर्मरणं भक्तानां शं कल्याणम् अभीप्सतः ईशस्य अनुग्रहं मन्यमानः अहम् उत्तरां दिशं प्रातिष्ठं प्रस्थितवानस्मि । तङ्भाव आर्षः ॥ १० ॥ स्फीतानिति चतुष्कम् ॥ एकः असहाय एवाहं स्फीतान् समृद्धान् जनपदान् देशान् तत्र जनपदेषु पुरग्रामव्रजाकरान् तत्र पुराणि राजधान्यः ग्रामाः विप्रशूद्रादिनिवासाः व्रजा गोकुलानि आकरा रत्नाद्युत्पत्तिस्थानानि तान् खेटाः कर्षकग्रामाः खर्वटा गिरितटग्रामाः नदीशैलाश्रितग्राममिलितनगराणि वा वाट्यः पूगपुष्पादीनां वाटिकास्ताः वनानि स्वतः सिद्धवृक्षाणां समूहाः उपवनानि रोपितवृक्षाणां समूहाः तानि च इभेर्गजैर्भग्ना भुजाः शाखा येषां तादृशा द्रुमा येषु तान् चित्रैर्धातुभिः स्वर्णरजताद्यैः विचित्रा नदीश्च शिवानि भद्राणि जलानि येषां तान् जलाशयान् तडागादीन् सुरैः सेविताः चित्राः येषां तैः स्वनाः येषां तैः पत्ररथैः पक्षिभिः तन्नादप्रबुद्धैरित्यर्थः । विभ्रमद्भिर्भ्रमरैः श्रीः शोभा यासां ताः नलिनीः सरसीः अतियातः अतीत्य गतः सन् नानागुणदोषयुक्तेषु समदृष्टिः सन्निति तात्पर्यम् । नलवेणुशराणां स्तम्बैर्गुच्छैः कुशैः कीचकैः गह्वरं दुर्गमं वेणुजातय एव विपुलान्तरालगर्भाः कीचकाः घोरं दुःसहं प्रतिभयाकारं भयंकररूपं व्यालाः सर्पाः दुष्टगजा वा उलूकाः शिवाश्च तासामजिरं क्रीडास्थानं महद्विपिनं वनमद्राक्षम् ॥ ११–१४ ॥ परिश्रान्तेति । तृषा परीतः व्याप्तः बुभुक्षितश्च अत एव परितः श्रान्तानि इन्द्रियाणि आत्मा देहश्च यस्य तादृशोऽहं नद्या ह्रदे उपस्पृष्टः आचान्तः स्नात्वा जलं पीत्वा गतश्रमः अभूवम् ॥ १५ ॥ तस्मिन्निति । निर्मनुजे तस्मिन् अरण्ये पिप्पलोपस्थे अश्वत्थमूले आस्थितः उपविष्टः अहम् आत्मना बुद्ध्या विषयव्यावृत्तमनसा वा आत्मस्थं हृदिस्थम् आत्मानं परमात्मानं यथाश्रुतं मन्त्रोपदिष्टध्यानमतिक्रम्य अचिन्तयम् ॥ १६ ॥ ध्यायत इति भावः । प्रेमभक्तिस्तया निर्जितं वशीकृतं यच्चेतः तेन चरणाम्भोजमारभ्य श्रीमुखारविन्दपर्यन्तं ध्यायतः औत्कण्ठ्येन प्रेमवैवश्येन यान्यश्रूणि तेषां कलाभिर्बिन्दुभिर्युक्ते अक्षिणी यस्य तस्य मे मम हृदि हरिः शनैः क्रमेण आसीत् आविर्बभूव ॥ १७ ॥ प्रेमेति । हे मुने ! प्रेम्णः अतिभरेणातिशयेन निर्भिन्नानि उद्भूतानि पुलकानि येषु तादृशान्यङ्गानि यस्य अतिशयेन निर्वृतः सुखी अतः आनन्दानां संप्लवे महापूरे परमानन्दे लीनो मग्नोऽहम् उभयमात्मानं परं च न अपश्यम् ॥ १८ ॥ रूपमिति । मनसः कान्तमभीष्टं शुचा शोकस्तामपहन्तीति शुचापहं यत् भगवतो रूपमद्राक्षं तत्सहसा अपश्यन् अहं दुर्मना इव प्राप्तच्युतनिधिर्दुःखितमना जन इव वैक्लव्यात् भगवदर्शनजात् खेदात् हेतोः उत्तस्थे व्युत्थितो भग्नसमाधिरभूवमित्यर्थः । अत्रोर्ध्वकर्मरूपोत्थानाभावादनूर्ध्वकर्मणीत्यस्याप्राप्त्या आत्मनेपदम् ॥ १९ ॥ दिदृक्षुरिति । भूयः पुनरपि तद्रूपं दिदृक्षुरहं हृदि मनः प्रणिधाय स्थिरीकृत्य वीक्षमाणो ध्यायन्नपि नापश्यम् । ततश्च अवितृप्तोऽहम् आतुर इवाभवम् । यद्वा आतुरो रोगीवावितृप्तः असंतुष्टः वीक्षमाणोऽप्यहं नापश्यम् ॥ २० ॥

एवमिति । गिरां वाचामगोचरः संवेदनस्याविषयोऽपि भगवान् गम्भीरया श्लक्ष्णया मधुरया च वाचः शुचः शोकान् प्रशमयन्निव एवं विजने द्रष्टुं यतन्तम् । शतार्षः । मामाह स्म ॥ २१ ॥ हन्तेति । हन्तेति सानुकम्पसंबोधनम् । भवान् अस्मिन् जन्मनि मा मां द्रष्टुं नार्हति । यतः न विपक्वाः दग्धाः कषायाः मलाः कामादयो येषां तेषां कुयोगिनामनिष्पन्नयोगानाम् । ईषदर्थे कुः । अहम् इह लोके दुर्दर्शः द्रष्टुमशक्यः । कुयोगिनामिति शेषे षष्ठी । तेन "न लोका०" इति न निषेधः ॥ २२ ॥ सकृदिति । हे अनघ ! यत् मया सकृत् एकवारं रूपं दर्शितम् एतत् सकृद्दर्शनं तु ते तव कामाय मय्यनुरागं वर्द्धयितुमेव । "क्रियार्थ०" इत्यादिना चतुर्थी । यतः मयि काम इच्छामात्रं दर्शनालाभेऽपि यस्य स मत्कामः साधुः शनकैः शनैः सर्वान् हृच्छयान् हृदि शेरते इति तान् विषयवासनाख्यान् कामान् मुञ्चति ॥ २४ ॥ सत्सेवयेति । अदीर्घयाऽपि सतां सेवया मयि ते तव मतिर्दृढा जाता । अतः अवद्यं निन्द्यं शूद्रयोनिरूपम् इमं लोकं देहं हित्वा मज्जनतां मत्पार्षदरूपतां गन्तासि ॥ २४ ॥ मतिरिति । ममानुग्रहात् प्रसादात् मयि निबद्धा इयं मतिः कर्हिचित् कदाचिदपि न विपद्येत न नश्येत् तथा मदनुग्रहादेव प्रजानां सर्गे सृष्टौ निरोधे संहारेऽपि प्रजासर्गस्य निरोधे इति वा स्मृतिः प्राग्जन्मस्मृतिशक्तिश्च न विपद्येत ॥ २५ ॥ एतावदिति । एतावत् वचनम् उक्त्वा नभसि लिङ्गं मूर्तिर्यस्य तन्नभोलिङ्गं सन्निहितमपि न लिङ्ग्यते न ज्ञायते इति अलिङ्गम् ईश्वरं सर्वनियन्तृ तत् शास्त्रप्रसिद्धं महद्भूतं परमात्मरूपं कर्तृ उपरराम तूष्णींबभूव । एतस्य महतो भूतस्य निश्वसितमित्यादि वेदे महद्भूतमिति परमात्मनि प्रयुज्यते । तेन अनुकम्पितः अहं च महतां महीयसे महत्तमाय तस्मै अदृष्टाय शीर्ष्णा अवनामं प्रणामं विदधे कृतवान् । बहूनामप्येकस्यातिशये इयसुन् प्रयुज्यते । "मुहुर्महिम्ना महसां महीयसाम्" इति माघः । आर्षः शीर्षन्शब्दः ॥ २६ ॥ नामानीति । अनन्तरं चाहं हतत्रपः त्यक्तलज्जः अनन्तस्य नामानि पठन् अनवरतं गृणन् नामपाठोपस्थापितानि गुह्यानि भद्राणि च कृतानि भगवच्चरितानि स्मरन् तुष्टमनाः गतस्पृहः नानादेशे ईक्षणेच्छारहित एव यदृच्छया गां भूमिं पर्यटन् कालं "गन्ता मज्जनतामसि" इति भगवदुक्तं प्रतीक्षन् आर्षः शता । विमदः अहं पार्षदो भविष्यामीति मदरहितं विमत्सरः मत्सदृशोऽन्यो माभूदिति

मत्सररहितश्चाभूवमिति ॥ २७ ॥ एवमिति । हे ब्रह्मन्! एवं कृष्णे मतिर्यस्य तस्य असक्तस्य आसक्तिरहितस्य अमलात्मनः निर्मलचित्तस्य मम काले स्वावसरे यथा विद्युत् विशेषेण द्योतमाना सौदामिनी तडित् प्रादुर्भवति तथा सहसा कालो मृत्युः प्रादुरभूत् ॥ २८ ॥ प्रयुज्यमान इति । "गन्ता मज्जनतामसि" इति या भागवती भगवत्पार्षदरूपा शुद्धा सत्त्वमयी तनुः प्रतिश्रुता तां प्रति भगवता मयि प्रयुज्यमाने नीयमाने सति आरब्धं यत्कर्म तन्निर्वाणं समाप्तं यस्य स पाञ्चभौतिकः पञ्चभूतनिर्मितः देहः न्यपतत्। भगवत्पार्षदताप्राप्तिकाले भौतिको देहोऽपतदित्यर्थः। तेन पार्षददेहस्य शुद्धत्वनित्यत्वादिकं ज्ञापितम्। प्रेमभक्तानां प्रारब्धकर्मापि साधनदशायामेव नश्यतीति भक्ताः ॥ २९ ॥ कल्पान्त इति । कल्पस्य ब्रह्मदिनस्यान्ते इदं त्रैलोक्यमादाय उपसंहृत्य उदन्वत एकार्णवस्य अम्भसि शयाने श्रीनारायणे शिशयिषोः शयनं कर्तुमिच्छोर्विभोर्ब्रह्मण अन्तः मध्यम् अनु प्राणं निश्वासेन सह अहं विविशे प्रविवेश। तत्रार्षः। "ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः। अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुना।" इति कौर्मोक्तेः। स्वायनेऽम्भसीतिपाठे स्वस्यायने अम्भसि शिशयिषोर्ब्रह्मण इति श्रीनारायणेनाऽभेदविवक्षयोक्त-मित्यवगन्तव्यम् ॥ ३० ॥ सहस्रेति । सहस्रयुगपरिमितब्रह्मनिशायाः पर्यन्ते समाप्तौ पूर्वकल्पान्ते एतत्कल्पस्यादावित्यर्थः। उत्थाय इदं जगत् सिसृक्षतः ब्रह्मणः प्राणेभ्यः इन्द्रियेभ्यः मरीचिमिश्रः मुख्यो येषां ते मरीच्याद्या इत्यर्थः। ऋषयः अहं नारदश्च जज्ञिरे परत्वादुत्तमपुरुषे जज्ञिमह इति वक्तव्ये जज्ञिर इत्यार्षम् ॥ ३१ ॥ अन्तरिति । कर्मिणस्त्रिलोक्या बहिर्न यान्ति तपआदिना ब्रह्म-लोकं गतास्त्वन्तर्न यान्ति कर्मबन्धभयात्। अहं तु महाविष्णोः अनुग्रहात् अस्कन्दितमस्खलितं ब्रह्मचर्यादिरूपं व्रतं यस्य सः क्वचिदपि न विघातो यस्यास्तथाविधा गतिर्यस्य तथाविधश्च सन्नन्तर्बहिश्च त्रीन् लोकान् पर्येमि पर्यटामि ॥ ३२ ॥ देवदत्तामिति । देवेन भगवता स्वयं दत्तां स्वराः निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमाख्याः सप्त त एव ब्रह्मानन्दाभिव्यञ्जकत्वाद् ब्रह्म तेन विभूषितामिमां मत्पाणिस्थां वीणां मूर्च्छयित्वा स्वराणां मूर्च्छना संगीतशास्त्रप्रसिद्धा तां प्रापय्य हरिकथां गायमानोऽहं चरामि। शानजार्षः चानश् वा ॥ ३२ ॥

प्रगायत इति। स्ववीर्याणि प्रकर्षेण गायतो मे चेतसि प्रियश्रवाः प्रियं श्रवो यशो यस्य सः तीर्थपादः तीर्थानि पादे यस्य सः भगवान् आहूत इव शीघ्रं मे मम चेतसि दर्शनं याति दृष्टो भवति ॥ ३४ ॥ एतद्धीति । हीति अवधारणे। एतद् हरेः चर्याणां लीलानामनुवर्णनं महद्भिः कृतं यत् तत् मात्राः शब्दादयो विषयास्तेषां स्पर्शाः भोगास्तेषामिच्छया मुहुः आतुराणि चित्तानि येषां तेषां जनानां भवसिन्धोः संसारसमुद्रस्य प्लवः पोतः दृष्टः। न केवलं श्रुतिप्रामाण्येन स्वीकृतः किन्त्वन्वयव्यतिरेकाभ्यां दृष्ट एवेत्यर्थः ॥ ३५ ॥ यमादिभिरिति । मुहुः कामलोभाभ्यां हतो मलिनीकृत आत्मा मनः यद्वत् यथा मुकुन्दसेवया अद्धा अप्रयासेन शाम्यति कामक्रोधादिसंतापरहितो भवति तथा योगस्य पथिभिर्मार्गैर्यमादिभिर्न शाम्यति। कथंचिन्मुकुन्दसेवामात्रेण शाम्यति किं पुनस्तद्गुणवर्णनेनेति भावः। इह भक्तिरसिका आहुः। भवताऽनुदितप्रायमित्यादिना तथात्माऽद्धा न शाम्यतीत्यन्तेन ग्रन्थेन भक्तेरेव निस्तारोपायत्वेनोक्तत्वेऽपि तस्यास्त्रैविध्यं दृश्यते केवलत्वं प्राधान्यं गुणभावश्च त्यक्त्वा स्वधर्ममित्यादिषु अहं पुरातीतभव इत्यादिषु च केवलत्वम् "कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत्। गृणन्ति गुणनामानि कृष्णस्यानुस्मरंति च।" इत्यत्र प्राधान्यम्। "यदत्र क्रियते कर्म भगवत्परितोषणम्। ज्ञानं यत्तदधीनं ही भक्तियोगसमन्वितम्।" इत्यत्र गुणभावः। तत्र केवलत्वे निष्कामाधिकारिणो भक्तिरनन्या शुद्धा निर्गुणा उत्तमा अकिंचनेत्यादिनाम्नी प्रेमफला भवति। प्राधान्ये कर्ममिश्रा ज्ञानमिश्रा योगमिश्रेत्यादिनाम्नी भक्तिः शान्ताधिकारिणो रतिफला कस्यचिन्मोक्षफलापि भवति। दास्यादिभावात् साधुसङ्गवशात् कस्यचिद्दास्याद्यभिलाषिणो भक्तेरतिप्राधान्ये सत्यैश्वर्यप्रधानदास्यादिभावप्रदा प्रेमफलापि भवति। गुणभावे तु स्वीयं नामफलं चाप्रकाशयन्ती कर्मज्ञानयोगादीनां तया विना स्वफलं सम्यक् साधयितुमसमर्थानां तत्र साहाय्यमात्रं कुर्वती स्वयं तटस्थैव भवति। ततश्च भक्तिमिश्रं कर्म ज्ञानं योगश्च मोक्षं साधयतीत्यतोऽत्र शास्त्रे भक्तिर्द्विविधैव केवला प्रधानीभूता चेत्येतत् सर्वं नारदेनोपदिष्टो व्यासो द्वादशसु स्कन्धेषु प्रपञ्चयिष्यतीति ज्ञेयम्। पूर्वं भक्तेराविर्भावप्रकारो वृद्धिः फलं तद्वतो जनस्य चेष्टा प्रारब्धकर्मनाशः साधकदेहत्यागप्रकारोऽकर्मारब्धचिन्मयदेहप्राप्तिश्चेति रहस्यं वेदान्तदर्शिभिरप्यगम्यम् ॥ ३६ ॥ सर्वमिति । हे अनघ! मे मम जन्मकर्मणो रहस्यं भवतः आत्मनोन्तःकरणस्य तोषणं तच्च यत्त्वयाऽहं पृष्टस्तदिदं सर्वं मयाऽऽख्यातम् ॥ ३७ ॥ एवमिति । यदृच्छया चरति यादृच्छिकः हेतुशून्यगमनादिक्रियः भगवान् नारदो मुनिः वासव्या उपरिचरवसुवीर्यजातायाः सत्यवत्याः सुतं व्यासमेवं पूर्वोक्तं सर्वं सम्भाष्य कथयित्वा आमन्त्र्य गच्छामीति पृष्ट्वा वीणां रणयन् ययौ। अत्र भक्तिर्यादृच्छिकी भक्तोऽपि यादृच्छिक-स्तत्सङ्गोऽपि व्यासस्य यादृच्छिक इति भक्तिमात्रस्य यादृच्छिकत्रयी जीवातुः ॥ ३८ ॥ अहो इति । अयं देवर्षिर्धन्यः कृतार्थ एव यत् यतः शार्ङ्गधन्वनो भगवतः कीर्तिं गायन् माद्यन् स्वयं हृष्यन् तापत्रयेण आतुरं व्याकुलं सर्वमिदं जगदपि तन्त्र्या वीणया रमयति सुखयति ॥ ३९ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः प्रथमे षष्ठेऽध्याये व्यधादिमाम्।

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां षष्ठोऽध्यायः ॥ ६ ॥

——:*:——

# अथ सप्तमोऽध्यायः

शौनक उवाच

निर्गते नारदे सूत भगवान्बादरायणः । श्रुतवांस्तदभिप्रेतं ततः किमकरोद्विभुः ॥ १ ॥

सप्तमे सुप्तबालानां वधात्क्रुद्धेन जिष्णुना । दण्डनं द्रोणपुत्रस्य श्लोकास्तत्राष्टमार्गणाः (५८)॥

अनुष्टुभः (६०॥) सार्द्धषष्टिरुवानदशकं तथा ॥ ७ ॥

निर्गत इति । हे सूत ! स्वाश्रमान्नारदे निर्गते सति तस्याभिप्रेतं भगवल्लीलाप्रतिपादकग्रन्थकरणं श्रुतवान् स विभुः भगवान् बादरायणः व्यासस्ततस्तदनन्तरं किमकरोत् ॥ १ ॥ ब्रह्मनद्यामिति । ब्रह्मदेवत्यायां नद्यां ब्रह्मणां वेदब्राह्मणादीनां वा नद्यां ब्राह्मणैरा-श्रितायां वा नद्यां सरस्वत्याम् । सप्तमी षष्ठ्यर्थी । तस्याः पश्चिमे तटे ऋषीणां सत्राणि कर्माणि वर्द्धयतीति तथाभूतः शम्या युगकीलाः प्रास्यन्ते परिध्यर्थे क्षिप्यन्तेऽस्मिन्निति शम्याप्रास इति प्रोक्तः प्रसिद्धो व्यासस्याश्रमोऽस्तीति शेषः ॥ २ ॥ तस्मिन्निति । बदरीणां खण्डेन समूहेन मण्डिते शोभमाने तस्मिन् स्वे स्वकीये आश्रमे अप उपस्पृश्य आचमनं कृत्वाऽऽसीनः व्यासः "समाधि-नाऽनुस्मर तद्विचेष्टितम्" इति नारदोपदेशात् स्वयमवधानेन मनः प्रणिदध्यौ स्थिरीकृतवान् ॥ ३ ॥ भक्तियोगेनेति । भक्तियोगेन अमले निर्मले अत एव सम्यक् प्रणिहिते निश्चले मनसि पूर्णम् । पूर्वमिति वा पाठः । पुरुषमीश्वरम् अपश्यत् तदपाश्रयां तदधीनां मायां चापश्यत् ॥ ४ ॥ ईशमायाकृतां च जीवानां संसृतिमपश्यदित्याह—ययेति । यया मायया संमोहितः स्वरूपावरणेन विक्षिप्तो जीवः परोऽपि वस्तुतो मायागुणत्रयाद्व्यतिरिक्तोऽपि आत्मानं त्रिगुणात्मकं मनुते तत्कृतं गुणत्रयाभिमानकृतमनर्थं कर्तृत्वादिकं चाभिपद्यते प्राप्नोति ॥ ५ ॥ अनर्थेति । अनर्थस्योपशमं निवर्तकं च अधोक्षजे साक्षाद्भक्तियोगमपश्यत् । एतत्सर्वं दृष्ट्वाऽतः स्वयं विद्वान् जानन् एतदजानतो लोकस्योपकाराय सात्वतसंहितां श्रीभागवताख्यां चक्रे । अनेन श्लोकत्रयेण संक्षेपतो भागवतार्थो दर्शितः । तथा हि विद्याशक्त्या मायानियन्ता नित्याविर्भूतपरानन्दस्वरूपः सर्वज्ञः सर्वशक्तिरीश्वरः तन्मायया सम्मोहितस्तिरोभूतस्वरूपस्त-द्विपरीतधर्मा जीवः तस्य चेश्वरभक्त्या लब्धज्ञानेन मोक्ष इति । तदुक्तं विष्णुस्वामिना—"ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः । स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः । स ईशो यद्वशे माया स जीवो यस्तयार्दितः । स्वाविर्भूतपरानन्दः स्वाविर्भूत-सुदुःखभूः । स्वादृगुत्थविपर्यासभवभेदजभीशुचः । यन्मायया जुषन्नास्ते तमिमं नृहरिं स्तुमः" । इत्यादि ॥ ६ ॥ यस्यामिति । यस्यां भागवतसंहितायां श्रूयमाणायामेव किं पुनः श्रुतायां किन्तरां कीर्त्यमानायां किन्तमां कीर्तितायां पुंसां वर्णाश्रमादिहीनानामपि परमपूरुषे कृष्णे शोकमोहजरापहा भक्तिः उत्पद्यते ॥ ७ ॥ स इति । स मुनिः व्यासो भागवतीं संहितां संक्षेपेण कृत्वा ततो नारदोपदेशादनुक्रमेण भगवद्भक्तिप्रधानतयाऽनुक्रम्य संशोध्य स च नारदोपदेशः श्रीकृष्णान्तर्धानानन्तरं परीक्षित्कर्तृककलि-निग्रहात्पूर्वं ज्ञेयः । ततः निवृत्तिनिरतम् आत्मजं शुकम् अध्यापयामास । अत्र पूर्वनिर्मितस्यैव श्रीभागवतस्यानुक्रमणं यदुक्तम् "कृष्णे स्वधामोपगते" इत्यत्र "पुराणार्कोऽधुनोदित" इति । अत एवेदं श्रीमद्भागवतं भारतानन्तरं यदत्र श्रूयते यच्चान्यत्र अष्टादशपुराणा-नन्तरं भारतमिति तद्द्वयमपि संगतं स्यात् इति चक्रवर्त्ती । विस्तरस्तु टीकावशेषभागे द्रष्टव्यः ॥ ८ ॥ स इति । वै इत्यवधारणे । सः निवृत्तावेव नितरां रतः आत्मारामः सर्वत्र अध्ययनाध्यापनादावप्युपेक्षकः मुनिः शुकः कस्य वा हेतोः एतां ग्रन्थतोऽर्थतश्च बृहतीं संहितां समभ्यसत् अधीतवान् ॥ ९ ॥ आत्मारामा इति । आत्मारामा अतो निर्ग्रन्थाः ग्रन्थेभ्यः शास्त्रेभ्योऽपि निर्गताः फलप्राप्तौ उपायत्यागात् । तदुक्तं गीतासु "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च" । इति । यद्वा ग्रन्थिरेव ग्रन्थः निवृत्तो ग्रन्थो येषां ते निर्गताहङ्कारग्रन्थयः विधिनिषेधग्रन्थातीता वा अपि मुनयो उरुक्रमे भगवति अहैतुकीं प्रयोजनानुसंधानरहितां भक्तिं कुर्वन्ति । हरिः इत्थंभूता आत्मारामाणामप्याकर्षणशीला गुणाः यस्य स तथाभूतः अस्ति ॥ १० ॥ हरेरिति । नित्यं सर्वदा विष्णुजनाः प्रिया यस्य सः व्याख्यानादिप्रसङ्गेन तत्संगतिकाम इति भावः । भगवान् बादरायणिः शुकः यतो हरेर्गुणैराक्षिप्ता आकृष्टा मतिर्बुद्धिर्यस्य सः तथाभूतः अतः महदप्येतदाख्यानमध्यगात् अधीतवान् । एतेन शुकस्य एतदाख्याने प्रवृत्तिः कथमित्यस्योत्तरमुक्तम् । अत्र व्यास एव भगवद्गुणाभिव्यञ्जकान् श्रीभागवतीयान् कांश्चन श्लोकान्

लोकद्वारा विविक्तारण्ये सदा समाधिस्थमपि शुकं श्रावयामास। ततस्तच्छक्त्यैव भग्नसमाधिः तन्माधुर्याकृष्टचित्तः तादृशं समाधिमप्याक्षिप्य सर्वज्ञतया तान् श्लोकान् भागवतीयान् ज्ञात्वा तत्प्रकाशकं च स्वपितरं ज्ञात्वा तदन्तिकमागत्य श्रीभागवतमध्यैष्टेति ब्रह्मवैवर्त्तम्॥ ११॥

परीक्षित इति। अथ तच्छ्रोतुः राजर्षेः राजत्वेऽप्यृषिवद्वर्त्तमानस्य परीक्षितो जन्मकर्माणि च विलापनं मोक्षं च यद्वा लपेर्ण्यन्ताल्ल्युट्। श्रीभागवतकथावाचनमित्यर्थः। तेषां समाहारस्तथा तदुपोद्घातरूपं पाण्डुपुत्राणां युधिष्ठिरादीनां संस्थां वृत्तान्तं महाप्रस्थानं च कृष्णस्य भगवतः कथाया उदयः अनुप्रसक्तिर्यथा स्यात्तथा वक्ष्ये॥ १२॥ यदेति द्वयम्। कौरवाणां सृञ्जयानां च मृवे युद्धे सृञ्जयवंशजस्य धृष्टद्युम्नस्य पाण्डवसेनापतित्वात्सृञ्जयानामिति लक्षणया पाण्डवानामित्येवार्थः। वीरेषु वीराणां गतिं स्वर्गं गतेषु सत्सु धृतराष्ट्रपुत्रे दुर्योधने वृकोदरेण भीमेन आविद्धायाः आक्षिप्ताया गदाया अभिमर्शेन आघातेन भग्नौ ऊरू एव दण्डौ यस्य तथाभूते सति अथो मम भर्तुर्दुर्योधनस्य प्रियमित्येवं स्यादिति स्म पश्यन् आलोचयन् द्रौणिरश्वत्थामा यदा स्वपतां कृष्णाया द्रौपद्याः सुतानां शिरांसि उपाहरत् छित्त्वाऽऽनीतवान् तत्तस्य कर्म दुर्योधनस्य सर्वलोकस्य च विप्रियमेव जातम्। प्रथमं शत्रुवधश्रवणेन हर्षोदयात् पश्चाच्च भीमादीनां शत्रूणामवधज्ञानात् बालवधेन वंशनाशज्ञानाच्च विषादोत्पत्तेः हर्षविषादाभ्यां च तन्मृत्युप्राप्तेरित्याहुः। तत्र हेतुः यतो जुगुप्सितं कर्म सर्वेऽपि विगर्हयन्ति निन्दन्ति॥ १३–१४॥ मातेति। तदा माता द्रौपदी सुतानां तत्रापि शिशूनां बालानां घोरं दुःसहं निधनं मरणं निशम्य दृष्ट्वा परितप्यमाना अत एव बाष्पकलाभिः अश्रुबिन्दुभिराकुले अक्षिणी यस्यास्तथाभूता सती अरुदत् तां सान्त्वयन् किरीटमाली किरीटस्य तदग्राणां मालाऽस्यास्ति सः अर्जुनः आह स्म॥ १५॥ तदेति। हे भद्रे! यत् यदा गाण्डीवमुक्तैर्विशिखैर्बाणैः ब्रह्मबन्धोः ब्राह्मणाधमस्य आततायिनः शस्त्रपाणेः पुत्रहन्तुः अश्वत्थाम्नः शिरः त्वां प्रति उपाहरे त्वत्समीपमानयामि यच्च शिर आक्रम्य आसनं विधाय दग्धपुत्रा त्वं स्नास्यसि तदा ते तव शुचः शोकाश्रूणि प्रमृजामि परिमार्जयामि विकरण आर्षः। 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेते ह्याततायिनः॥'॥ १६॥ इतीति। अच्युतः श्रीकृष्ण एव मित्रं सूतः सारथिश्च यस्य सः उग्रं धनुर्यस्य सः कपिध्वजः अर्जुनः इत्येवं वल्गुभिर्मनोहरैर्विचित्रैश्च जल्पैः भाषणैः प्रियां द्रौपदीं सान्त्वयित्वा दंशितो बद्धकवचश्च सन् रथेन साधनेन गुरुपुत्रमश्वत्थामानमन्वाद्रवत् अन्वधावत्॥ १७॥ तमिति। तमर्जुनमापतन्तमनुधावन्तं दूराद्विलक्ष्य दृष्ट्वा उद्विग्नं मनो यस्य सः प्राणपरीप्सुः जिजीविषुः कुमारहा बालघाती सोऽश्वत्थामा यावद्गन्तुं शक्यं तावत् उर्व्यां रथेन यथा कः ब्रह्मा मृगो
सुतां यद्धुमुद्यतः सन् रुद्रस्य भयाद्यथा पलायते स्म तथा पराद्रवत्। अर्क इति पाठे तु वामनपुराणकथा सूचिता। तथा हि
नाम कश्चिद्राक्षसो रुद्रभक्तस्तस्मै तेन सौवर्णं विमानं दत्तं ततोऽसावर्कस्य पृष्ठतो भ्राम्यन् विमानदीप्त्या रात्रिं विलापितवान्। ततोऽर्केण निजतेजोभिर्द्रावयित्वा तद्विमानं पातितम्। तच्छ्रुत्वा कुपिते आयाते रुद्रे भयादर्कः पर्यद्रवत्। ततो रुद्रस्य क्रूरदृष्ट्या दह्यमानः पतन् वाराणस्यां पतितो लोलार्कनाम्ना विख्यातो जातः॥ १८॥ यदेति। द्विजात्मजः इत्यदीर्घदर्शित्वमुक्तम्। यदाऽऽत्मानमशरणं रक्षकहीनं श्रान्तवाजिनं श्रांता वाजिनो यस्य तं पलायनेऽप्यक्षममित्यर्थः। तादृशमैक्षत पर्यालोचितवांस्तदा आत्मत्राणां स्वरक्षणोपायं ब्रह्मशिरोनामकमस्त्रं ब्रह्मास्त्रं मेने। तेन अर्जुनं हन्तुमध्यवसितवान्॥ १९॥ अथेति। अथ प्राणकृच्छ्रे उपस्थिते प्राप्ते सति सलिलमुपस्पृश्य आचम्य समाहितः एकाग्रमनाः उपसंहारमजानन्नपि तद्ब्रह्मास्त्रं सन्दधे युयोज॥ २०॥ तत इति। ततो ब्रह्मास्त्रात्सर्वतो दिशं सर्वदिक्षु प्रादुष्कृतं प्रादुर्भूतं प्रचण्डं तेजोऽभिप्रेक्ष्य दृष्ट्वा अत एव प्राणापदमभिप्रेक्ष्य जिष्णुरर्जुनो विष्णुं श्रीकृष्णम् उवाच ह॥ २१॥ कृष्णेति। हे कृष्ण कृष्ण भयाद्द्विरुक्तिः। हे महाभाग! हे भक्तानामभयंकर! संसृतेर्जन्ममरणादिरूपाया हेतोर्दह्यमानानां प्राणिनाम् अपवर्गो मोक्षस्वरूपस्त्वमेक एवासि॥ २२॥ त्वमिति। त्वमाद्यः सर्वकारणं साक्षात् ईश्वरः प्रकृतेः परः पुरुषः चिच्छक्त्या मायामविद्यां व्युदस्य तिरस्कृत्य कैवल्यरूप आत्मनि स्वस्वरूप एव स्थितः॥ २३॥

स एवेति। स उक्तविध ईश्वर एव त्वं मायया अविद्या मोहितं चेतो यस्य तस्य जीवलोकस्य प्राणिजातस्य स्वेन वीर्येण प्रभावेण तत्तत्कर्मानुगुण्येन धर्मादिलक्षणं धर्मार्थकाममोक्षरूपं श्रेयः पुरुषार्थं विधत्से प्रयच्छसि॥ २४॥ तथेति। तथा अयं च ते तवावतारः भुवो भारभूतानां दुराचाराणां जिहीर्षया संहारेच्छया तथा स्वानां स्वकीयानाम् अनन्यभावानामेकान्तभक्तानामसकृन्निरन्तरमनुध्यानाय च जातः॥ २५॥ किमिति। हे देवदेव! यत्परमदारुणं तेजः सर्वतोमुखमायाति तदिदं किंस्वित् परमार्थतः किं रूपं कुतो वा हेतोरायातीति अहं न वेद्मि। त्वं वद इति शेषः॥ २६॥ वेत्थेति। इदं द्रोणपुत्रस्य ब्राह्ममस्त्रमस्ति तेन च प्राणबाध उपस्थिते प्राप्ते सति प्रदर्शितं केवलं प्रयुक्तं न तु तत्प्रयोगे कुशलः यतोऽसावुपसंहारं नैव वेद त्वं तु वेत्थ॥ २७॥ न हीति। हि यस्मादस्य ब्रह्मास्त्रस्य प्रत्यवकर्शनं कृशत्वापादकं प्रतिभटमस्त्रं प्रत्यवकर्षणमिति वा पाठः। ततोऽन्यतममपरं किंचिदपि नास्त्यत उन्नद्धमुद्रिक्तमपि ब्रह्मास्त्रतेजः स्वप्रयुक्तब्रह्मास्त्रतेजसा जहि उपसंहर। हि यस्मात्त्वम् अस्त्रज्ञो ब्रह्मास्त्रप्रयोगोपसंहाराभिज्ञोऽसि॥ २८॥

श्रुत्वेति। भगवता प्रोक्तम् अश्वत्थामप्रयुक्तास्त्रसंहारोपायं श्रुत्वा परेषां शत्रूणां वीरान् योधान् यो हन्ति सः परवीरहा फाल्गुनः अर्जुनोऽपः स्पृष्ट्वाऽऽचमनं कृत्वा कार्यसिद्ध्यर्थं सर्वदेवदेवं मङ्गलरूपं तं श्रीकृष्णं परिक्रम्य प्रदक्षिणीकृत्य ब्राह्मय ब्राह्मास्त्रमुपसंहर्त्तुं ब्राह्ममस्त्रं संदधे प्रयुयोज ॥ २९ ॥ संहत्येति। ततस्तयोरुभयोरस्त्रयोस्तेजसी शरैः संवृते व्याप्ते अन्योन्यं संहत्य संगत्य रोदसी द्यावापृथिव्यौ खमन्तरिक्षं चावृत्य आवेष्ट्य अर्कवह्निवत् प्रलये यथाऽधः संकर्षणमुखाग्निरुपरिस्थितोऽर्कश्च संहत्य वर्द्धेते तथा ववृधाते। सन्धिरार्षः ॥ ३० ॥ दृष्ट्वेति। ततस्त्रीन् लोकान् प्रदहत् महत् तयोर्द्रौण्यार्जुनयोरस्त्रतेजो दृष्ट्वा तेन च दह्यमानाः सर्वाः प्रजाः सांवर्तकं प्रलयाग्निम् अमसतामन्यन्त ॥ ३१ ॥ प्रजेति। लोकव्यतिकरं भूरादिलोकोपमर्दनं तमेव प्रजोपप्लवं प्रजानामुपध्वंसमालक्ष्य वासुदेवस्य कृष्णस्य मतमभिप्रायं चालक्ष्य अर्जुनो ब्रह्मास्त्रद्वयं संजहार उपसंहृतवान् ॥ ३२ ॥ तत इति ततस्तेन उपसंहारानन्तरम् अमर्षेण कोपेन ताम्रे रक्ते अक्षिणी यस्य सोऽर्जुनः तरसा वेगेन दारुणं गौतमी गौतमवंशजा कृपी तस्याः सुतमश्वत्थामानमासाद्य याज्ञिकः पुरुषो रशनया रज्ज्वा यथा पशुं बध्नाति तथा बबन्ध। निष्कृपत्वे दृष्टान्तः पशुं यथेति। तस्य बन्धनं धर्म इत्यत्र दृष्टान्तः यथा याज्ञिकः पशुमिति ॥ ३३ ॥ शिबिरायति। दाम्ना रज्ज्वा रिपुं बलाद्बद्ध्वा शिबिराय सेनानिवेशस्थानाय निनीषन्तं नेतुमिच्छन्तमर्जुनं प्रकुपितः इव अम्बुजेक्षणः एतेन अन्तःकोपाभावमाह। भगवान् अर्जुनस्य धर्मनिष्ठाख्यापनाय प्राह स्म ॥ ३४ ॥ मेति। हे पार्थ! एनं ब्रह्मबन्धुं त्रातुं मैवार्हसि। किंत्विमं जहि मा जहि किन्तु त्रातुमर्हसीति वस्तुतोऽर्थः। योऽसावनागसः निरपराधान्निशि सुप्तान्बालकानवधीत् ॥ ३५ ॥ मत्तमिति। धर्मवित् मत्तं मद्यादिना विवशं प्रमत्तं कार्यान्तरासक्त्याऽनवहितम् उन्मत्तं पिशाचादिभिरुपद्रुतं सुप्तं बालं स्त्रियं जडं स्वभावतो मूर्खं प्रपन्नं शरणागतं तवास्मीतिवादिनं विरथं भग्नरथं भीतं च रिपुमपि न हन्ति। बालवधकत्वाद्वध्योऽसावित्यापातार्थः। विरथो भीतश्चायमवध्य इति वस्तुतोऽर्थः ॥ ३६ ॥ स्वप्राणानिति। यः अघृणः दयारहितः खलः परेषां प्राणैः प्राणहिंसनैः स्वप्राणान् प्रपुष्णाति तस्य वधो दण्डरूपत्वात्तस्य हि तस्यैव श्रेयः पुरुषार्थसाधकं न तु हन्तुरिति वस्तुतोऽर्थः। यत् यस्मात् दोषात्पापात्स पापी पुमानधो नरकं यति। "राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। विधूतकल्मषा यान्ति सन्तः सुकृतिनो यथा!" इति स्मृतेः। दण्डे कृते तु नरकं न याति ॥ ३७ ॥ प्रतिश्रुतमिति। हे मानिनि! यस्ते पुत्रहा पुत्रान् हतवान् तस्य शिरस्ते तुभ्यमहमाहरिष्ये आनेष्यामि इति मम शृण्वत एव सतो भवता पाञ्चाल्यै द्रौपद्यै प्रतिश्रुतं प्रतिज्ञातम् ॥ ३८ ॥

तदिति। हे वीर! यस्मादाततायी शस्त्रधारी आत्मनस्तव बन्धुहा कुमारघाती स्वभर्त्तुर्दुर्योधनस्यापि विप्रियमेव कृतवान् तत् तस्मात् कुलं पंसयति नाशयति कुलपांसनः "पसि नाशने ल्युः पृषोदरादित्वाद्दीर्घः"। यद्वा कुलं पांसु धूलमिव करोति। "तत्करोति" इति णिजन्ताल्ल्युः। असौ पापः पापात्मा वध्यतां हन्यतामित्यापातार्थः। नियम्यतामिति वस्तुतोऽर्थः ॥ ३९ ॥ एवमिति। एवं धर्मं परीक्षता शता आर्षः। अत एव पूर्वं कृष्णवचो द्विधा व्याख्यातम्। यद्यपि कृष्णेन चोदितः तथापि महान् धर्मज्ञः पार्थः आत्महनं स्वपुत्रहंतारम् अपि गुरुसुतम् अश्वत्थामानं हन्तुं नैच्छत् ॥ ४० ॥ अथेति। अथानन्तरं गोविन्दः प्रियः सारथिश्च यस्य सोऽर्जुनः स्वस्य शिबिरं सेनास्थानम् उपेत्य आगत्य हतानात्मजान् शोचन्त्यै प्रियायै द्रौपद्यै तं द्रौणिं न्यवेदयत्। अयं ते पुत्रहन्ता आनीत इत्युक्तवान् ॥ ४१ ॥ तथेति। तथाऽपमानेनाहृतमानीतं पशुवत्पाशेन बद्धं बालवधरूपकर्मणो जुगुप्सितेन निन्दनेन लोकैः कृतेन। भावे क्तः। अवाङ्मुखं लज्जया अधोमुखमपकृतं कृतापकारमपि। किंवन्तमिदम्। गुरोः सुतमश्वत्थामानं वामस्वभावा मनोहरशीला सा कृष्णा द्रौपदी कृपया निरीक्ष्य ननाम च ॥ ४२ ॥ उवाचेति। अस्य गुरुपुत्रस्य बन्धनेनानयनमसहन्ती सती "सह मर्षणे" आधृषीयः। अर्जुनं प्रत्युवाच ननाम च उवाच चेति चकाराभ्यां सम्भ्रमः सूचितः। एष मुच्यतां मुच्यतां यतः ब्राह्मणः नितरामतिशयेन गुरुर्भवति ॥ ४३ ॥ सरहस्य इति। रहस्यो गोप्यमन्त्रस्तत्सहितो धनुर्वेदः विसर्गोऽस्त्रप्रयोगः उपसंयम उपसंहारस्ताभ्यां सहितः अस्त्राणां ग्रामः समूहश्च भवता यस्य द्रोणस्यानुग्रहाच्छिक्षितः ॥ ४४ ॥ स इति। स भगवान् द्रोण एवैष प्रजारूपेण वर्तते। "आत्मा वै पुत्रनामासि" इति श्रुतेः। अत एव वीरसूः पुत्रवती तस्य द्रोणस्यात्मा देहस्तस्यार्द्धं पत्नी कृपी आस्ते। सा भर्त्तारं न अन्वगात् अनुमरणं न कृतवती ॥ ४५ ॥ तदिति। हे धर्मज्ञ! हे महाभाग! तत्तस्मादनुचितत्वात् गौरवं गुरोः सम्बन्धि कुलं कर्तृ भवद्भिर्हेतुभिर्वृजिनं दुःखं प्राप्तुं नार्हति किंतु अभीक्ष्णशः पूज्यं वन्द्यं च ॥ ४६ ॥ मा रोदीदिति। मृताः वत्साः पुत्रा यस्याः सा अत एव आर्त्ता अश्रुमुख्यहं यथा मुहुर्मुहुः रोदिमि तथाऽस्याश्वत्थाम्नो जननी पतिदेवता गौतमी कृपी मा रोदीत् मा रोदितु ॥ ४७ ॥ यैरिति। अज्ञानः कामक्रोधादिपरवश आत्मा मनो येषां तैर्यैः राजन्यैः ब्रह्मकुलं कोपितं तत्कुलं कर्तृ शुचा शोकेनार्पितं व्याप्तं सत् तेषां राजन्यानां कुलं कर्मभूतं सानुबन्धं भृत्यामात्यादिसहितम् आशु शीघ्रमेव प्रदहति ॥ ४८ ॥

धर्म्यमिति। अत्र धर्म्यमित्यादयः षड्वचसो गुणाः पूर्वश्लोकेषु ज्ञेयाः। धर्म्यं धर्मादनपेतं मुच्यतां मुच्यतामिति न्याय्यं न्यायान्नीतेरनपेतं सरहस्यो धनुर्वेद इति सकरुणं तस्यात्मनोऽर्द्धमिति निर्व्यलीकम् अनृताऽप्रियरहितं तद्धर्मज्ञेति समं

पक्षपातशून्यं मा रोदीदिति दुःखसाम्योक्तेः। महत् हितं यैः कोपितमिति राज्याः द्रौपद्याः वचो धर्मसुता राजा युधिष्ठिरः प्रत्यनन्दत् प्रशशंस। द्विजाश्च प्रत्यनन्दन्। द्विजा इति संबोधनं वा ॥ ४९ ॥ नकुल इति। नकुलादयः अन्ये च योषितः स्त्रियश्च प्रत्यनन्दन्। युयुधानः सात्यकिः। स्पष्टमन्यत् ॥ ५० ॥ तत्रेति। तत्र एवं द्रोपदीवचने सर्वैः अभिनन्दिते सति अमर्षितः तदसहमानो भीमः आह स्म। यः सुप्तान् शिशून् न भर्तुर्दुर्योधनस्यार्थे न चात्मनः स्वस्यार्थे किन्तु वृथैवाहन् जघान तस्य वध एव श्रेयान् प्रशस्यः स्मृतः ॥ ५१ ॥ निशम्येति। भीमस्य द्रौपद्याश्च गदितं वचनं निशम्य श्रुत्वा चतुर्भुजो भीमे हन्तुं प्रवृत्ते द्रौपद्यां तद्वारणे प्रवृत्तायामुभयवारणायाविष्कृतभुजचतुष्कः श्रीकृष्णः संदिहानस्य सख्युरर्जुनस्य वदनमालोक्य हसन्निवेदं वक्ष्यमाणमाह स्म ॥५२॥ ब्रह्मबन्धुरिति। ब्रह्मबन्धुः अधमोऽपि ब्राह्मणो न हन्तव्यः। आततायी शस्त्रधारी वधार्हणः ब्राह्मणो न हन्तव्यः। "आततायिनमायान्तमपि वेदान्तपारगम्। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥" इति शास्त्रवचसा मयैवोभयमाम्नातं कथितं तदुभयमप्यनुशासनं परिपाहि ॥ ५३ ॥ कुर्विति। प्रियां द्रौपदीं सान्त्वयता त्वया यत् 'आहरिष्ये शिरस्तस्य' इति प्रतिश्रुतं प्रतिज्ञातं तदपि सत्यं यथार्थं कुरु भीमसेनस्य च द्रौपद्याः मह्यं मम च प्रियमेव कुरु। तत्र वधे भीमसेनस्य प्रियम् अवधे द्रौपद्याः द्वये श्रीकृष्णस्य ॥ ५४ ॥ अर्जुन इति। हरेर्हार्दमभिप्रायमर्जुनः सहसा आज्ञाय न ह्यशक्यमुभयं विदध्यात् अतोऽस्यायमभिप्राय इति ज्ञात्वा अथ अनन्तरमेव असिना खड्गेन मूर्धन्यं मूर्द्धनि भवं सहमूर्द्धजं केशैः सहितं द्विजस्य तस्य मणिं जहार छित्त्वा हृतवान्। तेन शिरस्थवस्तुच्छेदात् शिरश्छेदः कृतः इत्यश्वत्थाम्नो वधोऽवधश्चेत्युभयमपि कृतम् ॥ ५५ ॥ विमुच्येति। रशनया बद्धं बालानां हत्यया हता प्रभा शोभा यस्य तं तेजसा अध्ययनमन्त्रजपादिजनितेन तथा मणिना च हीनं तं विमुच्य शिविरात् स्वकटकस्थानात् निरयापयत् बहिर्निःसारयामास ॥ ५६ ॥ वपनमिति। वपनं मुण्डनं द्रविणादानं धनापहरणं तथा। निवासस्थानान्निर्यापणं निःसारणं चेत्येष एव ब्रह्मबन्धूनां ब्राह्मणाधमानामपि वधः इतोऽन्यो दैहिकः शिरश्छेदादिरूपो वधो नास्ति ॥ ५७ ॥ पुत्रेति। कृष्णया द्रौपद्या सह पुत्रशोकेनातुराः पीडिताः सर्वे पाण्डवाः मृतानां स्वानां बन्धूनां यन्निर्हरणादिकं दाहार्थं नयनादिकं कृत्यं कर्तव्यं तच्चक्रुः ॥ ५८ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः प्रथमस्याध्याये सप्तमे व्यधात्।

इति श्रीमद्भागवते प्रथमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥



## अथाष्टमोऽध्यायः

सूत उवाच

अथ ते संपरेतानां स्वानामुदकमिच्छताम्। दातुं सकृष्णा गङ्गायां पुरस्कृत्य ययुः स्त्रियः ॥ १ ॥

परीक्षिद्रक्षा द्रौण्यस्त्रात्कुन्तीस्तोत्रं तथाऽष्टमे। युधिष्ठिरस्य शोकोऽत्र श्लोका नयनमार्गणाः (५२) ॥

अनुष्टुभः (५६) षट्पञ्चाशदुवाचेति तु पञ्चकम् ॥ ८ ॥

अथेति। अथ संपरेतानां मृतानाम् अत एवोदकं तिलोदकमिच्छतां स्वानां बान्धवानाम्। शेषे षष्ठी। तेभ्यः गङ्गायाम् उदकं दातुं सकृष्णाः कृष्णेन सहितास्ते पाण्डवाः स्त्रियः स्त्रीः पुरस्कृत्य अग्रतः कृत्वा ययुः। तत्र कार्ये स्त्रीपुरःसरत्वविधानात् ॥ १ ॥ त इति। ते सर्वे पाण्डवादयः उदकं निनीय दत्त्वा भृशमत्यन्तं विलप्य चकारादन्यदपि कर्त्तव्यं कृत्वा हरेः कृष्णस्य पादाब्जयो रजसा पूते सरितः गङ्गायाः जले पुनरपि आप्लुताः स्नाताः। पुनर्ग्रहणादादावपि स्नाता इति गम्यते ॥ २ ॥ तत्रेति द्वयम्। तत्र गङ्गातीरे आसीनं धृतराष्ट्रं सहानुजं भीमादिभिः सहितं कुरुपतिं युधिष्ठिरं पुत्रशोकेनार्तमिति तिसृणां विशेषणम्। गान्धारीं कृष्णां

द्रौपदीं पृथां कुन्तीं च हता बन्धवः पुत्रादयो येषां तान् शुचा शोकेनार्पितान् व्याप्तानेतान् युधिष्ठिरादीन् मुनिभिः सहितः श्रीकृष्णः भूतेषु भूतकार्येषु देहादिषु अप्रतिक्रियां निवर्तकोपायरहितां कालस्य गतिमुत्पत्तिविनाशनिमित्तभूतां प्रवृत्तिं दर्शयन् सन् सान्त्वयामास ॥ ३–४ ॥ साधयित्वेति द्वयम्। माधवः अजातशत्रोः युधिष्ठिरस्य कितवैर्वञ्चकैर्दुर्योधनादिभिः हृतं स्वराज्यं साधयित्वा तद्वशे कृत्वा राज्ञ्याः द्रौपद्याः कचस्पर्शेन केशाकर्षणेनैव क्षतं क्षीणमायुर्येषां तान्। राज्ञ इति पाठे असतो विशेष्यम्। असतो दुष्टान् दुःशासनादीन् भीमार्जुनादिभिर्घातयित्वा उत्तमकल्पकैः मुख्यकल्पैः सन्यूनमन्त्रदक्षिणैस्त्रिभिरश्वमेधैस्तं युधिष्ठिरं याजयित्वा पावनं तस्य यशः शतमन्योः इन्द्रस्य यश इव दशसु दिक्षु आतनोत् विस्तारयामास। याजयित्वेत्यादि भाविकथासंक्षेपः ॥ ५–६ ॥ आमन्त्र्येति द्वयम्। हे ब्रह्मन्! पाण्डुपुत्रान् च शब्दादन्यांश्च अनामयं पृष्ट्वा शैनेयः शिनेर्नप्त्रा सात्यकिस्तेनोद्धवेन च संयुतः सहितः आत्मना पूजितैः द्वैपायनादिभिर्विप्रैः प्रतिपूजितः द्वारकां प्रति गन्तुं कृता मतिर्येन स रथमास्थितः अधिष्ठितः सन् हरिः भयेन विह्वलां व्याकुलाम् अभिधावन्तीं सम्मुखमागच्छन्तीम् उत्तरां परीक्षिन्मातरम् उपलेभे ददर्श ॥ ७–८ ॥ उत्तरा श्रीकृष्णं प्रार्थयते –पाहि पाहीति। हे महायोगिन्! हे देवदेव! हे जगत्पते! त्वं मां पाहि पाहि। व्याकुलत्वाद् द्विरुक्तिः। यत्र लोके परस्परमपि मृत्युर्भवति एकस्य मृत्युरन्यस्तस्य मृत्युरपरस्तस्याप्यन्य इत्येवमिति। तत्र त्वत् त्वत्तः अन्यम् अभयं भयरहितं भयनिवर्तकं च न पश्ये। तङार्षः ॥ ९ ॥ अभिद्रवतीति। हे ईश! हे विभो! हे नाथ! तप्तश्चासावायसः अयसो विकारश्च तप्तमायसं लोहमयं शल्यं यस्येति वा तथाभूतः शरो मामभिद्रवति मदभिमुखमागच्छति। स तु कामं यथेच्छं मां दहतु। मे मम गर्भस्तु अनेन मा निपात्यतां यथा न पतेत् तथाऽनुगृहाण ॥ १० ॥

उपधार्येति। भक्तवत्सलः भगवान् तस्या उत्तराया वचः उपधार्य श्रुत्वा इदं विश्वमपाण्डवं पाण्डवशून्यं कर्तुं प्रवृत्तस्य कुपितस्य द्रौणेरस्त्रं ब्रह्मास्त्रम् अबुध्यत ॥ ११ ॥ तर्हीति। हे मुनिश्रेष्ठ अथ तर्ह्येव पाण्डवाः आत्मनोऽभिमुखान् संमुखमागच्छतो दीप्तान् पञ्च सायकान् आलक्ष्य दृष्ट्वा स्वयमप्यस्त्राणि उपाददुः जगृहुः। तङभाव आर्षः ॥ १२ ॥ व्यसनमिति। विभुः श्रीकृष्णः स्वानां स्वभक्तानाम् अनन्यो विषयो यस्य तादृग् आत्मा मनः येषां तेषां स्वैकनिष्ठानां पाण्डवानां ब्रह्मास्त्रस्यान्तरैरनिवर्त्यत्वात् तद्दुष्परिहरं व्यसनं दुःखं वीक्ष्य स्वास्त्रेण सुदर्शनेन रक्षां व्यधात् अकरोत् ॥ १३ ॥ अन्तस्थ इति। योगेश्वरः गर्भं प्रवेष्टुं शक्तः सर्वभूतानामन्तस्थः आत्मान्तर्यामी हरिः कुरूणां कुरुवंशजानां पाण्डवानां तन्तवे वंशविस्तारार्थं स्वमायया शक्त्या सूक्ष्मरूपेण वैराट्या उत्तरायाः कुक्षिं प्रविष्टो गर्भं बाल्मावृणोत् ॥ १४ ॥ यद्यपीति। यद्यपि ब्रह्मशिरोनामकमस्त्रमप्रतिक्रियं केनाप्यनिवार्यमतएवामोघं च तथापि हे भृगूद्वह! वैष्णवं विष्णोः संबन्धि तेजः सुदर्शनमासाद्य सम्यगशाम्यत् शान्तमासीत् ॥ १५ ॥ मेति। सर्वाश्चर्यमये अच्युते श्रीकृष्णे एतत् सुदर्शनेन ब्रह्मास्त्रशमनम् आश्चर्यं मा मंस्थाः न मन्यस्व। यः अजः देव्या अलौकिक्या मायया इदं विश्वं सृजति अवति हन्ति च ॥ १६ ॥ ब्रह्मेति। ब्रह्मतेजसा ब्रह्मास्त्रेण विनिर्मुक्तैरात्मजैर्युधिष्ठिरादिभिः सह कृष्णया द्रौपद्या च सह सती पृथा कुन्ती प्रयाणाभिमुखं कृष्णम् इदं वक्ष्यमाणमाह स्म ॥ १७ ॥ नमस्य इति द्वयम्। आद्यं पुरुषम् ईश्वरं प्रकृतेः परं सर्वभूतानामन्तर्बहिश्चावस्थितं तथापि सर्वेषामलक्ष्यं यतः मायैव जवनिका तिरस्करणी तया आच्छन्नं तिरोहितस्वरूपम् अधः स्थितम् अक्षजम् इन्द्रियजं ज्ञानं यस्मात्तम् अव्ययम् अविकारं त्वाम् अज्ञा मूर्खा अहं नमस्ये नमस्करोमि न तु तत्त्वतो जानामि। तङार्षः। तत्र हेतुः नाट्यधरो नटो यथा मूढदृशा नाट्यशास्त्रानभिज्ञेन जनेन न लक्ष्यते अयं कुशलोऽकुशलो वेति न बुध्यते तथामूढदृशा अज्ञेन पुंसा त्वं तत्त्वतो न लक्ष्यसे। तथेति अग्रिमश्लोकस्थमत्रान्वेतीति चक्रवर्ती ॥ १८–१९ ॥ तथेति परमहंसानां मुनीनाम् अमलात्मनामपि सर्वत्र तृतीयार्थे षष्ठी। तथ तेन निजमहिम्ना न लक्ष्यसे अतो भक्तियोगविधानार्थमवतीर्णं त्वां स्त्रियो वयं कथं पश्येम। यद्वा परमहंसादीनामपि आत्मारामाश्च मुनयः इति रीत्या भक्तियोगविधानमर्थो यस्य तादृशं त्वां यद्वा यथा मूढदृशा न लक्ष्यसे तथा परमहंसादिभिरपि भक्तियोगविधानार्थमवतीर्णं त्वाम् ॥ २० ॥

कृष्णायेति। स्पष्टम् ॥ २१ ॥ नम इति। पङ्कजानां मालाऽस्त्यस्य पङ्कजमालिने मालावते इति वा पङ्कजे इवाङ्घ्री यस्य। स्पष्टमन्यत् ॥ २२ ॥ मातृतोऽप्यधिका तव मयि प्रीतिरित्याह—यथेति। हे हृषीकेश! हे विभो! खलेन दुर्जनेन कंसेन अतिचिरं रुद्धा शुचा पुत्रशोकेनार्पिता व्याप्ता देवकी त्वया यथा विमोचिता तथाऽहमपि मुहुर्वारंवारं विपद्गणात्सहात्मजा त्वयैव नाथेन मोचिता। चकारान्महान्विशेषः सूचितः। तथाहि साऽतिचिरं रुद्धा सति तस्मादेव सकृद्विमोचिता तथा शुचार्पिता च सती न च तस्याः पुत्रा रक्षिताः। अस्ति चान्यो वसुदेवस्तस्या नाथः अहं तु विपद्गणात् मुहुः शीघ्रं च सात्मजा त्वयेव नाथेनेति ॥ २३ ॥ विषादिति। हे हरे! विषात् भीमस्य विषदानात् महाग्नेर्लाक्षागृहदाहात् पुरुषादा हिडिम्बादयो राक्षसास्तेषां दर्शनात् तज्जन्यभयात् असत्सभाया द्यूतस्थानात्वनवासे यदुर्वासः प्रभृतिजनितं कृच्छ्रं तस्मात् मृधे मृधे प्रतियुद्धं येऽनेके महारथा भीष्मादयस्तेषामस्त्रेभ्यः द्रौणेर्ब्रह्मास्त्रतश्च अभि सर्वतो रक्षिता आस्म अभवाम। अस्तेर्लङ् ॥ २४ ॥ विपद इति। हे जगद्गुरो! तत्र तत्र देशे काले च सर्वदा चेत्यर्थः। शश्वन्मुहुः नोऽस्माकं विपद एव सन्तु। यत् यस्माद्धेतोः तासु विपत्सु

नास्ति पुनर्भवस्य जन्मादिलक्षणसंसारस्य दर्शनं यस्मात्तत् भवतो दर्शनं स्यात् ॥ २५ ॥ जन्मेति । जन्म च ऐश्वर्यं च श्रुतं विद्या च तेषां श्रीभिः समृद्धिभिरेधमानो मदो यस्य सः पुमान् नास्ति त्वद्व्यतिरिक्तं किंचनापि इष्टवस्तु येषां ते अकिंचनास्तेषां गोचरं विषयभूतं रामकृष्णगोविन्देति तव नामोच्चारयितुमपि नैवार्हतीति ॥ २६ ॥ नम इति । अकिंचनानां भक्तानां न्यासिनां च वित्तवत्प्रियाय अकिंचना एव वित्तं यस्येति वा तस्मै निवृत्ता गुणानां वृत्तिर्वर्त्तनं यस्मात्तस्मै आत्मनि एव आरामः रमणं यस्य तस्मै शान्ताय रागादिरहिताय कैवल्यपतये कैवल्यं दातुं शक्ताय नम इति ॥ २७ ॥ मन्ये इति । यत् यस्मात् कालरूपात्त्वत्तो भूतानां मिथः परस्परमेव कलिः कलहो भवति नतु त्वयि वैषम्यं तं त्वाम् ईशानं नियन्तारम् अनादिनिधनमाद्यन्तरहितं विभुं प्रभुं सर्वत्र समं चरन्तं कालमहं मन्ये न तु देवकीपुत्रम् ॥२८॥ न वेदेति । हे भगवन् ! यस्य तव कर्हिचित् कदाचिदपि कश्चिदपि दयितः प्रियो नास्ति द्वेष्यः शत्रुश्च नास्ति । यस्मिंस्त्वयि नृणां विषमा अयं पाण्डवमित्रं धार्त्तराष्ट्रशत्रुरित्याद्याकारा निग्रहानुग्रहरूपा मतिः भ्रान्तिर्भवति तस्य नृणां विडम्बनमनुकरणमीहमानस्य कुर्वतस्तव चिकीर्षितं कर्त्तुमिष्टं कश्चिदपि न वेद ॥ २९ ॥ जन्मेति । हे विश्वात्मन् ! तिर्यक्षु वराहादिरूपेण नृषु रामादिरूपेण ऋषिषु वामनादिरूपेण यादःसु मत्स्यादिरूपेण यत् आत्मनः परमात्मनः तव अजस्य जन्म अकर्त्तुः कर्म च तदत्यन्तं विडम्बनमनुकरणमात्रम् । भक्तास्तु अजत्वाकर्तृत्वयोरेव सत्यत्वे "जन्म कर्म च मे दिव्यम्" इति दिव्यत्वेनोक्तजन्मकर्मलीलाया मिथ्यात्वापत्तिं पश्यन्तः अजस्य जन्म अकर्त्तुः कर्म तत्रापि तिर्यगादिषु तच्च सर्वोत्कृष्टस्य तवात्यन्तविडम्बनं तत्तज्जात्यनुकरणत्वेनात्यन्तन्यूनत्वमतस्तव तत्त्वं कोपि न वेद । एवं पूर्वश्लोके नृणां विडम्बनं स्वषाड्गुण्यादिभिर्न्यूनीभावमीहमानस्येति व्याचक्षते ॥ ३० ॥

गोपीति । यद्यस्मात्त्वत्तो भीरपि बिभेति तस्मिंस्त्वयि कृतागसि दधिभाण्डस्फोटनरूपापराधं कृतवति सति गोपी यशोदा त्वद्बन्धनार्थं दाम रज्जुमाददे जग्राह । तावत्तदा अश्रुभिः कलिलं व्यामिश्रमञ्जनं ययोस्ते च ते संभ्रमेण व्याकुले च अक्षिणी यस्मिंस्तद्वक्त्रं निनीय अधः कृत्वा मां ताडयिष्यतीति भयस्य भावनया स्थितस्य ते तव या दशा अवस्था सा मां विमोहयति ॥३१॥ केचिदिति । मलयाचलस्य कीर्त्तये चन्दनमिव जातं तथा प्रियस्य पुण्यश्लोकस्य युधिष्ठिरस्य कीर्त्तये यदोरेव कीर्त्तये इति वा यदोरन्ववाये वंशे अजं जन्मशून्यमेव त्वां जातं प्रादुर्भूतं केचिदाहुः ॥ ३२ ॥ अपरे इति । अपरे तु वसुदेवस्य भार्यायां देवक्यां ताभ्यामेव पूर्वं सुतपःपृश्निरूपाभ्यां याचितः सन् अस्य विश्वस्य क्षेमाय स्वस्त्यर्थं सुरद्विषां दैत्यानां वधाय च अजः एव त्वं पुत्रत्वमभ्यगात् स्वीकृतवानसीत्याहुः । प्रथमपुरुषस्त्वार्षः । अजस्त्वमित्यत्र अर्भत्वमिति पाठः सुगमः । भवानिति शेषः ॥ ३३ ॥ भारेति । अन्ये तु आत्मभुवा ब्रह्मणा अर्थितः प्रार्थितः सन् उदधौ नाव इव दैत्यानां भूरिभारेण सीदन्त्या क्लिश्यन्त्या भुवो य जात इत्याहुः । इतः प्राक् सर्वं मतान्तरम् ॥ ३४ ॥ सिद्धान्तमाह—भव इति । केचन विरलास्तत्त्वविदस्तु अस्मिन्भवे संसारे अविद्या परमानन्दस्वरूपाज्ञानं ततो देहाभिमानात्कामः ततः कर्माणि तैः क्लिश्यमानानां जनानां क्लेशनिवृत्त्यर्थं श्रवणस्मरणार्हाणि कर्माणि करिष्यन्नजात इत्याहुः ॥ ३५ ॥ शृण्वन्तीति । ये जनाः अभीक्ष्णशः निरन्तरं तव ईहितं चरितं शृण्वन्ति गायन्ति गृणन्ति कीर्त्तयन्ति स्मरन्ति कीर्त्यमानमभिनन्दन्ति त एव अचिरेणैव शीघ्रमेव भवप्रवाहं जन्ममरणादिपरम्परारूपमुपरमयति निवर्त्तयतीति तथाभूतं तावकं त्वदीयं पदाम्बुजं पश्यन्त्येव नान्ये । अचिरेणैवेति सर्वत्रावधारणम् ॥ ३६ ॥ अपीति । हे प्रभो ! अद्य स्वानां भक्तानां कृतमीहितमपेक्षितं येन स त्वं निर्विसर्गपाठे सम्बोधनम् । राज्याद्यपहरणेन राजसु योजितमंहो दुःखं यैस्तेषां येषामस्माकं भवतः पदाम्बुजादन्यत्परायणमाश्रयो नैवास्ति तान् सुहृदः भक्तान् अनुजीविनश्च नोऽस्मान् अपिस्वित् किंस्वित् द्वारकागमनेच्छया जिहाससि त्यक्तुमिच्छसि । स्विदिति त्यागस्यानुचितत्वं सूचयति ॥ ३७ ॥

के वयमिति । हृषीकाणामिन्द्रियाणामीशितुः प्राणस्येव यथा प्राणस्यादर्शने इन्द्रियाणां नाम रूपं च किंचित् तथा यत् यर्हि भवतोऽदर्शनं स्यात् यदा त्वमस्मान्न पश्यसि न द्रक्ष्यसि वा तदा नाम्ना विख्यात्या रूपेण समृद्ध्या च यदुभिः सह सहिता पाण्डवा वयं के नाम न केऽपि अतितुच्छा इत्यर्थः ॥ ३८ ॥ नेयमिति । हे गदाधर ! इयमस्मत्पाल्या भूमिरपि यथेदानीं स्वैरसाधारणैर्वज्राङ्कुशादिभिर्लक्षणैर्विलक्षितैश्चिह्नितैस्त्वत्पदैरङ्किता सती भाति शोभते तथा तत्र तदा त्वन्निर्गमनानन्तरं न शोभिष्यते ॥ ३९ ॥ इम इति । स्वृद्धाः सुसमृद्धाः सुष्ठु पक्का ओषधयो व्रीह्यादयो वीरुधो द्राक्षादयश्च येषु ते तथा इमे जनपदा देशाः तथा वनानि अद्रयः नद्यः उदन्वन्तः समुद्राश्च तव वीक्षितैरेव एधन्ते वर्द्धन्ते ॥ ४० ॥ अथेति । हे विश्वेश ! हे विश्वस्यात्मन् ! हे विश्वमूर्त्ते ! स्वकेषु पाण्डुषु वृष्णिषु च दृढमिमं मे मम स्नेहरूपं पाशं त्वं छिन्धि ॥ ४१ ॥ त्वयीति । हे मधुपते यादवेश ! उदन्वति समुद्रे गङ्गा ओघं जलपूरमिव यथा गंगा समुद्रे ओघमुद्वहति प्रतिबन्धं च न गणयति तथा अनन्यविषया मे मम मतिस्त्वयि असकृत् निरन्तरम् अद्धा साक्षात् रतिं प्रीतिमुद्वहतात् । प्रकर्षेण वर्द्धमानां करोतु विघ्नांश्च मा गणयतु ॥ ४२ ॥ श्रीकृष्णेति । हे श्रीकृष्ण कृष्णसख अर्जुनमित्र ! हे वृष्णीनामृषभ श्रेष्ठ ! अवन्यै भूम्यै द्रुह्यन्ति ये राजन्यास्तेषां वंशा एव वंशा वेणवस्तेषां दहनेति श्लिष्टपरम्परितरूपकम् । हे अनपवर्गवीर्य अक्षीणप्रभाव ! हे गोविन्द ! गोद्विजसुराणामार्तिहरोऽवतारो यस्य

तत्सम्बोधनम्। हे योगेश्वर! हे अखिलगुरो भगवन्! ते तुभ्यं नमः॥ ४३॥ पृथयेति। कलानि मधुराणि पदानि येषु तैर्वाक्यैः पृथयेत्थं पूर्वोक्तप्रकारेण परिणूतः संस्तुतोऽखिल उदयो महिमा यस्य सः "णू स्तुतौ" इति दीर्घान्तात् तुदादेः क्तः। वैकुण्ठो भगवांस्तां मायया मोहयन्निव मन्दं जहास। हासो जनोन्मादकरी च मायेत्युक्तेर्हास एव माया॥ ४४॥ तामिति। तां त्वयि मेऽनन्यविषया मतिरिति कुन्तीप्रार्थनां वाढमित्यङ्गीकृत्य ततो रथस्थानाद्गजसाह्वयं हस्तिनापुरं प्रविश्य ततस्तामन्याश्च सुभद्रामुखाः स्त्रिय उपामन्त्र्यानुज्ञाप्य स्वपुरं यास्यन् राज्ञा युधिष्ठिरेण प्रेम्णा अत्रैव कंचित् कालं निवसेति संप्रार्थ्य गमनान्निवारितः॥ ४५॥ व्यासाद्यैरिति। ईश्वरेहाऽज्ञैः ईश्वरस्य श्रीकृष्णस्येहा इच्छा भीष्ममुखेनैव राजा बोधनीयो भीष्मस्य तत्त्वज्ञत्वं च लोके ख्यापनीयमितिरूपा तामजानद्भिः व्यासाद्यैर्मुनिभिः अद्भुतकर्मणा कृष्णेन चेतिहासैः पूर्ववृत्तकथनैः प्रबोधितोऽपि शुचार्पितः शोकव्याप्तः राजा युधिष्ठिरो नाबुध्यत विवेकं नैव प्राप। इदमत्राद्भुतकर्मत्वं कृष्णस्य यत्स्वयं बोधयन्नपि पूर्वोक्ताशयसाफल्यार्थमबोधमेवाद्रढयत्। यथा सन्धानार्थं गतोऽपि यथोचितं वदन्नपि विग्रहमेवाद्रढयत्॥ ४६॥

अबोधमेव प्रपञ्चयति—आहेति। हे विप्राः! प्राकृतेनाविवेकव्याप्तेन आत्मना मनसा सुहृदां मित्रबान्धवादीनां वधं चिन्तयंस्तेषु यः स्नेहस्तत्प्रयुक्तो यो मोहः कर्त्तव्याकर्तव्यानुसंधानं तस्य वशं गतः सन् धर्मसुतः राजा आह स्म॥ ४७॥ अहो इति। अहो अनुचितमेतद्दुरात्मनः दुष्टचित्तस्य मे हृदि रूढमज्ञानं पश्यत। यतः पारक्यस्य श्वसृगालाद्याहारस्यैव देहस्यार्थे मे मया। मे इति मयेत्यर्थेऽव्ययम्। बह्वयः अक्षौहिणीः अक्षौहिण्यः हताः। पूर्वसवर्णदीर्घ आर्षः। 'अक्षौहिण्यां नागा (२१८७०) रथाश्च खनगाष्टभूद्दशो (२१८७०) ज्ञेयाः। खकुषट्शरषट् चाश्वाः (६५६१०)॥" नराः खपञ्चाग्निगोकाष्ठाः (१०९३५०)॥" ॥ ४८॥ बालेति। बालादीनां द्रोहकर्त्तुर्घातकस्य मे वर्षाणामयुतायुतैरपि निरयान्नरकान्मोक्षो निस्तारो नैव स्यात्। सुहृदः संबन्धिनः मित्राणि सखायः पितरः पितृव्याः॥ ४९॥ नैन इति। धर्मयुद्धे द्विषां वधो राज्ञ एनः पापं न भवतीति यच्छासनं शिक्षारूपं वचस्तन्मे बोधाय संतोषाय नतु कल्पते समर्थं नैव भवति। ततस्तद्वचः धर्मयुद्धे प्रजाभर्तुरेव स्वप्रजानामन्येन बाधे प्रसक्ते तद्वधो नीतिशास्त्रेऽनुज्ञातः दुर्योधनेन तु प्रजायां रक्ष्यमाणायामेव मया केवलं राज्यलोभेनैव हतत्वात्ततो मम पापमेव जातमिति भावः॥ ५०॥ स्त्रीणामिति। युद्धे पुंसां वधो मा नाम कथंचित् भवतु पापं तथापि मया हता बन्धवो यासां तासां स्त्रीणां योऽसाविहेदानीं द्रोहो दुःखमननुज्ञात एवोत्थितस्तज्जं पापं तु गृहमेधीयैर्गृहाश्रमविहितैः हिंसाप्रायैः कर्मभिर्व्यपोहितुं दूरीकर्त्तुमहं न कल्पो न समर्थः॥ ५१॥ यज्ञैरपि मम पापं न मार्ज्यमिति हेतुवादमाश्रित्याह—यथेति। पटादिलग्नं पङ्काम्भो यथा घनपङ्केन न मृज्यते यथा वा सुरालेशकृतमपावित्र्यं बह्व्या सुरया न मृज्यते तथैवैकां प्रमादतो जातां भूतहत्यां बुद्धिपूर्वकहिंसाप्रायैर्यज्ञैर्मार्ष्टुं शोधयितुं दूरीकर्त्तुं कोऽपि नार्हति॥ ५२॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः प्रथमस्याष्टमे निरमादिमाम्॥

इति श्रीभागवते प्रथमस्कन्धेऽष्टमोऽध्यायः॥ ८॥



# अथ नवमोऽध्यायः

सूत उवाच

इति भीतः प्रजाद्रोहात्सर्वधर्मविवित्सया। ततो विनशनं प्रागाद्यत्र देवव्रतोऽपतत् ॥ १ ॥

नवमे भीष्मेण सर्वधर्मवर्णनमीर्यते। कृष्णस्तुतिर्मृत्युकाले श्लोकास्तत्राङ्कसिन्धवः (४९) ॥ चत्वार्युवाचेति सप्तेषवोऽङ्गत्र्यूना अनुष्टुभः ॥ ६ ॥

यद्ययं तवाविवेको नापयाति तदा सर्वधर्मतत्त्वज्ञं भीष्ममपि पृच्छेति कृष्णाद्यैरुक्ते भीष्मसमीपं ययावित्याह—इतीति। इत्येवं प्रजानां द्रोहात् विनाशजनितात् पापात् भीतो युधिष्ठिरः सर्वेषां धर्माणां विवित्सया भीष्ममुखाद्वेदितुमिच्छया। इडभाव आर्षः। विन्दतेर्वा रूपम्। ततो हस्तिनापुरात् यत्र देवव्रतो भीष्मः अपतत् तत् विनशनं कुरुक्षेत्रं प्रागात् ॥ १ ॥ तदेति। तदा ते भीमादयो भ्रातरोऽपि सर्वे सन्तः श्रेष्ठाः अश्वा येषु तैः स्वर्णेन भूषितैः रथैस्तमन्वगच्छन् तथा व्यासधौम्यादयो विप्रा अपि रथैस्तमन्वगच्छन् ॥ २ ॥ भगवानिति। हे विप्रर्षे! सधनञ्जयः अर्जुनेन सहितो भगवानपि रथेन तमन्वगच्छत्। स नृपो युधिष्ठिरस्तैर्भ्रात्रादिभिः गुह्यकैः कुवेर इव व्यरोचत ॥ ३ ॥ दृष्ट्वेति। दिवः स्वर्गात् च्युतं पतितममरमिव भूमौ निपतितं भीष्मं दृष्ट्वा सानुगा भृत्यादिसहिताः चक्रिणा कृष्णेन सह पाण्डवास्तं प्रणेमुः ॥ ४ ॥ तत्रेति। हे सत्तम! तत्र तदा तत्र स्थाने भरतपुङ्गवं भीष्मं दृष्टुं ब्रह्मर्षयो भृग्वादयो देवर्षयो नारदादयः राजर्षयो राजानश्च सर्वे आसन् तत्क्षणमेवागताः ॥ ५ ॥ तानाह—पर्वत इति। पर्वतादय आसन् इत्यनुषङ्गः। भगवान् बादरायणः व्यासः शिष्यैः सहितः रेणुकासुतः परशुरामः ॥ ६ ॥ वसिष्ठः इति। वसिष्ठादयश्चासन् कौशिको विश्वामित्रः ॥ ७ ॥ अन्ये चेति। हे ब्रह्मन्! अन्ये च अमलाः ब्रह्मरातादयः शुकादयः कश्यपाङ्गिरसादयः कश्यपबृहस्पत्यादयो मुनयः शिष्यैः उपेताः आजग्मुः ॥ ८ ॥ तानिति। धर्मज्ञः युद्धादिदेशे मरणादिकाले च यदुचितं तद्विभागवित्स वसूत्तमो भीष्मः महाभागान् तान् ऋषीन् समेतान् उपलभ्य दृष्ट्वा स्तुतिनमस्कारादिभिः पूजयामास ॥ ९ ॥ कृष्णमिति। जगदीश्वरं माययोपात्तः स्वीकृतो विग्रहो मनुष्यदेहो येन तं कृष्णं हृदिस्थं सन्तं पुरतश्च आसीनं तत्प्रभावज्ञः भीष्मः पूजयामास ॥ १० ॥ पाण्डुपुत्रानिति। भीष्मः उप समीपे आसीनान् प्रश्रयः विनयः प्रेमा स्नेहस्ताभ्यां सन्नतान् उपसन्नान्। सन्नतानिति पाठेऽवनतान्। अनुरागास्रैः स्नेहाश्रुभिरन्धीभूतेन व्याप्तेन चक्षुषा अभ्याचष्ट ददर्श। यद्वा तादृशेन चक्षुषा उपलक्षितो भीष्मः तान् अभ्यभाषत ॥ ११ ॥ अहो इति। नन्दयन्ति इति नन्दनाः धर्मेण धर्मस्य वा नन्दनाः हे धर्मनन्दनाः! यत् यतः विप्राः धर्मः अच्युतः श्रीकृष्णश्च आश्रयो येषां तेषां ते यूयं क्लिष्टं दुःखं यथा भवति तथा जीवितुं नार्हथ। अपि तु सुखं जीवितुमर्हथ। तथापि यत् क्लिष्टं जीवथ तत् अहो कष्टम् अहो अन्याय्यं सन्धिरार्षः ॥ १२ ॥ संस्थित इति। अतिरथे अमितैः सह युद्धकर्तरि पाण्डौ संस्थिते मृते सति बालाः प्रजाः पुत्रा यस्याः सा तोकवती पुत्रवती वधूश्चेति दैन्यं दर्शितम्। पृथा युष्मत्कृते मुहुः वारंवारं युष्माभिः सह बहून् क्लेशान् प्राप्ता ॥ १३ ॥ सर्वमिति। भवतां च धर्मात्मनामपि यत् अप्रियं तत्सर्वं कालकृतं मन्ये। वायोर्वशे घनावलिर्मेघपंक्तिरिव सपालः इन्द्रादिलोकपालसहितः सर्वोऽपि लोको यस्य कालस्य वशे वर्तते ॥ १४ ॥ यत्रेति। यत्र यस्मिन् पक्षे धर्मसुतो युधिष्ठिरो राजा गदापाणिर्वृकोदरश्च कृष्णः अर्जुनः अस्त्री धन्वी गाण्डिवं चापं धनुः कृष्णः सुहृत् मित्रं ततः तत्रापि पुण्यशरीरबलास्त्रनैपुणशस्त्रदेवसंपत्तावपीत्यर्थः। विपत् इत्याश्चर्यम् ॥ १५ ॥

न हीति। हे राजन्! अस्य हि परमेश्वरस्य विधित्सितं कर्तुमिष्टं कर्हिचित् कोपी पुमान् न वेद। यस्य विधित्सितस्य विजिज्ञासया युक्ताः कवयो ब्रह्मरुद्रादयोऽपि हि मुह्यन्ति ॥ १६ ॥ तस्मादिति। हे भरतर्षभ! हे नाथ! हे प्रभो! तस्मात् इदं सुखदुःखादिकं सर्वं दैवतन्त्रं परमेश्वराधीनं व्यवस्य निश्चित्य। आर्षं आलोपः। व्यवसायेति भाव्यम्। यद्वा व्यवस्य निश्चिनु। लोट् तस्येश्वरस्यानुविहितः अनुगतः सन् "हि गतौ, गत्यर्थं०" इति कर्त्तरि क्तः। तस्येति शेषे षष्ठी। अनाथाः प्रजाः पाहि ॥ १७ ॥ एष इति। एष वै एष एव आद्यः पुमान् साक्षात् नारायणः भगवान् मायया लोकं जनं मोहयन् गूढ आच्छादितैश्वर्यो वृष्णिषु चरति विहरति ॥ १८ ॥ अस्येति। हे नृप! अस्य श्रीकृष्णस्य गुह्यतमम् अनुभावं प्रभावं साक्षात् भगवान् शिवः देवर्षिः नारदः कपिलश्च वेद जानाति ॥ १९ ॥ यमिति। त्वं त्वज्ञानात् यं मातुलेयं वसुदेवपुत्रं प्रियं प्रीतिविषयं मित्रं प्रीतिकर्तारं सुहृत्तमम्

उपकारानपेक्षोपकारकंच मन्यसे तथा सौहृदात् विश्वासात् सचिवं मन्त्रिणं दूतम् अथ सारथिं च अकरोः कृतवानसि ॥ २० ॥ सर्वात्मन इति। सर्वात्मनः समदृशः अद्वयस्य अनहंकृतेः निरवद्यस्य रागादिदोषरहितस्य अस्य तत्कृतं नीचाद्यकर्मकृतं ममेदं योग्यमयोग्यं वेति मतिवैषम्यं क्वचित् न अस्ति ॥ २१ ॥ तथापीति। हे भूप! तथापि समत्वेऽपि एकान्तभक्तेषु तस्य अनुकम्पितं कृपां पश्य। यत् यस्मात् असून् प्राणान् त्यजतः मे मम कृष्णः साक्षाद्दर्शनमागतः ॥ २२ ॥ भक्त्येति। यस्मिन् श्रीकृष्णे भक्त्या मन आवेश्य वाचा च यस्य नाम कीर्तयन् कलेवरं त्यजन् योगी कामैर्वासनाभिः कर्मभिश्च मुच्यते ॥ २३ ॥ स इति। अहं यावदिदं कलेवरं हिनोमि तावत् प्रसन्नहासेन अरुणलोचनाभ्यां च उल्लसत् रुचिरं मुखाम्बुजं यस्य सः चतुर्भुजः ध्यानस्य पन्था विषयः यो मया अन्यैश्च केवलं चिन्त्यते स देवदेवो भगवान् अग्रतः स्थित एव मां प्रतीक्षताम् ॥ २४ ॥ युधिष्ठिर इति। तत् सानुकम्पं वाक्यम् आकर्ण्य युधिष्ठिरः शरपञ्जरे शयानं भीष्मम् ऋषीणां च अनुशृण्वतां विविधान् धर्मान् अपृच्छत् ॥ २५ ॥ पुरुषेति त्रयम्। हे मुने! तत्त्ववित् भीष्मः पुरुषस्य स्वभावेन विहितान् नरजातिसाधारणान् सत्यदयादीन् यथावर्णं वर्णयोग्यधर्मान् योग्यतारूपे यथार्थेऽव्ययीभावः। यथाश्रममाश्रमधर्मान् वैराग्यरागावेवोपाधी ताभ्यां क्रमेणाम्नातम् उभयं निवृत्तिप्रवृत्तिरूपं लक्षणं येषां तान् तथा दानधर्मान् तुलापुरुषादीन् राजधर्मान् प्रजापालनादीन् मोक्षधर्मान् शमदमादीन् स्त्रीधर्मान् पातिव्रत्यादीन् भगवद्धर्मान् हरितोषकानेकादश्यादिव्रतनियमान् सहोपायान् साधनसहितान् धर्मार्थकाममोक्षान् विभागशः अवान्तर-भेदाभिन्नान् समासव्यासौ संक्षेपविस्तरौ तावेव योगौ उपायौ ताभ्यां समासव्यासयोर्योगेन युक्ततया इति वा। नानाख्यानेषु ये इतिहासाः तेषु यथा यथावत् वर्णयामास ॥ २६-२७-२८ ॥

धर्ममिति। धर्मं प्रवदतस्तस्य भीष्मस्य स उत्तरायणरूपः कालः प्रत्युपस्थितः यः छन्देन स्वेच्छया मृत्युर्यस्य तस्य योगिनः वाञ्छितः ॥ २९ ॥ तदेति। तदा सहस्रणीः सहस्रं रथिनो नयति पालयति वशं नयति वा। सहस्रगोरिति पाठे सहस्रार्थ-वत्यो गिरो यस्य स भीष्मः गिरः उपसंहृत्य असीलितदृक् एव पुरः स्थिते लसन्तौ पीतौ पटौ यस्य तस्मिन् चतुर्भुजे आदिपुरुषे कृष्णे विमुक्तसङ्गं विषयान्तरतो विरक्तं मनो व्यधारयत् तद्दर्शनैकप्रवणमकरोत् ॥ ३० ॥ विशुद्धयेति। विशुद्धया धारणया चित्तस्यैकत्र देशे बन्धनरूपया हतमशुभं पापं यस्य सः। तस्य भगवत ईक्षयैव कृपादृष्ट्यैव आशु गता निवृत्ता आयुधानां व्यथा पीडा यस्य सः। गतायुधश्रम इत्यपि पाठः। निवृत्तः सर्वेन्द्रियवृत्तीनां विभ्रमः विषयान्तरेषु भ्रमणं यस्य स भीष्मो जन्यं देहं मायिकप्रपञ्चं वा विसृजन् त्यजन् जनार्दनं श्रीकृष्णं तुष्टाव ॥ ३१ ॥ इतीति। इति आयुःसमाप्तौ नानाधर्मोद्युपायैर्वा सात्वतपुङ्गवे विशिष्टः सर्वाधिको भूमा महत्त्वं यस्य तस्मिन् विभूम्नि स्वसुखं स्वरूपभूतं परमानन्दम् उपगते प्राप्तवत्येव च यत् यतः प्रकृते भवप्रवाहः सृष्टिपरम्परा भवति तां प्रकृतिं योगमायां क्वचित्सृष्ट्यादिषु विहर्त्तुम् उपेयुषि स्वीकृतवति नतु स्वरूपतिरोधानेन जीववत्परतन्त्रे इत्यर्थः। भगवति वितृष्णा फलसंकल्परहिता अवितृष्णेति वा छेदः। अतृप्तेत्यर्थः। मतिः मया उपायनत्वेन उप-कल्पिता। अत्र स्तोत्रे प्रत्यक्षेऽपि भगवति युष्मत्पदप्रयोगाभावः। आस्वादितवीररसावेशात् बहुपद्येषु वीरत्वस्य वर्णनाच्च पुष्पिताग्रा एकादश ॥ ३२ ॥ त्रिभुवनेति। त्रिषु भुवनेषु कमनं सुन्दरं तमालस्येव नीलो वर्णो यस्य तत् रवेः करा इव गौरे पीते वरे श्रेष्ठे युद्धसमये रविकरैः गौरवरे अतिगौरीकृते वा अम्बरे वस्त्रे दधत् अलककुलैः कुन्तलसमूहैरुपर्यावृतमाननाब्जं यस्मिन् तत् वपुः दधाने विजयसखे अर्जुनसारथौ श्रीकृष्णे मे मम अनवद्या अहैतुकी रतिरनुरागोऽस्तु ॥ ३३ ॥ युधीति। युधि युद्धे यत्तुरगाणां खुररज-स्तेन विधूम्राः धूसरास्ते च विश्वक्षः इतस्ततश्चलन्तः कचाः कुन्तलास्तैर्लुलितं विकीर्णं यत् श्रमवारि स्वेदबिन्दुरूपं तेन वात्सल्यद्योत-केनालकृतमास्यं यस्य तस्मिन् मम निशितैः तीक्ष्णैः शरैर्विभिद्यमाना त्वक् यस्य तस्मिन् विलसच्छोभमानं त्रुट्यद्वा कवचं यस्य तस्मिन्कृष्णे आत्मा मनोऽस्तु रमतामित्यर्थः ॥ ३४ ॥

सपदीति। सख्युरर्जुनस्य वचः 'सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत।' इति वचनं निशम्य सपदि शीघ्रं निजपरयोर्बलयोः पाण्डवकौरवसेनयोर्मध्ये रथं निवेश्य स्थापयित्वा स्थितवति परसैनिकायुः दुर्योधनसैनिकानामायुः अक्ष्णा कालदृष्ट्या हृतवति असौ भीष्मः असौ कर्ण इत्यादिप्रदर्शनव्याजेन तेषामायुराकृष्याजुर्नजयं कृतवति पार्थसखे अर्जुनसारथौ मम रतिरस्तु ॥ ३५ ॥ व्यवहितेति। व्यवहिता किंचिद्दूरे स्थिता या पृतना कौरवसेना तस्या मुखमिव मुखमग्रे स्थितान् भीष्मद्रोणा-दीन्निरीक्ष्य दोषबुद्ध्या पापभयेन स्वजनानां भीष्मादीनां वधाद्विमुखस्यार्जुनस्य कुमतिम् अहं हन्तेत्यादिकुबुद्धिम् आत्मविद्यया गीताशास्त्रोपदेशेन योऽहरत्तस्य परमस्य पुरुषोत्तमस्य चरणरतिर्मे ममास्तु ॥ ३६ ॥ स्वनिगममिति। स्वनिगमम् अशस्त्र एवाहं साहाय्यमात्रं करिष्यामीति प्रतिज्ञामपहाय त्यक्त्वा श्रीकृष्णं शस्त्रं ग्राहयिष्यामीति मत्प्रतिज्ञाम् ऋतं सत्यं यथा स्यात्तथा अधि अधिकां कर्तुं यो रथस्थः सन्नवप्लुतः सहसैवावतीर्णः धृतो रथचरणश्चक्रं येन सः निजभारेण चलन्ती गौः पृथ्वी यस्मात् गतं संरम्भेण पतितमुत्तरीयं यस्य सः। यः इभं गजं हन्तुं सिंह इव अभ्ययात् अभिमुखमधावत् तस्य चरणरतिर्मेऽस्तु इत्यनुषङ्गः। अत्र कृष्णेन स्वभक्तवात्सल्यगुणस्य दुस्त्यजत्वादर्जुनस्य युद्धसामर्थ्यं स्वप्रतिज्ञामपि त्यक्त्वा स्वयमेवार्जुनस्य रक्षार्थं योत्स्यते एव

अतः क्षणमर्जुनं पराभूयास्य युद्धं भक्तवात्सल्यद्योतकं द्रक्ष्यामीति भीष्मस्य स्वमनोरथसिद्ध्यर्थैव प्रतिज्ञा इत्यतः स्वप्रतिज्ञाभङ्गेनार्जुने स्वप्रमाणं दर्शयित्वा भीष्मं प्रमोद्य तस्योत्कर्ष च लोके ख्यापयामासेति तत्त्वम् ॥ ३७ ॥ शितेति । यदाभ्ययात्तदा आततायिनो धन्विनो मे शितैस्तीक्ष्णैर्विशिखैर्बाणैः हतः विशीर्णकवचः क्षतजेन रुधिरेण परिप्लुतो व्याप्तः सन् मद्वधार्थं प्रसभं वारयन्तमर्जुनमप्यतिक्रम्य अभिससार अभिमुखमाजगाम । एवं योऽर्जुनपक्षपातीव लक्षितः वस्तुतो मद्वचः पालनेन ममैवानुग्रहं कृतवान् स भगवान्मुकुन्दो मे गतिर्भवतु ॥ ३८ ॥ विजयेति । विजयरथ एव कुटुम्बवदकृत्यैरपि रक्षणीयो तस्य तस्मिन् आत्तं गृहीतं तोत्रं प्रतोदः येन तस्मिन् । धृताश्च ते हयानां रश्मयः प्रग्रहाश्च ते सन्ति हस्ते यस्य तस्मिन् । आर्ष इनिः । सामान्ये नपुंसकं वा । व्रीह्यादित्वं वा कल्प्यम् । तच्छ्रिया वामहस्तेऽश्वधारणरज्जुर्दक्षिणे प्रतोदः मुखे हुंहुमिति तन्नोदनप्रोत्साहनशब्द इति सारथ्यशोभया ईक्षणीये भगवति श्रीकृष्णे मुमूर्षोः मर्तुमुद्यतस्य मे रतिरस्तु । यं हरिं निरीक्ष्य इह रणे ये हतास्ते तस्य स्वरूपं गताः प्राप्ताः । इति दिव्यदृष्ट्या पश्यन्नाह स्म ॥ ३९ ॥ ललितेति । ललिता गतिश्च विलासश्च रासादिः वल्गुर्मनोहरो हासः प्रणयः स्नेहस्तत्पूर्वकं निरीक्षणं च तैस्तैः कल्पितः उरुर्मानो यासां ताः कृतं पूतनास्तनपानवकवधादिकम् अनुकृतवत्यः उन्मदान्धाः गोपवध्वः यस्य प्रकृतिं स्वरूपम् अगन् अगमन् मलोप आर्ष इति स्वामिपादाः । उपोद्घातोक्तच्चिल्लुगादिना वा साध्यं तस्मिन्मे रतिस्तु ॥ ४० ॥

मुनिगणेति । युधिष्ठिरस्य राजसूये मुनिगणैर्नृपवर्यैश्च संकुले व्याप्तेऽन्तः सदसि सभामध्ये येषां मुनिगणादीनामहो रूपमहो महिमेत्येवमीक्षणीयः सन् यः अर्हणमग्रपूजाम् उपपेदे प्राप । स एव आत्मान्तर्यामी मम दृशि गोचरो दृष्टिविषयः सन्नाविः प्रकटो वर्त्तते । अहो मम भाग्यम् इति भावः ॥ ४१ ॥ तमिति । तमात्मकल्पितानां स्वयं निर्मितानां शरीरभाजां प्राणिनां हृदि हृदि प्रतिहृदयं धिष्ठितम् । अलोप आर्षः । अन्तर्यामिणम् अर्कमिव जलाशयेषु एकमपि प्रतिदृशं दृशं दृशं प्रति टाबन्तेन वीप्सार्थेऽव्ययीभावः । नैकधा अनेकविधम् इव प्रतीतम् अजम् इमं श्रीकृष्णं विधूतो निवृत्तो भेदप्रयुक्तो मोहो यस्य सोऽहं समधिगतः प्राप्तः अस्मि ॥ ४२ ॥ कृष्ण इति । एवमात्मनि परमात्मनि भगवति श्रीकृष्णे मनोवाग्दृष्टीनां वृत्तिभिः सह आत्मानं प्रत्यगात्मानमावेश्यैकीकृत्य ज्ञानित्वात् अन्तरेऽवलीनः श्वासो यस्य सः भीष्मः उपारमत् देहादिकं तत्याज ॥ ४३ ॥ संपद्यमानमिति । भीष्मं निष्कले शुद्धे ब्रह्मणि सम्पद्यमानं प्राप्तमाज्ञाय ते सर्वे दिनात्ये रात्रौ वयांसि पक्षिण इव तूष्णीं बभूवुः ॥ ४४ ॥ तत्रेति । तत्र तदा देवैर्मानवैश्च वादिता दुन्दुभयः नेदुः । ये राज्ञां मध्ये साधवः अनसूयवः ते शशंसुः तुष्टुवुः । देवैः कृताः पुष्पवृष्टयः खादाकाशात्पेतुः ॥ ४५ ॥ तस्येति । हे भार्गव शौनक ! संपरेतस्य मुक्तस्यापि तस्य भीष्मस्य निर्हरणादीनि कर्माणि कारयित्वा युधिष्ठिरः मुहूर्त्तं मुहूर्तपर्यन्तं दुःखितोऽभवत् ॥ ४६ ॥ तुष्टुवुरिति । ततश्च हृष्टाः मुनयः कृष्णं तस्य गुह्यनामभिः अद्भुतकृत्यादिसूचकैः तुष्टुवुः । ततः पुनः कृष्णो हृदये येषां ते मुनयः स्वाश्रमान्प्रययुः ॥ ४७ ॥ तत इति । ततः सहकृष्णः कृष्णेन सहितो युधिष्ठिरो गजाह्वयं हस्तिनापुरं गत्वा पितरं धृतराष्ट्रं तपस्विनीं पुत्रमरणेन संतापवतीं गान्धारीं च सान्त्वयामास ॥ ४८ ॥ पित्रेति । पित्रा धृतराष्ट्रेणानुमतोऽनुज्ञातो वासुदेवेन कृष्णेन अनुमोदितः विभुः राजा युधिष्ठिरः पितृपैतामहं पित्रादिपरम्पराप्राप्तं राज्यं धर्मेण चकार ॥ ४९ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायः प्रथमस्याध्याये नवमे व्यधात् ॥

इति श्रीभागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां नवमोऽध्यायः ॥ ९ ॥

—:❀:—

# अथ दशमोऽध्यायः

शौनक उवाच

हत्वा स्वरिक्थस्पृध आततायिनो युधिष्ठिरो धर्मभृतां वरिष्ठः।
सहानुजैः प्रत्यवरुद्धभोजनः कथं प्रवृत्तः किमकारषीत्ततः ॥ १ ॥

दशमे स्तवनं विष्णोः कृतं स्त्रीभिर्गजाह्वये। द्वारकागमनं तस्य श्लोकः षट्त्रिंशदीरिताः।
उवाचयुगलं सार्द्धा द्विवेदाः ( ४२ ) सन्त्यनुष्टुभः ॥ १० ॥

हत्वेति। अनुजैः सह सहितो धर्मभृतां वरिष्ठः प्रत्यवरुद्धभोजनः स्वजनवधशोकेन संकुचितभोगः राज्यलाभेन प्राप्तभोगो वा युधिष्ठिरः स्वरिक्थस्पृहः स्वदायलिप्सून्। स्वरिक्थस्पृध इति पाठे तु रिक्थं धनं स्वरिक्थार्थं स्पृत् संग्रामो येषां तान् इति स्वाम्यादयः। तत्र स्पृह्धातोर्हस्य धः स्पर्धधातोः स्पृधादेशो वा आर्षः। युद्धार्थो लक्षणयेति तात्पर्यं प्रतीयते। आततायिनो दुर्योधनादीन् हत्वा राज्ये कथं प्रवृत्तः ततश्च किमकारषीत् किमकार्षीत् अकाराधिक्यमार्षम् ॥ १ ॥ भगवदिच्छयैव तस्य राज्यादिप्रवृत्तिरित्याह—वंशमिति। यथा वेणुवनसंघर्षणजाग्निना वनं दग्धं भवति तथा कुरुवंश एव दवो वनं तस्मादुद्भूतो यः क्रोधरूपोऽग्निस्तेन निर्ह्रतं दग्धमुपसंहृतं कुरोर्वंशं संरोहयित्वा परीक्षिद्रक्षणेनाङ्कुरितं कृत्वा "क्त्वापि च छन्दसि" इति ल्यबभावः। एवं निवेशयित्वेत्यत्रापि युधिष्ठिरं च निजे तदीये राज्ये निवेशयित्वा भवभावनः लोकरक्षकः ईश्वरो हरिः ह स्फुटं कृतकृत्यत्वात् प्रीतमना बभूव ॥ २ ॥ निशम्येति। अथ भीष्मोक्तमच्युतोक्तं च निशम्य प्रवृत्तं यद्विज्ञानं परमेश्वराधीनं जगन्न स्वतन्त्रमित्येवंभूतं तेन विधूतो निवृत्तो विभ्रमोऽहङ्कृतैते मदीया इति मोहो यस्य सः युधिष्ठिरः अजितः श्रीकृष्ण उपेन्द्रश्चाश्रयो यस्य अनुजैः अनुजेनोपेन्द्रेण च अनुवर्तितः अनुवृत्तिं प्रापितः सन् इन्द्र इव परिधयः समुद्रा ऊर्ध्वं दिङ्मण्डलं च तदुपान्तां तत्पर्यन्तां गां पृथ्वीं स्वर्गं च शशास पालयामास। श्लेष उपमाया अङ्गम् ॥ ३ ॥ काममिति। अजातशत्रौ युधिष्ठिरे राज्ञि सति पर्जन्यः कामं यथेष्टं ववर्ष मही च सर्वान् कामान् दोग्धि प्रपूरयतीति तथाभूताऽभूत्। ऊधस्वतीः ऊधः क्षीराशयः तन्महदस्ति यासामिति। अतिशायने मतुप्। पूर्वसवर्णदीर्घ आर्षः। गावो मुदा हर्षेण युक्ताः पयसा दुग्धेन व्रजान् गोष्ठानि सिषिचुः अभ्यषिञ्चन् ॥ ४ ॥ नद्य इति। तस्य युधिष्ठिरस्य नद्यः समुद्रा गिरयः वनस्पतिभिर्वटोदुम्बरादिभिर्वीरुद्भिर्द्राक्षादिभिश्च सहिताः सर्वा ओषधयो यवव्रीह्यादयः अन्वृतु ऋतौ ऋतौ कामं यथेष्टं फलन्ति समृद्धिं नयन्ति स्म ॥ ५ ॥ नाधय इति। अजातशत्रौ युधिष्ठिरे राज्ञि सति दैवं च भूतानि च आत्मा देहश्च हेतुर्येषामाधिदैविकादीनां ते आधयो मनोव्यथाः व्याधयो रोगाः क्लेशाः शीतोष्णादिकृताः जन्तूनां प्राणिनां कर्हिचिदपि नाभवन् ॥ ६ ॥ उषित्वेति द्वयम्। सुहृदां युधिष्ठिरादीनां विशोकाय विनोदनाय स्वसुः सुभद्रायाः प्रियकाम्यया च हास्तिनपुरे कतिपयान्मासानुषित्वा अवस्थाय तं युधिष्ठिरमामन्त्र्य पृष्ट्वा तेनाभ्यनुज्ञातस्तं परिष्वज्याभिवाद्य कैश्चिदधिकवयस्कैः परिष्वक्त आलिङ्गितो न्यूनवयस्कैरभिवादितश्च हरिः कृष्णो रथमारुरोह ॥ ७-८ ॥

सुभद्रेति द्वयम्। तथा सुभद्रायाः धृतराष्ट्राद्याश्च मत्स्यसुता सत्यवती तदादयोऽन्याश्च स्त्रियः विमुह्यन्तो मोहं गताः। 'पुमान् स्त्रिया' इत्येकशेषः। शार्ङ्गधन्वनः कृष्णस्य विरहं न सेहिरे। विराटतनया उत्तरा युयुत्सुः धृतराष्ट्राद्वैश्यायां जातः गौतमः कृपः यमौ नकुलसहदेवौ ॥ ९-१० ॥ सत्सङ्गादिति द्वयम्। सतां सङ्गाद्धेतोर्मुक्तस्त्यक्तः दुःसङ्गो धनपुत्राद्यासक्तिरूपो येन स बुधः धीमान् सद्भिः कीर्त्यमानं रोचनं रुचिकरं यस्य श्रीकृष्णस्य यशोऽपि सकृदेकवारमप्याकर्ण्य सत्सङ्गं हातुं त्यक्तुं नोत्सहते न शक्नोति। तस्मिन् श्रीकृष्णे दर्शनस्पर्शनादिभिर्न्यस्ता धीर्येषां ते पार्थाः साक्षात्तस्यैव विरहं कथं सहेरन् ॥ ११-१२ ॥ सर्वे इति। यतश्च स्नेहेन संबद्धा अतः सर्वे ते तमेवानुद्रुतानि अनुगतानि चेतांसि येषां तथाभूतास्ततोऽनिमिषैर्निमेषरहितैरक्षैर्नेत्रैस्तमेव वीक्षन्तो वीक्षमाणाः सन्तः शाता आर्षः। स यत्र यत्र चलति स्म तत्र तत्र विचेलुः। यद्वा तमेव वीक्षमाणास्तत्र तत्रार्हणाद्यानयनार्थं चलन्ति स्म ॥ १३ ॥ न्यरुन्धन्निति। तदा च बान्धवानां स्त्रियः कुन्तीप्रभृतयः अगारात् स्वगृहाद्देवकीसुते निर्याति निर्गच्छति सति अभद्रमपशकुनं न स्यात् मा भूदिति बुद्ध्या औत्कण्ठ्यात्प्रेमपूर्वकानुध्यानादुद्गलत् स्रवदपि बाष्पमश्रु न्यरुन्धन् नेत्रेष्वेव स्तम्भितवत्यः। अत्र अश्रूणि सन्त्येव केवलममङ्गलभिया पटाञ्चलेन गोपितवत्यः इति उदुपसगण शत्रा च

द्योतितम् ॥ १४ ॥ मृदङ्गेति। तदा मृदङ्गादयो वाद्यभेदाः नेदुः ॥ १५ ॥ प्रासादेति। प्रेमव्रीडास्मितपूर्वकमीक्षणं यासां ताः कुरूणां नार्यः कृष्णदिदृक्षया प्रासादशिखरारूढाः सत्यः कृष्णे कुसुमैः कुसुमानि कर्मणः करणत्वविवक्षया ववृपुः विकीर्णवत्यः ॥ १६ ॥ सितेति। प्रियतमस्य भगवतः प्रियः गुडाका निद्रा तस्या ईशो जितनिद्रोऽर्जुनः मुक्तानां दामभिर्विभूषितम्, रत्नमयो दंडो यस्य तत् सितातपत्रं श्वेतछत्रं जग्राह ॥ १७ उद्धव इति। उद्धवः सात्यकिश्चोभौ परमाद्भुते व्यजने जगृहतुः। पथि मार्गे कुसुमैर्विकीर्यमाण आच्छाद्यमानो मधुपतिः श्रीकृष्णो रेजे ॥ १८ ॥ अश्रूयन्तेति। तत्र तत्र मार्गे द्विजैरीरिताः प्रयुक्ताः सत्याः सुखादीनां श्रीकृष्णे व्यभिचाराभावात् किंतु निर्गुणस्य तस्य सुखी भवेत्यादयो नानुरूपाः गुणात्मनोऽङ्गीकृतमानुष्यनाट्यस्यानुरूपाश्च। सन्धिरार्षः। आशिषः अश्रूयन्त श्रुताः ॥ १९ ॥ अन्योन्यमिति। उत्तमश्लोके श्रीकृष्णे चेतो यासां तासां कौरवेन्द्रो युधिष्ठिरस्तत्पुरस्य स्त्रीणां सर्वेषां श्रुतीः कर्णान् मनांसि च हरति तादृशः सर्वासां श्रुतीनां मनस्तात्पर्यं संगृह्णातीति वा सर्वासां श्रुतीनां मनोहरः उपनिषदोऽपि मूर्तिमत्यः तं सञ्जल्पमभ्यनन्दन्निति श्रीस्वामिपादाः। अन्योन्यं संजल्पः संवाद आसीत् ॥ २० ॥ स वै इति। गुणेभ्योऽग्रे गुणक्षोभात्सृष्टेः पूर्वं यः एकः अद्वितीयः पुरातनः पुरुषः अविशेषे सत्त्वादिगुणविशेषरहिते निष्प्रपञ्चे आत्मनि निजरूप एव आसीत् तथा निशि प्रलये च सुप्तशक्तिषु शक्तिषु लीनासु सतीषु तदा च जगतामात्मनि जीवे। जातावेकवचनम्। ईश्वरे निमीलितात्मनि लीनस्वरूपे सति जीवेषु ईश्वरे लीनरूपेषु सत्सु इत्यर्थः। ङ्लिलुक् छान्दसः। यः एकः अविशेषे आत्मन्येव स्थास्यति स वै स एव किलायं श्रीकृष्णः इति तर्जनीभिर्दर्शयामासुः ॥ २१ ॥

एवं सृष्टेः पूर्वं प्रलयस्यानन्तरं च निष्प्रपञ्चावस्थोक्ता तन्मध्ये सप्रपञ्चावस्थामाह—स एवेति। अनामरूपात्मनि नामरूपरहिते जीवे रूपनामनी विधित्समानो विधातुमिच्छन् देहाद्युपाधिसृष्ट्या जीवानां भोगार्थमित्यर्थः। शास्त्रकृत् कर्माणि विधातुं वेदकारकः सः अप्रच्युतस्वरूपे आत्मनि स्थित एव भूयः पुनः सृष्टिप्रवाहस्यानादित्वात् निजवीर्येण स्वशक्तिरूपेण कालेन चोदितां प्रेरितां क्षुभितगुणां स्वजीवमायां स्वांशभूतजीवमोहिनीं सिसृक्षतीं स्रष्टुमिच्छतीं विश्वसर्जनोन्मुखीं प्रकृतमनुससार तदनुकूलतया अधिष्ठितवान् ॥ २२ ॥ स वा इति। यस्य पदं स्वरूपं चरणं वा अत्र संसारे निर्जितो मातरिश्वा प्राणो यैस्ते। ह्रस्वत्वमार्षम्। यद्वा निर्जितात् मातरिश्वनः प्राणाद्धेतोरित्यर्थः। जितेन्द्रियाः सर्वेन्द्रियाणां प्राणाधीनवृत्तित्वात्प्राणजयादेव निर्जितेन्द्रिया इत्यर्थः। सूरयो विवेकिनः भक्ता उत्कलिताः उत्कण्ठिताः अमलः रागादिशून्यो य आत्मा बुद्धिस्तेन पश्यन्ति। स वै स एवायं श्रीकृष्णः बुद्धिवैमल्येऽप्ययमेव हेतुरित्याहुः। ननु हे सखि! एष एव सत्त्वमन्तःकरणं परिमाष्टुं शोधयितुमर्हतीत्यर्थः। नतु योगादयः ॥ २३ ॥ स वा इति। हे सखि! वेदेषु गुह्येषु वेदानुसारिरहस्यागमेषु च गुह्यवादिभी रहस्यनिरूपकैर्व्यासादिभिरन्वनुगीताः सत्यः यथार्थाः कथा यस्य यश्चेश एक एव सत् आत्मनः स्वस्य लीलया जगत्सृजति अवति अत्ति संहरति च परन्तु तत्र न सज्जते अहं ममेत्यभिमानं न करोति। स वै स एवायं श्रीकृष्णः ॥ २४ ॥ यदा हीति। तमोव्याप्ता धीर्येषां ते नृपाः यदा हि अधर्मेण जीवन्ति केवलं स्वप्राणान् पुष्णन्ति तत्र तदा एष हि एष एव भगवान् भवाय स्थित्यै सत्त्वतो विशुद्धेन सत्त्वगुणेन नानारूपाणि दधत् युगे युगे प्रतियुगं तत्तदवसरे भगमैश्वर्यं सत्यं सत्यप्रतिज्ञत्वम् ऋतं यथार्थोपदेशकत्वं दयां भक्तकृपां यशोऽद्भुतकर्मत्वं च धत्ते तादृशगुणपूर्णं आविर्भवति ॥ २५ ॥ अहो इति। अहो यत् यस्मादेष पुंसामृषभः पुरुषोत्तमः श्रियः प्रियः पतिः। क्वचित्पतिरित्येव पाठः। स्वजन्मना यदो कुलमञ्चति पूजयति सत्करोति। अतः तत् अलमत्यर्थं श्लाघ्यतमं तं मवर्थस्याप्यत्यन्तातिशयेऽलमिति तत्राप्याश्चर्य्ये अहो इति। यच्च अहो एष भगवान् चङ्क्रमणेन बालक्रीडार्थपरिभ्रमणेन चकाराज्जन्मना च मधोर्वनं मथुरामण्डलं सत्करोति अतस्तत् अलं पुण्यतमम् ॥ २६ ॥ अहो बतेति। अहो बत अत्याश्चर्यमेतत्। यत् कुशस्थली द्वारका स्वर्गं उत्कृष्ट इति यत् स्वः स्वर्गस्य यशस्तस्य तिरस्करी परिभवकर्त्री भुवश्च पुण्ययशस्करी धन्येयं भूमिर्यत्रेदृशी द्वारका वर्त्तत इति सत्कीर्तिकर्त्री भवति। यत् यस्मात् यत्प्रजाः यत्रत्याः सर्वाः प्रजाः स्वानुग्रहेण ईषितं प्रेषितम्। ईषेर्दीर्घोपधात् क्तः इष्यतेर्वा क्तः। यद्वा अनुग्रहार्थमिषितमिष्टम् अत्रेडार्षः। यस्मितं तत्पूर्वकोऽलोको यस्य तम्। अनुग्रहोषितमिति पाठे तु स्वानुग्रहार्थमुषितं कृतनिवासं स्वपतिं श्रीकृष्णं नित्यं पश्यन्ति स्म नैतत्स्वर्गेऽस्तीति भावः। स्म पादपूरणे न तु भूते ॥ २७ ॥ नूनमिति। हे सखि! परमप्रेमवत्यो व्रजस्त्रियः यस्मिन्नधरामृत आशयो मनो यासां तथाभूताः सत्यो व्रजाद्भगवत आगमनानन्तरं केवल संमुमुहुरेव न तत्प्रापुः। तत् कृष्णस्याधरामृतं याः स्त्रियः मुहुः पिबन्ति। नूनं निश्चितमेतम् अस्य गृहीतेत्यत्र अस्येति कर्त्तरि शेषे षष्ठी। अनेन श्रीकृष्णेन गृहीताः पाणयो यासां ताभिः स्त्रीभिः व्रतस्नानहुतादिनाऽयमेवेश्वरः समर्चित जन्मान्तरेष्वाराधितः ॥ २८ ॥

या इति द्वयम्। प्रद्युम्नश्च साम्बश्चाम्बश्च सुताः यासां रुक्मिणीजाम्बवतीनाग्नजितीनां ता आदयो यासां सत्यभामादीनां ता याः स्त्रियः वीर्यं प्रभाव एव शुल्कं विवाहे उपायनतया देयं द्रव्यं तेन स्वयंवरे शुष्मिणो बलिष्ठान् चैद्यप्रमुखान् शिशुपालप्रभृतीन् राज्ञः प्रमथ्य विनिर्जित्य हृताः तथा अपरा अन्याश्च या स्त्रियो भौमस्य नरकासुरस्य वधे जाते सति सहस्रशः एकशताधिकषोडशसहस्रसंख्याकाः आहृताः तथा आहृतिभिः पारिजातादिप्रियवस्त्वाहरणैर्हृदि स्पृशन् आनन्दयन् पुष्करलोचनः कमलनयनः

पतिः कृष्णो यासां गृहात् जातु कदाचिदपि नापैति न निर्गच्छति सदैव तत्र तिष्ठति एता एव परं केवलम् अपास्तं निर्गतं पेशलं भद्रं स्वातन्त्र्यं यस्मात् निरस्तं शौचं शुचित्वं यस्मात्तथाभूतमपि स्त्रीत्वं साधु शोभनमत्युत्कृष्टं कुर्वते कुर्वन्ति ॥ २९–३० ॥ एवमिति। गदन्तीनां जल्पन्तीनां पुरयोषितामेवंविधा गिरः उक्तीः स्मितेन निरीक्षणेनाभिनन्दन् सत्यमुक्तमिति सूचयन् स हरिः स्वपुरं ययौ ॥३१॥ अजातशत्रुरिति। तदा अजातशत्रुः युधिष्ठिरः परेभ्यो रिपुभ्यः शङ्कितः सन् मधुद्विषः श्रीकृष्णस्य गोपीथाय संरक्षणाय स्नेहात् चतुरङ्गिणीं हस्त्यश्वरथपादाताख्यचतुरङ्गयुक्तां पृतनां सेनां प्रायुङ्क्त प्रस्थापयामास ॥ ३२ ॥ अथेति। अथ शौरिः श्रीकृष्णः दूरपर्यन्तं प्रापयितुं सहागतान् विरहेणातुरान् दृढं स्निग्धान् अनुरक्तान् कौरवान् कुरुवंशजान् पाण्डवान् युधिष्ठिरादीन् सम्यक् सान्त्वनेन निवर्त्य प्रियैरुद्धवादिभिः सह स्वनगरीं द्वारकां प्रायात् प्रययौ ॥ ३३ ॥ कुरुजाङ्गलेति द्वयम्। हे भार्गव शौनक! कुरुजाङ्गलादीन् धन्वान्तान्देशान् अतिक्रम्य ततः सौवीरः सुराष्ट्रदेशः आभीरः कुन्तीपुरदेशः तयोः परान्पश्चादवस्थितान् आनर्त्तान् द्वारकाप्रदेशान् मनाक् ईषत् श्रान्ता वाहा अश्वा यस्य सः विभुः कृष्ण उपागात्। स यामुनान् यमुनातीरस्थदेशैः सहितान् शूरसेनान् मरुमल्पोदकं देशं धन्वानं निरुदकं देशं धन्वनोऽदन्तत्वमदृष्टचरं कुरुक्षेत्रं कुरुदेशान्तर्गतमेव क्रमोऽत्र न विवक्षितः ॥ ३४–३५ ॥ ननु हस्तिनापुरात् द्वारकामार्गे नैते देशाः सन्तीति कथंतदतिक्रमणं संभवतीत्याशङ्क्याह—तत्र तत्रेति। हीति हेतौ तत्रत्यैस्तत्तद्देशभवैर्भक्तैस्तत्र तत्र तत्तद्द्वारकामार्गे आगत्य स्वदेशानयनार्थं प्रत्युद्यतानि निवेदितानि अर्हणानि उपायनानि यस्मै सः हरिः तथा च तत्तद्भक्तमनोरथपूरणार्थं तत्तद्देशं गत्वैव पुनर्वर्त्मानुससारेति भावः। ततश्च सायमपराह्णे पश्चाद्दिशं द्वारकाप्रदेशं भेजे प्राप्तस्तदा च गवि किरणे तिष्ठतीति गविष्ठः सूर्यो गां गतः "अद्भ्यो वा एष प्रातरुदेत्यपः साय प्रविशति" इति श्रुतेः। पश्चिमसमुद्रजलं प्रविष्टः अस्तंगत इत्यर्थः। यद्वा तदा सायंकाले जाते रथादवतीर्य गविष्ठो भूमौ स्थितः ततो गां जलाशयं गतः पश्चाद्दिशं सन्ध्यां भेजे उपासितवान् ॥ ३६ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः प्रथमस्याध्याये दशमे व्यधात्।

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां दशमोऽध्यायः ॥ १० ॥

——:※:——

## अथैकादशोऽध्यायः

### सूत उवाच

**आनर्तान्स उपव्रज्य स्वृद्धाञ्जनपदान्स्वकान्। दध्मौ दरवरं तेषां विषादं शमयन्निव ॥ १ ॥**

अथैकादश आनर्तैः स्तुतो निर्विश्य बन्धुभिः। पुर्यां रेमे हरिस्तत्र श्लोकाः सार्द्धा नवाग्नयः ( ३९॥ ) ॥

उवाचेत्येकं सपादाः पञ्च वेदा अनुष्टुभः ॥ ११ ॥

आनर्त्तान् इति। स भगवान् स्वृद्धान् सुसमृद्धान् स्वकानानर्तान् जनपदान् देशानुपव्रज्य तेषां तत्रत्यानां जनानां विषादं स्वविश्लेषजं शमयन्निवर्त्तयन्निव इव एवार्थे। साक्षाद्दर्शनं विना सम्यग्विषादशान्त्यनुदयाद्वा। दरवरं शङ्खश्रेष्ठं पाञ्चजन्यनामकं दध्मौ वादितवान् ॥ १ ॥ स इति। तदा स दाध्मायमानः मुखवायुना अविशयेनापूर्यमाणः। ध्माधातोर्यङ्लुगन्तात्कर्मणि शानच्। यकारद्वययुक्पाठे यङन्तस्य रूपम्। दरः शङ्खः स्वतो धवलमुदरं यस्य तथाभूतोऽपि उरुक्रमस्य भगवतः क्वापि दामोदरस्येति पाठः। अधरशोणेन अधरस्थरक्तगुणेन शोणिमा रक्तगुणो यस्य तथाभूतः सन् भगवत्करकञ्जसम्पुटे चतुर्भिः करैर्धृतत्वात् इति चक्रवर्ती। अब्जखण्डे कमलसमूहे उत्स्वनः उच्चैः स्वनो यस्य सः कलहंसो यथा शोभते तथा उच्चकाशेऽतिशुशुभे ॥ २ ॥ तमिति। जगतो

यद्भयं भयाभिमानिनी देवता तस्यापि भयावहं तं निनदमुपश्रुत्य भर्त्तुः भगवतो दर्शने लालसा औत्सुक्यं यासां ताः सर्वाः प्रजाः तं प्रत्युद्ययुः प्रत्युज्जग्मुः ॥ ३ ॥ तत्रेति द्वयम्। स्वार्थं दीपमनपेक्षमाणस्यापि रवेर्दीपमुपनीय रविपूजका इव तत्र तस्मिन् श्रीकृष्ण उपनीताः समर्पिता बलय उपायनानि याभिस्ताः तथा प्रीत्या उत्फुल्लानि मुखाम्बुजानि यासां ताः आदृताः भक्तियुक्ताः प्रजाः आत्मारामं निजपरमानन्दस्वरूपलाभेनैव नित्यदा सदा। दाप्रत्यय आर्षः। पूर्णकामम् अवितारं रक्षकं सर्वेषां सुहृदं तं भगवन्तं पितरमागतमर्भका इव हर्षेण गद्गदया गिरा तं प्रोचुः। अत्र दीपमिति द्वितीयासमर्थनार्थं क्लेशः स्वीकृतः ॥ ४-५ ॥ नता इति। हे नाथ! विरिञ्चो ब्रह्मा वैरिञ्च्याः सनकादयः सुराणामिन्द्रश्च तैर्वन्दितम्। इह संसारे परं क्षेममिच्छतां परायणं परमं शरणं यत्र यस्मिन् अङ्घ्रिपङ्कजे आश्रिते सति परेषां ब्रह्मादीनामपि प्रभुर्नियन्ता कालो न प्रभवेन्न समर्थो भवेत् तत् ते तवाङ्घ्रिपङ्कजं वयं नताः स्म ॥ ६ ॥

भवायेति। हे विश्वस्य भावन पालक! त्वं नोऽस्माकं भवाय क्षेमाय भव। यस्मान्नोऽस्माकं माता सुहृत् मित्रं पतिः पिता च त्वमेवासि। त्वं सद्गुरुः परमं दैवतं चासि। यस्य तवानुवृत्त्या सेवयैव वयं कृतिनः कृतार्थाः बभूविम जाताः स्मः ॥ ७ ॥ अहो इति। भवता त्वया वयमहो सनाथाः स्म। सलोप आर्षः। यत् यतो हेतोः त्रैविष्टपानां देवानामपि दूरे दर्शनं यस्य तथाभूतं प्रेमपूर्वकं स्मितं स्निग्धे सानुरागे निरीक्षणे नेत्रे च यस्मिंस्तथाभूतमाननं यस्मिंस्तत् सर्वेष्वङ्गेषु सौभगं सौन्दर्यं यस्मिन् तत् तव रूपं पश्येम पश्यामः ॥ ८ ॥ यर्हीति। भो अम्बुजाक्ष! नो भवानिति पाठे अस्मान् त्यक्त्वेति शेषः। हे अच्युत! यर्हि भवान् सुहृदां युधिष्ठिरादीनां नन्दादीनां च दिदृक्षया कुरून् हस्तिनापुरादीन् अथवा मधून् मथुरामण्डलस्थान् व्रजादीन् अपससार अस्मान् अपहाय जगाम। तत्र तदा त्वामपश्यतां तव नस्त्वदीयानामस्माकं क्षणः अपि रविं विनाऽक्ष्णोरिव यथा रविं विनान्ध्यादक्ष्णोः क्षणोऽप्यब्दकोटितुल्यो भवति तथा अब्दकोटिप्रतिमः संवत्सरकोटितुल्योऽभवत्। अत्र मधुशब्देन तद्देशान्तर्गतो व्रजो गृह्यते नतु मथुरा तदानीं तस्यां सुहृदामभावात् "तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः" इत्यत्र सर्वशब्दात् तेन आयास्य इति दौत्यकैः "ज्ञातीन् वो द्रष्टुमेष्याम" इत्यादि भगवता व्रजं प्रत्यागमनं प्रतिश्रुतं तत्पाद्मादिपुराणेषु स्पष्टं श्रीभागवते त्वत्रैव सूचितम् ॥ ९ ॥ इति चेति। भक्तवत्सलः श्रीकृष्णः इत्येवंभूताः चकारादन्याश्च उदीरिताः कथिताः प्रजानां वाचः शृण्वानः शृण्वन्। शानजार्षः। दृष्ट्या तेष्वनुग्रहं वितन्वन् प्रकुर्वन् पुरीं द्वारकां प्राविशत्। इदं च पञ्चस्वपि श्लोकेष्वन्वेति ॥ १० ॥ पञ्चभिः पुरीं वर्णयति-- मध्विति। आत्मनः श्रीकृष्णस्य तुल्यं बलं येषां तैः मधुभोजादिभिर्यादवभेदैः नागैर्भोगवतीमिव नागानां पुरी यथा नागैः काद्रवेयादिभिः रक्षिताऽस्ति तथा गुप्ताम् ॥ ११ ॥ सर्वेति। सर्वेषु ऋतुषु सर्वे विभवाः पुष्पफलादिसंपदो येषां ते पुण्याः पुण्यजनका वृक्षाः लताश्रमा लतामण्डपाश्च येषु तैः उद्यानैः फलप्रधानैः उपवनैः पुष्पप्रधानैः आरामैः क्रीडास्थानैर्वृता ये पद्माकराः सरांसि तैः श्री शोभा यस्यां ताम् ॥ १२ ॥ गोपुरेति। गोपुरं पुरद्वारं द्वारं गृहद्वारं मार्गाः प्रसिद्धाः तेषु कृतानि कौतुकेनोत्सवेन तोरणानि यस्यां ताम्। ध्वजा महान्तः पताका ह्रस्वाः चित्राणां ध्वजपताकानामग्रैरन्तः प्रतिहतः आतपो यस्यां ताम् ॥ १३ ॥ सम्मार्जितेति। सम्मार्जितानि निःसारितरजस्कानि महामार्गाः राजमार्गाः रथ्या इतरमार्गाः आपणकाः पण्यवीथयः चत्वराणि अङ्गणानि च यस्यां ताम्। पूर्वोक्तमहामार्गादिषु गन्धजलैः सिक्तां मङ्गलार्थं फलपुष्पाक्षताङ्कुरैः उप्ताम् अवकीर्णाम् ॥ १४ ॥ द्वारीति। गृहाणां द्वारि द्वारि दध्यादिभिः जलपूर्णकुम्भैर्बलिभिः नैवेद्यद्रव्यैर्धूपदीपकैश्चालंकृताम् ॥ १५ ॥ निशम्येति सार्द्धत्रयम्। प्रेष्ठं प्रियतमं श्रीकृष्णमायान्तं निशम्य महामनाः वसुदेवः अक्रूरादयः साम्बपर्यन्ताश्च प्रहर्षवेगेनोच्छ्वसितानि उल्लङ्घितानि त्यक्तानि शयनादीनि यैः उच्छ्वसितेति "शश, प्लुतगतौ" इति धातोरिति स्वामिपादाश्चक्रवर्त्ती च। तेन वकारदन्त्यसकाररहितः पाठः प्रतीयते दृश्यते तु "श्वस प्राणने" इत्यस्यैव प्रायो लिखितपुस्तकेषु। आदृताः सादराः हृष्टाश्च प्रणयेन स्नेहेन आगतं साध्वसं सम्भ्रमो येषां तादृशास्ते मङ्गलार्थं वारणेन्द्रं हस्तिश्रेष्ठं पुरस्कृत्य पुरतः कृत्वा ससुमङ्गलैः सुमङ्गलपुष्पादियुक्तपाणिभिर्ब्राह्मणैः शङ्खादिनादेन ब्रह्मघोषेण मन्त्रपाठेन च सह रथैः प्रत्युज्जग्मुः ॥ १६-१८ ॥

वारमुख्या इति। तस्य भगवतो दर्शने उत्सुकाः शतशोऽगणिताः लसत्कुण्डलैर्निर्मितानि यानि कपोलानि तैर्वदनेषु श्रीर्यासां ताः वारमुख्या वेश्याः यानैः गन्त्र्यादिभिः प्रत्युज्जग्मुः ॥ १९ ॥ नटेति। नटा नवरसाभिनयचतुराः तालाद्यनुसारेण नृत्यन्तो नर्त्तकाः गन्धर्वा गायकाः सूताः पौराणिकाः मागधाः वंशशंसकाः वन्दिनः प्रस्तावयोग्योक्तयः ते सर्वे प्रत्युद्गम्य अद्भुतानि उत्तमश्लोकस्य भगवतः चरितानि गायन्ति च अगायंश्च ॥ २० ॥ भगवानिति। भगवांस्तत्र तत्र यथाविधि यैः सह यथोचितं तैस्तथोपसंगम्य बन्धूनां च पौराणां च अनुवर्त्तिनां सेवकानां च सर्वेषां मानं सत्कारमादधे कृतवान् ॥ २१ ॥ तदाह—प्रह्वेति। प्रभुर्भगवान् प्रह्वं प्रह्वत्वं शिरसा नतिः अभिवादनं वाचा नतिः आश्लेषः आलिङ्गनं करस्पर्शः स्मितपूर्वकमीक्षणं च तैराश्वास्य अभयं दत्त्वा आश्वपाकेभ्यः श्वपाकं चाण्डालमभिव्याप्य अभिमतैः वरैरभीष्टपदार्थदानैश्च मानं कृतवान् ॥ २२ ॥ स्वयमिति। स्वयं च सदारैरिति सर्वत्रान्वेति। गुरुभिः पित्रादिभिः विप्रैः ब्राह्मणैः स्थविरैर्वृद्धैः अन्यैश्च पौरैर्बन्दिभिश्चाशीर्भिर्युज्यमानः पुरं

द्वारकामविशत् ॥ २३ ॥ राजमार्गमिति । हे विप्राः ! द्वारकायाः राजमार्गं कृष्णे गते सति तस्येक्षणे महान् उत्सवो यासां ताः कुलस्त्रियः हर्म्याणि सौधान्यारुरुहुः ॥ २४ ॥ नित्यमिति । यत् यस्मात् द्वारका ओकः स्थानं येषां तेषां जनानां श्रियः शोभाया धाम स्थानमङ्गं यस्य तम् अच्युतं नित्य निरीक्षमाणानामपि दृशा नेत्राणि न वितृप्यन्ति । हि तस्मात्तद्दर्शनार्थं हर्म्याण्यारुरुहुः ॥ २५ ॥ न चैतदाश्चर्यमित्याह श्रिय इति । यस्य भगवतः उरः श्रियो लक्ष्म्याः निवासः अस्ति पानपात्रं सौन्दर्यामृतपूर्णं यस्य मुखं सर्वलोकानां दृशां निवसः । यद्वा मुखं सर्वप्राणिनां दृशां सौन्दर्यामृतपानाय पात्रम् । यस्य बाहवो लोकपालानां निवासः हरिबाहुबलमाश्रित्यैवासुरेभ्यो निर्भयाः लोकपाला सुखं शेरते । यस्य पदाम्बुजं सारङ्गा भ्रमरा इव परमविवेकिनो भक्तास्तेषां निवासः तं नित्यं निरीक्षमाणानामपि दृशः कुतस्तृप्येयुरित्याशयः ॥ २६ ॥

सितातपत्रेति । सितमातपत्रं छत्रं व्यजने च तैर्वनमालया च उपस्कृतो मण्डितः प्रसूनवर्षैश्चाभिवर्षितः पिशङ्गे पिते वाससी यस्य स भगवान् अर्कश्च उडुपो नक्षत्रसहितश्चन्द्रश्च चापमिन्द्रधनुश्च वैद्युतं विद्युत्तेजश्च तैर्युगपत्समुदितैर्यथा मेघः शोभते तथा पथि मार्गे बभौ शुशुभे । अर्कश्छत्रस्योपमानं नक्षत्राणि पुष्पवृष्टेः चन्द्रः परिभ्रमकृतमण्डलाकारयोश्चामरव्यजनयोः चापं वनमालायाः विद्युत्तेजः पिशङ्गवाससोः अभूतोपमेयम् । यदि घनस्योपरि सूर्यः उभयतश्चन्द्रौ सर्वतस्ताराः मध्ये चापद्वयं स्थिरं विद्युत्तेजश्च भवेत्तदा घनो यथा भायात् तथा हरिर्बभौ ॥ २७ ॥ प्रविष्ट इति । ततस्तु पित्रोर्देवकीवसुदेवयोर्गृहं प्रविष्टो भगवान् स्वमातृभिर्देवकीरोहिण्यादिभिः परिष्वक्त आलिङ्गितः सन् देवकीप्रमुखाः सप्त मातॄर्मुदा हर्षेण शिरसा ववन्दे । सप्तेति तु मातृसोदर्यादादरविशेषार्थः । अष्टादशापि मातरो नमस्कृता एव ॥ २८ ॥ ता इति । स्नेहेन स्नुतौ पयोधरौ यासां ता हर्षेण विह्वलित आत्मा यासां ता देवक्यादयः पुत्रं श्रीकृष्णमङ्कमारोप्य नेत्रजैर्जलैरानन्दबाष्पैः सिसिचुः ॥ २९ ॥ अथेति । अथानन्तरं सर्वे कामाः काम्यमाना भोगा यस्मिंस्तत् यत्र भवने षोडशसहस्राणि चकारादष्टोत्तरशताधिकानि पत्नीनां प्रासादाः सन्ति अत एवानुत्तमं नास्त्यन्यदुत्तमं यस्मात्तथाभूतं स्वभवनम् अविशत् ॥ ३० ॥ पत्न्य इति । प्रोष्य देशान्तर उषित्वा गृहानुपागतं पतिमारात् दूरादेव विलोक्य सञ्जातो मनसि महानुत्सवो हर्षो यासां ताः व्रीडितानि लोचनानि आननानि च यासां ताः अपाङ्गैरेव वीक्षणात् व्रीडितलोचनाः अवनतमुखत्वाद्व्रीडिताननाः पत्न्यो रुक्मिण्यादयः व्रतैः प्रोषितभर्तृकानुष्ठेयैः साकमेव आसनादाशयाच्च सहसा झटित्येवोत्तस्थुः । व्रतानि च 'क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ।' एतानि व्रतान्यपि त्याज्यत्वादुत्तस्थुरिवेति सहोक्तिः । आदौ देहेन परिरब्धुम् आसनादुत्तस्थुः ततो लज्जाकृतं विघ्नमालक्ष्य लज्जोत्पत्तिस्थानमन्तःकरणं परित्यज्य आत्मनैव परिरेभिरे आशयत्यागाच्च परमानन्दमूर्च्छिता बभूवुरिति तत्त्वम् । श्रीकृष्णेनात्मनः संश्लेषेऽन्तःकरणस्यापि व्यवधानं नासहन्तेति चाशयः । युगपदेव पत्नीसमसंख्यैः प्रकाशैः सर्वासां पत्नीनां गृहेषु प्रविष्ट इति द्योतितम् ॥ ३१ ॥ तमिति । हे भृगुवर्य शौनक ! दुरन्तः अनन्तो भावः स्नेहो यासां तास्तथा तमायान्तं पतिं दर्शनात्पूर्वमन्तरात्मना मनसा तदनन्तरं दृष्टिभिस्ततः समीपमागतमात्मजैः पुत्रद्वारा च परिरेभिरे आलिङ्गितवत्यः । यद्वा आत्मजैः दर्शनेनोद्दीपितैर्मदनैर्हेतुभिः प्रथमं दृष्टिभिस्ततः अनन्तैरन्तःशरीरैः तत आत्मना बाह्यशरीरेणेति तदा च विलज्जतीनां शतार्षः । तासामपशकुनभिया नेत्रयोर्निरुद्धमप्यम्बु बाष्पं वैक्लवाद् वैवश्यादास्रवत् ईषत् सुस्राव ॥ ३२ ॥ यद्यपीति । यद्यप्यसौ श्रीकृष्णः पार्श्वगतः समीपस्थः तत्रापि रहोगतः तथापि तस्याङ्घ्रियुगं पदे पदे प्रतिक्षणं नवमेव भवति । अतस्तस्य पदाच्चरणारविन्दात्का विरमेत विश्लिष्यावस्थातुमुत्सहेत । परस्मैपदाभाव आर्षः । यच्चरणकमलं चञ्चलस्वभावापि श्रीर्लक्ष्मीः कर्हिचिदपि न जहाति ॥ ३३ ॥

एवमिति । क्षितेर्भाराय जन्म येषां तेषाम् अक्षौहिणीभिः कृत्वा परिवृत्तं सर्वतः प्रसूतं तेजः प्रभावो येषां तेषां नृपाणामेवं मिथो वैरं विधाय श्वसनो वायुर्यथा वेणूनामन्योन्यसंघर्षेणानलं संविधाय मिथस्तद्दाहेन स्वयं निवृत्तव्यापारो भवति तथा निरायुधस्त्यक्तायुधः सन् स्वयं तेषां वधेन पञ्चम्यर्थे तृतीया । वधादुपरतो निवृत्तो जातः ॥ ३४ ॥ स एष इति । स एष भगवान् स्वमायया अस्मिन्नरलोकेऽवतीर्णः सन् स्त्रिय एव रत्नानि तेषां कूटे समुदाये स्थितो यथा प्राकृतः स्त्रीवश्यस्तथा रेमे ॥ ३५ ॥ उद्दामेति । यासामुद्दामो गम्भीरो यो भावोऽभिप्रायः प्रेमा वा तस्य पिशुनः सूचकः अमलः निष्कपटः वल्गुः मनोहरो हासो व्रीडापूर्वकावलोकश्च ताभ्यां निहतः अमदनः शिवोऽपि सम्मुह्य लज्जया चापमजहात् । स्त्रीणां प्रभावमात्रे तात्पर्यं न शिवधनुस्त्यागे । यद्वा भगवतो मोहिनीरूपेण महेशोऽपि मोहितः । यद्वा निहतः विस्मितो मदनः जगद्विमोहनार्थं प्रवृत्तः कामः संमुह्य मत्कर्त्तव्यमेताः स्वयम् एव करिष्यन्तीति संभाव्य स्वचापमजहात् तत्याज ता एवंप्रभावाः प्रमदोत्तमाः यस्य भगवतः श्रीकृष्णस्येन्द्रियं मनः कुहकैः पुरुषवञ्चनोपायैः सहासकटाक्षादिभिर्विमथितुं क्षोभयितुं न शेकुः समर्था न जाताः ॥ ३६ ॥ तमयमिति । तं श्रीकृष्णं व्यापृण्वानं मनुष्यचेष्टां प्रकुर्वन्तम् । शानजार्षः चानशा वा । "पृ प्रीतौ" स्वादिः । धातूनामनेकार्थता । पृङो वा रूपं तत्र श्नुरार्षः । वस्तुतोऽसङ्गं स्त्रीपुत्रादिविषयेष्वनासक्तमप्ययं प्राकृतो लोकः आत्मौपम्येन स्वदृष्टान्तेन सङ्गिनं

स्त्र्यादिविषयेष्वासक्तं मनुजं मन्यते यतोऽबुधः तत्त्वानभिज्ञः ॥ ३७ ॥ एतदिति । ईशस्य ईशनमीश्वरत्वं नामैतदेव यत् यथा आत्मस्थैः आनन्दादिभिः तदाश्रया आत्माश्रया बुद्धिर्न युज्यते तथा प्रकृतिस्थोऽपि ईशः तस्याः प्रकृतेर्गुणैः रागलोभमोहादिभिः सुखदुःखादिभिश्च सदैव कदाचिदपि नैव युज्यते वैधर्म्ये वा दृष्टान्तः । आत्मस्थैः सत्ताप्रकाशादिभिर्यथा बुद्धिर्युज्यते यद्वा असदात्मा देहः तत्रस्थैर्गुणैस्तदाश्रया बुद्धिस्तदुपाधिर्जीवो यथा युज्यते एवं प्रकृतिस्थोऽपि न युज्यते ॥ ३८ ॥ तमिति । यथा मतयः शास्त्रिणां बुद्धिवृत्तयः ईश्वरं यथा जगदुपादानं निमित्तमात्रं सगुणं निर्गुणं कर्त्तारमकर्त्तारं च यथारुचि मन्यन्ते । यद्वा ईश्वरं क्षेत्रज्ञं मतयः अहंवृत्तयः स्वाधीनस्वधर्मयोगिनं मन्यन्ते तथा भर्तुः श्रीकृष्णस्य अप्रमाणविदः तत्त्वानभिज्ञाः मूढाः अबलाः तत्पत्न्यः तं श्रीकृष्णं स्त्रैणं स्त्रीष्वासक्तं रहः एकान्ते अनुव्रतं स्ववशवर्तिनं च मेनिरे ॥ ३९ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायः प्रथमस्कन्धस्यैकादशे व्यधात् ।

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायामेकादशोऽध्यायः ॥ ११ ॥

—:❀:—

## अथ द्वादशोऽध्यायः

### शौनक उवाच

अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा । उत्तराया हतो गर्भ ईशेनाजीवितः पुनः ॥ १ ॥

द्वादशे त्वौत्तरेयस्य जन्म तस्य फलं द्विजैः । वर्णितं भूपाय तस्य श्लोकाः सार्द्धाः कृतागमः ।

अनुष्टुभोपि तावत्य उवाचेति चतुष्टयम् ॥ १२ ॥

परीक्षितोथ राजर्षेरित्यादिना सूतेन प्रतिज्ञातमपि परीक्षिज्जन्मकथनं कथान्तरव्यवधानाच्छौनकः स्मारयति—अश्वत्थाम्ना उपसृष्टेन निक्षिप्तेन उरुतेजसा महाप्रभावेण ब्रह्मशीर्ष्णाऽस्त्रेण उत्तराया गर्भो हतः पुनरीशेन श्रीकृष्णेन आजीवित इति त्वत्तः श्रुतम् ॥ १ ॥ यस्येति द्वयम् । यस्य यस्मै परीक्षिते । शेषे षष्ठी । श्रीशुकः ज्ञानमदात् इति चरितश्रवणेच्छायां हेतुः । महाबुद्धेः महात्मनः मनस्विनः तस्य परीक्षितः जन्म यथाऽऽसीत् कर्माणि च यथाऽऽसन् निधनं मरणं च यथैवासीत् स प्रेत्य देहं त्यक्त्वा यथा गतवान् यां गतिं प्राप्तवांस्तदिदं सर्वं श्रोतुमिच्छामि । अतः गदितुं कथयितुं यदि त्वं मन्यसे तर्हि श्रद्दधानान्नोऽस्माकं ब्रूहि । महात्मन इत्यत्र गृणीहि न इति पाठे भिन्नान्वयता ॥ २--३ ॥ तादृशभगवद्भक्तपौत्रप्राप्तौ राज्ञः कृष्णसेवैव कारणमाह—अपीपलदिति । कृष्णपादाब्जसेवया हेतुना सर्वकामेभ्यो निस्पृहः धर्मराजः युधिष्ठिरः प्रजाः रञ्जयन् पितृवदपीपलत्पालयामास ॥ ४ ॥ सम्पद इति द्वयम् । हे विप्राः ! हे द्विजाः ! प्रशंसार्थं द्विरुक्तिः । यद्वा सम्पदादिषु धर्मोपदेशका विप्राः धौम्यादयः सम्पदः क्रतवः तदुपार्जिताः लोकाः स्वर्गादयः प्रजा वा महिषी द्रौपदी भ्रातरो भीमाद्याः शूराः मही निष्कण्टका पृथ्वी जम्बूद्वीपस्याधिपत्यं त्रिदिवपर्यन्तं गतं व्याप्तं यशश्च स्पृहा एव स्पार्हं स्पृहाणां समूहो वा स्पार्हम् । स्वार्थे समूहेवाऽण् । सुराणामपि स्पार्हं येषु ते सुरस्पार्हाः ते संपदाद्याः पूर्वश्लोकोक्ताः कामा विषया मुकुन्दे श्रीकृष्ण एव मनो यस्य तस्य राज्ञो युधिष्ठिरस्य क्षुधितस्य अन्नेकमनसो यथा तदितरे स्रक्चन्दनादयो मुदं नैव कुर्वन्ति तथा किं मुदं प्रीतिमधिजह्रुः कृतवन्त न कृतवन्त इत्यर्थः ॥ ५--६ ॥ मातुरिति सार्द्धचतुष्कम् । हे भृगुनन्दन शौनक ! यदा स वीरः अस्त्रतेजोमयरहितः परीक्षित् मातुर्गर्भगतस्तदा ब्रह्मास्त्रतेजसा दह्यमानः सन् अङ्गुष्ठमात्रपरिमाणम् आत्मनः सर्वतो दिशम् गर्भेऽङ्गुष्ठमात्रस्यैवावकाशात् तथोक्तिः । वस्तुतः तावत्यपि देशे भगवानचिन्त्यशक्तिः पूर्णपुरुषरूपेणैवादृश्यत अन्यथा "गर्भेदृष्टमनुध्यायन् परीक्षेत नरेष्विह"

इत्युपरिष्टादुक्तेर्नरलोके परीक्षणानुपपत्तेः। अमलं स्फुरन् यः पुरटस्य सुवर्णस्य मौलिः किरीटं सोऽस्यास्तीति तथा तम्। व्रीह्यादित्वकल्पनादिनिः। अपीच्यमतिसुन्दरं दर्शनं रूपं यस्य श्यामं तडिदिव वाससी यस्य तम्। अत्र विशेषणद्वयेन विद्युद्युक्तमेघोपमा सूचिता। अच्युतं श्रीमन्तः दीर्घाश्चत्वारो बाहवो यस्य तं तप्तं तापेन निर्मलीकृतं यत्काञ्चनं तन्मये कुण्डले यस्य तं क्षतजवद्रक्तोपान्ते अक्षिणी यस्य तम्। अहो मद्भक्तस्याप्यस्त्रपीडेति क्रोधादिति भावः। गदापाणिम् आत्मनः स्वस्य रक्षार्थं सर्वतोदिशं परिभ्रमन्तम् उल्काभां गदां मुहुर्भ्रामयंतं भ्रमित्वेऽपि ह्रस्वाभाव आर्षः। गोपतः नीहारमिव यथा गोपतिः सूर्यो नीहारं हिमं नाशयति तथा स्वगदया ब्रह्मास्त्रतेजो विधमन्तं नाशयन्तम् एवंभूतं कंचिदलौकिकं पुरुषं सन्निकर्षे ददर्श। दृष्ट्वा चासौ क इति पर्यैक्षत पर्यालोचितवान् ॥ ७-१० ॥

विधूयेति। अमेयात्मा अचिन्त्यरूपः भक्तवात्सल्यरूपस्वधर्मस्य गुप् रक्षकः विभुर्व्यापको भगवान् हरिः तद्ब्रह्मास्त्रतेजो विधूय निरस्य दशमासपरिच्छेदस्य तस्य बालस्य मिषतः पश्यत एव यत्र दृष्टस्तत्रैवान्तर्दधे न त्वन्यत्र गतः विभुत्वात्॥ ११॥ तत इति। ततः सर्वे गुणा एवोदर्का उत्तरफलानि यत्र तस्मिन् अनुकूलैरन्यैर्ग्रहैः सहिते उदये लग्ने ओजसा सामर्थ्येन भूयो जातः पाण्डुरिव पाण्डोर्वंशधरः वंशप्रवर्तकः परिक्षिज्जज्ञे जातः॥ १२॥ तस्येति। प्रीतमना राजा युधिष्ठिरः धौम्यकृपादिभिर्विप्रैः मङ्गलं पुण्याहं वाचयित्वा तस्य बालस्य जातकं जातकर्म कारयामास॥ १३॥ हिरण्यमिति। प्रजातीर्थे पुत्रोत्पत्तियुक्ते पुण्यकाले "पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्।" इति स्मृतेः। नालच्छेदात्पूर्वं तीर्थविन् दानकालज्ञः नृपतिः हिरण्यं गां महीं ग्रामान् वरान् श्रेष्ठान् हस्त्यश्वान् यद्वा वरान् अन्यांश्चाभिलषितपदार्थान् स्वन्नं श्रेष्ठमन्नं च विप्रेभ्यः प्रादात्॥१४॥ तमूचुरिति अर्द्धम्। हिरण्यादिभिस्तुष्टा ब्राह्मणास्तं प्रश्रयेण विनयेन आनतं नम्रम् अन्वितमिति वा पाठः राजानमूचुः॥ १५॥ एष इति सार्द्धद्वयम्। हे पौरवर्षभ पुरूणां पुरुवंश्यानामस्मिन् शुक्ले शुद्धे प्रजातन्तौ संतानेऽप्रतिघातेन प्रतिहतिरहितेन दैवेन दुरदृष्टेन संस्थामुपेयुषि नाशं प्राप्ते सति हि यस्मात् वो युष्माकमनुग्रहार्थाय प्रभविष्णुना सर्वशक्तिसम्पन्नेन विष्णुना एष शिशू रातो दत्तस्तन्नाम्ना वाचकेन शब्देन विष्णुरात इति लोके प्रसिद्धो भविष्यति तथा बृहच्छ्रवाः विपुलकीर्तिः गुणैर्महान् महाभागवतः परमवैष्णवश्च भविष्यति अत्र संदेहो नास्ति ॥ १६-१७॥ अपीति। अपिस्विदिति प्रश्ने हे सत्तमाः! एषः शिशुः साधुर्वादो गुणकीर्तनं यस्मिंस्तेन यशसा महात्मनः सज्जनान् पुण्यश्लोकान् पवित्रयशसो वंश्यान् राजर्षीन् किमनुवर्त्तिता अनुवर्त्तिष्यते न वा इति ॥ १८॥ पार्थेति। हे पार्थ! साक्षात् मानवः मनोः पुत्र इक्ष्वाकुरिव प्रजानामविता रक्षको भविष्यति। ब्रह्मण्यः सत्यसन्धः सत्यप्रतिज्ञश्च यथा दाशरथिः श्रीरामस्तथा भविष्यति॥ १९॥ एष इति। एष दाता शरणं रक्षणमर्हतीति शरण्यश्च यथा हि औशीनरः उशीनरदेशाधिपतिः शिबिस्तथा भविष्यति। तेन हि स्वमांसं श्येनाय दत्त्वा शरणागतः कपोतो रक्षितः। स्वानां यज्वनां यष्टॄणां च यशो वितनिता यशसो विस्तारयिता दौष्यन्तिः दुष्यन्तपुत्रो भरत इव भविष्यति॥२०॥ धन्विनामिति। एष द्वयोः कार्त्तवीर्यपार्थयोरर्जुनयोस्ताभ्यां तुल्यो धन्विनामग्रणीः हुताश इव दुर्धर्षः अभिभवितुमशक्यः समुद्र इव दुस्तरोऽनुल्लंघितशासनो भविष्यति इति सर्वत्रान्वितम्॥ २१॥ मृगेन्द्र इति। असौ शिशुः मृगेन्द्र इव विक्रान्तः पराक्रमी हिमवानिव निषेव्यो देवादीनामप्युपजीव्यः वसुधा भूमिरिव अनन्यगतिकत्वेन तितिक्षुः अपराधसहनः पितरौ मातापितराविव प्रीत्या सहिष्णुः दुर्वाक्यादिसहनोऽपि भविष्यति नापि तत्प्रतिकर्त्ता॥ २२॥

पितामहेति। साम्ये सर्वभूतसमत्वे पितामहेन ब्रह्मणा युधिष्ठिरेण वा समः प्रसादेऽनुग्रहे गिरिशोपमः रमाश्रयः श्रीनिवासो देवो विष्णुः पालकत्वाद्यथा सर्वभूतानामाश्रयः आश्रयितुं योग्यस्तथाऽयमपि सर्वभूतानामाश्रयो भविष्यति॥ २३॥ सर्वसद्गुणेति। सर्वैः सद्गुणैः यन्माहात्म्यं तस्मिन् एषः कृष्णम् अनुव्रतः कृष्णतुल्य रन्तिदेव इवोदारः परोपकारैकजीवनः ययातिरिव धार्मिकः भविष्यति॥२४॥ धृत्येति। धृत्या धैर्येण बलिना विरोचनसुतेन समः प्रह्लाद इव कृष्णे सन् ग्रह अभिनिवेशो यस्य तथाभूतश्च एषोऽश्वमेधानामाहर्ताऽनुष्ठाता च ज्ञानवृद्धानां पर्युपासकः सेवकश्च भविष्यति॥ २५॥ राजर्षीणामिति। राजर्षीणां जनमेजयादीनां जनयिता च उत्पथगामिनां शास्ता शासिता दण्डयिता भुव पृथ्व्याः धर्मस्य च कारणान्निमित्तादेष कलेर्निग्रहीता च भविष्यति॥ २६॥ तक्षकादिति। द्विजपुत्रेणोपसर्जिताच्छापद्वारा नियोजितात्तक्षकादात्मनः स्वस्य मृत्युमुपश्रुत्य मुक्तो देहतदनुबन्धिषु संगो येन तथाभूतो हरेः पदं प्रपत्स्यते॥ २७॥ जिज्ञासितेति। हे नृप! मुनेः व्याससुतात् श्रीशुकात् जिज्ञासितं विचारितं निर्णितं च्चात्मनो याथात्म्यं स्वरूपं येन तथाभूतः सन्नसौ इदं शरीरं गङ्गायां हित्वा त्यक्त्वा अद्धा साक्षात् दिव्यस्वरूपेण नास्ति कुतोऽपि भयं यस्य तं भगवन्तं यास्यति॥ २८॥ इतीति। लब्धा उपचितिः पूजा यैस्ते जातके ज्योतिःशास्त्रे कोविदा निपुणाः सर्वे विप्रा इत्येवं राज्ञे युधिष्ठिराय उपदिश्य स्वकान् गृहान् प्रतिं जग्मु॥ २९॥ स एष इति। विष्णुरातनाम्ना कथितः प्रभू राजा यत् यस्मात् पूर्वदृष्टं गर्भेऽनुभूतं पुरुषमनुध्यायन्निह लोके नरेषु सोऽयं भवेन्नो वेति परीक्षेत परीक्षितवान् तस्मात् परीक्षिदिति नामान्तरेणापि लोके विख्यातो जातः। गर्भेदृष्टमित्यपि पाठः॥ ३०॥ स इति। स पूर्वोक्तो राजपुत्रः पितृभि-

युधिष्ठिरादिभिर्भोगैश्चतुष्षष्टिकलाभिश्चापूर्यमाणोऽन्वहं प्रतिदिनम् उडुप इव यथा उडुपश्चन्द्रः शुक्ले शुक्लपक्षे काष्ठाभिः कलाभिरापूर्यमाणः अन्वहं वर्धते तथा आशु शीघ्रं ववृधे ॥ ३१ ॥ यक्ष्यमाण इति। ज्ञातिद्रोहस्य ज्ञातिवधपापस्य जिहासया जिहीर्षया अश्वमेधेन यज्ञेन यक्ष्यमाणः यष्टुमिच्छन् करो राजभागः दण्डश्च तयोरन्यत्र विषये न लब्धं धनं येन तादृशो राजा युधिष्ठिरो धनार्थं दध्यौ चिन्तयामास। करदण्डलब्धधनस्य प्रजापरिजनपालनउपक्षीणत्वात् ॥ ३२ ॥ तदभिप्रेतमिति। तस्य युधिष्ठिरस्याभिप्रेतं यज्ञानुष्ठानार्थं धनार्जनसंकल्पमालक्ष्य ज्ञात्वा अच्युतेन चोदिता भ्रातरो भीमादयः उदीच्यां दिशि भूरिशः प्रहीणं मरुत्तस्य राज्ञो यज्ञे दक्षिणादिभिः परिपूर्णैर्विप्रैर्भोजनं कृत्वा परित्यक्तं धनं सुवर्णपात्रादिकमाजह्रुरानीतवन्तः। श्रीकृष्णस्य प्रेरणं च मरुत्तस्य राज्ञः कीर्तये युधिष्ठिरस्याभिमानानुदयाय च ॥ ३३ ॥ तेनेति। तेनानीतेन धनेन संभृताः संगृहीताः संभाराः यज्ञसाधनानि येन स ज्ञातिद्रोहपापात् भीतः धर्मपुत्रो युधिष्ठिरः त्रिभिः वाजिमेधैर्यज्ञैः हरिं समयजत् पूजितवान्। पूर्वं याजयित्वाऽश्वमेधैस्तमित्यादिना प्रोक्तं तदेवेदं यज्ञत्रयम्। अतः परम् "आहूतो भगवान् राज्ञा याजयित्वा द्विजैर्नृपम्। उवास कतिचिन्मासान् सुहृदां प्रियकाम्यया। ततो राज्ञाऽभ्यनुज्ञातः कृष्णया सह बन्धुभिः। ययौ द्वारवतीं ब्रह्मन्सार्जुनो यदुभिर्वृतः।" इति श्लोकद्वयं क्वापि पुस्तक उपलभ्यते तत्प्रक्षिप्तम् ॥ ३४ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः प्रथमस्कन्धस्य द्वादशे व्यधात्।

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां द्वादशोऽध्यायः ॥ १२ ॥

—:❀:—

## अथ त्रयोदशोऽध्यायः

सूत उवाच

विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम्। ज्ञात्वाऽगाद्धास्तिनपुरं तयाऽवाप्तविवित्सितः ॥ १ ॥

त्रयोदशे धृतराष्ट्रे गतेऽशोचद्युधिष्ठिरः। नारदोऽसान्त्वयत्तत्र श्लोकानां षष्टिरर्धयुक्।

अनुष्टुभां त्वेकषष्टिः सार्द्धार्थोवाचपञ्चकम् ॥ १३ ॥

विदुर इति। क एनमत्रेत्यादितृतीयस्कन्धोक्तया वाचा दुर्योधनेन तिरस्कृतो विदुरस्तीर्थयात्रार्थं निर्गतस्तत्र मैत्रेयादृषेरात्मनो गतिं तत्त्वं ज्ञात्वा तया गत्या तत्त्वज्ञानेन अवाप्तं लब्धं विवित्सितं लब्धुमिष्टं येन स 'विद्लृ, लाभे' तादृशः सन् पुनर्हास्तिनपुरं प्रत्यगात् ॥ १ ॥ यावत इति। कुषारोः पुत्रः कौषारवो मैत्रेयस्तस्याग्रतः क्षत्ता विदुरो यावतः कर्मयोगज्ञानादिविषयान् प्रश्नान्कृतवांस्तेषु कतिपयप्रश्नानामुत्तरैरेव गोविन्दे जाता एका अव्यभिचारिणी भक्तिर्यस्य तथाभूतः सन्तेभ्योऽवशिष्टप्रश्नेभ्यः उपरराम। अवशिष्टप्रश्नानामुत्तराणि श्रोतुं नैच्छत्। भक्तिरूपोपायलाभे उपायस्याकिंचित्करत्वात् ॥ २ ॥ तं बन्धुमिति सार्द्धद्वयम्। हे ब्रह्मन्! तमागतं बन्धुं विदुरं दृष्ट्वा सहानुजः भीमार्जुनादिभिः सहितो धर्मपुत्रो युधिष्ठिरः धृतराष्ट्रादयश्च तत्र युयुत्सुर्धृतराष्ट्राद्वैश्यायां जातः सूतः सञ्जयः शारद्वतः कृपः कृपी द्रोणभार्या पाण्डोर्जामयः ज्ञातिभार्या जामिशब्दश्च वर्गादिरन्तस्थादिश्च कोशेषु प्रसिद्धः। ससुता ज्ञातयः पुरुषाः अन्याश्च स्त्रियः प्राणमागतं तन्व इव यथा मूर्च्छादिना प्राणे सन्ने करादयो निश्चेष्टा भवन्ति आविर्भूते च चेष्टन्ते तद्वत् प्रहर्षेण अत्युज्जग्मुः अभिमुखं ययुः ॥ ३-४ ॥ अभिसंगम्येति। परिष्वङ्गाभिवादनैर्विधिवत् यथोचितं तमभिसंगम्य मिलित्वा विरहप्रयुक्तौत्कण्ठ्येन कातरा विवशाः प्रेम्णा बाष्पौघमानन्दाश्रुप्रवाहं मुमुचुः ॥ ५ ॥

राजेत्यर्द्धम्। कृतः आसनस्य परिग्रहः स्वीकारो येन तं विदुरं राजा युधिष्ठिरोऽर्हयाचक्रे॥ ६॥ तमिति। भुक्तवन्तं विश्रान्तं गतमार्गश्रममासने सुखमासीनं तं विदुरं तेषां स्वकीयां शृण्वतां सतां प्रश्रयेणावनतः सन् राजा प्राह स्म॥ ७॥ अपीति। पक्षिणां यथापत्यान्यतिस्नेहेन पक्षच्छायायां वर्द्धन्ते तद्वत् युष्माकं पक्षपातच्छायया समेधितान्नोऽस्मान् अपि किं स्मरथ। यद्यस्मात् विषाग्न्यादेर्विपद्गणात्समातृकाः वयं युष्माभिर्मोचिताः स्मः॥ ८॥ कयेति। क्षितिमण्डलं चरद्भिर्वो युष्माभिः कया वृत्त्या जीविकया वर्त्तितं देहनिर्वाहः कृतः। इह भूतले कानि तीर्थानि क्षेत्रमुख्यानि च युष्माभिः सेवितानि। व इति युष्माभिरित्यर्थेऽव्ययम्॥ ९॥ भवद्विधा इति। हे विभो! भवद्विधा भागवताः स्वयमेव तीर्थीभूताः ते च स्वान्तः मनसि स्थितेन गदाभृता हरिणा हेतुना पापिजनसंसर्गेण पापवन्ति तीर्थान्यपि तीर्थीकुर्वन्ति स्वसङ्गादेव पुनः पापहरणसमर्थानि कुर्वन्ति॥ १०॥ अपि इति। अपीति प्रश्ने। हे तात! नोऽस्माकं सुहृदो हितचिन्तकाः बान्धवाः कृष्ण एव देवता येषां ते यदवः दृष्टाः अथवा स्वपुर्यां द्वारकायां सुखमासत इति श्रुताः किम्!॥ ११॥ इत्युक्त इति। इत्येवं धर्मराजेनोक्तो विदुरो यदुकुलक्षयं विनान्यद्यथानुभूतं दृष्टं श्रुतं च तत्सर्वं क्रमशः समवर्णयत्॥ १२॥ यदुकुलनाशाकथने हेतुमाह नन्विति। ननु निश्चये। नृणां स्वयं प्रारब्धवशादुपस्थितं दुर्विषहं सोढुमशक्यमप्रियं स्वयं दुःखितान् द्रष्टुमक्षमः सकरुणः दयावान् न आवेदयेत्॥ १३॥ कंचिदिति। अथानन्तरं स्वकैर्देववदीश्वरवत्सत्कृतो बहुमतः सर्वेषां युधिष्ठिरादीनां प्रीतिमावहन् ज्येष्ठस्य भ्रातुर्धृतराष्ट्रस्य श्रेयस्कृत् ज्ञानवैराग्योपदेशेन श्रेयस्कर्तुं कंचित्कालं तत्रैवावात्सीत्। देववत्सुखमित्यपि पाठः॥ १४॥ न च कनिष्ठोऽयं कथमुपदिदेशेति शङ्क्यम्। अस्य यमावतारत्वादित्याह अबिभ्रदिति। शापान्माण्डव्यस्यर्षेः शापाद्धेतोर्यमो यावद्वर्षशतपर्यन्तं शूद्रत्वं विदुररूपं दधार तावदघकारिषु पापिष्वर्यमा पितृराजो यथावद्यथोचितं दण्डमबिभ्रन् कारयामास। अबिभरिति वाच्ये अबिभ्रदित्यार्षः। अत्रेयमाख्यायिका। कश्चिच्चौरानुधावन्तो राजभटा माण्डव्यस्य तपश्चरतः समीपे तान्संप्राप्य तेन सह निबध्याऽऽनीय राज्ञे निवेद्य तदाज्ञया सर्वानेव शूलमारोपयामासुः। ततो राजा तमृषिं ज्ञात्वा शूलादवतार्य प्रसादयामास। ततो मुनिर्यमं प्रति गत्वा कुपित उवाच—कस्मादहं शूलमारोपित इति तेनोक्तं त्वं बाल्ये कुशाग्रेण शलभमाविध्य क्रीडितवानिति। तच्छ्रुत्वा माण्डव्यस्तं शशाप। बाल्येऽजानतो मे यतो महान्तं दण्डं कारितवानतस्त्वं शूद्रो भवेति॥ १५॥

युधिष्ठिर इति। लब्धं राज्यं येन स युधिष्ठिरः कुलंधरं कुलनिर्वाहकम्। असंज्ञायां खजार्षः। पौत्रं परीक्षितं दृष्ट्वा इन्द्रादिलोकपालाभैस्तत्सदृशैर्भ्रातृभिः परया श्रिया च मुमुदे॥ १६॥ एवमिति। एवमुक्तप्रकारेण गृहेषु सक्तानां तदीहया गृहचेष्टया प्रमत्तानां विस्मृतकर्त्तव्यानां परमदुस्तरः कालः अविज्ञात एवात्यक्रामत् अतिक्रान्तवान्। गृहेषु सक्तानामित्यादिः युधिष्ठिरादिभ्योऽन्येषामेव निन्दा तेषां तु किं ते कामा इत्यादिना अनासक्तेरुक्तत्वात्॥ १७॥ विदुर इति। तत् तं कालातिक्रममभिप्रेत्य ज्ञात्वा विदुरो धृतराष्ट्रमभाषत। हे राजन्! इतः शीघ्रं त्वया निर्गम्यताम्। आगतमुपस्थितमिदं भयं पश्य आलोचय॥ १८॥ प्रतिक्रियेति। हे प्रभो! इति इह संसारे कुतश्चित् ब्रह्मादिभ्योऽपि कर्हिचिदपि यस्य प्रतिक्रिया निरासो नास्ति स एष भगवान् समर्थः कालः विनाशकालो नोऽस्माकं सर्वेषां यैः प्रतिक्रिया कार्या तेषामपि समागतः॥ १९॥ येनेति। येन कालेनाभिपन्नो ग्रस्तोऽयं दृश्यमानो जनः प्रियतमैरपि प्राणैः सद्यो वियुज्येत। अन्यैः प्राणानुबन्धिभिर्धनादिभिर्वियुज्येतेति किमुत वक्तव्यम्॥ २०॥ पितृभ्रात्रिति। तव पितृभ्रातृसुहृत्पुत्राः हताः वयो यौवनं च विगतमात्मा देहश्च जरया ग्रस्तः यद्यप्येवं तथापि परेषां शत्रूणामिव गेहं जीवनार्थमुपाससे। शब्लुगभाव आर्षः॥ २१॥ अहो इति। जन्तोर्जीवस्य जीविताशा अहो महीयसी अतिशयेन महती यया जीविताशया भवान् भीमेन पुत्रशत्रुणाऽऽवर्जितं परिभूय दत्तं पिण्डं कवलं गृहपालः श्वा तद्वत् आदत्ते स्वीकरोति अत्ति॥ २२॥ अग्निरिति। येषां भीमादीनां प्रदहनार्थं लाक्षागृहे अग्निर्निसृष्टः येषां गरो विषं दत्तः येषां दाराः पत्नी द्रौपदी दूषिता कचग्रहणादिभिरवमता येषां धनं क्षेत्रं भूमी राज्यं च हृतं त्वयेति शेषः। तैर्भीमादिभिर्दत्तैरन्नादिभिः संरक्षितैरसुभिः प्राणैर्जीवनेन कियत् किं फलं न किंचित्॥ २३॥ तस्यापीति। तस्यैवं दैन्यमनुभवतः कृपणस्य देहासक्तस्य अत एव जिजीविषोः देहत्यागमनिच्छतोऽपि तवायं देहो जरया जीर्णः सन् वाससी इव अन्तरीयोत्तरीयवस्त्रे इव परैति क्षीयते। वाससी इति द्विवचनोपमया उपमेयेऽपि स्थूलसूक्ष्मभेदेन देहद्वैविध्यं पलितादि बाधिर्यादि च जीर्णत्वलक्षणं ज्ञेयम्॥ २४॥ गतस्वार्थमिति। गतः स्वार्थः धर्मादिर्यस्मात्तमिमं मनुष्यदेहं सर्वतो विरक्तः अत एव मुक्तबन्धनः त्यक्ताभिमानः क गत इत्यविज्ञाता गतिर्यस्य तथाभूतश्च सन् यो जह्यात् त्यजेत्स वै स एव धीर इत्युदाहृतः॥ २५॥

प्रागेव कृतप्रयत्नस्तु नरोत्तम इत्याह—य इति। यस्तु वार्द्धकात्प्रागेव स्वकात्स्वत एव परतोऽन्योपदेशाद्वा इह संसारे धनपुत्रादौ जातो निर्वेदो वैराग्यं यस्य सः आत्मवान् विवेकी हरिं हृदि कृत्वा गेहात्प्रव्रजेन्निर्गच्छेत्स तु नरेषूत्तमः। अत्रातुरसंन्यासी धीरः भक्तिविवेकी नरोत्तमः इति भक्ताः॥ २६॥ त्वं नरोत्तमो नाभूस्तो धीरो भवेत्याह—अथेति। स्वैर्ज्ञातिभिरज्ञाता गतिर्यस्य तथाभूतो भवान् अथानन्तरं शीघ्रमेव उदीचीम् उत्तरां दिशं यातु। इतोऽर्वागर्वाचीनः एष्यन्नित्यर्थः। कालः प्रायशः

पुसां गुणानां विवेकधैर्यादीनां विकर्षणः विनाशक एष्यतीति ॥ २७ ॥ एवमिति । एवमनुजेन विदुरेण बोधितः प्रज्ञैव चक्षुर्यस्य सः अन्धः आजमीढः अजमीढवंशजः राजा धृतराष्ट्रः द्रढिम्नः चित्तदार्ढ्यात् हेतोः भ्रात्रा विदुरेण संदर्शितः अध्वा मार्गो यस्मै तादृशः सन् स्वेषु पुत्रादिषु स्नेहरूपान् पाशान् छित्त्वा गृहान्निश्चक्राम ॥ २८ ॥ पतिमिति । पतिव्रता साध्वी सुशीला च सुबलस्य पुत्री गान्धारी न्यस्तः त्यक्तो दण्डो भूतद्रोहो येस्तेषां प्रहर्षो यत्र तादृशं हिमालयं प्रयातं पतिमनुजगाम । दुःखदस्यापि हर्षहेतुत्वे दृष्टान्तः । मनस्विनां सत्सम्प्रहार इव मनस्विनां शूराणां युद्धे सन् तीव्रः सम्प्रहारो यथा संप्रहर्षकः तथेति । सत्संप्रहारमिति पाठे क्लैब्यमार्षम् । बहुव्रीहिं कृत्वा युद्धमित्यध्याहारो वा ॥ २९ ॥ अजातशत्रुरिति । कृतं मैत्रं मित्रदैवत्यं कर्म सन्ध्यावन्दनं येन सः हुता अग्नयः आहवनीयादयो येन सः अजातशत्रुर्युधिष्ठिरस्तिलगोभूमिरुक्मैः विप्रान्नत्वा प्रविश पिण्डीमितिवत् तेषां दानेन सत्कृत्य इत्याक्षेपलभ्यं गुरूणां पूज्यानां धृतराष्ट्रादीनां वन्दनाय धृतराष्ट्रस्य गृहं प्रविष्टः संस्तत्र पितरौ धृतराष्ट्रविदुरौ सौबलीं गान्धारीं च नापश्यत् । रात्रावेव धृतराष्ट्रस्य निर्गमात् ॥ ३० ॥ तत्रेति सार्द्धम् । तत्र धृतराष्ट्रगृहे आसीनमुपविष्टं सञ्जयनामानं सूतम् उद्विग्नमानसो युधिष्ठिरः पप्रच्छ---हे गावल्गणे ! गवल्गणस्य सूतस्य पुत्र सञ्जय ! नेत्रयोः नेत्राभ्यां हीनः । शेषे षष्ठी । वृद्धश्च नोऽस्माकं तातः धृतराष्ट्रः क्व गतः ? मया हताः पुत्रा यस्याः साऽत एवाऽऽर्त्ता दुःखिता अम्बा गान्धारी वा क्व गता तथा सुहृत् पितृव्यो विदुरश्च क्व गतः ॥ ३१ ॥ अपीति । मया हता बन्धवः पुत्रादयो यस्य सः स्वभार्यया सह दुःखितो धृतराष्ट्रः अकृतप्रज्ञे विवेकहीने मयि शमलमपराधं युधिष्ठिरेण सर्वे पुत्रा हता अतः किं तदाश्रितेन जीवनेनेति आशंसमानो निर्वेदेन चिन्तयन् यद्वा कुलहन्तुरस्य मद्वधात्मकमपि पापमस्तु इतीच्छन् अपि किं गङ्गायामपतत् ॥ ३२ ॥ पितरीति । पितरि पाण्डावुपरते मृते सति सर्वान्नोऽस्मान् सुहृदः पुत्रान् शिशून् व्यसनत आपद्भ्यो यावरक्षतां तौ पितृव्यौ धृतराष्ट्रविदुरावितः स्थानात् क्व गतौ ॥ ३३ ॥

कृपयेति । आत्मनः स्वस्येश्वरं स्वामिनं धृतराष्ट्रमचक्षाणः अपश्यंस्तद्विरहेण कर्शितः कृशीकृतः कृपया हा वृद्धयोः का गतिर्भविष्यतीत्यालोचनेन स्नेहेन च यद्वैक्लव्यं व्याकुलत्वं तस्माच्चातिपीडितः सूतः सञ्जयो न प्रत्याह स्म शीघ्रं प्रत्युत्तरं न ददौ ॥ ३४ ॥ विमृज्येति । पाणिभ्यामश्रूणि विमृज्य आत्मना बुद्ध्या आत्मानं मनः विष्टभ्य स्थिरीकृत्य प्रभोः धृतराष्ट्रस्य पादावनुस्मरन् संजयः अजातशत्रुं प्रत्यूचे ॥ ३५ ॥ नाहमिति । हे कुलनन्दन ! हे महाबाहो ! युष्माकं पित्रोर्विदुरधृतराष्ट्रयोर्गान्धार्या वा व्यवसितं निश्चितमहं न वेद । यतस्त्वमिवाहमपि महात्मभिर्महाबुद्धिभिस्तैर्मुषितो वञ्चितोऽस्मि । मम निद्रासमये ते गता इत्यर्थः ॥ ३६ ॥ अथेति । एवं कंचित्कालं शोचति तस्मिन् अथ तुम्बुरुणा सहितो भगवान् नारदस्तत्राजगाम । तमवलोक्य सानुजो युधिष्ठिरः प्रत्युत्थायाभिवाद्याभ्यर्चयन्निवाह । शोकवेगात्सम्यगर्चनाभावादिवशब्दः । यद्वा इव एवार्थे शोकावेगादभ्यर्च्यन्निवाह नतु अभ्यर्चनानन्तरम् । अत्र शोकवेगादभ्यर्चयन्निवाह न त्वभ्यार्चयत् इति स्वामिपादाः ॥ ३७ ॥ नाहमिति सार्द्धम् । हे भगवन् ! पित्रोर्धृतराष्ट्रविदुरयोर्गतिं पदवीमहं वेद । तावितः क्व गतौ तथा हतपुत्रा अत एव आर्ता तपस्विनी संतापवती अम्बा गान्धारी च क्व गता तदप्यहं न जाने । अतस्तत्त्वं वदेति शेषः । यतः अपारे समुद्रे निमग्नानां पारदर्शकः कर्णधार इव गतिप्रदर्शको भगवान् सर्वज्ञस्त्वमागतोऽसि ॥ ३८ ॥ अथेति । अथ मुनिषु सत्तमः भगवान् नारदः आबभाषे । हे राजन् ! कंचनापि जनं मा शुचः मा शोचीरित्यर्थः । च्लेरङार्षः । "शुचिर्, पूतीभावे" इत्यस्य वा शोकार्थता कल्प्या । यद्यस्मात् सर्वमपि जगत् ईश्वरवशम् अस्ति ॥३९॥ लोका इति । सपाला इन्द्रादिसहिता इमे लोका जना यस्येशितुः परमेश्वरस्य बलिं वहन्ति सादरमाज्ञां पालयन्ति स भूतानि प्राणिनः संयुनक्ति स एव वियुनक्ति च ॥ ४० ॥ यथेति । नसि नासिकायां प्रोताः संयुक्तरज्जवो गावो बलीवर्दास्तन्त्यां तिरश्चीनायां महत्यां रज्ज्वां स्वदामभिः स्वस्वासाधारणप्रग्रहैर्बद्धा यथा वशे तिष्ठन्ति तथा वाक् कर्त्तव्याकर्त्तव्यविधायको वेद एव तन्तिस्तस्यां नामभिः ब्राह्मणः ब्रह्मचारीत्यादिभिर्वर्णाश्रमलक्षणैर्बद्धा जीवा ईशितुः बलिं वहन्ति । स्वस्वाधिकारकर्माणि कुर्वन्तस्तदाज्ञां पालयन्तीत्यर्थः ॥ ४१ ॥ प्रवृत्तौ पारतन्त्र्यमुक्त्वा संयोगवियोगयोरप्याह—यथेति । इह लोके यथा कस्यचित् क्रीडितुः पुंसः इच्छया क्रीडोपस्कराणां संयोगविगमौ भगवतस्तथैवेशस्य इच्छया नृणां संयोगवियोगौ स्याताम् ॥४२॥ यदिति । यत् यदि त्वं लोकं जीवरूपेण ध्रुवं मन्यसे यदि वा देहरूपेण अध्रुवं मन्यसे । यदि वा न चोभयं शुद्धब्रह्मरूपेण अनिर्वाच्यरूपेण वा न ध्रुवं नाप्यध्रुवं मन्यसे वाशब्दात् उभयं वा चिज्जडांशतः ध्रुवाध्रुवं मन्यसे । सर्वथापि चतुर्ष्वपि पक्षेषु मोहजादज्ञानजात्स्नेहादन्यत्र विषय ते धृतराष्ट्रादयो न शोच्याः आद्ये ध्रुवत्वादेव शोको व्यर्थः । द्वितीये ध्रुवत्वमसम्पादनस्याशक्यत्वात् तृतीये चतुर्थे च अशोच्यत्वादेव सर्वत्र शोके स्नेह एव हेतुः स तु मोहजत्वात्त्याज्यः ॥ ४३ ॥ तस्मादिति । अङ्ग हे राजन् ! यस्मान्निरर्थक एव शोकस्तस्मान्मां विना वनमाश्रितः अनाथाः कृपणा दीनाः कथं नु वर्त्तेरन् जीवेयुरित्यात्मकमज्ञानकृतमात्मनो मनसो वैक्लव्यं जहि त्यज ॥ ४४ ॥

तेषां रक्षकं स्वमात्मानं तु मा मंस्था इत्याह---कालेति । कालो गुणक्षोभकः कर्म जन्मनिमित्तं गुणः मूलकारणं तदधीनः पाञ्चभौतिको जडस्तद्विभागे नाशवांश्चायं देहो यथा स्वयं सर्पेणाजगरेण ग्रस्तो गिलितो जनोऽपरं तथाविधं न रक्षितुं शक्नोति

तथा अन्यान् देहान् कथं गोपायेत् रक्षेत् न कथमपीत्यर्थः। कोऽपि कमपि कथमपि रक्षितुं न समर्थ इति तात्पर्यम् ॥ ४५ ॥ सर्वेषां जीविकापीश्वरेण कृतेत्याह---अहस्तानि इति। अहस्तानि मत्स्यफलादीनि सहस्तानां मनुष्यादीनां जीवनम् उपलक्षणतया अहस्तानामजगरादीनां सहस्ता मनुष्यादयो जीवनमित्यादि ज्ञेयम्। अपदा न तृणादीनि चतुष्पदां गवादीनां जीवनं तत्र तेष्वहस्तादिष्वपि फल्गूनि अल्पानि महतां जीवनमेवं जीव एव जीवस्य जीवनं जीविका तेन पत्रपुष्पफलादिषु सत्सु धृतराष्ट्रजीवनार्थं किं विषीदसि ॥ ४६ ॥ ननु देहादिः कालकर्मगुणाधीनश्चेत् ईश्वराधीन इति प्राकथमुक्तमिति चेत्तत्र कालादिरूप ईश्वर एवेत्याह—तदिदमिति। हे राजन्! तत् इदम् अहस्तादिरूपं जगत् एकः आत्मनां जीवानामात्मा स्वरूपमेव अतो न सजातीयभेदः। स्वदृक् स्वप्रकाशः अन्तरो भोक्तृरूपोऽनन्तरो बहिर्भोग्यरूपश्च भगवानेव भाति। अतो न विजातीयभेदोऽपि तमेकमेव मायया उरुधा नानाविधं जातं पश्येति। धा आर्षः ॥ ४७ ॥ स इति। हे महाराज! भूतानां भावनः पालकोऽपि स भगवानद्य अस्यां भूमौ सुरद्विषां दैत्यानामभवाय नाशाय कालरूपः दैत्यैरेव कालरूपत्वेनानुभूयमानः स्वयं तु परमानन्दरूपोऽयं श्रीकृष्ण एवावतीर्णः ॥४८॥ निष्पादितमिति। देवानां कृत्यं तेन निष्पादितमवशेषं यदुकुलस्य अन्तर्द्धापनरूपं प्रतीक्षते। तच्च भूतमपि विदुरवदेव नावर्णयत्। स ईश्वरो यावदिह भूमौ भवेत् वर्त्तते तावद्यूयमप्यवेक्षध्वं तदनन्तरमिति निर्गच्छत ॥ ४९ ॥ धृतराष्ट्र इति। भ्रात्रा विदुरेण स्वभार्यया गान्धार्या च सह धृतराष्ट्रो हिमवतो दक्षिणेन दक्षिणस्यां दिशि। एनबन्तमव्ययम्। ऋषीणामाश्रमं गतः ॥ ५० ॥ स्रोतोभिरिति। या वै प्रसिद्धा स्वर्धुनी गङ्गा सा नाना पृथक् सप्तभिः स्रोतोभिः प्रवाहैः सप्तानामृषीणां प्रीतये यत्रात्मानं सप्तधा व्यधात् अत एव यत्तीर्थं सप्तस्रोत एव मरीचिगङ्गा अत्रिगङ्गेत्यादिनाम्ना प्रचक्षते वदन्ति तमगादित्यर्थः ॥ ५१ ॥

तस्य योगसाधनमाह—स्नात्वेति। तस्मिन्नाश्रमेऽनुसवनं त्रिकालं स्नात्वा यथाविधि अग्नीन् गार्हपत्यादीन् हुत्वा च अप एव भक्षयतीत्यब्भक्षः इति नियमा उक्ताः। उपशान्तात्मा क्रोधादिरहितचित्तः विगता एषणा सुतादीक्षा यस्य स आस्ते इति यमा उक्ताः ॥ ५२ ॥ जितासन इति त्रयम्। जितमासनं येन दृढासन इत्यर्थः। जिता श्वासाः प्राणा येन प्रत्याहृतानि शब्दादिविषयेभ्यो व्यावर्त्तितानि षडिन्द्रियाणि येन हरिभावनया ध्वस्ता रजःसत्त्वतमोरूपा मला यस्य इति आसनप्राणायामप्रत्याहारधारणाध्यानान्युक्तानि ॥ ५३ ॥ समाधिमाह—विज्ञानेति। आत्मानमहङ्कारास्पदं स्थूलदेहाद्वियोज्य विज्ञानात्मनि बुद्धौ संयोज्य एकीभूतं विभाव्य तं विज्ञानात्मानं दृश्यांशाद्वियोज्य क्षेत्रज्ञे द्रष्टरि प्रविलाप्य तं च क्षेत्रज्ञं द्रष्टृंशाद्वियोज्य यथा घटाम्बरं घटोपाधेर्वियोज्य महाकाशे प्रविलाप्यते तथा आधार आश्रयसंज्ञे ब्रह्मणि प्रविलाप्य अयं भावः। देहोऽहमित्यहङ्कारं त्यक्त्वा क्षेत्रज्ञोऽहमिति भावितवान् ततस्तं त्यक्त्वा प्रत्यगात्माहमिति भावितवान् ततस्तमपि त्यक्त्वा ब्रह्माहमिति भावयित्वा ध्वस्तो मायागुणानामुदर्क उत्तरफलं वासना यस्य सः निरुद्धानि करणानि चक्षुरादीनि आशयो मनश्च यस्य सः अत एव निवर्त्तितोऽखिल आहार इन्द्रियैर्विषयाहरणं येन सः स्थाणुरिव अचलः निश्चल आस्ते। ध्वस्तेत्यादिना व्युत्थानाभावः उक्तः। यतोऽन्तर्गुणक्षोभाद्बहिरिन्द्रियविक्षेपाद्वा व्युत्थानं भवेत् तदुभयं तस्य नास्ति ॥ ५४-५५ ॥ तस्येत्यर्द्धम्। संन्यस्तानि अखिलान्यपि कर्माणि येन तस्य धृतराष्ट्रस्यान्तरायो विघ्नभूतस्त्वं मैवाभूरित्यडागमश्छान्दसः ॥ ५६ ॥ तेषां दर्शनादिकमपि तव दुर्लभमित्याह---स वै इति। हे राजन्! स धृतराष्ट्रोऽद्यतनाद्वर्त्तमानदिनादारभ्य परतः पञ्चमेऽहनि स्वं कलेवरं हास्यति वै त्यक्ष्यति। तच्च कलेवरं योगाग्निनैव भस्मीभविष्यति ॥ ५७ ॥ दह्यमान इति। सहोटजे पर्णशालासहिते पत्युर्देहे अग्निभिर्योगाग्निना सह गार्हपत्यादिभिर्दह्यमाने सती साध्वी पतिव्रता तस्य पत्नी गान्धारी बहिःस्थिता सती तं पतिमनु अग्निं वेक्ष्यति प्रवेक्ष्यति ॥ ५८ ॥ विदुर इति। हे कुरुनन्दन! तत् धृतराष्ट्रस्य शीघ्रं विमुक्तिरूपमाश्चर्यं निशाम्य दृष्ट्वा भ्रातुर्विमुक्त्या हर्षस्तद्वियोगेन शोकश्च ताभ्यां युतस्तीर्थनिषेवकः तीर्थानि सेवितुं "तुमुन्ण्वुलौ" इति भविष्यतिण्वुल्। विदुरस्तस्मात्स्थानात् गन्ता गमिष्यति ॥ ५९ ॥ इत्युक्त्वेति। इत्येवमुक्त्वाऽथानन्तरं सहतुम्बुरुः तुम्बुरुणा सहितो नारदः स्वर्गमारुहत्। "कृमृदृरुहिभ्यश्छन्दसि" इति च्लेरङ्। युधिष्ठिरस्तु तस्य नारदस्य वचो हृदि कृत्वा शुचः शोकानजहात् तत्याज ॥ ६० ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो निरमात्प्रथमस्य त्रयोदशे।
इति श्रीभागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां त्रयोदशोऽध्यायः ॥ १३ ॥

—:꧁:—

# अथ चतुर्दशोऽध्यायः

सूत उवाच

संप्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया। ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ १ ॥

चतुर्दशे महोत्पातै राजश्चिन्ताथ फाल्गुनः। आगतो द्वारकातोऽत्र श्लोकाः सार्द्धाः कृताब्धयः ॥

(४४॥)। उवाचत्रितयं सार्द्धाः पञ्चवेदा अनुष्टुभः ॥ १४ ॥

संप्रस्थित इति द्वयम्। द्वारकायां बन्धूनां दिदृक्षया पुण्यश्लोकस्य श्रीकृष्णस्य विचेष्टितं चकारादभिप्रायं च ज्ञातुं जिष्णावर्जुने संप्रस्थिते गते सति कतिचित् सप्त मासा व्यतीताः ततोऽपि द्वारकायाः सकाशादर्जुनो न आयात् तदा कुरूद्वहः युधिष्ठिरो घोररूपाणि निमित्तान्युत्पातान् ददर्श ॥ १-२ ॥ कालस्येति त्रयम्। विपर्यस्ता विपरीता ऋतूनां वसन्तादीनां धर्माः फलपुष्पादयः शीतोष्णादयश्च विद्यन्ते यस्य तस्य कालस्य रौद्रां भयंकरां गतिं दृष्ट्वा क्रोधलोभानृतैर्युक्त आत्मा मनो येषां तेषां नृणां वार्तां जीविकां पापीयसीं हिंसाबहुलां दृष्ट्वा जिह्मप्रायं कौटिल्यप्रचुरं व्यवहृतं व्यवहारं दृष्ट्वा शाठ्यं वञ्चनं तेन मिश्रं च सौहृदं मैत्र्यं दृष्ट्वा पितृमातृसुहृद्भ्रातृदम्पतीनां च पितृपुत्रयोः सुहृदोर्भ्रात्रोर्दम्पत्योश्चेत्यर्थः। कल्कनं मिथः कलहं दृष्ट्वा काले अनुगते सर्वदोषानुकूले सति निमित्तान्युत्पातान् अत्यरिष्टानि अत्यन्तमशुभानि तथा नृणां लोभाद्यधर्मेषु प्रकृतिं स्वभावं च दृष्ट्वा नृपो युधिष्ठिरोनुजं भीममुवाच ॥ ३-४-५ ॥ संप्रेषित इति द्वयम्। द्वारकायां ये बन्धवस्तेषां दिदृक्षया पुण्यश्लोकस्य कृष्णस्य विचेष्टितं ज्ञातुं च जिष्णुः अर्जुनः संप्रेषितः तस्य सप्त मासा गताः। हे भीमसेन! अधुनाऽपि तवानुजोऽर्जुनः कस्य वा हेतोर्नायाति तदिदमनागमनकारणमहमञ्जसा तत्त्वेन न वेद ॥ ६-७ ॥ अपीति। अपि किं यत् यस्मिन् काले भगवान् श्रीकृष्ण आत्मनः स्वस्य आक्रीडं क्रीडासाधनमङ्गं मनुष्यनाट्यमुत्सिसृक्षति उत्स्रष्टुमिच्छति स देवर्षिणा नारदेनादिष्टः तावद्यूयमवेक्षध्वमिति य उक्तः स कालोऽयमेवोपस्थितः प्राप्तः ॥ ८ ॥ यस्मादिति। यस्माद्धेतोः यस्य हरेरनुग्रहात् नोऽस्माकं सम्पदो राज्यं दाराः दाररक्षा प्राणाः कुलं कुलरक्षा प्रजाः सपत्नानां विजयः लोकाः यज्ञफलभूताः आसन् स भगवानङ्गमुत्सिसृक्षति किम् इत्यनुषङ्गः ॥ ९ ॥ पश्येति। हे नरव्याघ्र! दिव्यान् दिविभवान् भौमान् दैहिकान् दारुणान् अदूरात् समन्तरकालमेव नोऽस्माकं बुद्धिं मोहयतीति तथाभूतं भयं शंसतः सूचयतः उत्पातान् पश्य ॥ १० ॥ दैहिकानाह-ऊर्विति। अङ्ग हे भीम! मह्यं मां खेदयितुं 'क्रियार्थोपपदस्य' इति चतुर्थी। ऊरुः अक्षि बाहुश्च एतानि वामानि पुनः पुनः स्फुरन्ति। हृदये वेपथुः कम्पश्च भवति। अत एते उत्पाता आरात् निकटमेव मह्यं विप्रियं दुःखं दास्यन्ति ॥ ११ ॥

भौमानाह----शिवेति। अङ्ग हे भीम! अनलवज्ज्वलदाननं यस्याः अग्निं मुखेन वमन्ती सैषा शिवा शृगालविशेषः उद्यन्तमादित्यमभि अभिलक्ष्य रौति आक्रोशति। अयं सारमेयः श्वा मामभिलक्ष्य अभीरुवत् निःशङ्कं रौति प्लुतं भषति ॥ १२ ॥ शस्ता इति। शस्ताः गवादयः पशवो मां सव्यं वामं कुर्वन्ति। अपरे गर्दभाद्या दक्षिणं कुर्वन्ति। हे पुरुषव्याघ्र! मम वाहान् अश्वान् रुदतो लक्षये ॥ १३ ॥ मृत्युदूत इति। अयं कपोतः मृत्युदूतः मृत्युसूचकः भाति। कुह्वानैः कुत्सितशब्दैर्मनः कम्पयन् उलूको घूकः प्रत्युलूकः तत्प्रतिपक्षो घूकः काको वा अनिद्रौ सन्तौ विश्वं शून्यमिच्छतः ॥ १४ ॥ धूम्रा इति। दिशः धूम्रा धूसराः परिधयः सूर्यचन्द्रपरिमण्डलानि च दृश्यन्त इति शेषः। अद्रिभिः सह भूः पृथ्वी च कम्पते। दिव्यानाह--स्तनयित्नुभिः लक्षणया निरभ्रगर्जनैः साकं महान् निर्घातो निरभ्रवज्रपात आसीत् ॥ १५ ॥ वायुरिति। खरः परुषः स्पर्शो यस्य तथाभूतो वायुः रजसा तमः विसृजन् वाति। जलदाः सर्वतः असृग्रुधिरं वर्षन्ति। अतः सर्वतः सर्वत्र वीभत्सं निन्द्यमेव जातम्। इव एवार्थे ॥१६॥ सूर्यमिति। दिवि अन्तरिक्षे हता प्रभा यस्य तथाभूतं सूर्यं पश्य। मिथः ग्रहाणां भौमादीनां मर्दं युद्धं पश्यतां कुसुतादीनां युद्धं निगद्यतेऽन्योन्ययुक्तानामिति ज्योतिषम्। ससंकुलैः प्राण्यन्तरसहितैः भूतपिशाचादिसमूहैः रोदसी द्यावापृथिव्यौ ज्वलिते प्रदीप्ते इव पश्य ॥ १७ ॥ पुनर्भौमानाह----नद्य इति। नद्यः नदाश्च क्षुभिताः सरांसि मनांसि च क्षुभितानि अग्निराहवनीयादिः आज्येन घृतेनापि न ज्वलति। अतोऽयं विपरीतधर्मा कालः किं दुःखं विधास्यतीत्यहं न वेद्मि ॥ १८ ॥ न पिबन्तीति। वत्साः क्षुभिता अपि स्तनं स्तन्यं दुग्धं न पिबन्ति। पशुमनुष्यादीनां मातरश्च न दुह्यन्ति न प्रस्नुवन्ति। कर्मकर्त्तरि दुहो लट् यकूपरस्मैपदे

आर्षे। गावश्च अश्रुमुखाः सत्यो रुदन्ति। व्रजे ऋषभाश्च न हृष्यन्ति । हर्षनादं न कुर्वन्ति ॥ १९ ॥ दैवतानीत्यर्द्धम्। दैवतानि देवप्रतिमाः रुदन्तीव स्विद्यन्ति गात्रप्रस्वेदं कुर्वन्ति च उज्वलन्ति उत्लुत्य चलन्ति ॥ २० ॥ इमे इति। भ्रष्टा श्रीः शोभा येषां तथा निर्गत आनन्दो येभ्यस्ते इमे जनपदाः ग्रामाः पुराणि उद्यानानि आकरा आश्रमाश्च नोऽस्माकं किमघं दुःखं दर्शयन्ति दर्शयिष्यन्ति वयं न जानीमः ॥ २१ ॥ मन्य इति। एतैर्महोत्पातैर्नूनं हतं सौभगं सौभाग्यं यस्याः सा भूः न विद्यते अन्येषु पुरुषेषु श्रीर्वज्राङ्कुशादिशोभा येषां तैर्भगवतः पदैर्हीनाः जाता इत्यहं मन्ये ॥ २२ ॥

इतीति। हे ब्रह्मन् शौनक! इत्येवं दृष्टानि ज्ञातान्यरिष्टानि येन तेन चेतसा चिन्तयतः तस्य राज्ञो युधिष्ठिरस्य पुरः यदुपुर्याः सकाशात्कपिध्वजः अर्जुनः प्रत्यागमत् ॥ २३ ॥ तमिति द्वयम्। अयथापूर्वमिति पूर्वं कदापि यथा न भवति तथा किंचिदनुक्त्वैव पादयोर्निपतितमित्यर्थः। अधो वदनं यस्य तं नयनाब्जयोरब्विन्दून् अश्रूणि मुञ्चन्तं विच्छायं विगतकान्तिं तमागतमनुजमर्जुनमातुरं विलोक्य स्वयमप्युद्विग्नहृदयः सन् सुहृदा मध्ये स्थितो नृपो युधिष्ठिरस्तावद्यूयमवेक्षध्वमिति नारदेनेरितमुक्तं वचनं संस्मरन् पृच्छति स्म ॥ २४–२५ ॥ कच्चिदिति। कच्चिदिष्टप्रश्ने। मधुभोजादयः यादवविशेषाः नोऽस्माकं स्वजना बन्धवः आनर्त्तपुर्यां द्वारकायां सुखं यथा भवति तथा कच्चिदासते ॥ २६ ॥ शूर इति। वाऽथर्थे मारिषः मान्योऽस्माकं मातामहः शूरोऽपि कच्चित्स्वस्ति सुखमास्ते। अथ सानुजः अनुजैर्देवभागादिभिः सहितोऽस्माकं मातुल आनकदुन्दुभिर्वसुदेवः कुशली कच्चिदास्ते ॥ २७ ॥ सप्तेति। तस्य वसुदेवस्य पत्न्योऽस्मन्मातुलान्यः सप्तसंख्याः स्वसारः परस्परं भगिन्यः देवकीप्रमुखाः नवमस्कन्धोक्ताः आत्मजैः कृष्णादिभिः सहिताः सस्नुषाः स्नुषाभिः रुक्मिण्यादिभिः सहिताश्च कच्चित्स्वयं क्षेमं यथा भवति तथा आसते ॥२८॥ कच्चिदिति। असन् पुत्रो यस्य स राजा आहुकः उग्रसेनः कच्चिज्जीवति दुष्पुत्रत्वाज्जीवनमात्रमेव पृष्टम्। अस्य राज्ञोऽनुजः देवकश्च तथा सुतेन कृतवर्मणा सहितः हृदीकः तथा अक्रूरो जयन्तादयः कृष्णभ्रातरः कुशलमासते इत्युत्तरापकर्षः ॥ २९ ॥ आसत इति। तथा ये च शत्रुजिदादयः ते सर्वे कच्चित्कुशलमासते। सात्वतां प्रभुः भगवान् रामः कच्चित्सुखमास्ते ॥ ३० ॥ प्रद्युम्न इति। सर्ववृष्णीनां मध्ये महारथः प्रद्युम्नः कच्चित्सुखमास्ते। उत तथा युद्धे गम्भीरो महान् रयो वेगो यस्य स भगवान् अनिरुद्धो वर्द्धते मोदते किम् ॥ ३१ ॥ सुषेण इति त्रयम्। सुषेणः चारुदेष्णश्च जाम्बवतीसुतः साम्बः अन्ये च ऋषभादयः कार्ष्णिप्रवराः श्रीकृष्णपुत्रश्रेष्ठाः सपुत्राः तथैव शौरेः श्रीकृष्णस्यानुचराः सेवकाः श्रुतदेवोद्धवादयोऽन्ये च ये सुनन्दनन्दौ शोर्षण्यौ मुख्यौ येषां ते सात्वतर्षभाः रामकृष्णयोर्भुजावेवाश्रयो येषां ते सर्वेऽपि किं स्वस्त्यासते। अपि किं तेऽस्माकं कुशलं स्मरन्ति वाञ्छन्ति। यतोऽस्मासु बद्धं सौहृदं यैस्ते तादृशाः सन्ति ॥ ३२—३४ ॥ भगवानिति। सुहृद्भिर्भित्रैर्वृतः ब्रह्मण्यः भक्तवत्सलो भगवान् गोविन्दोऽपि पुरे द्वारकायां तत्रापि सुधर्मायां सभायां कच्चित्सुखमास्ते ॥ ३५ ॥

यद्यपि भगवति सुखप्रश्नो नावश्यकस्तथापि भगवतो द्वारकावस्थाने हि लोकानां मङ्गलमित्याशयेनाह—मङ्गलायेति। लोकानां मङ्गलाय क्षेमाय लब्धपालनाय भवाय समृद्धये चानन्तसखः बलभद्रसहचारी आद्यः पुमान् श्रीकृष्णो यदुकुलरूपेऽम्भोधौ समुद्रे कच्चिदास्ते ॥ ३६ ॥ यद्बाहुिति। यस्य श्रीकृष्णस्य बाहुदण्डैर्गुप्तायां संरक्षितायां स्वपुर्यां द्वारकायामर्चिताः बहुमताः महापौरुषिकाः भगवत्पार्षदा इव यदवः परमानन्दो यथा भवति तथा क्रीडन्ति ॥ ३७ ॥ यदिति। यस्य श्रीकृष्णस्य पादयोः शुश्रूषणं परिचरणमेव मुख्यं यत्कर्म तेन हेतुना सत्यभामादयो द्व्यष्टसहस्रयोषितो भगवद्भार्याः संख्ये युद्धे त्रिदशान् देवान्निर्जित्य कृष्णबलेनैवेत्यर्थः। वज्रायुधस्येन्द्रस्य वल्लभा शची तस्या उचिताः तदाशिषस्तेषां देवानां भोग्यान् पारिजातादीन् हरन्ति। भगवता हृता भुञ्जत इत्यर्थः ॥ ३८ ॥ यद्बाह्विति। यस्य हरेर्बाहुदण्डयोरभ्युदयः प्रभावस्तदनुजीविनो यदुप्रवीरा न विद्यते कुतोऽपि भयं येषां तथाभूताः सन्तः सुरसत्तमानामिन्द्रादीनामुचितामत एव बलात् स्वप्रभावेणैवं भगवताऽऽहृतां सुधर्माख्यां सभामङ्घ्रिभिर्मुहुर्मुहुरधिक्रमन्ति क्रमेर्दीर्घाभाव आर्षः। स गोविन्दः कच्चित्सुखमास्ते ॥ ३९ ॥ कच्चिदिति। हे तात! ते तव कच्चित् अनामयमारोग्यमस्ति। यतो मे मम त्वं भ्रष्ट तेजो यस्य तथाभूतो विभासीति। हे तात! वाऽथवा यतस्त्वं तत्र चिरोषितः बहुकालं स्थितः। अतः न लब्धो मानः येन तथाभूतः सन् प्रत्युत तैरेवावज्ञातः तिरस्कृतः किम् ॥ ४० ॥ कच्चिददिति। न विद्यते भावः प्रेमा येषां तैः अभावैः प्रेमशून्यैः पुरुषैरमङ्गलैः कुत्सितैः शब्दादिभिः साधनैर्नाभिहतो न ताडितोऽसि कच्चित्। यद्वा आशया सह यथा आशा भवति तथा यदर्थिभ्यो याचमानेभ्यः प्रतिश्रुतं दास्यामीति प्रतिज्ञातं तत्तेभ्यो न दत्तं किम्। यद्वा तेभ्यो दास्यामीति नोक्तम् ॥ ४१ ॥ कच्चित्त्वमिति। ब्राह्मणबालादीन् अन्यं वा शरणोपसृतं शरणागतं सत्त्वं प्राणिमात्रं शरणप्रदस्त्वं नात्याक्षीः न त्यक्तवानसि किम् ॥ ४२ ॥ कच्चित्त्वमिति। कच्चित् अगम्यां स्त्रियं त्वं नागमः न गतवानसि? असत्कृतां मलिनवस्त्रादिनाऽगम्यां वा स्त्रियं नागमः किम्? अथवा भवान् नोत्तमैः अनुत्तमैः समैः असमैरधमैर्वा जनैः पथि न पराजितोऽसि ॥ ४३ ॥ अपिस्विदिति।

संभोज्यान् प्रथमं भोजनार्हान् वृद्धान् बालकांश्च त्वम् अपिस्वित् किंस्वित्पर्यभुङ्क्थाः परित्यज्य एकः स्वयं भुक्तवानसि ? अक्षमं कर्त्तुमयोग्यं यत्तत्किञ्चिज्जुगुप्सितं निन्दितं कर्म तु न कृतवानसि किम् ॥ ४४ ॥ कच्चिदिति । अथवा नित्यं सर्वदा प्रेष्ठतमेन आत्मबन्धुना श्रीकृष्णेन रहितोऽत एव हृदयेन शून्यो निश्चेतनोऽस्मीति कच्चिन्मन्यसे । अन्यथा एतद्विना ते तव महाधीरस्य रुक् मनःपीडा न सम्भवतीत्यर्थः ॥ ४५ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायो निरमात्प्रथमस्य चतुर्दशे ॥

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्दशोऽध्यायः ॥ १४ ॥



## अथ पञ्चदशोऽध्यायः

### सूत उवाच

**एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः । नानाशङ्काऽऽस्पदं रूपं कृष्णविश्लेषकर्शितः ॥ १ ॥**

कलिं दृष्ट्वा पञ्चदशे दत्त्वा राज्यं परीक्षिते । नृपः स्वर्गं ययावत्र श्लोकाः सार्द्धाः कुमार्गणाः ( ५१॥ ) ॥

अनुष्टुभां चतुःषष्टिः सार्द्धा ( ६४॥ ) चोवाचयुग्मकम् ॥ १५ ॥

एवमिति द्वयम् । भ्रात्रा राज्ञा युधिष्ठिरेणैवं नानाशङ्कानामास्पदं निमित्तभूतं स्वकीयं रूपम् आ विकल्पित इति च्छेदः । आलक्ष्य विकल्पितो विकल्पेन एवंभूतो वा त्वमेवंभूतो वेत्यात्मकेन पृष्टोऽपि कृष्णस्य यो विश्लेषो वियोगस्तेन कर्शितः कृशीकृतः शोकेन हेतुना शुष्यद् वदनं च हृच्च ते एव सरोजे यस्य अत एव हतप्रभः निस्तेजाः स कृष्णस्य सखा कृष्णोऽर्जुनः तमेव विभुं श्रीकृष्णमनुध्यायन् प्रतिभाषितुं नाशक्नोत् ॥ १–२ ॥ कृच्छ्रेणेति द्वयम् । कृच्छ्रेण नेत्रयोः शुचः शोकाश्रूणि संस्तभ्य यान्यश्रूणि उद्गच्छन्ति तानि नेत्रयोरेव संस्तभ्य रोदनवेगं रुद्ध्वेत्यर्थः । गलितान्यश्रूणि पाणिनाऽऽमृज्य परोक्षेण दर्शनागोचरेण कृष्णेन हेतुना समुन्नद्धमधिकं यत्प्रणयौत्कण्ठ्यं प्रेमोत्कर्षः तेन कातरो व्याकुलः सख्यं हितैषितां मैत्रीमुपकारं सौहृदं बन्धुकृत्यं चकारात् संबन्धितां च सारथ्यादिषु कर्मसु यद्भगवता कृतं तत्संस्मरन् अत एव बाष्पेण कण्ठरोधात् गद्गदया कुण्ठीभूतया गिरा नृपमग्रजं युधिष्ठिरं प्रतीति वक्ष्यमाणमाह स्म ॥ ३–४ ॥ वञ्चित इति । हे महाराज ! देवानामपि विस्मापनमाश्चर्यकरं यन्महन्मे मम तेजस्तद्येनापहृतं तेन मातुलपुत्रबन्धुरूपिणा हरिणाऽहं वञ्चितस्त्यक्तोऽस्मि ॥ ५ ॥ यस्येति । यस्य हरेः क्षणमात्रवियोगेनैवायं सर्वोऽपि लोको नास्ति प्रियं दर्शनं यस्य तथाभूतो जातः । प्रियस्याप्रियत्वे दृष्टान्तः यथा हि उक्थेन प्राणेन रहित एष पित्रादिर्मृतकः प्रोच्यते तद्वत् यच्छब्दानां तेनाह वञ्चित इत्यनेन सम्बन्धः ॥ ६ ॥ यत्संश्रयादिति । खलु एवार्थे । यस्य हरेः संश्रयाद्बलाद्धेतोर्द्रौपद्याः स्वयंवरस्य मुखे प्रारम्भे स्मरेण कामेन दुर्मदानां द्रुपदगेहमुपागतानां राज्ञां धनुर्ग्रहणेनैव तेजो मया हृतं ततः सज्जीकृतेन आरोपितज्याबाणकेन धनुषा मत्स्यो यन्त्रोपरि भ्रमन् यद्वा मत्स्याकारो यन्त्रविशेषः मयाऽभिहतः विद्धः कृष्णा द्रौपदी चाधिगता लब्धेति तेनाहं वञ्चितः ॥ ७ ॥

यत्सन्निधाविति । उ विस्मये । यस्य सन्निधौ हेतुभूते सति तरसा वेगेन सामरगणम् अमरगणैः सहितमिन्द्रमहं विजित्य खाण्डवाख्यं तस्य वनमग्नये अदां दत्तवानस्मि । तत्र खाण्डवदाहे रक्षितेन मयेन कृता निर्मिता अद्भुतानि शिल्पानि प्रतिमादीनि माया च जलादौ स्थलादिभानहेतुर्यस्यां सा सभा मया लब्धा तथा यत्सन्निधौ ते तवाध्वरे राजसूये दिग्भ्यो नृपतयो बलिमहरन् आनयन् ॥ ८ ॥ यत्तेजसेति । यस्य हरेः तेजसा युक्तः अत एव गजानामयुतस्य सत्त्वमुत्साहो वीर्यं बलं

च यस्य स तवानुजो ममार्यः पूज्यो भीमो नृपाणां शिरःस्वङ्घ्रिर्यस्य तं महाप्रतापं जरासन्धं मखार्थे तव राजसूययज्ञार्थमहन् तन्निर्जयं विना राजसूयमखानुपपत्तेः। तं च हत्वा प्रमथनाथो महाभैरवस्तस्य मखाय ये दिग्विजये नम्रतां न गता भूपास्तेन बलादाहृता निरुद्धाश्च ते च यद्यस्मात्तद्वधाद्विमोचितास्तत्तस्मात्ते तवाध्वरे राजसूये बलिं तत्साधनभूतं द्रव्यमनयन् आनयन्। अयं श्लोको विगीत इति स्वामिपादाः ॥ ९ ॥ पत्न्या इति। यत्स्मरणात्तदानीमेवागतस्य श्रीकृष्णस्य नमने पदयोः पतितान्यश्रूणि मुखे यस्यास्तस्याः पदशब्दसापेक्षस्यापि पतितशब्दस्याश्रुशब्देन समासो नित्यसापेक्षत्वात्। यद्वा पदयोः पतिता चासौ अश्रुमुखी च तस्याः तव पत्न्याः द्रौपद्या अधिमखं राजसूयमखे क्लृप्तो विरचितो यो महाभिषेकस्तेन श्लाघिष्ठमत्यन्तश्लाघ्यं चारु सुन्दरं कबरं धम्मिल्लं सभायां विकीर्य विक्षिप्य यैः कितवैर्धूर्तैर्दुःशासनादिभिः स्पृष्टमाकृष्टं तेषां स्त्रियः स्त्रीः हता ईशाः यतयो यासां ताश्च विमुक्ताः केशा यासां ताश्च तथाभूता यो भगवान् कृष्णः अकृत कृतवान् ॥ १० ॥ यो न इति। यः शिष्याणामयुतस्याग्रे अग्रपङ्क्तौ भुङ्क्ते तस्माद्दुर्वाससो हेतोः आरणा दुर्योधनेन विहितात् रचितादुदुरन्तकृच्छ्रादपारसङ्कटाच्छापरूपान्नोऽस्मान् वनमेत्य आगत्य स्थालीलग्नं शाकमेवान्नं तन्निन्नेय पात्र शिष्टमुपभुज्य जग्ध्वा भुज्येत्यपि पाठः। यो भगवान् जुगोप रक्षितवान्। तत्र हेतुः। यतः शाकान्नभोजनात् हेतोः स्नानार्थं सलिले विनिमग्नो मुनीनां संघः त्रिलोकीं तृप्तान् अमंस्त अमन्यत। एवं हि भारते कथा। कदाचित् दुर्वाससो दुर्योधनेनातिथ्यं कृतं तेन च परितुष्टेन वरं वृणीष्वेत्युक्ते दुर्वाससः शापात् पाण्डवा नश्येयुरिति मनसि विधाय दुर्योनेनोक्तम्। युधिष्ठिरोऽस्मत्कुलमुख्यः अतस्तस्यापि भवतैवं शिष्यायुतसहितेनातिथिना भवितव्यं किंतु द्रौपदी यथा क्षुधा न सीदेत्तथा तस्यां मुक्तवत्यां तद्गृहं गन्तव्यमिति। ततश्च तथैव दुर्वाससि प्राप्ते परमादरेण युधिष्ठिरेण माध्याह्निकं कृत्वा आगम्यतामिति ज्ञापितो मुनिसंघोऽघमर्षणाय जले निममज्ज। तत्र चिन्तातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णस्तत्क्षणः एव भक्तवत्सल आगतस्तया चावेदिते वृत्तान्ते भगवतोक्तं द्रौपद्यहं बुभुक्षितोऽस्मि। प्रथमं मां भोजय। तया चातिलज्जयोक्तं स्वामिन्मद्भोजनपर्यन्तमक्षयमन्नं सूर्यदत्तस्थाल्यां तिष्ठति। मया च सर्वान् भोजयित्वा भुक्तमतो नास्त्यन्नमिति तथाप्यतिनिर्बन्धेन भगवता पाकस्थालीमानाय्य तत्कण्ठलग्नं शाकान्नं प्राश्योक्तम् अनेन विश्वात्मा भगवान् प्रीयताम् इति। अथ भगवान् भोक्तुं मुनिसंघमाहूयेति भीमं प्रहितवान्। स च मुनिसङ्घः भगवत्तर्पितत्वात् अतितृप्तः वृथा पाकभयात् पलायित इति ॥ ११ ॥

यत्तेजसेति। यस्य तेजसा सगिरिजः पार्वतीयुक्तः स भगवान् शूलपाणिः शिवो मया युधि विस्मापितः सन्निजं पाशुपताख्यमस्त्रं मे मह्यमदात्। तथा अन्येऽपि शक्रादयो लोकपालाः विस्मापिता निजान्यस्त्राणि ददुः। यस्य तेजसाऽहममुनैव कलेवरेण मनुष्यदेहेन महेन्द्रभवने महतो महेन्द्रस्यासनार्धं प्राप्तः ॥ १२ ॥ तत्रैवेति। तत्रैवेन्द्रभवने विहरतो मे येन भगवताऽनुभावितं प्रभावयुक्तं कृतं गाण्डीवलक्षणं गाण्डीवेन सह लक्ष्यत इति तथाभूतं गाण्डीवं लक्षणं चिह्नं यस्य वा गाण्डीवज्याघातलक्षणं वा भुजदण्डयोर्युग्मं सेन्द्रा देवा अरातिवधाय कालकेयनिवातकवचाद्यसुरवधार्थं श्रिताः सहायत्वेनाश्रिताः। हे आजमीढ! हे राजन्! तेन भूम्ना परिपूर्णतमेन पुरुषेण श्रीकृष्णेनाहमद्य मुषितोऽस्मि। स मां विहाय स्वलोकं जगामेत्यर्थः। भूम्ना अतिशयेन मुषित इति वा ॥ १३ ॥ यद्बान्धव इति। यो भगवान् बान्धवः सहायभूतो यस्य सोऽहमेक एव नास्त्यन्तो गाम्भीर्येण पारं च देशतो यस्य तम् अतीर्याणि दुस्तराणि सत्त्वानि भीष्मादिरूपाणि तिमिङ्गिलादीनि यस्मिंस्तम्। अतीर्येत्यत्र अतार्येति वाच्ये इत्त्वाव आर्षः। कुरूणां बलाब्धिं सेनासमुद्रं पोतेनेव रथेन ततरे तीर्णवान्। ततरेऽहमित्यार्षं ततराहमित्युचितम्। किंच यद्बान्धवेन मया उत्तरगोग्रहे भीष्मादीन्निर्जित्य तैर्नीतं बहुधनं गोगणरूपं प्रत्याहृतं शत्रूणां शिरोभ्यः सकाशात्तेजस्पदं प्रभावस्य व्यञ्जकं सत्त्वम्। कस्कादित्वकल्पनया तेजास्पदमिति पाठे आस्पदमिति पदेन सन्धिरार्षः। मणिमयं मुकुटोष्णीषादिरूपं च मोहनास्त्रेण मोहयित्वा हृतम् ॥१४॥ यो भीष्मेति। हे विभो! अदभ्राणां बहूनां राजन्येषु वर्याणां श्रेष्ठानां रथानां मण्डलैः समूहैर्मण्डितासु भीष्मकर्णादिचमूषु यो भगवान् सारथिरूपेण ममाग्रेचरः अवस्थितः सन् दृशा दृष्टिमात्रेणैव तेषां रथयूथपानाम् आयुः मनांसि उत्साहादिशक्तीः सहो बलम् ओजः अस्त्रादिकौशलं च आछ्रत् हृतवान् ॥ १५ ॥ यद्दोःष्विति। यस्य दोःषु भुजेषु मध्ये प्रणिहितं तेनैव कृपया स्थापितं मा माम् अमोघः महिमा येषां तान्यपि गुरुर्द्रोणः भीष्मः कर्णः द्रौणिरश्वत्थामा त्रिगर्तः तद्देशाधिपतिः सुशर्मा शलः शल्यः सैन्धवो जयद्रथः बाह्लिकः शन्तनोः भ्राता एतदाद्यैः निरूपतानि प्रयुक्तान्यमोघमहिमानि अप्रतिहतप्रभावाणि अस्त्राणि नृहरिदासं प्रह्लादं यथा आसुराणि असुरैः प्रयुक्तान्यस्त्राणि न स्पृशन्ति स्मेति प्रतीकाराकरणेऽप्यस्पर्शे दृष्टान्तः। तथा नोपस्पृशुः न स्पृशन्ति स्म ॥ १६ ॥ सौत्ये इति। भव्याः श्रेष्ठाः अभवाय मोक्षाय यस्य पादपद्मं भजन्ति स आत्मदः भक्तेभ्य आत्मानमपि ददाति स ईश्वरोऽपि कुमतिना मे मया सौत्ये सारथ्ये वृतः स्थापितः। यमन्ये भजन्ति तमभव्योऽहं भजनमकारयमित्यर्थः। तत्रापि तस्य दयां शृण्वित्याह। श्रान्ता वाहा यस्य तं जयद्रथवधे हि जलपानं विना अश्वाः श्रान्ताः ततो रथादवतीर्य बाणैर्भुवं भित्त्वा मया जलं सम्पादितं तदा भुविष्ठं भूमौ स्थितमपि मां यस्यानुभावेन निरस्तं चित्तम् अयं मारणीय इति ज्ञानं येषां ते तथाभूताः सन्तोऽरयो रथिनोऽपि न प्राहरन् न प्रहृतवन्तः ॥ १७ ॥

नर्माणीति। हे नरदेव! उदारं श्रेष्ठं रुचिरं सुन्दरं च यत् स्मितं तेन शोभितानि अत एव हृदिस्पृशानि मनोज्ञानि माधवस्य नर्माणि परिहासवाक्यानि तथा हे पार्थ! हे अर्जुन। हे सखे! हे कुरुनन्दनेति संजल्पितानि मधुरवाक्यानि इदानीं

स्मर्तुर्मम हृदयं लुठन्ति लोठयन्ति क्षोभयन्ति । णिजभाव आर्षः । चुरादेरनित्यो णिज् वा । अन्तर्भावितण्यर्थता वा । हृदये इति सप्तम्यन्तोऽपि पाठः ॥ १८ ॥ शय्येति । शय्या आसनम् अटनं भ्रमणं विकत्थनं स्वश्लाघा भोजनं च एतदादिषु ऐक्यात् अव्यतिरेकाद्धतोः कदाचिद्व्यभिचारं दृष्ट्वा हे वयस्य ! ऋतवान् सत्ययुक्तस्त्वमिति वक्रोक्त्या विप्रलब्धस्तिरस्कृतोऽपि । ऋतमानिति पाठे वत्त्वाभाव आर्षः । ऋतुमानिति पाठे ऋभवो देवाः सेवका अस्य सन्तीति यतोऽसौ महानतो महितया स्वमहत्त्वेन महामहितया इति पाठे अतिमहत्त्वेन सख्युरघं यथा सखा सहते तथा तनयस्य अघं यथा पिता सहते तद्वत् कुमतेः मे मम सर्वमघमपराधं सेहे ॥ १९ ॥ पराजितो वाथ भवानिति त्वया तर्कितमपि सत्यमित्याह—सोऽहमिति । अङ्ग हे नृपेन्द्र ! स हरेः सखाऽहं प्रियेण सख्या सुहृदा हितैषिणा पुरुषोत्तमेन हरिणा रहितः अत एव हृदयेन शून्यः उरुक्रमस्य हरेः परिग्रहं षोडशसहस्रस्त्रीरूपं रक्षन्नध्वनि मार्गे असद्भिर्नीचैरतितुच्छैश्च गोपैरबलेव स्त्री इव विनिर्जितोऽस्मि । भगवत्पत्नीनां नीचहस्तगमनं च शापवशात् । एता हि देवाङ्गनाः स्नानं कुर्वन्तमष्टावक्रमृषिं स्तुत्वा ततो विष्णुर्वः पतिर्भविष्यतीति वरं प्राप्य तस्य जलाद्बहिर्निःसरणे तदङ्गवक्रिमदर्शनजादुपहासादस्युहस्तगता भविष्यथेति शापं च प्रापुः । किंच गोपदस्युरूपमपि शापपालनार्थं भगवानेव दधार । "न वयं साध्व साम्राज्यम्" इत्यादिना भगवत्प्रियाभिर्व्रजस्त्रीत्वं काङ्क्षितं तदेव रूपान्तरेण ताभिः प्राप्तं तदेवेदं भगवता प्रापितम् । अन्यथा नीचस्पर्शे तासां सद्य एवान्तर्द्धानं स्यात् । अतः प्रकारान्तरेण तासां व्रजस्त्रीत्वप्राप्तिरित्यपि ज्ञेयम् । अत एव गोपैः भूम्यादिपालकैः असद्भिः न विद्यन्ते सन्तो येभ्य इति वास्तवोऽर्थः ॥ २० ॥ तद्वै इति । यतः धनुरादेः नृपतयो माम् आनमन्ति प्रणमन्ति तद्वै तदेव धनुरस्ति त एव इषवो बाणाः स एव रथः त एव हया अश्वाः स एवाहं रथी च तथापि यथा भस्मन् भस्मनि विधानेनापि हुतम् । ङिलुक् छान्दसः । यथा वा कुहकात् अतिप्रीतादपि मायाविनः सकाशाद्राद्धं लब्धं वस्तु यथा वा ऊष्याम् ऊषरभूमौ । ङीप् त्वार्षः । उप्तं बीजं निष्फलं भवति तथा ईशरिक्तं श्रीकृष्णरहितं तद्धनुरादिकं सर्वं क्षणेनासत्प्रायं कार्याक्षममभूत् ॥ २१ ॥ राजन्निति द्वयम् । हे राजन् ! सुहृत्पुरे द्वारकायां त्वयाऽभिपृष्टानां विप्रशापविमूढानां वारुणीं पैष्टीं मदिरां पीत्वा मदेनोन्मथितं चेतो येषाम् अन्योन्यम् अज्ञानतामिव मिथः मुष्टिभिर्निघ्नतां नोऽस्माक सुहृदां बन्धूनां मध्ये चत्वारः पञ्च वा इति चतुष्पञ्चावशेषिताः । डच् । "वष्टिभागुरि०" इत्यल्लोपः ॥ २२–२३ ॥ प्रायेणेति । एतत् यादवकुलोपसंहाररूपं प्रायेण भगवत ईश्वरस्य कृष्णस्यैव विचेष्टितं लीला । कुतो यत् यस्मादीश्वरादेव भूतानि दीनि पितृपुत्रादीनि च मिथो निघ्नन्ति मिथो भावयन्ति पालयन्ति च ॥ २४ ॥ जलौकसामिति द्वयम् । हे राजन् ! जले ां मत्स्यादीनां मध्ये यद्वत् यथा अणीयसः सूक्ष्मान्महान्तोऽदन्ति भक्षयन्ति यथा च दुर्बलान् बलिनो घ्नन्ति यथा च महान्तो बलिनश्च मिथो घ्नन्ति । एवं विभुः हरिः बलिष्ठैर्महद्भिश्च पाण्डवैः इतरान् दुर्योधनजरासन्धादीन्निहत्य तादृशैः यदुभिरितरान् दुर्बलान् दुष्टान् संजहार । यदूंस्तु यदुभिरन्योन्यं संजहार एवं भूभारान् संजहार ॥ २५–२६ ॥

अतः परं वक्तुं न शक्नोमीत्याह— देशेति । यस्मिन्देशे यस्मिन्काले यस्मिन्वार्थे यानि युक्तानि समुचितानि तानि अत एव हृदि ये तापाः तान् उपशमयन्ति तादृशानि गोविन्दस्याभिहितानि भाषणानि गीतादिरूपाणि स्मरतो मे मम चित्तं हरन्ति ॥ २७ ॥ एवमिति । सूतोक्तिः । एवमतिगाढेनापारेण सौहार्देन प्रेम्णा श्रीकृष्णस्य पादसरोरुहं चिन्तयतो जिष्णोरर्जुनस्य मतिर्विमला रागादिरहिता अत एव शान्ता विशोकाऽऽसीत् ॥ २८ ॥ वासुदेवेति द्वयम् । वासुदेवस्याङ्घ्र्योरनुध्यानेन परिबृंहितं रंहो वेगो यस्यास्तया भक्त्या निर्मथिताः उन्मूलिताः अशेषाः कषायाः कामादयो यस्याः सा धिषणा बुद्धिर्यस्य तथाभूतो विभुरर्जुनः संग्राममूर्द्धनि युद्धसमारम्भे यद् भगवता गीतं गीतामुखेनोपदिष्टं ज्ञानं तन्महता कालेन कर्मणा तमसा भोगाभिनिवेशेन च रुद्धं तिरोहितमपि पुनरध्यगमत् ॥ २९–३० ॥ विशोक इति । शोकस्य हि हेतुर्द्वैतभ्रमः तस्य स्थूलदेहः तस्य लिङ्गदेहः तस्य सत्त्वादयो गुणाः तेषामविद्या इति शास्त्रप्रक्रिया । तत्र ब्रह्मसम्पत्त्या सर्वं खल्विदं ब्रह्म ब्रह्मास्मीति ब्रह्मात्मज्ञानेन लीना प्रकृतिरविद्या यस्मिंस्तन्नैर्गुण्यं भवति नतु सुषुप्तिप्रलययोरिवाविद्याशेषम् । तस्मान्नैर्गुण्याद्गुणकार्यलिङ्गनाशः अलिङ्गत्वाच्चासंभवः सम्यग्भोगाय पुनः पुनर्भवतीति संभवः । स्थूलशरीरं तदभिमानरहितः ततश्च तत्परिच्छेदाभावात् संछिन्नो द्वैतलक्षणः संशयो भ्रमो यस्य सोऽर्जुनो विशोको जातः ॥ ३१ ॥ निशम्येति । भगवतो मार्गं वैकुण्ठगमनं यदुकुलस्य संस्थां विनाशं च निशम्य निभृतात्मा निश्चलचित्तः युधिष्ठिरः स्वःपथाय परलोकमार्गं गन्तुं मतिं चक्रे ॥ ३२ ॥ पृथेति । पृथापि धनञ्जयेनोदितमुक्तं यदूनां नाशं तां "सौदामिन्या यथाकाशे" इत्यादिना एकादशे दुर्लक्ष्यत्वेन वक्ष्यमाणां भगवतो गतिं च अनुश्रुत्य निशम्य अधोक्षजे भगवति एकान्तभक्त्या निवेशित आत्मा मनो यया सा तथाभूता सती संसृतेरुपरराम जीवन्मुक्ता बभूव । देहं जहाविति वा ॥ ३३ ॥ तदेवमुक्तमपि वा यादवेभ्यो भगवतो वैलक्षण्यमबुद्ध्वा तत्साम्यं वदतो मन्दमतीन् प्रति स्पष्टयति—ययेति । अजः श्रीकृष्णः यया यादवसमूहादिरूपया तन्वा भुवो भारमहरत्तां तनुं कण्टकं कण्टकेनेव यथा कण्टकं गृहीत्वा तेन पादौ प्रविष्टं कण्टकमुद्धृत्य पुनः कण्टकद्वयं दूरादेव विसृज्यते तथा विजहौ । यतः द्वयं भूभारभूततनुस्तद्धर्तृतनुश्चेति द्वयमीशितुरीश्वरस्य संहार्यत्वेन सममेव ॥ ३४ ॥

श्रीकृष्णमूर्त्तेर्विशेषमाह---यथेति। नटो यथा निजरूपेण स्थित एव मत्स्यादिरूपाणि धत्ते यथा च पुनस्तानि जह्यात् जहाति तथा भगवानपि निजरूपे स्थित एव भूभारावतारार्थं मनुष्यकलेवरं धृत्वा येन भूभारः क्षपितोऽवतारितस्तदपि कलेवरं जह्यावन्तर्द्धानं कृतवान्। भगवद्विग्रहस्य सच्चिदानन्दरूपत्वेन भौतिकविग्रहवत्त्यागासंभवात्। तथा च वाक्यं "यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः। स सर्वस्माद्बहिष्कार्यः श्रौतस्मार्तविधानतः' ॥ ३५ ॥ यदेति। श्रवणीया श्रवणार्हा सती कथा यस्य सः मुकुन्दो भगवान् यदा स्वतन्वा इमां महीं जहौ। स्वतनोरेव वैकुण्ठारोहात् तदा तस्मिन्नेव अहः अहनि। सप्तम्या लुगार्षः। अप्रतिबुद्धचेतसामविवेकिनामधर्महेतुः विवेकिनां तु न प्रभुरित्यर्थः। कलिरन्ववर्त्तत। ततः पूर्वमंशेन प्रविष्टोऽपि तदा सर्वतः प्रसृतवान्॥ ३६ ॥ युधिष्ठिर इति। तदा बुधः धीमान् युधिष्ठिरः पुरे राष्ट्रे देशे गृहे च आत्मनि मनसि लोभः अनृतं जिह्मं कौटिल्यं हिंसनं परपीडा इत्यादीनामधर्माणां चक्रं यत्र तत् तस्य कलेः परिसर्पणं प्रसरणं विभाव्य पर्यालोच्य गमनाय पर्यधात्तदुचितं परिधानं कर्त्तव्यं कृतवान्॥ ३७ ॥ स्वराडिति। स्वराट् राजा युधिष्ठिरः विनयिनं शिक्षितं गुणैरौदार्याद्यैरात्मनः सुसममतिसदृशं स्वपौत्रं परीक्षितं तोयं समुद्रोदकमेव नीविः परिधानविशेषो यस्यास्तस्याः भूमेः पतिं पतित्वेन गजाह्वये हस्तिनापुरेऽभ्यषिञ्चत्॥ ३८ ॥ मथुरायामिति। मथुरायां वज्रनामकमनिरुद्धस्य पुत्रं शूरसेनदेशस्य पतिं पतित्वेनाभ्यषिञ्चत्। ततः ईश्वरः राजा युधिष्ठिरः प्राजापत्यां प्रजापतिर्देवताकामिष्टिं निरूप्य कृत्वा अग्नीन् गार्हपत्यादीनपिवत् आत्मन्यारोपयामास॥ ३९॥ विसृज्येति द्वयम्। निर्ममः निरहंकारश्च सम्यक् छिन्नमशेषबन्धनमविद्याख्यं यस्य सः युधिष्ठिरः तत्र गृह एव तद्राजोचितं दुकूलवलयादिकं सर्वं विसृज्य मनसि वाचं जुहाव। वाचमित्युपलक्षणं सर्वाणीन्द्रियाणि मनसि जुहाव। मनोधीनवृत्तित्वात्तदभेदं भावयामासेत्यर्थः। तन्मनः प्राणे प्राणाधीनवृत्तित्वात् तं प्राणं च इतरेऽपाने स्मिन्नभाव आर्षः। अपानेन प्राणकर्षणात् उत्सर्गो नामापानव्यापाररूपस्तेन सहितमपानं मृत्यौ तदभिमानिदेवतायां जुहाव। अनेनैव वागदीन्द्रियेष्वपि तत्तत्कर्मसाहित्यं ज्ञेयम्। तं च मृत्युं पञ्चत्वे पञ्चमहाभूतानामैक्यरूपे देहेऽजोहवीत्। देहस्यैव मृत्युर्नात्मन इति भावितवान्। यङ्लुगन्ताल्लङ्॥ ४०-४१॥ त्रित्वे इति। अथ पञ्चत्वं पृथिव्यादिभूतपञ्चकं त्रित्वे गुणत्रये हुत्वा तच्च त्रित्वमेकत्वे अविद्यायां मुनिः मननशीलो युधिष्ठिरोऽजुहोत्। तच्च सर्वं सर्वारोपकारणमविद्यामात्मनि जीवेऽजुहोत्। तं च शोधितमात्मानम् अव्यये अविकारे ब्रह्मणि अजुहवीत् अजोहवीत्। न तस्यान्यत्र लय इत्यर्थः। गुणाभाव आर्षः॥ ४२॥

चीरेति सार्द्धम्। चीरवासाः निराहारः बद्धवाक् मौनी मुक्तमूर्द्धजः लोकसम्बन्धनिवृत्त्यर्थं जडः शून्यहृदयः उन्मत्तपिशाचौ स्फुटौ। तद्वत् आत्मनः रूपं दर्शयन् अनवेक्षमाणोऽनुजभार्यादिप्रतीक्षामकुर्वन् यथा बधिरस्तथा केषामपि वचनमशृण्वन् गृहान्निरगात्॥ ४३ ॥ उदीचीमिति। हृदि परं ब्रह्म ध्यायन् यतः यां दिशं गतो जनः संसारे नावर्त्तेत तां महात्मभिः मुनिभिगतपूर्वां पूर्वसेविताम् उदीचीमुत्तरामाशां दिशं प्रविवेश॥ ४४॥ सर्वे इति। भुवि याः प्रजास्ताः अधर्मस्य मित्रेण कलिना स्पृष्टा व्याप्ता दृष्ट्वा कृती निश्चयो गृहत्यागादिरूपो यैस्ते सर्वे भ्रातरो भीमादयः तं युधिष्ठिरमनु निर्जग्मुः॥ ४५॥ ते इति। साधु सम्यक् कृताः सर्वेऽर्थाः यज्ञादिसाधनानि यैस्ते युधिष्ठिरादयः वैकुण्ठस्य श्रीकृष्णस्य चरणाम्बुजम् आत्मन आत्यन्तिकं मुख्यं शरणं ज्ञात्वा तदेव मनसा धारयामासुः॥ ४६॥ तद्ध्यानेति द्वयम्। तस्य हरेर्ध्यानेनोद्रिक्तया वृद्धया भक्त्या विशुद्धा धिषणा बुद्धिर्येषां ते तस्मिन् शास्त्रप्रसिद्धे परे श्रेष्ठे नारायणस्य पदे चरण एवैकान्ता निश्चला मतिर्येषां ते तथाभूताः विरजेन शुद्धेन आत्मना एव विधूतं कल्मषं येषां ते युधिष्ठिरादयः विषयेष्वेव आत्मा मनो येषां तैः असद्भिः दुरवापाम् अप्राप्यां स्थानं भगवत्स्थानरूपां गतिम् अवापुः। विरजेन शुद्धेनात्मना ननु लिङ्गशरीरेण तस्मिन् परे नारायणपद एकान्तमतयस्ते विधूतकल्मषाणामास्थानभूतां गतिमवापुरिति वान्वयः। अत्र कल्मषा इति निर्विसर्गः पाठः। 'खर्परे०' इति विसर्गलोपः॥ ४७-४८॥ विदुरोऽपीति। आत्मवान् वशीकृतचित्तः कृष्णस्यावेशेन स्वान्तःप्रवेशेन हेतुना तस्मिन्नेव चित्तं यस्य तथाभूतः विदुरोऽपि प्रभासे तीर्थे देहं परित्यज्य तदानीमानेतुमागतैः पितृभिः सह स्वक्षयं स्वाधिकारस्थानं ययौ। 'यावदधिकामवस्थितिरधिकारिणाम्' इति न्यायादयमधिकारसमाप्तेरर्वाक् भगवत्प्राप्तिस्तु नाभूदित्यर्थः॥ ४९॥ द्रौपदीति। तदा द्रौपदी च पतीनामनपेक्षतां स्वापेक्षाराहित्यमाज्ञाय ज्ञात्वा वासुदेवे भगवति एकान्ता अनन्या मतिर्यस्याः सा तथाभूता सती तं भगवन्तमाप प्राप॥ ५०॥ य इति। भगवत्प्रियाणां पाण्डोः सुतानाम् इत्येवंप्रकारकम् एतत् अलं स्वस्त्ययनम् अतिशुभावहं पवित्रं च संप्रयाणं गृहान्निर्गमनं यः प्राणी श्रद्धया शृणोति सोऽपि हरौ भक्तिं लब्ध्वा सिद्धिं भगवत्प्राप्तिम् उपैति प्राप्नोति॥ ५१॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः प्रथमस्यामूं पञ्चदशे व्यधात्!

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चदशोध्यायः॥ १५॥

—:❀:—

## अथ षोडशोऽध्यायः

सूत उवाच

ततः परीक्षिद्द्विजवर्यशिक्षया महीं महाभागवतः शशास ह ।
यथा हि सूत्यामभिजातकोविदाः समादिशन्विप्र महद्गुणस्तथा ॥ १ ॥

संवादः षोडशे भूमिधर्मयोः कलिखिन्नयोः । परीक्षित्प्राप तत्रात्र श्लोकास्त्रिंशच्च सप्त ( ३७ ) च ।
चत्वार्युवाचेति सार्द्धाः सिंधुर्वेदा ( ४४।। ) अनुष्टुभः ॥ १६ ॥

तत इति । हे विप्र शौनक ! सूत्यां जन्मदिनेऽभिजातकोविदाः जातककर्मनिपुणाः ब्राह्मणाः यथा हि समादिशन् पार्थप्रजाविता साक्षादिक्ष्वाकुरिव मानव इत्यादिनोक्तवन्तस्तथैव महान्तो गुणा यस्मिन् सः । आत्वाभावः आर्षः । महाभागवतः परीक्षित् द्विजवर्याणां ब्राह्मणानां शिक्षया महीं शशास पालयामास ॥ १ ॥ स इति । स परीक्षित् उत्तरस्य स्वमातुलस्य तनयामिरावतीम् उपयेमे उदुवाह । तस्यां चेरावत्यां जनमेजयादींश्चतुरः सुतानुत्पादयत् । अडभाव आर्षः । अक्षराधिक्यं छान्दसम् । उत्पादयन्निति पाठे हेतौ शता । सुतान् उत्पादयितुमिरावतीम् उपयेमे इति योजना ॥ २ ॥ आजहारेति । शारद्वतं कृपं गुरुं कृत्वा वृत्वा गङ्गायां गंगातीरे भूरिदक्षिणान् त्रीनश्वमेधान् आजहार कृतवान् । यत्र येषु अश्वमेधेषु देवा इन्द्रादयः अक्षगोचराः प्रत्यक्षाः बभूवुः ॥ ३ ॥ निजग्राहेति । वीरः परीक्षित् दिग्विजये निमित्ते विचरन् क्वचिद्देशे ओजसा बलात्कारेण कर्मणा रूपेण च शूद्रमपि नृपलिङ्गधरं पदा पादेन गोमिथुनं स्त्रीपुंसयोर्गवोः युग्मं घ्नन्तं कलिं निजग्राह स्ववशीकृतवान् ॥ ४ ॥ कस्येति । नृपः परीक्षिद्दिग्विजये कलिं वधयोग्यमपि कस्माद्धेतोः केवलं निजग्राह न तु हतवान् यो गां पदां पदा पादेन अहनत् अहन् । शपो लुगभावश्छान्दसः । यतः असौ कलिर्नृदेवचिह्नधृक् सः शूद्रकः । निन्दायां कन् । शूद्रेष्वप्यतिकुत्सितः अतो वधयोग्य एव शूद्रः । क इति पृथक्पदपाठे योऽसौ गां पदाऽहन् । धृजेः क्विप् । शूद्रः कलिः कः कीदृग्दोषवान् ॥ ५ ॥ तदिति । हे महाभाग ! तत् कलिनिग्रहादिकं यदि कृष्णकथा आश्रयो यस्य तादृग् भवेत् अथवा अस्य कृष्णस्य पदाम्भोजस्य मकरन्दं रसं लिहन्ति तेषां सतां कृष्णभक्तानां कथाश्रयं भवेत्तर्हि कथ्यतामन्यथा तु न कथनीयम् ॥ ६ ॥ किमिति । अङ्ग हे सूत ! ऋतं सत्यं मोक्षम् इच्छतां तत्प्राप्तिं कामयमानानां क्षुद्रायुषां मर्त्यानां मरणधर्मवतां नृणामस्माकं यत् येभ्य आयुषः असद्व्ययः निरर्थकः क्षयो भवति तैरन्यैः कृष्णतद्भक्तकथाश्रयव्यतिरिक्तैरसद्भिर्नरकहेतुभिरालापैर्वर्णितैः श्रुतैर्वा किं प्रयोजनं न किंचित् ॥ ७ ॥ इहेति । इह नैमिषे क्षेत्रे सत्रयागे वा शमितुरिदं कर्म शामित्रं यज्ञे पशुमारणं तत्र कर्मणि यज्ञांगपशुमारणे कार्ये भगवान् मृत्युः उपहूतः आकारितोऽस्ति । स चान्तको यावदिहास्ते तावदत्र कश्चिदपि न म्रियते ॥ ८ ॥ एतदिति । हि निश्चये । अहो अत्याश्चर्यभूतं हरिलीला एवामृतमत्र तत् वचो नृलोके जनैः पीयेत । कर्मणि लिङ् । "पीङ् पाने" इत्यस्य कर्त्तरि वा एतदर्थमेव भगवान्मृत्युः परमर्षिभिरत्राहूतः ॥ ९ ॥

भगवद्यशःश्रवणाभावे तु आयुर्व्यर्थमित्याह—मन्दस्येति । मन्दस्य अलसस्य मन्दभाग्यस्य वा मन्दप्रज्ञस्य तुच्छबुद्धेः मन्दायुषश्च वै निश्चये हरिलीलामशृण्वतो नक्तं रात्रौ यद्वयस्तन्निद्रया ह्रियते ह्रस्यते । दिवा अहनि च यद्वयस्तत्तु व्यर्थैः कर्मभिर्ह्रियते ॥ १० ॥ यदेति । यदा कुरुजाङ्गले हस्तिनापुरे वसन् संयुगे युद्धे शौण्डिः शूरः पाठान्तरे शौरिः कृष्णस्तत्तुल्य इत्यर्थः । परीक्षित् निजचक्रवर्त्तिते स्वसेनया पालिते कुरुजाङ्गले देशे कलिं प्रविष्टं शुश्राव । ततः तदा तमेवानतिप्रियां वार्त्ताम् अत्र प्रविष्टः कलिरेवानतिप्रिया वार्तेत्यनुवादविधेयभावो विवक्षितः । अतिशब्दाद्युद्धकौतुकसम्पत्त्या कलिजिघांसया च प्रिया च निशम्य दुष्टग्रहाय शरासनं धनुराददे ॥ ११ ॥ खलमिति । तदा सुष्ठु अलंकृतं श्यामैः तुरङ्गैर्योजितं मृगेन्द्रः सिंहस्तेनाङ्कितो ध्वजो यस्मिंस्तं रथमास्थितो भूत्वा रथाश्वद्विपपत्तिभिर्युक्तया स्वसेनया वृतश्च दिग्विजयाय स्वपुरान्निर्गतः ॥ १२ ॥ भद्राश्वमिति । भद्राश्वादीन् पञ्चमस्कन्धे प्रसिद्धान् वर्षविशेषान् किंपुरुषादीनि वर्षाणि च विजित्य बलिं करं जगृहे ॥ १३ ॥ तत्रेति त्रयम् । तत्र तत्र देशे प्रगीयमाणं "कृत्यचः" इति णत्वम् । नकारपाठस्त्वार्षः । स्वपूर्वेषां युधिष्ठिरादीनां तथा महात्मनामन्येषां च कृष्णमाहात्म्यसूचकं

यश उपश्रृण्वानः श्रृण्वन्। शानजार्षः चानश् वा। अश्वत्थाम्नो ब्रह्मास्त्रतेजसः सकाशादात्मानं कृष्णेन परित्रातं परिपालितं श्रृण्वन् वृष्णीनां यादवानां पार्थानां च परस्परं स्नेहं च श्रृण्वन् तेषां यादवपाण्डवानां केशवे भक्तिं च श्रृण्वन् परमसंतुष्टः प्रीत्या उज्जृम्भिते प्रफुल्ले लोचने यस्य स महामना उदारचित्तः राजा तेभ्यः पूर्वोक्तयशआदिश्रावयितृभ्यो महाधनानि बहुमूल्यद्रव्याणि वासांसि मुक्तादिहारांश्च ददौ॥ १४–१६॥ सारथ्येति। स्निग्धेषु पाण्डुषु पाण्डुपुत्रेषु विष्णोः सारथ्यं सूतकर्म पारिषदं सभापतित्वं पारषदमिति पाठस्त्वार्षः। सेवनं चित्तानुवृत्तिः सख्यं दौत्यं च वीरासनं रात्रौ खड्गहस्तस्य तिष्ठतो जागरणम् अनुगमनं पश्चाच्चलनं स्तवनं प्रणामश्चेत्यादीनि कर्माणि तानि श्रृण्वन् तथा विष्णोर्जगत्कर्तृकां प्रणतिं च श्रृण्वन् नृपतिः परीक्षित् विष्णोश्चरणारविन्दे भक्तिं करोति स्म॥ १७॥ तस्येति। तस्य परीक्षित् एवं पूर्वेषां युधिष्ठिरादीनां वृत्तिमन्वहं वर्तमानस्य सतो नातिदूरे समीपमेव शीघ्रमेव वा किल यदाश्चर्यमासीत्तन्मे मत्त कथयतः निबोध॥ १८॥ धर्म इति। युगारम्भक्षणत एव धर्मपृथिव्यावलयस्तथाभूता भवन्तो लोकैरदृश्या अपि दिदृक्षणीयत्वात् अनुध्यायता परीक्षिता योगदृशा दृष्टा इति ज्ञेयम्। तथा च धर्मः धर्माधिदेवो वृषरूपधर एकेन पदा पादेन चरन् विच्छायां निस्तेजस्कां विवत्सां मृतवत्सां मातरमिव अश्रुवदनां पुत्ररहिता माता यथा रोदिति तथा रुदतीं गां गोरूपधरां पृथिवीम् उपलभ्य दृष्ट्वा पृच्छति स्म॥ १९॥

कच्चिदिति। हे भद्रे! ते तवात्मनो देहस्यानामयमारोग्यं कच्चिदस्ति? यतः बहिरामयदर्शनाभावेऽपि ईषत् म्लायता हर्षक्षयमुपगतेन मुखेन विच्छाया निस्तेजस्काऽसि। अतोऽहं भवतीं त्वामन्तर्हृदये आधिः क्लेशो यस्यास्तथाभूतामालक्षये तर्कयामि। हे अम्ब! दूरे स्थितं कञ्चन बन्धुं किं शोचसि? शालिनीछन्दोभङ्गः॥ २०॥ पादैरिति। किं वा पादैस्त्रिभिर्न्यूनमत एवैकः पादो यस्य तं मा मां शोचसि अथवा वृषलैः शूद्रप्रायै राजभिर्भोक्ष्यमाणं पुंस्त्वमात्मविशेषणतया आत्मानं शोचसि? अहो अथवा हृतो विनष्टो यज्ञियो हविर्भागो येषां तान् सुरादीन् देवादीन् शोचसि? उतस्वित् अथवा मघवतीन्द्रे अवर्षति सति दुर्भिक्षपीडिताः प्रजाः शोचसि? शालिनीछन्दोभङ्गः॥ २१॥ अरक्ष्यमाणा इति। हे उर्वि पृथ्वि! पतिपुत्रादिभिररक्ष्यमाणाः स्त्रियः स्त्रीः शोचसि अथवा पित्रादिभिररक्ष्यमाणान् बालान् शोचसि? प्रत्युत पुरुषादा राक्षसा स्तत्तुल्यैः तैरेवार्त्तान् पीडितान् तान् शोचसि अथवा कुत्सितं कर्म यस्यास्मिन् ब्रह्मकुले ब्राह्मणकुले स्थितां देवीं वाचं वेदलक्षणां पाण्डित्यलक्षणां वा सरस्वतीं शोचसि? अथवा अब्रह्मण्ये ब्राह्मणभक्तिहीने राजकुले लोभवशात्सेवकत्वेन स्थितान् कुलाग्र्यान् ब्राह्मणोत्तमान् शोचसि॥ २२॥ किमिति। कलिना उपसृष्टान् व्याप्तान् क्षत्रबन्धून् राजाधर्मान् किं वा शोचसि? तैः क्षत्रबन्धुभिरवरोपितानि उद्वासितानि राष्ट्राणि देशान्वा शोचसि? किं वाऽथवा इतस्ततो निषेधानादरेण सर्वतः अशनं भोजनं पानं प्रसिद्धं वासो वस्त्रं विसर्गरहितपाठे वासः स्थानं स्नानं प्रसिद्धं व्यवायो मैथुनं तेषु उन्मुखम् अभिलाषयुक्तं जीवलोकं शोचसि॥ २३॥ यद्वेति। हे अम्ब! हे धरित्रि! यद्वा ते तव यो भूरिभारस्तस्यावताराय कृतोऽवतारो येन तस्येदानीमन्तर्हितस्य हरेः निर्वाणं मोक्षस्तद्विलम्बितमाश्रितं येषु तानि। पाठान्तरे निर्वाणं विडम्बितम् उपहसितं यैः तानि मोक्षादप्यधिकसुखानि हरेः कर्माणि स्मरती सती। नुमभाव आर्षः। हरिणा विसृष्टा त्यक्ता त्वं शोचसि॥ २४॥ इदमिति। हे वसुन्धरे! सर्वेषामपि बलिनां बलीयसा कालेन ते तव यत्सुरार्चितं देवैरपि बहुमतं सौभगमद्य हृतं तद्वा किं शोचसि? अतो येनाधिना विकर्शिताऽसि कृशत्वं नीताऽसि तस्य तवाधेर्मेन पीडाया इदं मूलं कारणं ममाचक्ष्व मह्यं कथय॥ २५॥ भवानिति षट्कम्। हि निश्चये हे भगवन् धर्म! यन्ममाधिकारणं त्वं ममानुपृच्छसि तत्सर्वं भवान् वेद हि जानात्येव। येन हेतुभूतेन भगवता त्वं सर्वलोकसुखावहैश्चतुर्भिः पादैः वर्त्तसे अवर्त्तथाः। वर्त्तमानसामीप्ये भूते लट्। यत्र च सत्यादयो महागुणा न वियन्ति तेन श्रीनिवासेन रहितं लोकं शोचामीति षष्ठेनान्वयः। सत्यं यथार्थभाषणं शौचं शुद्धत्वं दया परदुःखपरिहारेच्छा क्षान्तिः क्रोधोत्पत्तौ चित्तसंयमः त्यागः अर्थिषु मुक्तहस्तता संतोषः अलंबुद्धिः आर्जवमवक्रता शमो मनोनैश्चल्यं दमो बाह्येन्द्रियनैश्चल्यं तपः स्वधर्मः साम्यमरिमित्रादिबुद्ध्यभावः तितिक्षा परापराधसहनम् उपरतिर्विषयलाभेऽपि तत्रौदासीन्यं श्रुतं शास्त्रार्थविचारः ज्ञानं सर्वज्ञत्वम् आत्मज्ञानं वा विरक्तिः विषयेषु निस्पृहत्वम् ऐश्वर्यं नियन्तृत्वं शौर्यं संग्रामोत्साहः तेजः प्रभावः बलं शरीरसामर्थ्यं दक्षत्वं च स्मृतिः कर्त्तव्यार्थानुसन्धानं स्वातन्त्र्यमपराधीनत्वं कौशलं क्रियानैपुण्यं कान्तिः सौन्दर्यं धैर्यमव्याकुलता मार्दवं मृदुस्वभावः प्रागल्भ्यं प्रतिभातिशयः प्रश्रयो महत्सु विनयः शीलं सद्वृत्तिः सहः ओजो बलानि मनसः ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च सामर्थ्यं भगो भोगास्पदत्वं गाम्भीर्यं दुरवगाह्याभिप्रायत्वमक्षोभ्यत्वं च स्थैर्यं निमित्ते सत्यपि क्रोधादिविकाराराहित्यम् आस्तिक्यं शास्त्रार्थविश्वासः कीर्तिः सुयशः मानः पूज्यत्वम् अनहंकृतिः कार्ये कृतेऽपि गर्वाभावः। एते च पूर्वोक्ता एकोनचत्वारिंशत् अन्ये च ब्रह्मण्यत्वशरण्यत्वभक्तवत्सलत्वादयो महत्त्वमिच्छद्भिः प्रार्थ्याः। नित्याः स्वाभाविका महागुणा अप्राकृताश्चिन्मयाः स्वरूपभूताः यत्र कर्हिचिदपि महाप्रलयेऽपि न वियन्ति न क्षीयन्ते स्म। तेन गुणानां पात्रेण श्रीनिवासेन हरिणा साम्प्रतं रहितं पाप्मना पापहेतुना कलिना ईक्षितम् आविष्टं लोकं जनसमूहं शोचामि॥ २६–३१॥

आत्मानमिति। आत्मानं चानुशोचामि वृषलैर्भोक्ष्यमाणत्वात्। अमरोत्तमं भगवन्तं च शोचामि न्यूनपदत्वात्। देवान् पितॄन् ऋषींश्च शोचामि लोकैस्तत्तोषहेतुयज्ञतर्पणाध्ययनाकरणात्। साधून् शोचामि दुर्जनपीडितत्वात् तथा सर्वान् ब्राह्मणादिवर्णान्

शोचामि ब्रह्मचर्याद्याश्रमांश्च शोचामि नष्टधर्मत्वात् ॥ ३२ ॥ ब्रह्मादय इति । यस्याः श्रियः अपाङ्गमोक्षः स्वस्मिन्कृपादृष्टिपातस्तत्कामाः सन्तो ब्रह्मादयो बहुतिथं बहुकालं तपः समचरन् । सा भगवद्भिरुत्तमैः प्रपन्ना आश्रितापि श्रीर्लक्ष्मीः स्ववासं "पुनश्च पद्मादुद्भूता आदित्योऽभूद्यदा हरिः" इति विष्णुपुराणवचनात्स्वजन्मस्थानमप्यरविन्दवनं विहायालमत्यर्थमनुरक्ता सती यस्य हरेः पादसौभगं चरणसौन्दर्यं भजतेऽनुभवति । प्रपन्नाः इति बहुवचनपाठे भगवन्तं प्रपन्ना अपीति ब्रह्मादिविशेषणम् ॥ ३३ ॥ तस्येति । तस्य भगवतः अब्जं कमलं कुलिशं वज्रम् अङ्कुशः केतुर्ध्वजः तेषां चिह्नानां केतैराश्रयैः श्रीमद्भिः पदैः सम्यगलंकृतान्यङ्गानि यस्याः साऽहं ततो भगवतः सकाशाद्विभूतिं सर्वसमृद्धिमुपलभ्य प्राप्य त्रीन् लोकान् अत्यरोचे अतिक्रम्य शोभितवत्यस्मि । स भगवान् उत्स्मयन्तीं मत्सदृशः स्वर्गादिः कोऽपि लोको नास्तीति गर्वं कुर्वतीम् । शता तत्र मुमभावश्च आर्षः । मां तदन्ते तस्य गर्वस्यान्ते विनाशे विनाशार्थमित्यर्थः । यद्वा तस्या विभूतेरन्ते नाशकाले प्राप्स्यमाने उत्स्मयन्तीं व्यसृजत् त्यक्तवान् ॥ ३४ ॥ यो वै इति । आत्मतन्त्रः स्वतन्त्रः यो वै भगवान् ममातीवभाररूपम् आसुरवंशे असुरसम्प्रयुक्ते वंशे जातानां राज्ञां टजभाव आर्षः । अक्षौहिणीनां शतमपानुदत् अपनीतवान् । तथा ऊनपदं पादत्रयहीनमत एव दुःस्थं त्वामात्मनि स्वस्मिन् यत्पौरुषं सामर्थ्यं तेन सम्पादयन् सम्पादयितुं पादचतुष्टयसम्पन्नं कर्तुं "लक्षणहेत्वोः" इति हेतौ शता । यदुषु रम्यं रमणीयमङ्गं मूर्तिमबिभ्रत् अबिभः धृतवान् । आर्षः प्रयोगः ॥ ३५ ॥ केति । यश्च प्रेमपूर्वकावलोकनेन रुचिरेण मनोहरेण स्मितेन वल्गुभिर्मनोहरजल्पैर्भाषणैश्च मधुमानिनीनां मधुकुलस्त्रीणां सत्यभामादीनां समानं गर्वसहितं स्थैर्यं स्तब्धत्वमितरानधीनत्वमहरत् हृतवान् । यस्य चाङ्घ्रिभ्यां रजस्युद्भूतचिह्नाभ्यां विटाङ्कितायाम् अलंकृतायां मम रोमोत्सवः सस्यादिभिषेण रोमोद्गमो बभूव । तस्य पुरुषोत्तमस्य विरहं का वा सहेत न कापीति ॥ ३६ ॥ ययोरिति । तयोः पृथिवीधर्मयोरेवं कथयतोः सतोः तदा परीक्षिन्नामा राजर्षिः प्राचीं पूर्ववाहिनीं कुरुक्षेत्रस्थां सरस्वतीं तयोः संवादप्रदेशं प्राप्त आगतः ॥ ३७ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायः प्रथमस्याध्याये षोडशे व्यधात् ।

इति श्रीभागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां षोडशोऽध्यायः ॥ १६ ॥

—:❀:—

## अथ सप्तदशोऽध्यायः

### सूत उवाच

**तत्र गोमिथुनं राजा हन्यमानमनाथवत् । दण्डहस्तं च वृषलं ददृशे नृपलाञ्छनम् ॥ १ ॥**

परीक्षिता सप्तदशे कलेर्निग्रह उच्यते । तस्मै स्थानानि दत्तानि तत्र श्लोकाः शराब्धयः ( ४५ ) ।

सप्तोवाचेति षट्चत्वारिंशत् सार्द्धा ( ४६ । ) अनुष्टुभः ॥ १७ ॥

तत्रेति । तत्र तस्मिन् देशे राजा परीक्षित् अनाथवत् वृषलेन हन्यमानं ताड्यमानं गोमिथुनं गवोर्युग्मं नृपस्येव लांच्छनानि चिह्नानि यस्य तस्य त्रेतादिमर्यादाभङ्गेन स्वातन्त्र्यात् तथा दण्डो हस्ते यस्य तं गोमिथुनहन्तारं वृषलं शूद्रं च ददृशे ददर्श । तङार्षः ॥ १ ॥ वृषमिति । मृणालं पद्मकन्दस्तद्वत् धवलं मेहन्तं मूत्रयन्तमिव बिभ्यतम् एतेन पादावशिष्टोऽपि धर्मः प्रतिक्षणं क्षरन्निवास्त इत्युत्प्रेक्षया विनश्यदवस्था सूच्यते । तं वेपमानं नानाविघ्नैः कलिनाऽनिष्पन्नत्वकारणात् सीदन्तं शूद्रेण ताडितम् एकेन पदोपलक्षितं वृषं वृषरूपधरं धर्मं च ददर्श ॥ २ ॥ गामिति । धर्मदुघां यज्ञादिसामग्रीसम्पादकत्वेन धर्महेतुभूतां दीनां भृशं शूद्रस्य पदा हतां विवत्सां सस्यादिप्रसवक्षयात् वत्सरहितामिव अतोऽश्रुवदनां यज्ञाभावात् क्षामां दुर्बलां यवसं तृणं

तृणं पृथ्वीपक्षे तु यज्ञभागमिच्छतीं गां गोरूपधरां पृथ्वीं ददर्श ॥ ३ ॥ पप्रच्छेति। कार्तस्वराः स्वर्णमयाः परिच्छदाः परिकरा यस्मिन् तं रथमारूढः शमारोपितं कलेः पलायनाशङ्कया सज्जीकृतं कार्मुकं धनुर्येन स परीक्षित् मेघतुल्यगम्भीरया वाचा पप्रच्छ ॥ ४ ॥ क इति। अहमेव शरणं रक्षिता यस्य तस्मिन् लोके बली सत् अबलान् दुर्बलान् बलाद्धंसि सः त्वं कः? नटवद्वेषमात्रेण नरदेवोऽसि कर्मणा गोताडनरूपेण तु अद्विजः शूद्रोऽसि ।॥ ५ ॥ क इति। गाण्डीवधन्वना अर्जुनेन सह कृष्णे दूरं गते स्वलोकं प्राप्ते सति रहसि एकान्ते अशोच्यान् निरपराधान् प्रहरन् अस्माभिः शोच्यः वध्यत्वेन चिन्त्यः त्वं वस्तुतः कोऽसि तथापि सर्वथा त्वं वधमर्हसि ॥ ६ ॥

त्वमिति। मृणालमिव धवलः पादैस्त्रिभिर्न्यूनः एकेन पदा चरन् त्वं कः वृषरूपेण नः अस्मान् परिखेदयन् कश्चिद्देवोऽसि किम् ॥ ७ ॥ नेति। नु वितर्के। कौरवेन्द्राणां दोर्दण्डैः परिरम्भिते परिरम्भो जातो यस्य यद्वत् पालितेऽस्मिन् भूतले ते तव शुचोऽश्रूणि विना अन्येषां प्राणिनाम् अश्रूणि न पतन्ति इति खेदहेतुत्वं दर्शितम् ॥८॥ मेति। हे सौरभेय सुरभेः पुत्र! माऽनुशुचः मा शोचीः। आर्षः-च्लेरङ् शुचिरधातार्वा अनेकार्थत्वात् वृषलात शूद्रात् ते तव भयं व्येतु अपयातु। हे अम्ब! ते तव भद्रं सुखमस्तु। खलानां शास्तरि दण्डधरे मयि विद्यमाने सति त्वं मा रोदीः ॥ ९ ॥ एतद्वचनने ममापि हितमित्याह—यस्येति। हे साध्वि! यस्य राज्ञो राष्ट्रे देशे असाधुभिर्दुष्टैः सर्वाः याः काश्चिदपि प्रजाः त्रस्यन्ते पीड्यन्ते तस्य मत्तस्य स्वकर्त्तव्यशून्यस्य कीर्तिर्यशः आयुः भगो भाग्यं गतिः पुण्यलोकप्राप्तिः एते नश्यन्ति ॥ १० ॥ एष इति। यस्मात् एषे आर्त्तानां आर्त्तिनिग्रहो राज्ञां परः धर्मोऽतो भूतद्रुहमत एव असत्तममेनं वधिष्यामि ॥ ११ ॥ क इति। हे सौरभेय! चतुष्पदः तव त्रीन् पादान् कोऽवृश्चत् अच्छिनत्। कृष्णानुवर्त्तिनां राज्ञामस्माकं राष्ट्रे देशे त्वादृशा दुःखिताः जनाः माभूवन् ॥ १२ ॥ आख्याहीति। हे वृष! साधूनाम् अकृतागसां वः भद्रं भवतु। आत्मनस्तव पादच्छेदेन वैरूप्यकर्त्तारं पार्थानामस्माकं कीर्त्तिं दूषयति यः तमाख्याहि ॥ १३ ॥ जन इति। योऽनागसि निरपराधे जने अघं दुःखं युञ्जन् कुर्वन् भवति अस्यैवम्भूतस्य मत् मत्तः सकाशात् सर्वतः सर्वस्मिन्नेतत्काले देशे च भयं स्यात्तथा चासाधूनां दमने कृते साधूनां युष्माकं भद्रमेव स्यात्। उत्तरार्द्धं क्वचिन्नाप्युपलभ्यते ॥ १४ ॥ अनागःस्विति। य इह लोके निरङ्कुशो निर्भयः सन् अनागःसु निरपराधेषु भूतेषु आगस्कृद्द्रोहकृत् भवति तस्य साक्षादमर्त्यस्य देवस्यापि साङ्गदम् अङ्गदसहितं मूलत एव भुजमाहर्त्ताऽस्मि ॥ १५ ॥ राज्ञ इति। अनापदि अपि उत्पथान् धर्ममार्गत्यागिनः अन्यान् असाधून् यथाशास्त्रं शासतो दण्डयतो राज्ञ इह स्वधर्मस्थानामनु निरन्तरं पालनमेव परमो धर्मः। अनापदत्युक्तया आपदि दोषाल्पत्वमाह ॥ १६ ॥ एतदिति। पाण्डुवंशजानां वो युष्माकम् एतत् आर्त्तानामभयं यस्मात्तद्वचो युक्तमुचितमेव। येषां गुणगणैः कृष्णो भगवान् दौत्यादौ कर्मणि कृतः स्थापितः ॥ १७ ॥

केन त्वं क्लेशितोऽसीति प्रश्नस्योत्तरमाह—नेति। हे पुरुषर्षभ! यतो यस्मात् पुरुषात् क्लेशस्य बीजानि पादच्छेदादीनि स्युस्तं पुरुषं क्लेशकारणं वादिनां वाक्यभेदैर्नानाविधवाक्यैर्विमोहिता वयं न विजानीमः। अयं भावः। यद्यप्ययं क्लेशदायी दृश्यते एव परं त्वयं ममैव क्लेशदो नान्यस्येति हेतोः क्लेशबीजं मय्येव किंचिदस्ति। ततश्च यतः क्लेशबीजानि स्युस्तं न विद्मः ॥ १८ ॥ वाक्यभेदानाह—केचिदिति। क्लेशकारणवादिनां मध्ये केचित् विकल्पं भेदं वसते आच्छादयन्ति ये योगिनस्ते आत्मानमेवात्मनः प्रभुं सुखदुःखप्रदमाहुः। यद्वा विकल्पैः कुतर्कैः प्रवृत्ता नास्तिका आत्मानमेव स्वतन्त्रं प्रभुमाहुः। यद्वा केचित्तार्किकाः आत्मनः सुखदुःखबीजमात्मानमेवाहुः। अन्ये ज्योतिर्विदो दैवं ग्रहादिकं प्रभुमाहुः। अपरे मीमांसकाः कर्मैवाहुः। अपरे लोकायतिकाः स्वभावमेवाहुः ॥ १९ ॥ अप्रतर्क्यादिति। मनसा अप्रतर्क्यात् अनिर्देश्याद्वचनागोचरात् परमेश्वरादेव स्वतन्त्रात्कर्मणां फलदातुः सुखदुःखादिकं भवति इति। अपि च केषुचिद्भगवद्भक्तेषु निश्चयः केष्वपीति दुर्लभत्वम् निश्चय इति सिद्धान्तत्वं चोक्तम्। हे राजन्! अत्र विषये अनुरूपं योग्यं पक्षं स्वमनीषया विमृश विचारय ॥ २० ॥ एवमिति। हे द्विजसत्तम शौनक! धर्मे एवं प्रवदति सति स प्रसिद्धः सम्राट् परीक्षित् विखेदः गतभ्रमः सन् समाहितेन मनसा तं धर्मं पर्यचष्ट प्रत्यभाषत ॥ २१ ॥ धर्ममिति। हे धर्मज्ञ! यतो निर्धारितमिव ब्रुवन् घातकं जानन्नपि न सूचयेदित्येवंरूपं धर्ममेव त्वं ब्रवीषि अतः वृषरूपधृक् धर्मोऽसि। धृजेः क्विप्। यत् अधर्मकृतः पापकर्त्तुः स्थानं नरकादि भवति तत् सूचकस्य अपि भवेत् किं पुनः साक्षादभिधायकस्य ॥ २२ ॥ अथवेति। अथवा अप्रतर्क्यादनिर्देश्यादिति त्वया सिद्धान्त उक्त एवेत्यर्थः। तदेवाह। देवस्य भगवतो मायाया गतिः प्रवृत्तिर्नूनं भूतानां प्राणिनां चेतसो वचसश्चागोचराविषयो न भवति इति एष एव निश्चयः सिद्धान्तः ॥ २३ ॥ तप इति। धर्माधिदेवस्य तव तपः शौचं दया सत्यं चेति चत्वारः पादाः प्रकीर्तिताः। तेषु च स्मयो बुद्धिविमोहः सङ्गः स्त्रीसङ्गः मदो गर्वः तैः अधर्मांशैः क्रमेण त्रिभिरंशैर्भग्नाः ॥ २४ ॥ इदानीमिति। इदानीं कलौ हे धर्म! ते पादश्चतुर्थांशः अस्ति तत्रापि सत्यमेवास्ति यतः सत्यात् भवानात्मानं निर्वर्तयेत् कथंचिद्धारयेत्। यद्वा पुरुषस्त्वां साधयेत् तमपि पादम् अनृतेनैधितः संवर्द्धितः कलिरूपोऽयमधर्मो जिघृक्षति महीतुमिच्छति। यद्यपि सत्यमस्तीत्युक्तं तथापीयं

द्वादशस्कन्धदृष्ट्या व्यवस्था बोध्या । कृतयुगे प्रथमं सम्पूर्णश्चतुष्पाद्धर्मः त्रेतायां तु चतुर्णामपि पादानां मध्ये स्मयेन तपः सङ्गेन शौचं मदेन दया अनृतेन सत्यमित्येवं प्रत्येकं चतुर्थांशो हीयते । द्वापरे त्वर्द्धांशः कलौ चतुर्थांशोऽवशिष्यते सोऽप्यन्ते विनङ्क्ष्यति ॥ २५ ॥

इयमिति द्वयम् । इयं च साध्वी परोपकारैकपरा गौर्भूः पृथ्वी भगवता श्रीकृष्णेन न्यासितोऽपनीतः उरुर्भरो यस्याः सा तथा श्रीमद्भिरब्जादिशोभायुक्तैः तस्य भगवतः पदन्यासैः सर्वतः कृतं कौतुकं मङ्गलं यस्यास्तथाभूता च सती अधुना तेनोज्झिता त्यक्ता । अतः अश्रूणि कलयति मुञ्चतीति तथा सती अब्रह्मण्या ब्राह्मणभक्तिहीनाः नृपव्याजाः नृपवेषधारिणः शूद्रा मां भोक्ष्यन्ति । तद्भाव आर्षः । इति दुर्भगा भाग्यहीनेव शोचति ॥ २६–२७ ॥ इतीति । महारथः परीक्षित् इत्येवं धर्मं महीं च सान्त्वयित्वा अधर्महेतवे कलय कलिं हन्तुं निशातं तीक्ष्णं खड्गमाददे गृहीतवान् ॥ २८ ॥ तमिति । तं परीक्षितं जिघांसुं हन्तुमिच्छुमभिप्रेत्य आलक्ष्य नृपलाञ्छनं किरीटादि विहाय भयेन विह्वलः सन् शिरसा तस्य पादयोर्मूलं समगात् ॥ २९ ॥ पतितमिति । पादयोः पतितं कलिं वीक्ष्य दीनवत्सलः शरण्यः आश्रयावहः श्लोक्यः प्रशंसायोग्यः परीक्षित् कृपया नावधीत् । राज्ञोऽयमभिप्रायः—वध्योऽप्ययं शरणमागतो वध्येत चेच्छरणागतवधजन्यमधर्ममालम्ब्य मय्येवासौ प्रवेक्ष्यति न तु मरिष्यतीति नावधीत् । हसन्निव च इदं वक्ष्यमाणमाह स्म । इवशब्देन दुष्टे तस्मिन् कोपो नापगतः परन्तु शरणागतिरूपेण कवचेनैव रक्षित इति कलेश्चातुर्यमेवोपहसति स्मेति । वोक्ष्येत्यत्र वीर इति वा पाठः ॥ ३० ॥ नेति । गुडाकेशोऽर्जुनस्तस्य यशोधराणां कीर्तिवर्द्धनानामस्माकमग्रे बद्धोऽञ्जलिर्येन तस्य तव किंचिदपि भयं नैवास्ति परन्तु मदीये क्षेत्रे मत्पालिते देशे कथञ्चनापि केनाप्यंशेन भवता न वर्तितव्यम् । यतः त्वमधर्मस्य बन्धुः अनुबन्धी असि ॥ ३१ ॥ त्वामिति । नरदेवाः ब्राह्मणा राजानो वा तेषां देहेषु वर्तमानं त्वामनुसृत्य लोभः परधनाभिलाषः अनृतं चौर्यम् अनार्यं दौर्जन्यमंहः पापाचरणं ज्येष्ठा अलक्ष्मीः दारिद्र्यं माया कपटं कलहो विरोधः दम्भो वञ्चनादि अयम् अधर्मस्य पूगः समुदायः प्रवृत्तः ॥ ३२ ॥ नेति । हे अधर्मबन्धो ! यत्र यज्ञवितानविज्ञाः यज्ञानुष्ठानकोविदा जनाः यज्ञैर्यज्ञेश्वरं भगवन्तं यजन्ति । तत्र धर्मेण सत्येन च वर्तितव्ये धर्मग्रहणेन सिद्धेऽपि सत्यस्य प्राधान्यात्पृथगुक्तिः । सत्येन निष्कपटेन धर्मेणेति वा । मदीये देशे ब्रह्मावर्ते सरस्वतीदृषद्वत्योर्देवनद्यो-रन्तर्वर्तिनि देशे त्वया न वर्तितव्यम् ॥ ३३ ॥ यस्मिन्निति । यस्मिंश्च ब्रह्मावर्ते इज्या यज्ञो मूर्तिर्यस्य इज्यात्ममूर्तिरिति पाठे इज्याः पूज्या इन्द्रादयो देवा आत्मनः स्वस्य मूर्तयो यस्य स एष स्थिरजङ्गमानामात्मा तथापि अन्तर्बहिश्च व्याप्य वायुरिव स्थितः । यथा वायुः प्राणरूपेणान्तःस्थितोऽपि बहिरप्यस्ति तथा सर्वान्तर्यामीश्वरोऽपि जीववन्न परिच्छिन्नः सर्वात्मा भगवान् हरिर्विष्णु-रिज्यमानः यज्ञैः सम्पूज्यमानो यजतां निष्कामानां शमात्मसुखं मोक्षं सकामानां तु अमोघान् उत्तमान्कामान् विषयांश्च तनोति प्रयच्छति तत्र न वर्त्तितव्यमित्यनुषङ्गः ॥ ३४ ॥

परीक्षितेति । एवं परीक्षिता आदिष्टः जातवेपथुः स कलिः दण्डपाणिं यममिव स्ववधार्थम् उद्यतं उद्यत उच्चीकृतोऽसिः येन तम् इदं वक्ष्यमाणमाह स्म ॥३५॥ यत्रेति । हे सार्वभौम सर्वस्या भूमेरीश्वर ! तवाज्ञया ब्रह्मावर्त्तं विहाय यत्र क्वचनापि वत्स्यामि तत्र तत्रापि आत्तो गृहीत इषुर्बाणः शरासनं धनुश्च येन तथाभूतं त्वामेव लक्षये बुद्ध्या पश्यामि ॥ ३६ ॥ तदिति । तत्तस्मात् हे धर्म-भृतां श्रेष्ठ ! तत्तवानुशासनमातिष्ठन् पालयन् यत्रैव नियतो निश्चलो निर्भयः वत्स्ये । तङार्षः । तत् स्थानं मे निर्देष्टुं नामग्रहणेन कथयितुं त्वमर्हसि ॥ ३७ ॥ अभ्यर्थित इति । एवमभ्यर्थितः सम्प्रार्थितो राजा तदा तस्मै कलये यत्र चतुर्विधोऽधर्मः भवति तत् द्यूतं पानं मद्यादेः स्त्रियः अविवाहितस्त्रीसङ्गः सूना हिंसा इति स्थानानि ददौ । यत्र द्यूतादिषु चतुर्विधः क्रमेणानृतस्मयाशौचक्रौर्यरूपः सत्यतपःशौचदयानाशकः अधर्मः भवति । पूर्वं मदो दयानाशकत्वेनोक्तः अत्र तु गर्वद्वारा तपोनाशकत्वेन यद्यपि सर्वं सर्वत्र सम्भवति यथा हिंसायां सर्वः समुदित एवाधर्मश्चतुर्विधोऽपि तिष्ठति । नहि प्राणिहिंसकेषु तपः शौचं दया सत्यं वा सम्भवति । तथापि प्राधान्येनानृतादीनां द्यूतादिषु यथासंख्यं ज्ञेयम् । द्वादशस्कन्धे सत्यं दया तपो दानमित्यत्र दानशब्देन शौचमेवोक्तम् । "दैप्, शोधने" इति धातोः मनःशुद्धिरूपत्वाद्भूताभयदानस्य "अधर्मपादैरनृतं हिंसाऽसन्तोषविग्रहैः" इत्यत्र च असन्तोषशब्देन तद्धेतुर्गर्वो लक्ष्यते । विग्रहशब्देन च तद्धेतुः स्त्रीसङ्गः इत्यविरोधः । वस्तुतस्तु अधर्महेतूनां कामक्रोधलोभादीनां यत्र यत्र विषये यस्य यस्य यदा यदा प्राधान्यविवक्षा तत्र तत्र तदा तदा तस्य तस्य पादत्वोक्तिर्न विरुध्यते । एवं धर्महेतुषु तपःसत्यादिष्विति ॥ ३८ ॥ पुनरिति । लोकैर्दुस्त्यजं चतुर्विधस्याप्येकं स्थानं देहीति पुनर्याचमानाय कलये स प्रभुः परीक्षित् जातरूपं सुवर्णमदात् । उपलक्षणतया द्रव्यमेवादात् । ततः सुवर्णदानात् अनृतं मदं कामं स्त्रीसङ्गं रजः रजोमूलां हिंसां पञ्चमं वैरं चार्थादेवादात् एषां सुवर्णोपलक्षितधनमूलकत्वम् ॥ ३९ ॥ अमूनीति । अधर्मः प्रभवत्यस्मात् इति तथाभूतः कलिः यस्य परीक्षितो निर्देशकृत आज्ञा-नुवर्त्ती सन् औत्तरेयेण परीक्षिता दत्तानि अमूनि पूर्वोक्तानि पञ्च स्थानानि । सप्तम्यर्थे द्वितीया । अकर्मकधातुयोगेन देशादेः कर्मत्वं च वा । न्यवसत् नितरामवसत् ॥ ४० ॥ अथेति । अथ तस्माद्बुभूषुः स्वक्षेममिच्छुः पुरुषः क्वचित् कस्मिन्नपि काले देशे

च वा एतानि द्यूतादीनि न सेवेत। स्त्रीसुवर्णयोरसेवनं च तत्रानासक्तिं विशेषतो धर्म एव शीलं वृत्तं यस्य सः लोकानां पतिः गुरुश्च राजा न सेवेत ॥ ४१ ॥ वृषस्येति। वृषरूपस्य धर्मस्य नष्टान् तपः शौचं दयामिति त्रीन् पादान् परीक्षित् पुनः प्रतिसन्दधे योजयामास। तप आदीनि प्रवर्त्तितवानित्यर्थः। तथा महीं चाश्वास्य सान्त्वयित्वा सम्यग् धर्ममार्गप्रवर्त्तनेन कृष्यादिना चावर्धयत् ॥ ४२ ॥ स इति। स उक्तप्रभावः एष परीक्षित् एतर्हि अधुनाऽपि अरण्यं वनं विविक्षता प्रवेष्टुमिच्छता पितामहेन राज्ञा युधिष्ठिरेण उपन्यस्तं प्रदत्तं पार्थिवस्य सार्वभौमस्योचितम् आसनं सिंहासनमध्यास्ते ॥ ४३ ॥ आस्त इति। चक्रं भूमण्डलं वर्त्तयति पालयति चक्रवर्त्ती बृहच्छ्रवा विपुलकीर्तिः महाभागः स राजर्षिःपरीक्षित्कौरवेन्द्राणां युधिष्ठिरादीनां श्रियोल्लसन् कौरवेन्द्र इति पृथक्पदपाठे कर्तृविशेषणम्। गजाह्वये हस्तिनापुरेऽधुनास्ते ॥ ४४ ॥ इत्थमिति ! अयमभिमन्युसुतो नृपः परीक्षित् इत्थम्भूतानुभावः यस्य क्षोणीं पृथ्वीं पालयतः सतः यूयमपि सत्राय दीक्षिताः प्रवृत्ताः। अत्र प्रकरणे आस्ते पालयत इत्यादिषु वर्त्तमानसामीप्ये वर्त्तमानवन्निर्देशः स्मेत्यध्याहारो वा। सत्रमिदं बलवद्देव दृष्टादन्यदेव ज्ञेयम्। ४५ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः प्रथमस्यामुं सप्तदशे व्यधात्।

इति श्रीमद्भागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तदशोऽध्यायः ॥ १७ ॥



## अथाष्टादशोऽध्यायः

सूत उवाच

यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः। अनुग्रहाद्भगवतः कृष्णस्याद्भुतकर्मणः ॥ १ ॥

अष्टादशे पितुः कण्ठे मृतसर्पनिधानतः। राज्ञे मुनिशिशोः शापोऽत्र श्लोकाः सार्द्धखेषवः (५०॥)॥

त्रीण्युवाचेति पादाढ्याः (५६।) षट्पञ्चाशदनुष्टुभः ॥ १८ ॥

य इति। यो वै परीक्षित् मातुरुदर एव द्रौणेः ब्रह्मास्त्रेण विप्लुष्टो निर्दग्धोऽपि अद्भुतकर्मणो भगवतः कृष्णस्य अनुग्रहात् न मृतः ॥ १ ॥ ब्रह्मेति। भगवत्यर्पित आशयोऽन्तःकरणं येन सः यस्तु राजा ब्रह्मकोपेन ब्राह्मणशापेन उत्थितात्प्रेरितात्तक्षकात् प्राणानां विप्लवो नाशः तस्मात् यत् उरु भयं तस्मान्न संमुमोह ॥ २ ॥ उत्सृज्येति। सर्वतः सर्वत्र देहपुत्रादिषु च सङ्गम् आसक्तिम् उत्सृज्य विज्ञाता अजितस्य भगवतः संस्थितिस्तत्त्वं येन स वैयासकेः शुकस्य शिष्यः परीक्षित् गङ्गायां स्वं कलेवरं जहौ ॥ ३ ॥ नेति। उत्तमश्लोकस्य भगवत एव वार्त्ता येषां तस्य उत्तमश्लोकस्यैव कथामृतं जुषतां सेवमानानां शतार्षः। तस्य पदाम्बुजं स्मरतां च अन्तकालेऽपि संभ्रमो मोहो न स्यात् ॥ ४ ॥ त वदिति। एकराट् चक्रवर्ती महान् आभिमन्यवः अभिमन्युसुतो यावदुर्व्यामीशो बभूव तावदिह भारतवर्षे सर्वतः प्रविष्टोऽपि कलिर्न प्रभवेत् दम्भादिदोषं न प्रकटीकृतवान्। लङ्गो लिङ्गार्षः ॥ ५ ॥ यस्मिन्निति। यस्मिन्नहनि यर्हि यस्मिन्नेव क्षणे भगवान् श्रीकृष्णो गां भूमिम् उत्ससर्ज तत्याज तदा तस्मिन्नेवाहनि क्षणे च अधर्मस्य प्रभवो यस्मिन्सोऽसौ कलिरिह भूमावनुवृत्तः प्रविष्टः ॥ ६ ॥ ननु कलिं सर्वथा किन्न हतवानित्याशङ्क्याह— नेति। सारङ्ग इव भ्रमर इव सारभुक् सारग्राही सम्राट् सार्वभौमः परीक्षित् कलिं नानुद्वेष्टि स्म। सारमाह। यत् यस्मिन् कलौ कृतानि कुशलानि पुण्यकर्माणि आशु सिद्ध्यन्ति शीघ्रं फलन्ति। इतराणि पापानि तु शीघ्रं न सिद्ध्यन्ति। इतरयुगेषु नायं गुणः। यद्वा कुशलानि अकृतान्यपि आशु संकल्पमात्रेण सिद्ध्यन्ति। इतराणि पापानि आशु न सिध्यन्ति किन्तु कृतान्येव सिद्ध्यन्ति न तु संकल्पमात्रेण ॥ ७ ॥

किमिति। बालेष्वविवेकिषु शूरेण धीरेण विवेकिषु भीरुणा कलिना किं नु अनिष्टं स्यान्न किमपि। यः कलिः प्रमत्तेष्वेव नृषु अप्रमत्तः सावधानः सन् मेषीषु वृक इव वर्त्तते॥ ८॥ उपवर्णितमिति। यद्यूयं मामपृच्छत पृष्टवन्तः तदेतत्पारीक्षितं परीक्षित्संबंधि पुण्यं वदतां शृण्वतां च वासुदेवकथोपेतमाख्यानं मया वो युष्माकमुपवर्णितम्॥ ९॥ या इति। कथनीयानि उरूणि कर्माणि यस्य तस्य भगवतो गुणा वात्सल्यादयः कर्माणि सृष्ट्यादीनि च आश्रयो यासां तया याः कथाः सन्ति ताः बुभूषुभिः क्षेममिच्छद्भिः पुम्भिः संसेव्याः॥१०॥ सूतेति। हे सूत! हे सौम्य! त्वं शाश्वतीः समाः अनन्तान्संवत्सरान् जीव। अत्यन्तसंयोगे द्वितीया यस्त्वं नोऽस्माकं मर्त्यानां मरणधर्माणाम् अमृतम् मरणनिवर्त्तकं विशदं कृष्णस्य यशः शंससि कथयसि॥ ११॥ कर्मणीति। अनाश्वासे वैगुण्यबाहुल्येन अनिश्चितफलेऽस्मिन् सत्राख्ये कर्मणि संलग्नानामत एव धूमेन धूम्रा विवर्णा आत्मानो येषां तेषामस्माकम्। कर्मणि शेषे षष्ठी। भवान् गोविन्दस्य पादद्मयोरासवं मकरन्दमासवमिव दुःखविस्मारकं मधु मधु इव स्वादु यशः आपाययति श्रावयति॥ १२॥ तुलयाम इति। भगवत्सङ्गिनां यः सङ्गस्तस्य यो लवः स्वल्पः कालस्तेनापि स्वर्गं कर्मफलमपुनर्भवं मोक्षं ज्ञानफलं च वयं न तुलयाम समं न पश्यामः। संभावनायां लोट्। तत्संभावनामपि न कुर्मः। मर्त्यानां-मनुष्याणाम् आशिषो राज्याद्याः न तुलयामेति किमुत वक्तव्यम्। तत्र भक्तेः साधनस्यापि साधुसङ्गस्य लवेनापि कर्मज्ञानादेः संपूर्णमपि फलं न तुलयाम किमुत बहुकालव्यापिना साधुसङ्गेन किमुततरां तत्फलभूतया भक्त्या किमुततमां भक्तिफलेन प्रेम्णा इति कैमुत्यातिशयो द्योत्यः। अत्र न तथाऽस्य भवेत् क्लेश इत्यादिना यथा योषित्सङ्गादपि तत्सङ्गिसङ्गो निन्द्यस्तथा भगवत्सङ्गादपि भगवत्सङ्गिसङ्गः प्रशस्य इत्याशयः॥ १३॥ क इति। महत्तमानां परमविवेकिनामेकान्तेनाव्यभिचारेण परमुत्कृष्टमयनमाश्रयो यस्य स्तस्य भगवतः कथायां रसवित् रसज्ञः को नाम तृप्येत् न कोऽपीत्यर्थः। भवः शिवः पाद्मो ब्रह्मा च मुख्यौ येषां ते ये योगेश्वराः तेऽपि अगुणस्य प्राकृतगुणरहितस्य हरेः कल्याणगुणानामन्तं न जग्मुः एतावन्त इति परिगणयितुं न शेकुः॥ १४॥ तदिति। तत् तस्मात् हे विद्वन्! नोऽस्माकं मध्ये भगवानेव प्रधानं यस्य सः भवान् महत्तमैकान्तपरायणस्य हरेः उदारं श्रेष्ठं विशुद्धम् आचरितं शुश्रूषतां श्रोतुमिच्छताम्। आर्षः शता। नोऽस्माकं वितनोतु विस्तरतः कथयतु॥ १५॥

स इति। वै प्रसिद्धः महाभागवतः अदभ्रा अनल्पा बुद्धिर्यस्य सः परीक्षित् येन वैयासकिशब्दितेन शुकोपदिष्टेन ज्ञानेन ज्ञानसाधनेनाख्यानेन अपवर्गो मोक्ष इत्याख्या यस्य तत् खगेन्द्रध्वजो गरुडध्वजो भगवांस्तस्य पादमूलं भेजे प्राप। अत्र भगवद्भक्तानां भगवत्पदप्राप्तिरेवापवर्गशब्दवाच्या इत्याशयः॥१६॥ तदिति। परं पुण्यं पुण्यावहम् अत्यद्भुतयोगे ज्ञानयोगे निष्ठा परिसमाप्तिर्यस्य तत् असंवृतः स्पष्टोऽर्थो यस्य तत् अनन्तस्य भगवत आचरितेनोपपन्नं संयुक्तं भागवतानामभिराममानन्दकरं पारीक्षितं परीक्षिते कथितम् आख्यानं श्रीभागवतं नोऽस्मभ्यमाख्याहि। एतैर्विशेषणैः कर्मज्ञानभक्तियोगप्रकाशकत्वं दर्शितम्॥ १७॥ अहो इति। अहो अस्मद्भाग्यं वयं विलोमजाताः ब्राह्मण्यां क्षत्रियाज्जाताः वर्णसङ्कराः अपि वृद्धानां शुकादीनाम् अनुवृत्त्या सेवया अद्याधुना जन्मभृतः सफलजन्मानः आस्म जाताः। हेति हर्षे महत्तमानां त्वादृशानामभिधानयोगः लौकिकोऽपि संभाषणसंबन्धः दौष्कुल्यं दुष्कुलत्वम् आधिं तन्निमित्तां मनःपीडां च शीघ्रं विधुनोत्यपनयति॥ १८॥ कुत इति। योऽसौ भगवान् अनन्तशक्तिः यश्च स्वयमप्यनन्तः महान्तो गुणा यस्य तस्य भावो महद्गुणत्वं तस्मात्। आत्वाभाव आर्षः। यं गुणतोऽप्यनन्तमाहुः तस्य महत्तमस्यैकान्तपरायणस्य नाम गृणतः कीर्त्तयतः पुंसः कुतः पुनर्दौष्कुल्याधीः। यद्वा गृणतः पुंसः नामकर्तृदौष्कुल्यमाधिं च धुनोतीति कुतः पुनर्वक्तव्यम्॥ १९॥ एतावतेति। गुणैर्न विद्यते साम्यं यस्य न विद्यतेऽतिशयनमतिशयश्च यस्मात् गुणैस्तत्साम्यं तदाधिक्यं चान्यस्य नास्तीति तस्य पूर्णगुणस्य भगवतः सूचितेन दिङ्मात्रप्रदर्शितेनैतावता महिम्नाऽलं पर्याप्तं कस्तद्भिन्नतो वक्तुं शक्नोति तदेवाह। विभूतिर्लक्ष्मीः प्रार्थयतोऽपि इतरान् ब्रह्मादीन् हित्वा विहायानभीप्सोरकामयमानस्यापि यस्याङ्घ्रिरेणुं जुषते सेवते॥ २०॥ अथेति। यतो विरिञ्चेन ब्रह्मणोपहृतं समर्पितमर्हणाम्भोऽर्घ्यजलं गङ्गात्मकं यस्य मुकुन्दस्य पादनखावसृष्टमर्वाक् प्रसृतं सत् ईशेन शिवेन सहितं जगत्पुनाति। एतेन विरिञ्चेशयोरपि सेवकत्वमुक्तम् अथ तस्मादपि हेतोर्मुकुन्दात् वासुदेवादन्यतमोऽन्यो लोके भगवत्पदस्यार्थो वाच्यः को नाम। अतो मुकुन्द एव भगवत्पदस्यार्थः मुकुन्द एव सर्वेश्वर इत्यर्थः॥ २१॥ यत्रेति। सहसैव भाग्योदयेन यत्र यस्मिन्ननुरक्ता धीराः जितेन्द्रियाः सन्तो देहादिषु रूढं रूढमूलं सङ्गमासक्तिं व्यपोह्य त्यक्त्वा तत्प्रापकमन्त्यं परमकाष्ठापन्नं पारमहंस्यमाश्रमं व्रजन्ति। यस्मिन् आश्रमे अहिंसा उपशमश्च स्वः स्वाभाविको धर्मः॥ २२॥ अहमिति। हे अर्यमाणः सूर्यतुल्याः त्रयीमूर्त्तयः! भवद्भिः पृष्टोऽप्यहमत्र भगवन्महिम्नि आत्मनो मम बुद्धेः अवगमः प्रसरः यावानस्ति तावन्तं महिमानमाचक्षे वर्णयामि। यथा पतत्रिणो गरुडादयः आत्मसमं स्वशक्त्यनुरूपमेव नभः पतन्ति उद्गच्छन्ति न तदन्तं लभन्ते तथा विपश्चितो ज्ञानिनोऽपि समं स्वबुद्धिशक्त्यनुरूपमेव विष्णुगतिं भगवन्महिमानं पतन्ति विषयीकुर्वन्ति वर्णयन्ति च न तु तदन्तं लभन्ते॥ २३॥

एकदेति। एकदा परीक्षित् धनुरुद्यम्य वने मृगयां विचरन् मृगाननुगतः भृशमत्यन्तं श्रान्तः क्षुधितश्च तृषितश्च जातः॥ २४॥ जलाशयमिति। क्वचिदपि जलाशयमचक्षाणः अपश्यंस्तं प्रसिद्धं शमीकाश्रमं प्रविवेश। तत्र आसीनं बद्धासनं

शान्तं रागादिरहितं मीलिते लोचने येन तं मुनिं शमीकं ददर्श ॥ २५ ॥ प्रतिरुद्धेति द्वयम्। प्रतिरुद्धानि प्रत्याहृतानि इन्द्रियाणि प्राणाः मनः बुद्धिश्च येन तम् उपारतं बाह्यव्यापाराद्युपरतं स्थानत्रयाज्जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयात्परं तुरीयं समाधिं प्राप्तम्। अतो ब्रह्मवित्त्वात् "ब्रह्मविद् ब्रह्मैव भवति" इति श्रुतेर्ब्रह्मभूतम् अविक्रियं विकाररहितं विप्रकीर्णाभिर्विक्षिप्ताभिः जटाभिराच्छन्न-मावृतं रौरवेण रुरोर्मृगस्य संबन्धिना अजिनेन चर्मणा आच्छन्नं ददर्श। तथाभूतं मुनिं विशुष्यत्तालु यस्य सः परीक्षित् उदकं जलमयाचत ॥ २६-२७ ॥ अलब्धेति। न लब्धं तृणं तृणासनं भूमिरुपवेशनस्थानमादिना आस्तरणादि च येन न सम्प्राप्तः अर्घः पूजा सूनृतं मधुरवचनं च येन सः राजा आत्मानम् अवज्ञातमनादृतमिव मन्यमानः ममातिथ्यमनेन किमपि न कृतमिति चुकोप ह ॥ २८ ॥ अभूतेति। हे ब्रह्मन् शौनक! क्षुत्तृड्भ्यामर्दितः पीडितः आत्मा यस्य तस्य राज्ञः ब्राह्मणं मुनिं शमीकं प्रति सहसा झटिति पूर्वं कदापि यो न भूतः अभूतपूर्वः एवंभूतो मन्युः क्रोधो मत्सरः तदुत्कर्षासहनं च अभूत् ॥ २९ ॥ स इति। स तु राजा ततो विनिर्गच्छन् रुषा धनुषः कोट्याऽग्रेण तस्य ब्रह्मऋषेरंसे स्कन्धे गतासुं मृतमुरगं सर्पं निधाय भो ब्रह्मन्! यथाहमतिथि-स्त्वया साधु सत्कृतस्तथा त्वामहमप्यनया मालया सत्करोमीति वदन्निति भावः। स्वपुरम् आगमत् ॥ ३० ॥ पुरागमनसमये राजा विमृशति—एष इति। किमेष मुनिः निभृताशेषकरणः नियमितसकलेन्द्रियः सन् मीलितेक्षणो मुद्रितनयनो यथार्थसमाधिः आहोस्विदागतैः क्षत्रबन्धुभिरस्माकं किं नु प्रयोजनं स्यादिति बुद्ध्या मृषा वृथैव समाधिर्यस्य तथाभूत एवमास्ते अत्रायं राज्ञो महात्मनोऽपि बुद्धिविप्लवे तं शीघ्रं स्वपार्श्वं नेतुं विप्रशापद्वारा विरक्तं विधाय शुकेन सम्मेल्य श्रीभागवतरूपेण स्वयमाविर्भूय कलौ जनिष्यमाणानपि कांश्चिद्भक्तान् स्वलीलां श्रावयितुं हरेरेवायं मनोरथः ॥ ३१ ॥ तस्येति। तस्य मुनेः बालकोऽप्यतितेजस्वी शृङ्गिनामा पुत्रः अर्भकैः सह विहरन् तातं पितरं राज्ञा अघं सर्पनिधानेन दुःखं प्रापितं श्रुत्वा तत्र बालानां मध्य एवेदं वक्ष्यमाणमब्रवीत् ॥ ३२ ॥

अहो इति। पीनां पुष्टानां पालानां राज्ञामहो अधर्मः स्वामिनि ब्राह्मणे यद्दासानां क्षत्रियाणामघम् अपराधाचरणं तद्बलिभुजां काकानामिव द्वारपानां शुनामिव चेति ॥ ३३ ॥ दासत्वं दर्शयन् दृष्टान्तं विवृणोति—ब्राह्मणैरिति। क्षत्रबन्धुर्हि ब्राह्मणैः श्वेव द्वारपालत्वेन निरूपितः स्वरक्षार्थमेव राज्येऽभिषिक्त इत्यर्थः। स क्षत्रबन्धुर्द्वाःस्थः द्वारि स्थातुं योग्यः सन् उच्छिष्टभोजन-योग्यः तेषां ब्राह्मणानां गृहे सभाण्डं पात्रे एव स्थितं वस्तु कथं भोक्तुमर्हति। तेन राज्ञां मुनीनां सहसाश्रमप्रवेशे यत्र जलादिप्रार्थने च का योग्यतेति भावः ॥ ३४ ॥ कृष्ण इति। उत्पथगामिनां शास्तरि दण्डयितरि श्रीकृष्णे स्वलोकं प्रति गते सति तत् तदनन्तरं भिन्नसेतून् मर्यादाभेदकर्तॄन् अद्याहं शास्मि दण्डयामि। मे बलं पश्यत ॥ ३५ ॥ इतीति। वयस्यान् ऋषिबालकान्प्रतीत्येवमुक्त्वा रोषेण ताम्रे रक्ते अक्षिणी यस्य स ऋषिबालकः कौशिक्या नद्या अपः। सन्धिरार्षः। उपस्पृश्य आचम्य वाग्वज्रं शापं विससर्ज ॥ ३६ ॥ इतीति। इत्येवं सर्पनिधानेन लङ्घिता मर्यादा येन तं मे मम तातद्रुहं पितृद्रुहं कुलाङ्गारं स्वकुलनाशकं शापयोग्यं राजानं मे मया चोदितस्तक्षकः इतः सप्तमेऽहनि दङ्क्ष्यति दंशेन हनिष्यति। मत्पितुर्गले मृतः सर्पो निक्षिप्तोऽतो जीवन्नेव सर्पो दङ्क्ष्यतीति भावः। धक्ष्यतीति पाठे भस्मीकरिष्यति। स्मेति पादपूरणे। ततेति छान्दसम् ॥ ३७ ॥ तत इति। ततः शापं दत्त्वा पितुराश्रममभ्येत्यागत्य गले कण्ठे सर्पो यस्य तत् कलेवरं यस्य तं "समासे अमूर्द्धं०" इति सप्तम्या अलुक्। स्वपितरं वीक्ष्य दुःखार्त्तः बालो मुक्तकण्ठः उच्चैः स्वरयुक्तो रुरोद ॥ ३८ ॥ स वा इति द्वयम्। ततश्च हे ब्रह्मन्! स वै आङ्गिरसः अङ्गिरोगोत्रोत्पन्नः शमीकः स्वसुतस्य विलापनं रोदनं श्रुत्वा शनकैर्नेत्रे उन्मील्य स्वांसे मृतमुरगं दृष्ट्वा तं विसृज्य प्रक्षिप्य पुत्रं पप्रच्छ—हे वत्स! कस्मात् रोदिषि केन वा ते तव प्रतिकृतम् अपकारः कृतः ? इत्युक्तः स बालकः सर्वं वृत्तं न्यवेदयत् कथयामास ॥ ३९-४० ॥ निशम्येति। अतदर्हं शापानर्हं नरेन्द्रं शप्तं निशम्य स ब्राह्मणः शमीक आत्मजं पुत्रं शृङ्गिनामानं नाभ्यनन्दत् किंतु निन्दितवान्। अहो बत हे अज्ञ! ते त्वया महदंहः पापं कृतम्। अल्पीयसि अतितुच्छे द्रोहेऽपकारे उरुर्महान् दमो दण्डः धृतः कृतः ॥ ४१ ॥ नेति। हे अविपक्वबुद्धे! नृभिः साधारणनरैः परो विष्णुरित्याख्या यस्य तं नरदेवं राजानं संमातुं समं द्रष्टुमेव नार्हसि। यस्य दुर्विषहेण चोरादिदुष्टैः सोढुमशक्येन तेजसा गुप्ताः सुरक्षिता न कुतश्चित् भयं यासां ताः प्रजाः भद्राणि सुखानि विन्दन्ति लभन्ते ॥ ४२ ॥

अलक्ष्यमाण इति। अङ्ग हे बालक! यदा राज्ञो मरणं स्यात् तदा नरदेवनाम्नि रथाङ्गपाणौ विष्णावलक्ष्यमाणे सत्ययं लोकोऽलक्ष्यमाणः अत एव चौरप्रचुरः अविवरूथवत् यथा अरक्षितो मेषसङ्घो वृकादिभ्यः आशु विनश्यति तथा क्षणात् विनङ्क्ष्यति ॥ ४३ ॥ तदिति। नष्टो नाथो रक्षको यस्य तस्य लोकस्य वसोर्वसुनो धनस्य। पुंस्त्वमार्षम्। विलुम्पकादपहर्तु-श्चौराद्धेतोर्यत्पापं भविष्यति तत् अनन्वयमस्मत्संबन्धशून्यमपि अस्मत्कृतशापनिमित्तत्वान्नोऽस्मान् अद्य शीघ्रमेव उपैति उपैष्यति। यतः पुरवो बहुला दस्यवो येषु ते जनाः परस्परं घ्नन्ति शपन्ति परुषं वदन्ति। पशून् स्त्रियोऽर्थांश्च वृञ्जते अपहरन्ति च। "वृजि, वर्जने" अदादिः अत्रापहारे वृत्तिः ॥ ४४ ॥ तदेति। तदा रक्षकाभावकाले वर्णाश्रमाचारयुतः त्रयीमयः वेदप्रतिपादितो

नृणामार्यधर्मः सन्मार्गश्च विलीयते विनङ्क्ष्यति । ततश्च धर्मविनाशात् अर्थकामयोरभिनिवेशित आत्मा मनो येषां तेषां शुनामिव कपीनामिव च वर्णानां संकरो भविष्यति ॥ ४५ ॥ राजमात्रं शापानर्हमुक्त्वा परीक्षिति विशेषमाह धर्मपाल इति सार्द्धम् । अतः सः धर्मपालः सम्राट् बृहच्छ्रवाः विपुलकीर्तिः साक्षात् निष्कपटः महाभागवतो राजर्षिः राजसु ऋषितुल्यः हयमेधेन यजतीति हयमेधयाट् । ण्विश्छान्दसः । दीनः स्वागतप्रश्नाद्यभावेन तिरस्कृतः क्षुत्तट्श्रमयुतो नरपतिः अस्मच्छापं नैव अर्हति ॥ ४६ ॥ परीक्षित्कर्मकानादरणपापप्रायश्चित्ताय भगवन्तं प्रार्थयते—अपापेष्विति । अपापेषु निरपराधेषु स्वभृत्येषु अपक्वबुद्धिना बालेन यच्छापदानलक्षणं पापं कृतं तत् सर्वात्मा भगवान् क्षन्तुमर्हति पापं निवर्तयितुमर्हति ॥ ४७ ॥ यदि राजा प्रतिशपेत्तदा निष्कृतिः स्यादपि साप्यत्र नास्तीत्याह—तिरस्कृता इति । तिरस्कृताः परिभूताः विप्रलब्धाः प्रतारिताः शप्ताः शिप्ताः निन्दिता हतास्ताडिता अपि तस्य भगवतो भक्ताः प्रतिकर्त्तुं प्रभवोऽपि समर्था अपि अस्य तिरस्कारादि कर्तुं तत् तिरस्कारादिकं न प्रतिकुर्वन्ति ॥ ४८ ॥ इतीति । सः शमीकः महामुनिः एवं पुत्रकृतेन अघेनापराधेनानुतप्तः स्वयं च राज्ञा सर्पप्रक्षेपेण विप्रकृतोऽपि तस्याघं नैवाचिन्तयत् ॥ ४९ ॥ प्रायश इति । ये लोके साधवस्ते परैः शत्रुमित्रादिभिः द्वन्द्वेषु सुखदुःखादिषु योजिता अपि न व्यथन्ति । तङभाव आर्षः । न हृष्यन्ति यतस्तेषामात्माऽन्तःकरणं क्षमासन्तोषादिगुणानामाश्रयः । यद्वा अगुणाश्रयः गुणकार्यरागद्वेषादीनामनाश्रयः । यद्वा यतः आत्मा गुणानां सुखदुःखादीनामाश्रयो न भवति ॥ ५० ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायः प्रथमस्कन्धस्याष्टादशे व्यधात् ।

इति श्रीभागवते प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायामष्टादशोऽध्यायः ॥ १८ ॥

—:※:—

# अथैकोनविंशोऽध्यायः

सूत उवाच

**महीपतिस्त्वथ तत्कर्म गर्ह्यं वि.चिन्तयन्नात्मकृतं सुदुर्मनाः ।**

**अहो मया नीचमनार्यवत्कृतं निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥**

ऊनविंशे तु गङ्गायां राज्ञः प्रायोपवेशनम् । श्रीशुकस्यागमश्चात्र श्लोका दृष्टाः खवाद्धयः ( ४० ) ॥

उवाचत्रितयं साङ्घ्रिर्द्विपञ्चाशदनुष्टुभः ( ५२ ) ॥ १६ ॥

महीपतिरिति । अथ स्वगृहागमनसमय एव महीपतिः परीक्षिदात्मकृतं तन्मुनिस्कन्धे सर्पनिधानरूपं गर्ह्यं निन्द्यं कर्म विचिन्तयन् सुदुर्मनाः अतिखिन्नमना अभूत् । अहो ! मया अनार्यवत् मूर्खवत् निरागसि निरपराधे गूढमनभिव्यक्तं तेजः सामर्थ्यं यस्य तस्मिन् ब्रह्मणि ब्राह्मणे विषये नीचं पापं कृतम् । अमीवमिति पाठेऽप्ययमेवार्थः ॥ १ ॥ ध्रुवमिति । ततः कृतात् देवस्य भगवतो हेलनादवज्ञारूपात् मे मम नातिदीर्घात् शीघ्रमेव दुरत्ययमतिवर्त्तितुमशक्यं व्यसनं दुःखं ध्रुवं निश्चितमेव भविष्यति तद् व्यसनं तु मेऽघस्य निष्कृताय पापविनाशाय कामम् असंकोचेनाद्धा साक्षादेवास्तु नतु पुत्रादिद्वारेणेति । यद्वा कृतदेवहेलनात् मे व्यसनं ध्रुवमेव भविष्यति तत्तु नातिदीर्घात्कालात् शीघ्रमेवास्तु तत्राप्यद्धा साक्षादेवास्तु यथा पुनरेवंविधं पापमहं न कुर्यामेव ॥ २ ॥ अद्येति । प्रकोपितं कोपं प्रापितं यद् ब्रह्मकुलं तदेवानलोऽद्यैव मे राज्यं बलं च सैन्यमृद्धं प्रभूतधनं कोशं च दहतु । ततश्च अभद्रस्य दुष्टस्य मे पुनर्द्विजेभ्यो देवेभ्यो गोभ्यश्चैवंविधा पापीयसी अपचिकीर्षायुक्ता धीर्न अभूत् न भवेदिति । लिङर्थे लुङार्षः ॥ ३ ॥ स इति । स राजा इत्थं चिन्तयन्नथानन्तरमेव यथा येन प्रकारेण सप्तमेऽहनि तक्षकाख्यो निर्ऋतिर्मृत्युः मुनेः सुतेनोक्तः तथा शमीकप्रेषितशिष्यादशृणोत् । श्रुत्वाऽपि शापमोक्षाय अनुनयमपि नाकरोत् । किन्तु स राजा तक्षकस्य विषानलं साधु मेने । यतो विषयेषु प्रसक्तस्य नचिरेण शीघ्रमेव विरक्तिकारणमिति ॥ ४ ॥ अथो इति । अथो तच्छ्रवणानन्तरमेव पुरस्ताच्छापात्पूर्वमेव राज्यावस्थायामेव हेयतया विमर्शितौ विचारेण निश्चितौ अमुम् इमं च लोकं विहाय तत्र सुखस्पृहां त्यक्त्वा कृष्णस्यांघ्र्योः सेवामेव अधि लोकद्वयादधिकां मन्यमानः सन् प्रायमनशनं यथा भवति तथा तत्संकल्पेनामर्त्यनद्यां गङ्गायां तत्तीरे उपाविशत् ॥ ५ ॥ या वै इति । या वै स्फुटं लसन्ती श्रीर्यस्यास्तया तुलस्या विमिश्राः ये कृष्णाङ्घ्रिरेणवस्तैरभ्यधिकं सर्वोत्कृष्टं यदम्बु तस्य नेत्री तद्वाहिनी या गङ्गा सेशान् ईशैर्लोकपालादिभिः सहितान् लोकान् जनानुभयत्र ऊर्ध्वाधः अन्तर्बहिश्च पुनाति तां मरिष्यमाणः आसन्नमरणः । आर्षः शानच् को वा न सेवेत मरणकालस्यानिश्चितत्वात्सर्वोऽपि लोकः मरिष्यमाणः एव । अतः सा सर्वदा सेव्या ॥ ६ ॥ इतीति । स पाण्डवेयः परीक्षित् इति हेतोर्विष्णुपद्यां गङ्गायां प्रायोपवेशं प्रति व्यवच्छिद्य निश्चित्य मुक्तः समस्तेषु देहादिषु सङ्गो येन सः मुनीनां व्रतं नियमो यस्य सः उपशान्तः न विद्यतेऽन्यस्मिन्भावो भावना यस्य स मुकुन्दस्याङ्घ्रिं दध्यौ ॥ ७ ॥

तत्रेति । तत्र गङ्गातीरे राज्ञ उपकारार्थं नतु तीर्थस्नानार्थं कृतार्थत्वात् भुवनं पुनानाः महानुभावाः सशिष्याः मुनयः उपजग्मुरागताः । प्रायेण सन्तस्तीर्थाभिगमापदेशैस्तीर्थयात्राव्याजैः स्वयमेव तीर्थानि लोकमलमलिनानि पुनन्ति शोधयन्ति । न तेषां कश्चित्स्वार्थः ॥ ८ ॥ अत्रिरिति त्रयम् । अत्रिः वसिष्ठः इत्याद्या आगताः तत्र गाधिसुतः विश्वामित्रः रामः परशुरामः कुम्भयोनिः अगस्त्यः अरुणादयश्चर्षयः काण्डर्षित्वविशेषेण पृथङ्निर्दिष्टाः । नाना यान्यार्षेयाणि ऋषीणां गोत्राणि तेषु ये प्रवराः श्रेष्ठाः तान् समेतान् प्राप्तान् राजाऽभ्यर्च्य शिरसा भुवं स्पृशम् ववन्दे ॥ ९–११ ॥ सुखेति । अथ तेषु सुखं यथा तथोपविष्टेषु सत्सु भूयोऽपि विज्ञापनार्थं कृतः प्रणामो येन स उपस्थितस्तेषां समीपे तिष्ठन्नग्रेऽभिगृहीतपाणिः संयोजिताञ्जलिः विविक्तचेताः शुद्धचित्तः राजा यत्स्वचिकीर्षितं प्रायोपवेशनादि तद्युक्तमयुक्तं वेति विज्ञापयामास ॥ १२ ॥ स्वस्मिन्मुनीनामनुग्रहमालक्ष्यात्मानं श्लाघते—अहो इति । अहो नृपाणां मध्ये वयं धन्यतमाः । यतो महत्तमैर्युष्माभिरनुग्रहणीयं शीलं वृत्तं येषां तथाभूताः । "दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।" इत्युक्तेः पादशौचजलं दूरे क्षिप्यते । राज्ञां कुलं तु बत यस्माद्धेतोः गर्ह्यं निन्द्यं कर्म यस्य तादृशमस्ति । अतः ब्राह्मणानां यत्पादशौचं पादप्रक्षालनजलं ततोऽपि दूराद्विसृष्टं ततोऽपि दूरे स्थितियोग्यमित्यर्थः । गर्ह्यकर्मेति

आत्मानमुद्दिश्योक्तम् ॥ १३ ॥ शापोऽप्यनुग्रह एवेत्याह—तस्यैवेति । अभीक्ष्णं गृहादिषु विशेषेण सक्तं चित्तं यस्य तस्यैव गर्ह्यकर्मण एव अघस्य पापात्मनः अपि मेऽनुग्रहार्थं निर्वेदो वैराग्यमेव मूलं प्राप्तिकारणं यस्मिन्स द्विजशापरूपः परावरेशो भगवानेव प्रादुर्बभूव । यत्र यस्मिन् शापे सति प्रसक्तो गृहाद्यसक्तो जनः आशु भयं धत्ते निर्विण्णो भवति । स्वस्य वैराग्यप्राप्यत्वात् तस्य च भयमूलत्वात् । तदर्थं च द्विजशापं कारितवान् इत्यर्थः । यद्वा निर्वेदस्य मूलं कारणमिति परावरेशविशेषणम् । पुंस्त्वमार्षम् । यत्र परावरेशे आसक्तो जनः आशु शीघ्रमभयं भयाभावं धत्ते ॥ १४ ॥ तमिति । हे विप्राः ! भवन्तः तमुक्तविधम् ईशे धृतचित्तं मा माम् उपयातं शरणागतं प्रतियन्तु जानन्तु । तथा गङ्गा च देवी देवतारूपा मां शरणागतं जानातु । विष्णोः गाथाः कथाः गायत । द्विजेनोपसृष्टः प्रेरितः कुहको वेषान्तरभाक् तक्षको वा अलं यथेष्टं मां दशतु ॥ १५ ॥ पुनश्चेति । भूयोऽपि कदाचित् यां यां सृष्टिं योनिमुपयामि तत्रानन्ते भगवति रतिस्तदाश्रयेषु महत्सु प्रसङ्गः प्रकृष्टः सङ्गश्च भूयात् । सर्वत्र सर्वजनेषु मैत्री च भवदनुग्रहेणास्तु । ब्राह्मणानादरजातानुताप आह द्विजेभ्यो भवद्भ्यो नमोऽस्तु ॥ १६ ॥

इति स्मेति । इत्येवमध्यवसायो निश्चयस्तद्युक्तो धीरः स्वसुते जनमेजये न्यस्तो राज्यभारो येन स राजा समुद्रपत्न्याः गङ्गाया दक्षिणकूले तीरे प्राचीनानि पूर्वदिक्स्थितानि मूलानि लक्षणया अग्राणि येषां तेषु प्रागग्रेषु प्रागग्राणामेवासने विधानात् कुशेषु उदङ्मुख आस्ते स्म उपविष्टवान् ॥ १७ ॥ एवं चेति । एवं हि नरदेवानां देवे पूज्ये तस्मिन् परीक्षिति प्रायोपविष्टे सति दिवि वर्त्तमाना देवसङ्घास्तं भूमौ स्थितं प्रशस्य मुदा मुहुः प्रसूनैः कुसुमैर्व्यकिरन् वृष्टिमकुर्वन् । देवैर्वादिता दुन्दुभयश्च नेदुः ॥ १८ ॥ महर्षय इति । प्रजासु जनेषु योऽनुग्रहस्तस्मिन् शीलं सारो बलं च येषां ते ये च महर्षयस्तत्र समुपागतास्ते साधु साध्विन्त्यनुमोदमानास्तं राजानं प्रशस्य उत्तमश्लोकस्य हरेर्गुणैरभिरूपं योग्यं यद्वचनं तदूचुः ॥ १९ ॥ न वै इति । हे राजर्षिवर्य ! ये भवन्तो भगवत्पार्श्वं प्राप्तुकामाः सन्तो राजकिरीटैर्जुष्टं सेवितमध्यासनं सार्वभौमसिंहासनं सद्यो जहुस्त्यक्तवन्त इति युधिष्ठिराद्यभिप्रायेण तेषु कृष्णं समनुव्रतेषु श्रीकृष्णसेवकेषु भवत्सु इदं भगवत्कथाप्रार्थनं चित्रमाश्चर्यं नैव भवति ॥ २० ॥ अथ ते परस्परं संमन्त्रयन्ते—सर्वे इति । भागवतेषु प्रधानः असौ राजा यावत्कलेवरं विहाय विरजस्कं शुद्धं विशोकं परमुत्कृष्टं लोकं यास्यति तावद्वयं सर्वे अद्येहैवास्महे ॥ २१ ॥ आश्रुत्येति । समं पक्षपातशून्यं मधुच्युत् अमृतस्राविं गुरु गम्भीरार्थमव्यलीकं यथार्थं तत्पूर्वोक्तमृषिगणानां वचः परीक्षित् आश्रुत्य विष्णोश्चरितानि शुश्रूषमाणः श्रोतुकामः युक्तः सावधानः सन्नेतानृषीनभिवन्द्याभाषत । छन्दोभङ्गः ॥ २२ ॥ समागता इति । त्रयाणां लोकानां पृष्ठे उपरि सत्यलोके यथा मूर्तिधरा वेदाः सन्ति तद्वदेव भासमानाः यूयं सर्वे सर्वतः सर्वाभ्यो दिग्भ्य एवेह मदनुग्रहार्थं समागता न स्वार्थं येषां भवताम् आत्मशीलं स्वतः सिद्धस्वभावरूपं परेषु मादृशेषु दीनेष्वनुग्रहम् ऋते विनेह लोकेऽथवामुत्र च स्वर्गादिलोके कश्चनाप्यर्थः प्रयोजनं नास्ति ॥ २३ ॥

ततश्चेति । हे विप्राः ! विश्रभ्य भवद्विश्वासं कृत्वा इत्येवंकर्त्तव्यमित्यस्य भाव इतिकृत्यता तस्यां विषये इमं पृच्छ्यं प्रष्टव्यं वो युष्मान् अहं विपृच्छे विशेषतः पृच्छामि । तङार्षः चानश् वा । तत्र अभियुक्ताः सर्वज्ञा एकमतयो वा यूयं म्रियमाणैः यत् सर्वात्मना शुद्धं कृत्यं तत् आमृशत विचारयत ॥ २४ ॥ तत्रेति । तत्रैवं पृच्छतो राज्ञः सन्निधाने यद्वा तत्र तेषु यागयोगतपोभिर्विवदमानेषु सत्सु गां भुवं यदृच्छया पर्यटमानः । आर्षः शानच् चानश् वा । अनपेक्षः विरक्तः निजलाभेनैव तुष्टः अलक्ष्याणि लिङ्गानि महापुरुषचिह्नानि यस्य अवधूतानां लोके त्यक्तानामिव असंस्कृतशरीरजडानामिव वा वेशो यस्य स्त्रीभिः बालैश्च वृतः । ह्रस्वमार्षम् । भगवान् व्यासपुत्रः शुकः अभवदागतः ॥ २५ ॥ तमिति त्रयम् । द्विगुणान्यष्टौ वर्षाणि यस्य तं षोडशवर्षवयस्कमिव स्थितं सुकुमारौ पादौ करौ ऊरू बाहू अंसौ कपोलौ च यस्मिंस्तद् गात्रं यस्य तं चारुणी आयते दीर्घे अक्षिणी यस्मिन् उन्नता नासिका यस्मिन् लम्बह्रस्वादिवैषम्यं विना तुल्यौ कर्णौ यस्मिन् शोभने भ्रुवौ यस्मिन् एवंभूतमाननं यस्य तं कम्बुवद्रेखात्रयान्वितः सुष्ठु जातः कण्ठो यस्य तं कण्ठस्याधोभागयोः स्थिते अस्थिनी जत्रुणी मांसेन निगूढे जत्रुणी यस्य तं पृथु विस्तीर्णं तुङ्गमुन्नतं च वक्षो यस्य तम् आवर्त इव वर्तुला विविक्तरन्ध्रा च नाभिर्यस्य तं वलिभिस्तिर्यङ्निम्नरेखाभिर्वल्गु रम्यमुदरं यस्य तं दिगम्बरं नग्नं वक्रा विकीर्णाः केशा यस्य तं प्रलम्बबाहुं स्वमरेषु श्रेष्ठेषु देवेषु उत्तमो हरिस्तद्वदाभा यस्य तं श्यामं सदा अपीच्यमतिकमनीयं यद्वयो यौवनं तेन या अङ्गलक्ष्मीर्देहकान्तिस्तया रुचिरेण स्मितेन च स्त्रीणां मनोज्ञं स्पृहणीयं गूढं मषीसंवृतमणिवत्तिरोहितं वर्चस्तेजो यस्य तथाभूतमपि तं दृष्ट्वा तल्लक्षणज्ञास्ते मुनयः स्वासनेभ्यः प्रत्युत्थिताः ॥ २६–२८ ॥ स इति । अथ स विष्णुरातः परीक्षित् आगताय अतिथये तस्मै शुकाय शिरसा सपर्यामाजहार प्रणामेनैव तत्पूजां कृतवान् आत्मानं समर्पितवान्वा । ततो हि अबुधाः स्त्रियः अर्भकाश्च ये तेन सहागतास्ते निवृत्ताः । स च शुकः राज्ञा पूजितो महति आसने राज्ञा समर्पित उपविवेश । सोपविवेशेति "सोचि लोपे चेत्" इति सुलोपः । यद्वा पूजित इत्यत्र पूजा यथोचितसत्कारः तत्सभास्थितव्यासादिकृताशीरादिस्तदितरकृतप्रणामादिश्च संजाता यस्य सः एतेन तत्र सभायां व्यासनारदादीनामपि सत्त्वात्तेभ्यः प्रणामादिकमपि शुकश्चकार । महासनोपवेशनं तु तेषामाज्ञयैवेति ज्ञेयम् । अत्रावतारभूतेभ्योऽपि नारदपरशुरामव्यासादिभ्यः शुकोत्कर्षो भक्त्युत्कर्षेणैवेति ॥ २९ ॥

स इति। तत्रासन उपविष्टो महीयसामपि महान् ब्रह्मर्षिराजर्षिदेवर्षीणां सङ्घैः संवृतः स भगवान् शुकः ग्रहा भौमाद्याः ऋक्षाणि अश्विन्यादीनि तदुभयेतरास्तारा: तेषां निकरैः परीतः परिवृतो यथेन्दुः रोचते तथा अत्यतिशयेन व्यरोचत॥ ३०॥ प्रशान्तमिति। प्रशान्तं कोपादिदोषरहितम् अकुण्ठा अप्रतिहता मेधा यस्य। असिजार्पः। तमासीनं सुखमुपविष्टं मुनिं भागवतो नृपः परीक्षिदभ्युपेत्य मूर्ध्ना प्रणम्य कृताञ्जलिरवहितः सावधानश्च सन् प्रश्नार्थं पुनर्नत्वा सूनृतया मधुरया गिरा अन्वपृच्छत्॥ ३१॥ अहो इति। हे ब्रह्मन्! वयं क्षत्रबन्धवोऽपि अहो अद्य सतां सेव्या आदरणीयाः जाताः। यतो भवद्भिरतिथिरूपेण कृपयैव तीर्थकाः कृताः पवित्रीकृताः। कचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति तीर्थकानां पुंस्त्वम्॥ ३२॥ येषामिति। येषां संस्मरणात् यत्कर्तृकाद्यत्कर्मकाद्वा पुंसां सकुटुम्बा गृहाः सद्य एव शुद्ध्यन्ति तेषां दर्शनस्पर्शनादिभिः वयं विशुद्धा जाता इति किं पुनर्वक्तव्यम्॥ ३३॥ सान्निध्यादिति। अतः हे महायोगिन्! यथा विष्णोः सान्निध्यात्सुरेतरा दैत्यराक्षसादयो नश्यन्ति तथा ते तव सान्निध्यादेव हेतोः पुंसां महान्त्यपि पातकानि सद्य एव नश्यन्ति॥ ३४॥ अपीति। अपि संभावनायाम्। पाण्डुसुतानां प्रियः अतः पैतृष्वस्रेयाणां पाण्डवानां प्रीत्यर्थं तेषां युधिष्ठिरादीनां गोत्रस्यापि मे मदर्थमात्तं स्वीकृतं बान्धवं बन्धुकृत्यं येन स भगवान् कृष्णः मे ममोपरि प्रीतः प्रसन्नो जातः॥ ३५॥ अन्यथेति। अन्यथा श्रीकृष्णप्रसादं विना अव्यक्ता गतिर्यस्य तस्य संसिद्धस्य आप्तकामस्य वनीयसः वनयिता याचयिता। वनयितृतरो वनीयान् ईयसुन्। "तुरिष्ठेमेयस्सु" इति तृशब्दस्य लोपः तत इट्निवृत्तौ णिचलोपे सुप्कार्ये वनीयानिति सिद्ध्यति। तस्य अत्युदारतया मां या वस्त्वेति प्रवर्त्तकस्येत्यर्थः। ते तव दर्शनं नृणां कथं स्यात्। म्रियमाणानाम् आसन्नमृत्यूनां नोऽस्माकं तु नितरां कथं स्यात्॥ ३६॥ अत इति। अतः योगिनां परमं गुरुं त्वां संसिद्धिं मोक्षोपायं पृच्छामि। इह संसिद्धो म्रियमाणस्य पुरुषस्य सर्वथा यत्कार्यं कर्तुं योग्यं साधनं तच्च पृच्छामि॥ ३७॥ यदिति। हे प्रभो! नृभिः यच्छ्रोतव्यमथो यच्च जाप्यं जपितव्यम्। जप्यशब्दात्स्वार्थेऽण्। यच्च नृभिरवश्यं कर्तव्यं स्मर्त्तव्यं भजनीयमाराध्यं च। यद्वा यच्च विपर्ययमकार्यमश्रोतव्यमजाप्यमकर्त्तव्यमस्मर्त्तव्यमभजनीयं च तत्सर्वं ब्रूहि॥ ३८॥ तव दर्शनं दुर्लभमतः शीघ्रं कथयेत्याह—नूनमिति। हे ब्रह्मन्! नूनं गृहमेधिनां गृहेषु भगवतस्तवावस्थानं गोदोहनं यावता कालेन गौर्दुह्यते तावत्कालमात्रमपि कचिदपि न लक्ष्यते न दृश्यते॥ ३९॥ एवमिति। एवं श्लक्ष्णया मधुरया गिरा राज्ञा आभाषितोऽभिमुखीकृतः पृष्टश्च सः धर्मज्ञो भगवान् बादरायणिः शुकः प्रत्यभाषत उत्तरं दत्तवान॥ ४०॥

यत्किंचिदस्ति विगुणं विरसं विरूपं तद्वस्तु भोः कृतधियः स्वदतां भवद्भ्यः।
लोकोत्तराखिलगुणं मधुरालयं यत्तस्मिन्नितान्तरुचिरे रुचिरस्ति नस्तु॥ १॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो निरमात्प्रथमस्योनविंशके।

इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धेऽन्वितार्थप्रकाशिकायां टीकायामेकोनविंशोऽध्यायः॥ १९॥

**समाप्तोऽयं प्रथमस्कन्धः।**



## अथ द्वितीयः स्कन्धः

# प्रथमोऽध्यायः

॥ ॐ नमो भगवते वासुदेवाय ॥

श्रीशुक उवाच

**वरीयानेष ते प्रश्नः कृतो लोकहितं नृप । आत्मवित्संमतः पुंसां श्रोतव्यादिषु यः परः ॥ १ ॥**

आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन्पदेऽस्तु मम चित्तमगोचरेऽपि । यत्सद्व्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति ॥ १ ॥
यावन्निरञ्जनमजं पुरुषं जरन्तं सञ्चिन्तयामि सकले जगति स्फुरन्तम् । तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥ २ ॥
प्रेम्णा मुकुन्दपदकञ्जयुगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या । गङ्गासहायजरठो हरितोषहेतोः स्कन्धेऽन्वयाय विदधाति मतिं द्वितीये ॥ ३ ॥

प्रथमे तु हरे रूपे स्थविरे कीर्तनादिभिः । मनसो धारणा तत्र श्लोकाः सार्द्धा नवाग्नयः ( ३९॥ ) ॥
श्रीण्युवाचेति पादोनाः पञ्चवेदा ( ४५॥ ) अनुष्टुभः ॥ १ ॥

आदौ राज्ञः प्रश्नमभिनन्दति—वरीयानिति । हे नृप ! "यच्छ्रोतव्यमथो जाप्यम्" इत्यादिर्यस्ते त्वया प्रश्नः कृतः एष वरीयान् श्रेष्ठः । यतो लोकानां हितं भवति यश्च आत्मविदां मुक्तानामेषां सभ्यानां सम्मतः यश्च पुंसां श्रोतव्यादिषु परः श्रेष्ठः प्रश्नोऽपि श्रेष्ठः किं पुनस्तस्योत्तरम् ॥ १ ॥ हरिरेव श्रोतव्य इत्याद्युत्तरं वदिष्यन् ब्रूहि यद्वा विपर्य्ययमित्यस्योत्तरमाह—श्रोतव्यादीनीति । हे राजेन्द्र ! आत्मतत्त्वमपश्यतां गृहेषु स्थितानामत एव गृहमेधिनां गृहगतपञ्चसूनापराणां "मेधृ हिंसायाम्" नृणां गार्हस्थ्यनिर्वाहार्थं श्रोतव्यादीनि सहस्रशः सन्ति ॥ २ ॥ निद्रयेति । हे राजन् ! नक्तं रात्रौ यद्वय आयुस्तन्निद्रया व्यवायेन स्त्रिया सह रत्या मैथुनेन वा ह्रियते । दिवा अहनि यद्वयस्तदर्थेहयाऽर्थार्थमुद्यमेन सिद्धे चार्थे कुटुम्बस्य भरणेन पोषणेन वा ह्रियते । चकारौ नानाव्यापारसमुच्चयार्थौ ॥ ३ ॥ देहेति । असत्सु असमर्थेषु दुष्टेष्वपि च देहापत्यादिषु आत्मनः सैन्येषु परिकरेषु कालेन सह योद्धुमिव सेनातुल्येषु प्रमत्तः आसक्तस्तेषां निधनं पश्यन्नपि न पश्यति । पित्रादिदृष्टान्तेन विनाशं जानन्नपि नानुसन्धत्ते ॥ ४ ॥ तस्मादिति । हे भारत ! तस्मात् अभयं मोक्षमिच्छता पुरुषेण सर्वात्मा भगवान् ईश्वरः हरिः श्रोतव्यः कीर्तितव्यः स्मर्तव्यश्च । उपलक्षणमेतदर्चनादीनाम् ॥ ५ ॥ एतवानिति ! साङ्ख्यं तत्त्वविवेकः योगोऽष्टाङ्गः ताभ्यां तथा स्वधर्मे या परिनिष्ठा स्थितिः तया चेति त्रिभिरपि साधनैर्या नारायणस्मृतिर्भवति एतावानेव पुंसां जन्मनो लाभः फलम् । अन्ते तु नारायणस्मृतिः परो जन्मलाभ इति साङ्ख्यादित्रयस्य स्वातन्त्र्येण लाभं वारयति । यद्वा । साङ्ख्ययोगधर्मैरेतावानेव परो जन्मलाभः या अन्ते प्रत्यासत्तिन्यायेन साङ्ख्ययोगधर्माणामन्ते नारायणस्य स्मृतिः ॥ ६ ॥ प्रायेणेति । हे राजन् ! नैर्गुण्ये त्रिगुणातीते ब्रह्मणि स्थिता अत एव विधिषेधतः विधिनिषेधात्मकवेदान्निवृत्तास्तदुक्तपुण्यपापसम्बन्धरहिता अपि मुनयः प्रायेण हरेर्गुणानां लीलानामनुकथने रमन्ते स्म ॥ ७ ॥ इदमिति । अहं ब्रह्मसम्मितं वेदतुल्यम् इदं वक्ष्यमाणं भगवत्प्रोक्तं भगवन्तमधिकृत्य प्रवृत्तं वा अतः भागवतं नाम पुराणं द्वापरादौ द्वापर आदिर्यस्य कालस्य तस्मिन् काले द्वापरान्त इत्यर्थः । शन्तनुसमकाले व्यासावतारप्रसिद्धेः । द्वैपायनाद्वेदव्यासात्स्वपितुः सकाशादधीतवान् ॥ ८ ॥

परिनिष्ठित इति द्वयम् । हे राजर्षे ! नैर्गुण्ये निर्गुणब्रह्ममार्गे परिनिष्ठितः स्थिरान्तःकरणोऽप्यहम् उत्तमश्लोकस्य हरेः लीलया गृहीतचेता आकृष्टचित्तो यदिदमाख्यानं श्रीभागवताख्यमधीतवानस्मि । यस्य च कथायां श्रद्दधतां जनानाम् आशु शीघ्रं मुकुन्दे सती श्रेष्ठा मतिः स्यात् । तदहं ते तुभ्यमभिधास्यामि कथयिष्यामि । यतः भगवान् महापौरुषिकः पुरुषेण हरिणा चरति पौरुषिकः । चरतीति ठक् । महांश्चासौ पौरुषिकश्चेति ॥ ९–१० ॥ एतदिति । हे नृप ! निर्विद्यमानानां विरज्यमानानाम् अकुतोभयं मोक्षमिच्छतां योगिनां हेतोः एतद्धरेर्नामानुकीर्तनमेव वृद्धैर्निर्णीतम् । यद्वा । निर्विद्यमानानां मुमुक्षूणां

मोक्षसाधनत्वेन इच्छतां कामिनां च कामसाधनत्वेन योगिनां ज्ञानिनां फलत्वेन चाकुतोभयमिदं हरेर्नामानुकीर्तनमेव निर्णीतम् ॥ ११ ॥ अल्पष्ठेनायुषा किं कर्तुं शक्यमिति तु मा शोचीरित्याह—किमिति। प्रमत्तस्य गृहाद्यासक्तस्य परोक्षैरज्ञाततया गतैर्बहुभिरपि हायनैः संवत्सरैरिह मनुष्यजन्मनि किं किं प्रयोजनं सिद्धयति न किञ्चिदपीत्यर्थः। विदितं वृथैव यातीति ज्ञातं तु मुहूर्तमपि वरं श्रेष्ठं यतो येन मुहूर्तेन श्रेयसे मोक्षाय घटेत यत्नं कुर्यात् ॥ १२ ॥ खट्वाङ्ग इति। खट्वाङ्गो नाम राजा देवपक्षे स्थित्वा दैत्यानजयत्। ततः प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्ते मम शेषमायुः कियदिति ऊचे। ततो देवैर्मुहूर्तमात्रमित्युक्ते स खट्वाङ्गो नाम राजर्षिः इह आयुषः इयत्तां मुहूर्तमात्रं प्रमाणं ज्ञात्वा भूमिमागत्य सर्वं कुटुम्बादिकमुत्सृज्य अभयं भयनिवर्तकं हरिं मुहूर्तात् मुहूर्तमात्रकालेन गतवान् ॥ १३ ॥ तवेति। हे कौरव्य! अपिस्त्वर्थे। तव त्वेतर्हीदानीमपि जीवितस्यावधिः सप्ताह-पर्यन्तमस्ति इति हेतोर्यत्साम्परायिकं परलोकसाधनं तत् सर्वं तावत् तावता कालेनोपकल्पय सम्पादय ॥ १३ ॥ तदेवाह—अन्तकाल इति। अन्तकाल आगत आसन्ने सति तु पुरुषो गतसाध्वसो मरणभयरहितः सन् असङ्गः अनासक्तिस्तद्रूपेण शस्त्रेण देहे स्पृहां सुखेच्छां तं देहमनुसृत्य ये वर्तमानाः कलत्रापत्यादयस्तेषु च स्पृहां भोगेच्छां छिन्द्यादित्यर्थः। इति वैराग्य-मुपदिष्टम् ॥ १५ ॥ गृहादिति द्वयम्। धीरो जितेन्द्रियः इति ब्रह्मचर्यादियमोपलक्षणम्। गृहात्प्रव्रजितो निर्गतः पुण्यतीर्थानां जलेषु आप्लुतः स्नातः इति नियमोपलक्षणम्। शुचौ पवित्रे विविक्त एकान्ते देशे विधिवच्चैलाजिनकुशोत्तरमिति रीत्या कल्पित आसने आसीनः सन् इति योगस्याष्टस्वङ्गेषु यमनियमासनसूचनम्। त्रिवृत्त्रयाणामकारोकारमकाराणां वृद्धर्तनं यस्मिन् तदकारा-दित्रयग्रथितं शुद्धं परं मन्त्रान्तरेभ्यः श्रेष्ठं ब्रह्माक्षरं प्रणवं मनसाऽभ्यसेत् जपेत्। जितश्वासः सन् ब्रह्मबीजं प्रणवमविस्मरन् स्मरन्नेव मनो यच्छेद्वशीकुर्यात् इति प्राणायामः ॥ १६–१७ ॥ नियच्छेदिति। बुद्धिः सारथिः सहायो यस्य सः मुमुक्षुर्मनसा विषयेभ्यः शब्दादिभ्योऽक्षान्। श्रोत्रादीनीन्द्रियाणि पुंस्त्वमार्षम्। नियच्छेत्परावर्तेत इति प्रत्याहारः। कर्मभिर्वासनाभिरा-क्षिप्तमाकृष्टं यद्वा कर्मभिः प्रत्याहाररूपैराक्षिप्तमा सर्वतो विषयेभ्यो दूरीकृतं विशुद्धं मनः शुभार्थे शुभाश्रये भगवद्रूपे धिया निश्चयात्मिकया बुद्धया धारयेत् स्थिरं कुर्यात् इति धारणा ॥ १८ ॥ तत्रेति। तत्र भगवत्स्वरूपेऽव्युच्छिन्नेन समग्ररूपादवियुक्तेन चेतसैकमेकं पादाद्यवयवं ध्यायेत् इति ध्यानम्। आश्रयविशेषे सामान्यतश्चित्तस्थिरीकरणं धारणा। अवयवविभावनया तद्दार्ढ्यं ध्यानमिति भेदः। मनो निर्विषयं युङ्क्त्वा परमानन्दमात्राकारं कृत्वा। ङकारवान् पाठ आर्षः। ततस्तदनन्तरं किंचनाप्यन्यन्न स्मरेत् इति समाधिः ॥ १९ ॥ पदमिति अर्द्धम्। यत्र स्थितं मनः प्रसीदति उपशाम्यति तत् परमं श्रेष्ठं भगवतो विष्णोः पदं स्वरूपमेव च नान्यत्। गुणवशात्पुनरपि क्षोभे धारणामेव स्थिरीकुर्य्यादित्याह रज इति। यदात्मनः स्वस्य मनो रजसाऽऽक्षिप्तं तमसा विमूढं वा स्यात्तदा धीरः सन् धारणया तद् यच्छेद्वशीकुर्यात्। या धारणा तत्कृतं रजस्तमोभ्यां कृतं मलं विक्षेपमोहरूपं दोषं हन्ति निवर्तयति ॥ २० ॥

यत इति। यतो यस्यां धारणायां सन्धार्यमाणायां सम्यक्क्रियमाणायां भद्रं मङ्गलरूपमाश्रयं विषयं भगवत्स्वरूप-मीक्षतो ध्यातुर्योगिनः। शता आर्षः। भक्तिलक्षणो भगवति परमप्रेमरूपो योगस्तत्प्राप्त्युपायरूपश्च आशु सम्पद्यते सैव धारणाऽ-नुष्ठेया इति शेषः ॥ २१ ॥ यथेति। हे ब्रह्मन्! धारणा यथा सन्धार्यते यत्र च स्वरूपे धारणा सम्मताऽभिप्रेता यादृशी वा धारणाऽऽशु शीघ्रं पुरुषस्य योगिनो मनोमलं विक्षेपादिकं हरेदिति धारणाप्रकारादि वक्तव्यम् ॥ २२ ॥ जितासन इति। जितासनः अभ्यासबलेन आसनकृतायासरहितः जितश्वासः प्राणायामेन वशीकृतश्वासः जितसङ्गोऽपत्यादावासक्तिरहितः जितेन्द्रियश्च सन् धिया निश्चयात्मिकया बुद्धया स्थूले भगवतो रूपे मनः सम्यग्धारयेत् ॥ २३ ॥ स्थूलरूपमाह—विशेष इति। विशेषः अयमपरोक्षो ब्रह्माण्डात्मकः समष्टिविराड् देहो विशेषशब्दवाच्यस्तस्य भगवतो देहः स्थवीयसां स्थूलतराणामपि मध्ये स्थविष्ठः स्थूलतमः। यत्र भगवद्देह इदं भूतं भव्यं भवच्च सत् समष्टिव्यष्ट्यात्मकं कार्यमात्रं विश्वं दृश्यते। अत्र विराड्देहतज्जीव-तदन्तर्यामिणामभेदमारोप्योपासनं कर्तव्यमित्याशयेनोक्तम् ॥ २४ ॥ अस्य चोपलक्षणत्वेन विषयत्वम्। वस्तुतस्तु विराड् जीवनियन्ता भगवानेव धारणाविषय इत्याह—आण्डेति। अण्डकोशान्तर्वर्तिकटाह एव पृथिव्यावरणं ततोऽप्तेजोवाय्वाका-शाहङ्कारमहत्तत्त्वानि दशगुणोत्तराधिकानि सप्तावरणानि तैः संयुतेऽस्मिन्नाण्डकोशाख्ये शरीरे योऽसौ शरीरी वैराजाख्यः हिरण्यगर्भदेहः तज्जीवान्तर्यामी भगवान्पुरुषो धारणाया आश्रयः ॥ २५ ॥ विराड्देहतज्जीवतदन्तर्यामिणमभेदमारोप्योपासनं कार्यमित्याह—पातालमिति। पातालम् एतस्य वैराजपुरुषस्य पादमूलं पादस्याधोभागं पठन्ति वेदज्ञाः पातालं पादतलत्वेनो-पास्यमिति। एवं पातालादीननूद्य भगवतः पादमूलत्वादिना उपास्यत्वं विधीयते। रसातलं तु पार्ष्णिः पादपश्चाद्भागः प्रपदं पादाग्रभागस्तदुभयं पठन्ति। अथ तथा महातलम् अस्य विश्वसृजः पुरुषस्य भगवतो गुल्फौ पठन्ति। तलातलं द्वे अपि जङ्घे पठन्ति ॥ २६ ॥

द्वे इति। हे महीपते! सुतलं विश्वमूर्त्तेर्भगवतो द्वे जानुनी गृणन्ति। वितलं चातलं च तस्योरुद्वयं गृणन्ति। वितलम् ऊरोरधोभागोऽतलमुत्तरभाग इति ज्ञेयम् महोतलं भूलोकं तस्य जघनं कट्याः पुरोभागं गृणन्ति। नभस्तलं भुवर्लोकं नाभिरेव सरस्तद् गृणन्ति॥ २७॥ उरःस्थलमिति। ज्योतिरनिकं ज्योतिषां समूहं स्वर्लोकम् अस्य वैराजस्योरःस्थलमुरःप्रदेशं गृणन्ति। महर्लोकं ग्रीवेति गृणन्ति। जनो जनलोकोऽस्य वदनमिति गृणन्ति। तपोलोकम् अस्यादिपुंसो रराटीं ललाटं विदुर्जानन्ति। सत्यं सत्यलोकं तु अस्य सहस्रशीर्ष्णः सहस्रशिरसः शीर्षाणि शिरांसि विदुः॥ २८॥ इन्द्रादय इति। इन्द्रादय उस्रास्तेजोमयशरीराः 'किरणोस्रमयूखांo इत्यमरः। देवाः अमुष्य वैराजस्य बाहव इत्याहुः। दिशोऽस्मदादिश्रोत्राधिष्ठात्र्यो देवताः। अस्य कर्णौ श्रोत्रेन्द्रियस्याधिष्ठानम् आहुः। अस्मदादिश्रोत्रविषयः शब्दस्तु तस्य श्रोत्रेन्द्रियम्। एवमग्रे नासिकादिष्वपि द्रष्टव्यम्। अत्र व्यष्टिसमष्टिविराजोर्यद्यपि तुल्यमेवाध्यात्मादिविभाग तथापि समष्टिविराट्हिरण्यगर्भोपासकैर्योगिभिः परमेश्वरत्वेनोपास्यः परमेश्वरस्य चेन्द्रियेभ्य एव व्यष्टिविराजो विषयाः भवन्ति। तदिन्द्रियाधिष्ठानेभ्यस्त्विन्द्रियाणि इन्द्रियाधिष्ठात्र्यो देवताश्च स्युरिति कार्यकारणयोरभेदोपचारादैक्येन दिक्शब्दादिभिः समष्टिविराजः कर्णश्रोत्रादिकल्पना ज्ञेयेति। नासत्यदस्रौ अश्विनौ परमस्य वैराजस्य नासे नासिकापुटे। गन्धोऽस्य घ्राणेन्द्रियम्। इद्धः प्रदीप्तोऽग्निर्मुखम्॥ २९॥ द्यौरिति। द्यौर्द्युलोकस्तत्रत्यः सूर्यो वा अक्षिणी नेत्रगोलके। पतङ्गः सूर्यस्तैजसं रूपं वा विष्णोर्व्यापकस्य वैराजस्य चक्षुरिन्द्रियमभूत्। दिवः सूर्यस्य चाक्षिणोति च वक्ष्यमाणात्। उभे अहनी अहोरात्रं तस्य विष्णोः पक्ष्माणि। परमेष्ठिनः चतुर्मुखस्य धिष्ण्यं स्थानं तस्य भ्रूविजम्भो भ्रूविलासः आप तदभिमानी वरुणः अस्य तालु। रसः अस्य जिह्वा इन्द्रियम्॥ ३०॥ छन्दांसि इति। छन्दांसि गायत्र्यादीनि अनन्तस्य वैराजस्य शिरः गृणन्ति। अत्र शिरःशब्देन तदुपरिभागो ब्रह्मरन्ध्रं पूर्वं सत्यं तु शीर्षाणीत्युक्तत्वात्। यशो गृणन्तीति पाठान्तरम्। यमः दंष्ट्रा पुत्रादिस्नेहस्य कलालेशा द्विजानि दन्ताः। परडत्वमार्षम्। जनानामुन्मादकरी माया तस्य हासः। यन् योऽयं दुरन्तोऽपारः सर्गः स तस्यापाङ्गमोक्षः कटाक्षः तेनैव सृष्टिप्रवृत्तेः॥ ३१॥ व्रीडेति। व्रीडा लज्जा अस्य उत्तरोष्ठ उपरितनौष्ठः लोभ एवाधरोऽधरोष्ठः धर्मः स्तनोऽपथोऽधर्ममार्गः अस्य पृष्ठभागः कः प्रजापतिः तस्य मेढ्रं मित्रो मित्रावरुणौ तस्य वृषणौ समुद्राः कुक्षिरुदरं गिरयोऽस्थिसङ्घाः॥ ३२॥

नद्य इति। हे नृपेन्द्र! नद्यो गङ्गादयोऽस्य नाड्योऽथ तथा महीरुह वृक्षा विश्वतनोर्वैराजस्य तनूरुहाणि रोमाणि मातरिश्वा वायुः अनन्तवीर्यस्य भगवतः श्वसितं प्राणः। पृथक्पदपाठे मातरिश्वनो विशेषणम्। वयः कालः गतिर्गमनं गुणानां सत्त्वरजस्तमसां प्रवाहः देवतिर्यङ्मनुष्यादिसृष्टिररा तस्य कर्म क्रीडा॥ ३३॥ ईशस्येति। हे कुरुवर्य! अम्बुवाहान् मेघान् ईशस्य तस्य वैराजस्य भगवतः केशान्विदुः। सायम्प्रातरुभे सन्ध्ये तु भूम्नो महतोऽस्य भगवतो वासो वस्त्रम्। अव्यक्तं प्रधानं तु यस्य हृदयमाहुः। स प्रसिद्धः सर्वविकारकोशः सर्वौषध्यादिविकारहेतुभूतश्चन्द्रमा तदीयं मनः॥ ३४॥ विज्ञानेति। महिं महत्त्वं तस्य सर्वात्मनः विज्ञानशक्तिं चित्तमामनन्ति कथयन्ति। गिरित्रं श्रीरुद्रमन्तःकरणमहङ्कारमामनन्ति। अश्वा अश्वतर्यः रासभाद्वडवायामुत्पन्नाः उष्ट्राः गजाश्चेत्याद्यास्तस्य नखानि। सर्वे मृगा हरिणादयः पशवश्च गवादयस्तस्य श्रोणिदेश उपास्या इत्यर्थः॥ ३५॥ वयांसीति। वयांसि विचित्ररूपाः पक्षिणः तत्तस्य व्याकरणं नामरूपे व्याकरवाणीति श्रुत्युक्तं शिल्पनैपुण्यम्। मनुः स्वायम्भुवादिर्मनीषा बुद्धिः मनुजो मनुष्यवर्गो निवासः स्थानं 'पुरुषत्वे चाविस्तरामात्मा' इति श्रुतेः। गन्धर्वा विद्याधराः चारणाः अप्सरसश्चेत्येषां समाहारद्वन्द्वः। स्वरः भगवत्कर्तृकः षड्जादिरागविशेषः असुरानीकवर्यः असुरसमूहश्रेष्ठः प्रह्लादस्तस्य स्मृतिः। स्मृतीरिति पाठे स्मृतय इत्यर्थः। पूर्णसवर्णदीर्घ आर्षः। स्वस्मृतीरसुरानीकवीर्य इति पाठे तु गन्धर्वादयः तस्य स्वरजातय इत्यर्थः। असुरानीकं वीर्यं प्रभावो यस्य स इति समास एवोद्देश्यविधेयभावः॥३६॥ ब्रह्मेति। ब्रह्मा ब्राह्मणस्तस्याननं भगवतो मुखद्वयं ब्राह्मणोऽग्निः पूर्वमेव मुखमग्निरिद्ध इत्युक्त· क्षत्रं क्षत्रियो रक्षकत्वाद् भुजो यस्य सः विड्वैश्यः व्यवहारनिर्वाहिकत्वादूरू यस्य सः अङ्घ्रिश्रितः कृष्णवर्णः सेवाधर्मकः शूद्रो यस्य स एवंविधो महात्मा सर्वात्मा वैराजः नानाभिधा नानानामका ये अभीज्या यष्टव्या वसुरुद्रादयो देवास्तेषां गुणैरुपपन्नो युक्तो यो द्रव्यात्मको हविः साध्यो वितानयोगो यज्ञादिप्रयोगः स तस्य कर्म। आवश्यकतयाऽभिप्रेतम्॥ ३७॥ इयानिति। इयानेतावानसावीश्वरविग्रहस्य यः संनिवेशोऽवयवसंस्थानरूपः स मया ते तुभ्यं कथितः। अस्मिन्स्थविष्ठे वपुषि योगिभिः स्वबुद्ध्या मनः सन्धार्यते यतो यस्मादीश्वरविग्रहाद्व्यतिरिक्तं वस्तु किंचिदपि नास्तीति अयमर्थः। मनो हि स्वचाञ्चल्यवशाद्यत्र यत्र भ्रमति तत्र तत्र भगवतोऽमुकमङ्गमिति स्वबुद्ध्या विचारयेदेवं च मनसः स्वाभाविकाः सर्व एव विषया भगवदङ्गान्येवेति सर्वमपि चिन्तनं भगवच्चिन्तनमेवेति पर्यवस्येत्तदा स्पर्द्धावज्ञादयो नैवोत्पद्येरन्। तद्विषयाणां मनुष्यगर्दभादीनामपि भगवदङ्गभूतत्वेन ध्येयत्वादिति॥ ३८॥

एवं मनसश्चाञ्चल्यनिवृत्तये सर्वत्र भगवदङ्गताभावनया स्पर्धावज्ञादिदोषनिवृत्तये च विराड्देहजीवेश्वराणामभेदेन स्थूलधारणोक्ता। चित्ते स्थिरे तु देहजीवौ भगवति विलाप्य भगवानेव ध्येय इत्याह—स इति। सर्वेषां धीवृत्तिभिरनुभूतं

सर्वं येन स तथाभूत इत्यर्थः। यथा स्वप्ने कल्पितानां जनानामिन्द्रियैः ईक्षिता एक एवात्मा जीवस्तथा भगवानपीत्यर्थः। अतः सत्यम् आनन्दनिधिं च तं भजेत। अन्यत्र देहापत्यादौ धारणाफलभूतसिद्धिषु च न सज्जेत्। यतो यस्मादासङ्गादात्मनः स्वस्य संसारमध्ये पात एव भवति ॥ ३९ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो प्रथमे द्वितीयस्य व्यधादिमाम् ॥

इति श्रीमद्भागवते द्वितीये स्कन्धेऽन्वितार्थप्रकाशिकायां प्रथमोऽध्यायः ॥ १ ॥



## अथ द्वितीयोऽध्यायः

श्रीशुक उवाच

एवं पुरा धारणयाऽऽत्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात्।
तथा ससर्जेदममोघदृष्टिर्यथाप्ययात्प्राग्व्यवसायबुद्धिः ॥ १ ॥

द्वितीये स्थूले जितस्य मनसः सर्वसाक्षिणि। सर्वेशे धारणा विष्णौ तत्र श्लोका नगाग्नयः (३७)॥

उवाचेत्येकमङ्घ्र्यूनाः शशिबाणा (५०॥) अनुष्टुभः ॥ २ ॥

एवमिति। एवं या धारणोक्ता तया तुष्टाद्धरेः सकाशात् पुरा प्रलयसमये नष्टां सृष्टिस्मृतिं प्रत्यवरुद्ध्य लब्ध्वा व्यवसायात्मिका एवमेवेदं स्रष्टव्यमिति निश्चयरूपा बुद्धिर्यस्य तथाभूतः सन् अत एव तया धारणया विश्वसृष्टिसामर्थ्यात् अमोघा दृष्टिर्यस्य स आत्मयोनिः ब्रह्मा अप्ययात्प्रलयात् प्रागिदं विश्वं यथा आसीत्तथा ससर्ज ॥ १ ॥ सर्वत्र विरक्तस्य शुद्धधारणायामधिकारोऽतो वैराग्यार्थं सर्वं निन्दति—शाब्दस्येति। शाब्दं शब्दमयं ब्रह्म वेदस्तस्यैष पन्थाः कर्मफलबोधनप्रकारः यत् अपार्थैः अपगतार्थैरेव "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिनामभिरक्षय्यत्वबोधकशब्दैः साधकस्य धीर्बुद्धिर्ध्यायति तत्तत्फलेच्छां करोति इति तत्र स्वर्गादौ मायामये पथि सुखमिति वासनया शयानः स्वप्नान्पश्यन्निव परिभ्रमन् अर्थान् न विन्दते तत्तल्लोकं प्राप्तोऽपि क्षयिष्णुत्वात् निरतिशयसुखं न लभते ॥ २ ॥ सर्वकर्मफलत्यागे देहपातमाशङ्क्याह—अत इति। अतः स्वर्गादावपि यथेष्टसुखाभावात् व्यवसायबुद्धिः नेदं सुखमिति निश्चयात्मकबुद्धिः कविर्धीमान् नामसु नाममात्रेषु भोग्यवस्तुषु यावता वस्तुना अर्थो देहनिर्वाहो यस्य तथाभूतः स्यात् तथा अप्रमत्तः तावन्मात्रेऽपि अनासक्तः स्यात्। तत्रापि अन्यथैव यत्नं विनैव अर्थे देहनिर्वाहादौ प्रयोजने सिद्धे सति तत्र यत्ने परिश्रममेव फलं समीक्षमाणः तत्र भूयस्ततोऽधिकलाभार्थं न यतेत ॥ ३ ॥ अन्यथासिद्धिमाह—सत्यामिति। क्षितौ सत्यां कशिपोः शय्यायाः प्रयासैः किं प्रयोजनम्। बाहौ स्वतः सिद्धे सति उपबर्हणैः उच्छीर्षकैः किम्। अञ्जलौ सति पुरुधा बहुधा अन्नपात्र्या बहुप्रकारान्नभोजनपात्रेण किम्। धाप्रत्यय आर्षः। दिशः पूर्वाद्या वल्कलं वृक्षत्वक् तदादौ सति दुकूलैः पट्टवस्त्रैः किं प्रयोजनम् ॥ ४ ॥ चीराणीति। चीराणि जीर्णवस्त्रखण्डानि पथि मार्गे पतितानि किन्न सन्ति। परान् बिभ्रति फलादिभिः पुष्णन्ति ते परभृतोऽङ्घ्रिपाः वृक्षाः किं भिक्षायां स्वफलपत्रादिरूपान्नैव दिशन्ति। जलार्थं सरितो नद्यः अपि अशुष्यन् किं तथा निवासार्थं गुहाः पर्वतबिलानि किम् रुद्धाः। सर्वेषामप्यलाभे भगवानेव योगक्षेमं विधास्यतीति विश्वसनीयमित्याह। अजितो भगवान् उपसन्नान् शरणागतान् किं नावति न रक्षति? अतः कवयो विवेकिनः धनदुर्मदेनान्धान् कस्माद्धेतोर्भजन्ति। अपि तु न भजन्त्येव ॥ ५ ॥

एवमिति। एवं देहादिनिर्वाहे सति य आत्मा प्रियः अर्थः सत्यः अनन्तः भगवान् स्वचित्तेऽन्तःकरणे स्वत एव सिद्धः अन्तर्यामितया स्थितः अस्ति। यत्र च भगवति संसारहेतोरविद्यया उपरमो निवृत्तिर्भवति तं भगवन्तं निर्वृतः भजनानन्दनिमग्नः नियतो निश्चितोऽर्थो भगवद्रूपो येन तादृशःसन् नित्यं भजेत्॥ ६॥ क इति। यमराजद्वारि यातनानदी वैतरणी तस्यां तत्तुल्यायां संसृतौ पतितं तत्र च स्वकर्मजान् परितापान् जुषाणं भुञ्जानम्। भुगभाव आर्षः। जनं पश्यन्नपि को नाम जनः तां पूर्वोक्तां परस्य भगवतः अनु चिन्तामनादृत्य पशून् ऋते विना असतीं विषयचिन्तां युञ्ज्यात् कुर्यात्। यस्तां चिन्तां कुर्यात् स तु पशुरेवेत्यर्थः॥ ७॥ केचिदिति। केचित्तु स्वदेहस्यान्तर्मध्ये यो हृदयावकाशस्तत्र वसन्तं प्रादेशस्तर्जन्यङ्गुष्ठयोर्विस्तारः स एव मात्रा प्रमाणं यस्येति हृदयप्रमाणं तत्रोपचर्यते चतुर्भुजं कञ्जरथाङ्गादिकं धरति तं पुरुषं धारणया स्मरन्ति॥ ८॥ प्रसन्नेति। प्रसन्नमनुग्रहोन्मुखं वक्त्रं मुखं यस्य तं नलिने इव तापहारे आयते दीर्घे ईक्षणे नेत्रे यस्य तं कदम्बकुसुमस्य यः किञ्जल्कः केशरस्ते इव पिशङ्गे पीते वाससी यस्य तं लसन्ति महारत्नानि येषु तानि हिरण्मयान्यङ्गदानि यस्य तं स्फुरन्ति यानि महारत्नानि तन्मयानि किरीटकुण्डलानि यस्य तं स्मरन्तीत्यनुषङ्गोऽग्रेऽपि॥ ९॥ उन्निद्रेति। उन्निद्रं विकसितं यत् हृत्पङ्कजं तस्य कर्णिकैव आलयः स्थानं तस्मिन् योगेश्वरैरास्थापितौ पादपल्लवौ यस्य तं श्रीर्लक्ष्मीरेव लक्ष्मणं चिह्नं वामस्तनोर्ध्वं लक्ष्मीरेखायुक्तं यस्य तं कौस्तुभं रत्नं कन्धरायां कन्धरासन्नवक्षसि यस्य तम्। यद्वा। कौस्तुभरत्नं तद्ग्रथनहिरण्मयसूत्रं कन्धरायां यस्य अम्लानाः लक्ष्म्यः शोभा यस्यास्तया एकवचनान्तस्यैव लक्ष्मीशब्दस्योरःप्रभृतिषु पाठादत्र बहुत्वान्न कप्। वनमालया आचितं व्याप्तम्॥ १०॥ विभूषितमिति। मेखलया कटिसूत्रेण महाधनैरमूल्यरत्नादियुक्तैरङ्गुलीयकैर्नूपुरकङ्कणादिभिश्च विभूषितं स्निग्धानि अमलानि आकुञ्चितानि नीलानि च यानि कुन्तलानि तैर्विरोचमाने आनने यो हासस्तेन पेशलं सुन्दरम्॥ ११॥ अदीनेति। अदीनम् अत्युदारं यल्लीलाहसितं तेन युक्तं यदीक्षणं तेनोल्लसन्तो भ्रूभङ्गाः भ्रूविक्षेपास्तैः संसूचितो भूर्यनुग्रहो येन तं चिन्तामयं चिन्तयैवाविर्भवन्तमेनमीश्वरं यावद्धारणया मनोऽवतिष्ठते निश्चलं भवति तावदीक्षेत॥ १२॥ एकैकश इति। गदाभृतः हरेः पादादि पादप्रभृति यावद्धसितं मन्दस्मितावधि एकैकशः प्रत्येकमङ्गानि धियाऽनुभावयेत् चिन्तयेत्। यथा यथा ध्यानेन धीः शुध्यति तस्मिन्निश्चला भवति तथा तथा जितं जितमनायासेन स्फुरितं स्थानं पादगुल्फाद्यवयवमपोह्य त्यक्त्वा परं परं जङ्घाजान्वाद्यवयवं धारयेत् ध्यायेत्॥ १३॥

पूर्वोक्तवैराजधारणाया एतद्धारणाङ्गत्वमाह—यावदिति। परे ब्रह्मादयः अवरे यस्मात्तस्मिन् विश्वस्येश्वरे द्रष्टरि असि[illegible]चैतन्यघनविग्रहे अशुद्धबुद्धित्वाद्यावद् भक्तियोगः परमप्रेमलक्षणो न जायेत तावच्चित्तशुद्ध्यर्थमग्निहोत्राद्यावश्यकीः क्रियाः कुर्वंस्तदवसाने तत्समाप्तौ सावकाशसमये एतेन कर्मापि भक्तियोगपर्यन्तमेवेत्युक्तम्। प्रयतः प्रयत्नवान् सन् पुरुषस्य भगवतः स्थवीयः स्थूलतरं पूर्वोक्तं रूपं स्मरेत ध्यायेत्। तङार्षः। अत्र भागवताः धारणायां चतुर्विधा योगिनः संभवन्ति। तत्र ये भगवद्रूपमनालम्बमाना प्राणमनोधारणावन्तस्ते तु विगीता एव। एके पूर्वोक्तवैराजधारणया शुद्धचित्ता मृणालगौरायतेत्यादि तृतीयस्कन्धोक्ततदन्तर्यामिधारणावन्तः अन्ये वैराजधारणानन्तरं व्यष्टिविराडन्तर्यामिचतुर्भुजरूपधारणावन्तः। परे तु स्वत एव शुद्धचित्ताः प्रथमत एव व्यष्ट्यन्तर्यामिचतुर्भुजधारणावन्तस्त एवात्र केचित्स्वदेहेत्यत्रोक्ताः॥ १४॥ एवमासन्नमृत्योः कृत्यमुक्तम्। इदानीं तस्यैव स्वयं देहं त्यक्तुमिच्छतः कृत्यमाह—स्थिरमिति। अङ्ग हे राजन्! यतिर्योगाभ्यासी यदा इमं लोकं देहं जिहासुः स्यात् त्यक्तुमिच्छेत्तदा देशे पुण्यक्षेत्रे काले चोत्तरायणादौ मनो न सज्जयेत् देशकालौ न सिद्धिहेतू किंतु भगवानेवेति दृढनिश्चयो भवेत्। ततः जितासुः वशीकृतप्राणः स्थिरं सुखकरं चासनमाश्रितो मनसा प्राणानिन्द्रियाणि यच्छेत् अनन्यपराणि कुर्यात्। प्राणमित्यपि पाठः॥ १५॥ मन इति। धीरो मुमुक्षुः अमलया स्वबुद्ध्या मनो नियम्य बुद्धिव्यापारमात्ररतं कृत्वा एतां बुद्धिं क्षेत्रज्ञे बुद्ध्यादिद्रष्टरि निनयेत् नियच्छेत्। तं क्षेत्रज्ञमात्मनि शुद्धे तं च शुद्धमात्मानमात्मैवाहमित्यात्मनि शुद्धब्रह्मणि अवरुद्ध्य एकीकृत्य तेन लब्धा उपशान्तिः आत्मानन्दो येन तथाभूतः सन् कृत्यात् प्रयत्नाद्विरमेत। ततः परं प्राप्याभावात्। तङार्षः॥ १६॥ न यत्रेति। यत्रात्मस्वरूपे अनिमिषां देवानां मिषतः। किम्। परो नियन्ता कालो न प्रभुः किमपि कर्तुं न समर्थः। यत्र ये देवा जगताम् ईशिरे ईशा अभूवन्। आमभाव आर्षः। अधीगर्थेति कर्मणि षष्ठी। ते कालेन नियम्या देवाः कुतो नु प्रभवः स्युः यत्र सत्त्वं न प्रभुः रजस्तमश्च न प्रभू न वै विकारोऽहङ्कारः न च महान् महत्तत्वं न च प्रधानं प्रकृतिः प्रभुः॥ १७॥ परमिति। यत् यस्मात् न तत् अतत् आत्मव्यतिरिक्तं नेति नेतीत्येवं सर्वमुत्सिसृक्षवः उत्स्रष्टुं त्यक्तुमिच्छवः परमविवेकिनः दौरात्म्यं देहादिष्वात्मभावं विसृज्य अहंस्य पूज्यस्य भगवतः पदं चरणारविन्दं पदे पदे क्षणे क्षणे हृदा हृदयेन उपगुह्य आश्लिष्य अनन्यसौहृदाः न ततोऽन्यस्मिन् सौहृदं येषां तथाभूतास्तत्पूर्वोक्तं वैष्णवं विष्णुसम्बन्धि परं सर्वत उत्कृष्टं पदम् आमनन्ति निरूपयन्ति॥ १८॥

इत्थमिति। इत्थं ब्रह्मत्वेन व्यवस्थितः विज्ञानं शास्त्रं तेन जाता या दृक् ज्ञानं विज्ञानमनुभव एव दृगिति वा तस्य वीर्येण सुरन्धिता विनाशिताः आशयाः विषयवासना यस्य स मुनिर्योगी तु कृत्यादुपरमेत। तुशब्देन यदि प्रयासयन्निति वक्ष्यमाणात्सकाशाद्विशेष उक्तः। देहत्यागकाले तु जितः क्रमो येन तादृक् सन् स्वपार्ष्णिना गुदं मूलाधारमापीड्य निरुद्ध्य ततोऽनिलं

प्राणं षट्सु नाभ्यादिषु वक्ष्यमाणेषु स्थानेषु उन्नमयेदूर्ध्वं नयेत् ॥ १९ ॥ नाभ्यामिति । मुनिर्योगी नाभ्यां मणिपूरकचक्रे स्थितं तं प्राणं हृदि अनाहतचक्रेऽधिरोप्य तस्माच्चक्रादुदानस्य वायोर्गत्या तत्सञ्चारप्रकारेण उरसि कण्ठादधोदेशस्थिते विशुद्धिचक्रं नयेत् । ततोऽनन्तरं मनस्वी जितचित्तः ततः स्थानाद्बहुधा गमनसम्भवाद्धिया स्वबुद्ध्याऽनुसन्धाय विचार्य शनकैः स्वतालुमूलं पूर्वचक्रस्यैवाग्रप्रदेशं प्राणं नयेत् प्रापयेत् ॥ २० ॥ तस्मादिति । तस्मादपि स्वतालुमूलाद्बहुधा गमनसम्भवात् निरुद्धानि श्रोत्रे नेत्रे नासे आस्यमिति सप्तासूनामयननि प्राणमार्गा येन तथाभूतः सन् । सप्तायतन इत्यपि पाठः । भ्रुवोरन्तरं भ्रूमध्यस्थमाज्ञाचक्रं प्रति प्राणमुन्नयेत् । अनपेक्षः परमेष्ठ्यादिपदनिरपेक्षश्चेत् अकुण्ठा अखण्डा दृष्टिः यस्य तादृशः सन् मुहूर्तार्द्धं तथैव स्थित्वा परं परमात्मानं गतः अनुसन्दधन्मूर्द्धन् मूर्द्धानं निर्भिद्य देहमिन्द्रियाणि च विसृजेत् । मूर्द्धन्निर्त्यार्षम् ॥ २१ ॥ सद्योमुक्तिमुक्त्वा क्रममुक्तिमाह - यदीति । हे नृप ! यदि पारमेष्ठ्यं ब्रह्मपदं प्रयास्यन्भवति अष्टौ आधिपत्यानि अणिमाद्यैश्वर्याणि यस्मिंस्तद्वैहायसानां विमानेन आकाशं विचरतां सिद्धानां यद्विहारं क्रीडास्थानं वा यदि प्रयास्यन्भवति किं बहुना गुणसन्निवाये गुणसमुदायरूपे ब्रह्माण्डे यत्र कुत्र वा यदि प्रयास्यन्भवति तर्हि देहत्यागावसरे मन इन्द्रियाणि च न विसृजेत्किंतु मनसेन्द्रियैश्च चकारात्प्राणैश्च सहैव तत्तल्लोकमागार्थं गच्छेत् ॥ २२ ॥ योगेश्वराणामिति । पवनस्यान्तः आत्मा लिङ्गशरीरं येषां तेषां विद्या उपासना तपः भगवद्धर्मः योगः अष्टाङ्गः समाधिः ज्ञानं तानि ये भजन्ति तेषां योगेश्वराणां त्रिलोक्याः अन्तः पातालादिमध्ये ततो बहिर्महर्लोकादिषु च गतिं गमनसामर्थ्यमाहुः तां गतिं कर्मिणः कर्मभिर्नाप्नुवन्ति ॥ २३ ॥ तां गतिमाह—वैश्वानरमिति । हे नृप ! प्रथमं ब्रह्मपथेन ब्रह्मप्राप्तिमार्गेण शोचिषा तेजोमय्या सुषुम्णया नाड्या शरीराद्बहिरपि स्थितया विहायसा आकाशमार्गेण गतः सन् वैश्वानरम् अग्न्यभिमानिनीं देवतां याति । अथ तदनन्तरं विधूतकल्मषः निरस्तमलः क्वाप्यसज्जमान इत्यर्थः । उदस्तादुपरिष्टाद्वर्तमान हरेः सम्बन्धि ताराख्यं नारायणाधिष्ठितं शैशुमारं पञ्चमस्कन्धे वक्ष्यमाणं शिशुमाराश्रयं ज्योतिश्चक्रं प्रयाति । चक्रस्थानान्यादित्यादिध्रुवान्तानि पदानि प्रयाति इत्यर्थः । उदस्तादित्यार्षम् ॥ २४ ॥ तदिति । तज्ज्योतिश्चक्रं विश्वनाभिं सूर्याद्याश्रयं विश्वात्मकपुरुषस्य नाभिस्थानीयं वा अजहल्लिङ्गत्वान्नाभिशब्दस्य चक्रविशेषणत्वेऽपि न क्लैब्यम् । अतिवर्त्य अतिक्रम्य परतः स्वर्गिणां गत्यभावादेक एव विरजेन निर्मलेन अणीयसा अतिसूक्ष्मेण आत्मना लिङ्गदेहेन ब्रह्मविदां स्थानं स्वर्गादिस्थैर्नमस्कृतं महर्लोकमुपैति । यत् यस्मिन् महाकल्पपर्यन्तमायुर्येषां ते विशेषेण बुधाः भृग्वादयः रमन्ते स्वसुखेन वर्तन्ते ॥ २५ ॥

अथो इति । अथो अनन्तरं यदि कल्पपर्यन्तं कौतुकवशात्तत्रैव स्थातुमिच्छति तदा स योगी कल्पान्ते अनन्तस्य शेषस्य मुखानलेन विश्वं त्रैलोक्यं दंदह्यमानं गर्हितं दह्यमानं निरीक्ष्य तत्राप्यूष्मप्राप्तेः यत् द्वैपरार्ध्यं द्विपरार्द्धस्थायि सिद्धेश्वरैर्जुष्टानि सेवितानि धिष्ण्यानि विमानानि यस्मिंस्तत् । उ इति श्रैष्ठ्यं सूचितम् । पारमेष्ठ्यं ब्रह्मपदं प्रति निर्याति ॥ २६ ॥ न यत्रेति । अनिदंविदाम् इदं भगवतो ध्यानमजानतां प्राणिनां दुरन्तं दुःखं यस्मिंस्तथाभूता यः प्रभवो जन्म तस्यान्वनुदर्शनात् तेषां कृपया यच्चित्ततोदो मनःपीडा भवति तमृते तं विना यत्र सत्यलोके कुतश्चिदपि हेतोः शोको नास्ति न च जरा न मृत्युः न च आर्त्तिः न च उद्वेगो भयं केवलमन्यलोके स्थितान् प्राणिनो दुःखितान् दृष्ट्वा कृपयैव खेदो भवति नान्यत्तत्र दुःखम् ॥ २७ ॥ ब्रह्मलोकगतानां तु त्रिविधा गतिः । ये पुण्योत्कर्षेण गतास्ते कल्पान्तरे पुण्यतारतम्येनाऽऽधिकारिकाः भवन्ति । ये तु हिरण्यगर्भाद्युपासनाबलेन तत्र गतास्ते ब्रह्मणा सह मुच्यन्ते । भगवदुपासकास्तु यदि ब्रह्मलोकं गतास्तत्रैव स्थातुमिच्छन्ति तदा महाकल्पान्ते ब्रह्मणा सह मुच्यन्ते । यदि तदन्तरेव मोक्षमिच्छन्ति तदा स्वेच्छया पृथिव्यादिकावरणभेदनक्रमेण ब्रह्माण्डं भित्त्वा वैष्णवं पदमारोहन्ति । तत्र तेषां पृथिव्याद्यावरणभेदप्रकारमाह । तत्रेयं प्रक्रिया । ईश्वराधिष्ठितायाः प्रकृतेः केनचिदंशेन महत्तत्त्वं तदंशेनाहङ्कारः तदंशेन शब्दतन्मात्रद्वारा नभः एवं तदंशेनैव स्पर्शरूपरसगन्धतन्मात्रद्वारा क्रमेण वायुतेजोजलभूमयः तैश्चतुर्दशभुवनात्मकं विराट्शरीरं तस्य पञ्चाशत्कोटियोजनस्य पृथिव्येवाण्डकटाहविशेषशब्दवाच्या । तत्र कोटियोजनविशालं प्रथमावरणं पञ्चाशत्कोटियोजनविशालमित्येके । ततश्चावादीनां ये परिणता अंशास्तान्येवोत्तरोत्तरं दशगुणान्यावरणानि । अष्टमं तु प्रकृत्यावरणं व्यापकमेव । आवरणभेदश्च पूर्वं पूर्वं कार्यावरणतादात्म्यप्राप्त्यनन्तरमुत्तरोत्तरं कारणे कार्यविलापनपूर्वकं कारणतादात्म्यापत्तिस्तथा च लिङ्गशरीरेण पृथिव्यात्मतां प्राप्य तया सह जलं गच्छेत्तत्र भूमिं विलाप्य जलात्मतां प्राप्य तेन सह तेजः गच्छेत् । तत्र जलं प्रविलापयेत्यादि । अथ श्लोकव्याख्या—तत इति । ततः सत्यलोकभोगानन्तरं निर्भयः कथं यास्यामीति शङ्काशून्यः सन् योगी अत्वरन् तत्तादात्म्येन क्लेददाहादिशङ्काभावाद्यथेष्टं भोगान् भुञ्जानः । शतार्षः । विशेषं प्रतिपद्य लिङ्गदेहेन पृथिव्यात्मतां प्राप्य ततः तेनात्मना पृथ्वीरूपेण प्रागुक्तरीत्या अपः जलानि प्राप्य अबात्मतां प्रतिपद्य एवमग्रेऽपि द्रष्टव्यम् । ततोऽनलमूर्तिः तेज आवरणं प्राप्य ज्योतिर्मयः सन् काले भोगावसाने वायुमुपेत्य वाय्वात्मना बृहत आत्मनः ब्रह्मणः लिङ्गं मूर्तित्वेनोपास्यं खमाकाशमुपैति ॥२८॥ घ्राणेनेति । घ्राणेन्द्रियेणाधिष्ठितेन गन्धमुपेत्य रसनेनैवेन्द्रियेण रसमुपेत्य तथा दृष्ट्या नेत्रेण तु रूपमुपेत्य त्वचैव श्वसनं स्पर्शनमुपेत्य श्रोत्रेण च नभोगुणत्वं शब्दात्मतामुपेत्य प्राणेन तत्कर्मेन्द्रियेण चाकूतिं तत्तत्क्रियां योग्युपैति प्राप्नोति । एतेनेन्द्रियार्थानां भूतसूक्ष्माणां चातिक्रम उक्तः । अत्र पृथिव्याद्यावरणेष्वेव गन्धादयः सन्ति तेषामतिक्रमं पूर्वमनुक्तं संप्रत्याहेति ज्ञेयम् ॥ २९ ॥

स्थूलसूक्ष्मभूतातिक्रमुक्त्वा तदावरणभूताहङ्कारप्राप्त्या महदादिप्राप्तिमाह—स इति। तत्र भूतसूक्ष्माणामिंद्रियाणां च संनिकर्षं लयस्थानं तामसं चाहङ्कारं संसाद्य तत्राहङ्कारस्त्रिधा तत्र तामसाद् भूतसूक्ष्माणि जायन्ते। राजसाद्बहिर्मुखानि दशेन्द्रियाणि सात्त्विकान्मन इन्द्रियदेवताश्च तेषां लयश्च तत्तदहङ्कारे तथा च तामसाहङ्कारे भूतसूक्ष्माणि राजसाहंकारे इन्द्रियाणि प्रविलाप्येत्यर्थः। ततश्च मनोमयं देवमयं च सात्त्विकं विकार्यमहङ्कारं संसाद्य प्राप्य सात्त्विकाहङ्कारे मनो देवताश्च प्रविलाप्येत्यर्थः। ततश्चावशिष्टेन तेनाहङ्कारेण सह गत्या गमनेन स योगी विज्ञानतत्त्वं महत्तत्त्वं याति। अहङ्कारं महत्तत्त्वे प्रविलापयति इत्यर्थः। ततश्च तेन महत्तत्त्वेन गुणानां सन्निरोधो लयो यस्मिंस्तत्प्रधानं प्रयाति महत्तत्त्वं प्रधाने प्रविलापयतीत्यर्थः ॥ ३० ॥ तेनात्मनेति। अङ्ग हे राजन्! तेनात्मना प्रधानरूपेण वर्त्तमानोऽपि तस्याप्यवसाने लये सति स्वयमानन्दमयः शान्तमविकृतमानन्दविग्रहमात्मानं परमात्मानमुपैति प्राप्नोति। एतां भागवतीं भगवत्संबन्धिनीं गतिं यो गतः स पुनरिह संसारे नैव विषज्जते नैवावर्त्तते ॥ ३१ ॥ एते इति। हे नृप! एते ह सृती त्वया म्रियमाणैः किं कार्यमिति सामान्यकुक्षिगतत्वेन पृष्टे वेदे न गीते न तु स्वोत्प्रेक्षिते सनातने च ये च सृती पुरा ब्रह्मणाराधितोऽतः प्रत्यक्षः संस्तेन पृष्टो भगवान्वासुदेवो ब्रह्मणे आह स्म। ते एते सृती मोक्षमार्गौ ज्ञेये। तत्र अनपेक्षो निर्भिद्य मूर्द्धन् विसृजेत्परं गत इति या सद्योमुक्तिः सैका सृतिः। यदि प्रयास्यन्नित्यादिना क्रममुक्तिश्च द्वितीया सृतिः यद्वा। अर्चिरादिमार्गो धूमादिमार्गश्चेति सृती ज्ञेये ते अपि वक्ष्येते वेदे च। 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते।' इति सद्योमुक्तिः। तेऽर्चिरभिसंभवन्ति इत्यादिना क्रममुक्तिश्चोक्ता ॥ ३२ ॥ न हीति। इह संसृतौ संसारे विशतः पुंसः यतः साधनात् वासुदेवे भगवति भक्तियोगो भवेत् अतोऽन्यः शिवः सुखकरः पन्था नास्ति ॥ ३३ ॥ भगवानिति। भगवान् ब्रह्मा कूटस्थो निर्विकार एकाग्रचित्तः सन् स्वमनीषयात्रिः त्रीन् वारान् कार्त्स्न्येन साकल्येन ब्रह्म वेदमन्वीक्ष्य विचार्य यतः साधनादात्मनि हरौ रतिर्भक्तिर्भवेत्तदेव साधनं समीचीनमार्गतयाऽध्यवस्यत् निश्चितवान्। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः ॥ ३४ ॥ नन्वननुभूते हरौ कथं रतिर्भवेत्तत्राह—भगवानिति। द्रष्टा भगवान् हरिः सर्वभूतेषु स्वात्मना जीवान्तर्यामितया लक्षित तथा दृश्यैर्बुद्ध्यादिभिर्लक्षणैः स्वप्रकाशान्तर्यामिकलक्षकैः लक्षितः तथा अनुमापकैरनुमानजनकै-र्दृश्यैर्बुद्ध्यादिभिर्हेतुभिर्लक्षितः अनुभूतः। जीवाः प्रयोजककर्तृस्वामिका अस्वातन्त्र्यात् तक्षादिवत् इति जीवान्तर्यामितयाऽनुमानम्। तथा दृश्यानां जडानां दर्शनं स्वप्रकाशं द्रष्टारं विना न घटत इत्यनुपपत्तिमुखेन बुद्ध्यादीनि स्वप्रकाशमन्तर्यामिणं लक्षयन्ति तथा बुद्ध्यादीनि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवदिति व्याप्तिमुखेन स्वतन्त्रं कर्त्तारमनुमापयन्ति ॥ ३५ ॥ तस्मादिति। हे राजन्! तस्माद्धेतोः सर्वात्मना एकाग्रेण मनसा सर्वत्र देशे सर्वदा काले च हरिर्भगवान् नृणां श्रोतव्यः कीर्तितव्यः स्मर्तव्यश्च ॥ ३६ ॥ पिबन्तीति सतां भक्तानां श्रवणरूपेषु पुटेषु संभृतं सर्वात्मनो भगवतः कथारूपममृतं ये पिबन्ति आदरेण शृण्वन्ति श्रवणपुटेषु संभृतं सतामात्मनो भगवतः कथामृतमिति वाऽन्वयः। ते विषयवासनाभिर्विशेषेण दूषितमाशयं स्वान्तःकरणं पुनन्ति शोधयन्ति। तस्य भगवतश्चरणसरोरुहस्यान्तिकं समीपं व्रजन्ति च ॥ ३७ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो द्वितीये द्वितीयस्य व्यधादिमाम्।

इति श्रीभागवते द्वितीयस्कन्धेऽन्वितार्थप्रकाशिकायां द्वितीयोऽध्यायः ॥ २ ॥

—:❀:—

## अथ तृतीयोऽध्यायः

श्रीशुक उवाच

एवमेतन्निगदितं पृष्टवान्यद्भवान्मम । नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणाम् ॥ १ ॥

तृतीये विविधैः कामैः प्रोक्तं नानासुरार्चनम् । हरिभक्तेः प्रशंसाऽत्र श्लोकानां पञ्चविंशतिः । उवाचेति द्वयं चाष्टाविंशति स्यादनुष्टुभाम् ॥ ३ ॥

अथान्यदेवताभजनस्य तुच्छफलत्वेन हेयत्वं वक्तुं पूर्वोक्तमनुवदति - एवमिति । मनुष्येषु ये मनीषिणस्तेषां म्रियमाणानाम् आसन्नमृत्यूनां नृणां यत् कृत्यं तद्यद् भवान् मम मां पृष्टवांस्तदेवमेतद्धरिकथाश्रवणादिकं निगदितं शास्त्रेषु विहितम् ॥ १ ॥ किं वा भजनीयमिति पृष्टं तत्र मन्दधियां भजनीयानाह—ब्रह्मवर्चसेति । वेदाध्ययनादिजनितं तेजो ब्रह्मवर्चसं तत्कामः ब्रह्मणस्पतिं वेदस्य पतिं ब्रह्माणं यजेत । "षष्ठ्याः पतिपुत्र०" इत्यादिना छान्दसं विसर्गस्य सत्त्वम् । इन्द्रियसामर्थ्य-कामस्तु इन्द्रं यजेतेत्यग्रेऽप्यनुषङ्गः । प्रजाकामः पुत्रकामः प्रजापतीन् दक्षादीन् यजेत ॥ २ ॥ देवीमिति । श्रीः सम्पतिस्तत्कामः देवीं मायां दुर्गां यजेत । तेजस्कामः विभावसुमग्निं यजेत । वसुकामो धनमात्रार्थी द्रोणादीन् वसून् यजेत । वीर्यं प्रभावस्तत्कामो रुद्रान् यजेत । ततश्च वीर्यवान् भवतीति शेषः ; यद्वा वीर्यवान् बलवान्पुरुषो वीर्यकामः बहुस्त्रीसंभोगार्थकशुक्रकामश्चेत् रुद्रान् यजेत ॥ ३ ॥ अन्नेति । अन्नं भोज्यम् आद्यं भक्ष्यं च तत्कामस्त्वदितिं यजेत । स्वर्गकामः अदितेः सुतान् द्वादशादित्यान् यजेत । राज्यं राज्ञः कर्म तत्कामो विश्वान् देवान् यजेत । अग्रे तु राज्यं राजत्वमिति भेदः । विशां देशस्थप्रजानां संसाधकः स्वाधीनतामिच्छन् साध्यान् यजेत । यद्वा । विशां वैश्यवृत्तीनां कृषिवाणिज्यादीनां साधने प्रवृत्तः साध्यान् यजेत ॥ ४ ॥ आयुरिति । आयुर्वृद्धिकामः अश्विनौ देवौ देववैद्यौ यजेत । पुष्टिकामः इलां भूम्यभिमानिनीं देवतां यजेत । प्रतिष्ठास्थानादप्रच्यु-तिर्लोकसम्माननं वा तत्कामः पुरुषो लोकमातरौ प्राण्याधारभूतौ रोदसी द्यावापृथिव्यौ यजेत ॥ ५ ॥ रूपेति । रूपाभिकामः गन्धर्वान् यजेत । स्त्रीकामः सुन्दरस्त्रीप्राप्तिकामः अप्सराश्चासावुर्वशी च तां यजेत । सर्वेषाम् आधिपत्यकामः परमेष्ठिनं ब्रह्माणं यजेत ॥ ६ ॥ यज्ञमिति । यशस्कामः यज्ञं यज्ञोपाधिं विष्णुं यज्ञसंज्ञमिन्द्रं वा यजेत । कोशो धनसंचयस्तत्कामः प्रचेतसं वरुणं यजेत । वसुकाम इत्यत्र धनमात्रमिति भेदः । ब्रह्मविद्याकामस्तु गिरिशं यजेत । दाम्पत्यं दम्पत्योरन्योन्यप्रीतिरूदेवार्थो यस्य स उमां सतीं यजेत ॥ ७ ॥

धर्मार्थ इति । धर्मार्थः धर्मकामः उत्तमश्लोकोपाधिं विष्णुं धर्मं वा यजेत । तन्तुं तन्वन् सन्ततिवृद्धिमिच्छन् पितॄन् अग्निष्वात्तादीन् यजेत् । रक्षा बाधानिवृत्तिस्तत्कामः पुण्यजनान् यक्षान् यजेत । ओजस्कामो बलकामो मरुद्गणान् यजेत ॥ ८ ॥ राज्येति । राज्यकामः राजत्वकामः मनून् मन्वन्तरपालान् देवान् यजेत । पूर्वं राज्यं राज्ञः कर्म अत्र राजत्वम् इति भेदः । अभिचरन् शत्रुमरणमिच्छंस्तु निर्ऋतिं राक्षसं यजेत । कामकामः कामभोगेच्छुः सोमं चन्द्रं यजेत । अकामो वैराग्यकामः परं पुरुषं प्रकृतिव्यतिरेकोपाधिमीश्वरं यजेत ॥ ९ ॥ मन्दधियां कृत्यमुक्त्वा उदारधियां कृत्यमाह—अकाम इति । अकामः एकान्तभक्तः कामनाक्षयकामो वा उक्तानुक्तसर्वकामो मोक्षकामो वा उदारधीर्जनः तीव्रेणाविच्छिन्नेन भक्तियोगेन परं पुरुषं पूर्णं निरुपाधिं यजेत । मोक्षकामस्यापि सकामत्वसूचनार्थमकामात्पृथगुपादानम् ॥ १० ॥ अन्यदेवतायजनस्यापि भगवद्भक्तिरेव मुख्यं फलमित्याह—एतावानिति । इह लोके यजतामिन्द्रादीन् भजतामपि यद् भागवतानां सङ्गतो भगवत्यचलो भावः निश्चला भक्तिर्भवति तत् एतावानेव निःश्रेयसस्योदयो लाभः अन्यत्सर्वं तुच्छमित्यर्थः । देवतान्तरभजने भगवद्भक्तसङ्गः ततो भगवद्भक्तिरित्यर्थः ॥११॥ ज्ञानमिति । यत् यासु हरिकथासु आ सर्वतः प्रतिनिवृत्तमुपरतं गुणोर्मीणां रागादीनां चक्रं समूहो यस्मात्तथाभूतं भवति । उत अपि आत्मप्रसादश्चित्तनैर्मल्यमपि यतो भवति यत्र आत्मप्रसादे सति गुणेषु विषयेष्वसङ्गो वैराग्यं च भवति । उभयत्रेति पाठान्तरे तु इहामुत्र च गुणेष्वसङ्गो भवति । अथ कैवल्ये मोक्षे यः संमतः कैवल्यमित्येव संमतो वा यः पन्थाः स तादृशो भक्तियोगश्च भवति । तासु हरिकथासु को नाम निर्वृतः श्रवणसुखानुभववान् रतिं न कुर्यात् ॥ १२ ॥ इतीति । इत्येवं पूर्वोक्तं शुकेनाभिव्याहृतं कथितं निशम्य भरतर्षभः राजा परीक्षित् ऋषिं परब्रह्मनिष्ठं कविं शब्दब्रह्मणि निष्णातं वैयासकिं शुकं भूयः अन्यत्किं पृष्टवान् ॥ १३ ॥ एतदिति । हे सूत ! हे विद्वन् ! एतच्छुकपरीक्षित्संवादरूपं शुश्रूषतां श्रोतुमिच्छताम् । शता आर्षः ।

नोऽस्माकं त्वं भाषितुमर्हसि। ध्रुवं यतः हरिकथैवोदर्क उत्तरफलं यासु तथाभूताः कथाः सतां भागवतानां सदसि स्युरिति नात्र संदेहः। एतेन विश्वसर्गविसर्गमन्वन्तरादिकथानामपि हरिकथोदर्कत्वमेव ज्ञेयम्॥ १४॥ स वै इति। स वै पाण्डवेयः महारथः राजा भागवत एव यो राजा बाल्ये बालक्रीडनकैः क्रीडन् कृष्णक्रीडां कृष्णक्रीडाकरणम्। यद्वा। कृष्णपूजारूपां क्रीडामादावेव आददे स्वीकृतवान्॥ १५॥ वैयासकिरिति। भगवान् वैयासकिः शुकश्च वासुदेवपरायणः तत्रागता अन्येऽपि भागवता एव अतस्तेषां सतां समागमे उरुगायो भगवांस्तस्य गुणैरुदाराः श्रेष्ठाः कथाः स्युः॥ १६॥

नात्र विलम्बः कार्य इत्याह—आयुरिति। असौ सूर्यः उद्यन्नुदयं प्राप्नुवन् अस्तमदर्शनं च यन् गच्छन्। इणः शतृ। यत् येन जनेन उत्तमश्लोकस्य वार्त्तया क्षणो नीतस्तस्य आयुः ऋते वर्जयित्वा पुंसामायुर्वृथैव हरति। हरिकथाक्षणस्तु वृथा न याति। तत्क्षणसाफल्यमात्रात्सर्वायुःसाफल्यमत्रोच्यते। एकस्यां शाखायां फलितायां वृक्षः फलित इतिवत्॥ १७॥ जीवनमात्रं त्वायुषः फलं न वाच्यमित्याह—तरव इति। तरवः किन्न जीवन्ति भस्त्राश्चर्मकोशा उत अपि किन्न श्वसन्ति अपरे ग्रामपशवः किं न खादन्ति नाश्नन्ति न मेहन्ति रेतःसेकं मैथुनं न कुर्वन्ति किम्॥१८॥ तदेवाह—श्वविडिति। गदाग्रजो हरिः नाम जातु कदाचिदपि यत्कर्णपथोपेतो यस्य श्रवणविषयतां गतो न भवति स पुरुषः पुरुषाकारः पशुः श्वविड्वराहोष्ट्रखरैः संस्तुत तत्र श्वभिः कुक्कुरैः अवज्ञास्पदत्वात् विड्वराहैर्ग्रामसूकरैः कश्मलवद्विषयासक्तत्वात् उष्ट्रैः कण्टकसमदुःखभाक्त्वात् खरैर्भारवाहितत्वात् सदृशतया कल्पितः पृथग्धर्माणमेकेनैव धारणात् स्तुतो वा॥ १९॥ तस्याङ्गानि च वृथेत्याह—बिले इति। हे सूत! बत खेदे। उरुक्रमस्य विक्रमान् न शृण्वतः अश्रृण्वतो नरस्य ये कर्णपुटे ते सर्पाबिले इव वृथारन्ध्रे उरुगायस्य हरेः गाथां पुरुषो न चेदुपगायति तदा तस्य जिह्वा दार्दुरिका मण्डूकजिह्वेव वृथा कटुभाषिणी असती च॥ २०॥ भार इति। पट्टेन पट्टवस्त्रोष्णीषेण किरीटेन जुष्टमप्युत्तमाङ्गं शिरो यदि मुकुन्दं न नमेत् तदा पर केवलं भार एव। लसन्ती काञ्चनकङ्कणे ययोस्तथाभूतावपि करौ वाशब्दोऽप्यर्थे यदि हरेः सपर्यां नो कुरुतस्तदा शावौ शवो मृतकस्तत्संबन्धिनाविनाशुद्धावेव॥ २१॥ बर्हायिते इति। नराणां ये नयने विष्णोर्लिङ्गानि मूर्तीर्न निरीक्षतो न निरीक्षेते। तङभाव आर्षः। ते बर्हायिते मयूरपिच्छगतनेत्रतुल्ये। नृणां यौ पादौ हरेः क्षेत्राणि तीर्थादीनि नानुव्रजतस्तौ द्रुमवज्जन्म भजत इति तथा वृक्षमूलतुल्यौ॥ २२॥ एकैकानि अङ्गानि निन्दित्वा सर्वाणि निन्दति—जीवन्निति। यस्तु मर्त्यो भागवतानामङ्घ्रिरेणुं जातु कदाचिदपि नाभिलभेत अभितो न स्पृशेत् सर्वाङ्गेषु न धारयेत् स जीवन्नपि शवो मृततुल्यः। प्रेतविशेष इव चेष्टमानः साधून् भीषयते। यस्तु श्रीविष्णुपद्याः विष्णुपदलग्नत्वेन विष्णुपदीत्यभिधानायास्तुलस्याः सुगन्धं न वेद अवघ्राय नाभिनन्देत् सोऽपि मनुजः श्वसन् जीवन्नपि शवो मृततुल्य एवेत्यर्थः॥ २३॥ बाह्यमङ्गं निन्दित्वाऽन्तरङ्गमपि निन्दति—तदिति। बत खेदे। हरिनामधेयैः हरिवाचकशब्दैः स्वयमन्येन वा गृह्यमाणैर्यद्धृदयं न विक्रियेत तदिदमश्मसारमश्मन इव सारं काठिन्यं यस्य यथाभूतम्। अथेति नामश्रवणानन्तरमेव। यद्वा। नेत्रे जलमानन्दाश्रु गात्ररुहेषु हर्षः रोमाञ्चश्च भवति तदा ताभ्यां तद्विकारो भक्तिलक्षणः ज्ञायेतेति शेषः॥ २४॥ अथेति। अङ्ग हे सूत! अथ तस्मात् साधु सम्यक् पृष्टः सन् आत्मविद्यायां विशारदो निपुणः वैयासकिः नृपतिं प्रति यदाह तदस्माकम् अभिधेहि। यतो भागवतेषु प्रधानस्त्वमस्माकं मनोनुकूलं हर्षकरं प्रभाषसे॥ २५॥

इति श्रीमद्भागवते द्वितीयस्कन्धेऽन्वितार्थप्रकाशिकायां तृतीयोऽध्यायः॥ ३॥

—:❀:—

# अथ चतुर्थोऽध्यायः

**सूत उवाच**

**वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः । उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधात् ॥ १ ॥**

चतुर्थे सृष्ट्यादिप्रश्नप्रसङ्गान्नारदाजयोः । संवादो वर्ण्यते तत्र श्लोकाः सार्द्धेषुबाहवः ( २५॥ )॥

चत्वार्युवाचेति सार्द्धा एकत्रिंशदनुष्टुभः ( ३१ ) ॥ ४ ॥

वैयासकेरिति । वैयासकेः शुकस्य भगवान् सर्वभूतेषु लक्षित इत्येवंभूतमात्मनो भगवतस्तत्त्वस्य निश्चयो यस्मात्तद्वैयासकेः शुकस्य वच उपधार्याऽऽकलय्य औत्तरेयः परीक्षित् श्रीकृष्णे सतीं विद्यमानामेव श्रेष्ठां मतिं भक्तिं व्यधात् विशेषेण अकरोत् ॥ १ ॥ आत्मजायेति । आत्मा देहः जायासुतौ च अगारं गृहं पशवः द्रविणं धनं बन्धवश्च तेषु अविकले निरुपद्रवे राज्ये च नित्यं सर्वदा निरूढां ममतां स्वकीयत्वाभिमानं जहौ तत्याज ॥ २ ॥ पप्रच्छेति द्वयम् । हे सत्तमाः ! कृष्णानुभावश्रवणे श्रद्दधानः महामनाः भगवति वासुदेवे दृढम् आत्मभावं परप्रेम्णा भगवदात्मत्वं गतः स राजा संस्थां मृत्युं विज्ञाय यत् त्रैवर्गिकं धर्मार्थकामसाधनं कर्म तत्संन्यस्य त्यक्त्वा यूयं यत् यं मां पृच्छथ तमिममेवार्थं हरिलीलालक्षणं पप्रच्छ च ॥ ३–४ ॥ समीचीनमिति । हे ब्रह्मन् ! हे अनघ ! सर्वज्ञस्य तव वचः समीचीनं यतस्तव हरेः कथाः कथयतः सतो मह्यं मम तमोऽज्ञानं विशीर्यते विनश्यति । कर्मकर्त्तरि लट् ॥ ५ ॥ भूय इति सार्द्धम् । अधीश्वरैरपि दुर्विभाव्यमप्रतर्क्यमिदं विश्वं भगवानात्ममायया यथा सृजते । तङार्षः । यथा च गोपायति रक्षति यथा च पुनः संयच्छते संहरति । तङार्षः । तथा भूय एव विवित्सामि वेदितुमिच्छामि । इडभाव आर्षः । पुनरित्यनेन सृष्ट्यादेः प्रवाहो दर्शितः ॥ ६ ॥ यां यामिति । पुरुशक्तिरनन्तशक्तिः परः पुमान् यां यां शक्तिमुपाश्रित्या-क्रीडन्नात्मानं ब्रह्मादिरूपिणं करोति तत्तद्रूपिणं चात्मानं क्रीडयन् विविधं करोति ॥ ७ ॥ नूनमिति । हे ब्रह्मन् ! नूनम् अद्भुतकर्मणः भवतः हरेश्चेष्टितं लीला कविभिरपि दुर्विभाव्यमिवाभाति ॥ ८ ॥

यथेति । स्वयं पुरुषरूपेण त्वेको जन्मभिरवतारैर्भूरिशः कर्माणि कुर्वन् प्रकृतेर्गुणान्युगपत् क्रमशोऽपि वा यथा बिभर्ति गृह्णाति ॥ ९ ॥ विचिकित्सितमिति । एतत्पूर्वोक्तं सर्वं मे मम विचिकित्सितं संदिग्धमतो भगवान् भवान् यथा यथावत् ब्रवीतु खलु यस्माद्धेतोः भवान् त्वं शाब्दे ब्रह्मणि वेदाख्ये विचारे निष्णातः परस्मिन् ब्रह्मणि चानुभवेन निष्णात इति ॥ १० ॥ इतीति । इत्येवं हरेर्गुणानुकथने राज्ञोपामन्त्रितः शुकः हृषीकेशं स्वेष्टदेवम् उपलक्षणतया गुरुं व्यासं चानुस्मृत्य प्रतिवक्तुम् उत्तरं दातुं प्रचक्रमे आरम्भं कृतवान् ॥ ११ ॥ तत्र हृषीकेशानुस्मरणमाह—नम इति । भूयसे महामहिम्ने सतः प्रपञ्चस्य उद्भव उत्पत्तिः स्थानं पालनं निरोधः संहार एत त्रितयरूपा या लीला तया निमित्तभूतया गृहीतं ब्रह्मविष्णुरुद्ररूपेण रजःसत्त्वतमोरूपं शक्तित्रितयं येन तस्मै देहिनामन्तर्भवाय अन्तर्यामिणे अतः सर्वान्तरत्वात् अनुपलक्ष्यं दुर्ज्ञानं वर्त्म यस्य तस्मै परस्मै सर्वोत्तमाय पुरुषाय नमः ॥ १२ ॥ भूय इति । सतां धर्मवर्तिनां वृजिनच्छिदे दुःखहारिणे असतां दुष्टानामसम्भवाय अनुद्भवहेतवे अखिलानि सत्त्वानि प्राणिन एव मूर्तिर्यस्य सर्वरूपाय परमहंसानां विवेकिनां कर्म पारमहंस्यं प्रत्यग् निष्ठारूपं तत्र य आश्रमः संन्यासाश्रमस्तत्र व्यवस्थितानां पुंसां पुनः पुनर्यदनुमृग्यमन्वेषणीयं यदात्मतत्त्वं तस्य दाशुषे दात्रे । "दाश्वान्साह्वान्" इति क्वस्वन्तश्च छान्दसः । भगवते भूयः पुनरपि नमः ॥ १३ ॥ नम इति । सात्वतां यादवानामृषभाय श्रेष्ठाय भक्तानां पालकाय वा ते तुभ्यं नमो नमोऽस्तु । मुहुः पुनः पुनर्निरन्तरं कुयोगिनां भक्तिरहितानां विदूरा काष्ठा दिगपि यस्य तस्मै दुर्ज्ञेयाय निरस्तं साम्यमतिशय आधिक्यं च यस्मात् यदपेक्षयाऽन्यस्य साम्यमतिशयश्च नास्ति तेन राधसा तेजसा ऐश्वर्येण स्वधामनि निजस्वरूपे ब्रह्मणि रंस्यते रममाणाय नमः । शता वर्तमाने लृट्वार्षः ॥ १४ ॥ यदिति । यस्य कीर्तनादिकं लोकस्य कीर्तनादिकर्तुः पुरुषस्य कल्मषं पापं सद्यो विधुनोति विनाशयति । तस्मै सुभद्रं मङ्गलरूपं श्रवो यशो यस्य तस्मै नमो नमः ॥ १५ ॥ विचक्षणा इति । विचक्षणाः निपुणबुद्धयो यस्य चरणयोरुपसादनाद्भजनात् यच्चरणशरणागमनादुभयत इहामुत्र च अन्तरात्मनो मनसः सङ्गं भोगाभिलाषं व्युदस्य त्यक्त्वाऽत एव कारणाभावात् गतक्लमाः निवृत्तप्रयासाः सन्तः ब्रह्मगतिं भगवन्तं विन्दन्ति प्राप्नुवन्ति तस्मै सुभद्रश्रवसे नमो नमः ॥ १६ ॥

तपस्विन इति। तपस्विनः कृच्छ्रचान्द्रायणादितपोनिष्ठाः दानपराः यशस्विनः कूपारामादिनिर्मातारः मनस्विनो मनआदीन्द्रिय-निग्रहपराः मन्त्रविदो मन्त्रजपपराः मन्त्रज्ञानाद्यज्ञादिकर्मानुष्ठानपरा वा सुमङ्गलाः अन्ये च स्वाचारपराः एते सर्वेऽपि स्वानुष्ठिततप आदेर्यस्मिन्नर्पणं विना क्षेमं तपआदेः परमं फलं न विन्दन्ति नैव लभन्ते तस्मै सुभद्रश्रवसे नमो नमः ॥ १७ ॥

किरातेति। किराताः हूणाः इत्यादयो जातितो दुष्टाः अन्ये च ये कर्मतः पापाः येषां प्रायश्चित्तैरपि न विशुद्धिस्ते यदपाश्रयाश्रया यो भगवान् अपाश्रयः उपाश्रयो येषां ते भगवद्भक्ताः यदपाश्रयास्ते आश्रयो येषां तथाभूताः सन्तः शुद्ध्यन्ति तस्मै प्रभविष्णवे पापादिशोधने प्रभवनशीलाय नमः ॥ १८ ॥ स इति। आत्मवतां धीराणाम् आत्मदर्शिनामेव आत्मा आत्मत्वेनोपास्यः अधीश्वरः त्रयीमयो वेदपुरुषः धर्ममयः तपोमयश्च त्रयीधर्मतपोमार्गैरुपास्यः इत्यर्थः। गतं व्यलीकं विप्रलिप्सादिदोषो येषां तैः अजशङ्करादिभिरपि वितर्क्यमत्याश्चर्येण वीक्षणीयं लिङ्गं स्वरूपं यस्य स एष पतिर्भगवान्मे प्रसीदतां प्रसन्नो भवतु। तद्गर्पः ॥ १९ ॥ श्रिय इति। पूर्वार्द्धं स्पष्टम्। अन्धकवृष्णिसात्वतां पतिः स्वामी गतिः प्राप्यं सर्वापत्सु रक्षकश्च स सतां पतिर्भगवान्मे मह्यं प्रसीदताम्। तद्गर्पः ॥ २० ॥ यदिति। यस्याङ्घ्र्योरनुध्यानमेव समाधिस्तेन धौतया शोधितया धिया आत्मनः तत्त्वं याथात्म्यं योगिनः अनुपश्यन्ति साक्षात्कुर्वन्ति। अन्ये तु अधौतधीत्वात् कवयोऽतिनिपुणा अपि एतत् तत्त्वं यथारुचं यथामति यद्वा स्वरुच्यनुसारेणैव सगुणं निर्गुणमित्यादि वदन्ति तद्याथार्थ्यं नैव जानन्ति स मुकुन्दो भगवान् मे प्रसीदताम्। तद्गर्पः ॥ २१ ॥ प्रचोदितेति। पुरा कल्पादौ अजस्य ब्रह्मणो हृदि सतीं सृष्टिविषयां स्मृतिं वितन्वता विस्तारयता येनान्तर्यामिणा प्रचोदिता प्रेरिता स्वलक्षणा स्वानि असाधारणानि लक्षणानि शिक्षाद्युक्तानि यस्याः सा सरस्वती वेदरूपा आस्यतो ब्रह्मणो मुखतः प्रादुरभूत्सः ऋषीणां ज्ञानप्रदानामृषभः श्रेष्ठो मे प्रसीदताम्। तद्गर्पः ॥ २२ ॥ भूतैरिति। यत् यस्माद् यः विभुः समर्थः पूर्षु शयनात्पुरुषश्च यः। अतः आकाशादिभिर्महद्भिर्भूतैरिमाः सर्वत्र परिदृश्यमानाः पुरः शरीराणि निर्माय अमूषु आसु पूर्षु यः शेते अन्तर्यामितया निवसति अतः पुरुषसमाख्या उपपन्ना एकादशेन्द्रियाणि पञ्चभूतानीत्येषां षोडशानामात्मा चेतयिता। स्वार्थे कन्। यः षोडश पूर्वोक्तान् गुणान् प्रकाशयति साक्षितयाऽनुभवति यद्वा पञ्च शब्दादिरूपान् विषयान् पञ्च वागादिव्यापारान् पञ्च प्राणादिवायुवृत्ती-रेकं संकल्पादिरूपमित्येवं तान् षोडशगुणान् भुङ्क्ते। नात्र जीवो विवक्षितः प्रार्थनाविरोधात्। स भगवान् मे वचांसि अलंकृषीष्ट माधुर्यादिगुणविशिष्टानि करोतु ॥ २२ ॥ श्रीगुरुं व्यासं प्रणमति—नम इति। ज्ञानमयं यन्मुखाम्बुरुहे य आसवो मकरन्दस्तं सौम्याः शान्त्यादिगुणविशिष्टा वैशम्पायनादयस्तच्छिष्याः पपुः। तस्मै वेवसे वेदादिसृष्टिप्रवर्त्तकाय भगवते वासुदेवाय वासुदेवा-वताराय श्रीव्यासाय नमः। व्यासायामिततेजसे इत्यपि पाठः ॥ २४ ॥ एतदेवेति। हे राजन्! यत्तव प्रश्नस्योत्तरतया मया वक्तव्यम् एतदेव विपृच्छते नारदाय उत्पत्तिसमय एव वेदा गर्भे यस्य सः आत्मभूः ब्रह्मा यत्साक्षाद्धरिरेव आत्मने आत्मानं ब्रह्माणं प्रति आह स्म तदेवाभ्यधात् ॥ २५ ॥

इति श्रीमद्भागवते द्वितीयस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्थोऽध्यायः ॥ ४ ॥

—·:❀:·—

# अथ पञ्चमोऽध्यायः

नारद उवाच

देवदेव नमस्तेऽस्तु भूतभावन पूर्वज । तद्विजानीहि यज्ज्ञानमात्मतत्त्वनिदर्शनम् ।। १ ।।

पञ्चमे तु हरेर्लीला सृष्ट्याद्या ब्रह्मणोच्यते । कालादिभिर्विराट्सृष्टिस्तत्र श्लोकास्त्रिवार्द्धगः ( ४३ ) ।।

अनुष्टुभोऽपि तावत्य ( ४३ ) उवाचेति द्वयं तथा ।। ५ ।।

देवदेवेति । हे देवानां देव पूज्य ! हे भूतानां भावन उत्पादक ! हे पूर्वेषां पूर्वज अनादे ! ते तुभ्यं नमोऽस्तु । यत् आत्मतत्त्वस्य निदर्शनं नितरां दर्शनम् येन तत् यत् ज्ञानं ज्ञायतेऽनेनेति ज्ञानं शास्त्रं साधनं वा विस्तरतः तद्विशेषेण जानीहि ज्ञापयेत्यर्थः ।। १ ।। यद्रूपमिति । हे प्रभो ! इदं विश्वं यद्रूपं येन रूप्यते प्रकाश्यते यदस्य लक्षणमिति वा यदधिष्ठानं यदाधारं यतः येन सृष्टं यस्मिन्संस्था लयो यस्य तत् यत्परं यदधीनं यच्च यदात्मकं स्वतः सत्कारणतो वेत्यर्थः । तस्यैतस्य तत्त्वं तत्त्वतो यथार्थतो वद । अस्य विश्वस्य प्रकाशकं लक्षणं स्रष्टृलयस्थानमीशितृ च किमिति ।। २ ।। सर्वमिति । यन्मया पृष्टमेतत्सर्वं भवान् वेद जानात्येव । हि यस्मात् भूतं पूर्वजातं भव्यं जनिष्यमाणं भवज्जायमानं तेषां प्रभुः त्वमेवातः करे आमलकवत् अमलं कं जलं तद्वद्वा सर्वमपि विश्वं तव विशिष्टेन ज्ञानेनावसितं निश्चितम् ।। ३ यद्विज्ञान इति अर्द्धम् । एवं यतो विज्ञानं यस्य स यद्विज्ञानस्त्वं विज्ञानदः क इत्यर्थः । य आधारो यस्य स यदाधारो यस्त्वाधारः स क इत्यर्थः । यः स्वामी यस्य स यत्परस्त्वं स्वामी क इत्यर्थः । य आत्मा यस्य स यदात्मकः यस्त्वात्मा तं वदेति शेषः ।। ४ ।। मम तु त्वमेव स्वतन्त्र इति बुद्धिरित्याह—एक इति सार्द्धम् । एकोऽसहाय एव त्वमात्ममायया सृष्टैर्भूतैः पृथिव्यादिभिः पञ्चमहाभूतैः भूतानि देवतिर्यङ्मनुष्यादिरूपाणि सृजसि ऊर्णनाभिः कीटविशेषः स यथा आत्मशक्तिमवष्टभ्याक्लम आयासरहित एव तन्तून् सृजत्यवति च तद्वत् तथा त्वं स्वयमात्मानं न पराभावयन् अन्यतः पराभवमप्रापयन् आत्मन् आत्मनि स्थितानि । ङिलुगार्षः । तानि स्वसृष्टानि भूतानि भावयसे पालयसि ।। ५ ।। नाहमिति । तस्मादहं तु अस्मिन् विश्वस्मिन् किंचिदपि परमुत्तममन्यतो न वेद एवमपरमधमं न वेद तथा समं च मध्यमं च न वेद । तत्रापि नाम देवमनुष्यादिरूपं द्विपदत्वाद्विगुणाः शुक्लादयः तैर्भाव्यं साध्यं तत्रापि सदसत्स्थूलं सूक्ष्मं च यद्वस्तु यत्किंचिदप्यन्यतो न वेद किंतु सर्वं त्वत्त एव भवतीति मन्ये ।। ६ ।। स इति । स एवंविधोऽपि भवान् यत् यतः सुसमाहितोऽतिसावधानः सन् घोरमन्यैर्दुश्चरं तपोऽचरत् तेन तपश्चरणेन त्वं नोऽस्मान् पुत्रान् खेदयसे मोहयसि । यतः पराशङ्कामीश्वरान्तरस्याशङ्कां प्रयच्छसि । ईश्वरान्तराभावे कस्य प्रसादनार्थं तपश्चर्येति तर्कमुत्पादयतीत्यर्थः ।। ७ ।।

एतदिति । हे सर्वज्ञ ! सकलेश्वर ! त्वयाऽनुशासितोऽनुशिक्षितोऽहम् । शास्तेः स्वार्थेणिच् क्तः । अहमिदं भवतोपदेक्ष्यमाणं यथैव बुध्ये जानीयां तथैतत् सर्वं पृच्छतो मे मम विजानीहि विशेषेण ज्ञापय । अन्तर्भावितण्यर्थः ।। ८ ।। सम्यगिति । हे वत्स ! ते तवेदं विचिकित्सितं संदेहः तत्पूर्वकः प्रश्नोऽयं सम्यगित्यर्थः । यतः कारुणिकस्य दयावतस्तवायं प्रश्नः यत् यस्मादहं भगवतो वीर्यदर्शने माहात्म्यवर्णने धर्मे परधर्मप्रदर्शने इति पाठेऽपि स एवार्थः । त्वया चोदितः प्रवर्तितोऽस्मीति अतो जिज्ञासुरपि त्वं कृपामेव कृतवान् ।।९।। नानृतमिति । भो वत्स ! एकः सृजसि भूतानीत्यादिना मां प्रति यथा प्रब्रवीषि तच्चापि तव वचनमत्यन्तमनृतं न भवति । हि यस्मात् यतः परमेश्वरान्मे ममैतावत्त्वम् एतावतः महिम्नो भावः एतावत्त्वम् । एतावत्परिमाणो महिमाऽस्ति तं मत्तः परं परमेश्वरमविज्ञाय तथा प्रब्रवीषि अतः सादृश्यात्तवेयं भ्रान्तिः नतु बुद्धिपूर्वमनृतमित्यर्थः । यतः ईश्वरान्मम एतावत्त्वं तमविज्ञायेति वा ।। १० ।। येनेति । यथा अर्कः अग्निश्च तथा वा ऋक्षाणि ग्रहास्तारकाश्च भगवत्तेजसा प्रकाशितमेव विश्वं प्रकाशयन्ति तथा येन भगवता स्वरोचिषा स्वचैतन्यप्रकाशेन रोचितं प्रकाशितमेव विश्वमहं रोचयामि प्रकाशयामि सृष्ट्वाभिव्यक्तं करोमि । 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।' इति श्रुतेः ।। ११ ।। तस्मै इति । दुर्जयया यस्य मायया विमोहिता युष्मदादयो मां जगद्गुरुं जगत्कारणं वदन्ति । तस्मै भगवते वासुदेवाय नमो धीमहि नमस्कुर्महे । छान्दसम् ।। १२ ।। विलज्जमानयेति । मत्कपटमसौ जानातीति मत्वा यस्य भगवतः ईक्षापथे दृष्टिपथे स्थातुमपि विलज्जमानया इव तस्मिन् स्वकार्यमकुर्वत्या मायया विमोहिता अस्मदादयो दुर्धियः अविद्या-

वृतज्ञाना एव केवलं ममाहमिति विकत्थन्ते श्लाघन्ते। इदं च यद्रूमित्यस्योत्तरम्॥ १३॥ द्रव्यमिति। हे ब्रह्मन्! द्रव्यं महाभूतानि उपादानरूपाणि कर्म जन्मनिमित्तं कालो गुणकर्मादिक्षोभकः स्वभावस्तत्तत्परिणामहेतुः जीवो भोक्ता अन्यश्चानुक्तः सर्वोऽपि पदार्थः तत्त्वतः परमार्थतः वासुदेवात्परो भिन्नो नास्त्येव। कार्यस्य कारणाव्यतिरेकात्। एतेन यदधिष्ठानमित्यादि-प्रश्नोत्तरमुक्तम्। वासुदेव एव सर्वस्याधिष्ठानादि इत्याशयः॥ १४॥ तत्प्रपञ्चयति—नारायणेति। वेदाः नारायणः परं तात्पर्यविषयः कारणं प्रवर्तकं नियामकं वा येषामिति यथोचितं विग्रहः। तत्र वेदाः नारायणप्रतिपादकाः देवाश्च नारायणस्याङ्गाज्जाताः अतो न तद्व्यतिरिक्ता लोकाः स्वर्गादयो नारायणपरास्तदानन्दांशा इत्यर्थः। मखाः यज्ञाः नारायणपराः स्वर्गादिसाधनत्वेन वेदद्वारा ते नारायणेनैव प्रवर्त्तिताः॥ १५॥ नारायणेति। योगोऽष्टाङ्गः नारायणपरः तेनैव प्रवर्तितः तपश्चान्द्रायणादिकं नारायणपरं तेन प्रवर्तितम्। ज्ञानमपि नारायणपरं तदधीनम्। गतिः तत्तल्लोकगमनं भगवत्प्राप्तिश्च नारायणपरा तदधीना॥ १६॥

तर्हि त्वं किं करोषि तत्राह—तस्यापीति। सृष्ट्यर्थं तेन सृष्ट उत्पादितः ईक्षया संकल्पमात्रेण अभिचोदितश्चाहमपि द्रष्टुः साक्षिणः ईशस्य कूटस्थस्य निर्विकारस्य अखिलानामात्मनः तस्यैव सृज्यं सृजामि सृष्टिकरणे प्रवर्तितस्तत्करणेन तदाज्ञां पालयामि॥ १७॥ कुतोऽयं जीवेश्वरविभागो यतस्त्वं प्रेर्यः स प्रेरकः स्यादित्यपेक्षायां जीवेश्वरविभागहेतुमाह—सत्त्वमिति। विभोः समर्थस्य निर्गुणस्यापि विभोरस्य भगवतो वशीभूताः सत्त्वं रजस्तम इति त्रयो गुणाः सन्ति। ते च स्थितिसर्गनिरोधेषु स्थित्याद्यर्थं मायया तेनैव स्वेच्छया गृहीताः सन्ति॥ १८॥ कार्येति। द्रव्यं महाभूतानि ज्ञानशब्देन देवताः क्रियाशब्देनेन्द्रियाणि तेषामाश्रयाः कारणतया आश्रयभूता ते गुणाः वस्तुतः नित्यदा मुक्तमपि बन्धरहितमपि। दा आर्षः। मायिनं मायाविषयं पुरुषं जीवं कार्यकारणकर्तृत्वे कार्यमधिभूतं देहः कारणमध्यात्ममिन्द्रियाणि कर्ता अधिदैवतं देवताः तेषां भावस्तत्त्वं तस्मिन् नित्यदा सर्वदा बिध्नन्ति स्वस्वकार्ये तत्तदभिमानेन बध्नन्ति॥ १९॥ स इति। हे ब्रह्मन्! स पूर्वोक्तः एष वशीकृतमायोऽधोक्षजः एभिस्त्रिभिः सत्त्वादिभिर्गुणैर्लिङ्गैर्जीवानामावरकैरुपाधिभिः सुष्ठु अलक्षिता गतिस्तत्त्वं यस्य। यद्वा। एभिर्लिङ्गैर्ज्ञापकैः स्वैः ज्ञानि-भक्तैरेव लक्षिता अनुमिता गतिर्यस्य स भगवान् सर्वेषां स्थावरजंगमानां मम चकारात्तव चेश्वरो नियन्ता॥ २०॥ यतः सृष्टमिद-मित्यस्योत्तरमाह—कालमिति। मायेशो भगवान् स्वया मायया द्वारभूतया विबुभूषुः विविधं यथा तथा भवितुमिच्छुः सन् यदृच्छयाऽऽत्मनि प्राप्तं लीनं कालं गुणवैषम्यहेतुं कर्मजीवादृष्टं स्वभावं परिणामहेतुं कारणतया उपाददे स्वीकृतवान्। स्वकार्यो-न्मुख्यमापादितवान्॥ २१॥ कालादिति। पुरुषः परमेश्वरस्तदधिष्ठितात्प्रेरितादिति सर्वेषां पञ्चम्यन्तानां विशेषणं कालाद्गुणानां सत्त्वादीनां व्यतिकरः क्षोभः स चेह साम्यावस्थात्यागः परस्परमेलनं चाभूत्। स्वभावतो गुणानां परिणामो रूपान्तरापत्ति-रभूत्। कर्मणः निमित्तभूतात् साधारणाज्जीवानामदृष्टात् महतो महत्तत्त्वस्य जन्माभूत्॥ २२॥ महतस्त्विति सार्द्धद्वयम्। हे प्रभो! पुरुषाधिष्ठितात् अत एव विकुर्वाणात् रूपान्तरं प्राप्नुवतः अत एव रजःसत्त्वाभ्यामुपबृंहितात् वर्द्धितात् रजःसत्त्वप्रधा-नादपि महतो द्रव्याणि पृथिव्यादिमहाभूतानि ज्ञानं मनोदेवताश्च क्रिया इन्द्रियाणि च तदात्मकः तेषां कारणभूतस्तमःप्रधानस्तु यः पदार्थोऽभवत्सोऽहंकार इति प्रोक्तः। सोऽपि विकुर्वन् रूपान्तरं गच्छन् त्रिधा समभूत्। तत्र वैकारिकः सात्त्विकः तैजसः राजसः तामसश्चेति यद्भिदा एवं यस्याहंकारस्य भेदोऽस्ति। तेषु च द्रव्यं महाभूतानि तदुत्पादने शक्तिसामर्थ्यं यस्य स तामसः एवं क्रिया दशेन्द्रियाणि तदुत्पादनशक्तिः राजसः ज्ञानमन्तःकरणं देवताश्च तदुत्पादनशक्तिर्यः स सात्त्विक इति प्रातिलोम्येन योज्यम्। अत्र साम्यवस्थागुणत्रयं प्रधानं महत्तत्त्वस्य त्रिगुणत्वेऽपि रजःसत्त्वाभ्यामुपबृंहितत्वं तत्र सत्त्वांशस्योद्रेकान् महत्तत्त्वं रजों-शोद्रेको महत्तत्त्वभेदः सूत्रतत्त्वम् अहंकारस्य त्वावरकत्वात्तमः प्रधानत्वम्। अत एवाहंकारकार्येषु तामसमाकाशादिकं बहु राजसं सात्त्विकं चाल्पम् एवं तदुपाधिकेषु जीवेष्वपि तथैव तामसाधिक्यम्॥ २३–२४॥

तामसादिति। भूतानामाकाशादीनामादिः कारणं भूतादिस्तस्मात्तामसादपि विक्रियमाणान्नभ आकाशोऽभूत्। ननु नभसः प्राक् शब्द उत्पद्यत इति प्रसिद्धमिति चेत् स शब्दस्तु तस्याकाशस्य मात्रा सूक्ष्मं रूपं गुण असाधारणो व्यावर्तको धर्मश्च शब्दद्वारा आकाश उदपद्यतेत्यर्थः। एवमेव स्पर्शादिष्वपि द्रष्टव्यम्। यच्छब्दाख्यं द्रष्टृदृश्ययोर्लिङ्गं कुड्यान्तरितेनापि केनचिद्गजो गज इत्युच्चैरुक्ते यो गजद्रष्टा यश्च तेन दृश्यो गजस्तयोर्यल्लिङ्गं बोधकमिति लिङ्गशब्दविशेषणत्वाद्यच्छब्दस्य क्लीबत्वम्॥ २५॥ नभस इति। अथानन्तरं विकुर्वाण द्रूपान्तरं गच्छतो नभसः स्पर्शतन्मात्रद्वारा स्पर्शगुणवान् अनिलो वायुरभूत्। स च वायुः परस्य स्वकारणस्याकाशस्यान्वयात् अनुवृत्ते शब्दवांश्चाभूत्। तस्यैव लक्षणं प्राणो देहधारणम्। ओज इन्द्रियाणां शक्तिः सहोऽन्तः-करणशक्तिः बलं देहसामर्थ्यं तेषां हेतुरित्यर्थः॥ २६॥ वायोरिति। कालकर्मस्वभावत इत्यपि यत्र नोक्तं तत्र सर्वत्र द्रष्टव्यम्। कालादितो विक्रियमाणाद्वायोरपि रूपतन्मात्रद्वारा स्वतो रूपवत् कारणभूतयोर्वाय्वाकाशयोरन्वयात्स्पर्शशब्दवच्च तेज उद-पद्यत॥ २७॥ तेजस इति। विक्रियमाणात् रसतन्मात्रद्वारा रसात्मकं रसवत् परान्वयाच्च रूपवत् स्पर्शवत् घोषः शब्दः तद्वच्च अम्भो जलमासीत्॥ २८॥ विशेष इति। अम्भसस्तु विकुर्वाणात् गन्धतन्मात्रद्वारा गन्धवान् परान्वयाच्च रसस्पर्शशब्दरूप-

गुणान्वितो विशेषः पृथिव्यभूत् ॥ २९ ॥ वैकारिकादिति । वैकारिकात् सात्त्विकाहङ्कारान्मनो जज्ञे । मनःशब्देनैवात्र तदधिष्ठाता चन्द्रोऽपि ज्ञेयः । तथा दश देवा अपि वैकारिकाः सात्त्विकाहङ्काराज्जाताः ते च दिग्वातादयो ज्ञेयाः । कः प्रजापतिः एते क्रमात् श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानामधिष्ठातारः ॥ ३० ॥ तैजसादिति सार्द्धम् । विक्रियमाणात्तैजसाद्राजसाहङ्कारात् दशेन्द्रियाण्यभवन् तानि च श्रोत्रत्वगादिकानि ज्ञेयानि । दोर्भुजः मेढ्रमुपस्थः क्रमस्त्वत्र न विवक्षितः यतः ज्ञानशक्तिर्बुद्धिः क्रियाशक्तिः प्राणश्च तौ तैजसौ राजसाहङ्कारकार्यौ अतो ज्ञानक्रियाविशेषरूपाणीन्द्रियाण्युभयविधान्यपि राजसाहङ्कारकार्याणि तथा चायमर्थः । पञ्चज्ञानशक्तिर्बुद्धिः पञ्चक्रियाशक्तिः प्राणः बुद्धिप्राणौ तैजसौ अतः पञ्च वागादयः प्राणविशेषा इत्यर्थः । अत्र तामसाहङ्कारकार्योऽनिल एव प्राणरूपेण तैजसाहङ्कारकार्यो भवतीति ज्ञेयम् ॥ ३१ ॥ कारणसृष्टिमुक्त्वा कार्यसृष्टिमाह—यदेति द्वयम् । हे ब्रह्मवित्तम ! यदैते भूतेन्द्रियमनोरूपा गुणाः गुणकार्यरूपा भावाः पदार्थाः पृथग्विरुद्धस्वभावत्वादसङ्गता अमिलिता आसन् अत एव च यदा आयतनस्य समष्टिव्यष्ट्यात्मकस्य शरीरस्य निर्माणे न शेकुः । तदा तेष्वेव प्रविष्टस्य भगवतः शक्त्या संहननकारिण्या चोदिता योजिताः सन्तः सदसत्त्वं प्रधानगुणभावमुपादायाङ्गीकृत्यान्योन्यं संहत्य पञ्चीकरणोक्तप्रकारेण मिलित्वा चोभयं हि प्रसिद्धसमष्टिव्यष्ट्यात्मकमदः ब्रह्माण्डाख्यं शरीरं ससृजुः ॥ ३२–३३ ॥

वर्षेति । तत्पूर्वोक्तम् अण्डं ब्रह्माण्डाख्यं शरीरमजीवं चेतनारहितमत एवोदकेशयं वर्षपूगानां सहस्रस्यान्ते कालकर्मस्वभावस्थः कालादीनां नियन्ता जीवयतीति जीवो भगवान् अजीवयत् सजीवं चेतनासहितमकरोत् । अयं हिरण्यगर्भान्तर्यामी विष्णोर्द्वितीयं रूपमिति भागवताः ॥ ३४ ॥ स एवेति । स एव विराट् पुरुषोऽण्डं निर्भिद्य तस्मान्निर्गतः अण्डभावं परित्यज्य पुरुषस्वरूपेण पृथक् स्थितः स च सहस्रमूरवः अङ्घ्रयः बाहवः अक्षिणी च यस्य सः । सहस्रमाननानि शीर्षाणि च तद्वान् अभूत् । अन्ये तु हिरण्यगर्भान्तर्यामी अण्डं निर्भिद्य निर्गतः बहिः स्थितः तस्य कारणार्णवस्थं निर्गुणं रूपमाह—सहस्रेति । तादृशः सन्निर्गतः इत्यर्थः । इत्याहुः ॥ ३५ ॥ यस्येति । इह लोके मनीषिणः कट्यादिभिः कट्यूरुजानुजङ्घागुल्फप्रपदपादमूलैरवयवैरतलवितलसुतलतलातलमहातलरसातलपातालसंज्ञानधः स्थितान् सप्तलोकान् कल्पयन्ति तथा जघनादिभिर्जघननाभ्युरोग्रीवावदनललाटशिरोभिर्भूर्भुवःस्वर्महर्जनतपःसत्याख्यानूर्ध्वं स्थितान्सप्तलोकान् कल्पयन्ति । ऊरुमूलयोः पश्चाद्भागः कटिः पुरोभागो जघनम् ॥ ३६ ॥ पुरुषस्येति । पुरुषस्य मुखं ब्रह्म इति कार्यकारणयोरभेदविवक्षया मुखाद् ब्राह्मणो जात इत्यर्थः । क्षत्रं क्षत्रियः एतस्य बाहवो बाहुभ्यो जात इत्यर्थः । ऊर्वोः ऊरुभ्यां वैश्यो जातः । भगवतः पद्भ्यां शूद्रोऽभ्यजायत ॥ ३७ ॥ अथोपासनार्थं लोककल्पनाभेदान् दर्शयन्सप्तलोकपक्षमाह—भूर्लोक इति । पातालमारभ्य भूर्लोकः पद्भ्यां कटिपर्यन्ताभ्यां कल्पितः तथाऽस्य महात्मनः स्थूलतरस्य पुरुषस्य नाभितो भुवर्लोको हृदा स्वर्लोक उरसा महर्लोकश्च कल्पितः ॥ ३८ ॥ ग्रीवायामिति । अस्य ग्रीवायां च जनलोकः स्तनद्वयात्तपोलोकः उपासनार्थत्वादूर्ध्वाधोभाववैपरीत्यं न दोषः । यद्वा । स्तनत् शब्दं कुर्वत् यदोष्ठद्वयं तस्मात्तपोलोकः मूर्द्धभिः सत्यलोकश्च कल्पितः । ब्रह्मणो भगवतो लोको वैकुण्ठाख्यस्तु सनातनो न तु सृज्यान्तरवर्ती नित्यत्वात् ॥ ३९ ॥ अथ चतुर्दशलोकपक्षः तत्र जघनादिभिः भूरादयः सप्त प्रागुक्ता एव शेषमाह—तत्कट्यामिति । तस्य विभोः कट्यामतलं क्लृप्तम् । ऊरुभ्यां वितलं क्लृप्तं जानुभ्यां भगवद्भक्तबलिनिवासाच्छुद्धं सुतलं क्लृप्तम् ॥ ४० ॥ महातलमिति । गुल्फाभ्यां महातलं क्लृप्तम् । प्रपदाभ्यां पादाग्राभ्यां रसातलं क्लृप्तम् । पादतलः पातालं क्लृप्तम् । इत्येवं पुमान् विराट्पुरुषो लोकमयो लोकमत्वेन ध्येयः ॥ ४१ ॥ त्रिलोकपक्षमाह—भूर्लोक इति । अस्य पुरुषस्य पद्भ्यां कटिपर्यन्ताभ्यां पातालादिसहितो भूर्लोकः कल्पितो नाभितश्च भुवर्लोकः कल्पितः । मूर्ध्ना तु ब्रह्मलोकपर्यन्तः स्वर्लोकः कल्पित इति वा लोककल्पना ज्ञेया ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धेऽन्वितार्थप्रकाशिकायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

---:❀:---

# अथ षष्ठोऽध्यायः

ब्रह्मोवाच

वाचां वह्नेर्मुखं क्षेत्रं छन्दसां सप्त धातवः। हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च॥ १॥

षष्ठे विराजोऽध्यात्मादिभेदादुक्ता विभूतयः। पौरुषं सूक्तं ततोऽत्र श्लोकाः स्युस्तर्कवार्धयः (४६)॥
उवाचेत्येकमङ्कत्र्यूनाः (४६)॥ पञ्चाशत्स्युरनुष्टुभः॥ ६॥

वाचामिति। अस्मदादिवाचां वागिन्द्रियाणां तदधिष्ठातुर्वह्नेश्च तस्य भगवतो वैराजस्य मुखं गोलकं क्षेत्रमुत्पत्तिस्थानम्। अत्र सर्वत्र षष्ठ्यन्तानां प्रथमान्तं क्षेत्रम्। प्रथमान्ताच्च षष्ठ्यन्ता बभूवुरिति तद्विवरणं ज्ञेयम्। किं च अत्र क्वचिद्गोलकमिन्द्रियं चैकीकृत्य निर्देशः यथा जिह्वायाः क्वचित्पृथक् यथा नासाघ्राणयोः वैराजस्येन्द्रियेभ्योऽस्मदादेर्विषयाः। तद्गोलकेभ्योऽस्मदिन्द्रियाणि अधिष्ठात्र्यो देवताश्चेति प्रागुक्तमनुसन्धेयम्। तदनुसारेणैवात्र व्याख्यानम्। छन्दसां गायत्र्यादीनां सप्तानां तस्य सप्त धातवः त्वगादयः क्षेत्रम्। हव्यं देवानामन्नं कव्यं पितृणामन्नममृतं तदुभयशेषो मनुष्याणामन्नमेषामन्नानां सर्वस्य मधुरादेः रसस्य चकारादस्मदादिरसनेन्द्रियस्य तदधिष्ठातुर्वरुणस्य च तस्य जिह्वा रसनेन्द्रियगोलकं क्षेत्रम्। एवं सर्वत्रानुक्तमप्युन्नेयम्॥ १॥ सर्वेति। सर्वासूनामस्मदादिप्राणानां तदधिष्ठातुर्वायोश्च अश्विनोः औषधीनां यवादीनां च तस्य नासे नासारन्ध्रे परमायने उत्तमक्षेत्रे मोदप्रमोदयोः सामान्यविशेषगन्धयोश्च यस्य घ्राणो घ्राणेन्द्रियं परमायनम्। पुंस्त्वमार्षम्॥ २॥ रूपाणामिति। रूपाणां शुक्लादीनां तेजसां रूपप्रकाशकानां तस्य चक्षुरिन्द्रियं क्षेत्रम्। दिवः स्वर्गस्य सूर्यस्य च तस्याक्षिणी नेत्रगोलके क्षेत्रे। दिशां तीर्थानां गङ्गादीनां च तस्य कर्णौ श्रोत्राधिष्ठाने कर्णबिले स्थानम्। आकाशशब्दयोस्तु तस्य श्रोत्रमिन्द्रियं स्थानम्॥ ३॥ तद्गात्रमिति अर्द्धम्। वस्तुनो ये सारभूताः सुवर्णादयस्तेषां सौभगस्य सौन्दर्यस्य च तस्य गात्रं शरीरं भाजनं स्थानम्। त्वगिति। स्पर्शस्य वायोश्च 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्येकत्वम्। वाय्वोरित्यस्य वलोप आर्षो वा। सर्वमेधस्य समस्तयज्ञस्य च अस्य त्वक् स्थानम्। यैस्तु यज्ञः संभृतः सम्पादितो भवति तेषामुद्भिज्जजातीनां वृक्षाणां तस्य रोमाणि स्थानम्। यज्ञियानां प्रशंसार्थमिदम् अयज्ञियानामपि तत एवोत्पत्तेः॥ ४॥ केशेति। शिलालोहाभ्रविद्युतामस्य केशश्मश्रुनखानि स्थानम्। तत्र केशा अभ्राणां श्मश्रूणि विद्युतां नखानि शिलालोहानामिति केशश्मश्रूणि मेघानां शिलालोहादीनां विद्युतां द्युतिमतां नखानीत्येके। प्रायशः क्षेमकर्मणां पालनकर्तॄणां लोकपालानामिन्द्रादीनां तस्य बाहवः स्थानम्॥ ५॥ विक्रम इति। भूः भुवः स्वरित्यव्ययत्वात् षष्ठ्या लुक्। भूरादीनां त्रयाणां लोकानां विक्रमस्तस्य त्रिधा पादविन्यासः स्थानम्। क्षेमस्य प्राप्तरक्षणस्य शरणस्यानिष्टनिवारणस्य सर्वेषां काम्यमानानां पदार्थानां वरस्य वरणस्यापि हरेश्चरण आस्पदमाश्रयः॥ ६॥ अपामिति। अपां वीर्यस्य शुक्रस्य सर्गस्य सृष्टेः पर्जन्यस्य वृष्ट्यभिमानिदेवस्य वृष्यमाणजलस्य वा प्रजापतेश्च पुंसो हरेः शिश्न उपस्थेन्द्रियाधिष्ठानं स्थानम्। प्रजात्यानन्दः सन्तानार्थं सम्भोगस्तेन निर्वृतिस्तापहानिस्तस्यास्तदुपस्थेन्द्रियमाश्रयः॥ ७॥

पायुरिति। हे नारद! यमस्य मित्रस्य परिमोक्षस्य मलत्यागस्य च तस्य पाय्विन्द्रियं स्थानम्। हिंसायाः प्राणिपीडायाः निर्ऋतेरलक्ष्म्याः निर्ऋतिनामराक्षसस्य वा मृत्योः पाय्विन्द्रियाधिष्ठातुः निरयस्य नरकस्य च स्थानतया तस्य गुदः पायुगोलकं स्मृतः। यद्यपि वह्नीन्द्रोपेन्द्रमित्रकाः इति क्रमप्राप्तेर्मित्रस्यैवाधिष्ठातृदेवतात्वं प्रतीयते तथापि गुदं मृत्युरपानेनेति वक्ष्यमाणेन मृत्युरेवाधिष्ठाता विवक्षितः। पायुर्यमस्य मित्रस्येति मित्रस्योपकारकमात्रत्वमभिप्रेतम्। अतः अधिष्ठातुर्मित्रस्य पायुरिन्द्रियं क्षेत्रमिति व्याख्यानमुपेक्षितम्॥ ८॥ पराभूतेरिति। पराभूतेर्दारिद्र्यस्य पराजयस्य च अधर्मस्य पापस्य तमसः अज्ञानस्य चापि पश्चिमस्तस्य पृष्ठभागः स्थानम्। नदानां नदीनां च तस्य नाड्यः स्थानम्। गोत्राणां पर्वतानां तस्यास्थिसंहतिः अस्थिसमूहः स्थानम्॥ ९॥ अव्यक्तं प्रधानं रसोऽन्नादिसारः सिन्धवः समुद्राः भूतानां सर्वेषां प्राणिनां निधनस्यान्ते लयस्य च पुंसः भगवतः उदरं स्थानतया विदितम्। मनसः अस्मदादिलिङ्गशरीरस्य तस्य हृदयं पदं स्थानम्॥ १०॥ धर्मस्येति। धर्मस्य मम चतुर्मुखस्य तुभ्यं तव नारदस्य कुमाराणां सनकादीनां भवस्य श्रीरुद्रस्य च विज्ञानस्य बुद्धेः सत्त्वस्य चित्तस्य तत्त्वस्येति पाठे तु महत्तत्त्वस्य परस्य परमेश्वरस्यात्मा.

चित्तं परायणमुत्तमं स्थानम् ॥ ११ ॥ एवं ब्रह्मणो जातं जगत्ततो न पृथक् ब्रह्म च सर्वनियन्तृ इत्याद्यर्थादुक्तम्। तत्पुरुषसूक्तार्थकथनेन द्रढयति। तत्र सहस्रशीर्षेत्यर्धर्चस्य "ब्राह्मणोऽस्य मुखमासीद्" इत्यादेश्च ऋक्त्रयस्यार्थः पूर्वाध्याय एव दर्शितः। इदानीं तु पुरुष एवेदं सर्वमित्यस्यार्थं दर्शयति—अहमित्यादिसार्धैस्त्रिभिः। अहं ब्रह्मा भवान्नारदः भवश्च ये इमे ते तवाग्रजाः मुनयः सनकादयश्च सरीसृपाः वृश्चिकादयः जलं स्थलं नभश्च आकांसि स्थानानि येषां तथाभूता अन्य च विविधप्रकारा जीवाः। सन्धिरार्षः। शेषाः स्पष्टाः। किंबहुनोक्तेन यच्चेदं भूतं भव्यं भवच्च कालत्रयवर्ति वस्तुजातं तत्सर्वं पुरुष एव न ततो भिन्नं किंचित् ॥ १२-१४ ॥ स भूमिमित्यस्यार्थमाह—तेनेति अर्द्धम्। तेन पुरुषेणेदं विश्वमावृतं व्याप्तम्। स च विश्वस्मात् वितस्ति वितस्तिप्रमाण देशम् अधि अधिकं व्याप्य तिष्ठतीत्याधिक्यमात्रं विवक्षितं न प्रमाणमनुपयोगादपरिच्छिन्नत्वाच्च। अत्र भूमिमित्यस्य विश्वमित्यर्थः। दशाङ्गुलमित्यस्य वितस्तिमिति अत्यतिष्ठदित्यस्य अधितिष्ठतीति ॥ १५ ॥ एतत्सदृष्टान्तमाह—स्वेति। असौ प्राणः "असौ वा आदित्यः प्राणः" इति श्रुतेरादित्यो यथा स्वधिष्ण्यं मण्डलं प्रतपन् प्रकाशयन् बहिश्च सर्वमपि प्रतपति प्रकाशयति। एवमेव पुमान् वैराजः पुरुषो विराजं विराड्देहं प्रतपन्प्रकाशयन्नपि ब्रह्माण्डमन्तर्बहिश्च तपति प्रकाशयति। अत्र प्राणः प्राणवायुः स्वधिष्ण्यं देहान्तः प्रतपन् श्वासेन प्रतापयुक्तं कुर्वन् बहिश्च प्रतपति। प्रभवतीति चक्रवर्तिना व्याख्यातम् ॥ १६ ॥

उतामृतत्वस्येत्यस्य एतावानस्य महिमेत्यस्य चार्थमाह—स इति। स परमेश्वरः अभयस्य भयरहितस्य अमृतस्य मोक्षस्य निजानन्दस्य वा ईशः भोक्ता भोजयिता दाता च। यत् यस्मात् मर्त्यं मरणधर्मकं विनाशि अन्नं कर्मफलमत्यागात् अतिक्रान्तवान्। एवं च उतामृतत्वस्येति स्वार्थे त्वश्छान्दसः। अभयस्येति मन्त्रगताऽमृतपदव्याख्या। अन्नमित्यर्थे अन्नेनेति पदं तृतीया छान्दसी। अतिरोहति इत्यस्य अत्यगात्। हे ब्रह्मन्! ततो हेतोः पुरुषस्य परमेश्वरस्य एष महिमा दुरत्ययः अपारः ॥ १७ ॥ पादोऽस्य विश्वाभूतानीत्यस्यार्थमाह—पादेष्विति अर्द्धम्। तिष्ठन्ति जीवा अत्रेति स्थितयो भूरादिलोकास्ते पादा इव पादाः अवयवत्वेनोक्ता तस्य स स्थितिमात्तस्य पुंसः पादेषु अवयवभूतेषु लोकेषु सर्वभूतानि सर्वान् जीवान् स्थितान् मन्त्रज्ञा विदुः। मन्त्रे तु पादोऽस्य विश्वाभूतानीति सामानाधिकरण्यमधिष्ठानाधिष्ठेयाभेदविवक्षया पाद इत्येकवचनं च सामान्याभिप्रायेण। त्रिपादस्येत्यस्यार्थमाह अमृतमिति अर्द्धम्। अस्येश्वरस्य संबन्धि त्रिपादमृतं नित्यसुखं दिवि ऊर्ध्वलोकेषु वर्तते न त्रिलोक्यामिति हि मन्त्रार्थः। तदेव त्रिपाच्छब्दोक्तं त्रैविध्यं दर्शयन्नाह। त्रयाणां भूरादिलोकानां मूर्द्धा महर्लोकः तस्य मूर्द्धानः तदुपरितना लोकास्तेषु यथाक्रमममृतं क्षेममभयमिति त्रयमधायि भगवता निहितं तत्र त्रिलोक्यां नश्वरमेव सुखं महर्लोकेऽपि कल्पान्ते त्रिलोकदाहोष्मपीडितानां तत्रत्यानां स्थानत्यागान्नाविनाशि सुखं जनलोके त्वमृतमविनाशि सुखमस्ति। यावज्जीवं स्वस्थानापरित्यागात्। परं तु महर्लोकवासिनां त्रिलोकदाहोष्मपीडया तदा तत्र गमनादक्षेमदर्शनमस्ति। तपोलोके तु तस्याप्यभावात् क्षेममेव। वक्ष्यति हि "त्रिलोक्यां दह्यमानायां शक्त्या सङ्कर्षणाग्निना। यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः"। इति सत्यलोके त्वभयं सुखं मोक्षप्रत्यासन्नत्वात्। भक्तास्तु व्याचक्षते। अथ तस्य मायिकीरमायिकीश्च विभूतीर्विभज्य दर्शयति द्वाभ्याम्। स्थितिः सर्वलोकपालनं पादाच्चरणारविन्दात्तस्य स स्थितिमात् तस्य पुंसः पादेषु अंशभूतेषु मायिकामायिकदेशेषु सर्वभूतानि बद्धमुक्तजीवान् विदुः। तत्र च त्रिमूर्ध्नः त्रिगुणमयस्थानानां मूर्द्धा इव उपरिस्थो भागो यत्प्रकृत्यावरणं तस्य मूर्द्धसु उपरितनस्थानेषु परमव्योमस्वित्यर्थः। अमृतं मरणाभावः क्षेमं रोगाद्यभावः अभयं परस्परहेतुकस्य भगवदपराधहेतुकस्य च भयस्याभावः। कालहेतुकभयस्यामृतशब्देनैव वारणं ज्ञेयम्। अधायि स्थापितं तेन त्रिगुणमयस्थानेषु तद्विपरीतं मृतमक्षेमं भयं च निहितमिति त्रिगुणप्रपञ्चस्यानित्यत्वं त्रिगुणातीतस्य परव्योम्नो नित्यत्वं बोधितम्। वक्ष्यते चाग्रे तद्धामवर्णने नच कालविक्रमः न यत्र मायेत्यादि। एवं च पादोऽस्येति मन्त्रार्थो विवृतः। तत्र त्रिपादस्यामृतं दिवीत्यस्य दिवि सर्वोर्ध्व प्रदेशे अमृतम् अस्य त्रिपात् त्रिपाद्विभूतिस्थमित्यर्थः ॥ १८ ॥ त्रिपादूर्ध्व इत्यस्यार्थमाह—पादा इति। ये पूर्वोक्तास्त्रयः पादाः जनतपःसत्यलोकाः त्रिलोक्या बहिरासन् ये अप्रजानां पुत्रादिरूपेण न प्रजायन्ते तेषां नैष्ठिकब्रह्मचारिवानप्रस्थयतीनाम् असिजभाव आर्षः। तेषामाश्रयाः स्थानानि गृहमेधो गृहस्थस्तु अन्तस्त्रिलोक्याः मध्य एव तिष्ठतीति शेषः। यतः सः अपरस्तेभ्यो हीनः अबृहद्व्रतः ब्रह्मचर्यादिव्रतरहितश्च। भक्तास्तु व्याचक्षते पादेषु सर्वभूतानीत्यस्यार्थं विशिष्य विवृणोति। बहिस्त्रिमूर्द्धशब्दोक्तात् प्रकृत्यावरणात् परत्र त्रयः पादाः परमव्योमशब्देनाभिधीयमाना आसन्। चकारात् क्वचित् क्वचित्प्रपञ्चमध्यवर्तिनोऽपि मथुरायोध्यादिनामानः ये पादाः अप्रजानां संसारमुक्तानां जीवानाम् आश्रमाः स्थानानीति आश्रमाणामाश्रमस्थानां च तेषां नित्यत्वं बोधितम्। अमृतं क्षेममधायीति पूर्वोक्तेः। त्रिलोक्याः त्रिगुणलोकमय्याः प्रकृतेरन्तस्तु अपरः चतुर्थः पाद इत्यर्थः। यत्र गृहमेधः कर्मिजन इत्यर्थः। कीदृशः अबृहद्व्रतः भगवद्व्रतरहितो भगवदभक्त इत्यर्थः। तेन स चापि यदि कदाचिद् भक्तः स्यात्तदा तस्यापि त्रिपाद्विभूतिरेव स्थानमिति भावः। एवं च "त्रिपादूर्ध्वं उदैत्पुरुषः पादोस्येहाभवत्पुनः" इति श्रुत्यर्थो विवृतः। स्मृतिश्च "त्रिपाद्विभूतेर्लोकास्तु असङ्ख्याः परिकीर्तिताः। शुद्धसत्त्वमयाः सर्वे ब्रह्मानन्दसुखाह्वयाः। सर्वे नित्या निर्विकारा हेयरागविवर्जिताः"। इति। तत्र त्रिपाद्विभूतिशब्देन प्रपञ्चातीतलोकोऽभिधीयते। पादविभूतिशब्देन तु प्रपञ्च इति

यथोक्तं तत्रैव "त्रिपाद्व्याप्तिः परं धाम्नि पादोऽस्येहाभवत् पुनः। त्रिपाद्विभूतिशब्देन प्रपञ्चातीतलोकोऽभिधीयते। पादविभूति-शब्देन तु प्रपञ्च इति यथोक्तं तत्रैव "त्रिपाद्व्याप्तिः परं धाम्नि पादोऽस्येहाभवत् पुनः। त्रिपाद्विभूतिर्नित्यं स्यादनित्यं पादमैश्वरम्"। इति संदर्भभूतं पाद्मोत्तरखण्डम्॥ १९॥

ततो विष्वङ्ङित्यस्यार्थमाह—सृती इति। विविधं सुष्ठु अञ्चति गच्छतीति विष्वङ् पुरुषः क्षेत्रज्ञः साशनानशने एका साशना अशनेन कर्मफलभोगेन सहिता दक्षिणमार्ग इत्यर्थः। अपरा त्वनशना कर्मफलभोगरहिता उत्तरमार्गस्ते उभे सृती मार्गौ विचक्रमे चलति स्म। यत् यस्मात् अविद्याकर्मरूपैका सृतिः विद्या च तत्साधनोपासनारूपाऽन्या सृतिः पुरुषो जीवस्तूभयाश्रयः साधनद्वयनिष्ठः। भक्तास्तु व्याचक्षते। उक्तलक्षणे एकपादत्रिपाद्विभूती जीव एव प्राप्नोतीत्याह। विषु सर्वतोऽञ्चतीति विष्वङ् जीवः सृती एकपादत्रिपाद्विभूत्योः पन्थानौ विचक्रमे चलति। लडर्थे लिट्। सृती कीदृश्यौ साशनानशने भोगापवर्गप्राप्तिसाधनभूते। तत्र योग्यतामाह। यत् यस्य जीवस्यैव अविद्या च विद्या च अविद्यादशायाम् एकपाद्विभूति विद्यादशायां त्रिपाद्विभूतिं प्राप्नोति किंतु विद्याया उपरामे लब्धया एकया भक्त्यैव "भक्त्याहमेकया ग्राह्यः" इति भगवदुक्तेः। पुरुषः परमेश्वरस्तु उभयस्य अविद्याविद्यावृत्तिकामायाया आश्रय इति सृतिद्वयं तत्स्वामिकत्वात्तदधीनमेवेति भावः। एवं च ततो विष्वङ् व्यक्रामत्साशनानशने अभीत्यस्यार्थो विवृतः॥ २०॥ तस्माद्विराडजायत इत्यस्यार्थमाह—यस्मादिति। यस्मादण्डं जज्ञे तत्र च भूतेन्द्रियगुणात्मकः विराड् जज्ञे। स ईश्वरस्तत्र प्रविष्टोऽपि गोभिः सूर्य इव तद्विश्वं विराट्शरीरं द्रव्यमण्डं चात्यगात् अतिक्रम्य बहिरपि व्याप्तवान्। गोभिरिति पूर्वोक्त एव दृष्टान्तः। सूर्यो यथा गोभिः किरणैः स्वमण्डलम् आतपन् बहिरपि प्रकाशयति तथा परमेश्वरोऽपि विराजं प्रतपन् बहिरपि प्रकाशयति। भक्तास्त्वाहुः तत्र त्रिपाद्विभूतिरन्तरङ्गायाश्चिच्छक्ते-र्विलास इति चिन्मय्यां तस्यामासक्त एव। पादविभूतिस्तु बहिरङ्गा या माया शक्तेर्विलास इति मायामय्यां तस्यामनासक्त एव परमेश्वरस्तं केवलम् उपकरोतीत्याह। यस्मात् पुरुषादण्डं विराड् जज्ञे कीदृशः भूतेन्द्रियगुणात्मकः स पुरुष ईश्वरः तदण्डं द्रव्यं विराट्शरीरं च अत्यगात्तत्प्रविशन् प्रकाशयन्नपि तत्रानासक्तत्वादतिक्रम्यागात्। गत्वा च स्वान्तरङ्गस्थाने त्रिपाद्विभूतावेव सदा स्थित इति भावः। तत्रानुरूपो दृष्टान्तः। गोभिः किरणैर्विश्वम् आतपन् सूर्य इव स्वमण्डले स्थित इति॥ २१॥ ननु पुरुष एव चेत्सर्वं तर्हि यज्ञस्य तत्साधनानां च अपृथक्त्वाद्यज्ञैः पुरुषाराधनं न सिद्ध्येदित्याशङ्क्य तत्परिहाराय यत्पुरुषेणेत्यस्यार्थं संगृह्णाति—यदेति। अस्य महात्मनः विराडन्तर्यामिणः यस्यैव प्रकृतत्वात् नाभ्यात् नाभौ भवात् नलिनात् पद्मात् यदाऽहमासम् अभूवम्। तदा भगवन्तं यियक्षुरहं पुरुषस्य यज्ञपुरुषस्य अवयवादृते अवयवादभिन्नान् यज्ञस्य संभारान् साधनानि नाविदं न ज्ञातवान्॥२२॥ तेष्विति चतुष्कम्। हे सत्तम! तेषु यज्ञस्य संभारेषु सम्पाद्येषु पशवः अजादयो यूपाद्यर्थाः खदिराद्यस्तत्सहिताः कुशाश्च देवयजनं यज्ञभूमिः इदं चेति निर्देशात्तत्रैवोपविष्टः कथयतीति गम्यते। उरुभिर्बहुभिर्गुणैरन्वितो वसन्तादिः कालश्च वस्तूनि पात्रादीनि ओषधयो व्रीहियवादयः स्नेहा घृतादयः रसा मधुरादयः लोहाः स्वधित्यादयः मृदः कपालादीनि जलं च ऋचो यजूंषि सामानीति वेदत्रयोक्ता मन्त्राः चातुर्होत्रं होत्रादिभिश्चतुर्भिरनुष्ठेयं कर्म नामधेयानि ज्योतिष्टोमादीनि ऋगादीनामुक्त-त्वान्मन्त्राः स्वाहाकारादयः दक्षिणा गवादयः व्रतानि पयोभक्षणादीनि देवतानामनुक्रमः आनुपूर्व्यादेशः कल्पः बौधायनादि-कृतकर्मपद्धतिग्रन्थः अनेनैतदर्थमहं यक्ष्य इति संकल्पश्च। तन्त्रमनुष्ठानप्रकारः गतयो विष्णुक्रमाद्याः मतयो देवताध्यानानि प्रायश्चित्तं विघ्नसमाधानं कृतस्य भगवति समर्पणं च इत्येते संभारा मया पुरुषस्यावयवैरेव संभृताः सम्पादिताः॥ २३–२६॥ इतीति। इत्येवं पुरुषावयवैरेव संभृताः सम्पादिताः संभाराः यज्ञसाधनानि येन सः तथाभूतोऽहं तेनैव सम्पादितसंभारेण यज्ञेन तमेव यज्ञात्मकं पुरुषमीश्वरमयजमिष्टवान्। एवं च यज्ञेन यज्ञमिति मन्त्रार्थः सूचितः। तत्र पशुवृक्षादीनां भगवदूरुलोमादि-भवत्वादवयवभवत्वं स्पष्टम्॥ २७॥ तेन देवा इत्यस्यार्थमाह—तत इति। ततोऽनन्तरमिमे ते तव भ्रातर मरीच्यादयो नव प्रजानां पतयः सुसमाहिताः समाहितचित्ताः सन्तः प्रजासंवृद्ध्यर्थं तासु यज्ञप्रचारार्थं च इन्द्रादिरूपेण व्यक्तं स्वतश्चाव्यक्तं पुरुषं भगवन्तमयजन्। एतेन पुरुषं जातमग्रत इत्यस्यार्थो दर्शितः॥ २८॥ ततश्चेति। ततोऽनन्तरं काले स्वेऽवसरे मनवः अपरे ऋषयश्चेत्याद्याः क्रतुभिर्यज्ञैर्विभुं सर्वेश्वरं तमीजिरे॥ २९॥ यदधिष्ठानमित्येतत्प्रश्नोत्तरार्थमुपसंहरति—नारायण इति। यो भगवान् स्वतः अगुणोऽपि सर्गादौ सृष्ट्याद्यर्थं गृहीता मायाया उरवः गुणाः सत्त्वादयो येन तादृशो भवति तस्मिन् भगवति नारायणे तत् पूर्वोक्तमिदं दृश्यमानं विश्वमाहितमवस्थितम्॥ ३०॥ यत्परस्त्वमित्येतत्प्रश्नोत्तरं यदुक्तं स एष भगवान् सर्वेषां मम चेश्वर इति तदुपसंहरति—सृजामीति। तन्नियुक्तोऽहं विश्वं सृजामि तद्वश एव हरो विश्वं हरति त्रिशक्तिं मायां धर्जति त्रिशक्तिधृक् "धृज गतौ" भगवान् पुरुषरूपेण विष्णुरूपेण विश्वं स्वयमेव परिपाति॥ ३१॥ यच्चेदं विश्वं यदात्मकञ्च त्वमित्यादि-सर्वप्रश्नानां सामान्योत्तरं यदुक्तं "वासुदेवात्परो ब्रह्मन्" इत्यादि "पुरुष एवेदं सर्वम्" इति श्रुत्या च यद्दृढीकृतं तदुपसंहरति—इतीति। हे तात! यथा त्वमिदं पूर्वोक्तमनुपृच्छसि तथा तस्योत्तरमित्युक्तप्रकारेण ते तुभ्यं मयाऽभिहितम्। अतः सदसदात्मकं कार्यकारणात्मकं भाव्य सृज्यं किंचिदपि वस्तु भगवतः सकाशादन्यन्नास्तीति॥ ३२॥ न भारतीति। अङ्ग हे नारद! यत् यस्मात् मे मया औत्कण्ठ्यं प्रेमोद्रेकस्तद्वता हृदा हरिर्धृतो ध्यातस्तस्मान्मे भारती वाणी क्वचिदपि विषये मृषा नोपलक्ष्यते न

दृश्यते। मे मनसो गतिः संकल्पोऽपि क्वचिद्विषये मृषा न वै नैव भवति। मे हृषीकाणि इन्द्रियाणि क्वचिदप्यसत्पथे नैव पतन्ति। एतेन मम वाङ्मनसेन्द्रियाणां वृत्तयो हरेः प्रभावादेव सत्यार्थाः नतु मत्प्रभावात् इत्युक्तम्॥ ३३॥

सोऽहमिति। सोऽहं समाम्नायमयः वेदाभ्यासपरः तपोमयो निरन्तरं तपोनिष्ठः प्रजापतीनां पतिः अतः एव सर्वैरभिवन्दितः एवं सर्वोत्कृष्टोऽपि निपुणं साङ्गं योगमास्थायाश्रित्य समाहितः सावधानोऽप्यहं यत आत्मनो मम संभवो जन्म तमेव नाध्यगच्छं न ज्ञातवान्! कुतोऽन्यस्य वार्ता। एतच्च तृतीयस्कन्धे पद्मोद्भवे वक्ष्यते॥ ३४॥ नतोऽस्मीति। समीयुषां शरणागतानां भवच्छिदं जन्मादितिवर्त्तकं स्वस्त्ययनं कल्याणकरं सुमङ्गलं पुण्यप्रदं तस्य भगवतः चरणमहं नतोऽस्मि ततोऽचिन्त्यमहिमत्वेन ज्ञातवानस्मीति कैमुत्येनाह। यथा नः कर्तृ स्वरस्यान्तं न प्राप्नोति तथा यो भगवान् स्वयमपि आत्ममायायाः विभवं विस्तारं पर्यगात् परिशब्दोऽत्र निषेधेनागात् एतावानिति न ज्ञातवान्। अथ तदा अपरे अस्मदादयस्तु कुतो जानीयुः। अन्तस्याभावादेव तदज्ञानं न सर्वज्ञत्वं हन्ति॥ ३५॥ नाहमिति। यस्य ऋतं सत्यरूपां गतिं स्वरूपम् अहं ब्रह्मा न वेद। यूयं नारदसनकादयः न विदथ। वामदेवो महादेवश्च न वेद। यद्येते वयं महत्त्वेन ज्ञानित्वेन च प्रसिद्धा अपि यस्य ऋतां यथार्थरूपां गतिं स्वरूपं न विदुः न जानीमः। आर्षः प्रथमपुरुषः तर्ह्यपरेऽस्मदपेक्षया हीनाः सुरा अन्यदेवा न जानन्तीति किमुत वक्तव्यम्। आदौ विदुरिति बहुवचनक्रियावयवभूतवेदेत्यादिक्रियाऽध्याहारेणान्वयस्ततो नकाराध्याहारेण युगपत् विदुरित्यनेनान्वयः। "नेमं विरञ्चो न भवः" इति दशमस्कन्धवत्। किं बहुना तस्य मायया मोहिता बुद्धिर्येषां तथाभूताः वयं तद्विनिर्मितम् इदं जगदप्यात्मसमं स्वबुद्ध्यनुरूपमेव विचक्ष्महे जानीमो न परमार्थतः। चोऽप्यर्थे॥ ३६॥ यस्येति। यस्यावतारांस्तत्कर्माणि चास्मदादयो गायन्ति यं च तत्त्वेन न विदन्ति तस्मै भगवते नमः॥ ३७॥ अवतारकर्माणि संक्षेपतो दर्शयति–स एष इति। स एष पूर्वोक्तः अजः आद्यः पुरुषावतारो भगवान् आत्मना स्वस्वरूपेणैव साधनभूतेन आत्मन्येवाधिकरण आत्मा स्वयमेव कर्ता सन्नात्मानमेव कर्मभूतं जगदाकारेण कल्पे कल्पे सृजति जगदाकारं पाति च संयच्छति अन्ते संहरति च। पुरुषोऽवतारः सृष्ट्यादीनि कर्माणि इति संक्षेपोक्तिः॥ ३८॥ न यं विदन्ति तत्त्वेनेत्युक्तं तत्त्वमाह—विशुद्धमिति। ज्ञानमेव केवलं सत्यं तत्त्वं तच्च विशुद्धं विषयाकारशून्यं प्रत्यक् सर्वान्तरं सम्यक् सन्देहादिरहितम् अवस्थितं स्थिरम् अतः पूर्णम् अपरिच्छिन्नम् अनाद्यन्तं जन्मनाशरहितं निर्गुणं गुणकार्यं हि गुणक्षोभाच्चञ्चलं भवति। अद्वयं च घटाद्याकारवृत्तिज्ञानव्यवच्छेदार्थं विशेषणानि। यद्यपि वृत्तिज्ञानमपि स्वरूपज्ञानमेव न चाञ्चल्यादिदोषयुक्तं तथापि वृत्तिदोषैस्तथा तथा भवतीति व्यवच्छिद्यते। एभिरेव विशेषणैः सत्यत्वमपि समर्थितम्॥३९॥ ऋषे इति। हे ऋषे! मुनयोऽपि प्रशान्तात्मेन्द्रियाशयाः प्रसन्नदेहेन्द्रियमनसो यदा भवन्ति तदा विदन्ति। यदा तु तदेव तत्त्वमसतां वेदविरुद्धैः कुतर्कैः विप्लुतं व्याप्तं भवति तदा तिरोधीयेत तिरोहितं भवति न प्रकाशते॥ ४०॥

कल्पे कल्पे आत्मानं सृजति इत्युक्तं तत्र के ते सृज्यमाना अवतारास्तत्राह—आद्य इति। भूम्नो ब्रह्मणः पुरुषः प्रकृतिप्रवर्तकः यस्य सहस्रशीर्षेत्युक्तो लीलाविग्रहः स आद्योऽवतारः। वक्ष्यति च भूतैर्यदा पञ्चभिरित्युपक्रम्य पुरुषाभिधानमवाप नारायण आदिदेवः इति तथा कालश्च स्वभावश्च सदसदिति कार्यकारिणात्मिका प्रकृतिश्च मनश्च महत्तत्वं द्रव्यं महाभूतानि क्रमोऽत्र न विवक्षितः। विकारोऽहंकारः गुणः सत्त्वादिः इन्द्रियाणि विराड्ब्रह्माण्डात्मकसमष्टिदेहः स्वराट् वैराजः स्थास्नु स्थावरं चरिष्णु जङ्गमं व्यष्टिशरीरम्॥ ४१॥ अहमिति। अहं ब्रह्मा भवो महादेवः यज्ञो विष्णुः दक्षादयो य इमे प्रजेशाः भवानादिर्येषां ते भवदादयो भक्ताश्च खगलोकपाला गरुडादयः स्पष्टाः शेषाः। एतेऽपि भगवतोऽवताराः॥ ४२॥ गन्धर्वेति सार्द्धम्। गन्धर्वादीनामीशाः यक्षादीनां नाथाः रक्षोरगेति संधिरार्षः। ये च ऋषीणां पितॄणां च ऋषभाः श्रेष्ठाः स्पष्टाः शेषाः॥ ४३॥ यदिति। किं बहुना लोके तत् किं च यत् किंचित् भगवज्ज्ञानैश्वर्यादियुक्तं महस्वत्तेजोयुक्तम् ओजःसहसी इन्द्रियमनःशक्ती तद्युक्तं बलं शरीरशक्तिस्तद्वत् तद्युक्तं क्षमावत् श्रीः शोभा ह्रीरकर्मजुगुप्सा विभूतिः सम्पत्तिः आत्मा यथार्थबुद्धिस्तद्वत्तद्युक्तम्। अर्णो वर्णः अद्भुतार्णमाश्चर्यवर्णं विद्युदादि। यद्वा। अर्णशब्दोऽक्षरवाची नवार्णो मन्त्र इतिवत्। अद्भुतान्यपौरुषेयत्वादलौकिकान्यर्णानि वर्णा यत्र तत् वेदरूपं वस्तु रूपवत् मूर्तम् अस्वरूपम् अमूर्तं तत्सर्वं परमेव तत्त्वं ज्ञेयम्। अत्र कालस्वभावप्रकृतयः शक्तयः मनआदीनि कार्याणि ब्रह्मादयो गुणावताराः दक्षादयो विभूतयः अन्ये केचित् ज्ञानियोगिप्रभृतयः स्थावरजङ्गमान्ताः पुरुषावतारस्य सृष्ट्यादिलीलापरिकरा ज्ञेयाः॥ ४४॥ प्राधान्यत इति। एवं मायाशक्तिप्राधान्येन पुरुषावतारमुक्त्वा चिच्छक्तिमयान् वराहयज्ञादीन्वक्तुमाहेति भक्तैरवतार्यते। शुद्धसत्त्वावतारान् वक्तुमाहेति श्रीस्वामिपादैः। हे ऋषे! भूम्नः पुरुषस्य यान् लीलावतारान् प्राधान्यतो विज्ञाः आमनन्ति कथयन्ति तथा असत्कथाश्रवणेन ये कर्णयोः कषायाः तान् शोषयन्ति तान् सुपेशान् सुन्दरान्। लकारलोप आर्षः। तानिमान्मम बुद्धावुपस्थितानहं ते तुभ्यमनुक्रमिष्ये अनुक्रमेण कथयिष्यामि। तङार्षः। एवं चेडप्यार्षः। तदनुक्रमणं त्वया पीयतां पानवत्स्वान्तःकरणे स्थाप्यताम्। यद्वा। आपीयतामिति शत्रन्तमार्षम्। आपिबतां कर्णकषायशोषान्। यद्वा आपीयतां "पीङ् पाने" दिवादिः। भवान् आपिबतु॥ ४५॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः द्वितीये षष्ठेऽध्याये व्यधादिमाम्।

इति श्रीमद्भागवते द्वितीयस्कन्धेऽन्वितार्थप्रकाशिकायां षष्ठोऽध्यायः॥ ६॥

## अथ सप्तमोऽध्यायः

ब्रह्मोवाच

यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत्क्रौडीं तनुं सकलयज्ञमयीमनन्तः।
अन्तर्महार्णव उपागतमादिदैत्यं तं दंष्ट्रयाऽद्रिमिव वज्रधरो ददार ॥ १ ॥

सप्तमे वर्णिताः कर्मप्रयोजनगुणैः सह। अवतारा हरेस्तत्र श्लोका दहनमार्गणाः ( ५३ )।

उवाचेत्येकं विपादा नवतिः ( ८८॥। ) स्यादनुष्टुभाम् ॥ ७ ॥

यत्रेति। अनन्तो भगवान् यत्र यदा क्षितितलोद्धरणाय सकलयज्ञमयीं क्रौडीं वाराहीं तनुं बिभ्रदुद्यतः उद्योगं कृतवांस्तदा अन्तर्महार्णवे महार्णवमध्य उपागतं तं सुप्रसिद्धमादिदैत्यं हिरण्याक्षं वज्रधर इन्द्रः अद्रिमिव दंष्ट्रया ददार विदारितवान्। करेण कर्णमूलेऽहन्निति वक्ष्यमाणकरप्रहारानन्तरं दंष्ट्रया ददारेति न विरोधः ॥ १ ॥ जात इति। रुचेः प्रजापतेः सकाशाद्भार्यायां आकूतेः सूनुः सुतः सुयज्ञो नाम जातः। अथ च स्वभार्यायां दक्षिणायां सुयमान् अमरान् देवान् अजनयत्। स एव यदा इन्द्रः सन्दैत्यवधादिना लोकत्रयस्य महतीमार्तिं पीडामहरत्तदा पूर्वं सुयज्ञ इत्युक्तोऽपि अनु पश्चात् स्वायंभुवेन मनुना मातामहेन हरिरित्युक्तः। एतेन देवोत्पादनं लोकत्रयार्त्तिहरणं च कर्म दर्शितम् एवमग्रेऽपि ॥ २ ॥ जज्ञ इति। हे द्विज नारद! कर्दमस्य प्रजापतेर्गृहे च तद्भार्यायां देवहूत्यां नवभिः स्त्रीभिर्भगिनीभिः समं सह जज्ञे। स च स्वमात्रे आत्मगतिं ब्रह्मविद्यामूचे उक्तवान्। यया आत्मगत्या सा माता आत्मनः शमलं मलिनीकरणं गुणसङ्गरूपं पङ्कमस्मिन्नेव जन्मनि विधूय दूरीकृत्य कपिलस्य गतिं कपिलोक्तमात्मतत्त्वं प्रपेदे प्राप्तवती ॥ ३ ॥ अत्रेरिति। अपत्यं पुत्रमभिकाङ्क्षतः अत्रेस्तुष्टः सन्मयाऽहमेव तुभ्यं दत्त इति यत् यस्मादाह स्म तस्मात्स भगवान् दत्त इति नाम्नः जातः। यस्य दत्तस्य पादपङ्कजयोर्यः परागस्तेन पवित्रा देहा येषां ते यदुहैहयाद्याः यदुः प्रसिद्धः हैहयः सहस्रार्जुनः तत्प्रभृतय उभयीमैहिकीमणिमाद्यैश्वर्यरूपामामुष्मिकीं मुक्तिरूपां च योगर्द्धिमापुः। तेषां मध्ये हैहयं तु प्राप्तयोगर्द्धिकमपि महदपराधाद्धेतोः क्रुध्यन्परशुरामो जघान इति ज्ञेयम् ॥ ४ ॥ तप्तमिति। विविधलोकस्य सिसृक्षया स्रष्टुमिच्छया आदौ कल्पादौ यन्मे मया तपस्तप्तं तस्य स्वतपसः सनात् दानात् तस्मिन् समर्पणात्। "षणु दाने"। स हरिश्चतुःसनोऽभूत्। सनत्कुमारः सनकः सनन्दनः सनातन इति चत्वारः सनशब्दा नाम्नि यस्य तथाविधो जातः। यद्वा। यन्मया तपस्तप्तं तस्मात्स्वतपसो हेतोः सनादिति नाम्ना चतुःसनोऽभूत्। "सनात्सनातनतमः" इति श्रीविष्णुसहस्रनामस्तोत्रात् सनशब्दमतति व्याप्नोतीति सनात् स च प्राक् कल्पस्य संप्लवे प्रलये प्रलये। विनष्टमुच्छिन्नसम्प्रदाय-मात्मतत्त्वमिह अस्मिन्कल्पे सम्यक् जगाद। यद् गदितमात्रमेवात्मतत्त्वं मुनयः आत्मन् स्वस्मिन्नेवाचक्षत साक्षादपश्यन्। ङिलुगार्षः ॥ ५ ॥ धर्मस्येति। धर्मस्य भार्यायां दक्षस्य दुहितरि मूर्त्यां मूर्तिसंज्ञायां स्वः असाधारणः तपःप्रभावो यस्य तथाभूतः नारायणो नर इति च स्वरूपद्वयेन अजनिष्ट। अनङ्गस्य पृतनाः सेनारूपाः देव्यः अप्सरसः भगवन्तं मोहयितुं प्रवृत्ता अपि आत्मनः इति जात्यैकत्वम्। आत्मभ्यो हेतुभ्यो भगवतो नियमस्य अवलोपं व्रतभङ्गाभावं दृष्ट्वा घटितुं न शेकुः शापभयात्स्तब्धा बभूवुः। वष्टिभागुरिरित्यवस्याकारलोपे नञ्समासेऽवलोप इति सिद्धम्। यद्वा। भगवतः सकाशात् आत्मनः इति द्वितीयान्तम्। स्वप्रतिरूपा उर्वश्याद्याः स्त्रीर्दृष्ट्वा नियमावलोपं व्रतभङ्गाभावं च दृष्ट्वा घटितुं न शेकुर्विस्मयेन स्तब्धा बभूवुः। यद्वा। उर्वश्याद्या स्त्रीर्दृष्ट्वा भगवतो नियमावलोप व्रतभङ्गं घटितुं कर्तुं न शेकुः ॥ ६ ॥

यत्र कामजयी क्रोधोऽपि बिभेति तत्र का वार्त्ता कामस्येत्याह—काममिति। ननु कृतिनो रुद्रादयो रोषयुक्तया दृष्ट्या कामं दहन्ति रोषं तु असह्यमत एव आत्मानं दहन्तमुत अपि ते न दहन्ति तदाहे समर्था नैव भवन्ति। किंतु क्रोधेनैवाभिभूयन्ते सोऽयं रोषः अमलं निर्मलं यस्य अन्तः मनः निविशन्। आर्षः शता। प्रविशन्निति वा पाठः। स्वनाशशङ्कया बिभेति तर्हि पुनः कामोऽस्य मनः कथं नु श्रयेत प्रविशेत् ॥ ७ ॥ विद्ध इति। राज्ञः उत्तानपदः अन्ति समीप एव मातुः सपत्न्याः सुरुचेः उदितानि वाक्यान्येव पतत्रिणो बाणास्तैर्विद्धो बालोऽपि सन् यो ध्रुवस्तपसे तपः कर्तुं वनान्युपगतस्तस्मै गृणते स्तुवते प्रसन्नः सन् ध्रुवगतिं

स्थायि स्थलविशेषमदात्। यत् यां ध्रुवगतिं दिव्याः दिविभवाः मुनयः उपरिस्थिता भृग्वादयः अधस्ताच्च स्थिताः सप्तर्षयः स्तुवन्ति प्रशंसन्ति। अयं पृश्निगर्भावतार इति भागवतामृते दशमस्कन्धे पृश्निगर्भस्य कर्माकथनादत्र नामाकथनात्परस्परसापेक्षत्वेन सङ्गतेरौचित्यात्। तथा चोक्तम्। अस्यात्र चरितानुक्त्या नामानुक्त्या च तत्र वै परस्परमपेक्षित्वाद्युक्त्या चैकत्र सङ्गतिरिति ॥ ८ ॥ यदिति। यद् यदा ऋषिभिरर्थितः प्रार्थितस्तदा द्विजानां शापवाक्यमेव वज्रं तेन विप्लुष्टं संदग्धं पौरुषं भगं सौभाग्यं च यस्य उत्पथं गतम् अतो निरये पतन्तं वेनं त्रात्वा अन्वर्थं तत्पुत्र इति पदं नाम लेभे। पुतः नरकात्त्रायते इति व्युत्पत्तेः। "पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा" इति वचनात्। श्रीपृथुः स्वपितुर्नरकभोगानन्तरं कुष्ठिम्लेच्छत्वप्राप्तिं श्रुत्वा तमानीय पृथूदकाख्ये कुरुक्षेत्रे तीर्थे स्नपनादिना तं यातनाभोगादुद्दधारेति वामनपुराणकथाऽत्रानुसन्धेया। यथा येन पृथुना जगति सर्वप्राणिनिमित्तं सकलानि वसूनि अन्नादिवस्तूनि वसुधा पृथ्वी दुग्धा अदुह्यत। दुहिर्द्विकर्मकः ॥ ९ ॥ नाभेरिति। असौ हरिर्नाभेराग्नीध्रपुत्रात्सुदेव्याः मेरुदेवीत्यपरनाम्न्याः सूनुः ऋषभाख्यः आस दिदीपे। "अस गतिदीप्त्यादानेषु" समदृक् स्वस्थः स्वानन्दनिष्ठः प्रशान्तकरणः परितो मुक्तसङ्गः यो वै ऋषभो लोकसंग्रहार्थं जडवद्योगेन नित्यसमाधिना चर्यां चचार। यत् यां योगचर्यामृषयः पारमहंस्यं परमहंससंबन्धि पदमामनन्ति कथयन्ति। यद्वा। यस्य पारमहंस्यं पदं चिह्नम् ऋषयः आनमन्ति अभ्यस्यन्ति ॥ १० ॥ सत्र इति। स एव साक्षाद्भगवान् मम ब्रह्मणः सत्रे यज्ञे हयशीर्षा। शोर्षन्नार्षं अकाराधिक्यं च। आस आविर्बभूव। स च यज्ञपुरुषः यज्ञैराराध्यः तपनीयवर्णः सुवर्णतुल्यवर्णः छन्दोमयः वेदमयः मखमयः छन्दोविधेया ये मखास्तन्मयः मखैर्यजनीया अखिला देवतास्तदात्मा एतेन श्रुतीनां कर्मकाण्डदेवकाण्डसंबधित्वं गम्यते। मखमय इत्यत्र अमृतमय इति वा पाठः। अस्य हयग्रीवस्य श्वसतः श्वासान् विमुञ्चतो नस्तो नासिकातः उशतीः उशत्यः कमनीयाः। "वा छन्दसि" इति जस्यपि पूर्वसवर्णदीर्घः। वेदलक्षणा वाचो बभूवुः ॥ ११ ॥

मत्स्य इति। मत्स्यरूपो भगवान् युगान्तसमये मनुना भाविना वैवस्वतेन पूर्वजन्मनि सत्यव्रतसंज्ञकेन उपलब्धो दृष्टः क्षोणीमयः पृथिवीप्रधानः पृथिव्या आश्रय इत्यर्थः। अत एव निखिलानां जीवानां निकायस्य समूहस्य केत आश्रयः स च मे मम मुखाद्विस्रंसितान् विगिलितान् हयग्रीवनामकेन दानवेनापहृतान् वेदमार्गान् वेदान् तं हत्वा तत आदाय मह्यं समर्प्येति पुराणान्तराज्ज्ञेयं सत्यव्रतं चोपदिशंस्तत्र उरुभये युगान्तसलिले विजहार ह ॥ १२ ॥ क्षीरेति। अमरदानवयूथपानाममृतस्य लब्धये क्षीरोदधिमुन्मथ्नतां सतां निद्रायां क्षण उत्सवो यस्य स अद्रेः परिवर्त्तः परिभ्रमणं तेन कषाणा कष्यमाणा अपनीयमाना कण्डूर्यस्य। "कष हिंसायाम्"। यगभाव आर्षः। यद्वा। अद्रिपरिवर्त्त एव कषाणं कषणमपनयनसाधनं यस्याः सा कण्डूर्यस्य सः। आर्षः कत्वभावः आकारश्च। आदिदेवो भगवान् क्षीरोदधौ कच्छपवपुः धृतकूर्मतनुः पृष्ठेन गोत्रं कृतमन्थानरूपं मन्दराचलं विशेषेण हर्षेण दधार ॥ १३ ॥ त्रैविष्टपेति। त्रिविष्टपे स्वर्गे भवास्त्रैविष्टपा देवास्तेषामुरुभयं हन्ति स भगवान् भ्रमन्त्यौ भ्रुकुट्यौ दंष्ट्राश्च यस्मिन्स्तथाभूतं करालं वक्त्रं यस्मिंस्तथाभूतं नृसिंहयोर्मिश्रं रूपं कृत्वा धृत्वा आरात् स्वसमीपे गदया सहाभिपतन्तं संमुखमागच्छन्तं दैत्येन्द्रं हिरण्यकशिपुं स्वस्योरौ निपात्य स्फुरन्तमितस्ततश्चेष्टमानं तं नखैराशु विददार ॥ १४ ॥ हरिसंज्ञकावतारमाह—अन्तरिति। गजयूथस्य पतिः अन्तःसरसि सरोमध्ये उरुबलेन ग्राहेण पदे गृहीतः अत एव आर्तः पीडितः सन् ततो विमुक्त्यर्थं हे आदिपुरुष! हे अखिललोकनाथ! हे तीर्थं पापनाशकं श्रवो यशो यस्य हे श्रवणयोर्मङ्गलरूपनामधेय! इति संबोधनचतुष्कमाह स्म ॥ १५ ॥ श्रुत्वेति। तदा अप्रमेयः अतिबलः भगवान् हरिः तच्छ्रुत्वा कृपया चक्रायुधः गृहीतचक्रः पतगराजस्य गरुणस्य भुजौ स्कन्धावधिरूढः सन् तत्रागत्य अरणार्थिनं शरणार्थिनं गजं हस्ते शुण्डायां प्रगृह्य चक्रेण नक्रस्य वदनं विनिपाट्य छित्त्वा तस्माद् ग्राहवदनादुज्जहार उद्धृतवान् ॥ १६ ॥ ज्यायानिति। अदितेः सुतानां द्वादशादित्यानां मध्ये अवरजः कनीयानपि गुणैर्ज्यायान् ज्येष्ठः अधियज्ञः यज्ञाधिपतिर्विष्णुः यत् यतो हेतोः अथ बलिवचनानन्तरमेवेमान् त्रींल्लोकान् विचक्रमे पादविन्यासैः क्रान्तवान्। अतः त्रिपदच्छलेन वामनेन रूपेण क्ष्मां सर्वामेव भूमिं जगृहे। नन्वीश्वरस्तथा दुर्बलवत्किमिति चकार तत्राह। यतः याञ्चामृते विना पथि चरन् सन्मार्गे प्रवर्तमानः प्रभुभिः समर्थैः स्वामिभिर्न चाल्यः ऐश्वर्यान्न भ्रंशनीयः अतः याञ्चामेव चक्रे। १७ ॥

ननु तर्हि याञ्चायाऽपि चालनमनुचितमेवेत्याशङ्क्य बलेस्तु देवाधिपत्यं नापेक्षितं यतस्तद्गृहीत्वा ततोऽधिकं स्वसालोक्यादि दास्यामीत्याशयेन हृतवानित्याह—नार्थ इति। अङ्ग हे नारद! उरुक्रमस्य वामनस्य पादशौचं चरणक्षालनरूपाः आ अप इति च्छेदः। अपः जलानि आ आदरेण शिखाः शिखासु मूर्ध्नीत्यर्थः। सप्तम्यर्थे द्वितीया। सानुस्वारोऽपि पाठः। धृतवतः बलेः यदिदानीं तेन बलात्प्राप्तमग्रे च तत्सन्तोषार्थं भगवता दीयमानं विबुधानामाधिपत्यं राज्यं तदयमर्थः पुरुषार्थः न भवति। यो वै महादानित्वेन प्रसिद्धो बलिर्गुरुणा शुक्रेण वारितः शप्तोऽपि प्रतिश्रुतमृते प्रतिज्ञातार्थं विनान्यन्न चिकीर्षत् कर्त्तुं नैच्छत्। "बहुलं छन्दस्यमाङ्योगेऽपि" इत्यडभावः। किंतु तृतीयापादपूरणार्थं शिरसा अत्यादरेण हरये आत्मानमभिमेने समर्पितवान्। अतः सदेहं त्रैलोक्यं श्रद्धया ददतो बलेर्विबुधापत्यमर्थो न भवतीति भावः ॥ १८ ॥ तुभ्यमिति। हे

नारद ! भृशमत्यन्तं विवृद्धेन भावेन स्नेहेन साधु सम्यक् परितुष्टः स भगवांस्तुभ्यं च योगं भक्तियोगम् आत्मनः तत्त्वेन यथार्थ्येन सह सतत्त्वं यथार्थं स्वरूपं सत्त्वशब्द एव वा यथार्थस्वरूपवाची। तथा च हैमः—"स्याद्रूपं लक्षणं भावश्चात्मप्रकृतिरीतयः। सहजो रूपतत्त्वं च धर्मः सर्गो निसर्गवत्। शीलं ससत्त्वं संसिद्धिः" इति तस्य दीपं प्रकाशकं ज्ञानं ज्ञानसाधनं भागवतं च हंसरूपेणोवाच। यदा त्वं सनकादिभ्य इत्यत्रैकादशस्कन्ध आदिशब्देन नारदस्यापि ग्रहणात् विष्णुधर्मोत्तरे तस्य स्पष्टत्वाच्च। यद्धंसोक्तमभिज्ञानादिकं वासुदेवशरणा भगवद्भक्ता एवाञ्जसा सुखेन विदुर्जानन्ति नान्ये। अत्रैकादशोक्तो हंसावतारो भिन्न एवेति केचिदाहुः अत्र तुभ्यं चेति चकारेण नारदावतारोऽप्युक्त इत्यप्याहुः॥ १९॥ चक्रमिति। मनुवंशस्य धरः पालकः सन्भगवान्मन्वन्तरेष्ववतीर्य विविधैश्चरित्रैस्त्रयाणां लोकानां पृष्ठे उपरि वर्तमाने सत्ये सत्यलोके तत्पर्यन्तामुशतीं मनोहरां स्वकीर्तिं प्रथयन् विस्तारयन् दशसु दिक्ष्वहितमप्रतिहतं चक्रं सुदर्शनचक्रमिव स्वतेजो बिभर्त्ति। तेन च दुष्टेषु राजसु दमं दण्डं व्यदधात्॥ २०॥ धन्वन्तरिश्चेति। भगवान्धन्वन्तरिरूपेण लोकेऽवतीर्य स्वयमेव कीर्तिः कीर्तिरूपः सन् पुरुरुजां महारोगिणां नृणां रुजो रोगान्स्वनाम्नैव आशु शीघ्रं हन्ति। आयुर्विषयकं वेदं वैद्यशास्त्रं चानुशास्ति प्रवर्त्तयति। अत एवामृतं मरणरहितमायुर्यस्मात्तथाभूतः सन् रुद्धं पूर्वं प्रतिषिद्धमपि यज्ञे स्वभागमवाप। अवावरुन्धे इति पाठे अव अवसन्नं स्वभागम् अवरुन्धे स्म लभते स्म॥ २१॥ क्षत्रमिति। असौ महात्मा भगवान् उग्रवीर्यः परशुरामरूपेणावतीर्णः सन् क्षयाय मृत्यवे विधिना तत्प्रारब्धेनोपभृतं समर्पितं ब्रह्मध्रुक् उज्झितपथं त्यक्तवेदमार्गं नरकाणामार्त्ति लिप्सुर्लब्धुमिच्छु इव अवने कण्टकद्रुमकं क्षत्रं क्षत्रियजातिमात्रम् उरुधारपरश्वधेन दीर्घतीक्ष्णधारेण परशुना त्रिःसप्तकृत्वः एकविंशतिवारान् उद्धन्ति उत्पाटयति॥ २२॥

अस्मदिति। अस्माकं ब्रह्मादीनां प्रसादे कार्ये अस्मासु यः प्रसादस्तेन वा सुमुख उद्युक्तः कलाया मायाया ईशः यद्वा कलानामैश्वर्यादीनामीशः नृसिंहरामकृष्णेषु षाड्गुण्यं परिपूरितमिति वाक्यादैश्वर्यादिगुणपरिपूर्णो भगवान् कलया भरतादिरूपया सहेक्ष्वाकुवंशेऽवतीर्य वंश अवतीर्येति पूर्वरूपाभाव आर्षः। गुरोर्दशरथस्य निदेश आज्ञायां तिष्ठन् स दयितानुजः सीतालक्ष्मणाभ्यां सहितो वनमाविवेश। यस्मिन् श्रीरामे विरुध्य विरोधं कृत्वा दशकन्धरो रावणः आर्तिं दुःखं नाशमार्च्छत् प्राप्तः॥ २३॥ यस्मा इति। ऊढं प्राप्तं यद् भयं तेनाङ्गे वेपः कम्पो यस्य तथा दूरे लङ्कायां वर्तमाना या सुहृत् सीता तया निमित्तभूतया मथितः क्षुभितो यो रोषस्तेन सुशोणा आरक्ता या श्रीरामस्य दृष्टिस्तया अत्यन्तं तप्यमानं मकराणामुरगाणां नक्राणां च चक्रं समूहो यस्मिन्स उदधिः समुद्रः हरवत् त्रिपुरदाहे हरस्येव सपदि शीघ्रमेव अरिपुरं लङ्कां दिधक्षोर्दग्धुमिच्छोः। दग्धुमिच्छवे चतुर्थीविशेषणे षष्ठी आर्षी। यस्मै श्रीरामाय मार्गमदात्। यद्वा। अरिपुरं दिधक्षो रामस्य या दूरे सुहृन्मथितरोषसुशोणा दृष्टिस्तया तातप्यमानमकरादिचक्र उदधिर्यस्मै रामाय मार्गमदादिति। यद्वा। दिधक्षोरिति। पञ्चमी। दिधक्षो रामाद्यद् भयमिति॥ २४॥ वक्ष इति। अधिसैन्ये अधिके स्वपरसैन्यमध्ये उच्चरत उत्कर्षेण विचरतो दारहृत् रावणस्य इन्द्रेण सह युद्धे रावणवक्षःस्थलस्य स्पर्शेन रुग्णा भग्ना ये महेन्द्रवाहस्य ऐरावतस्य दन्तास्तैर्विडम्बिताः स्वधवलिम्ना धवलीकृतास्तत्तद्दिक्षु पतितैः प्रकाशिताः ककुभो दिशस्तासां जयेन रूढो हासो मम समः कोऽन्योऽस्तीति सञ्जातो यो महागर्वस्तमसुभिः तत्प्राणैः सह सद्यः शीघ्रमेव धनुषो विस्फूर्जितैष्टङ्कारघोषैरेव नेष्यति अपनेष्यति। ककुब्जुष ऊढहासमिति पाठे तु ककुभो जुषते सेवते विजित्य भुङ्क्त इति तथा तस्य ऊढं प्राप्तं हासमित्यर्थः॥ २५॥ भूमेरिति। सुरेतरा असुरांशभूता राजानस्तेषां वरूथैः सैन्यैर्विमर्दितायाः भारेण पीडितायाः भूमेः क्लेशस्य व्ययाय नाशाय सिताः बद्धाः। 'षिञ् बन्धने'। कृष्णाः केशा येन सः उद्युक्त इत्यर्थः। कार्यारम्भसमये परिकर इव केशा अपि बध्यन्ते। भगवान् कलयासङ्कर्षणप्रद्युम्नानिरुद्धरूपया सह जातो जनैरनुपलक्ष्यो न ज्ञातो मार्गः भगवानेवायमिति गतिर्यस्य तथाभूतश्च सन् आत्मनः स्वस्य महिमा उपनिबध्यते अभिव्यज्यते येषु तानि कर्माणि करिष्यति। यत्तु विष्णुपुराणे भारते च विष्णुना स्वीयौ श्वेतकृष्णो केशौ उद्धृतौ ततो रामकृष्णावावतीर्णावित्युक्तं तत्तु न केशमात्रावताराभिप्रायकं किंतु भूभारावतारणरूपं कार्यं कियदेतन्मम केशावेव तत्कर्तुं शक्ताविति द्योतनार्थं रामकृष्णयोर्वर्णसूचनार्थं च कल्पान्तरविषयकावतारपरं वेति गम्यते। अन्यथा विष्णुपुराण एव पूर्वापरविरोधापत्तेः। कृष्णस्तु भगवान् स्वयमित्यादिविरोधाच्चेति संक्षेपः॥ २६॥ तोकेनेति। यत्तोकेन बालेनैव सता उलूकिकायाः उलूकवन्निशाचर्याः पूतनाया जीवहरणं यच्च त्रैमासिकस्य त्रिमासवयस्कस्यातिकोमलेन पदा पादेन शकटः अपवृत्तः विपर्यस्ततया पतितः यच्च रिङ्खता जानुभ्यां गच्छता। रिंगतेति च पाठः अन्तरगतेन मध्यं प्राप्तेन दिविस्पृशावैं अत्युच्चयोरपि अर्जुनवृक्षयोरुन्मूलनमुत्पाटनं तदेतत्त्रितयमितरथा तस्यानीश्वरत्वे सति न भाव्यमवश्यं नोपपन्नं भवति। अतोऽतिमानुषकर्मकरणं तस्येश्वरत्वे दृढं प्रमाणम्॥ २७॥

यद्वै इति। यद्वै व्रजे व्रजपशून् पालान् बालकांश्च विषमिश्रतोयस्य जलस्य पीथं पानं येषां तान् मृतान् अनुग्रहदृष्टिरूपसुधावृष्ट्या अजीवयत्। यच्च ह्रदिन्यां यमुनायां विहरन् तस्या यमुनायाः शुद्धये निर्विषत्वाय अतिविषवीर्येण विलोला चञ्चला जिह्वा यस्य तमुरगं कालियाख्य सर्पमुच्चाटयिष्यत् ततो निष्कासयिष्यति। इकारलोपश्छान्दसः। तदपीतरथा न भाव्यमित्य-

नुषङ्गः ॥ २८ ॥ तत्कर्मेति । अनधिगम्यं दुर्गमं वीर्यं यस्य सबलः बलदेवयुतः श्रीकृष्णः यत् कालियदमनानन्तरं यमुनातीरे निशि रात्र्यां व्रजमुन्नेष्यति उद्धरिष्यति अग्नितो रक्षिष्यति इत्येकवारचरितम् । तथा शुचिर्ग्रीष्मस्तत्सम्बन्धिनि शुष्के वने मुञ्जाटव्यां दावाग्निना परितो दह्यमाने सति निःशयानम् अतो दावाग्नेर्हेतोरवसितो निश्चितोन्तकालो मरणसमयो यस्य तं व्रजं गोगोपाला-दिरूपव्रजवासिनः नेत्रे पिधाय्य पिहिते कारयित्वा । पुक्स्थले युगार्षः । अग्निं पीत्वा तत उन्नेष्यति इति द्वितीयवारम् । तदुभयमपि कर्म दिव्यमिव इव एवार्थे अलौकिकमेवेति वारद्वयमग्नितो रक्षणमुक्तम् ॥ २९ ॥ गृह्णीतेति । यच्च अमुष्य कृष्णस्य माता यशोदाऽस्य बन्धनार्थं यद्यदुपबन्धमुपबध्यतेऽनेनेत्युपबन्धं शुल्वं रज्जुं गृह्णीत गृह्णाति तत्तदमुष्य सुतस्य नतु माति स्म । बन्धनसम्मितं न भवति । यच्च जृम्भतोऽस्य कृष्णस्य । शता आर्षः । वदने चतुर्दशभुवनानि संवीक्ष्य दृष्ट्वा गोपी यशोदा आदौ किं स्वप्नमेतदुत देवमायेत्येवं शङ्कितमनाः सती पुनरनेनैव अथो अमुष्यैव ममार्भकस्य य. कश्चानोत्पत्तिक आत्मयोग इति निजैश्वर्यज्ञापनेन प्रतिबोधिताऽऽसीत्तच्च कर्म दिव्यमेव ॥ ३० ॥ नन्दं चेति । भयात् सुदर्शनसर्पग्रासरूपात् तथा वरुणस्य पाशाच्च वरुणस्य पाशाद्यद्भयं तस्मादिति वा नन्दं स्वपितरं मोक्ष्यति मयसूनुना व्योमनाम्नाऽसुरेण गोपान् विक्रीडतो गोपबालांश्च बिलेषु गुहायां पिहितान् विमोक्ष्यति । अह्नि दिवसे आपृतं कृतव्यापारमत एवातिश्रमेण त्रस्तं निशि शयानमिति सर्वथा वैकुण्ठगमनसाधनहीनमपि गोकुलं गोकुलवासिजनं विकुण्ठे नित्ये लोके उपनेष्यति प्रापयिष्यति । स्मेत्याश्चर्ये । तदपि कर्म दिव्यमेव ॥ ३१ ॥ गोपैरिति । गोपैर्मखे इन्द्रयागे प्रतिहते सति व्रजस्य विप्लवाय देवे इन्द्रे अभिवर्षति सति कृपया पशून् उपलक्षणेन व्रजवासिजनांश्च रिरक्षुः रिरक्षिषुः । इडभाव आर्षः । सप्तवर्षः सप्तवर्षवयस्को बालोऽपि अनघे श्रमरहित एकस्मिन्नेव करे अनघेति सम्बोधनं वा । सलीलं वेणुवादनहासादिलीलासहितं यथा भवति तथा सप्त दिनानि सप्तदिनपर्यन्तं महीध्रं गोवर्धनाख्यमचलमुच्छिलीन्ध्रमिव उद्गतछत्राकमिव धर्त्ता धारयिष्यति । तदपि दिव्यं कर्म ॥ ३२ ॥ क्रीडन्निति । निशाकरस्य रश्मिभिर्गौर्य्यां धवलायां निशि वने क्रीडन् रासोन्मुखो नृत्यार्थमुद्यतः कलानि मधुराणि पदानि यस्मिंस्तदायतं दीर्घं मूर्छितं मूर्छनालापविशेषयुक्तं यद् गीतं तेन उद्दीपितस्मर एव रुक् रोगो यासां तासां व्रजभृतो गोपास्तेषां वधूनां गोपीनां हर्त्तुश्चौरस्य धनदानुगस्य कुबेरभृत्यस्य शङ्खचूडाख्यस्य शिरो हरिष्यति दिनान्तरभवमपि शङ्खचूडहननं राससान्निध्यादुक्तम् । यद्वा । तस्यां रात्रौ शङ्खचूडवधानन्तरमर्द्धरात्रे रासं च पुनः करिष्यति रासोन्मुख इत्युक्तेः ॥ ३३ ॥

ये चेति द्वयम् । ये च प्रलम्बादयः तत्र खरो धेनुकः दुर्दुरो बकः जलवाससाम्यात् इभः कुवलयापीडः कुजो नरकासुरः आदिना काशिराजादयः अन्ये च शाल्वादयः तत्र कपिर्द्विविदः ये वा मृधे आत्तचापाः समितौ संग्रामे शालन्ते श्लाघन्ते इति समितिशालिनः काम्बोजादिदेशाधिपतयः एतदादयः बलो भीमः पार्थ इत्यादयो व्याजाह्वयाः कपटनामानि यस्य तेन बलभीमादि-नामकेन हरिणैव हता एतेन प्रलम्बादयो बलेन हताः केचिद्भीमादिभिर्हता नतु हरिणेति न शङ्क्यमित्यर्थः । तत्र केचिदलमदर्शनं लयं केचित्तु तदीयं निलयं वैकुण्ठं यास्यन्ति । तच्च दिव्यं कर्मेति । यद्वा न दर्शनं यस्य तादृशं निलयमिति ॥ ३४–३५ ॥ कालेनेति । कालेन मीलितधियां संकुचितबुद्धीनां स्तोकायुषामल्पायुषां नृणां स्वनिगमः स्वकृतो वेदराशिर्वत दूरपारः अतिदुर्गम् इत्यवमृश्य विचार्य सत्यवत्यामाविर्हितः आविर्भूतः सन्स एव हरिः अनुयुगं युगानुरूपं यथा भवति तथा वेदद्रुमं विटपशः शाखाभेदेन विभजिष्यति स्म । इडार्षः ॥ ३६ ॥ देवेति । निगमवर्त्मनि वैदिकमार्गे निष्ठितानां नितरां स्थितानां मयेन दानवशिल्पिना विहिताभिः रचिताभिरदृश्यतूर्भिः सपत्नैरलक्षितवेगाभिः । त्वरतेः क्विप् ज्वरत्वरेत्यूठ् । पूर्भिः पुरीभिर्लोकान् घ्नतां देवद्विषां दैत्यानां मतेर्विमोहो वेदमार्गत्यागः मतेः प्रलोभो विरुद्धमार्गस्वीकारश्च यस्मात्तथाभूतं पाखण्डं वेषं विधाय तेन औपधर्म्यम् उपधर्मं पाखण्डधर्मम् । स्वार्थे ष्यञ् । बहु अधिकं भाष्यते भाषिष्यते पिलोपश्छान्दस ॥ ३७ ॥ यर्हीति । यर्हि सतामप्यालयेषु हरेः कथाः न स्युः द्विजजनास्त्रैवर्णिकाः पाखण्डिनः स्युः । नृदेवा राजानश्च वृषलाः स्युः तथा यत्र यदा त्रैवर्णिकालयेष्वपि स्वाहा स्वधा वषडिति गिरो न स्युः । दैवपित्र्याध्वकरकर्माभावात् । तदा कलियुगान्ते भगवान् कलेः शास्ता कल्किरूपो भविष्यति । अत्र च वराहादयो ब्रह्मनारदसंवादात्पूर्वभाविनः मन्वन्तरावतारास्तु भूता भाविनश्च धन्वन्तरिपरशुरामौ तदा वर्त्तेते । श्रीरामादयश्च भाविन एव तत्र । क्वचिद् भूतादिनिर्देश आर्ष इति द्रष्टव्यम् । अत्रेदं बोध्यम् । भगवतोऽवतारा द्विविधाः अनुप्रवेशावताराः स्वरूपेणावताराश्च । अकर्महेतुत्वाविशेषादुभयत्राप्यवतारशब्दप्रयोगः । तत्रानुप्रवेशावतारो नाम जीवेषु स्वस्यानुप्रवेशेन स्वीयज्ञानशक्त्यादोनामाविष्करणं स एवांशावतार इत्यपि कथ्यते । ते चावताराः पृथुपरशुरामादयः । नृसिंहरामकृष्णादयस्तु साक्षादवताराः ॥ ३८ ॥

सर्गेति । पुरुशक्तिभाजः अनन्तशक्तिमतो भगवतः सर्गे तपः अहं ब्रह्मा । नवर्षयो मरीच्यादयः अन्ये च ये प्रजेशाः दक्षादयः इमा मायया रचिता विभूतयः स्थाने पालने च धर्मश्च मखो विष्णुश्च मनवश्च अमरा देवाश्च अवनीशा राजानश्चेमा मायाविभूतयः अन्ते जगत्संहारे तु अधर्मश्च हरो रुद्रश्च मन्युवशाः सर्पाश्च असुराश्च आद्यपदेन भूतप्रेतपिशाचादयः क्रूरस्वभावाश्च इमा मायाविभूतयः इति संक्षेपेणोक्तम् ॥ ३९ ॥ विस्तरेण तु कोऽपि न शक्त इत्याह—विष्णोरिति । इह संसारे

यः कविर्बुद्धिमान्पुरुषः पार्थिवानि पृथिवीसंबन्धीनि रजांसि परमाणूनपि विममे गणितवांस्तादृशाऽपि विष्णोर्वीर्याणां पराक्रमाणां गणनां कर्तुं कतमोऽन्यर्हति न कोऽपि। यस्माद्धेनोः त्रैविक्रमे अस्खलता प्रतिघातशून्येन स्वरंहसा स्वपादवेगेन त्रिसाम्यरूपं सदनमावरणं प्रकृत्यावरणं तत्रारभ्य उरु अधिकं कम्पयानं कम्पेन यानं पतनं यस्य तादृशं सर्वमभूत्। तस्मात्कारणाद्यो विष्णुरात्रिपृष्ठं सत्यलोकमभिव्याप्य त्रयाणां लोकानां पृष्ठं सत्यलोकमण्डकटाहं वा सर्वं चस्कम्भ रुरोध रुध्वा स्थिरीचकार। तथा च मन्त्रः। 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि। यो अस्कम्भायदुत्तरं सधस्थं विचक्रमाणस्त्रेधा-रुगायः।' इति। अस्यार्थः य उरुगायो विपुलकीर्तिस्त्रेधा त्रिप्रकारेण विचक्रमाणः पादविन्यासं कुर्वाणः सहस्य सधादेशः। तिष्ठन्तीति स्था देवादयः सधस्थं तत्रस्थैर्देवादिभिः सह वर्तमानमुत्तरं सत्यलोकमस्कम्भयत् अवष्टम्भवांस्तस्य विष्णोर्नु वीर्याणि यः पार्थिवानि रजांस्यपि विममे स तादृशोऽपि बुद्धिमान् कं प्रवोचं कः प्रावोचत् ॥ ४० ॥ नान्तमिति। पुरुषस्य भगवतस्तन्मायाबलस्य चान्तमहं न विदामि न वेद्मि आर्षः। तथा अमी ते अग्रजा मुनयः सनकादयो न विदन्ति। किं बहुना दशशतान्याननानि यस्य स तैर्द्विजिह्वैस्तावदद्भिराननैरादित एव तद्गुणान् गायन् अधुनापि अस्य भगवतो गुणानां पारमन्तं न समवस्यति न प्राप्नोति। अपरेऽस्मदाद्यपेक्षयाऽर्वाचीनाः कुतस्तत्प्रापुयुरिति ॥ ४१ ॥ येषामिति। यदि निर्व्यलीकं निष्कपटं निष्कामं यथा भवति तथा सर्वात्मना एकाग्रेण मनसा श्रितं पदं यस्य सः अनन्तः भगवानेव येषामुपरि दययेत् दयां कुर्यात्। दयाशब्दा-त्तत्करोतीति णिजन्ताल्लिङ्। दयधातोर्णिचि तु दाययेति स्यात्। ते भक्ताः अन्यैर्दुस्तरां देवस्य भगवतः मायामतितरन्ति निःशेषं तरन्ति मायावैभवं विदन्ति च। अथेति पाठान्तरम्। यतः श्वशृगालादीनां भक्षणयोग्ये कलेवरे एषां ममाहमिति धीर्न भवति ॥४२॥ अन्तर्ज्ञानाभावेऽपि मायेयमिति ज्ञानं तत्कृपया बहूनामस्ति इत्याह—वेदाहमिति त्रिकम्। अङ्ग हे नारद! परमस्य हि योगमायामहं वेद जानामि। यूयमिति सनकाद्यभिप्रायेण बहुवचनम्। भगवान्भवश्चेत्यादयोऽपि विदन्ति। दैत्यवर्यः प्रह्लादः मनोः पत्नी शतरूपा सा च स्वायम्भुवो मनुश्च तदात्मजाः प्रियव्रतोत्तानपादौ पुत्रौ देवहूतिः कन्या च प्राचीनबर्हिषो रकारश्चभोर्ऋकारेण संश्लिष्टः। तदभावपाठे तल्लोप आर्षः। आद्यशब्देन यदुप्रभृतयः शतधनुः शतधन्वा अनुश्चेति सन्धिरार्षः। रन्तिदेवाः इति पाठः सुगमः। ऐकपद्ये तु एतैः सहितो देवव्रतो भीष्म इत्यर्थः। उपेन्द्रदत्तः शुकः एते विभीषणाद्या वर्या मुख्या येषां ते वदन्ति ॥ ४३–४४–४५ ॥

किं बहुना सत्सङ्गेन सर्वेऽपि विदन्तीत्याह—ते वा इति। अद्भुताः क्रमाः पादन्यासलीला यस्य सोऽद्भुतक्रमो हरिः तत्परायणास्तद्भक्ताः तेषां शीलस्य शिक्षा येषां ते तथाभूता यदि भवन्ति भक्तानां शिष्या भूत्वा यदि तेषां शीलं भगवच्चिन्तनं शिक्षन्ते तर्हि ये स्त्रीशूद्रादयो ये वा पापजीवाः पापयोनयः शबराद्यः ये वा तिर्यग्जना गजर्क्षवानरादयस्तेऽपि देवस्य मायां विदन्त्यतितरन्ति च। यद्येवं तर्हि शुभस्य वेदार्थस्य धारणमधिकारो येषां ते ब्राह्मणादयः शुभे भगवद्रूपे धारणं मनोनियमनं येषां ते वा मायां विदन्त्यतितरन्तीति किमु वक्तव्यमित्यर्थः। श्रुतधारणा इति पाठान्तरेऽप्ययमेवार्थः ॥ ४६ ॥ शश्वदिति द्वयम्। शश्वत्सदैव प्रशान्तम् अभयं प्रतिबोधमात्रं ज्ञानैकरसं शुद्धं निर्मलं समं सदसतः स्थूलसूक्ष्मात् परम् आत्मनो ज्ञातुः तत्त्वं स्वरूप-भूतम् अजस्रसुखं सदानन्दस्वरूपं विशोकं यन्मुनयो ब्रह्मेति विदुः तद्वै भगवतः पदं स्वरूपं यत्र शब्दोऽपि न प्रवर्त्तते। आरोपित-निवृत्तावेवशब्दस्य व्यापारो न तद्बोधे इत्यर्थः। तथा बहुकारकवान् तत्साध्यः क्रियार्थः उत्पाद्याप्यविकार्यसंस्कार्यरूपं चतुर्विधं क्रियाफलं च नास्ति। यद्वा। यत्र क्रियार्थः यागादिप्रतिपादकः पुरुकारकवान् कर्त्रादिषट्कारकवानपि शब्दो न प्रवर्त्तते। यं न प्रतिपादयति तथा मत्कपटमसौ जानातीति यस्याभिमुखे स्थातुं विलज्जमानेव माया यस्मात्परैति दूरतोऽपसर्पति। सह्यञ्चति सध्यक् सहचरं मनो यं प्रति नियम्य यस्मिन् स्थिरीकृत्य यतयो यत्नशीलाः कर्त्तो भेदः "कृती छेदने" घञ् वन्निरासोऽकर्त्त तत्र हेतिं साधनं जह्युः त्यजेयुः। अनुपयोगात्तन्नाद्रियन्ते उपयोगाभावे साधनानादरे दृष्टान्तः। निपीयतेऽस्मिन्निति निपानं कूपादि तस्य खनित्रं खननसाधनं यथा स्वराट् स्वयमेव पर्जन्यरूपेण विराजमानः इन्द्रो नादत्ते तद्वदिति। यद्वा। स्वेनैव राजते इति स्वराट् दरिद्रः स यथा इन्द्रः समृद्धः सन्कर्मकारकदशायां गृहीतं निपानखनित्रं जहाति तद्वत् ॥ ४७–४८ ॥ स इति। भावानां महदादीनां स्वभावेन परिणामेन विहितस्य जातस्यास्य सतः कार्यमात्रस्य यतः प्रसिद्धिरुत्पत्तिः यद्वा भावानां ब्राह्मणादीनां स्वभावैः शम-दमाद्यैः विहितस्य सतः शुभस्य कर्मणः यतः प्रसिद्धिः स एव भगवान् श्रेयसां धर्मादीनामपि विभुः दातुं समर्थः स्वारम्भकाणां धातूनां भूतानां विगमे वियोगे सति देहे तदनु पश्चाद्विशीर्यमाणेऽपि अजः जन्मादिहीनः तत्रस्थः पुरुषः व्योमेव विशीर्यते न नश्यति। कर्मकर्त्तरि लट् ॥ ४९ ॥ अध्यायत्रयार्थमुपसंहरति—सोऽयमिति। हे तात नारद! सोऽयं बुद्धिस्थो विश्वस्य भावनः भगवान् समासेन संक्षेपेण ते तुभ्यं अभिहितः कथितः। यत्किंचित् सदसत्स्थूलसूक्ष्मं चिदचित्कारणात्मकं तत्सर्वं यत् यस्मात् कार्यव्यतिरिक्ताद्धरेरन्यन्न भवति। हरिस्तु कारणभूतस्ततो व्यतिरिक्त इति तत्सर्वं हरेरेव भवति। नान्यस्मादतस्ततोऽन्यन्न भवतीति वा हरेर्नान्यदन्यत्स्यादिति तु पाठान्तरम्। भक्तास्त्वत्र सत्कार्यं जगत् असत्कारणं जीवो माया च तद्धरेरन्यन्न भवन्ति।

जीवमाययोः शक्तित्वात् शक्तिशक्तिमतोरभेदात् शक्तिकार्यस्य शक्त्यनन्यत्वात्। कीदृशाद्धरेः सदसद्भ्यामन्यस्मात् तयोः शक्त्योस्तटस्थत्वबहिरङ्गत्वाभ्यामनाशक्तेर्दोषसम्बन्धाभाव इति भावः। भागवते इदमेवाद्वैतमित्याहुः॥ ५०॥ इदमिति। यदिदं मे मह्यं भगवता उदितं कथितम् अयं भगवद्विभूतीनां संग्रहः तदिदं शास्त्रं भागवतं नामाऽस्ति त्वमन्येषामर्थे एतद्विपुलीकुरु विस्तरेण वर्णय॥ ५१॥ यथेति। यथा वर्णनेन नृणां भगवति सर्वात्मनि अखिलाधारे हरौ भक्तिर्भविष्यति भवेत् इति तथा संकल्प्य संचिन्त्य विस्तरेण तल्लीलाप्राधान्येन भागवतं वर्णय। नतु भक्तिरसविघातेन केवलं तत्त्वमित्यर्थः॥ ५२॥ अतः परं "नृजन्मनि न तुष्येत कृतेन भगवान्यदि। धर्मार्थकामैः किं तर्हि कार्यं सिध्यति नश्वरैः। कृष्णेन चोत्तमश्लोके चेद्भक्तिरनपायिनी। किं स्याद्वर्णाश्रमाचारदानहोमादिभिः कृतैः।" इति श्लोकद्वयं वीरराघवैर्व्याख्यातमपि काचित्कतया न व्याख्यातम्। मायामिति। अमुष्येश्वरस्य श्रद्धया नित्यं मायां लीलां वर्णयतः शृण्वतः श्रुत्वाऽनुमोदतश्च आर्षः शाता। पूरुषस्यात्मान्तःकरणं मायया न मुह्यति॥ ५३॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः द्वितीयस्याध्याये सप्तमे व्यधात्।

इति श्रीमद्भागवते द्वितीयस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तमोऽध्यायः॥ ७॥



## अथाष्टमोऽध्यायः

### राजोवाच

**ब्रह्मणा चोदितो ब्रह्मन्गुणाख्यानेऽगुणस्य च। यस्मै यस्मै यथा प्राह नारदो देवदर्शनः।**

**एतद्वेदितुमिच्छामि तत्त्वं वेदविदां वर॥ १॥**

अष्टमे देहसम्बन्धमाक्षिपन्नीशजीवयोः। राजापृच्छद्बहून्प्रश्नान् श्लोकस्तत्रार्द्धगोदशः (२६॥)।

तावन्त्योनुष्टुभोऽप्यत्रोवाचवाचोद्वयं तथा॥ ८॥

ब्रह्मणेति सार्द्धम्। हे ब्रह्मन्! हे वेदविदां वर! अगुणस्य गुणातीतस्यापि भगवतो गुणानामाख्याने ब्रह्मणा चोदितः देववद्दर्शनं यस्य स नारदो यस्मै यस्मै पृच्छकाधिकारिभेदेन यथा यथा प्राह स्म एतत् तत्त्वम् अहं वेदितुमिच्छामि॥ १॥ हरेरिति सार्द्धम्। अतः हे महाभाग! लोकानां सर्वेषां सुमङ्गलाः अद्भुतवीर्यस्य हरेः कथाः कथयस्वेति। यथाहंममतास्पदानि राज्यादीनि त्यक्तवानेव तथा निःसङ्गं मनः अखिलात्मनि कृष्णे निवेश्य अहंतास्पदं कलेवरं त्यक्ष्ये त्यक्ष्यामि। इति स्वप्रयत्नो दर्शितः॥ २–३॥ शृण्वत इति। भगवान् स्वचेष्टितं श्रद्धया नित्यं शृण्वतो गृणतो वर्णयतश्च पुरुषस्य हृदि स्वप्रयत्नं विनापि नातिदीर्घेण स्वल्पेनैव कालेन स्वयमेव विशते। तत्रार्षः॥ ४॥ प्रविष्ट इति। कथाश्रवणद्वारा कर्णरन्ध्रेण स्वानां भक्तानां भावसरोरुहं हृदयकमलं प्रविष्टः कृष्णस्तत्रत्यं शमलं पापं यथा सलिलस्य निःशेषं मलं शरद्धरति तथा धुनोति निरस्यति। अयं भावः। कतकादिना कुम्भस्थे जले शोधिते तदेव केवलं शुद्ध्यति नतु तडागादिगतम्। स च मलः कुम्भस्यान्तस्तिष्ठत्येव किंचिच्चलने क्षुभ्यति च। एवं तपोदानादिकं न सर्वथा सर्वेषां सर्वं पापं धुनोति किन्तु सावशेषं कस्यचित्किञ्चिदेव। श्रीकृष्णस्तु हृदि प्रविष्टमात्रः सर्वेषां सर्वं पापं निश्शेषं हरतीति शरद्दृष्टान्तेनोक्तम्॥ ५॥

धौतात्मेति। धौतात्मा निष्पापः मुक्तास्त्यक्ताः सर्वे परिक्लेशाः अविद्यास्मितादयो धनार्जनाद्याश्च येन सः पुरुषः पान्थः प्रवासादागतः स्वशरणं गृहं यथा न त्यजति तथा कृष्णपादमूलं न मुञ्चति ॥ ६ ॥ यदिति। हे ब्रह्मन्! अधातुमतः धातवः पृथिव्यादयः तत्सम्बन्धशून्यस्यास्य लौकिकस्य आत्मनः जीवस्य धातुभिर्देहारम्भ इति यत् तत्किं यत्प्रच्छया निर्निमित्तमेव केनापि हेतुना वा भवति इति भवन्तो यथा यथावत् जानते जानन्ति। अतः कथयन्तु इति शेषः ॥ ७ ॥ आसीदिति सार्द्धम्। लोकानां संस्थानं रचना तदेव लक्षणं स्वरूपं यस्य तत्पद्मं यस्योदरादासीत् असावीश्वरः इयत्तायुक्तैः परिमितैरवयवैः करचरणादिभिरयं प्राकृतः पुरुषो यावान् यावत्सङ्ख्याकावयवयुक्तः तावान् प्रोक्तः। तथा संस्थावानवयववानिव च प्रोक्तः। अतः को विशेषस्तस्य इवशब्देन ईश्वरस्य करचरणादयः स्वरूपातिरिक्ता न सन्तीति ॥ ८ ॥ अवश्यं च विशेषो वाच्य इत्याह—अज इति। भूतानां व्यष्टयुपाध्यधीनामात्मा नियन्ता समष्ट्युपाधित्वात् अजो ब्रह्मा यस्य नाभिपद्मात्समुद्भूतः सन् येनानुगृहीता तस्य रूपं ददृशे दृष्टवान्। तद्रूपं। एतच्च तस्यापि द्रष्टुरीशस्येति श्लोकोक्तमनूद्यते अग्रे च स्पष्टीभविष्यति। ततश्च यस्यानुग्रहादेव भूतानि व्यष्ट्युपाधि-प्राणिनः सृजति तं कथय ॥ ९ ॥ स चापीति। विश्वस्य स्थितिः उद्भवः अप्ययश्च य ईशः मायया ईशः सर्वगुहाशयः अन्तर्यामी स पुरुषोऽपि आत्ममायां मुक्त्वा त्यक्त्वा यत्र शेते येन रूपेणावतिष्ठते सृष्ट्यादिलीलात उपरतो भवति तत्कथय ॥ १० ॥ पुरुषेति। पुरुषावयवैः सपालाः लोकाः पूर्वं कल्पिता इति। '-यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः"। इति ब्रह्मणोक्तं तदपि त्वत्तः शुश्रुम। सपालैर्लोकैरमुष्यावयवाः कल्पिता इत्यपि "पातालमेतस्य हि पादमूलम्"। इति वदतस्त्वत्त एव शुश्रुम श्रुतवन्तो वयं तत्रान्यो विशेषश्चेत्तमपि कथय। इति श्रीस्वामिपादानुसारेण यदधातुमत इत्यादीनामाशयः। अत्र भक्ताः। यदधातुमत इति जीवविषयकः प्रश्नः आसीद्यदुदरात्पद्ममित्यण्डसंस्थितेश्वरप्रश्नः स चापि यत्र पुरुष इति महत्स्रष्टृपुरुषप्रश्नः। शेते सर्वगुहाशय इति सर्वभूतस्थे-श्वरप्रश्नः। "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः। प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम्। तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते"। इत्युक्तेः। पुरुषावयवैरिति समष्टिजीवप्रश्नः। इति प्रश्नपञ्चकं शान्तभक्तौ पर्यवस्यति इत्याहुः ॥ ११ ॥ यावानिति। कल्पो महाकल्पः अवान्तरकल्पो वा यावान् यावत्परिमाणकः कल्पितः भूतभव्यभवच्छब्दवाच्यः कालो यथाऽनुमीयते सतः कार्यस्य देवपितृमनुष्यादिदेहस्यायुषो मानं प्रमाणं च यदस्ति तत्कथय ॥ १२ ॥ कालस्येति। हे द्विजसत्तम! अण्वी सूक्ष्मा निमेषादिरूपा बृहती संवत्सरादिरूपाऽपि च या कालस्यानुगतिः प्रवृत्तिर्लक्ष्यते निमेषमात्रेण गतः महता कालेन गत इत्यादिव्यवहारे प्रतीयते। तथा कर्मगतयः कर्मभिः प्राप्यानि स्थानानि यावत्यो यावत्सङ्ख्याकाः यादृशीर्यादृश्यो यत्प्रकारकाश्च। आर्षः प्रयोगः। ताः कथय ॥ १३ ॥

यस्मिन्निति। गुणानां सत्त्वादीनां परिणामं देवादिरूपमभीप्सतामिच्छतां गुणिनां जीवानां मध्ये येनाधिकारिणा यस्मिन्देवादिरूपे निमित्ते यो वा कर्मणां पुण्यपापानां समवायः समुदायो यथा तेन प्रकारेणोपगृह्यते अनुष्ठीयते केन कर्मसमुदायेन कथं कृतेन कोऽधिकारी देवादिभावं प्राप्नोति तत्कथय ॥ १४ ॥ भूपातालेति। यथा भूपातालादीनां सम्भवः भूभृतः पर्वताः यथा च एतानि भूपातालादीनि ओकांसि येषां प्राणिनां तेषां च सम्भवः कथ्यताम् ॥ १५ ॥ प्रमाणमिति। बाह्याभ्यन्तरभेदतः बाह्ये अभ्यन्तरे च कियत्प्रमाण इत्थमण्डकोशस्य प्रमाणं महतां भागवतानामनुचरितं च वर्णानामाश्रमाणां च विनिश्चयः तत्तत्स्वभावेन निर्द्धारः तत् कथ्यताम् ॥ १६ ॥ अवतारेति। यत् आश्चर्यतमं हरेः अवताराणाम् अनुचरितं युगानि कानि कियन्ति च तेषां युगानां मानं परिमाणं च युगे युगे प्रतियुगं च यो धर्मः तत्कथय ॥ १७ ॥ नृणामिति। सविशेषः वर्णाश्रमनिबन्धनरूपविशेषसहितो यादृशो नृणां साधारणो मनुष्यमात्रेणानुष्ठेयो धर्मः श्रेणीनां तत्तद्व्यवसायोपजीविनां व्यवहारनियमलक्षणो धर्मः राजर्षीणां राजोत्तमानां प्रजापालनाधिकारिणां यो धर्मः तथा कृच्छ्रेषु आपत्सु जीवतां यो धर्मः तं कथय ॥ १८ ॥ तत्त्वानामिति। तत्त्वानां प्रकृतिमहदादीनां परिसङ्ख्यानं गणना तेषामेव लक्षणम्। असाधारणो धर्मः हेतुलक्षणं तत्कार्यहेतुत्वेन च लक्षणं पुरुषाराधनविधिः भगवत्सेवाप्रकारः योगस्याष्टाङ्गस्य विधिः आध्यात्मिकस्य प्रकृतिविविक्तात्मविषयस्य च प्रकारः तं कथय ॥ १९ ॥ योगेति। योगेश्वराणामैश्वर्याणि अणिमादीनि तेषां गतिः स्वरूपं योगेश्वराणामैश्वर्येण या गतिरर्चिरादिरिति वा योगिनां लिङ्गशरीरस्य भङ्गः प्रलयः वेदा ऋग्वेदादयः उपवेदा आयुर्वेदादयः धर्माः धर्मशास्त्राणि तेषामितिहासपुराणयोश्च गतिः स्वरूपं तान् कथय ॥ २० ॥ संप्लव इति। सर्वभूतानां सप्लवः अवान्तरप्रलयः यद्वा सम्यक् प्लवनमुत्पत्तिः विक्रमः स्थितिः प्रतिसंक्रमः महाप्रलय इष्टं वैदिकं कर्म पूर्तं "वापीकूपतडागादिदेवतायतनानि च। अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते"। इति स्मृत्युक्तं स्मार्त्तं कर्म तयोर्द्वन्द्वैक्यं तस्य तथा काम्यानां तत्तत्कामनयाऽनुष्ठेयानां कर्मणां तथा धर्मार्थकामरूपत्रिवर्गस्य च यो विधिः अविरोध-प्रकारः सः कथ्यताम् ॥ २१ ॥ यश्चेति। यश्चानुशायिनां महाप्रलये ईश्वरे लीनोपाधीनां जीवानां सर्ग उत्पत्तिप्रकारः पाखण्डस्य वेदविरुद्धमार्गस्य च संभवः प्रवृत्तिः आत्मनो जीवस्य बन्धमोक्षौ च मुक्तिदशायां स्वरूपतो व्यवस्थानं तत्कथ्यताम् ॥ २२ ॥ यथेति। आत्मतन्त्रः स्वतन्त्रः विभुर्भगवानात्मनः मायया यथा विक्रीडति यथा वा प्रलये मायां विसृज्य साक्षिवदुदास्ते उदासीन आस्ते तं प्रकारं कथय ॥ २३ ॥

सर्वमिति। हे भगवन्! हे महामुने! एतत् यन्मया पृष्टं तत्सर्वं चकारादपृष्टमपि तत्त्वतोऽनुपूर्वशः प्रस्तावक्रमणे प्रपन्नाय पृच्छते मे मह्यम् उदाहर्तुं निरूपयितुमर्हसि ॥ २४ ॥ अत्रेति। अत्र हि पृष्टेषु पदार्थेषु सभायां वा यथा आत्मभूः परमेष्ठी ब्रह्मा सर्वज्ञः तथा भवानेव प्रमाणं सम्यक् ज्ञाता यतस्तव ब्रह्मनारदव्यासक्रमेण संप्रदायोऽस्तीति सामान्यन्यायेनाहापरे चेति। इह सभायां वर्तमानाः परेऽपि पूर्वषां पूर्वजैः कृतमेव दृष्ट्वा श्रुत्वा वाऽनुतिष्ठन्ति न तु कपोलकल्पितं वदन्ति। यद्वा। त्वदन्ये गतानुगतिका एव न तु स्वयं सर्वज्ञाः ॥ २५ ॥ न मे इति। हे ब्रह्मन्! अच्युतस्य पीयूषं कथामृतं पिबतो मे मम कुपिताद् द्विजाद्धेतोर्यन्मरणं ततोऽन्यत्र तद्विना अमी असवः प्राणाः अनशनान्न नरायन्ति नापगच्छन्ति न व्याकुलीभवन्ति। द्विजशापादेव मरणं भवतु अनशनेन तु नाहं म्रिये ॥ २६ ॥ स इति द्वयम्। इत्येवं सतां पत्युः भगवतः कथायां विष्णुरातेन परीक्षिता राज्ञा उपामन्त्रितः प्रार्थितः ब्रह्मरातः शुकः भृशं प्रीतः सन् संसदि तत्सभायां ब्रह्मकल्पे सर्वादिमे सृष्ट्युपक्रमकल्पे उपागते सति ब्रह्मणे भगवता प्रोक्तं ब्रह्मसम्मितं वेदतुल्यं भागवतं नाम पुराणं प्राह स्म ॥ १७–२८ ॥ यद्यदिति। पाण्डूनां वंश ऋषभः श्रेष्ठः परीक्षिद्यद्यदनुपृच्छति अन्वपृच्छत् तत्सर्वमानुपूर्व्येण प्रस्तावक्रमेण नतु प्रश्नक्रमेण आख्यातुं भागवताख्यानेनैव तदुत्तरं वक्तुमुपचक्रमे उपक्रान्तवान् ॥ २९ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो द्वितीयस्याष्टमे निरमादिमाम्।

इति श्रीमद्भागवते द्वितीये स्कन्धेऽन्वितार्थप्रकाशिकायामष्टमोऽध्यायः ॥ १९ ॥

—:※:—

## अथ नवमोऽध्यायः

### श्रीशुक उवाच

आत्ममायामृते राजन्परस्यानुभवात्मनः। न घटेतार्थसम्बन्धः स्वप्नद्रष्टुरिवाञ्जसा ॥ १ ॥

नवमे यत्प्राह चतुःश्लोकीभागवतं हरिः। राज्ञे शुकस्तदप्राहात्र श्लोकाः सार्द्धाः शराब्धयः (४५॥)॥

अनुष्टुभः (५३॥) सार्द्धंवल्लीषत्रायोवाचरश्चकर ॥ ९ ॥

तत्र य:धातुमत इत्यत्रोत्तरमाह आत्ममायामिति। हे राजन्! आत्मनो भगवतो मायाम् ऋते विना परस्य देहादि-व्यतिरिक्तस्य अनुभवरूपस्यात्मनः जीवस्य अर्थेन दृश्येन देहादिनाऽञ्जसा तत्त्वतः सम्बन्धो न घटते न संगच्छते स्वप्न-द्रष्टुरिव यथा मोहं विना स्वाप्निकदेहादिसंबन्धो न घटते तद्वत् ॥ १ ॥ संसारोऽपि मायैवेत्याह—बहुरूप इति। बहुरूपया देवमनुष्यबाल्ययुवादिरूपैः परिणतया मायया तत्र प्रविष्टो जीवोऽपि बहुरूप इवाभाति। अस्या मायाया गुणेषु देहादिषु रममाण तान्ममेति देहमहमिति च मन्यते ॥ २ ॥ यर्हीति। वावेत्येवार्थे। यर्ह्येव कालमाययोः पुरुषप्रकृत्योः परस्मिन्स्वे एव महिम्नि परमार्थस्वरूपे रमेत तदा मायानिवृत्त्या गतसंमोहः सन् ममाहमित्युभयं त्यक्त्वा उदास्ते पूर्णरूपेणावतिष्ठते ॥ ३ ॥ आत्मेति। अव्यलीकं निष्कपटं यद्व्रतं तेन आदृतः आराधितो भगवान् ऋतं सत्यं रूपं दर्शयन् आत्मतत्त्वस्य विशुद्ध्यर्थं ज्ञानार्थं दशमस्य विशुद्ध्यर्थमितिवत् ब्रह्मणे यत्साधनं तपआदिना भजनं चतुःश्लोकीभागवतं वा आह स्म। तदहं वक्ष्यामि इति शेषः। परे त्वाहुः। नतु कालमायशः परं किं यत्र रमेत तत्राह आत्मेति। आत्मतत्वविशुद्ध्यर्थं यत् ऋतं चिद्घनं रूपं दर्शयन् ब्रह्मणे

आह चतुःश्लोकीभागवतमुपदिदेश। अत्र यद्भगवता रूपं दर्शितं यच्च उपदिष्टं तदेव परमिति। श्रीस्वामिपादास्तु यच्च आसीद्यदुदरात्पद्ममित्यादिना जीवेश्वरयोः को विशेषो यदीश्वरभक्त्या जीवस्य मोक्षः स्यादित्युक्तं तत्राह यत्तत्र आदिना। भजनं भगवान् ब्रह्मणे आह स्त तत् आत्मनो जीवस्य तत्त्वज्ञानार्थं भवत्येवेति किं कुर्वन्नाह ऋतं सत्यं चिद्घनं रूपं दर्शयन्। अयं भावः। जीवस्याविद्यया मिथ्यारूपदेहसम्बन्धः ईश्वरस्य तु योगमायया चिद्घनलीलाविग्रहाविर्भाव इति महान् विशेषः। अतस्तद्भजनान्मोक्षोपपत्तिरिति प्राहुः॥ ४॥ ब्रह्मणोऽपि तत्त्वज्ञानं भगवत्प्रसादादेवेति दर्शयितुमाह—स इति। जगतामादिदेवः परो गुरुः भक्तिरहस्योपदेष्टा स ब्रह्मा स्वाधिष्ठानान्वेषणार्थं पूर्वं जले निमग्नस्तत्र तदप्राप्य ततः परावृत्त्य स्वधिष्ण्यं पद्मरूपं स्वस्थानमास्थाय तत्र स्थित्वा सिसृक्षया जगत्स्रष्टुमिच्छया ऐक्षत कथं स्रष्टव्यमित्यालोचितवान्। एव समीक्षमाणोऽपि यया प्रपञ्चनिर्माणविधिर्जगद्रचनाप्रकारो ज्ञातो भवेत् तामत्र सृष्टिविषये संमतां योग्यामव्यभिचारिणीं दृशं प्रज्ञां नाध्यगच्छन्न प्राप्तवानित्यर्थः॥ ५॥ स चिन्तयन्निति। हे नृप! स विभुर्ब्रह्मा प्रज्ञाप्राप्त्युपायं चिन्तयन्नेकदा द्विर्गदितं द्विरुक्तं द्व्यक्षरं वचः अम्भसि मन्त्रमिव उपाश्रृणोत् समीपे श्रुतवान्। तच्च स्पर्शेषु कादिषु मान्तेषु यत् षोडशं तकारः यच्चैकविंशपकारः तच्च द्विर्गदितं तप तपेति लोटः सिपि रूपम्। आदरे वीप्सा त्वं तपश्चरेत्यर्थः। अकिञ्चनानां तपस्विनां यद्धनं लोका विदुः येन तपोधना इति ते प्रसिद्धाः॥ ६॥ निशम्येति। तप तपेति वचो निशम्य तस्य वचसो यो वक्ता तस्य दिदृक्षया द्रष्टुमिच्छया ततः प्रचलितः सन्सर्वा दिशो विलोक्य तत्र दिदृवन्यद्वस्त्वन्तरमपश्यमानः। आर्षः शानच्। पुनः स्वधिष्ण्यमास्थाय उपादिष्ट इव केनचित् प्रत्यक्षं नियुक्त इव तत्तप आचरणमात्मनो हितं कायसाधकं विमृश्य मत्वा तपसि मन आदधे धृतवान्॥ ७॥ दिव्यमिति। तप तपेति वचोर्थे अमोघं दर्शनं ज्ञानं यस्य सः जितः अनिलः आत्मा मनश्च येन सः तथा विजितानि ज्ञानकर्महेतुभूतान्युभयेन्द्रियाणि येन तपतां तपश्चरतां मध्ये तपीयान् अतिशयेन तपस्वी। तपस्विन्शब्दादीयसुन् विन्मतोर्लुक्। समाहितः एकाग्रमनः सन् दिव्यं देवमानभवं सहस्राब्दपर्यन्तम् अखिललोकानां तापनं प्रकाशकम् आविर्भावकारणमित्यर्थः। तपः अतप्यत स्मेति पादपूर्त्तौ तप तपः कर्मकस्येति कर्मवद्भावः॥ ८॥

तस्मै इति। एवं सभाजितस्तपसा आराधितो भगवांस्तस्मै ब्रह्मणे व्यपेता निरस्ताः संक्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च मोहो भ्रमः साध्वसं भयं च यत्र तं सुष्ठु अदृष्टं पुण्यं तद्वद्भिर्विबुधैर्देवैः यद्वा स्वस्य दृष्टं दर्शनं ज्ञानं येषां तैरात्मविद्भिः विबुधैरभितः स्तुतं परं श्रेष्ठं यद्यस्मात्परं उत्कृष्टं नास्ति तं स्वलोकं वैकुण्ठाख्यं संदर्शयामास॥ ९॥ प्रवर्तत इति। यत्र वैकुण्ठे रजस्तमश्च न प्रवर्त्तते तयोस्ताभ्यां मिश्रं सत्त्वं च न वर्त्तते। अपि तु शुद्धमेव कालस्य विक्रमो विनाशकत्वं न प्रवर्तते। यत्र कारणभूता मायाऽपि न प्रवर्तते। तत्रापरे तत्कार्यभूता रागलोभादयः न प्रवर्तन्त इति किमुत वक्तव्यम्। यत्र सुरैरिन्द्राद्यैः असुरैः प्रह्लादाद्यैरर्चिताः सत्कृता हरेरनुव्रताः पार्षदा भक्ताश्च विहरन्ति॥ १०। श्यामेति सार्द्धम्। श्यामाश्च ते अवदाताः स्वच्छाश्च श्यामावदाताः शतपत्रलोचनाः पद्मदलायतेक्षणाः पिशङ्गवस्त्राः पीताम्बरधराः सुरुचः अतिकमनीयाः सुपेशसः अतिसुकुमाराः सर्वे चतुर्बाहवः उन्मिषन्त इव प्रभावन्तो मणिप्रवेका मण्युत्तमाः येषु तानि निष्काणि पदकानि अन्यानि चाभरणानि येषां ते सुवर्चसः अतितेजस्विनः न सर्वे श्यामा एव किंतु प्रवालवैदूर्यमृणालवत् वर्चो वर्णो येषां तेऽपि सन्ति परिस्फुरन्ति कुण्डलानि मौल्यो मुकुटानि मालाश्च सन्ति येषां ते॥ ११॥ भ्राजिष्णुभिरिति। यो लोकः भ्राजिष्णुभिर्देदीप्यमानाभिर्महात्मनां भक्तानां लसन्ति प्रकाशमानानि यानि विमानानि तेषामावलिभिस्तथा प्रमदोत्तमानां द्युभिः कान्तिभिश्च 'द्यु क्लीवमह्नि गगने च ना ज्वलन' इति मेदिनी। कान्तौ तु लक्षणा। विद्योतमानः परितः विराजते यथा विद्युद्भिः सह वर्तमानाः सविद्युतः अभ्राणां मेघानामावलयः पङ्क्तयस्ताभिर्नभो विराजते तद्वत् विद्युत इव स्त्रियः अभ्रपङ्क्तय इव विमानानि नभ इव लोकः॥ १२॥ श्रीरिति। यत्र च रूपिणी मूर्तिमती श्रीः सम्पत् अतिसौन्दर्यवती लक्ष्मीर्वा विभूतिभिः स्वसखीभिः सह नानाविभवैर्वा उरुगायस्य हरेः पादयोः बहुधा मानं पूजां करोति। या च लक्ष्मीः प्रेङ्खमान्दोलं श्रिता कुसुमाकरो वसन्तस्तदनुगाः शुककोकिलभृङ्गादयस्तैः स्वयं विविधं गीयमानापि प्रियस्य भगवतः कर्म गायती भवति। नुमभाव आर्षः॥ १३॥ ददर्शेति। तत्र लोके ब्रह्मा अखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिं सुनन्दनप्रबलार्हणादिभिः द्वारपालैरन्यैश्च स्वपार्षदमुख्यैः परितः सेवितं विभुं ददर्श॥ १४॥ भृत्येति। भृत्यानां प्रसादेऽभिमुखं दृग्दृष्टिरेवासवः आसववन्मदकरी हर्षकरी च यस्य तम्। यद्वा। दृशां नेत्राणामासव इव मादको यस्तं प्रसादपूर्वको हासः अरुणे लोचने च यस्मिंस्तदाननं यस्य तं किरीटिनं कुण्डलिनं चतुर्भुजं पीताम्बरं वक्षसि वक्षोवामभागे स्थितया श्रिया स्वर्णरेखाकारया लक्षितमलंकृतम्॥ १५॥

अधीति। परमुत्कृष्टम् अध्यर्हणीयमतिपूजनीयमासनमास्थितमधिष्ठितं चतस्रः प्रकृतिपुरुषमहदहङ्काररूपा षोडश एकादशेन्द्रियाणि पञ्चमहाभूताख्याः पञ्चतन्मात्रारूपा याः शक्तयस्ताभिर्मूर्तिमतीभिर्वृतं सेवितम्। यद्वा। चतस्रः शक्तयो धर्मज्ञानवलैश्वर्यरूपा ऋगादिवेदरूपाश्च षोडश शक्तयः चण्डप्रचण्डभद्रसुभद्रजयविजयधातृविधात्राख्याः प्रागादौ दिशो द्वारपालाः कुमुदकुमुदाक्ष-

पुण्डरीकवामनशङ्कुकर्णसर्वनेत्रसुमुखसुप्रतिष्ठिता दिक्पालाः। पञ्च शक्तयः कूर्मनागराजगरुडच्छन्दोमन्त्राख्याः ताभिर्वृतं स्वैः स्वाभाविकैः इतरत्र ब्रह्मादिषु अध्रुवैः नित्यैर्भगैः ऐश्वर्यवीर्यादिभिर्युक्तं स्वे स्वकीये धामन् धामनि। ङिलुगार्षः। स्वरूपे एव रममाणम् ईश्वरं ददर्श। पूर्वं मायानिषेधो मोहाद्यजनकतया अत्र विधानं सेवकतयेति न विरोधः॥ १६॥ तद्दर्शनेति। तस्य हरेर्दर्शनेन य आह्लादः तेन परिप्लुतं व्याप्तमन्तरमन्तःकरणं यस्य हृष्यन्ती रोमाञ्चिता तनुर्यस्य सः प्रेम्णो भरेण अश्रूणि लोचने यस्य सः विश्वसृक् ब्रह्माऽस्य भगवतः पादाम्बुजं ननाम। परमहंसानां ज्ञानिनां विवेकिनां भक्तानां वा कर्म पारमहंस्यं तेन यथा ज्ञानमार्गेण भक्तिमार्गेण वा यत्पदाम्बुजमधिगम्यते प्राप्यते॥ १७॥ तमिति। तदा प्रीतमनाः ब्रह्मणः प्रियो हरिः समुपस्थितं समीपस्थं प्रीयमाणं स्वस्मिन् प्रीतियुक्तं प्रजाविसर्गरूपे कार्ये निजशासनार्हणं स्वनियोगयोग्यं प्रजाविसर्गे समुपस्थितमिति वाऽन्वयः। तं ब्रह्माणं करे स्पृशन् तत्करग्रहणेन तस्मिन् क्रियाशक्तिं सञ्चारयन् इति भावः। ईषद्धितेन मन्दहासेन शोचिर्दीप्तिः शोभा यस्यास्तया गिरा तस्य प्रियं यथा स्यात्तथा बभाषे॥ १८॥ त्वयेति। हे वेदगर्भ! कूटं छलं कामना तेन युक्तानां योगिनाम्। शेषे षष्ठी। दुस्तोषः तोषयितुमशक्यः अहं त्वया सिसृक्षया हेतुना चिरं भृतेन अनुष्ठितेन तपसा साधनभूतेन सम्यक् सम्यक् तोषितः॥ १९॥ वरमिति। हे ब्रह्मन्! वरेशं वरदातारं मा मां प्रति अभिवाञ्छितं वरं वरय याचस्व। तेन ते तव भद्रं भविष्यति। पुंसां श्रेयसां फलानां प्राप्तये यः परिश्रामः परिश्रमः। "नोदात्तोपदेश" इति वृद्धिनिषेधाभाव आर्षः। स मद्दर्शनमेवावधिर्यस्य तथाभूता भवति॥ २०॥ मनिषितेति सार्द्धम्। यन्मम लोकस्य वैकुण्ठस्यावलोकनं त्वया कृतं सोऽयं मम मनीषितस्यायं लोकं पश्यत्विति संकल्पस्यैवानुभावः। न च तत्र तव तपोहेतुः तत्प्रवृत्तेरपि मत्कृतत्वादित्याह। यत् यतो रहसि तप तपेति वच उपश्रुत्य यत्परमं तपश्चकर्थ कृतवानसि तदपि त्वयि जगन्निर्माणरूपे कर्मणि विमोहिते सति तत्र तदा मयैव प्रज्ञादिष्टं त्वां प्रत्युपदिष्टम्॥ २१॥ तप इति सार्द्धम्। हे अनघ! यत्तपो मे साक्षाद्धृदयमन्तरङ्गा शक्तिः तथा "यस्य ज्ञानमयं तपः" इत्यादिश्रुतेर्ज्ञानचिदादिनाम्नः तपसोऽहं साक्षादात्मा स्वरूपमेव। किं बहुना ज्ञानात्मकेन तपसैवाहमिदं विश्वं पुनः पुनः सृजामि बिभर्मि पालयामि ग्रसामि संहरामि च। तङभाव आर्षः। अतः दुश्चरं तप एव मे वीर्यं शक्तिः॥ २२-२३॥

भगवन्निति। हे भगवन्! यद्यपि भवान् सर्वेषां गुहां गुहायां बुद्धाववस्थितः। सप्तम्यर्थे द्वितीया। अतः अध्यक्षः तद्द्रष्टा च अत एवाप्रतिरुद्धेन प्रकृष्टज्ञानेन सर्वेषां मम च चिकीर्षितं कर्तुमिष्टं वेद जानात्येव। न तत्कथनमावश्यकम्॥ २४॥ तथापीति। तथापि हे नाथ! नाथमानस्य आत्मनि सृष्टिकर्तृत्वं याचमानस्य तदर्थमुपतप्यमानस्येति वा। "नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु" मम नाथितं याचितं नाथय आशंसय देहि। अहम् अरूपिणः ते परं सूक्ष्ममवरं स्थूलमेते द्वे अपि रूपे यथा यथावत् जानायाम् एतन्मम नाथितम्॥ २५॥ यथेति द्वयम्। हे माधव! यथा ऊर्णनाभिः ऊर्णुते असहाय एव तन्तुभिरात्मानमाच्छादयति तन्तुसन्तानं करोति वा एवम् अमोघसंकल्पः त्वं यथा आत्ममायारूपेण योगेन आत्मना एवात्मानं ब्रह्मादिरूपं गृह्णन् अनुगृह्णन्निति स्वामिपादाः। नानापञ्चविंशतितत्त्वात्मिकाभिः शक्तिभिरुपबृंहितं विश्वं विसृजन् उत्पादयन् बिभ्रत् पालयन् विलुम्पन् संहरन् क्रीडसि तथा तथा तद्विषयां मनीषां यथार्थबुद्धिं मयि धेहि। अहं मायां तत्कार्यं च सर्वं जानीयामित्यर्थः॥ २६-२७॥ भगवदिति। भगवता त्वया शिक्षितमनुशिष्टं प्रजासर्गमहमतन्द्रितः अनलसः सन् करवाणि हि करिष्याम्येव। तथापि यत् यथा तवानुग्रहात् प्रजासर्गमहिमानः कुर्वन्नप्यहङ्कारादिभिर्न बध्येयं बद्धो न भवेयम्। कर्मकर्त्तरि तङभाव आर्षः। तथा ज्ञानं प्रार्थये॥ २८॥ यावदिति। भो ईश! ते त्वया लौकिकस्य सख्युः सखेवाहं कृतः करस्पर्शनादिना सत्कृतः प्रजाविसर्गरूपे ते परिकर्मणि सेवायां स्थितोऽपि अविक्लवः अव्याकुलः एव यावत् जनं विभजामि उत्तमादिभेदेन सृजामि तावत् अजः स्वतन्त्र इति मानिनो मे मदः मासमुन्नद्ध उद्रिक्तो न भवेत्। लुङ्। यद्वा। विसर्गरूपे ते परिकर्मणि स्थितोऽहं प्रजाः विभजामि तथा तासां भोजनं भोग्यं च विभजामि तावत् स्वाधिकारपर्यन्तमविक्लवो भवेयं समुन्नद्धो मदश्च माभूत्॥ २९॥ आदौ भगवान्वररूपामाशिषं ददाति—ज्ञानमिति। यत्परमं गुह्यं मे मम ज्ञानं शास्त्रोत्थं ज्ञानं विज्ञानमनुभवः तत्समन्वितं रहस्यं भक्तिः सुगोप्यमपि वक्ष्यामीत्यादिनिर्देशात् तत्सहितं तस्य ज्ञानस्याङ्गं साधनं च मया गदितम् उपदिष्टं त्वं सावधानतया गृहाण। प्रेमप्रधाना भागवतास्तु अत्र परावरे यथारूपे जानीयामित्यनेन तव अप्राकृतं रूपं प्राकृतं च रूपं कीदृशमिति यथात्ममायायोगेनेत्यनेन तव माया योगमाया च कीदृशीति यथा क्रीडसीति मायाधिकृतेषु योगमायाधिकृतेषु च लोकेषु तव केन प्रकारेण क्रीडेति भगवच्छिक्षितमहं करवाणि। ह्यतन्द्रित इत्यनेन मदभीष्टसिद्ध्यर्थं त्वच्छिक्षितं किं मम कर्त्तव्यमिति ब्रह्मणा क्रमेण पृष्टस्य वस्तुचतुष्टयस्य चतुःश्लोक्या क्रमेणैवोत्तरं दातुम् अथ परमभागवताय ब्रह्मणे श्रीभागवताख्यं शास्त्रमुपदेष्टुं तत्प्रतिपाद्यतमं वस्तुचतुष्टयं वा भगवान् प्रतिजानीते। ज्ञानमिति। एतदेव भगवद्दत्तोत्तरचतुष्टयात्मकमेव श्रीभागवतं शास्त्रं श्रीभगवत्प्रोक्तत्वेन प्रसिद्धमित्याहुः। न केवलं मद्रूपस्य ज्ञानमेव तुभ्यं ददाम्यपितु विज्ञानेनानुभवेन समन्वितं यत्तदपि किंच परमगुह्यं निर्विशेषब्रह्मज्ञानादपि श्रेष्ठत्वादिति भावः। किं च रहस्यं प्रेमभक्तिं च सुगोप्यमपि वक्ष्यामीत्यादिनिर्देशात्तस्य रहस्यत्वं ज्ञेयम्।

तस्य रहस्यस्याङ्गं साधनं भक्तियोगस्तं चेति त्वया अपृष्टमप्येतत्त्रयं कृपयैव वक्ष्यामि इति व्याचक्षते ॥३०॥ यावानिति। अहं यावान् यत्परिमाणकः यथाभावो यादृक् सत्तावान् यानि रूपाणि गुणाः कर्माणि च यस्य स यद्रूपगुणकर्मकः तथैव तत्त्वविज्ञानं ते तव मदनुग्रहादेवास्तु। प्रेमभक्तास्तु। किंच ज्ञानं शब्दं परोक्षं शुद्धचित्तानां संभवेदपि विज्ञानं यत् स्वरूपस्य याथार्थ्येन साक्षात्कारः स च मत्प्रेमभक्तिसाधनभक्तिभ्यां विना नैव भवतीति बोधयंस्तदर्थमाशिषं ददाति। यावान् यत्प्रमाणाकारः यादृशस्थौल्यकार्श्यदैर्घ्य-तुङ्गतावृत्ततायौचित्यसन्निवेशविशिष्टावयव इत्यर्थः। यथाभावो यादृशाभिप्रायः यानि रूपाणि श्यामत्वचतुर्भुजत्वद्विभुजत्वकृष्णत्व-रामत्वनृसिंहत्वादीनि गुणा भक्तवात्सल्याद्याः कर्माणि लक्ष्मीपरिग्रहगोवर्द्धनोद्धरणादीनि यस्य सः तथैवेति येन येन प्रकारेण मम परिमाणाभिप्रायरूपगुणकर्माण्याविर्भवन्ति तेनैव प्रकारेण तस्य विज्ञानं तेषां याथार्थ्यानुभवोऽस्तु इति व्याचक्रुः ॥ ३१ ॥

एवमाशिषं दत्त्वा चतुश्लोक्या उपदिशन्नादौ यावानित्यस्यार्थं स्फुटयति—अहमिति। अग्रे सृष्टेः पूर्वं अहमेव आसं यत् सत् स्थूलम् असत्सूक्ष्मं परं तयोः कारण प्रधानम् अन्यच्च किंचित् तन्नाभूत्। अन्यस्य प्रधानस्यान्तर्मुखतया तदा मय्येव लीनत्वात्। अहं च तदा आसमेव न चान्यकरवं पश्चात्सृष्टेरनन्तरमप्यहमेवाहमस्मि यदेतद्विश्वं तदप्यहमस्मि प्रलये योऽवशिष्येत सोऽप्यहमेव। अनेन चानाद्यनन्तत्वाद्द्वितीयत्वाच्च परिपूर्णोऽहमित्युक्तं भवति सोऽप्यहमेव। प्रेमभक्तास्तु अथ प्रकृतमनुसरन् परावरे यथारूपे जानीयामिति प्रश्नस्योत्तरमाह। अहमेवाग्रे सृष्टेः पूर्वमासम् इति तर्जन्या स्ववक्षः स्पृशति एवकारेण मद्विजातीयं प्राकृतं वस्तु किमपि नासीदिति लभ्यते। यः सम्प्रति त्वदग्रे प्रादुर्भूतः सोऽहमेवाग्रे महाप्रलयकालेऽप्यासमेव। अत्र वैकुण्ठ-तत्पार्षदादीनामपि तदुपाङ्गत्वादहंपदेनैव ग्रहणं राजाऽसौ प्रयातीतिवत्। अतस्तेषां च तद्वदेव स्थितिर्बोध्यते। एतेन स्वान्तरङ्ग-लीलानामपि तथैव करणं बोध्यते। जगद्व्यापारस्यैव निषेधात् ननु क्वचिन्निर्विशेषमेव ब्रह्मासीदिति श्रूयते तत्राह। सत्कार्यम् असत्कारणं ताभ्यां पर यद्ब्रह्म तन्न मत्तोऽन्यत् क्वचिदधिकारिणि शास्त्रे वा स्वरूपभूतनानाविशेषव्युत्पत्त्यसमर्थे सोऽयमहमेव निर्विशेषब्रह्मतया प्रतिभामीत्यर्थः। ननु सृष्टेरनन्तरं जगदेव ननु त्वमुपलभ्यसे तत्राह। पश्चात् सृष्टेरनन्तरमप्यहमेवास्म्येव वैकुण्ठेषु भगवदाद्याकारेण प्रपञ्चेष्वन्तर्यामिरूपेण यथासमयं मत्स्याद्यवताररूपेण च। ननु तर्हि पृथिव्यादिकं देवतिर्यगादिकं च त्वं न भवसीति तवापूर्णत्वप्रसक्तिरत्राह। यदेतच्च व्यष्टिसमष्टिविराण्मयं विश्वं तदप्यहमेव। मच्छक्तिजन्यत्वान्ममैव प्राकृतं रूपं परावरे यथारूपे जानीयामिति त्वया यदवरं रूपं पृष्टं तदेवेदं त्वं जानीहीत्यर्थः। तथा योऽवशिष्येत भवानेकः शिष्यते शेषसंज्ञ इत्याद्युक्तः परमेश्वरः सोऽहमस्मि। अत्राहमित्यस्य त्रिरावृत्त्या निर्द्धारसूचितत्वात् एतद्रूपगुणादिविशिष्टस्य मम त्रैकालिक-नित्यस्थित्या पररूपत्वं सृष्टिसंहारयोर्मध्य एव दृश्यमिदं मायिकप्रपञ्चजातमवरं रूपमिति परावररूपयोर्ज्ञानमुक्तम्। विज्ञानं तु पररूपस्य प्रथमस्यैव इति व्याचक्षते ॥ ३२ ॥ मायां निरूपयति—ऋते इति। अर्थमृतेऽपि वास्तवमर्थं विनापि यद्यतः किमपि आत्मनि अधिष्ठाने प्रतीयेत तथा यतः सदपि न प्रतीयेत आत्मनो मम मायां विद्यात्। माययैव हि आत्मनि असदपि कृशत्व-दुःखित्वादि प्रतीयते तदपि आनन्दादि न प्रतीयते। यथा आभासो द्विचन्द्रादिरविद्यमानोऽपि प्रतीयते तथेति अविद्यमानस्य प्रतीतौ दृष्टान्तः। यथा च तमो राहुः ग्रहमण्डले स्थितोऽपि न दृश्यते इति सतः प्रतीतौ दृष्टान्तः। प्रेमभक्तास्तु किंच जीवस्य परमात्मविज्ञानं प्रति माया खल्वंशेनानुकूला प्रतिकूला च भवति। विज्ञाते च परमात्मनि मयि योगमाययैवाधिकरोति सा त्वनुकूलै-वेति। तेद्वे अप्यत्र द्वितीयप्रश्नोत्तरत्वेन निरूपयति ऋतेऽर्थमिति। यद्यतः अर्थं सत्यं वस्तु विना न प्रतीयेत किं त्वर्थः सत्यं वस्त्वेव प्रतीयेत इत्यर्थः। तथा यतः अर्थं विना प्रतीयेत अर्थो न प्रतीयेत किं त्वनर्थः तत् ताम् आत्मनि स्वस्मिन् मुक्तो बद्धश्च जीव आत्मनो मम मायां क्रमेण विद्या अविद्येति वृत्तिद्वयां मायाख्यां शक्तिं विद्यात् जानीयात्। विद्यायां दृष्टान्तः। यथा भासो दीपादिप्रकाशः दीपादिप्रकाशात् यथा गृहे विद्यमानो घटपटादिरर्थ एव प्रतीयते ननु दीपानयनात् पूर्वं संभावितो घटपटाद्यभावस्तथा सर्पवृश्चिकादिरागन्तुकश्च भयकारणमनर्थः प्रतीयते। एवमेव विद्याया हेतोर्मुक्तेन जीवेन स्वस्मिन्नित्यसंबद्धं ज्ञानानन्दा-दिकमेव प्रतीयते न त्वविद्यादशायामिव तदभावः। नापि स्वस्मिन्नसंबद्धो देहदैहिकशोकमोहादिश्च प्रतीयते। अविद्यायां दृष्टान्तः। यथा तमोऽन्धकारः अन्धकाराद्यथा स्वगृहे विद्यमानो घटपटादिरर्थो न प्रतीयेत किंतु अविद्यमानोऽपि संभाव्यमानः सर्पचौरादिको भयकारणमनर्थः प्रतीयते। एतदविद्याया हेतोरेव बद्धेन जीवेन स्वस्मिन्नित्यसम्बन्धितया वर्त्तमानमपि ज्ञानानन्दादिकं न प्रतीयते किंतु स्वस्मिन्नसन्नपि स्वसंबन्धित्वेन वर्तमानो देहदैहिकशोकमोहादिरेव प्रतीयते। तेन कुसुमशृङ्गादीनामसत्यत्वेऽपि आकाशशशादीनां तत्संबन्धाभावादेव आकाशकुसुममलीकं शशशृङ्गमलीकमिति यथोच्यते तथैव देहादयो मिथ्याभूता इति शास्त्रेषूच्यते। जीवस्य मिथ्याभूतोऽपि देहसंबन्धः खल्वविद्यया कल्प्यते विद्यया लुप्यते इति विद्याविद्ययोर्दृष्टान्तावाभासतमसी इत्यत्र "छायातपौ यत्र न गृध्रपक्षौ" इत्यष्टमस्कन्ध एव प्रमाणं विज्ञेयम्। एवं जीवे सार्वदिकविद्यमानवस्त्वप्रत्यायनमविद्यमान-वस्तुप्रत्यायनं चेत्यविद्याया धर्मावावरणविक्षेपशब्दाभ्यामुच्यते। एवं च विद्यया त्वंपदार्थस्य जीवात्मनोऽनुभवो भवति। ननु तत्पदार्थस्य परमात्मनः तस्य निर्गुणत्वान्निर्गुणया भक्त्यैवापरोक्षानुभवः संभवेत्। "भक्त्याऽहमेकया ग्राह्यः" इति भगवदुक्तेः। किंच "कैवल्यं सात्त्विकं ज्ञानम्" इति भगवदुक्तेर्देहादिव्यतिरिक्तात्मज्ञानरूपेयं विद्या तस्याः सत्त्वगुणत्वादनया गुणातीतस्य

परमात्मनो नैवानुभवः प्रत्युतास्या अप्यपाय एव। यदुक्तम् "द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः। श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि। ये नेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः। भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते।" इति न। ननु तर्हि मुक्तजीवेन परमात्मनोऽपरोक्षानुभवार्थं भक्तिः कुतो लभ्यते। उच्यते। ज्ञानाधिकारिणः साङ्ख्ययोगतपआदिभिर्भक्तिमिश्रैरेव जनितया विद्यया अविद्यानिवर्तिकया प्रथमं त्वंपदार्थानुभवा ततस्तस्याविद्यातो विमुक्तस्य निरिन्धनाग्निन्यायेन विद्याया अप्युपरमतारतम्येन पूर्वसिद्धभक्तिचन्द्रकलायास्तदुपरागविच्युतायास्तदुद्गमतारतम्यं तयैव भवत्या पुनः पुनरभ्यस्या तत्पदार्थस्य परमात्मनोऽनुभवतारतम्यम्। तदुक्तं भगवता गीतासु—"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्"। इति। परां पौर्वकालिकगुणीभावराहित्यात् श्रेष्ठां केवलां वा ततश्च "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। इत्युक्तेर्जातिप्रमाणाभ्यामल्पीयस्या तया भक्त्या निर्विशेषब्रह्मण एवानुभवः न त्वनन्तचिद्विशेषब्रह्मणो भगवतः यथा अल्पतेजस्विचक्षुष्केण जनेन मणिमयी मूर्तिः सामान्यतस्तेजोमय्येव दृश्यते न तु मुखनासिकानेत्रकर्णादिशेषमयी ततश्च विद्यायाः सामस्त्येनैवोपरामे सत्युद्भूतनैर्गुण्यस्य तस्य तयैव भक्त्या ब्रह्मानुभवस्यापि पूर्णत्वम्। एतदेव निर्वाणशब्दवाच्यं जीवब्रह्मैक्यम्। यदुक्तं तत्रैव "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।" इति। या तु चिच्छक्तिवृत्तीनां सारभूता कृपाविलासरूपा परमोत्तमा शुद्धा भक्तिर्जातिप्रमाणाभ्यामत्यधिका सा प्रबला परमस्वतन्त्रा गुणदोषादिकमप्यगणयन्ती बद्धेऽपि जीवे राक्षसपुलिन्दपुल्कसादौ दुराचारेऽपि यदृच्छयैवोदयते। विप्रे संन्यासिनि मुक्तेऽपि नोदयते तयैवाविद्यापर्य्यन्तसमस्तक्लेशध्वंसः। यदुक्तम् "जरत्याशु या कोशं निगीर्णमनलो यथा।" इति। तथैवानन्तचिद्विशेषस्य भगवतोऽप्यपरोक्षानुभवो भवेत्। यथा बहुतरतेजस्विचक्षुष्केण जनेन सामान्यतस्तेजोमयीविशेषतश्च मुखनासिकानेत्रकर्णादिसौन्दर्यमयी च मूर्तिः तन्त्रेणैव दृश्यन्ते इति। तदेवं भक्तिर्द्विविधा निर्गुणा गुणमयी च। तत्राद्यया पाकदशायां प्रेमभक्तिसंज्ञया भगवद्वशीकारः सच्चिदानन्दमयभगवद्रूपगुणलीलामाधुर्यानुभवश्च। द्वितीयया सात्त्विक्या सत्त्वगुणाद्विच्युतयैव निर्विशेषब्रह्मसुखानुभवमात्रमिति। तस्माद् ब्रह्मसुखानुभवदशातः पूर्वास्वेव दशासु जीवेषु मायाया अधिकार इति सिद्धं सत्यमेव प्रतीतं स्याद्यतोऽसत्यं तथा यतः तद्विद्यादात्मनो मायां यथा भासो यथा तमः। इत्यनुक्तेरितोऽन्यस्मिन्नर्थेऽप्याशय ईक्ष्यते। ऋतेऽर्थशब्दौ परिवृत्य सहावर्तितौ यतः स चार्थो यथा ब्रह्मानुभववत्स्वपि जनेषु नानाविधेषु या स्पष्टम् अधिकरोति भगवदिच्छावशात्तदीयस्वरूपगुणलीलाप्रकाशानावरणधुरन्धरा स्वरूपभूताशक्तिस्तस्या योगमायाया अपि लक्षणं तन्त्रेणैवाह ऋते इति। आत्मनि परमात्मनि मयि ऋते ज्ञाते सति अर्तेर्गत्यर्थत्वेन ज्ञानार्थत्वात् साक्षाद‌नुभूते सतीत्यर्थः। यदिति "इण् गतौ" शत्रन्तं तत्पदेनैव यत्पदस्याक्षेपात्। यतः अर्थं यत् प्रयोजनं प्राप्नुवद्वस्तु अप्राकृतं प्राकृतं च प्रतीयेत यया प्रकाशितं सत्प्रयोजनं वस्तु परमात्मसाक्षात्कारवता जनेन साक्षादनुभूयेतेत्यर्थः। यतः सकाशात् न प्रतीयेत च यया आवृतं तदेव वा समयान्तरे वा न प्रतीयेतेत्यर्थः। ताम् आत्मनो भगवतो मम मायां योगमायाख्यामन्तरङ्गां शक्तिं विद्यात् जानीयात्। मायया प्रयोजनं विनैवाव्रियते। योगमायया तु प्रयोजनमुद्दिश्यैवेति विवेचनीयम्। "यथा भासो यथा तमः" इति आभासेन दीपादिना प्रकाशितं घटपटादिकं यथा प्रतीयेत तमसा आवृतं तन्नाभूयेत च। तथैव सा मदिच्छावशादाभासतमोधर्मवती यागमायेत्यर्थः। उदाहरणं तु यथा ऐश्वर्यदर्शनेऽपि प्रेमसङ्कोचाभावज्ञापनार्थं भगवत्कुक्षौ यया प्रकाशितं गोकुलं यशोदाकृष्णादिस्वरूपं च यया मोहिता श्रीयशोदा साक्षादनुबभूव। क्षणान्तरे च यया आवरणान्नानुबभूव। यथा चैश्वर्यानुभूत्या प्रेमसङ्कोचज्ञापनार्थं यया प्रकाशितं विश्वरूपं परमात्मस्वरूपं चार्जुनः साक्षादनुबभूव तत्रैव वर्तमानमपि कृष्णस्वरूपं ययाऽऽवरणान्नानुबभूव। समयान्तरे च यया छादितं विश्वरूपादिकं च नानुबभूव द्विभुजश्रीकृष्णमेवानुबभूव। अत्रैकदैव एकस्य स्वरूपस्य प्रकाशनमन्यस्यावरणमिति पूर्वतो विशेषः। यथा च एकदैव ब्रह्मणो मञ्जुमहिमदर्शने दामबन्धनलीलायां श्रुतदेवबहुलाश्वातिथ्य रुक्मिणीसत्यभामादिगृहेषु युगपत्स्थितौ सा खलु योगमायैव नतु माया तया मोहितानामपि तेषां परमात्मसाक्षात्कारदर्शनात्। स च परमात्मसाक्षात्कारो भक्तिमिश्रज्ञानवतामविद्याविद्ययोरुपरामे सति तथैवावतारसमये कृष्णं प्रीत्या पश्यतां तत्कृपाविषयीभूतत्वादप्रेमवतामपि साक्षात्कारः। अन्यदा तु प्रेमवतामेव कृष्णरामादिसाक्षात्कारो भागवतमतेनोच्यते। तेषु योगमायैवाधिकरोति नतु माया। कृष्णं तदिच्छया पश्यतामपि कंसादीनां द्वेषलक्षणान्तःकरणदोषादेव न परमात्मसाक्षात्कारो यथा मत्स्यण्डिकां भुञ्जानानामपि पित्तरूपितरसनानां न मत्स्यण्डिकास्वादानुभवस्तेषु मायैवाधिकरोति नतु योगमाया। मायाशक्तिश्च योगमायोत्था तस्या विभूतिरेव। यदुक्तं नारदपञ्चरात्रे श्रुतिविद्यासम्वादे—"अस्या आवरिका शक्तिर्महामायाखिलेश्वरी। यया मुग्धं जगत्सर्वं सर्वे देहाभिमानिनः।" इति भगवता स्वस्वरूपत्वेनाभिमन्यमाना स्वस्वरूपात् पृथग्भूता सती मायाशक्तिर्जडैव। यथा सर्पस्य स्वरूपभूतापि त्वक् तेन त्यक्ता चेत्ततः पृथग्भूतं कञ्चुकं जडं स्यात्। तथा चोक्तम् "श्रुतिभिस्त्वमुत जहासि तामहिरिव त्वचमात्तभगः" इति सा च माया त्रिविधा, प्रधानमविद्या विद्या च। प्रधानेनोपाधयः सृज्यन्ते ते च सत्या एव अविद्यया जीवेषु तदध्यासः सृष्टः स चासत्य एव। विद्यया तदध्यासध्वंस इति तिसृणां शक्तीनां कार्यं तत्तन्मयं जगदिदमंशेन सत्यमंशेनासत्यम्। तथा जीवानां नित्यत्वात् भगवन्निकेतनादिभक्त्युपकरणानां निर्गुणत्वाच्चांशेन नित्यमपि वादिभिर्यथास्वमतं नानारूपतया निरूपितम्। "कार्यं प्राधानिकं सत्यं कार्यमाविद्यकं मृषा। नित्यं

तद्भक्तिसंबद्धमिदं तत्त्रितयात्मकम्। प्राधानिकाः स्युर्देहास्तद्धर्मा आविद्यकाः पुनः। जीवेषु तत्तत्सम्बन्धो भक्तिश्चेन्निर्गुणाश्च ते। चिज्जीवमाया नित्याः स्युस्तिस्रः कृष्णस्य शक्तयः। तद्वृत्तयश्च ताभिः स भात्येकः परमेश्वरः। कार्यकारणयोरैक्यात् शक्तिशक्तिमतोरपि। एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन। भक्तानामेव सिद्धान्तश्चतुश्श्लोकीयमीरिता। शीलिता भगवद्भक्तैस्तैरेव न किलापरैः।" इति व्याचक्षते॥ ३३॥

यथा भाव इत्येतत्स्फुटयति—यथेति। यथा महान्ति भूतानि उच्चावचेषु स्थूलास्थूलेषु भूतेषु भूतविकारेषु अनु सृष्टेरनन्तरं प्रविष्टानि तेषूपलभ्यमानत्वात्। अप्रविष्टानि च प्रागेव कारणतया तेषु विद्यमानत्वात् पृथगपि विद्यमानत्वाच्च। तथा तेषु भूतभौतिकेषु अहं प्रविष्टः न च तेष्वहं प्रविष्टः एवंभूता मम सत्ता। प्रेमभक्तास्तु एवं मायां च तन्त्रेणैव लक्षयित्वा ताभ्यामधिकृतेषु सगुणनिर्गुणलोकेषु ब्रह्मणा पृष्टं स्वक्रीडाप्रकारं तन्त्रेणैवाह। यथा महान्ति भूतान्याकाशादीनि भूतेषु देवमनुष्यतिर्यगादिषु अनुप्रविष्टानि तेषूपलभ्यमानत्वात् अप्रविष्टानि च पृथग्विद्यमानत्वात् तथा तेषु भूतभौतिकेष्वहं प्रविष्टः सन्नपि पृथक् शुद्धसत्त्वात्मकस्वधामनि वर्त्तमानत्वादप्रविष्टश्चास्मि किंतु महाभूतानामचेतनत्वादेव भूतेषु प्रवेश आसङ्गरहितः। मम तु चेतनत्वेऽपि आकाशवदसौ स्वगृहेष्वलिप्त एव वसतीतिवत् तेषु सर्वेषु प्रवेशनियमनपालनादीत्यासङ्गरहितानीत्येवंभूता भूतेषु मायिकेष्वासङ्गरहितैव क्रीडेति भावः। तथा तेषु प्रसिद्धेषु नतेषु प्रणतभक्तजनेषु प्रविष्टोऽन्तःकरणेषु दर्शनं दातुं तथा अप्रविष्टः बहिः स्थितश्च तेषां नयनेषु स्वसौन्दर्यमर्पयितुं नासासु स्वसौरभ्यं प्रवेशयितुं तैः सहोक्तिप्रत्युक्ती कुर्वंस्तेषां कर्णेषु स्वसौस्वर्यामृतं पूरयितुं स्पर्शालिङ्गनादिदानैस्तेषामङ्गेषु स्वीयसौकुमार्यमाधुर्यादिकं चानुभावयितुमिति तेषु गुणातीतभक्तेष्वन्तर्बहिर्मया त्यक्तुमशक्येष्वासङ्गसहितैव मम क्रीडेति भावः। इति व्याचक्षते॥ ३४॥

साधनमाह—एतावदिति। आत्मनस्तत्त्वं जिज्ञासुना एतावदेव जिज्ञास्यं विचार्यम्। अन्वयः कार्येषु कारणत्वेनानुवृत्तिः कारणावस्थायां च तेभ्यो व्यतिरेकः। तथा जाग्रदाद्यवस्थासु तत्तत्साक्षितयाऽन्वयः व्यतिरेकश्च। समाध्यादौ एवमन्वयव्यतिरेकाभ्यां यत्सर्वत्र सर्वदा च स्यात्तदेवात्मेति। प्रेमभक्तास्तु अथ भगवच्छिक्षितमहं करवाणि ह्यतन्द्रित इति ब्रह्मणा प्रार्थितं स्वप्राप्तिसाधनम् अतिरहस्यत्वाद्बहिरङ्गानामगम्यतयैवाह—एतावदेवेति। अत्र बहुतरशास्त्रानुसन्धानमपि नापेक्षितव्यमिति भावः। तत्त्वजिज्ञासुना आत्मनः स्वस्य श्रेयःसाधनं तत्त्वं ज्ञातुमिच्छुना जनेन जिज्ञास्यं श्रीगुरुचरणेभ्यः शिक्षणीयमित्यर्थः। त्वया तु मदनुग्रहादवगम्यते एवेति भावः। किं तत् यत् श्रेयःसाधनेषु कर्मज्ञानयोगभक्त्यादिषु मध्ये अन्वयव्यतिरेकाभ्यां स्यात् सिद्ध्यति स्थिरीभवतीत्यर्थः। तत्र तावत् स्वर्गापवर्गादेः कर्मज्ञानयोगादिभिः केवलैरसिद्धेः भक्त्या तैर्विनापि सिद्धेः कर्मज्ञानयोगादयोऽन्वयव्यतिरेकाभ्यां नैव साधनानि स्युः। भक्त्या तु केवलयैव सर्वाणि श्रेयांसि सिद्ध्यन्ति तया विना तु नैव सिद्ध्यन्ति इत्यन्वयव्यतिरेकाभ्यां भक्तिरेव सर्वश्रेयःसाधनत्वेन स्थिरीभवति। तथा हि अन्वयेन यथा। "अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्।" इति भक्तियोगस्य केवलस्यैव तीव्रत्वं निरभ्रसूर्यस्येवेति ज्ञेयम्। यथा वा "यत्कर्मभिर्यत्तपसा" इत्यादिव्यतिरेकेण। यथा "मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह। चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्। य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्। न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः।" इति। यथा वा 'तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः। क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः।' इति। तत्र देशकालविशेषाभावमाह—सर्वत्र सर्वदेशेषु सर्वाधिकारिषु च सर्वदा सर्वेष्वेव कालेषु यत्स्यात् तथा हि 'शुचावेव देशेषु शुचिः तत् कालजीवी कर्म कुर्यात् शुद्धान्तःकरणात् विज्ञानम्। लभेत शुचौ देशे प्रतिष्ठाप्य सुखमासनमात्मनः। योगी योगं युञ्जीत' इति कर्मज्ञानादीनां न सार्वत्रिकता। तथा यत् कर्म तत् संन्यासभोगप्राप्त्यवधिः योगः सिद्ध्यवधिः साङ्ख्यमात्मज्ञानावधि ज्ञानं मोक्षावधीति नापि सार्वदिकता। भक्तेस्तु सार्वत्रिकतासार्वदिकते अतिप्रसिद्धे एव। "न देशनियमस्तत्र न कालनियमस्तथा। नोच्छिष्टादौ निषेधोऽस्ति श्रीहरेर्नाम्नि लुब्धक"। इति। "तस्मात् सर्वात्मना राजन्हरिः सर्वत्र सर्वदा श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम्"। इति। कर्मिज्ञानिप्रभृतिषु सर्वेष्वधिकारिषु भक्तेर्व्याप्तिरुक्तैव। किरातहूणान्ध्रपुलिन्दपुल्कसा इत्यादिना जातिचाण्डालकर्मचाण्डालादिष्वपि दृष्टा। तथा सर्वावस्थास्वपि गर्भे प्रह्लादादेर्बाल्ये ध्रुवादेः यौवनेऽम्बरीषादेः वार्द्धके ययात्यादेः मरणे अजामिलादेः नारकितायामपि मुच्येत यन्नाम्न्युदिते नारकोऽपीत्युक्तेः। "यथा यथा हरेर्नाम कीर्तयन्ति च नारकाः। तथा तथा हरौ भक्तिमुद्वहन्तो दिवं ययुः"। इति नृसिंहपुराणोक्तेश्चेति भक्तेरेव साधनत्वं निर्धारितम्। अथ प्रेमभक्तिरूपं रहस्यमपि तन्त्रेणैवाह—एतावदिति। तत्त्वजिज्ञासुना पुंसा एतावदेव श्रेयःसु स्वर्गापवर्गप्रेमसु मध्ये जिज्ञास्यं किं तत् यत् श्रेयः आत्मनः स्वस्यैव अन्वयव्यतिरेकाभ्यां सर्वत्र सर्वदा स्यात् तत्र न तावत्स्वर्गापवर्गौ स्वान्वयव्यतिरेकाभ्यां सिद्ध्यतः। प्रेमा तु स्वस्यैवान्वयव्यतिरेकाभ्यां सिद्ध्यति। प्रेम्णोऽपि भक्तिशब्दवाच्यत्वात् साधनभक्त्यैव साध्यभक्तेः प्रेम्णः सिद्धिदर्शनात्प्रेम्णः स्वेनैव सिद्धिः। यदुक्तं "भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम्"। इत्यतो रहस्यतदङ्गशब्दाभ्यामुच्यमाने प्रेमभक्तिसाधनभक्ती तन्त्रेणैवोक्ते।

ततश्च प्रेमभक्तिसाधनत्वेनैव भक्तिः कर्तव्या नतु स्वर्गापवर्गादिसाधनत्वेनेति भगवतः शिक्षा व्यञ्जिता। भगवच्छिक्षितमहं करवाणि इति ब्रह्मणा प्रार्थितत्वात् शुद्धसाधनभक्तिसिद्धया प्रेमभक्त्यैव मद्रूपगुणादिमाधुर्य्यरसानुभवस्तस्य प्रेमभक्त्यनुभावरूपत्वादिति विज्ञानं स्वत एव लब्धमतो रहस्यतदङ्गविज्ञानानि श्लोकेनैवोक्तानि। किंच "रसो वै सः" इत्यनन्तरं "सैषानन्दस्य मीमांसा भवति" इति श्रुतेः। सर्वश्रेयोऽवधिरूपो रस एव रङ्गभूमौ मज्ज्ञानामशनिरित्याद्याकार एव दर्शितस्तस्य च विज्ञानमत्रैव श्लोके तन्त्रेणैवोक्तम्। यथा जिज्ञास्येषु मध्ये एतावदेव जिज्ञास्यमनुबुभूषणीयं किं तत् अन्वयव्यतिरेकाभ्यां योगायोगाभ्यां संभोग-विप्रलम्भाभ्यां यत् स्यात् सर्वत्र सर्वब्रह्माण्डवर्तिनि श्रीवृन्दावनादौ दाससखिगुरुप्रेयसीषु सर्वदा नित्यमेव महाप्रलयसमयेऽपीति दास्यसख्यवात्सल्यश्रृङ्गाररसानाम् आस्वादनं व्यञ्जितम्। एवमतिरहस्यप्रेमभक्तिरसव्यञ्जकः श्लोकोऽयं ज्ञानरूपार्थान्तरेण भगवतैवाच्छादितश्चिन्तामणिरिव कनकसम्पुटेन वहिरङ्गजनशक्योद्घाटनेन तथा च श्रुतिः "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति। तच्च ज्ञानरूपमर्थान्तरं यथात्मनस्तत्त्वजिज्ञासुना एतावदेव जिज्ञास्यं किं तत् यत् अन्वयव्यतिरेकाभ्यां सर्वत्र सर्वदा स्यात्तदेवात्मा। तथा ह्यात्मनः कारणत्वेन जगत्यन्वयः जगतस्त्वात्मनि व्यतिरेकः। यथा च जाग्रदाद्यवस्थासु तत्साक्षितया आत्मनोऽन्वयः आत्मनि तु जाग्रदाद्यवस्थाव्यतिरेक इति व्याचक्षते॥ ३५॥

नेहमानः प्रजा स्वर्गमित्यादि प्रार्थितं प्रसादीकरोति—एतदिति। परमेण समाधिना चित्तैकाग्र्येणैतन्मतं सम्यगनुतिष्ठ निरन्तरमनुचिन्तय एवं चेत् कल्पे ये विकल्पा विविधाः सृष्टयः अवान्तरकल्पा वा तेषु भवान्कर्हिचिदपि न विमुह्यति कर्तृत्वाभिनिवेशं न यास्यति। श्रीकृष्णावतारे ब्रह्ममोहनं तु तत्कृपाविलसितमेवेति ज्ञेयम्॥ ३६॥ संप्रदिश्येति। अजनो हरिः जनानां परमेष्ठिनं ब्रह्माणं प्रत्येवं संप्रदिश्य तस्य ब्रह्मणः पश्यत एव सतः तद् आत्मनः रूपं न्यरुणत् तिरोभावयामास॥ ३७॥ अन्तर्हितेति। अन्तर्हितस्तिरोधापित इन्द्रियार्थः चक्षुरिन्द्रियविषयः स्वरूपं येन तस्मै हरये विहितोऽञ्जलिर्येन सर्वभूतमयः समष्टिरूपः स ब्रह्मा पूर्ववत् पूर्वकल्पवदिदं विश्वं ससर्ज॥ ३८॥ तदनन्तरं पूर्वोक्तो ब्रह्मनारदसंवादः प्रवृत्तः इत्याह—प्रजापतिरिति। एकदा धर्म्मपतिः प्रजापतिः ब्रह्मा प्रजानां भद्रं कल्याणमन्विच्छन् सन् प्रजा यमनियमाननुतिष्ठत्विति या स्वार्थकाम्यतया नियमान् शौचादीन् यमान् अहिंसादींश्चातिष्ठत् अनुष्ठितवान्॥ ३९॥ तमिति द्वयम्। हे राजन्! रिक्थादानां पुत्राणां मध्ये प्रियतमः अनुव्रतः अनुवर्ती महामतिः महाभागवतश्च नारदः मायाया ईशस्य विष्णोर्मायां विविदिषन् ज्ञातुमिच्छन् शुश्रूषमाणः तं नियमादीननुतिष्ठन्तं पितरं ब्रह्माणं शीलेन प्रश्रयेण दमेन च पर्यतोषयत्॥ ४०–४१॥ तुष्टमिति। लोकानां प्रपितामहं स्वपितरं ब्रह्माणं तुष्टं निशम्य ज्ञात्वा देवर्षिर्नारदो भवान्मां प्रति यदनुपृच्छति तदेव परिपप्रच्छ॥ ४२॥ तस्मा इति। तस्मै पृष्टवते पुत्राय नारदाय प्रीतः सन् भूतकृत् ब्रह्मा इदं यत् संक्षेपेण चतुःश्लोक्या भगवता प्रोक्तं तत् दशलक्षणानि लक्षणीया अर्था यस्मिंस्तद्विस्तृतं भागवतं नाम पुराणं प्राह स्म॥ ४३॥ नारद इति। हे नृप! स च नारदः सरस्वत्यास्तटे परमं ब्रह्म ध्यायते अमिततेजसे व्यासाय मुनये प्राह स्म। व्यासादहमधीतवानिति प्रागुक्तम्॥ ४४॥ यदिति। पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिता इत्यादिना वैराजात्पुरुषाद्यथेदं विश्वमासीदिति यदुत यदपि त्वयाऽहं पृष्टस्तद्यथावदुपाख्यास्यामि अन्यांश्च कृत्स्नशस्तव प्रश्नान्भागवतव्याख्यानेनैवोपाख्यास्यामि। एवं नारायणो ब्रह्मणे ब्रह्मा नारदाय नारदो व्यासाय व्यासो मह्यमहं तुभ्यमिति षट्संवादीयं भागवतम्॥ ४५॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो द्वितीयस्याध्याये नवमे व्यधात्॥

इति श्रीमद्भागवते द्वितीये स्कन्धेऽन्वितार्थप्रकाशिकायां नवमोऽध्यायः॥ ९॥

—:❀:—

# अथ दशमोऽध्यायः

श्रीशुक उवाच

अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥ १ ॥

अन्वये सर्गविसर्गादिदशानां लक्षणं ततः। संक्षेपाल्लोकसृष्टिश्च तत्र श्लोका द्विमार्गणाः (५२)।

अनुष्टुभोऽपि तावन्त उवाचेति त्रयं तथा ॥ १० ॥

प्राक्सूचितानि दश लक्षणान्याह अत्रेति। अत्र श्रीभागवते सर्गविसर्गादयो दशार्था निरूप्यन्ते। मन्वन्तराणि च ईशकथाश्चेति द्वन्द्वः ॥ १ ॥ न चार्थभेदाच्छास्त्रभेद इत्याह—दशमस्येति। अञ्जसा सुखेन दशमस्याश्रयस्य परब्रह्मणो विशुद्ध्यर्थं विविक्तप्रतिपत्त्यर्थं नवानां सर्गादीनां लक्षणमिह पुराणे महात्मनो विवेकिनः श्रुतेन अर्थेन च वर्णयन्ति। तत्र स्तुत्यादिस्थानेषु श्रवणेन कण्ठतः साक्षादेव तद्वाचकशब्देनाश्रयं वर्णयन्ति। तत्तदाख्यानेषु तु अर्थेन तात्पर्यवृत्त्या वर्णयन्ति। अत आश्रय एवास्य ग्रन्थस्य विषयः। सर्गादिनवकं चात्रेश्वरहेतुकं जीवविषयकमेव ॥ २ ॥ सर्गादीनां लक्षणान्याह—भूतेति। ब्रह्मणः परमात्मनः प्रयोजकात् गुणानां सत्त्वरजस्तमसां वैषम्यापरिणामाद्धेतोर्यद्भूतमात्रेन्द्रियधियां जन्मस्वरूपतो विराड्रूपेण च उत्पत्तिः स सर्ग उदाहृतः। तत्र भूतान्याकाशादीनि पञ्चमात्राणि शब्दादीनि पञ्च इन्द्रियाणि चक्षुरादीनि दश। धीशब्देन महदहङ्कारौ अन्तःकरणमप्यत्रैव। पुरुषो वैराजो ब्रह्मा तत्कृतः पौरुषः चराचरसर्गो विसर्गः स्मृत इत्यर्थः ॥ ३ ॥ स्थितिरिति। वैकुण्ठस्य भगवतो विजयः सृष्टानां तत्तन्मर्यादापालनेनोत्कर्षः ब्रह्मादिदेवापेक्षयाऽऽधिक्यम्। वैकुण्ठकर्तृको जीवदुःखाभिभवो वा "जि अभिभवे"। स्थितिः स्थानं स्वभक्तेषु तस्यानुग्रहः पोषणं सतां तदनुगृहीतानां मन्वन्तराधिपतीनां धर्मो मन्वन्तराणि छन्दोनुरोधात् ऊतेः प्राङ्निर्देशः कर्मणां वासनाः "वेञ् तन्तुसंताने" ऊयन्ते कर्मभिः संतन्यन्त इत्यूतयः ॥ ४ ॥ अवतारेति। हरेरवतारानुचरितमस्य हरेरनुवर्तिनां पुंसां च नानाख्यानोपबृंहिताः कथा ईशकथाः प्रोक्ताः ॥ ५ ॥ निरोध इति। अस्यात्मनो जीवस्य हरेर्योगनिद्रामनु पश्चात् शक्तिभिरिन्द्रियाद्युपाधिभिः सह शयनं भगवति लयः निरोधः भगवदेकपरतया संसारविस्मृतिश्चापि निरोधो ज्ञेयः। निरोधनिरूपके दशमस्कन्धे तथैव प्रतीतेरित्यप्याहुः। अन्यथा रूपम् अविद्ययाऽध्यस्तं कर्तृत्वादि हित्वा स्वरूपेण ब्रह्मतया व्यवस्थितिर्मुक्तिः। अत्रेदं बोध्यम्। सर्गादिनवसु आदौ भूतमात्रेन्द्रियादीनां स्वरूपेण विराड्रूपेण च जन्म ततो जीवानां भुक्तिमुक्तिसाधनबुद्धीन्द्रियादिप्राप्तिरूपा सृष्टिः तदनन्तरं जीवानां स्थितिः स्थितावेव केषुचिज्जीवेषु साधकभक्तेषु दैवाद्विकर्मपरेष्वपि तस्यानुग्रहः पोषणं स्थितावेवोत्कृष्टापकृष्टजीवानां स्वभावो वासनानुसारी ऊतावुक्तः। स्थितावेव मन्वन्तराधिपत्यादीनां केषांचित्कर्मिणां धर्मः स्थितावेव केषांचिद्भक्तानां श्रवणकीर्तनादीनि भक्त्यङ्गानि ईशकथायामिति स्थितावेव पञ्च लक्षणानि। स्थित्यनन्तरं महाप्रलये जीवानां परमेश्वरे लयो निरोधस्ततोऽन्यथारूपं हित्वा स्वरूपेणावस्थितिर्मुक्तिः ॥ ६ ॥ सर्गादिनवलक्षणैरेव तद्विषयान् जीवान् लक्षयित्वाऽऽश्रयलक्षणेन परमेश्वरं लक्षयति—आभास इति। यतः आभासः सृष्टिः चकारात् स्थितिपोषणादयः निरोधो लयश्च भवति चान्मुक्तिश्च। यतश्च अध्यवसीयते प्रकाशते यश्च परं ब्रह्मेति परमात्मा इति च प्रसिद्धः स आश्रयः शब्द्यते कथ्यते ॥ ७ ॥

य इति। योऽयमाध्यात्मिकः पुरुषः चक्षुरादिकरणाभिमानी द्रष्टा जीवः स एवासावाधिदैविकः पुरुषः सूर्यादिः अत्र पुरुषस्य जीवस्योपाधित्वात् इन्द्रियादौ पुरुषशब्दप्रयोगः "स वा एष पुरुषोऽन्नरसमयः" इत्यादिश्रुतेः। अतोऽयं वाक्यार्थः। यदिदमध्यात्मं चक्षुरादिकरणं सर्वत्र विनयादित्वात्स्वार्थे ठक्। संज्ञापूर्वकत्वाद्वृद्ध्यभावः। स एवासावाधिदैविकश्चक्षुराद्यधिष्ठाता सूर्यादिः पुरुषः स्मृतः। इन्द्रियतदधिष्ठानयोरपि सूर्याद्यंशत्वेनैकरूप्यात्। यस्तु तत्रैकस्मिन्नेवोभयोः आध्यात्मिकाधिदैवरूपयोर्विच्छेदो यस्मात्तथाविधश्चक्षुर्गोलकाद्युपलक्षितो दृश्यो देहः स ह्याधिभौतिकः पुरुषः स्मृतः। अभिन्नयोरपि करणतदधिष्ठात्रोर्गोलक एव भेदो बुध्यते। अन्यत्र करणस्थित्यभावेन भेदबोधाभावात्। यद्वा। उभयः गोलकरूपः शब्दस्पर्शादिरूपश्च विच्छेदो यस्य स ह्याधिभौतिकः पुरुषः स्मृतः। एवं च इन्द्रियमाध्यात्मिकं देवता आधिदैविकं गोलकमाधिभौतिकं विषयोऽप्याधिभौतिक इति ॥ ८ ॥ एकमेकतराभाव इत्येतेषामन्योन्यसापेक्षसिद्धत्वे नानात्मत्वं सूचयति। तथा हि दृश्यं विना

तत्प्रतीत्यनुमेयं करणं न सिद्धयति नापि द्रष्टा न च तद्विना करणप्रवृत्त्यनुमेयस्तदधिष्ठाता सूर्यादिः न च तं विना करणं प्रवर्तते न च तद्विना दृश्यमित्येवं यदैकतरस्याभाव एकमपि नोपलभामहे न पश्यामस्तत्र तदा तत् आध्यात्मिकादित्रितयमालोचनात्मकेन प्रत्ययेन यो वेद साक्षितया पश्यति स आत्मैव स्वाश्रयाश्रयः स्वाश्रयः अनन्याश्रयः स चासावन्येषामाश्रयश्चेति अयमेवार्थः एकादशे। "दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिद्धयति यः स्वतः स्वे।" इत्यादिना वक्ष्यते। अन्येषां सिद्धिः अन्यसापेक्षा आत्मनः सिद्धिर्नान्यापेक्षा। अत एव व्यभिचारित्वात्तेषां मायामयत्वम्। अत एव पुरुषावयवैर्लोकाः लोकैरमुष्यावयवा इति विरोधोऽपि परिहृतः॥ ९॥ यदुताहं त्वया पृष्ट इति प्रतिज्ञातमर्थं वक्तुं कथां प्रस्तौति—पुरुष इति। स पुरुषो वैराजः अण्डं विनिर्भिद्य पृथक्कृत्य यदा आदौ सृष्टेः पूर्वं विनिर्गतः पृथक् स्थितस्तदा आत्मनः स्वस्य अयनं स्थानमन्विच्छन् विमृशन् यतः स्वयं शुचिः शुद्धः अतः शुचीः फेनतरङ्गादिराहित्येन शुद्धाः अपो गर्भोदकसंज्ञाः अस्राक्षीत् ससर्ज॥ १०॥ तास्विति। स पुरुषः स्वसृष्टासु तास्वप्सु सहस्रं परिवत्सरान् संवत्सरान् अवात्सीत् उवास। तेनाप्सु वासेन नारायण इति नामाभूत्। यत् यस्मात् पुरुषो नरस्तस्मादुद्भवो यासां ता नाराः आपः अयनमस्येति नारायण इत्यर्थः। "आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥" इत्युक्तेः॥ ११॥

द्रव्यमिति। द्रव्यमुपादानं महदादिपृथिव्यन्तो भूतवर्गः कर्म जीवादृष्टं कालो गुणवैषम्यहेतुस्वभावः परिणामहेतुः जीवो भोक्ता चकारादन्यदपि यत्किंचित् एते सर्वे यस्यानुग्रहतः सन्ति सत्तां लभन्ते कार्यक्षमाश्च भवन्ति। यस्योपेक्षया च न सन्ति सत्तामेव न लभन्ते कुतः कार्यक्षमताम्। स नारायणः॥ १२॥ एक इति युग्मम्। प्रभुर्देवः एकः अभिभक्तनामरूपः आत्मनो देवमनुष्यादिरूपेण नानात्वमन्विच्छन् योगरूपात्तल्पात् समुत्थितः सन् हिरण्मयं प्रकाशबहुलं रमणीयं वीर्यं गर्भरूपं देहं मायया अधिदैवम् अध्यात्ममधिभूतमिति त्रिधा व्यसृजत् विभक्तवान्। अथ एकं पौरुषं वीर्यं यथा त्रिधा भिद्यत तथा शृणु। अत्र भागवताः। प्रलये स्वांशान् जीवानात्मनि प्रविलाप्य स्थितः तदनु सृष्टिकाले जीवान् स्वात्मनः पृथक्कुर्वन् रात्रि-स्थानीयमहाप्रलयावसाने मायया स्वशक्त्या महादादीनि सृष्ट्वा तैर्हिरण्मयं वीर्यं ब्रह्माण्डं सावरणमसृजदिति महासमष्टित्त-तस्तेषामेव महदादीनामंशैः परस्परमिलितैः समष्टिविराट्पञ्चाशत्कोटियोजनपरिमिताण्डकटाहमध्यगतः सृष्टोऽभूत्तदैव आदि-पुरुषस्तदेवाण्डकटाहं प्रविश्य तदर्द्धं स्वसृष्टजलेनापूर्य तत्रस्थं समष्टिविराजं स्वोदरमध्ये कृत्वा सहस्रं समास्तस्मिन् गर्भोदे एव सुष्वाप। तदन्ते योगतल्पादुत्थितो हिरण्मयं समष्टिविराजम् अधिदैवादिभिदा त्रिधा व्यभजत्। एष एव समष्टिस्तस्य नाभि-द्वारा कमलनालात्मको भावी। स एव पुनश्चतुर्दशलोकात्मको वैराज्याख्यः स्थूलो भावी। सूक्ष्मस्तु हिरण्यगर्भः समष्टिजीवः वैराज एव विसर्गाद्यर्थं चतुर्मुखो भावीति ब्रह्मा त्रिधा इत्याहुः॥ १३–१४॥ अन्तरिति। विचेष्टतः क्रियाशक्त्या विविधं चेष्टमानस्य पुरुषस्य समष्टिविराजः। आर्षः शता। अन्तःशरीरे य आकाशस्तस्मात् ओजः इन्द्रियशक्तिः सहो मनःशक्तिः बलं देह-शक्तिः ततः शक्त्यात्मकात्सूक्ष्माद्रूपात् प्राणः सूत्रात्मा महान् मुख्यः असुः सर्वेषां प्राणस्वरूपः जज्ञे॥ १५॥ सूत्रात्मनो महत्त्वं दर्शयति - अनुप्रमाणन्तीति। सर्वजन्तुषु प्राणा इन्द्रियाणि प्राणन्तं चेष्टां कुर्वन्तं यं प्राणम् अनु पश्चात्प्राणन्ति चेष्टां कुर्वन्ति अपानन्तं चेष्टां त्यजन्तं तमनु अपानन्ति चेष्टांत्यजन्ति नरदेवमनुगा इव। यथा अनुगा भृत्याः नरदेवं राजानं गच्छन्तम् अनुगच्छन्ति त तिष्ठन्तमनुतिष्ठन्ति च तथा॥ १६॥ प्राणेनेति। प्रभोर्वैराजस्यान्तरा उरमध्ये क्षिपता व्याप्रियमाणेन निमित्तेन क्षुत्तृट् च अजायते स्म। ततः पिपासतः पातुमिच्छतः जक्षतः भक्षयितुमिच्छतश्च प्राक् प्रथमं मुखं निरभिद्यत विभक्तमभूत्। प्रभोरिति विराड्जीवाभेदेनोपासनार्थवत् एवमग्रेऽपि भूम्न इत्यादौ॥ १७॥ पूर्वमुपक्रान्तमधिदैवादि त्रैविध्यं विवृणोति—मुखत इति। मुखतो मुखोत्पत्त्यनन्तरं मुखे विवरात्मके तालु इन्द्रियाधिष्ठानं निर्भिन्नमुत्पन्नम्। तत्र तालुनि जिह्वाइन्द्रियमध्यात्ममुपजायते स्म। ततस्तद-नन्तरं नाना मधुरादिभेदः रसः विषयोधिभूतं जज्ञे। यो रसो जिह्वयाऽधिगम्यते। वरुणदेवतारूपमधिदैवमनुक्तमपि ज्ञेयमेवं सर्वत्राधिष्ठानमिन्द्रियं देवताविषयश्चेत्येतच्चतुष्टयमनुक्तमप्यूह्यम्। त्रैविध्ये च विषयोऽधिष्ठानं च अधिभूतमध्ये गण्येते। इन्द्रियमध्यात्मं देवता अधिदैवतमिति॥ १८॥

विवक्षोरिति अर्द्धम्। भूम्नो व्यापकस्य विवक्षोर्वक्तुमिच्छोर्मुखतो मुख एवाधिष्ठाने वह्निर्देवता वागिन्द्रियं तयोरिन्द्रिय-तदभिमानिदेवतयोः अधीनं कर्मरूपं व्याहृतं भाषणं विषयाख्यं चाभूत्॥ १९॥ जल इति सार्द्धम्। यदा जले चरतस्तस्य सुचिरं वायोर्निरोधः समजायत। जले इत्यत्र गल इति पाठान्तरम्। तदा नभस्वति प्राणवायौ दोधूयति अत्यन्तं प्रचलति सति। आर्षः शता। श्वासप्रचलनं विना न निर्वाह इति श्वासमार्गतया अधिष्ठानभूते नासिके निरभिद्यताम्। ततश्च जिघृक्षतः गन्धं ग्रहीतु-मिच्छोस्तस्य नसि नासिकायां गन्धं वहतीति तथाभूतो वायुर्देवता अभूत्। अनेनैव गन्धो विषय इति सूचितं घ्राणइन्द्रियं चाभूत्॥ २०॥ यदेति। यदा आत्मनि देहे निरालोकं प्रकाशशून्यमासीदिति शेषः। निर्मक्षिकमितिवदव्ययीभावः। यदा प्रकाशा-भाव आसीदित्यर्थः। तदा आत्मानं देहं चकारादन्यच्च वस्तु दिदृक्षतो द्रष्टुमिच्छतस्तस्य। आर्षः शता। अक्षिणी अधिष्ठानभूते

निर्भिन्ने उत्पन्ने। तत्र ज्योतिरादित्यो देवताऽभूत् चक्षुरिन्द्रियं ततश्च गुणस्य रूपस्य ग्रहः ग्रहणं भवति अनेनैव रूपं विषयो दर्शितः ॥ २१ ॥ बोध्यमानस्येति। ऋषिभिर्वेदैर्बोध्यमानस्य तदात्मनः प्रबोधनं जिघृक्षतः ग्रहीतुमिच्छतः कर्णौ अधिष्ठानभूतौ निरभिद्येताम्। तत्र दिशो देवता अभूवन्। श्रोत्रं चेन्द्रियमभूत्। ततश्च गुणस्य शब्दस्य ग्रहो ग्रहणं भवति। अनेन शब्दो विषयो दर्शितः ॥ २२ ॥ वस्तुन इति सार्द्धम्। वस्तुनो द्रव्यस्य मृदुत्वं काठिन्यं च लघुत्वं च गुरुत्वं च ओष्णत्वम् उष्णत्वम्। आङ् पादपूरणे। गुर्वौष्णेति पाठे सवर्णदीर्घप्राप्तौ यणादेश आर्षः। पादपूरणार्थमेव अन्ये तु आङोपदर्थे उष्णस्य जिघृक्षाभावादाङ्प्रयोग इत्याहुः। शीततां च जिघृक्षतस्त्वक् निर्भिन्ना त्वगिन्द्रियाधिष्ठानं चर्म जातमित्यर्थः। तस्यां त्वचि रोमाणि इन्द्रियं जातं महीरुहाः वृक्षाभिमानिनो देवताः जाताः। वस्तुनि हस्तेनातोलिते लघुत्वगुरुत्वयोर्ज्ञानात्तयोरपि त्वगिन्द्रियविषयत्वमिति पौराणिकाः। तत्र त्वचि अन्तर्बहिश्च त्वचा लब्धो गुणः स्पर्शो येन सः। वायुर्वृतः आवृत्य स्थितः। कर्तरि निष्ठा। अयमर्थः त्वगिन्द्रियमेव बहिः कण्डूतिसहितं स्पर्शं गृह्णन् लोमशब्देनोच्यते। तत्र च महीरुहाणां देवत्वम् अन्तर्बहिश्च स्पर्शं गृह्णत्तदेव त्वक्शब्देनोच्यते तत्र वायुर्देवता। तथा च तृतीये वक्ष्यते। "त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमौषधोः। अंशेन लोमभिः कण्डूं यैरसौ प्रतिपद्यते। निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत्। प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते।" इति। तत्र चर्माणीति चर्मोपलक्षिता त्वगित्यर्थः। प्राणेनांशेनेति प्राणवायुव्याप्तेन त्वगिन्द्रियेणेत्यर्थः। अत्र त्वचि इन्द्रियद्वयं स्थितम्। एकत्र स्पर्शो विषयोऽन्यत्र कण्डूः। बह्वृचश्रुतौ "त्वेक एवांशो निर्दिष्टः त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयः" इति ॥ २३ ॥ हस्ताविति। आदानप्रक्षेपादि नानाकर्मचिकीर्षया कर्तुमिच्छतः तस्य हस्तौ अधिष्ठानभूतौ रुरुहतुः। तयोर्हस्तयोर्बलमिन्द्रियम् इन्द्रः देवता च प्रविवेश। बलवानिति पाठे बलसहित इन्द्र इत्यथः। आदानं कर्म च उभयाश्रयमिन्द्रियदेवताधीनम् ॥ २४ ॥

गतिमिति। जिगोषत इति धात्वर्थो न विवक्षितः किन्तु सन्नर्थः इच्छैव। तथा च अभिकामिकामभीष्टां गतिमिच्छतस्तस्य पादौ रुरुहाते। सन्धिरार्षः। पद्भ्यां पादयोर्यज्ञो विष्णुः स्वयमेव गत्याख्येनेन्द्रियेण सह तदधिष्ठातृरूपेण स्थितः नृभिः कर्तृभिः कर्मभिः हव्यं क्रियते गमनागमनादिभिर्यज्ञार्थं द्रव्यरूपविषयः संपाद्यत इत्यर्थः। कर्मभिरिति गत्याख्या कर्मशक्तिरिन्द्रियमुक्तम्। प्राप्यं द्रव्यं विषयः नृभिरिति व्यष्टिजीवेष्वपि इयमेव रीतिरिति दर्शयन् यज्ञादीनां नराधिकारिकत्वं दर्शयति ॥ २५ ॥ निरभिद्यतेति। प्रजा अपत्यमानन्दः स्त्रीसंभोगसुखममृतं स्वर्गादिः तदर्थिनः शिश्नोऽधिष्ठानं निरभिद्यत। तत्रोपस्थः इन्द्रियमासीत् प्रजापतिश्च देवता ज्ञेया। कामानां संबन्धि यत् प्रियं स्त्रीसंभोगसुखं तदुभयाश्रयमिन्द्रियदेवताधीनम् ॥ २६ ॥ उत्सिसृक्षोरिति। धातुमलं मुक्तान्नादीनामसारांशम् उत्सिसृक्षोस्तस्य गुदमधिष्ठानं निरभिद्यत। ततस्तत्र पायुरिन्द्रियमासीत्। ततस्तस्य मित्रो देवताऽऽसीत्। उत्सर्गो मलत्यागरूपो विषयः उभयाश्रयः देवतेन्द्रियाधीनः ॥ २७ ॥ आसिसृप्सोरिति। पुर्या देहात् पुरो देहान्तराणि आसिसृप्सोः सर्वतो गन्तुमिच्छोस्तस्यापानतः अपानमार्गेण उपलक्षणमेतत्प्राणमार्गेण च प्राणापानविश्लेषो मृत्युरिति प्रसिद्धेः। नाभिरूपं द्वारं निरभिद्यत तत्रापानः इन्द्रियमासीत्। तत तस्याधिष्ठाता मृत्युर्देवतासीत् पृथक्त्वं प्राणापानविश्लेषरूपं मरणं विषयः। उभयाश्रयमिन्द्रियदेवताधीनम् ॥ २८ ॥ आदित्सोरिति। अन्नपानानां शेषे कर्मणि षष्ठी। आदित्सोः संग्रहेच्छोः कुक्षिरधिष्ठानम्। अन्त्राणि नाड्यश्चेन्द्रियं तयोर्नाड्यन्त्रवर्गयोः क्रमेण नद्यः समुद्राश्च देवते तुष्टिरुदरभरणं पुष्टिस्तु रसपरिणामतः स्थौल्यं च विषयौ तदाश्रये तदुभयनिमित्ते तत्रान्नसंग्रहेच्छोः कुक्ष्यन्त्रसमुद्रतुष्टय इति अधिष्ठानादिचतुष्टयम्। पेयसंग्रहेच्छोः कुक्षीनाडीनदीपुष्टय इति चतुष्टयमिति विवेकः ॥ २९ ॥ निदिध्यासोरिति। आत्मनो मायां मायिकं वस्तुमात्रं निदिध्यासोर्निरां चिन्तयितुमिच्छोर्हृदयं कमलाकारमधिष्ठानं निरभिद्यत ततस्तत्र मनइन्द्रियं जातम्। तस्य चन्द्रोऽधिष्ठाता देवता ततश्च विषयभूत-संकल्प तत्तत्पदार्थचिन्तनं तत एव काम तद्विषयाभिलाषश्च भवति। अत्र हृदय एवाधिष्ठाने चित्ताहंकारबुद्धय इन्द्रियाणि तद्देवताश्च वासुदेवरुद्रब्रह्माणस्तृतीयस्कन्धोक्तानि ॥ ३० ॥

तदेवमधिदेवादिभेदं विभज्योक्त्वा तदंशभूतानां धात्वादीनां स्वरूपमाह—त्वगिति। त्वगुपरितनं सूक्ष्मं चर्मचर्म तदन्तः स्थूलचर्म मांसं रुधिरं मेदः मज्जा अस्थि चेति समाहारद्वन्द्वः। शुक्रमप्युपलक्षणीयम्। एते सप्त धातवः भूम्यप्तेजोमयास्तेषां कार्यभूतास्तेषां पाञ्चभौतिकत्वेऽपि वाय्वाकाशयोराहारादिरूपेण संवर्द्धकत्वाभावाद् भूम्यादित्रितयकार्यत्वमुक्तम्। प्राणस्तु व्योमाम्बुवायुभरारब्ध इति शेषः। अत्र व्योमाम्बुनोः पोषकत्वम् ॥ ३१ ॥ गुणात्मकानीति। इन्द्रियाणि गुणात्मकानि गुणेषु शब्दादिषु आत्मा येषां तानि विषयाभिमुखस्वभावानीत्यर्थः। गुणाः शब्दाद्यास्तु भूतादिरहंकारस्ततः प्रकर्षेण भवन्ति इति अहङ्कारकल्पितशोभनस्वभावा न तु वस्तुत. यतो मनः सर्वविकाराणामात्मा स्वरूपं बुद्धिस्तु तथाभूतार्थविज्ञानस्वरूपिणी नतु परमार्थग्राहिणीति वैराग्यार्थमुक्तम्। यद्वा। इन्द्रियाणि गुणात्मकानि रजोगुणकार्याणि गुणास्तु भूतादेरहङ्कारस्य प्रभवो येभ्यस्तथाभूताः अहङ्कारद्वारा गुणकार्यत्वं तेषामिति भावः। मनोऽपि कामक्रोधसर्वविकाराणामात्मा स्वरूपमेव बुद्धिरपि विविधज्ञानरूपिणीति ॥ ३२ ॥ एतदिति। महदादिभिः

पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहदव्यक्तरूपैर्दशगुणोत्तरवृद्धैरष्टभिरावरणैर्बहिरावृतमेतद् ब्रह्माण्डात्मकं भगवतः स्थूलं रूपं मया ते तुभ्यं व्याहृतं कथितम्। अत्र स्थूलं समष्टिसंज्ञम्। मह्यादिभिरिति महासमष्टिसंज्ञं महास्थूलमित्याहुः॥ ३३॥ अतः परमिति। अतः स्थूलात् रूपात्परमन्यदस्य कारणभूतं सूक्ष्मतममतीन्द्रियम्। यतोऽव्यक्तं निर्विशेषं सर्वव्यावर्त्तकधर्मरहितम् अनादिमध्यनिधनम् उत्पत्तिस्थितिलयशून्यं नित्यं सदैकरूपमपक्षयादिशून्यम्। वाक् च मनश्च "न दधि१य आदीनि" इति निषेधाद्द्वित्वाभावः समासान्ताभावश्चार्षौ। तस्मात् परं तदगोचरं सर्वव्यवहारातीतं समष्टिलिङ्गशरीराख्यं भगवतो रूपमस्ति। अत्र सूक्ष्मतममित्यनेन सूक्ष्ममतिसूक्ष्मं चेति द्वयं लभ्यते। तत्र सूक्ष्मं समष्टिलिङ्गशरीरमतिसूक्ष्मं मायारूपं निर्विशेषणादिविशेषणचतुष्टयोक्तमित्याहुः॥ ३४॥ अमुनी इति। अमुनी स्थूलसूक्ष्मे भगवतो रूपे उपासनार्थं मया ते तुभ्यमनुवर्णिते। उभे अपि विपश्चितो विवेकिनो न गृह्णन्ति परमार्थतो न स्वीकुर्वन्ति। कुतो हि यस्मात् मायासृष्टे अमू इति वक्तव्ये अमुनी इत्यार्षम्। अमुनी इति द्विवचनं स्थूलयोः सूक्ष्मयोश्चैक्यादित्याहुः॥ ३५॥ 'यद्रूपगुणकर्मकः' इत्युक्तं तत्प्रपञ्चयितुमाह—स इति। स परः भगवान् वस्तुतः अकर्मकः सर्वव्यापाररहितोऽपि ब्रह्मा वेधा तद्रूपधृक् अतः सकर्मा सव्यापारश्च सन् प्राणिनां वाचकतया देवमनुष्यादिनामानि तद्वाच्यतया देवादिरूपाणि तत्तदधिकारेण तत्तत्फलहेतुभूताः क्रियाश्च धत्ते सृजति॥ ३६॥ एतदेव प्रपञ्चयति—प्रजापतीनिति सार्द्धत्रयम्। प्रजापत्यादीन् सरीसृपान्तान् पृथक् तदवान्तरभेदेन धत्त इत्यनुषङ्गेणान्वयः। तत्र प्रजापत्यादीनि नामानि तद्वाच्यानि रूपाणि तत्तत्कर्माणि च ज्ञेयानि। पृथक् तदवान्तरभेदेन अत्र गिरीनित्यनन्तरं नृपेति संबुद्धिः॥ ३७–३९॥ द्विविधा इति। ये प्रोक्तेभ्योऽन्ये द्विविधाः स्थावरजङ्गमरूपेण भेदेन चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जरूपेण जलस्थलनभांस्योकांसि स्थानानि येषां तानपि विधत्ते। सन्धिरार्षः। एतेषु इमाः प्रजापत्याद्याः कुशलाः पुण्यफलरूपाः सर्पपिशाचाद्याः अकुशलाः पापफलरूपा नरादयः मिश्रास्तदुभयरूपाः कर्मणां गतयः फलानि भवन्ति। एतच्च यावत्यः कर्मगतयः इति प्रश्नस्योत्तरम्॥ ४०॥

सत्त्वमिति सार्द्धम्। इतिशब्दो हेतौ सत्त्वं रजस्तम एभ्यो हेतुभ्यः पुण्यादिद्वारा सुराः नरा नारकाश्चेति तिस्रो गतयो भवन्ति। सुरादिशब्दा ऋष्यादीनामप्युपलक्षणार्थाः। हे राजन्! यदैकतरः सात्त्विकादिस्वभावोऽन्याभ्यामवशिष्टाभ्यां स्वभावाभ्यामुपहन्यते अभिभूयते अनुविध्यते वा तत्र तदा एकैकशोऽपि गतयस्त्रिधा भिद्यन्ते नवसङ्ख्या भवन्ति। यथा रजःस्वभावोऽपि नरः सत्त्वमिश्रणाधिक्याद्ब्राह्मणः तमोमिश्रणाच्छूद्र इत्यादि त्रिधेति। स्थूलतया गुणतारतम्येनानन्तभेदसम्भवात्॥ ४१॥ स एवेति। स एव जगत्कर्ता भगवान् धर्मरूपधृक् धर्मरक्षकत्वाद्धर्मो विष्णुस्तद्रूपधृक् स्वस्य मर्यादायां स्थापयन् तिर्यगाद्यात्मभिरवतारैः इदं विश्वं पुष्णाति पालयति। तत्र तिर्यगवतारा वराहमीनकच्छपहंसादयो नरावतारा रामकृष्णपरशुरामादयः सुरावतारा वामनसुयज्ञादयः॥ ४२॥ तत इति। कालः प्रलयकालस्तत्साधकोऽग्निः संकर्षणमुखानल तत्र रुद्रात्मा रुद्ररूपेणाविभूतो यदात्मनः स्वस्मादेवोपादानभूतात्स्वेनैव सृष्टमिदं विश्वं तत्कालेनैव करणभूतेन धनानीकं मेघसमूहम् अनिल इव संनियच्छति संहरति॥ ४३॥ कर्तृत्वाद्यपवादेन दशमस्य शुद्धिमाह—इत्थंभावेनेति। इत्थंभावेन स्रष्टृत्वादिरूपेण भगवत्तमः परिपूर्णैश्वर्यः भगवान् कथितः। हि हेत्वर्थे परन्तु सूरयो विवेकिनः इत्थंभावेनैव द्रष्टुं नार्हन्ति किंतु निष्क्रियमित्यादि शुद्धं पश्यन्ति॥ ४४॥ कुतस्तथा द्रष्टुं नार्हन्तीत्यपेक्षायामाह—नेति। अस्य विश्वस्य जन्मादिरूपे कर्मणि परस्य परमेश्वरस्य इत्थंभावः कर्तृत्वं नास्ति। श्रुत्यापि तात्पर्येण न प्रतिपाद्यते किंतु कर्तृत्वप्रतिषेधार्थमनुविधीयते केवलमनुवर्ण्यते। हि यस्मात्तत् गुणगतं कर्तृत्वादि तत्र मायया भ्रान्त्या आरोपितमिति। तथा च श्रुतिः। "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादि॥ ४५॥ अयं त्विति। पुरुषोऽण्डं विनिर्भिद्येत्यादिनोक्तः अयं तु ब्रह्मणः संबन्धी महान् कल्पः संवत्सरशतात्मकः ब्रह्मपरमायूरूपः विकल्पः अवान्तरब्रह्मदिनरूपस्तत्सहितः उदाहृतः उदाहरणतया संक्षेपत उक्तः। यत्र महाकल्पे प्राकृताः महदादिपृथिव्यन्ताः सर्गाः वैकृताः पृथिव्यादिविकारारब्धाः स्थावरादिसर्गा इत्ययं विधिः प्रकारः अन्यैर्महाकल्पैः साधारणः समानः अस्ति॥ ४६॥ परिमाणमिति। कालस्य परिमाणं स्थूलं सूक्ष्मं च स्वरूपं कल्पस्य लक्षणम् इयानेवंरूप इति तद्विग्रहमवान्तरकल्पमन्वन्तरादिरूपं विभागं च यथास्ति तथा कल्पानां लक्षणमेव विग्रहो वपुर्यस्य तत्कालस्य परिमाणमिति वा पुरस्तात् तृतीयस्कन्धे यथा यथावद्विस्तरेण व्याख्यास्ये। तद्वपः। एष सर्वोऽपि विशेषः पाद्मे कल्पेऽस्ति। अथो तस्मात्पाद्मं कल्पं प्रथमपरार्द्धान्तभवं त्वं शृणु। कल्पगणना तु स्कान्दप्रभासखण्डात् ज्ञेया। यथा "प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः। वामदेवस्तृतीयस्तु ततो गाथान्तरोऽपरः। रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः। सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते। सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः। ध्यान एकादशः प्रोक्तस्तथा सारस्वतोऽपरः। त्रयोदश उदानस्तु गरुडोऽथ चतुर्दशः। कौर्मः पञ्चदशो ज्ञेयः पौर्णमासी प्रजापतेः। षोडशो नारसिंहस्तु समाधिस्तु ततोऽपरः। आग्नेयो विष्णुजो वंशः सोमवंशस्ततोऽपरः। द्वाविंशो भावनः प्रोक्तः स पुमानिति चापरः। वैकुण्ठश्चार्चिषस्तद्वद्वल्लीकल्पस्ततोऽपरः। सप्तविंशोऽथ वैराजो गौरीकल्पस्तथापरः। माहेश्वरस्तथा प्रोक्तस्त्रिपुरो यत्र घातितः। पितृकल्पस्तथान्ते च यः कुहूर्ब्रह्मणः स्मृतः। त्रिंशत्कल्पाः समाख्याता ब्रह्मणो दिवसैः सदा। अतीताश्च भविष्याश्च वाराहो

वर्त्ततेऽधुना । प्रतिपद् ब्रह्मणा प्रोक्ता द्वितीयार्द्धस्य साम्प्रतम्" । इति । तत्र श्वेतः श्वेतवाराहः अयमेव ब्रह्मोत्पत्तिसमये ब्राह्म उच्यते । एवं पितृकल्प एव प्रथमपरार्द्धान्ते पद्मनिर्मितलोकत्वात् पाद्म उच्यते इति च ॥ ४७ ॥ यदाहेति युग्मम् । हे सूत ! भागवतेपूत्तमः क्षत्ता विदुरो दुस्त्यजानपि बन्धूंस्त्यक्त्वा भुवस्तीर्थानि चचार । यद्वा । तीर्थानि तथा भुवो भगवत्क्षेत्राणि च चचार । तत्र अध्यात्मज्ञानसंश्रितः कौषारवेर्मैत्रेयस्य तथा तस्य विदुरस्य च संवादोऽभूदिति नोऽस्मान् यद्भवानाह स संवादः कुत्र जातः । यद्वा । यत्रव स्थाने विदुरेण पृष्टः स भगवान् मैत्रेयः तत्त्वं परमार्थं तस्मै विदुराय ह स्फुटम् उवाच ॥ ४८–४९ ॥ ब्रूहीति । हे सौम्य ! तदिदं विदुरस्य विचेष्टितं तद्बन्धुत्यागस्य निमित्तं स्वगृहान्निर्गतः पुनर्यथा येन प्रकारेणागतवांस्तथा तं प्रकारं च नोऽस्मभ्यं ब्रूहि ॥ ५० ॥ राज्ञेति । यद्विदुरमैत्रेयसंवादात्मकं वृत्तं यूयं मां पृच्छथ तदेव राज्ञा परीक्षितापि पृष्टो महामुनिः श्रीशुकः राज्ञः प्रश्नानुसारतः प्रश्नक्रमेण यदुत्तरमवोचत्तद्वो युष्मानहमभिधास्ये कथयिष्यामि । यूयं सावधानतया शृणुत ॥ ५१ ॥

प्रीतिस्तवास्ति मधुपेषु विटेषु चौरेष्वद्यापि हन्त यदि दुर्जन नो जहासि ।
गोपीविटे च मधुपे नवनीतचौरे तां क्वापि धामनि बधान धृतावधानः ॥ १ ॥

इति श्रीमद्भागवते द्वितीयस्कन्धेऽन्वितार्थप्रकाशिकायां दशमोऽध्यायः ॥ १० ॥

**समाप्तोऽयं द्वितीयः स्कन्धः ।**

—:*:—

## अथ तृतीयः स्कन्धः

# प्रथमोऽध्यायः

॥ ॐ नमो भगवते वासुदेवाय ॥

### श्रीशुक उवाच

**एवमेतत् पुरा पृष्टो मैत्रेयो भगवान् किल । क्षत्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ॥ १ ॥**

आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन्पदेऽस्तु मम चितमगोचरेऽपि । यस्तद्व्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति ॥ १ ॥
यावन्निरञ्जनमजं पुरुषं जरन्तं सञ्चिन्तयामि सकले जगति स्फुरन्तम् । तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥ २ ॥
प्रेम्णा मुकुन्दपदकञ्जयुगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या । गङ्गासहायजरठो हरितोषहेतोः स्कन्धेऽन्वयाय विदधाति मतिं तृतीये॥ ३ ॥

आद्ये बन्धून् परित्यज्य गतस्य क्षत्तुरुच्यते । सम्वाद उद्धवेनात्र श्लोका मार्गणसिन्धवः ( ४५ ) ॥
अनुष्टुभां तत्र ( ६० ) षष्टिरुवाचेति चतुष्टयम् ॥ १ ॥

एवमिति । यथा भवान्मां परिपृष्टवान् एवमेवैतत् किल पुरा पूर्वमृद्धिमत् समृद्धिभिः पूर्णं त्यागानर्हमपि स्वगृहं त्यक्त्वा वनं प्रविष्टेन क्षत्रा विदुरेण भगवान् मैत्रेयः पृष्टः ॥ १ ॥ त्यागानर्हत्वसूचनाय पुनर्गृहं विशिनष्टि—यद्वा इति । अखिलेश्वरो भगवान् वो युष्माकं पाण्डवानां मन्त्रकृत् दौत्यादिकर्त्ता अयं बुद्धौ सन्निहितः श्रीकृष्णः पौरवेन्द्रो दुर्योधनस्तस्य गृहं हित्वा आत्मसात्कृतम् आत्मीयत्वेन स्वीकृतं यद्वं विदुरस्य गृहम् आत्मीयतयाऽनाहूत एव प्रविवेश तद्गृहं हित्वेत्यनुषङ्गः ॥ २ ॥ कुत्रेति । भगवता मैत्रेयेण सह क्षत्तुर्विदुरस्य सङ्गमः सङ्गतिः कुत्र प्रदेशे आस बभूव । अव्ययमिदं कदा कस्मिन् काले वा तेन सह सम्वादोऽभूत् । हे प्रभो ! एतन्नोऽस्मभ्यं वर्णय ॥ ३ ॥ न हीति । हि यस्मात् वीरयसि गुणैरुत्कृष्टे तस्मिन् मैत्रेये अमलात्मनः तस्य विदुरस्य अल्पार्थस्योदयो यस्मात्तादृशः प्रश्नो न सम्भवति किंतु साधूनां सतां वादेन चरित्ररूपेणोपबृंहितः विस्तृतः प्रश्नः सम्भवति ॥ ४ ॥ स इति । एवं राज्ञा परीक्षिता पृष्टः सुबहुवित् स ऋषिवर्योऽयं शुकः प्रीतात्मा सन् तं राजानं प्रति श्रूयतामिति आह स्म ॥ ५ ॥ त्यागानर्हस्यापि गृहस्य त्यागे कौरवापराधान् हेतूनाह—यदेति । यदा तु विनष्टा दृष्टिर्धर्मविषयकं ज्ञानं चक्षुश्च यस्य सः राजा धृतराष्ट्रः असाधून् स्वसुतान् अधर्मेण पुष्णन् सन् यविष्ठस्य कनीयसो भ्रातुः पाण्डोः विबन्धून् पितृहीनान् सुतान् युधिष्ठिरादीन् लाक्षाभवने जतुगृहे प्रवेश्य ददाह । तदा क्षत्ता अयादित्येकादशेन सम्बन्धः । एवमग्रेऽपि । अत्र जतुगृहदाहादौ धृतराष्ट्रपरोक्षत्वेऽपि पुत्रपक्षपातित्वात्पुत्रदोषाणां पितर्यारोपात्तथोक्तिः ॥ ६ ॥ यदेति । यदा च नृपो धृतराष्ट्रः सभायां कुरुदेवस्य युधिष्ठिरस्य देव्याः पत्न्याः स्वास्रैः स्वकुचकुङ्कुमानि शत्रुस्त्रीणां वा तद्भर्तृवधेन कुचकुङ्कुमानि हरन्त्याः आत्मनः स्नुषायाः द्रौपद्याः केशानामभिमर्शमाकर्षणरूपं गर्ह्यं निन्दितं स्वसुतस्य दुर्योधनस्य कर्म न वारयामास ॥ ७ ॥ द्यूत इति । यत् यदा द्यूते अधर्मेण जितस्य सत्यावलम्बस्य सत्याश्रयस्य साधोः वनादागतस्य समयेन पूर्वकृतसङ्केतेन दायं स्वभागं याचतः अजातशत्रोः युधिष्ठिरस्य दायं तमो मोहं तमःस्वभावं पुत्रं वा जुषाणः सेवमानः । मुमभाव आर्षः । धृतराष्ट्रो नादात् न ददौ ॥ ८ ॥

यदेति । यदा पार्थेन युधिष्ठिरेण प्रहितः प्रेषितो जगतां गुरुः कृष्णः यानि पुंसां भीष्मादीनाममृतायनानि अमृतस्राविणि वचांसि जगाद तानि क्षतः पुण्यलशो यस्य सः राजा धृतराष्ट्रो दुर्योधनो वा उरु बहु न मेने सुखकोर्त्यादिकरं पुण्यं तस्य नासीदेव । राज्यमात्रप्रापकः पुण्यस्य लेशोऽभूत् । तस्यापि नष्टत्वादनादृतवानिति ॥ ९ ॥ यदेति । यदा पूर्वजेन धृतराष्ट्रेण मन्त्राय उपहूतः भवनं प्रविष्टः तत्र च मन्त्रं पृष्टः मन्त्रदृशां मन्त्रविदां वरोयान् विदुरः तत् आह स्म । यत् मन्त्रिणो वैदुरिकं वदन्ति विदुरवाक्यमिति श्लाघां कुर्वन्ति ॥ १० ॥ अजातशत्रोरिति । दुर्विषहं सोढुमशक्यं तवागः अपराधं तितिक्षतः सहमानस्य । शताऽऽर्षः । अजातशत्रोः दायं भागं प्रतियच्छ देहि । यत्र सहानुजः अनुजैः अर्जुनादिभिः सहितः रुषा श्वसन् वृकोदरो भीम एवाहिर्वर्त्तते । यत् यस्मात् भोमात् त्वमलमतिशयेन बिभेषि ॥ ११ ॥ पार्थानिति । पार्थान् पाण्डवान् तु क्षितिदेवैर्ब्राह्मणैर्द-

वैश्वेन्द्रादिभिः सहितो भगवान् मुकुन्दः श्रीकृष्णः स्वकीयत्वेन गृहीतवान्। यदुदेवाः सात्यकिप्रभृतयस्तेषामपि देवः प्रभुः नृदेवेषु मण्डलेश्वरेषु दीव्यन्ति प्रकाशन्त इति नृदेवदेवाः महाराजाः विनिर्जिताः अशेषाः देवदेवा येन सः भगवान् देवः स्वपुर्यां द्वारकायामास्ते। अयं भावः। यत्र हरिस्तत्रैव विप्रा देवा राजानो यादवाश्च। हरिरपि स्वपुर्यामेवास्ते न दूरमित्यतो भागं देहीति ॥ १२ ॥ स इति। यं दुर्योधनं त्वम् अपत्यमत्या पुष्णासि न पतत्यनेनेति व्युत्पत्तेः। अयं तु नरकपातहेतुरिति भावः। यः कृष्णाद्विमुखोऽतो गतश्रीश्च स एव दुर्योधनः पुरुषद्विट् कृष्णद्वेषी। अतः मूर्तिमान् दोष एव गृहान् बाह्यान् आभ्यन्तरान् मनआदींश्च प्रविष्ट आस्ते। अतः अशैवम् अमङ्गलरूपमेनं कुलस्य कौशलाय कुशलाय आशु त्यज। "त्यजेदेकं कुलस्यार्थे" इति न्यायात्। अन्यथा सर्वं कुलं नङ्क्ष्यतीति भावः। शैवकौशलशब्दौ स्वार्थाणन्तौ ॥ १३ ॥ इतीति। यदा क्षत्ता विदुर इत्येवमूचिवान् उक्तवान् तत्र तदा सद्भिः स्पृहणीयं शीलं यस्य सः विदुरः प्रवृद्धो यः कोपस्तेन स्फुरितश्चञ्चलः अधरो यस्य तेन स कर्णानुजसौबलेन कर्णदुःशासनशकुनिभिः सहितेन सुयोधनेन दुर्योधनेन असत्कृतः तिरस्कृतः ॥ १४ ॥ क इति। अत्र मन्त्रप्रसङ्गे जिह्मं कुटिलं दास्याः सुतम्। "षष्ठ्या आक्रोशे" इत्यलुक्। एनं विदुरं कः उपजुहाव आहूतवान्। यद्बलिना यस्यान्नेनैव पुष्टः तस्मिन् स्वामिनि प्रतीपः प्रतिकूलः सन् परेषां पाण्डवानां कृत्ये आस्ते। श्वासनः श्वसन्। आर्षः शानच्। जीवनमात्रावशिष्टोऽयम् आशु पुरान्निर्वासयतां निष्कासयताम्। अन्यथा शत्रुपक्षपातित्वादस्मन्नाशार्थं यतिष्यते। पाठान्तरे श्मशानवदमङ्गलः अत्र तिष्ठन्नयं पुरमपि श्मशानं करिष्यति ॥ १५ ॥

स इति। भ्रातुर्धृतराष्ट्रस्य विदुरतिरस्कारेऽपि तूष्णीं स्थितस्य पुराऽग्रे स विदुरः इत्थम् अत्युल्वणैः दुःसहैः कर्णयोर्बाणवत्प्रविशद्भिर्वाक्यैः मर्मसु हृदयादिषु ताडितोऽपि गतव्यथः मायां भगवन्मायाम् उरु बहु मानयानः मन्यमानः। मुगभाव आर्षः। क्षयहेतुभगवन्मायया मोहिता एते हितं न श्रृण्वन्तीति मन्यमानः धनुः द्वारि निधाय स्वयम् अयात् तन्निःसारणात्पूर्वमेव अगच्छत्। भीमादिभिः सङ्गत्य योत्स्य इति मा शङ्कीति धनुर्विधानम् ॥ १६ ॥ स इति। कौरवाणां पुण्येन लब्धः स विदुरो गजाह्वयाद् हस्तिनापुरात् निर्गतः सन् विदुरगमनच्छलाद्धार्तराष्ट्राणां पुण्यजं भाग्यमेव निर्गतमित्याशयः। सहस्रमूर्तिर्ब्रह्मरुद्राद्यनन्तमूर्तिर्भगवान् उर्व्यां भूमौ यानि स्वधिष्ठितः सम्यगधिष्ठाय स्थितः तानि तीर्थपदः तीर्थं पादौ यस्य तस्य भगवतः पदानि क्षेत्राणि पुण्यचिकीर्षया अन्वाक्रमत् जगाम। क्रमेर्दीर्घाभाव आर्षः ॥१७॥ पुरेष्विति। पुरेषु पुण्यानि उपवनानि च अद्रयश्च कुञ्जानि लतापिहितस्थलानि च येषु तेषु अपङ्कानि निर्मलानि तोयानि येषु तेषु सरित्सरःसु सरित्सु यमुनादिषु सरःसु पुष्करादिषु च अनन्तलिङ्गैः भगवन्मूर्तिभिः समलंकृतेषु शोभमानेषु तीर्थानामायतनेषु स्थानेषु अनन्य एकाकी चचार ॥ १८ ॥ गामिति। गां पृथ्वीं पर्यटन् मेध्ये पवित्रे विविक्ते एकान्तदेशे वृत्तिः स्थितिर्यस्य मेध्या विविक्ता असङ्कीर्णा च वृत्तिर्जीविका यस्येति वा सदा प्रतितीर्थम् आप्लुतः स्नातः अधः शयनं यस्य सः अवधूतः असंस्कृतदेहः स्वैः स्वकीयैर्ज्ञात्यादिभिः अलक्षितः अवधूतवेषो वल्कलादिधारी स विदुरः हरितोषणानि दयादीनि व्रतानि चेरे आचरत्। तङार्षः ॥ १९ ॥ इत्थमिति। इत्थं पूर्वोक्तनियमपूर्वकं भारतमेकवर्षं व्रजन् यावत् यावता कालेन प्रभासं तीर्थं गतवान् तावन् तावता कालेन एकस्यैव चक्रं सैन्यमाज्ञा वा यस्यां ताम् एकमेवासाधारणमातपत्रं राजचिह्नं यस्यां तथाभूतां क्षितिम् अजितेन श्रीकृष्णेन सहायभूतेन पार्थः शशास ॥ २० ॥ तत्रेति। अथ तत्र प्रभासे संस्पर्द्धया निमित्तभूतया सुहृदां कौरवादीनां विनष्टिं विनाशं शुश्राव अश्रृणोत्। दुर्योधनादिषु सौहार्दाभावादविलम्बेनोद्धवमेलाच्च सुहृदां यादवानामिति केऽपि व्याचक्षते। यथा वेणुजं वह्निं संश्रयते यद्वनं तद्यथा दग्धं भवति तद्वत्। अथ नाशश्रवणानन्तरम् अनुशोचन् तूष्णीं प्रत्यक् पश्चिमाभिमुखीम् उद्गमाभिमुखीमिति स्वामिपादाः। सरस्वतीमियाय गतवान् ॥ २१ ॥ तस्यामिति। तस्यां सरस्वत्यां त्रितादीनामेकादशतीर्थानि त्रिततीर्थादिनाम्ना प्रसिद्धानि स विदुरः आसिषेवे ॥ २२ ॥

अन्यानीति। इह भूलोके यान्यन्यानि च द्विजदेवैर्ऋषिभिः देवैश्च कृतानि येषां चक्राङ्कितमन्दिरवतां दर्शनात्कृष्णमनुस्मरन्ति लोकाः अङ्गमङ्गं प्रतिवर्तन्त इति प्रत्यङ्गानि आयुधानि तेषु मुख्यं चक्रं तेनाङ्कितानि मूर्द्धन्यहेमकुम्भेषु चक्रचिह्नितानि मन्दिराणि येषु तानि विष्णोरायतनानि क्षेत्राणि तीर्थानि च आसिषेवे ॥२३॥ तत इति। ततस्तु ऋद्धं सुराष्ट्रं सौवीरमत्स्यान् कुरुजाङ्गलांश्च देशान् अतिव्रज्य अतिक्रम्य यावदुद्धवः प्राप्तस्तावत्स्वयमपि यमुनामुपेत्य। परे तु तावद्वाक्यालङ्कारे सम्भ्रमे वा इत्याहुः। विदुरः तत्र भागवतमुद्धवं ददर्श ॥ १४ ॥ स इति। स विदुरः वासुदेवस्यानुचरं प्रशान्तं बृहस्पतेः प्राक् पूर्वं तनयं नीतिशास्त्रे शिष्यं पाठान्तरे प्राप्तो नयो नीतिशास्त्रं येन तं प्रतीतं ख्यातमुद्धवं प्रणयेन प्रेम्णा गाढम् आलिङ्ग्य भगवत्प्रजानां स्वानां ज्ञातीनां भद्रमपृच्छत। उद्धवकर्तृकप्रणामाभावः प्रेममूर्च्छयेत्याहुः। सख्योर्मिथ आलिङ्गनमेव वा सखे इत्यग्रे सम्बोधनात् ॥ २५ ॥ कच्चिदिति। कच्चिदिति प्रश्ने। स्वनाभौ भवः स्वनाभ्यः स चासौ पाद्मः पद्मसम्भवो ब्रह्मा तस्यानुवृत्त्या प्रार्थनया इह भूलोकेऽवतीर्णौ पुराणौ पुरुषौ रामकृष्णौ उर्व्याः भारापाकरणेन कुशलं विधाय कृतक्षणौ दत्तविश्रामावसरौ दत्तोत्सवौ वा शूरगेहे

सुदेवगृहे कुशलं यथा भवति तथा कच्चिदास्ते। नित्यकुशलिनोरपि कुशलप्रश्नः प्रेम्णैव। सन्धिरार्षः ॥ २६ ॥ कच्चिदिति। अङ्ग हे उद्धव! नोऽस्माकं कुरूणां परमः सुहृत् भामः भगिनीभर्त्ता वसुदेवभार्यायाः पौरव्याः विदुरादीनां भगिनीत्वात् पूज्यो वा। स प्रसिद्धः शौरिर्वसुदेवः कच्चित्सुखमास्ते। यो वै वदान्योऽत्युदारः स्वसॄणां भगिनीनां कुन्त्यादीनां वराणां तत्पतीनां तर्पणेन सन्तोषणेन सह वरान् अभीष्टान् अर्थान् पितृवद्ददाति ॥ २७ ॥ कच्चिदिति। अङ्ग हे उद्धव! यदूनां वरूथाधिपतिः सेनापतिः वीरः प्रद्युम्नः कच्चित्सुखमास्ते। आदिसर्गे पूर्वजन्मनि स्मरं कामदेवं सन्तं यं विप्रानाराध्य भगवतः सकाशात् रुक्मिणी अभिलेभे लब्धवती। प्रद्युम्नादीनां नित्यविभूतित्वेऽपि नरनाट्यद्योतनाय व्रतादिकथनम् ॥ २८ ॥ कच्चिदिति। स प्रसिद्धः सात्वतादीनां यादवभेदानामधिपतिः उग्रसेनः कच्चित्सुखमास्ते। यं शतपत्रनेत्रः श्रीकृष्णः दूरात् नृपासनस्याशामिच्छां परिहृत्य त्यक्त्वा नृपासनाशां परिहृत्य दूरात् स्थितमित्युग्रसेनविशेषणं वा राजासनेऽभ्यषिञ्चत् ॥ २९ ॥ कच्चिदिति। हे सौम्य! रथिनामग्रणीः श्रेष्ठः हरेः सुतः सदृक्षः स्वसदृशः साम्बः कच्चित्साधु सुखमास्ते। यः अग्रे पूर्वजन्मन्यम्बिकया पार्वत्या गर्भे धृतस्तं यं देवं देवसेनापतिं गुहं कार्तिकेयं व्रतेनाढ्या युक्ता सती जाम्बवती असूत ॥ ३० ॥

क्षेममिति। स प्रसिद्धो युयुधानः सात्यकिः कच्चित् सुखमास्ते। यः फाल्गुनादर्जुनाल्लब्धं धनुषो रहस्यं येन तथाभूतः यतिभिरपि दुरापां तदीयामधोक्षजसंबन्धिनीं गतिम्। अधोक्षजस्य श्रीकृष्णस्य सेवयाऽञ्जसा अनायासेनैव लेभे ॥ ३१ ॥ कच्चिदिति। अनमीवः निर्दोषः बुधो भगवन्तं प्रपन्नः श्वफल्कपुत्रोऽक्रूरः कच्चित्स्वस्ति कुशलमास्ते। यः श्रीकृष्णपादाङ्कित-मार्गपांसुषु प्रेम्णा विभिन्नं निर्गतं धैर्यं लज्जादिकारणं यस्य तथाभूतः सन् अचेष्टत् व्यलुठत् ॥ ३२ ॥ कच्चिदिति। विष्णुः श्रीकृष्णः प्रजा अपत्यं यस्यास्तस्याः देवमातुः वामनरूपविष्णोर्मातुरिव देवकनामा यो भोजस्तस्य पुत्र्याः देवक्याः कच्चित् शिवं कुशलमस्ति। या वै यथा त्रयी वेदत्रयी यज्ञवितानरूपमर्थं तत्प्रकाशकतया धारयति तथा देवं भगवन्तं स्वगर्भेण दधार ॥ ३३ ॥ अपिस्विदिति। यो वः युष्माकं सात्वतामुपासकानां कामदुघः अभीष्टप्रपूरकः स भगवान् अनिरुद्धः अपिस्वित्कच्चित्सुखमास्ते। यमनिरुद्धं मनोमयं मनसः प्रवर्तकं सत्त्वस्यान्तःकरणस्य चतुर्विधस्य तुरीयं चतुर्थमधिदैवं शब्दस्य शास्त्रस्य योनिं कारणं वेदाः आमनन्ति कथयन्ति। चित्ताहङ्कारबुद्धिमनसां वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धा अधिष्ठातारः मनसश्च शब्दयोनित्वं प्रसिद्धम्। "मनः पूर्वरूपं वागुत्तररूपम्" इति श्रुतेः। शिक्षायां च 'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।' इत्यादि ॥ ३४ ॥ अपिस्विदिति। हे सौम्य। निजस्य देहाद्यतिरिक्तस्यात्मनो दैवं श्रीकृष्णम् अनन्यवृत्त्या एकान्तभक्त्या सम्यगनुव्रताः ये ये हृदीक-सत्यभामात्मजचारुदेष्णगदादयः ते अपिस्वित् कच्चित्स्वस्ति कुशलं चरन्ति ॥ ३५ ॥ अपीति। स्वदोर्भ्यां स्वभुजवद्वर्तमानाभ्यां विजयाच्युताभ्यामर्जुनकृष्णाभ्यां सह धर्मः धर्मपुत्रो युधिष्ठिरो धर्मेण धर्ममार्गेण सेतुं धर्ममर्यादामपि कच्चित्परिपाति। यस्य युधिष्ठिरस्य सभायां विजयस्यानुवृत्त्या परम्परया अर्जुनकर्तृकसेवया वा हेतुभूतया साम्राज्यलक्ष्म्या च विजयस्योत्कर्षस्यानुवृत्तिर्यस्यामिति तया वा साम्राज्यलक्ष्म्या दुर्योधनोऽतप्यत तापं प्राप। एवंभूतं यस्यैश्वर्यमित्यर्थः ॥ ३६ ॥ किमिति। अहिवदत्यमर्षी भीमः कृताघेषु कौरवेषु दीर्घतमं बहुकालानुचिन्तितं स्वकर्तृकम् अघं लक्षणया दण्डं किंवा कच्चित् व्यमुञ्चत् नो वा। गदायाः विचित्रं मार्गं चरतः विचित्रं गदां भ्रामयतः यस्याङ्घ्रिपातं पदाघातं रणभूर्न सेहे ॥ ३७ ॥ कच्चिदिति। रथयूथपानां मध्ये यशोधाः कीर्तिधारकः स्वीयानां यशःप्रदो वा गाण्डीवधन्वा अर्जुनः उपरता अरयो यस्मात्तथाभूतः सन् कच्चिदास्ते। यस्यार्जुनस्य शरकूटेन बाणसमूहेन गूढः संवृत्तो मायाकिरातोऽलक्षितो गिरिशो रुद्रस्तुतोष ॥ ३८ ॥

यमाविति। पार्थैर्युधिष्ठिरभीमार्जुनैः पक्ष्मभिरक्षिणीव। वशब्द इवार्थे। वृतौ सुरक्षितो माद्रीतनयत्वेऽपि पृथायां समर्पणात् पृथायास्तनयौ यमौ युगपज्जातौ नकुलसहदेवौ उत अपि मृधे युद्धे शत्रुं विजित्य वज्रिवक्त्रात्सुपर्णाविव परात् शत्रोः सकाशात् स्वरिक्थं स्वधनमुद्दाय आच्छिद्य उतस्वित् कच्चिद्रेमाते रमेते। सन्धिरार्षः। यदि द्वौ सुपर्णौ वज्रिवक्त्रात् इन्द्रमुखात् स्वरिक्थममृतमानयेतां तद्वदित्यर्थः ॥ ३९ ॥ कुन्त्यास्तु पाण्डुं विना प्राणधारणमप्याश्चर्यमतः किं कुशलं पृच्छेयमित्याह—अहो इति। तेनातिरथतया प्रसिद्धेन राजर्षिवर्येण पाण्डुना विनाऽपि अर्भकार्थे बालानां पोषणार्थं न तु सुखार्थं पृथा कुन्ती ध्रियते अवतिष्ठते जीवति। आश्चर्यम्। यस्त्वधिरथः पाण्डुः एकवीरोऽसहाय एव धनुरेव द्वितीयं सहायो यस्य स चतस्रः ककुभो दिशो विजिग्ये जितवान् ॥ ४० ॥ सौम्येति। हे सौम्य! परेताय मृताय भ्रात्रे पाण्डवेयो विदुद्रुहे। तङार्षः। द्रुह उपसर्गत्वेऽपि भ्रातुः सम्प्रदानत्वमार्षम्। तत्पुत्रद्रोहकरणेन तस्यैव द्रोहं कृतवान्। जीवन्तं भ्रातरं मामपि स विदुद्रोहेत्याह। येन च स्वपुत्रान् दुर्योधनादीन् सम्यगनुव्रतेन स्वपुत्रवशेन सुहृत् हितोपदेष्टाऽहं भ्राता स्वपुर्याः सकाशान्निर्यापितः निष्कासितः तमेवमधो नरके पतन्तं धृतराष्ट्रमनुशोचे। तङार्षः ॥ ४१ ॥ सोऽहमिति। स तेन निर्यापितोऽहं मर्त्यविडम्बनेन ऐश्वर्याच्छादकमर्त्यानुकरणेन नृणां दृशः दृष्टीः चित्तवृत्तीश्च चालयतो भ्रमयतो विधातुः हरेः प्रसादात्तस्य पदवीं माहात्म्यं पश्यन् गतविस्मयोऽत्र भूतले नान्योपलक्ष्यः प्रच्छन्नः सन् सुखं विचरामि। अत्र चक्रवर्ती आह। पदवीं चरणविन्यासवर्त्म चरणौ च पश्यन् क्वाप्येतद्रहस्यानुद्घाटनादनन्योप-

लब्धः सन् अत्र तीर्थेष्वेव विचरामि। अत्र दुर्योधननिःसारितस्य खिन्नस्य विदुरस्य प्रत्यक्षीभूय भगवान् नित्यं स्वदर्शनरूपं वरं ददावित्यनुमीयते। अत एव दुर्योधनवधानन्तरमपि हरिदर्शनानन्दमग्नो विदुरो युधिष्ठिरसमीपं नागच्छत्। मौसललीलान्ते च हरिर्विदुरनेत्रादप्यन्तर्दधौ। अत एव तदनन्तरमुद्धवदर्शनपर्यन्तं विदुरस्य वैकल्यमिति ॥ ४२ ॥ नूनमिति। नूनं निश्चितमेतत्त्रिभिर्विद्याधनाभिजनजैर्मदैरुत्पथानामुद्वृत्तानां चमूभिर्मही मुहुः पुनः पुनश्चालयतां नृपाणां वधाद्धेतोः प्रपन्नानामार्तेः जिहीर्षया ईशोऽपि अघसमय एव हन्तुं समर्थोऽपि भगवान् कुरूणामधमपराधम् उपैक्षत। इदानीमेव कुरूणां वधे सर्वदुष्टराजवधो न स्यादित्याशयेनेत्यर्थः ॥ ४३ ॥ अजस्येति। अजस्यापि भगवतो यज्जन्म तत् उत्पथानां सन्मार्गच्छिदां नाशनाय तथा अकर्त्तुरपि कर्माणि पुंसां ग्रहणाय कर्मसु प्रवृत्तये चेति नु अन्यथा न चेदेवं तर्हि गुणानां परो गुणातीतोऽन्यो जीवोऽपि देहयोगम् उत तथा कर्मतन्त्रं कर्मविस्तारं वा कोऽर्हति किं पुनः साक्षाद्धरिः। न त्वन्यथेति पाठे पूर्वार्द्धोक्तप्रयोजनायैव हरेर्जन्मकर्माणि चेति न त्वन्यथा। यतः गुणानां परोऽन्योऽपि को नाम देहयोगाद्यर्हति ॥ ४४ ॥ तस्येति। हे सखे! प्रपन्नानामखिललोकपानां ब्रह्मादीनां तथाऽन्येषां स्वे स्वीये वेदरूपेऽनुशासनेऽवस्थितानामर्थाय दैत्यादिवधायाचारशिक्षणाय च यदुषु जातस्य तीर्थरूपा कीर्तिर्यस्य तस्याजस्य श्रीकृष्णस्य वार्तां कथां कीर्तय ॥ ४५ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायः प्रथमे तृतीयस्य व्यधादिमाम्।

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां प्रथमोऽध्यायः ॥ १ ॥

—:❀:—

## अथ द्वितीयोऽध्यायः

श्रीशुक उवाच

**इति भागवतः पृष्टः क्षत्रा वार्तां प्रियाश्रयाम्। प्रतिवक्तुं न चोत्सेह औत्कण्ठ्यात् स्मारितेश्वरः ॥ १ ॥**

द्वितीय उद्धवः क्षत्रे बालस्य चरितं हरेः। शोचन्नवर्णयत्तत्र श्लोकास्त्रिंशच्चतुर्युताः ॥

उवाचद्वयमेकोनचत्वारिंशदनुष्टुभः ॥ २ ॥

इतीति। इत्येवं क्षत्रा प्रियः कृष्ण एवाश्रयो यस्यास्तां वार्तां पृष्टः अतः औत्कण्ठ्यात्स्मारित ईश्वरः श्रीकृष्णो यस्य स भागवत उद्धवः प्रतिवक्तुमुत्तरं दातुं च नोत्सेहे न समर्थोऽभूत् ॥ १ ॥ य इति। पञ्चहायनः य उद्धवो बाललीलया यस्य श्रीकृष्णस्य सपर्यां रचयन् कश्चित् मूर्त्यादिकं श्रीकृष्णं परिकल्प्य कल्पितैरेव साधनैः पूजां कुर्वन्मात्रा जनन्या प्रातराशाय प्रातर्भोजनार्थं याचितः प्रार्थितोऽपि तद्भोजनं नैच्छत् ॥ २ ॥ स इति। एवं बालप्रभृति तस्य भगवतः सेवया कालेन जरसं जरां गतः प्राप्तः। परे तु कालेऽपि जरसं न गतः तत्र प्रवयसोऽप्यासन्। "युवानोऽतितरौजसः" इत्युक्तेरित्याहुः। एतद्वाक्यसामञ्जस्याय जरसं जराविकारपलितादियोग्यतां प्राप्त इति योग्यम्। स उद्धवः वार्तां पृष्टो भर्तुस्तस्य पादावनुस्मरन् कथं प्रतिब्रूयात् उत्तरं दद्यात् ॥३॥ स इति। स उद्धवः कृष्णाङ्घ्रिस्मरणजनितया सुधया परमानन्देन साधु सम्यक् निर्वृत आनन्दितः तीव्रेण विवशत्वापादकेन भक्तियोगेन तत्र भृशं निमग्नश्च सन्मुहूर्त्तमात्रकालं तूष्णीं निर्व्यापारोऽभूत् ॥ ४ ॥ पुलकेति। पुलकैरुद्भिन्नानि अङ्कुरितानि सर्वाण्यङ्गानि यस्य सः मीलन्त्या दृशा शुचः अश्रूणि मुञ्चन् तस्य भगवति यः स्नेहस्तस्य प्रसरः पूरः तस्मिन् संप्लुतो निमग्न उद्धवस्तेन विदुरेण पूर्णार्थः कृतार्थो लक्षितो दृष्टः ॥ ५ ॥ शनकैरिति। एवं भगवानेव लोकस्तं प्राप्य पुनस्तस्माच्छनकैः नृलोकं मनुष्यलोकमनुसन्धानमागतः सन्मुद्धवा नेत्रे विमृज्यात्मस्मयन् यदुकुलसंहारादि भगवच्चातुर्यं स्मरणेन विस्मयं प्राप्नुवन्। आर्षः शता। विदुरं प्रत्याह स्म ॥ ६ ॥ कृष्णेति। कृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचे अस्तमये सति अजगरेण कालरूपेण शोकरूपेण वा महासर्पेण

नोऽस्माकं गृहेषु गोर्णेषु ग्रस्तेषु अत एव गतश्रीषु नष्टसमृद्धिषु सत्सु त्वत्पृष्टानां कुशलमहं किं नु ब्रूयाम् ॥ ७ ॥ दुर्भग इति । बत खेदे । अयं लोकः सर्वोऽपि जनो दुर्भगो भाग्यहीनः यदवस्तु सुतरामपि दुर्भगाः ये यदवः संवसन्तः सम्यक् हरिणा सह वसन्तोऽपि हरिरयमिति न विदुः । यथा क्षीरसमुद्रे जातं जले प्रतिबिम्बितं वा उडुपं चन्द्रं तत्रत्या मीनाः अमृतमयोऽयमिति न विदुः स्म किंतु कश्चिज्जलचर इत्येवं विदुः ॥ ८ ॥ दुर्भगत्वादेव न विदुः नतु ज्ञानसामर्थ्याभावादित्याह—इङ्गितज्ञा इति । पुरुप्रौढा अतिनिपुणाः अतः इङ्गितं परचित्तस्थं जानन्तीति तथाभूताः स्थाने एकस्मिन् स्थाने एवाऽऽरमन्ति तादृशाश्च सर्वेऽपि सात्त्वताः यादवाः भूतावासं सर्वान्तर्यामिणं श्रीकृष्णं सात्वतामृषभं यादवानां श्रेष्ठमेवामंसत अमन्यन्त ॥ ९ ॥

केऽपीङ्गितादिना तमीश्वरतया जानन्तो भाग्यवन्तोऽप्यतद्विदां प्रवृत्त्या मुह्येयुस्तेषां किं भाग्यवत्तयाऽपीत्यत आह—देवस्येति । ये देवस्य भगवतः मायया स्पृष्टाः व्याप्ता यादवोऽयमिति वदन्ति ये च शिशुपालादयः असदेवान्यद्वैरमाश्रिताः निन्दन्ति तद्वाक्यैस्तेषां यादवोऽयमित्यादिवाक्यैः आत्मनि हरौ उप्तात्मनः समर्पितमनसो मादृशस्य धीर्न भ्राम्यते मोहं न प्राप्यते । मित्त्वेऽपि ह्रस्वाभाव आर्षः । तङ् वा आर्षः । अन्ये तु मूढा एवेत्यर्थः ॥ १० ॥ प्रदर्श्येति । यस्तु भगवान् लोकानां लोचनतुल्यं स्वबिम्बं स्वमूर्तिं न तप्तं तपो यैः तेषां दुर्भाग्यानां नृणां प्रदर्श्य तेषां पश्यतां न वितप्ता दृशो नेत्राणि येषां तथाभूतानामेव सतां स्वबिम्बमादायान्तरदधात् । अन्यस्य तादृशस्य दर्शनीयस्याभावात् । एतेन कृष्णशरीरत्यागवादिनः परास्ताः ॥ ११ ॥ बिम्बं वर्णयति—यदिति । यद्बिम्बं मर्त्यलीलौपयिकं मनुष्यलीलासु योग्यं स्वस्य योगमायाया बलं दर्शयता हरिणा गृहीतं स्वस्य हरेरपि विस्मापनमाश्चर्यकरं यतः सौभगर्द्धेः सौन्दर्यसमृद्धेः परं पदं सीमाभूतं भूषणानामपि भूषणान्यङ्गानि यस्य तादृशमभूत् ॥ १२ ॥ यदिति । बतेत्याश्चर्ये । धर्मसूनोर्युधिष्ठिरस्य राजसूये यागे त्रिलोकः त्रिभुवनस्थो जनो दृशां स्वस्त्ययनं परमानन्दकरं यद्वपुर्निरीक्ष्य विधातुर्ब्रह्मणः अर्वाक्सृतौ अर्वाचीनमनुष्यसृष्टौ यत्कौशलं नैपुण्यं तत्कात्स्न्र्येन साकल्येन इह वपुषि अद्येदानीं गतमुपक्षीणं नातः परं तस्य कौशलमस्तीत्येवममन्यत मेने । तन्मूर्तेर्विधातृसृज्यत्वाभावेऽपि लोकदृष्टिरियमुक्ता ॥ १३ ॥ यस्येति । यस्य भगवतः अनुरागेण प्लुप्तो व्याप्तो हासो हसनं रासो विनोदश्च लीलयाऽवलोकश्च तैः साधनैः प्रतिलब्धः स्वकृतहासादिसम्मानान्तरं लब्धो मान आदरो याभिस्ताः व्रजस्त्रियो दृग्भिः सहानुप्रवृत्ताः गच्छन्तं श्रीकृष्णमेवानुगता धियो यासां ताः कृत्ये मार्जनलेपनादिगृहकार्ये शेषो यासां तथाभूताः साकल्येन तत्कर्तुमशक्ता एवावतस्थुः किल । अङ्भाव आर्षः ॥ १४ ॥ स्वशान्तेति । सर्वात्मकस्य सर्वाण्येव रूपाणि तत्र शान्तरूपेषु इतरस्वरूपैरशान्तैर्घोरैर्मूढैश्च दैत्यादिभिरर्भितोऽर्द्यमानेषु सत्सु तेष्वनुकम्पितः कृपायुक्तः सात्मा चित्तं यस्य सः परावरेशः परे ब्रह्मादयः अवरेऽरुद्रादयस्तेषामीशो भगवान् अजोऽपि महतां देवादीनामंशाः यदुष्ववतीर्णाः तैर्युक्तः । महत्त्वमंशो यस्य तेनाव्यक्तेन युक्त इति स्वामिपादाः । तत्र महत आत्त्वाभाव आर्षः । अग्निर्महाभूतरूपो नित्यसिद्धोऽपि यथा काष्ठादिष्वाविर्भवति तथा जातः आविर्भूतः ॥ १५ ॥ मामिति । अजस्यापि यद्वसुदेवगेहे बन्धनागारे प्राकृतवज्जन्मनो विडम्बनमनुकरणं नतु नृसिंहादिवदकस्मादेवाविर्भावः । अरेः कंसस्य भयादिव निलीय व्रजे वासश्च यच्च स्वयमनन्तवीर्योऽपि कालयवनाद्यरिभयादिव पुरान्मथुरायाः सकाशाद्व्यवात्सीत् पलायत एतत्सर्वं मां खेदयति ॥ १६ ॥

दुनोतीति । कंसं हत्वा पित्रोर्देवकीवसुदेवयोः पादावभिवन्द्य तात हे पितः ! अम्ब हे मातः ! कंसात् उरु अधिकं शङ्कितानामत एव अकृतनिष्कृतीनामकृतशुश्रूषाणां नोऽस्माकं बहुत्वं रामाद्यभिप्रायकम् । युवां प्रसीदतम् अपराधं क्षान्त्वा प्रसादं कुरुतमिति यदाहस्म तदेतत्कर्तृस्मरतो मम चेतः चित्तं कर्मभूतं दुनोति उपतापयति ॥ १७ ॥ ननु तर्हीनीश्वर एवायं कुतो न स्यात्तत्राह—को वा इति । अमुष्य श्रीकृष्णस्याङ्घ्रिसरोजयो रेणुलवमपि विजिघ्रन् सेवमानः को वै पुमांन् विस्मर्तुमीशीत शक्नुयात् यः कृष्णो विस्फुरन् प्रचलन् भ्रूविटपः भ्रूलता स एव कृतान्तः कालस्तेन भूमेः भारं तिरश्चकार नाशितवान् ॥ १८ ॥ दृष्टेति । ननु यां सिद्धिं सम्यगनुष्ठितेन भक्तियोगेन योगिनः संस्पृहयन्ति युधिष्ठिरस्य राजसूये यज्ञे कृष्णं द्विषतोऽपि चैद्यस्य सा सिद्धिस्तत्प्राप्तिरूपा मुक्तिर्भवद्भिर्दृष्टैव । तस्य वात्सल्यनिधेर्विरहं कः सहेत ॥ १९ ॥ तथैवेति । अन्ये च सर्वथा संबन्धरहिताः अपि ये नरलोकवीरा आहवे युद्धे नयनयोरभिराममानन्दकरं कृष्णमुखारविन्दं नेत्रैः पिबन्तस्तत्सौन्दर्यमनुभवन्तः पार्थस्यास्त्रैः पूताः निष्पापाः सन्तो मृतास्तेऽपि तथैव शिशुपालवदस्य भगवतः पदं स्थानं स्वरूपं चरणं वा आपुः प्रापुः ॥ २० ॥ स्वयमिति । स्वयं तु भगवान् न साम्यातिशयौ यस्य यमपेक्ष्यान्यस्य साम्यमतिशयश्च नास्तीत्यर्थः । त्र्यधीशः त्रयाणां लोकानां गुणानां वाऽधीशः अत एव स्वाराज्यलक्ष्म्या निजानन्दस्वरूपसम्पत्त्यै आप्ताः समस्ताः कामा भोगा यस्य सः बलि करमर्हणं वा हरद्भिः समर्पयद्भिश्चिरकालीनैर्लोकपालैः किरीटीनां कोटिभिः अग्रभागैः ईडितः स्तुतः पादपीठो यस्य सः प्रणमतां किरीटसंघट्टनध्वनिरेव स्तुतित्वेनोत्प्रेक्ष्यते ॥ २१ ॥ तत्तस्येति । अङ्ग हे विदुर ! यः स्वयं परमेश्वर. तस्य तत्कैङ्कर्यं भगवत्कर्तृकं कैङ्कर्यं भृतान् भृत्यान्नोऽस्मान् अलं विग्लापयति ग्लानिं प्रापयति । स्वाम्यपकर्षेण सेवकानां ग्लानिर्भवत्येव । परिमेष्ठिधिष्ण्ये महाराजसिंहासने निषण्णमासीनम् उग्रसेनं स्वयं तत्तले तिष्ठन् हे देव ! निधारय अस्य निवेदनमवधारयेति कस्यचित्साहाय्यामाचरन्नुग्रसेनं न्यबोधयत् विज्ञापितवान् ॥२२॥

अहो इति। बकी पूतना जिघांसया हन्तुमिच्छया स्तनकालकूटं स्तनयोः संभृतं कालकूटाख्यं विषं यं हरिमपाययत् अत एवासाध्वी दुष्टा नरकपातनयोग्याऽपि वेषेण स्तनदानक्रियया च तुल्यत्वात् धात्र्या यशोदाया उचितां तद्धामप्राप्तिरूपां गतिं लेभे प्राप्तवती। एवमपराधवत्या अपि यो मुक्तिं दत्तवांस्ततोऽन्यः को वा दयालुरस्ति यं वयं भक्ताः शरणं व्रजेम॥ २३॥

मन्ये इति। ये असुराः संयुगे युद्धे प्राणान् त्यक्ष्यन्तः अंसे सुनाभायुधश्चक्रायुधो भगवान्यस्य तथाभूतम्। "अमूर्धमस्तकात्" इत्यलुक्। आपतन्तमागच्छन्तं तृक्षस्य मरीचेरपत्यं तार्क्ष्यः तस्य कश्यपस्य पुत्रं गरुडमचक्षत। अपश्यन् तान् अधीशे भगवति संरम्भः क्रोधावेशस्तेन मार्गेणाभिनिविष्टं चित्तं येषां तान् असुरान् भागवतानेव मन्ये। यतो भागवता इव तेऽपि भगवद्ध्यानाभिनिवेशेन भगवन्तमपरोक्षं पश्यन्ति॥ २४॥ वसुदेवस्येति। अजेन ब्रह्मणाऽभियाचितः प्रार्थितः अतः अस्याः भूमेः शं भारावतारणेन सुखं चिकीर्षुः भगवान् भोजेन्द्रस्य कंसस्य बन्धनागारे वसुदेवस्य भार्यायां देवक्यां जातः॥ २५॥ तत इति। ततः कंसात् विबिभ्यता विशेषतो भीतेन पित्रा वसुदेवेन निमित्तभूतेन नन्दस्य व्रजम् इत गतस्तत्र गूढार्चिर्गुप्ततेजाः सबलः बलरामेण सहित एकादश समाः संवत्सरान् अवसत्॥ २६॥ परीत इति युग्मम्। वत्सपैः बालकैः परीतः व्रजौकसां प्रेक्षणीयां कौमारीं चेष्टां दर्शयन् अदेयवस्तुलाभाय रुदन्निव तत्प्राप्तौ हसन्निव च भीषणदैत्याद्यागमे तु मुग्धः सुन्दरो यो बालसिंहस्तस्येवावलोकनं यस्य सः विभुः कूजद्भिर्द्विजैः संकुलिता व्याप्ताः अङ्घ्रिपा यस्मिंस्तस्मिन् यमुनाया उपवने वत्सांश्चारयन्व्याहरत् अक्रीडत्॥ २७-२८॥ स एवेति। स एव कृष्णः अधिकं वयः प्राप्तः सन् लक्ष्म्याः शोभादिसम्पादो निकेतमाश्रय सिताः श्वेताः गोवृषाः यस्मिन्नानावर्णे गोसङ्घे तत् गोधनं चारयन् रणन् शब्दं कुर्वन् वेणुर्यस्य सः तादृशः सन् अनुगान् स्वानुसारिणः गोपान् अरीरमत् रमयामास॥ २९॥ प्रयुक्तानिति। भोजराजेन कंसेन प्रयुक्तान् मायिनः कामरूपिणश्च तांस्तान् पूतनादीन् क्रीडनकान् क्रीडार्थं मृदादिनिर्मितान् व्याघ्रादीन् यथा बालो निहन्ति तद्वत् लीलया व्यनुदत् जघान॥ ३०॥ विपन्नानिति। विषयुक्तजलपानेन विपन्नान् मृतान् बालान् गावो गाश्च। प्रथमा आर्षी। अमृतदृष्ट्या उत्थाप्य जीवयित्वा भुजगाधिपं कालियं निगृह्य ततो निःसार्य प्रकृतिस्थितं निर्विषीकृतं तत्तोयं तान् गोपान् गाश्चापाययत्॥ ३१॥ अयाजयदिति। उरुभारस्यातिसमृद्धस्य वित्तस्य सद्व्ययं चकारादिन्द्रमानभङ्गं च चिकीर्षन् द्विजोत्तमैः सहितः विभुर्भगवान् इन्द्रमानभङ्गेन कृता गवां पूजैव गोसवस्तेन गोपराजं नन्दमयाजयत्॥ ३२॥ वर्षतीति। हे भद्र! भग्नो मानो यस्य तथाभूते इन्द्रे कोपाद्व्रजनाशाय वर्षति सति अतिविह्वलो व्रजः अनुगृह्णता कृष्णेन गोत्रो गोवर्द्धनपर्वत एव लीलार्थमातपत्रं तेन त्रातः रक्षितः॥ ३३॥ शरदिति। शरदि यः शशी तस्य करैर्मृष्टमुज्ज्वलं रजनीमुखं प्रदोषं मानयन् अभिनन्दन् स्त्रीणां गोपीनां मण्डलं मण्डयति भूषयतीति तथाभूतः कलानि मधुराणि पदान्यक्षराणि यस्मिंस्तद्यथा भवति तथा गायन् रेमे। अत्र यथा रजनीनायिकायाः मुखं शशिना नायकेन करैः स्वेदापनयनेन मृष्टं तथाहं करिष्यामीति वदन्निति ध्वन्यते॥ ३४॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां द्वितीयोऽध्यायः॥ २॥

—:❀:—

# अथ तृतीयोऽध्यायः

उद्धव उवाच

ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षया शं बलदेवसंयुतः ।
निपात्य तुङ्गाद्रिपुयूथनाथं हतं व्यकर्षद्व्यसुमोजसोर्व्याम् ॥ १ ॥

तृतीये मथुरायां यत् द्वारवत्यां च यत्कृतम् । उद्धवस्तज्जगादात्र श्लोका विंशतिरष्टयुक् ( २८ ) ॥
उवाचेत्येकं सपादा एकविंशदनुष्टुभः ( १ ) ॥ ३ ॥

तत इति । स्वपित्रोर्देवकीवसुदेवयोः । शमित्यव्ययम् । सुखस्य चिकीर्षया बलदेवसंयुतः स कृष्णस्ततो व्रजात् पुरं मथुरामागत्य रिपुयूथनाथं कंसं तुङ्गात् राजमञ्चान्निपात्य हतं व्यसुं गतप्राणमप्युर्व्यां भूम्यामोजसा बलेन व्यकर्षत् । पित्रोः संतोषार्थं कंसमरणमसम्भवयतां मूर्छितत्वभाननिरासार्थं च ॥ १ ॥ सान्दीपनेरिति । सान्दीपनेरुपाध्यायात् सकाशात्तेन सकृत्प्रोक्तं सविस्तरं षडङ्गाद्युपेतं ब्रह्म वेदमधीत्य तस्मै सान्दीपनये मृतं पुत्रं मृतपुत्रप्रदानरूपं वरं पञ्चजनोदरात् पञ्चजनोदरं विदार्येति ल्यब्लोपे पञ्चमी । यमलोकादानीय प्रादात् ॥ २ ॥ समाहुता इति । श्रियो लक्ष्म्याः सवर्णेन समानेन रूपेण साधनभूतेन भीष्मककन्यया रुक्मिण्या ये शिशुपालजरासन्धादयो राजानः समाहूताः । ह्रस्वत्वमार्षम् । समाहृता इति पाठे आकृष्टा इत्यर्थः । यद्यपि तया कृष्ण एवाहूतस्तथापि तल्लावण्याकर्षणेनागता अन्येऽपि तयाहूता इत्युच्यन्ते । एषां समागतानां राज्ञां मिषतां पश्यतामेव सताम् । अनादरे षष्ठी । मूर्ध्नि पदं दधत् तया सह गान्धर्ववृत्त्या परस्परसमयरूपया बुभूषया भवितुमिच्छया स्वभागं लक्ष्म्यंशभूतां रुक्मिणीं सुपर्णो गरुडः सुधामिवेति शेषः । जह्रे जहार । यद्वा श्रियो लक्ष्म्यंशभूताया रुक्मिण्याः सवर्णेन भ्रात्रा रुक्मिणा यद्वा समानं वर्णद्वयं वाचकं यस्य सः श्रियः सवर्णो रुक्मी तेन भीष्मककन्यया सह तेषां बुभूषया विभूतिर्भवत्विति इच्छया ये समाहुता इति । तत्र शिशुपालस्याह्वानं वरत्वेन बुभूषया जरासन्धादीनां तु तद्विवाहसाधनार्थमुत्सवार्थं चेति ज्ञेयम् । शेषं समानम् ॥ ३ ॥ ककुद्मत इति । अविद्धनसः अच्छिद्रनासिकान् ककुद्मतः वृषान् दमित्वा विद्धनासिकान् कृत्वा अविद्धनस एव दमित्वा वा नग्नजितो राज्ञः कन्यां सत्यां स्वयंवर उवाह तद्भग्नमानान् तैर्वृषभैस्तद्दमनेन वा भग्नो मानो येषां तथाभूतानपि गृध्यतः कन्यां ग्रहीतुं कामायमानान् अज्ञान् मूर्खान् शस्त्रभृतः नृपान् स्वयं तच्छस्त्रैरक्षत एव स्वशस्त्रैर्जघ्ने जघान । तद्वार्थः ॥ ४ ॥ प्रियमिति । यदा अदित्याः कुण्डले दातुं स्वर्गं गतस्तदा स्वयं प्रभुः स्वतन्त्रोऽपि ग्राम्यः स्त्रीपरतन्त्र इव प्रियायाः सत्यभामायाः प्रियं विधित्सुः कर्तुमिच्छुः द्युतरुं पारिजातमाच्छैत् हृतवान् । यस्य पारिजातस्यार्थे निमित्ते सगणो मरुद्गणसहितो रुषान्धः स्त्रीप्रेरितः वज्री इन्द्रस्तं भगवन्तं प्रत्याद्रवत् योद्धुमभिमुखमाजगाम । नूनं निश्चितम् । अयं वज्री वधूनां स्त्रीणां क्रीडार्थं सम्पादितो मृगो वानर इव वशवर्त्ती, श्रीकृष्णकृतोपकारान् विस्मृत्य स्त्रीप्रेरणया तेन सह युद्धकरणात् ॥ ५ ॥

सुतमिति । मृधे वपुषा खमाकाशं ग्रसन्तमिव स्थितमतिमहान्तं शतार्षैः । सुनाभेन चक्रेण उन्मथितं खण्डितं मृतं स्वसुतं नरकं दृष्ट्वा धरित्र्या मात्रा भूम्या आमन्त्रितः प्रार्थितः संस्तस्य नरकस्य तनयाय भगदत्ताय शेषं स्वपरिगृहीतावशिष्टं कोशराज्यादिकं दत्त्वा तस्य नरकस्यान्तःपुरमाविवेश ॥ ६ ॥ तत्रेति । तत्रान्तःपुरे कुजेन नरकेण आहृताः नरदेवानां राज्ञां कन्याः आर्त्तानां बन्धुं हितकर्तारं हरिं दृष्ट्वा सद्य तत्रैवोत्थाय प्रहर्षश्च व्रीडा च अनुरागश्च तैः प्रहिताः प्रेरिता येऽवलोकास्तैः स्वामित्वेन जगृहुः ॥ ७ ॥ आसामिति । नानागारेषु प्रतियोषितं भिन्नतया कल्पितेषु गृहेषु स्वमायया स्वयमपि तत्तदनुरूपः बहुरूपः सन् सविधं विधाभिः सहितं विवाहोचितप्रकारसहितं यथा स्यात्तथा एकस्मिन्नेव मुहूर्त्ते आसां स्वीकृतवतीनां योषितां पाणीन् जगृहे ॥ ८ ॥ तास्विति । तासु गृहीतपाणिषु स्त्रीस्वेकैकस्यां भार्यायां सर्वशः सर्वैर्गुणैरात्मना तुल्यानि दश दशाऽपत्यानि प्रकृतेर्मायायाः विभुभूषया विविधं भवं विस्तारस्तदिच्छया यद्वा प्रकृतेर्हेतोर्विविधं भवितुमिच्छया अजनयत् ॥ ९ ॥ कालेति । अनीकैः सैन्यैः पुरीं रुन्धतः कालः कालयवनः मागधः शाल्वश्च तदादीन् स्वयमजीघनत् घातितवान् । तेन च स्वपुंसां भीमार्जुनादीनां दिव्यं स्वीयमेव तेजः प्रभावं कीर्तिं वा आदिशत् दत्तवान् ॥ १० ॥ शम्बरमिति । शम्बरादीन् तथा अन्यानपि कांश्च कांश्चित्

प्रद्युम्नरामादिभिर्घातयत् घातितवान्। अडभाव आर्षः। घातयन्निति वा पाठः। दन्तवक्त्रादीन् स्वयमेवावधीत्॥ ११॥ अथेति। अथानन्तरं ते तव भ्रात्रोः पाण्डुधृतराष्ट्रयोर्य पुत्राः युधिष्ठिरदुर्योधनादयस्तेषां पक्षयोः पतितान् प्राप्तान् नृपान् अघातयदिनुषज्यते। येषां कुरुक्षेत्रमापततामागच्छतां बलैः सैन्यैः सर्वा भूश्चचाल चकम्पे॥ १२॥ स इति। स भगवान् कर्णः दुःशासनः सौबलः शकुनिः एतेषां कुत्सितमन्त्रस्य पाकेन तदुद्भूतपापेन हृता श्रीः सम्पत् आयुश्च यस्य तम्। अत एव भग्नावूरू यस्य तं सानुचरमुर्व्यां भूम्यां शयानं सुयोधनं पश्यन्नपि न ननन्द सन्तोषं न प्राप॥१३॥ कियानिति। द्रोणभीष्मार्जुनभीमरूपैर्मूलैः कारणभूतैः यत् योऽष्टादशाक्षौहिणीसंख्यायुक्तो भुवः लोकदृष्ट्या क्षपितो निरस्तो य उरुर्महान् भारः सोऽयं कियान् अत्यल्प इत्यर्थः। अत्र समासव्याख्यायां विधेयांशाविमर्शं दोषं पश्यन्तः भुवो भार उरु यथा स्यात्तथा क्षपितः अयं कियान् सन्धिरार्ष इति व्याचख्युः। अक्षौहिणिक इति ह्रस्वत्वमार्षम्। यस्मान्मदंशैः प्रद्युम्नादिभिर्हेतुभूतैर्दुर्विषहं भूम्या सोढुमशक्यं यदूनां बलं सैन्यमास्ते तिष्ठति॥ १४॥

मिथ इति। मधुना सुरया आ सर्वतो मदादाताम्राणि सर्वतो रक्तवर्णानि विलोचनानि नेत्राणि येषां तेषामेषां यदूनां यदा मिथः परस्परं विवादो भविता तदैव नाशो भविता। अतः इयान् परस्परविवाद एवैषां वधोपायः। अतोऽन्य उपायो नास्ति। मय्यन्तर्यामिन्युद्यते कृतप्रयत्ने सति एकात्मानोऽपि विवादेन स्वयमेवान्तर्दधते अन्तर्दधीरन्॥ १५॥ एवमिति। एवमुक्तप्रकारेण भगवान् सञ्चिन्त्य धर्मजं धर्मपुत्रं युधिष्ठिरं स्वराज्ये तस्यैव परम्परागते राज्ये स्थाप्य स्थापयित्वा। ल्यबार्षः। साधूनां धार्मिकाणां वर्त्म सदाचारं दर्शयन् सुहृदो मित्राणि नन्दयामास॥ १६॥ उत्तरायामिति। अभिमन्युना उत्तरायां स्वभार्यायां पूरोर्वंशः सन्ततिबीजभूतः परीक्षित् साधु सम्यक् मर्यादया धृतः उत्पादितः। स वै गर्भस्थ एव द्रौण्यस्त्रेण ब्रह्मास्त्रेण सञ्छिन्नः पुनर्भगवता श्रीकृष्णेन धृतः संरक्षणेन जीवितः॥ १७॥ अयाजयदिति। ततश्च विभुः त्रिभिरश्वमेधैर्धर्मसुतं युधिष्ठिरमयाजयत्। सोऽपि युधिष्ठिरोऽपि कृष्णमनुव्रतः भूमिपालनेन तत्प्रीतिमालक्ष्यानुजैर्भीमादिभिः सह क्ष्मां रक्षन् रेमे॥ १८॥ भगवानिति। विश्वस्य आत्मा जनसंग्रहार्थं लोकवेदयोः पन्थानमनुगच्छति सः असक्तः आसक्तिरहितः साङ्ख्यमात्मानात्मविवेकमास्थितः अनुसन्दधानः भगवानपि द्वारवत्यां स्थितः कामान् सिषेवे॥ १९॥ स्निग्धेति द्वयम्। स्निग्धः कृपायुक्तो यः स्मितपूर्वकोऽवलोकस्तेन पीयूषममृतं तत्कल्पया तत्तुल्यया वाचा अनवद्येन पापनिवर्तकेन चरित्रेण च श्रियो लक्ष्म्या निकेतेन आश्रयेण आत्मना देहेन च इमं लोकं भूलोकस्थं जनममुं च उपरिलोकस्थं जनं च यदूंश्च सुतरामेव रमयन् क्षणदया रात्र्या दत्तः क्षणः अवसरः उत्सवो वा यासां स्त्रीणां तासु क्षणं सौहृदं प्रेम यस्य सः। अनासक्त एव स्वयमपि रेमे॥ २०–२१॥ तस्येति। एवमनासक्तत्या बहून् संवत्सरगणान् रममाणस्य तस्य भगवतः गृहमेधेषु गृहे मेधा बुद्धिर्येस्तेषु गृहधर्मेषु योगेषु कामभोगोपायेषु च विरागः समजायत। भगवता पूर्वं गृहेष्वासक्तिर्दर्शिता, अधुना औदासीन्यं प्रकटितमिति भावः॥ २२॥ दैवेति। यदा स्वतन्त्रो भगवान् स्वाधीनेष्वपि कामेषु विरक्तस्तदा स्वयं दैवाधीनः योगेन भक्तियोगेन योगेश्वरं हरिमनुव्रतः तन्मार्गनिष्ठश्चेत् दैवाधीनेषु कामेषु विषयेषु नाम पुमान् विश्रम्भेत विश्वासं कुर्यात्॥ २३॥ पुर्यामिति। पुर्यां द्वारकायां कदाचित् काले क्रीडद्भिः यदुभोजकुमारकैः कोपिताः भगवतो मते कुलसंहारेच्छारूपे कोविदाः अभिज्ञाः मुनयः शेपुः॥ २४॥ तत इति। ततः कतिपयैर्मासैः संहृष्टाः दैवेन विमोहिताः वृष्णिभोजान्धकादयः यादवाः रथैः प्रभासं ययुः॥ २५॥ तत्रेति। तत्र प्रभासे स्नात्वा तस्याम्भसा पित्रादींस्तर्पयित्वा अथ पयःशीलादिबहुगुणोपेताः गावो गाः विप्रेभ्यो ददुः। गाव इति आर्षी प्रथमा॥ २६॥ हिरण्यमिति युग्मम्। हिरण्यं रजतादिकं च वृत्तिकरीं जीविकापर्याप्तां धरां भूमिमपि भगवदर्पणं यथा भवति तथा उरुरसं बहुरसयुक्तमन्नं च तेभ्यो विप्रेभ्यो दत्त्वा शूराः दानवीराः गोविप्रार्थाः सर्वस्वदानेनावशिष्टाः असवः प्राणा येषां तथाभूताः सन्तस्तान् मूर्द्धभिर्भुवि प्रणेमुः॥ २७–२८॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायस्तृतीये तृतीयस्य व्यधादिमाम्॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां तृतीयोऽध्यायः॥ ३॥

—:❀:—

# अथ चतुर्थोऽध्यायः

## उद्धव उवाच

**अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् । तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥**

तुर्ये बन्धुमृतिं श्रुत्वा दत्तात्मज्ञानलब्धये । मुनिं मैत्रेयमगमत् श्लोकास्तत्राङ्गवह्नयः ( ३६ ) ॥
उवाचेत्यष्ट सार्द्धैकचत्वारिंशदनुष्टुभः ( ४१॥ ) ॥ ४ ॥

अथेति । अथ ते यादवास्तैर्विप्रैस्तेन कृष्णेन वाऽनुज्ञाता अन्नं भुक्त्वा वारुणीं पैष्टीं मदिरां च पीत्वा तया विभ्रंशितं ज्ञानं युक्तायुक्तविवेको येषां तथाभूताः सन्तो दुरुक्तैर्मर्म पस्पृशुः परस्परं दुरुक्तान्यूचुः ॥ १ ॥ तेषामिति । मैरेयस्य मदिरायाः दोषेण मदेन विषमीकृतानि क्षोभितानि चेतांसि येषां यादवानां रवौ निम्लोचति अस्तं गच्छति सति वेणूनामिव मर्दनं मिथः संघर्षेण विनाश आसीत् । अत्र भागवताः नित्यभूताः लीलापरिकराः प्रद्युम्नादयो या वा द्वारकायामेव स्थितास्तत्प्रविष्टचरा देवास्तु तत्तदङ्गेभ्यः पृथक् कृतास्तत्तद्रूपेण प्रभासमानीताः भुक्त्वा पीत्वा च लब्धानुज्ञाः सुखेन दिवं ययुरित्याहुः ॥ २ ॥ भगवानिति । भगवानपि स्वात्मनः मायायाः गतिं स्वकुलसंहाररूपां गतिमवलोक्य सरस्वतीमुपस्पृश्य सरस्वत्यां स्नानाचमनादिकं कृत्वा अश्वत्थवृक्षस्य मूलमुपाविशत् ॥ ३ ॥ अहमिति द्वयम् । हे अरिन्दम ! यद्यपि स्वकुलं संजिहीर्षुणा संहर्तुमिच्छता प्रपन्नानामार्तिहरेण भगवता अहं पूर्वं द्वारकायामेव त्वं बदरीं बदरिकाश्रमं प्रति प्रयाहि गच्छेत्युक्तः, तथापि तस्य अभिप्रेतं स्वकुलसंहारादिकं जानन्नपि भर्तुः स्वामिनः पादयोर्विश्लेषणे अक्षमः सन् पृष्ठतस्तमन्वगमम् ॥ ४–५ ॥ अद्राक्षमिति त्रयम् । अहं च विचिन्वन् सन् सरस्वत्यां सरस्वतीतीरे कृतकेतं कृतनिवासमेकमासीनं दयितं श्रियो निकेतम् आश्रयम् अकेतनं सर्वाधारत्वादनाश्रयम् । श्यामश्चासाववदातः स्वच्छश्च तं विरजं विरजसम् । सलोप आर्षः । प्रशान्ते प्रसन्ने अरुणे लोचने यस्य तम् । चतुर्भिर्दोर्भिः पीतं यत् कौशं कौशेयं तेनाम्बरेण च विदितं वामे ऊरौ दक्षिणाङ्घ्रिसरोरुहम् अधिश्रित्य स्थापयित्वा अपाश्रितः पृष्ठतोऽवष्टब्धः अर्भको बालः कोमलोऽश्वत्थो येन तं त्यक्तविषयसुखम् अत एवाकृशमानन्दपूर्णं पतिं भगवन्तमद्राक्षम् ॥ ६–८ ॥

तस्मिन्निति । तस्मिन् देशे तदा महाभागवतः सिद्धः कृतकृत्यः द्वैपायनस्य सुहृत् हितैषी चासौ सखा च स्वगुरुपुत्रत्वात् पराशरशिष्यो मैत्रेयो लोकान् अनुचरन् यदृच्छया अकस्मादेव आससाद ॥ ९ ॥ तस्येति । अनुरक्तस्य तथा प्रमोदस्य भारेणानता कन्धरा यस्य । प्रमोदभावेति पाठान्तरम् । तदा प्रमोदेन भावेन चानता कन्धरा यस्य तस्य मुनेर्मैत्रेयस्य आशृण्वत एव सतः अनुरागहासान्वितया सम्यगीक्षया मां विश्रमयन् विगतश्रमं कुर्वन् मुकुन्द उवाच ॥ १० ॥ वेदेति । हे वसो वसुरूप ! पुरा पूर्वजन्मनि विश्वसृजां वसूनां च मिलितानां सत्रसंज्ञके यागे यतो मत्सिद्धिर्मत्प्राप्तिस्तत्कामेन त्वया अहमिष्टः सम्यगाराधितः । अतस्ते तव मनसि यदीप्सितं तत् अन्तःस्थितोऽहं वेद जानाम्येव । तदन्यैर्मत्पराङ्मुखैर्दुष्प्रापमपि तुभ्यं ददामि दास्यामि ॥ ११ ॥ स एष इति । हे साधो ! ते तव भवानां जन्मनां स एव भवः चरमः अन्तिमः अस्ति पुनर्जन्माभावात् । साधो इत्यत्र भाव इत्यपि पाठः । यत् यस्मात्ते त्वयाऽस्मिन् जन्मनि मदनुग्रहः आसादितः लब्धः यद्यतः नृलोकान् उत्सृजन्तं नृलोकं त्यक्त्वा वैकुण्ठं गच्छन्तं मां विशदानुवृत्त्या एकान्तभक्त्या रहः एकान्ते यद्दृष्टवान् दृष्टवानसि । दृशः क्वसुः । तदेतद् दिष्ट्या भद्रमेव जातम् ॥ १२ ॥ पुरेति । आदिसर्गे सर्गोपक्रमे पुरा पाद्मे कल्पे मम नाभ्ये नाभिभवे पद्मे निषण्णाय अजाय ब्रह्मणे मम महिमाऽवभास्यते अनेनेति यत्परं ज्ञानं मया प्रोक्तं यच्चेदानीमपि सूरयो भागवतं चतुःश्लोकीरूपं वदन्ति तद्वदामि ॥ १३ ॥ इतीति । इत्येवं परमस्य पुंसः हरेः प्रतीक्षणं कृपावलोकनमनुग्रहश्च तयोर्भाजनः । यद्वा । तत्समये मम प्रतीक्षणं मदागमनप्रतिपालनं तद्रूपस्यानुग्रहस्य भाजनभूतस्तेन आदृतश्चासौ वेदाहमित्यादिनोक्तश्च तथाभूतोऽहम् । प्रतिक्षणेति ह्रस्वपाठे क्षणे क्षणेऽनुग्रहभाजनोऽहं स्नेहेन उत्थानि रोमाणि यस्य सः, अत एव स्खलिताक्षरो गद्गदवाक् शुचः आनन्दाश्रूणि मुञ्चन् प्राञ्जलिश्च संस्तं भगवन्तं प्रीत्या बभाषे उक्तवान् ॥ १४ ॥ को न्विति । ईश हे भूमन् ! अतस्ते तव पादसरोजभाजां पुंसामिह लोके चतुर्ष्वर्थेषु धर्मादिषु को न पुरुषार्थो दुर्लभो न कोऽपि । तथापि भवतः पदाम्भोजयोर्नितरां सेवने उत्सुकः अहं तान् न वृणोमि ॥ १५ ॥ कर्माणीति । वस्तुतोऽनीहस्य निष्क्रियस्य निस्पृहस्य वा कर्माणि अभवस्य अजन्मनो भवो जन्म कालात्मनः तवारिभयात् द्वारकाख्यदुर्गस्याश्रयण पलायनं च स्वात्मन् स्वात्मनि रतिर्यस्य तस्य । नलोपाभाव आर्षः । प्रमदानामयुतेन बह्वीभिः प्रमदाभिः सहाश्रयः गृहाश्रम इति यत् इह एतस्मिन् विषये विदां विदुषामपि धीः खिद्यति मुह्यति । तङभाव आर्षः । किमुत मादृशाम् ॥ १६ ॥

मन्त्रेष्विति। हे प्रभो ! हे देव ! अकुण्ठितः आवरणरहितः अखण्डः सन्ततः सदात्मा संशयादिरहितो बोधो यस्य तथाभूतोऽपि त्वं यत् मन्त्रेषु प्रस्तुतेषु सत्सु मामेवोपहूय मुग्ध इव अज्ञवत् अप्रमत्तः सावधानः सन् पृच्छेः पृष्टवानसि तन्नोऽस्माकं मनो मोहयत्येव। एवं इवेत्येवार्थौ ॥ १७ ॥ ज्ञानमिति। स्वात्मन एव रहः रहस्यतत्त्वं तस्य प्रकाशकं परं समग्रं साङ्गोपाङ्गं यज्ज्ञानं भगवान् कस्मै ब्रह्मणे। सर्वनामत्वमार्षम्। प्रोवाच। यद्वा। कस्मै प्रोवाच न कस्मैचिदपीत्यर्थः। हे भर्त्तः ! तज्ज्ञानं यदि नोऽस्माकमपि ग्रहणाय ग्रहीतुं क्षमं योग्यं तर्हि वद। यत् यस्माज्ज्ञानादञ्जसा अनायासेनैव वृजिनं पूर्वोक्तं मोहं तरेम ॥ १८ ॥ इतीति। इत्येवमावेदितं प्रकाशितं हार्दं हृदि गतोऽभिप्रायो येन तस्मै मह्यम् अरविन्दाक्षः परः भगवान् आत्मनः स्वस्य परमां स्थितिं याथात्म्यज्ञानमादिदेश ॥ १९ ॥ स इति। आराधितपादो भगवान् स एव तीर्थं गुरुस्तस्मात् एव अधीतः अधिगतः तत्त्वात्मविबोधस्य यथार्थात्मज्ञानस्य मार्गो येन सोऽहं तस्य पादौ प्रणम्य तमेव देवं परिवृत्य प्रदक्षिणीकृत्य तद्विरहेणातुरो व्याकुल आत्माऽन्तःकरणं यस्य तादृशः सन् इहागतोऽस्मि ॥ २० ॥ सोऽहमिति। स बदरीं त्वं प्रयाहीत्याज्ञप्तोऽहं तस्य भगवतो दर्शनेन यः आह्लादो वियोगेनार्तिः पीडा च ताभ्यां युतः संस्तस्य प्रभोः दयितं प्रियं बदर्याश्रममण्डलं गमिष्ये। तडार्षः ॥ २१ ॥ यत्रेति। यत्राश्रमे लोकभावनो लोकपालको देवो भगवान् ऋषिर्नारायणो नरश्चेत्येतौ मृदु जनोपद्रवशून्यं तीव्रं दुश्चरं दीर्घमाकल्पान्तं तपः समाधिलक्षणं तेपाते ॥ २२ ॥ इतीति। बुधः क्षत्ता विदुरः इत्येव दुःसहं सुहृदां ज्ञातीनां च वधं विनाशम् उद्धवात् उपाकर्ण्य उत्पन्नम्। पततेः क्तः। शोकं ज्ञानेन विवेकेन अशमयत् ॥ २३ ॥ स तमिति। कौरवर्षभः स विदुरः कृष्णस्य परिग्रहे सेवकवर्गे मुख्यं महाभागवतं तं बदर्याश्रमं प्रति व्रजन्तं व्रजिष्यन्तमुद्धवं प्रति विस्रम्भात् विश्वासात् इदं वक्ष्यमाणमभ्यधत्त उक्तवान् ॥ २४ ॥ ज्ञानमिति। स्वात्मनः रहःप्रकाशं तत्त्वप्रकाशकं परं यज्ज्ञानं योगस्येश्वरः ईश्वरः भगवान् ते तुभ्यमाह स्म। तद्भवान्नोऽस्मभ्यं वक्तुमर्हसि। हि यद्यस्मात् विष्णोर्भृत्याः भक्ताः स्वभृत्यार्थकृतः स्वभक्तप्रयोजनकारिणः सन्त एव चरन्ति। नहि तेषां स्वार्थः कश्चिदस्ति ॥ २५ ॥ नन्विति। ननु ते तव तत्त्वज्ञानाय संराध्य ऋषिः कौषारवो मैत्रेय एव यतो मे अन्ति समीपे त्वदुपदेशाय मर्त्यलोकं जिहासता त्यक्तुमिच्छता साक्षाद् भगवतैवादिष्टः तीर्थान्यटित्वा भवन्तमुपसन्नाय विदुरायैतदुपदेष्टव्यमित्याज्ञप्तः। अयं भावः—भगवतैव स्मरणमात्रेण तत्त्वमुपदिष्टप्रायम्। केवलमसम्भावनादिनिवृत्तये कश्चिज्ज्ञानी आराध्यः। स च भगवतैव मैत्रेय आज्ञप्तः ॥ २६ ॥

इतीति। इत्येवं विदुरेण सह विश्वमूर्तेर्हरेः सुधया अमृततुल्यया गुणानां कथया प्लावितः अपनीतः उरुर्महांस्तापो यस्य सः। उपगोर्गोत्रापत्यमौपगवस्तस्यान्तरापत्यम् औपगविः उद्धवः यमस्वसुः यमुनायाः पुलिने तीरे तां निशां क्षणमिव सम्यक् उषितः सन् प्रातःकाले ततो यमुनातीरात् बदरिकाश्रमं प्रत्यगात् ॥ २७ ॥ निधनमिति। वृष्णिभोजेषु ब्रह्मशापेन निधनमुपगतेषु सत्सु अधिरथानां यूथ पान्तीत्यधिरथयूथपास्तेषामपि ये यूथपास्तेष्वपि मुख्यः स तूद्धव एकः कथमवशिष्टः। यद्यस्मात् शापात् अधीशो हरिरपि आकृतिं मनुष्यनाट्यं तत्यजे तत्याज काऽन्यस्य कथा। तडार्षः ॥२८॥ ब्रह्मशापेति। ब्रह्मशापस्यापदेशेन मिषेण नात्र शापः प्रभुः, अपि तु भगवदिच्छैवेत्यर्थः। कालेन स्वशक्तिरूपेण स्वकुलं संहृत्य स्वदेहमपि त्यक्ष्यन् अमोघवाञ्छितः सत्यसङ्कल्पः भगवान् नूनम् इदं वक्ष्यमाणमचिन्तयत् ॥ २९ ॥ अस्मादिति। अस्मान्मर्त्यलोकान्मय्युपरते अन्तर्हिते सति मदाश्रयं मदधीनं ज्ञानं संप्रतीदानीम् आत्मवतां जितमनस्कानां वरः उद्धव एव अद्धा साक्षात् अर्हति ॥ ३० ॥ नोद्धव इति। उद्धवः अण्वपि अणुमात्रमपि तत् मत्तो न्यूनो न भवति यतः प्रभुर्जितेन्द्रियः गुणैः विषयैः नार्दितो न विक्षोभित इत्यर्थः। अतो मत्तुल्यत्वात् मद्वयुनं मद्विषयं ज्ञानं लोकं ग्राहयन् लोकं बोधयन् इह मर्त्यलोके तिष्ठतु ॥ ३१ ॥ एवमिति। एवं सञ्चिन्त्य त्रिलोकगुरुणा शब्दयोनिना वेदप्रवर्तकेन भगवता सन्दिष्टस्तत्त्वोपदेशपूर्वकं बदरीं प्रयाहीत्यादिष्टः। अतस्तद्वियोगमनिच्छन्नपि तदाज्ञया बदर्याश्रममासाद्य समाधिना हरिमीजे ॥ ३२ ॥ विदुर इति त्रयम्। हे कुरुश्रेष्ठ ! विदुरोऽपि उद्धवात् क्रीडया क्रीडार्थम् उपात्तः स्वीकृतो देहो मनुष्यनाट्यं येन तस्य परमात्मनः श्रीकृष्णस्य श्लाघितानि कर्माणि चकाराज्जन्मादि च श्रुत्वा एवमुक्तप्रकारेण धीराणां धैर्यवर्द्धनं विक्लवात्मनामधीरचित्तानामत एव पशूनां पशुवद्विषयैषिणां त्वन्येषां दुष्करतरं तस्य कृष्णस्य देहन्यासं च श्रुत्वा आत्मानं स्वात्मानं कृष्णेन मनसा ईक्षितं चिन्तितं च श्रुत्वा तं भगवन्तमेव ध्यायंस्तत्प्रेम्णा विह्वलो व्याकुलश्च सन् भागवते उद्धवेऽपि ततो गते सति रुरोद ॥३३–३५॥ कालिन्द्या इति। ततश्च भरतर्षभः विदुरः कालिन्द्याः यमुनायाः सकाशात् कतिभिरहोभिः कर्तृभिः सिद्धे निष्पन्ने सति। भावे क्तः। कतिषु अहःसु वृत्तेष्वित्यर्थः। सिद्ध एव विदुर इति श्रीस्वामिपादाः। स्वःसरितं गङ्गां प्रापद्यत प्राप्तः। यत्र गङ्गातीरे हरिद्वारे मित्रासुतो मुनिः मैत्रेय आस्ते ॥ ३६ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायश्चतुर्थे तृतीयस्य व्यधादिमाम् ॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्थोऽध्यायः ॥ ४ ॥

—:०:—

# अथ पञ्चमोऽध्यायः

श्रीशुक उवाच

द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ।
क्षत्तोपसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तः ॥ १ ॥

पञ्चमे महदादीनां सृष्टिं मैत्रेय ऊचिवान् । तेश्च विष्णोः स्तुतिं तत्र श्लोकाः सार्द्धाः खमार्गणाः ( ५० ) ॥
अनुष्टुभां ( ६१ ) सहादैकषष्टिश्चोवाच पञ्चकम् ॥ ५ ॥

द्वारीति । द्युनद्याः गङ्गायाः द्वारि हरिद्वारे आसीनं न तु कर्मव्यग्रम् । अगाधः अपरिच्छिन्नः बोधो यस्य तं मैत्रेयमुपसृत्य तस्य सौशील्यमार्जवादिगुणाः करुणादयस्तैरभितृप्तः । द्वितीयान्तपाठे क्षत्तुः सौशील्यादिभिरभितृप्तं मैत्रेयम् अच्युते हरौ यो भावस्तेन शुद्धः कुरूणाम् ऋषभः विदुरः पप्रच्छ ॥ १ ॥ सुखायेति । लोको जनः सर्वोऽपि सुखाय चकारात् दुःखनिवृत्तये च कर्माणि वाणिज्यादीनि यज्ञादीनि च करोति । तैः कर्मभिः सुखम् अन्यत् दुःखनाशनं तथा उपारमं वैराग्यं वा न विन्दति । किन्तु ततस्तैरेव कर्मभिर्भूयः पुनः पुनः दुःखमेव विन्देत विन्दते, आयासवैगुण्यादिबाहुल्यात् । अतोऽत्र लोके नोऽस्माकं यद्युक्तं कर्तुं योग्यं तद् भगवान् सर्वज्ञो भवान् वदेत् । प्रार्थनायां लिङ् ॥ २ ॥ जनस्येति । नूनं यतः जनार्दनस्य भव्यानि मङ्गलरूपाणि भूतानि भक्ता भवन्तः कृष्णाद्विमुखस्य दैवात् पूर्वपापवशादधर्मशीलस्य अतः सुदुःखितस्य मादृशस्य जनस्यानुग्रहायैव इह लोके चरन्ति । अतो मत्पृष्टमुपायं वद ॥ ३ ॥ तदिति । हे साधुवर्य ! येन वर्त्मना संराधितः भगवान् भक्तियोगेन पूते पवित्रिते पुंसां हृदि स्थितः सन् तत्तत्त्वाधिगमः आत्मापारोक्ष्यं तत्सहितं पुराणमनादिवेदप्रमाणकं ज्ञानं प्रयच्छति तत् शं सुखरूपं वर्त्म मार्गमादिश ॥ ४ ॥ करोतीति । त्र्यधीशः त्रिगुणमायानियन्ता आत्मतन्त्रः स्वाधीनो भगवान् कृतब्रह्माद्यवतारः सन् यानि कर्माणि करोति । अग्रे सृष्टेः पूर्वं निरीहः निष्क्रियो निःस्पृहो वापि स्वयं यथा इदं विश्वं ससर्ज । ततश्च संस्थाप्य स्थितिं रक्षां च कृत्वाऽस्य जगतो वृत्तिं जीविकां विधत्ते सम्पादयति पालयतीत्यर्थः । एतत्सर्वं वर्णयेत्यग्रेतनेनान्वयः ॥ ५ ॥ यथेति । यथा पुनः स्वे स्वकीये खे हृदयाकाशे उदरे यथा इदं विश्वं निवेश्य स्वयं निवृत्ता वृत्तिः सृष्ट्यादिव्यापारो यस्य तादृक् सन् गुहायां योगमायायां शेते । एवमेक एव सन् योगेश्वराधीश्वरो भगवान् तत् जगदनुप्रविष्टः पुनर्देवमनुष्यादिरूपेण बहुधा यथा आसीत् तद्वर्णय ॥ ६ ॥ क्रीडन्निति । द्विजगोसुराणां क्षेमाय मत्स्याद्यवतारभेदैः स्वयं क्रीडन्नेव यानि कर्माणि विधत्ते तानि वर्णय । यतः सुश्लोकाः पुण्यकीर्तयः तेषां मौलेरिव प्रधानस्य हरेश्चरितामृतानि शृण्वतामपि नोऽस्माकं मनो न तृप्यति ॥ ७ ॥ यैरिति । अधिलोकनाथो लोकनाथाधिपतिर्भगवान् यैस्तत्त्वभेदैर्महदादिभिः लोकपालैः सहितान् लोकान् पातालादीन् अलोकान् लोकालोकपर्वताद्बहिर्भागान् अचीक्लृपत् कल्पयामास तद्वर्णय । यत्र येषु लोकादिषु सर्वेषां सत्त्वानां प्राणिनां निकायाः समूहास्तेषां भेदः अधिकृतः तत्तत्कर्माधिकारी तत्तद्भोगाधिकारी च प्रतीतः प्रसिद्ध एव ॥ ८ ॥

येनेति । हे विप्रवर्य ! उत अपि येनापि प्रकारेण विश्वसृक् । कृत्वमार्षम् । आत्मयोनिः स्वतःसिद्धः नारायणः प्रजानां प्राणिनामात्मा स्वभावः तत्कृतानि कर्माणि पुण्यादीनि तत्कृतानि रूपाणि देवमनुष्यादीनि तत्कृताः अभिधाः नामानि तासां भिदां भेदं चकारान्मृत्पाषाणादिभेदं च व्यधत्त अकरोत् । तदेतत् यत्पृष्टं चकारादपृष्टमपि श्रवणार्हं नोऽस्मभ्यं वर्णय ॥ ९ ॥ परावरेषामिति । हे भगवन् ! परे त्रैवर्णिकाः अवरे स्त्रीशूद्रादयस्तेषां व्रतानि धर्माः मया व्याससुखात् अभीक्ष्णं श्रुतानि पर तु यस्तत्र कृष्णकथामृतस्य ओघः पूरः सूचितस्तमाद्रते तं विना तत्र त्वलंबुद्धिर्नास्ति । अतः क्षुल्लमल्पमात्रं सुखमावहन्ति यानि तेषां व्रतानां श्रवणेन अतृप्नुम तृप्ता अभूम । तत्रारुचिर्जातेत्यर्थः ॥ १० ॥ क इति । वो युष्माकं सत्रेषु समाजेषु सूरिभिर्नारदादिभिः ईड्यमानात् तीर्थपदः तीर्थं गङ्गा पादे यस्य तस्य हरेः अभिधानात् कथामृतात् कः पुरुषस्तृप्नुयात् य तीर्थपात् स्वचरितं शृण्वतः पुरुषस्य कर्णस्य नाडीं विवरं तद्द्वारेण हृदयं यातो गतः सन् भवप्रदां जन्मादिहेतुं गेहरतिं गेहाद्यासक्तिं छिनत्ति ॥ ११ ॥ व्यासस्यापि भगवत्कथायामेव तात्पर्यमित्याह—मुनिरिति । ते तव सखा मुनिः कृष्णो व्यासोऽपि भगवद्गुणानां विवक्षुः

मोक्षधर्मान्ते नारायणीयाख्याने वक्तुमिच्छुः सन्नेव । षष्ठी शेषे । भारतमाह । यस्मिन् भारते ग्राम्यसुखानुवादैर्द्वारभूतैरनु पश्चात् नु निश्चितं वा हरेः कथायां बुद्ध्यवतारार्थमेव भारते ग्राम्यसुखानुवादः कृतः । अन्यथा कामिनस्तत्समीपमपि नायास्यन् । नहि तावता तत्रैव तात्पर्यमिति वक्तुं युक्तम् । तदुक्तमितिहाससमुच्चये—"कामिनो वर्णयन् कामं लोभं लुब्धस्य वर्णयन् । नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन् ॥ लोकचित्तावतारार्थं वर्णयित्वाऽत्र तेन तौ । इतिहासैः पवित्रार्थैः पुनरप्यत्र निन्दितौ ॥ अन्यथा घोरसंसारबन्धहेतू जनस्य तौ । वर्णयेत् स कथं विद्वान् महाकारुणिको मुनिः ॥" इति ॥ १२ ॥ सेति । श्रद्दधानस्य पुंसः सा हरिकथा तद्रतिर्वा विवर्द्धमाना अन्यत्र ग्राम्यसुखे विरक्तिं करोति । ततश्च हरेः पादयोरनुस्मृत्या निर्वृतस्य लब्धपरमानन्दस्य समस्तदुःखानामत्ययं विनाशमाशु धत्ते ॥ १३ ॥

तानिति । अघेन पापेन हेतुना हरेः कथायां विमुखान् अत एव शोच्याः पश्चादयः ततोऽपि शोच्यान् अविदो मूर्खान् तान् भारततात्पर्यानभिज्ञान् अनुशोचे शोचामि । तत्रार्थः । अनिमिषः कालात्मा देवः सूर्यः वृथैव वादगतिस्मृतयो वाग्देहमनोव्यापारा येषां तादृशानां येषाम् आयुस्तु क्षिणोति निष्फलत्वेन नाशयति ॥ १४ ॥ तदिति । तत्तस्माद्धेतोः हे कौषारव मैत्रेय ! सर्वकथासु सारं सारभूतां शर्मणः सुखस्य दातुः तीर्थं कीर्तिर्यस्य तस्य हरेः कथामेव पुष्पेभ्य इव उद्धृत्य नोऽस्माकं शिवाय कीर्तय कथय । मधुकरो यथा पुष्पेभ्यो मधूद्धरति तथेति ॥ १५ ॥ विशेषात् कृष्णकथां कीर्त्तयेत्याह—स इति । य ईश्वरः विश्वस्य जन्मस्थिति-संयमार्थे पूर्वं प्रगृहीतसत्त्वादिगुणशक्तिः स एव पुरुषेषु कृतावतारः सन् यानि अतिपूरुषाणि पुरुषान्तरैः कर्तुमशक्यानि कर्माणि चकार तानि मह्यं कीर्त्तय ॥ १६ ॥ स इति । पुंसां निःश्रेयसमेवार्थः प्रयोजनं यस्य । चतुर्थ्यन्तपाठो वा । क्षत्रा विदुरेण एवं पृष्टः स मुनिर्भगवान् कौषारविः कुषारवपुत्रो मैत्रेयस्तं विदुरं बहु मानयन्नाह स्म ॥ १७ ॥ साध्विति । हे साधो ! लोकान् साधु सम्यगनुगृह्णता अतः अधोक्षजे आत्मा मनो यस्य तस्य आत्मनः स्वस्यापि कीर्तिं च प्रसङ्गात् लोके वितन्वता त्वया साधु पृष्टम् ॥ १८ ॥ नैतदिति । हे क्षत्तः ! यत्त्वया अनन्यभावेन एकान्तभक्त्या ईश्वरः हरिश्चित्ते गृहीतस्तदेतत् बादरायणवीर्यजे त्वयि चित्रं न भवति ॥ १९ ॥ माण्डव्येति । प्रजानां संयमनः दण्डयिता भगवान् यम एव माण्डव्यस्य शापात् भ्रातुः विचित्रवीर्यस्य क्षेत्रे क्षेत्रत्वेन गृहीतायां भुजिष्यायां दास्यां सत्यवतीसुतात् व्यासात् त्वं जातोऽसि ॥ २० ॥ भवानिति । सानुगस्य भक्तैः सहितस्य भगवतः हरेः भवान्नित्यं सम्मतः प्रीतिविषयः । यतः वैकुण्ठं व्रजन् भगवान् यस्य तव ज्ञानोपदेशाय मामादिशत् ॥ २१ ॥ अथेति । अथ योगमायया उपबृंहिताः संवर्द्धिताः विश्वस्य स्थितिरुद्भवः अन्तश्च अर्थः स्वरूपं यासां ता भगवल्लीलास्ते तुभ्यम् अनुपूर्वशः सृष्ट्यादिलीलाक्रमेण वर्णयामि ॥ २२ ॥ भगवानिति । यः सृष्टौ नानामतिभिरुपलक्ष्यते सः । यद्वा । अनानात्वस्युपलक्षणः नानामतिभिर्द्रष्टृदृश्यादिमतिभिर्नोपलक्ष्यते । स आत्मनां जीवानामात्मा स्वरूपभूतः विभुः स्वामी च भगवान् अग्रे सृष्टेः पूर्वम् आत्मेच्छा माया तस्या अनुगतो लये इति यद्वा आत्मन एकाकित्वेन अवस्थानेच्छायामनुवृत्तायाम् एक एवासीत् अन्यद् द्रष्टृ-दृश्यादि किञ्चिदपि नासीत्, कारणात्मना सत्त्वेऽपि पृथक् प्रतीत्यभावात् ॥ २३ ॥

स वा इति । वै अवधारणे । स एष एकराट् एक एव राजमानः भगवान् तदा द्रष्टा सन्नपि दृश्यं वस्तु नैवापश्यत् । अतः सुप्ता विलीना मायादयः शक्तयो यस्य तथा न सुप्ता दृक् चिच्छक्तिर्यस्य स भगवान् दृश्याभावे द्रष्टृत्वाभावात् सन्तमप्यात्मान-मसन्तमिव मेने न त्वसन्तमेव मेने । अलुप्तदृक्त्वात् ॥ २४ ॥ सा वै इति । हे महाभाग ! यया शक्त्या विभुर्भगवानिदं विश्वं निर्ममे सा वै सैव द्रष्टृदृश्यानुसन्धानरूपा सदसदात्मिका कार्यकारणरूपा एतस्य संद्रष्टुर्माया नाम शक्तिः ॥ २५ ॥ कालेति । कालरूपया वृत्त्या शक्त्या तु गुणमय्यां क्षुभितगुणायां मायायामधोक्षजः अतीन्द्रियः वीर्यवान् चिच्छक्तिमान् परमात्मा आत्म-भूतेन स्वांशेन पुरुषेण प्रकृत्यधिष्ठातृरूपेण वीर्यं चिदाभासमाधत्त स्थापितवान् ॥ २६ ॥ तत इति । ततः कालेन चोदितात् प्रेरितादव्यक्तात् मायातः विज्ञानात्मा सत्त्वप्रधानत्वाद्विशिष्टज्ञानरूपः सर्वदेहेषु चित्तरूपेणांशेन यो वर्तते इति तमोऽज्ञानं नुदति निरस्यति तादृशः प्रलयगताज्ञानध्वंसकः आत्मनः स्वस्य देहस्थं विश्वमुच्छूनबीजगतसङ्कुरादिरूपं वृक्षमिव व्यञ्जन् व्यञ्जयन् प्रकाशयन् महत्तत्त्वमभवत् । तत्त्वपदं परित्यज्य महतो विशेषणानां पुंस्त्वम् । ततो रजोंशप्राधान्ये क्रियाशक्त्या महत्तत्त्वभेदः सूत्रतत्त्वमभूदित्यपि ज्ञेयम् ॥ २७ ॥ सोऽपीति । स महानपि अंशश्चिदाभासो निमित्तं गुणाः सत्त्वादयः उपादानं कालो गुणक्षोभकः तदधीन आत्मा यस्य सः । अतोऽस्य विश्वस्यात्मा कारणभूता भगवतो दृष्टिः संकल्परूपं ज्ञानं तद्गोचरः सन्नस्य विश्वस्य सिसृक्षया अहङ्कारादिद्वारा स्रष्टुमिच्छया स्वात्मानं व्यकरोत् रूपान्तरमनयत् ॥ २८ ॥ महदिति । विकुर्वाणात् विक्रियमाणात् महत्तत्त्वात् कार्यमधिभूतं कारणमाध्यात्मिकमिन्द्रियं कर्तृ अधिदैवं तेषामात्मा आश्रयः । अतो भूतेन्द्रियमनोमय इति मन इति देवानामुपलक्षणं भूतादीनां कारणभूतः अहङ्कारो व्यजायत उत्पन्नोऽभूत् ॥ २९ ॥ वैकारिक इति अर्द्धम् । वैकारिकः सात्त्विकः तैजसो राजसः तामसश्चेत्येवमहङ्कारस्त्रिधा त्रिविधा ॥ ३० ॥ अहंतत्त्वादिति । विकुर्वाणात् वैकारिकात् सात्त्विकादहंतत्त्वान्मनः अभूत् । ये इन्द्रियाधिष्ठातारो देवास्तेऽपि वैकारिकाः सात्त्विकाहङ्कारकार्यभूताः । यतो येभ्यो देवेभ्यः । अर्थानां शब्दस्पर्शादीनामभिव्यञ्जन-

मुपलम्भो भवति ॥ ३९ ॥ तैजसानीति । ज्ञानमयानि कर्ममयानि चोभयविधान्यपीन्द्रियाणि तैजसानि राजसाहङ्कारकार्याण्येव ज्ञानमयानां ज्ञानेन्द्रियाणां सात्त्विकत्वशङ्का मा भूदित्येवकारः । तामसोऽहङ्कारो भूतसूक्ष्मस्य शब्दतन्मात्रस्यादिः कारणम् । यतः शब्दात् आत्मनो ब्रह्मणो लिङ्गं स्वकार्यशब्दद्वारा हृदयाकाशतया वा प्रमापकं खमाकाशमभूत् । यद्वा । लिङ्गं शरीरम् "आकाशशरीरं ब्रह्म" इति श्रुतेः ॥ ३२ ॥ कालेति । कालो माया अंशश्चिदाभासस्तेषां योगेन सहितं नभो यदा भगवद्वीक्षितमितोऽग्रे सृष्टिर्भवत्विति भगवत्संकल्पविषयोऽभूत्तदा नभसः सकाशात् स्पर्शमनुसृतमुद्भूतम् । क्लैब्यमार्षम् । तदपि विकुर्वत् विक्रियमाणं सत् अनिलं पवनं निर्ममे । एवं सर्वत्र तन्मात्रद्वाराधिभूतोत्पत्तिर्ज्ञेया ॥ ३३ ॥

अनिल इति । नभसा सहान्वितः स्वयं चोरुबलान्वितश्च अनिलोऽपि यदा विकुर्वाणो विक्रियमाणो जातस्तदा रूपतन्मात्रं रूपं तन्मात्रा सूक्ष्मावस्था यस्य तत् रूपतन्मात्रद्वारेत्यर्थः । लोकस्य लोचनं प्रकाशकं ज्योतिस्तेजः ससर्ज ॥ ३४ ॥ अनिलेनेति । नभआदीनामप्युपलक्षणमेवमग्रेऽपि नभोऽनिलाभ्यां तद्गुणाभ्यां शब्दस्पर्शाभ्यां स्वगुणेन रूपेण चान्वितं ज्योतिर्भगवद्वीक्षितं भगवता सङ्कल्पेन प्रेरितं सत् कालादियोगतश्च हेतुतो विकुर्वच्च सत् रसमयं रसतन्मात्रकमम्भो जलमाधत्त असृजदित्यन्वयः । भगवद्वीक्षणकालमायांशयोगा यत्र नोक्तास्तत्रापि सर्वत्रान्वेतव्याः ॥ ३५ ॥ ज्योतिषेति । ज्योतिषेत्युपलक्षणम् । नभआदिभिस्तद्गुणैः शब्दादिभिः स्वगुणेन रसेन चानुसंसृष्टमन्वितं ब्रह्मणा भगवता वीक्षितं कालादियोगतश्च हेतुतो विकुर्वत् अम्भो गन्धगुणां महीमाधात् गन्धतन्मात्रद्वारा भूमिम् असृजत् । ३६ ॥ भूतानामिति । हे भव्य मङ्गलात्मन् विदुर ! भाव्येति पाठे भाव्यं कार्यं यत् अवरावरमिति समस्तं बोध्यम् । नभआदीनां भूतानां मध्ये यद्यदवरमवरं कार्यं तेषां परानुसंसर्गात् कारणान्वयात् यथासङ्ख्यं या या सङ्ख्या तथा गुणान् विदुरिति वीप्सायामव्ययीभावः । उत्तरोत्तरमधिकान् गुणान्विदुः । तथा हि खे शब्द एक एव गुणः, अन्यान्वयाभावात् । वायौ तु शब्द आकाशस्यान्वयात्, स्वस्य स्पर्शश्च । तेजसि खवाय्वोः शब्दस्पर्शौ स्वस्य रूपम् । अम्भसि खवायुतेजसां शब्दस्पर्शरूपाणि स्वस्य रसः । भूमौ खवायुतेजोऽम्भसां शब्दस्पर्शरूपरसाः स्वस्य गन्ध इति ॥ ३७ ॥ एते इति । विष्णोः कलाः अंशभूताः काललिङ्गं विक्षतिः मायालिङ्गं विक्षेपः भगवदंशचिदाभासलिङ्गं चेतना तानि विद्यन्ते येषु ते तथा एते महदाद्यभिमानिनो देवाः नानात्वात् समत्वेन परस्परमसंबन्धात् स्वोचितक्रियायां ब्रह्माण्डरचनायामनीशा असमर्थाः । अतः सामर्थ्यलाभाय प्राञ्जलयः सन्तो विभुं भगवन्तं प्रोचुस्तुष्टुवुः ॥ ३८ ॥ नमामेति । हे देव ! प्रपन्नानां ये तापाः तेषामुपशमे निरासे आतपत्रं छत्रमिव वर्त्तमानं ते तव पदारविन्दं नमाम । प्रार्थने लोट् । यस्य पदारविन्दस्य मूलं तलमेव केत आश्रयो येषां ते यतयः अञ्जसा एव उरु अधिकमपि संसारस्य दुःखं बहिर्दूरत एव उत्क्षिपन्ति त्यजन्ति । ब्रह्माण्डोत्पत्तेः प्राक् दुःखस्याभावेऽपि धाता यथा पूर्वमकल्पयत् इति सिद्धान्तानुसारेणोक्तिः ॥ ३९ ॥ धातरिति । हे धातः ईश ! हे भगवन् ! यत् यस्मात् अस्मिन् भवे संसारे तापत्रयेणाभिहताः जीवा आत्मन् आत्मनि । ङ्लिुक् छान्दसः । सम्बोधनं वा । शर्म सुखं न लभन्ते । अतो हेतोर्वयं सविद्यां ज्ञानयुक्तां ज्ञानप्रदामिति यावत् । तवाङ्घ्रिच्छायाम् आश्रयेम । ऋते यदस्मिन्निति पाठे यत् ऋते यत् पदाम्बुजं विना तापत्रयेणाभिहता इति ॥ ४० ॥

मार्गन्ति इति । विविक्ते एकान्ते स्थिता ऋषयो मन्त्रद्रष्टारः ते तव मुखपद्मम् एव नीडं स्थानं येषां तैः त्वन्मुखनिवासैः छन्दःसुपर्णैः वेदपक्षिभिर्यस्य शास्त्रप्रसिद्धस्य तव यत्पदं मार्गन्ति अन्वेषयन्ति । यथा निरास्पदे देशे विश्रामार्थं वृक्षतलान्वेषिणो जना इतस्ततश्चरतां पक्षिणामनुपदं धावन्तः स्वनीडं प्रविशतां तेषामास्पदस्य वृक्षस्य तलं प्राप्नुवन्ति तथा त्वन्मुखादुद्गतानां पुनस्त्वय्येव पर्यवसितानां वेदानां तात्पर्यमवधार्य तेनैव त्वां भजन्तस्त्वां प्राप्नुवन्ति । तत् तीर्थानि पादे यस्य तस्य तीर्थपदः तव अघमर्षं पापनाशकमुदमुदकं यासां सरितां तासु वरायाः श्रेष्ठायाः गङ्गायाः पदमुद्गमस्थानं पदं चरणं वयं प्रपन्नाः शरणमागताः । एतेनाघमर्षेत्यादिविशेषणेन गङ्गामनुसेवमाना अपि तदुद्गमस्थानं त्वत्पदं प्राप्नुवन्तीत्युक्तम् ॥ ४१ ॥ यदिति । श्रद्धया श्रुतवत्या श्रवणपूर्विकया भक्त्या संमृज्यमाने संशोध्यमाने हृदये यत् पदाम्बुजमवधाय ध्यात्वा वैराग्यं बलं यस्य तेन ज्ञानेन स्वानुभवेन धीराः स्वस्था भवन्ति । तत्ते तवाङ्घ्रिसरोजरूपं पीठमाश्रयं व्रजेम ॥ ४२ ॥ विश्वस्येति । हे ईश ! विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य ते तव पदाम्बुजं स्मृतं सत् स्वपुंसां स्वभक्तानामभयं सर्वभयरहितमात्मानमेव प्रयच्छति ददाति । तत्पदाम्बुजं वयं सर्वे शरणं व्रजेम ॥ ४३ ॥ यदिति । हे भगवन् ! सानुबन्धे पुत्रदारादिशय्याद्युपकरणयुते असति दुष्टे देहगेहे मनुष्याः अहंममेदमित्याग्रूढो निरूढो दुराग्रहो दुरभिमानो येषां तेषां पुंसां पुर्यां हृदि अन्तर्यामितया नित्यं वसतोऽपि तव यच्चरणारविन्दं सुदूरमिव भवति तत् ते पदाब्जं भजेम ॥ ४४ ॥ तानिति । हे परेश ! हे उरुगाय ! अथो ये असद्वृत्तिभिः बहिर्मुखैरक्षिभिरिन्द्रियैः पराहृतं दूरमाकृष्टमन्तर्मनो येषां ते तथाभूता भवन्ति तान् ये ते तव पदयोर्न्यासः गमनं तस्य यो विलासः प्रभावस्तेन या लक्ष्मीर्ज्ञानादिसम्पत्तस्याः संबन्धिन इति शेषः । ते नूनं न पश्यन्ति लक्ष्यानिति पाठे ये असद्वृत्तिभिरक्षिभिः पराहृतान्तर्मनसः ते तव पदन्यासविलासो लक्ष्यो येषां तान् भक्तान्न पश्यन्ति इत्यन्वयः ।

अथो इत्यत्र पथ इति लक्ष्म्या इत्यत्र लक्ष्यानिति च पाठे त्वत्पदन्यासविलासो लक्ष्यो येषां तान् पथः मार्गभूतान् साधून् श्रवणादीन् वा न पश्यन्ति ॥४५॥ पानेनेति द्वयम्। हे देव ! ते तव कथारूपायाः सुधाया पानेन श्रद्धयाऽन्तःस्थापनेन प्रवृद्धया भक्त्या ये विशदाशयास्ते वैराग्ये सारं बलं यस्य तं बोधं ज्ञानं प्रतिलभ्य यथा अञ्जसा सुखेनैव अकुण्ठधिष्ण्यं कालादिप्रतिहतिरहितस्थानं त्वां वैकुण्ठं वा अन्वीयुः प्रापुः। तथापरे च अन्येऽपि धीरा जितेन्द्रिया आत्मनोऽन्तःकरणस्य समाधिः स्थैर्यं स एव योग उपायस्तद्बलेन बलिष्ठामपि प्रकृतिं मायां जित्वा पुरुषं त्वामेव विशन्ति परन्तु तेषां श्रमः स्यात्। ते तव सेवया सेवादिभक्तिमार्गेण तु श्रमो न भवति ॥ ४६-४७ ॥ तत्ते इति। तत्तस्मात्ते त्वदीयाः सेवका वयं त्वयैव लोकसिसृक्षयाऽद्य त्रिभिरात्मभिः सत्त्वादिभिः स्वभावैः सृष्टाः स्मेति। अतस्त्रिगुणसृष्टत्वेन विरुद्धस्वभावत्वात् सर्वे वियुक्ताः परस्परममिलिताः सन्तो यदर्थं सृष्टास्तत्स्वविहारतन्त्रं त्वत्क्रीडोपकरणं ब्रह्माण्डं ते तुभ्यं प्रतिहर्त्तवे प्रतिहर्तुं समर्पयितुं न शक्नुमः। अतः स्वचक्षुः परिदेहि। इति तुर्येण संबन्धः। प्रतिहर्त्तवे इति तुमर्थे तवेप्रत्ययश्छान्दसः ॥ ४८ ॥

यावदिति। हे अज ! यथा वयं काले तत्तदवसरे ते तुभ्यं बलिं भोगं यावत्साकल्येन हराम समष्टिव्यष्ट्यात्मकं ब्रह्माण्डं निर्माय समर्पयाम। यथा येन प्रकारेण च वयमप्यन्नमदाम भक्षयाम। कर्मकराणामिवान्नमात्रमस्माकमैश्वर्येण भोगस्तु तवैवेत्युक्तम्। यथा तत्र च स्थितास्त इमे उत्पद्यमानाः लोकाः प्राणिन उभयेषां तव चास्माकं च बलिं हरन्तः समर्पयन्तः आराधयन्तः स्वयमप्यनूहा निर्विघ्नाः भगवानन्नं दास्यति न वेति तर्कशून्याः संशयशून्या वा। अन्नं कर्मफलमदन्ति भक्षयेयुस्तथा नः स्वचक्षुः परिदेहि ॥ ४९ ॥ त्वमिति। हे देव ! सान्वयानां सकार्याणां सकारणानां वा सुराणां नोऽस्माकं त्वमेवाद्यः कारणभूतः कूटस्थः निर्विकारः अजः पुराणः पुरुषः अधिष्ठाता चासि। यतः त्वमेव गुणानां सत्त्वादीनां कर्मणां जन्मादीनां च योनौ कारणभूतायां शक्त्यां मायायां कविं विज्ञं महत्तत्त्वरूपं रेतो गर्भमादधे निहितवानसि। अतः स्वचक्षुः परिदेहि ॥ ५० ॥ तत इति। हे आत्मन् ! हे देव ! तस्मात् सत्प्रमुखा महदादयो वयं यदर्थं बभूविम जातास्तत् किं ते कार्यं करवाम। अतः क्रियार्थे ब्रह्माण्डरचनार्थं यस्मात्त्वत्त एवानुग्रहो येषां तेषामस्माकम्। यद्वा क्रियार्थे इयान् एतावानेवानुग्रहो येषामस्माकमित्येकपदं वा तेषां नोऽस्माकं शक्त्या सह स्वचक्षुर्ज्ञानं परिदेहि प्रयच्छ। त्वदीयज्ञानक्रियाशक्तिभ्यामेव वयं सृष्टौ क्षमा नान्यथेत्यर्थः ॥ ५१ ॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चमोऽध्यायः ॥ ५ ॥



# अथ षष्ठोऽध्यायः

ऋषिरुवाच

इति तासां स्वशक्तीनां सतीनामसमेत्य सः। प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः ॥ १ ॥

षष्ठे तु महदाद्यैश्च सृष्टिमाह विराट्तनोः। आधिदैवाधिभेदं च तत्र श्लोका नवाग्रयः ॥

उवाचेत्येकमर्द्धाढ्या नवरामा अनुष्टुभः ॥ ६ ॥

इतीति द्वयम्। उरुक्रमः अनन्तलीलः स ईश्वरः एवम् असमेत्य अमिलित्वा सतीनां वर्तमानानां प्रसुप्तानि लोकतन्त्राणि विश्वरचना जीवोपकरणानि वा यासां तासां स्वशक्तीनां महदादीनां गतिं दशामसामर्थ्यं निशाम्य दृष्ट्वा तदा कालेन संज्ञा उद्बोधो यस्याः कालयति क्षोभयति स्वकार्याणि वा कालसंज्ञा प्रकृतिः तां देवीं देवस्य स्वस्य सम्बन्धिनीं शक्तिं बिभ्रद् धारयंस्त्रयोविंशतितत्त्वानां महदहङ्कारपञ्चमहाभूतपञ्चतन्मात्रैकादशेन्द्रियरूपाणां गणं समूहं युगपत् एकदैवाविशत् अन्तर्यामितया अनुप्रविष्टोऽभूत् ॥ १–२ ॥ स इति। स भगवांस्तत्रानुप्रविष्टः सन् चेष्टारूपेण कालाख्येन क्रियाशक्त्या वा सुप्तं वासनात्मकेन स्थितं प्राणिकर्म प्रबोधयन् फलोन्मुखीकुर्वन् भिन्नं स्थितं तं गणं संयोजयामास। यथोचितं परस्परं मिलितं चकार ॥ ३ ॥ प्रबुद्धेति। प्रबुद्धं कर्म प्राण्यदृष्टं स्वक्रियाशक्तिर्वा यस्य स त्रयोविंशतिको गणः दैवेन ईश्वरेण प्रेरितः सन् स्वाभिर्मात्राभिः अवयवैः पुरुषं विराड्देहम् अजनयत् ॥ ४ ॥ विराड्जननप्रकारं दर्शयति—परेणेति। मात्रया अंशेन स्वस्मिन् विशता अनुप्रविष्टेन परेण भगवता हेतुना यस्मिंश्चराचराः स्थावरजङ्गमात्मका लोकाः व्यष्टिविराडात्मकाः कार्यत्वेनावस्थिताः स विश्वसृजां त्रयोविंशति-तत्त्वानां गणः अन्योन्यं परस्परमासाद्य प्रधानगुणभावं प्राप्य मात्रया स्वांशेन न तु सर्वात्मना चुक्षोभ ब्रह्माण्डरूपगर्भात्मना परिणतः अभूत्। समष्टिविराडेव बालकोऽभूत्। तङ्भाव आर्षः। बालो मातृकुक्षेर्निर्गत्य बाल्यपौगण्डाद्या अवस्थाः प्राप्तोऽपि ब्रह्माण्डबालस्तु मायाकुक्षावेव षष्टिकशालिरिव तिष्ठन् बाल्याद्याः मरणान्ता दशाः प्राप्नोति ॥ ५ ॥ हिरण्मय इति। अप्सु गर्भोदकेषु वर्त्तमाने आण्डकोशे ब्रह्माण्डे हिरण्मयः प्रकाशबहुलः सुप्रसिद्धः समष्टिपुरुषोऽधिपुरुष इत्युक्तः। सर्वैर्देवतिर्यगादिभिः सत्त्वैरनुशायिभिः प्राणिभिरुपबृंहितः सहितः सहस्रपरिवत्सरान् बहुवर्षकालपर्यन्तमुवास, अत्राप्सूवासेत्यनेनाण्डकोशोत्पत्तेः। पूर्वमपां स्थित्यवगमात् उदाप्लुतं विश्वमिदं तदासीदिति वक्ष्यमाणत्वाच्चावरणजलसृष्टेरण्डोत्पत्तेः पूर्वमवगन्तव्या ॥ ६ ॥ व्यष्टिशरीरोत्पत्तिमारभते—स वै इति। देवकर्मात्मशक्तिमान् देवशक्तिर्भगवदंशश्चिच्छक्तिः कर्मशक्तिः क्रियाशक्तिः आत्मशक्तिः जीवरूपा भोक्तृशक्तिस्तद्वान् स वै प्रसिद्धः विश्वसृजां गर्भः कार्यरूपो विराट् आत्मना स्वयमेवात्मानमेकधा दशधा त्रिधा वक्ष्यमाणरीत्या विबभाज विभक्तं कृतवान्। तत्र देवशक्तिर्हृदयावच्छिन्नचैतन्यरूपेणैकधा क्रियाशक्तिः प्राणरूपेण दशधा आत्मशक्तिरध्यात्मादिभेदेन त्रिधा ॥ ७ ॥ एष इति। हि यस्मादेष विराट् अशेषसत्त्वानां सर्वव्यष्टिजीवानामात्मा समष्टिरूपत्वात् परमात्मनोंऽशः जीवः तथा परमात्मनः आद्योऽवतारः अवतारत्वोक्तिः नारायणाविर्भावाभिप्रायेण। यत्र विराड्विग्रहेऽसौ भूतग्रामः स्थावरजङ्गमात्मकं विश्वं विभाव्यते दृश्यते ॥ ८ ॥ एकधा दशधा त्रिधेत्युक्तमेव शरीरविभागं दर्शयति—साध्यात्म इति। आत्मानमधिकृत्य वर्त्तन्त इत्यध्यात्मानीन्द्रियाणि तत्सहितः साध्यात्मः विराडिति। सर्वत्र भूतान्यधिकृत्य वर्त्तन्त इत्यधिभूता व्यष्टिदेहास्तत्सहितः साधिभूतः। देवानामादित्यादीनां समूहोऽधिदैवं तत्सहितः साधिदैव एवं विराट् त्रिधा जातः। "प्राणोऽपानः समानश्च उदानो व्यान एव च। नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः॥" इति वृत्तिभेदेन विराट्प्राणो दशविधः। तत्र प्राणः प्राक्क्रमणो नासाग्रवर्ती। अपानोऽवाक्क्रमणः पाय्वादिस्थानवर्त्ती। समानो भुक्तपीतान्नादिसमीकरणः शरीरमध्यवर्त्ती। उदानः ऊर्ध्वोत्क्रमणः कण्ठवर्त्ती। मृत्युहेतुः व्यानो विष्वक्क्रमणः सकलशरीरवर्ती। हस्तपादाद्याकुञ्चनप्रसारणादिहेतुः। "उद्गारे नाग आख्यातः कूर्म उन्मीलने स्थितः। कृकरः शोषणे ज्ञेयो देवदत्तो विजृम्भणे। न जहाति मृतं चापि सर्वव्यापी धनञ्जयः।" इति प्राणादीनां स्थानं कार्यं च ज्ञेयम्। हृदयेन हृदयावच्छिन्नचैतन्यरूपेण चैकधा ॥ ९ ॥ स्मरन्निति। अधोक्षजः इन्द्रियागोचरः ईशः विश्वसृजां महदादीनां यावद्बलिं तेजो हरामेत्यादिना विज्ञापितं स्मरन्नेषां विवृत्तये विविधवृत्तिलाभाय स्वेन तेजसा चिच्छक्त्या विराजमतपत् एवं करिष्यामीत्यालोचितवानित्यर्थः। "यस्य ज्ञानमयं तपः" इति श्रुतेः ॥ १० ॥

अथेति। अथालोचनानन्तरमभितप्तस्य भगवतालोचितस्य विराजः शरीरे आदित्यादिदेवानां कति चायतनानि स्थानानि निरभिद्यन्त पृथगभूवन् तानि गदतो मे मत्तस्त्वं शृणु ॥ ११ ॥ तस्येति। तस्य समष्टिजीवस्य निर्भिन्नं विभक्तमास्यं पदं मुखरूपं स्थानं स्वांशेन स्वाधिष्ठेयभूतेन वाचा वागिन्द्रियेण सह लोकपालः अग्निराविशत्। यया वाचाऽसौ जीवो वक्तव्यं प्रतिपद्यते शब्दमुच्चारयतीत्यर्थः। एवं सर्वत्र यन्निर्भिन्नं द्वितीयान्तं तदधिभूतमधिष्ठानं यदग्न्यादिप्रथमान्तं तदधिदैवम्। यद्वागादितृतीयान्तं तदध्यात्मम्। यत्पुनर्द्वितीयान्तं क्वचिच्च षष्ठ्यन्तं प्रतिपत्तव्यं तदप्यधिभूतं विषयः ॥ १२ ॥ निर्भिन्नमिति। हरेः हरितयोपास्यस्य विराजः निर्भिन्नं पृथग्विभक्तं तालुस्थानं लोकपालः वरुणः अंशेन स्वाधिष्ठेयेन जिह्वया इन्द्रियेण सहाविशत्। यया जिह्वयाऽसौ जीवः मधुरादिरसं प्रतिपद्यते अनुभवति ॥१३॥ निर्भिन्ने इति। विष्णोर्विराजो नासे अधिष्ठानभूते निर्भिन्ने तत्पदं स्वस्थानमंशेन स्वाधिष्ठेयेन घ्राणेनेन्द्रियेण सहाश्विनावाविशताम्। यतो येन घ्राणेन गन्धस्य सुगन्धदुर्गन्धादेः प्रतिपत्तिर्ज्ञानं भवेत् ॥१४॥ निर्भिन्ने इति। विभोर्विराजः अक्षिणी स्थाने निर्भिन्ने लोकपालः त्वष्टा आदित्यः अंशेन स्वाधिष्ठेयेन चक्षुषेन्द्रियेण सहाविशत्। यतो येन चक्षुरिन्द्रियेण नीलपीतादिरूपाणां प्रतिपत्तिर्ज्ञानं भवेत् ॥ १५ ॥ निर्भिन्नानीति। अस्य विराजो निर्भिन्नानि चर्माणि लोकपालोऽनिलः पवनः स्वांशेन प्राणेन प्राणवत्कृत्स्नदेहव्यापिना त्वगिन्द्रियेण सहाविशत्। येन त्वगिन्द्रियेणासौ जीवः संस्पर्शं मृदुत्वकठिनत्वशैत्योष्णत्वादिज्ञानं प्रतिपद्यते ॥ १६ ॥ कर्णाविति। अस्य विराजः कर्णौ निर्भिन्नौ तत्स्वं धिष्ण्यं स्वस्थानं स्वांशेन श्रोत्रेन्द्रियेण सह दिशो देवताः विविशुः। येन श्रोत्रेण शब्दस्य सिद्धिं ज्ञानं प्रपद्यते प्राप्नोति ॥ १७ ॥ त्वचमिति। अस्य विराजो विनिर्भिन्नां त्वचं धिष्ण्यमाश्रयमंशेनेन्द्रियेण रोमभिः सह ओषधीः ओषधयः। पूर्वसवर्णदीर्घ आर्षः। विविशुः। यैः रोमभिरिन्द्रियैरसो जीवः कण्डूं प्रतिपद्यते जानाति। त्वच्यधिष्ठाने इन्द्रियद्वयं तत्र त्वगिन्द्रिये अनिलो देवता स्पर्शो विषयः, रोमेन्द्रिये ओषध्यो देवता विषयस्तु कण्डूः। तत्र चायं नामभेदो देवताभेदश्च द्वितीयस्कन्ध एव व्याख्यातः ॥ १८ ॥ मेढ्रमिति। तस्य विराजो विनिर्भिन्नं मेढ्रं स्वधिष्ण्यं स्वस्थानं कः प्रजापतिर्देवता स्वांशेन रेतसा रेतउपलक्षितोपस्थेन्द्रियेण सहोपाविशत् येनोपस्थेन्द्रियेणासौ जीव आनन्दं रतिसुखं प्रतिपद्यते प्राप्नोति ॥ १९ ॥ गुदमिति। पुंसो विराजो विनिर्भिन्नं गुदं स्थानमंशेन पायुना इन्द्रियेण सह लोकेशो मित्र आविशत्। येन पायुनाऽसौ जीवः विसर्गं पुरीषत्यागं प्रतिपद्यते ॥ २० ॥ हस्ताविति। अस्य विनिर्भिन्नौ हस्तौ स्वर्पतिः स्वर्गपतिरिन्द्रः वार्तया क्रयविक्रयादिशक्त्या अंशेनेन्द्रियेण सहाविशत्। यया शक्त्या पुरुषो जीवो वृत्तिं प्रपद्यते जीविकां सम्पादयति ॥ २१ ॥

पादाविति। अस्य विनिर्भिन्नौ पादौ स्वांशेन गत्या गत्याख्यपादेन्द्रियेण सह लोकेशो विष्णुराविशत्। यया गत्याख्यया शक्त्या पुरुषः प्राप्यं देशान्तरं प्रपद्यते ॥ २२ ॥ बुद्धिमिति। क्वाचित्कः श्लोकः। अत एव सत्त्वं चास्येति श्लोके बुद्धिचित्तयोरभेदेन निर्देश इति स्वामिपादाः। अस्य विराजश्च विनिर्भिन्नां बुद्धिं बुद्ध्यास्पदं गोलकं हृदयैकदेशम्। धिष्ण्यं स्थानं बोधेन निश्चयात्मकज्ञानजननसामर्थ्येन सह वागीशो ब्रह्माऽविशत्। यतो येन बोधेन बोद्धव्यस्य निश्चेतव्यस्य प्रतिपत्तिनिश्चयात्मकं ज्ञानं भवेत् ॥२३॥ हृदयमिति। अस्य हृदयं कमलाकारं निर्भिन्नं तद्धिष्ण्यं स्थानं मनसा अंशेनेन्द्रियेण सह चन्द्रमा आविशत्। येन मनसा असौ जीवः विक्रियां सङ्कल्पादिरूपां प्रतिपद्यते प्राप्नोति ॥ २४ ॥ आत्मानमिति। अस्य विराजः निर्भिन्नमात्मानमहङ्कारास्पदं गोलकं हृदयैकदेशस्थानं कर्मणां देहाद्यहंवृत्त्या सह अभिमानः अभिमन्यतेऽनेनेत्यभिमानो रुद्र आविशत्। येन कर्मणाऽसौ जीवः कर्तव्यमभिमानविषयं देहादि प्रतिपद्यते। अहमिति मत्वा नानाविधं कर्म करोति ॥ २५ ॥ सत्त्वमिति। बुद्धिचित्तयोरभेदेन निर्देशः। अस्य विराजः सत्त्वं बुद्धिः चित्तं च निर्भिन्नं धिष्ण्यं स्थानं चित्तेनांशेन चेतनया सह महान् चैत्यः ब्रह्मा विष्णुर्वा उपाविशत् येन चित्तेनांशेनासौ जीवः विज्ञानं चेतनां स्मरणं च प्रतिपद्यते लभते ॥२६॥ शीर्ष्ण इति। अस्य विराजः शीर्ष्णः सकाशात् द्यौरुदपद्यत। एवं पद्भ्यां धरा नाभेः सकाशात् खमन्तरिक्षलोकः उदपद्यत। येषु द्युधराख्येषु लोकेषु गुणानां सत्त्वरजस्तमसां वृत्तयः परिणामरूपाः वृत्तिमन्तो वा सुरादयः देवमनुष्यादयः प्रतीयन्ते उत्पद्यन्ते ॥ २७ ॥ एतदेव प्रपञ्चयति—आत्यन्तिकेनेति द्वाभ्याम्। आत्यन्तिकेन ऊर्जितेन। औत्पत्तिकेनेति पाठे नैसर्गिकेणेत्यर्थः। सत्त्वेन स्वभावेन हेतुना देवाः दिवं स्वर्गं प्रपेदिरे प्राप्ताः। पणन्ते व्यवहरन्ति इति पणयो मनुष्याः ये चताननुसृत्य वर्त्तन्ते तदुपकरणभूताः गवादयस्ते च सर्वे रजःस्वभावेन हेतुना धरां प्रपेदिरे ॥२८॥ तार्त्तीयेनेति। तार्त्तीयेन तृतीयं तम[illegible]दीयेन तामसेन स्वभावेन उभयोर्द्यावापृथिव्योरन्तरं मध्यस्थं व्योम तदेव भगवतो विराजो नाभि[illegible]ं ये रुद्रस्य पार्षदानां भूतप्रेतादीनां गणास्त आश्रिताः स्थिताः ॥ २९ ॥ मुखत इति। हे कुरूद्वह! ब्रह्म वेदः अध्यापनयाजनादिना ब्राह्मणस्य वृत्तिः पुरुषस्य विराजो मुखतोऽवर्त्तत प्रवृत्तम्। यस्तु उन्मुखत्वान्मुखोद्भवत्वात् वर्णानां मध्ये मुख्यः गुरुः सन्मार्गोपदेष्टा च ब्राह्मणः सोऽपि मुखतोऽभूत्। स्ववृत्त्या सह ब्राह्मणो मुखाज्जात इत्यर्थः। एवमग्रेऽपि ॥ ३० ॥

बाहुभ्य इति। ते क्षत्रं क्षत्रियधर्मः पालनरूपा वृत्ति[illegible]स्य विराजः बाहुभ्योऽवर्त्तत। क्षत्रियश्च तदनुव्रत तत् क्षत्रं वृत्तिमनुसृतः यद्वा तद्बाहुभ्यो जातः यः पौरुषः पुरुषस्य हरेः जातः सन् कण्टकाश्चोरादयस्तेभ्यो जातं यत् क्षतमुपद्रवस्तस्मात् सर्व-

वर्णान् त्रायते ॥ ३१ ॥ विश इति । तस्य विभोर्विराजः ऊर्वोः उरुभ्यां विशः कृष्यादिव्यवसायाः लोकस्य वृत्तिकरीः जीविकाहेतवः । पूर्वसवर्णदीर्घ आर्षः । अवर्तन्त प्रवृत्ताः । वैश्यश्च तदुद्भव ऊरुभ्यां जातः । यो वैश्यः सर्वेषां नृणां वार्तां जीविकां स्ववृत्त्या समवर्तयत् सम्पादितवान् ॥ ३२ ॥ पद्भ्यामिति । भगवता विराजः पद्भ्यां शुश्रूषा सेवा जज्ञे । तस्यां निमित्तभूतायां सेवायां सत्यां धर्मस्य सिद्धये शूद्रकृतसेवया अन्येषां शूद्रस्य च धर्मनिर्वाहार्थं पुरा पूर्वमेव शूद्रोऽपि पद्भ्यामेव जातः । सेवया यद्वृत्त्या हरिस्तुष्यते । तदार्षः ॥ ३३ ॥ एत इति । यतः यस्मात् हरेः सकाशात् वृत्तिभिः जीविकाभिः सह जाताः, अत एते ब्राह्मणादयश्चत्वारो वर्णाः स्वधर्मेण श्रद्धया आत्मनोऽन्तःकरणस्य विशुद्ध्यर्थं स्वगुरुं परमपूज्यं हरिं यजन्ति आराधयन्ति ॥ ३४ ॥ एतदिति । हे क्षत्तः ! दैवं कालः कर्म अदृष्टम् आत्मा स्वभावः दैवादिरूपाणि शक्तितयाऽस्य सन्तीति दैवकर्मात्मरूपी तस्य भगवतो योगमायाया बलस्य सृष्ट्यादिसामर्थ्यस्य उदयः प्राकट्यं यस्मिंस्तदेतद्भगवच्चरितं विराड्रूपं वा उपाकर्तुं साकल्येन वर्णयितुं कः श्रद्दध्यात् इच्छेत् । "श्रद्धाऽऽस्तिक्येऽभिलाषे च" इति हैमः । वर्णनेच्छाप्यशक्या वर्णनं तु दूरापास्तम् ॥ ३५ ॥ अथापीति । अङ्ग हे विदुर ! अथापि तथापि अन्यस्य हरिव्यतिरिक्तस्याभिधा अभिधानं तया असतीं दूषितां स्वां गिरं वाचं सत्कर्तुं पवित्रीकर्तुं यथाश्रुतं यथा गुरुमुखाच्छ्रुतं तत्रापि यथामति स्वबुद्ध्यनुसारेण हरेः कीर्तिं कीर्त्तयामि ॥ ३६ ॥ एकान्तेति । सुश्लोकाः उत्तमयशसस्तेषां मौलिभूतस्य हरेः गुणवादं गुणकथनमेव पुंसां वचसः एकान्तलाभं मुख्यं फलं विज्ञा आहुः । तथा विद्वद्भिरुपाकृतायामुपवर्णितायां तत्कथासुधायामुपसंप्रयोगं सन्निधौ समर्पणेन तच्छ्रवणमेव श्रुतेः श्रोत्रेन्द्रियस्य एकान्तलाभं परमं फलमाहुः ॥ ३७ ॥ आत्मन इति । हे वत्स ! आत्मनो हरेर्महिमा योगेन विपक्वया धियापि संवत्सरसहस्रान्तेऽपि आदिना कविना ब्रह्मणापि किमवसितः किं ज्ञातः । इति काक्वुक्त्या एतावानिति न ज्ञात एवेति । यद्वा । अवसित इत्यत्र अवेत्यस्याकारस्य वष्टि भागुरिरिति लोपे नञा अवसित इति न ज्ञात इत्यर्थः ॥ ३८ ॥ अत इति । अतो भगवतो माया मायिनां ब्रह्मादीनामपि मोहिनी । यत् यस्मात् आत्मा परमात्मा स्वयमपि आत्मवर्त्म स्वमायाविस्तारं न वेद । अपरे ब्रह्मादयो न विदुरित्यत्र तु किमु वक्तव्यम् । न चैवं सर्वज्ञत्वहानिः शङ्क्या, अनन्तवस्तुनः अन्ताभावात्तदज्ञानस्य सर्वज्ञताहान्यप्रयोजकत्वात् ॥ ३९ ॥ यत इति । यतः यस्य ज्ञानाय प्रवृत्ता वाचोऽपि मनसा सह तमप्राप्यैव निवर्त्तन्ते तथा अहम् अहङ्काराधिष्ठाता रुद्रोऽपि इमे देवा इन्द्रियाधिष्ठातारः अन्ये च सर्वे तमज्ञात्वा निवर्त्तन्ते तस्मै भगवते नमः ॥ ४० ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायस्तृतीयषष्ठेऽध्याये व्यधादिमाम् ॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां षष्ठोऽध्यायः ॥ ६ ॥

---:❀:—

## अथ सप्तमोऽध्यायः

श्रीशुक उवाच

**एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः । प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥ १ ॥**

सप्तमे संशयच्छेदि स्तुत्वा क्षत्ता मुनेर्वचः । प्रश्नान्नानाऽकरोत्तत्र श्लोकाः सार्द्धा द्विसिन्धवः ॥ ( ४२॥ ) ॥

षडुवाचेति पादाढ्या वह्निवेदा ( ४३। ) अनुष्टुभः ॥ ७ ॥

एवमिति । एवं मायागुणैर्भगवान् सृष्ट्यादिकं करोतीत्यादिकं ब्रुवाणं मैत्रेयं भारत्या प्रार्थनारूपया गिरा प्रीणयन् इव तर्पयन्नेव बुधः द्वैपायनसुतः विदुरः प्रत्यभाषत ॥ १ ॥ ब्रह्मन्निति । हे ब्रह्मन् ! चिन्मात्रस्य भगवतः निर्गुणस्य गुणा अविकारिणः क्रियाः सृष्ट्यादयश्च लीलयाऽपि कथं युज्येरन् विरोधात् लीलयेत्युक्तिस्तु प्रयोजनाभावशङ्कां समाधातुं शक्नोति । न तु वस्तुविरोधमिति भावः ॥ २ ॥ अर्भकवल्लीलाऽपि न युज्यते वैषम्यादित्याह—क्रीडायामिति । अर्भस्य बालस्य क्रीडायामुद्यमयति प्रवर्तयती-

स्युधमः प्रवृत्तिहेतुः कामोऽस्ति। अन्यतो वस्त्वन्तरेण बालान्तरप्रवर्त्तनेन वा तस्य चिक्रीडिषा क्रीडेच्छा च भवति। ईश्वरस्य तु स्वतस्तृप्तस्य कथं कामः, अन्यतः सदा निवृत्तस्य असङ्गाद्वितीयस्य अन्यतश्चिक्रीडिषा च कथम्। अतः कथं क्रीडा संभवेत्॥ ३॥ "स्रष्टन् विश्वसृजामीश" इत्याद्युक्तमप्याक्षेप्तुमनुवदति—अस्राक्षीदिति। गुणमय्या आत्मनो जीवस्य कर्तृभोक्तृत्वादिमोहोत्पादिकया मायया भगवान् विश्वमस्राक्षीत्। तयैवैतद्विश्वं संस्थापयति पालयति तयैव भूयः पुनः प्रत्यपिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति। प्रत्यभिधास्यतीति पाठे प्रातिलोम्येनात्मनि धारयिष्यतीति च भगवता प्रोक्तम्॥ ४॥ एतत्सर्वं जीवस्याविद्याश्रयत्वे घटेत, तदेव तु न संभवतीत्याह—देशत इति। योऽसौ देशकालादेः अविलुप्तावबोधः आत्मा जीवः ब्रह्मस्वरूपत्वात् अजया अविद्यया कथं युज्येत तत्र दीपप्रभाया इव देशतो लोपो नास्ति सर्वगतत्वात्, विद्युत इव न कालतो नित्यत्वात्, स्मृतिवन्नावस्थातः अविक्रियत्वात्, स्वप्नवन्न स्वतः सत्यत्वात्, घटादिवन्नान्यतः अद्वितीयत्वात्। अजा चात्राविद्यैव न तु माया तस्या अवबोधेन विरोधाभावात्॥ ५॥ ब्रह्मरूपत्वादेव जीवस्य संसारोऽपि न घटत इत्याह—भगवानिति। सर्वेषु क्षेत्रेषु शरीरेष्ववस्थित एष भोक्ताऽपि वस्तुतः एको भगवानेव चिद्रूपेण तद्व्यतिरेकाभावात् एवं सत्यमुष्य जीवस्य दुर्भगत्वमानन्दादिभ्रंशः कर्मभिर्हेतुभूतैः क्लेशो वा कुतः, तस्य कर्मसंबन्धासम्भवात्। अन्यथा ईश्वरस्यापि तत्प्रसङ्गः स्यात्॥ ६॥ एतस्मिन्निति। हे विभो! हे विद्वन्! एतस्मिन्नज्ञानरूपे सङ्कटे दुर्गे मम मनः खिद्यते। अतः नोऽस्माकं तन्महत् मानसं कश्मलं खेदं त्वं पराणुद अपाकुरु। "अस्मदो द्वयोश्च" इति बहुवचनम्॥ ७॥

स इत्थमिति। स मुनिर्मैत्रेयः इत्थं तत्त्वजिज्ञासुना क्षत्रा चोदितः पृष्टः स्मयन्निव प्रौढिमाविष्कुर्वन्निव। शता आर्षः। वस्तुतः भगवच्चित्तः अत एव गतस्मयः आश्चर्यरहित एव प्रत्याह स्म॥ ८॥ सेयमिति। ईश्वरस्य कथं कार्पण्यमैश्वर्यभ्रंशाद्दैन्यम्। नित्यं विमुक्तस्य च कथं बन्धनमित्यादि नयेन त्वदुक्ततर्केण यद्विरुध्यते सेयमेव भगवतोऽचिन्त्यशक्तेर्माया॥ ९॥ दृष्टान्तमाह—यदिति। यत् यथा अर्थेन स्वशिरश्छेदादिना विनाऽपि उपद्रष्टुः स्वप्नदर्शिनो ममेदं शिरश्छिन्नमित्यात्मविपर्ययः केवलं मृषैव प्रतीयते। तद्वदमुष्य पुंसो जीवस्याप्यन्तःकरणदेहेन्द्रियादिगताः सुखदुःखादयो धर्मास्तत्तदध्यासेन स्वस्मिन् प्रतीयन्ते॥ १०॥ ईश्वरस्य तु न तथेत्याह—यथेति। यथा जले प्रतिबिम्बतस्यैव चन्द्रमसस्तत्कृतो जलोपाधिकृतः कम्पादिर्गुणः धर्मो दृश्यते, न त्वाकाशे स्थितस्य चन्द्रस्य. तथा अनात्मनो देहेन्द्रियादेर्गुणः सुखदुःखादिधर्म आत्मन्यसन्नविद्यमानोऽपि द्रष्टुरात्मनः देहाद्यभिमानिनो जीवस्यैव भवितुमर्हति न तु भगवतः॥ ११॥ स वै इति। सः अनात्मनो गुणः निवृत्तिधर्मेण जातया वासुदेवस्य अनुकम्पया तया च जातेन भगवतो भक्तियोगेन शनैः इहैव जन्मनि तिरोधत्ते। शनैरिति साधनानुसारेणेत्युक्तम्॥ १२॥ तर्हि सर्वानर्थनिवृत्तिः कदेत्यत आह—यदेति। यदा द्रष्टुर्जीवस्यात्मनि परे हरौ अन्तर्यामिणि इन्द्रियाणामुपरामो नैश्चल्यं भवति अथानन्तरमेव तदा संसुप्तस्येव कृत्स्नशः सर्वे क्लेशाः विलीयन्ते परन्तु संसुप्तस्य पुनरुत्थाने क्लेशा भवन्ति। भक्तस्य तु पुनः कदापि ते न भवन्तीति विशेषः॥ १३॥ अशेषेति। मुरारेर्गुणानामनुवादः कीर्त्तनं श्रवणं चेत्येतदुभयमेवाशेषसंक्लेशानां शमं विधत्ते। तर्हि आत्मनि अन्तःकरणे लब्धा जाता तस्य भगवतश्चरणारविन्दयोः परागस्तस्य सेवायां रतिः प्रीतिरशेषसंक्लेशशमं विधत्त इति कुतः पुनर्वक्तव्यम्॥ १४॥ संछिन्न इति। हे विभो! हे भगवन्! चिद्रूपत्वाविशेषेऽपि कथमीश्वरस्य जगत्स्रष्टृत्वादि कथं वा जीवस्य संसारः अविकारिणः कथं क्रियाः निर्गुणस्य कथं गुणसंबन्ध इत्यादिः यो मह्यं मां मोहयितुं संशय आसीत्। स तव सूक्तं सोपपत्तिकं वाक्यमेवासिः खड्गस्तेन संछिन्नः। अत इदानीं मे मन उभयत्रापि भगवतः स्वातन्त्र्ये जीवस्य पारतन्त्र्ये च संप्रधावति सम्यक् निःसंदिग्धं प्रवर्तते। यद्वा। अविलुप्तबोधस्य कथमविद्यासङ्गः कुतो वा तन्निवृत्तिरिति संशयः। उभयत्र बन्धे मोक्षे च॥ १५॥ साध्विति। हे विद्वन्! हरेः शक्तिर्या आत्मनो जीवस्य व्यामोहिका माया अविद्या तदयनं तदाश्रितमत एव निर्मूलं देहाद्यात्माध्यासमूलम् अत एवापार्थमवस्तुभूतमेवैतत् सुखदुःखादिकमाभाति। यत् यस्मात् विश्वस्य मूलं कारणं स्वाज्ञानं विना बहिर्विचारमार्गे नास्ति इत्येतद् भवता व्याहृतं तत्साधु सम्यक्॥ १६॥

अल्पज्ञत्वात् पूर्वं मम संशयो जात इत्याह—यश्चेति। लोके संसारे यश्च जनो मूढतमो देहाद्यासक्तः यश्च बुद्धेः प्रकृतेः परं भगवन्तं गतः प्राप्तस्तौ उभावपि सुखं यथा भवति तथा एधेते जीवत इत्यर्थः। संशयक्लेशाभावात् यस्त्वन्तरितस्तन्मध्यस्थः अल्पज्ञः दुःखानुसन्धानेन प्रपञ्चं जिहासति। स्वानन्दानुभवाभावाद्धातुं च न शक्नोति। स नानाविधसंशयेन क्लिश्यति॥ १७॥ अर्थेति। बाधितस्यापि संस्कारादनुवृत्त्या आत्मनि प्रतीतस्यापि नात्मनः अनात्मप्रपञ्चस्य अर्थाभावं सत्यत्वाभावं नास्त्यत्रार्थः। किन्तु प्रतीतिमात्रमिति निश्चित्य युष्मच्चरणसेवया तां प्रतीतिं चाप्यहं पराणुदे अपनेष्यामि॥ १८॥ यत्सेवयेति। येषां युष्माकं सेवया कूटस्थस्य निर्विकारस्य मधुद्विषो भगवतः पादयोः तीव्रः विघ्नानुपहतः व्यसनार्दनः तापत्रयनिवर्त्तकः रतिरासः प्रेमोल्लासो भवेत्॥ १९॥ दुरापेति। हि प्रसिद्धौ। अल्पं तपो यस्य तस्य पुंसो वैकुण्ठस्य भगवतः वर्त्मसु मार्गभूतेषु भवत्सु सेवा दुरापा।

यत्र येषु भवत्सु देवदेवो जनार्दनः भगवान् नित्यं निरन्तरमुपगीयते महत्सेवया हरिकथाश्रवणं ततो हरौ प्रेम तेन च देहानुसन्धानमपि निवर्तत इति तात्पर्यम् ॥ २० ॥ सृष्ट्वेति । विभुर्भगवान् विकारैरिन्द्रियादिभिः सहितानीति सविकाराणि महदादीनि अग्रे सृष्टेः पूर्वमनुक्रमात् सृष्ट्वा तेभ्यो महदादिभ्यो विराजमुद्धृत्य तदंशैः उत्पाद्य तं विराजमनुप्राविशत् ॥ २१ ॥ यमिति । यं प्रविष्टमाद्यं सर्वकारणकारणं पुरुषं सहस्राङ्घ्र्यूरुबाहुकं श्रुतय आहुः । यत्र च विराजि इमे दृश्यमानाः विश्वे सर्वे चतुर्दश लोकाः सजीवाः सविकाशमसंकोचेन समासते यथासुखं तिष्ठन्ति । २२ ॥ यस्मिन्निति । यस्मिन् विराजि प्राणादयः पञ्च नागादयश्च पञ्चेत्येवं दशविधः प्राणः इन्द्रियाणि च अर्थाश्च शब्दादयो विषयाः इन्द्रियाणि चेति पुनरुक्तिस्तद्देवतोपलक्षणार्था । यद्वा । इन्द्रियार्था विषया इन्द्रियाणि च उपलक्षणतया देवता अपि तत्सहितस्त्रिवृत् त्रिगुणात्मकः सर्वोऽपि प्रपञ्चस्त्वयेरितो वर्णितः । तथा यत एव वर्णा ब्राह्मणादयो जाता इति त्वयेरितं तस्य वैराजस्य विभूतीर्विसर्गशब्दवाच्याः ब्रह्मादिरूपाः नोऽस्मभ्यं वदस्व यत्नेन वर्णय । भासनेति तङ् ॥ २३ ॥ यत्रेति । यत्र यासु विभूतिषु पुत्रैः पौत्रैर्नप्तृभिः दौहित्रैः गोत्रजैश्च सह विचित्राकृतयः नानाविधदेहाः प्रजा आसन् याभिरिदं विश्वं ततं व्याप्तं ताः वदेति ॥ २४ ॥ द्वितीयस्कन्धे परीक्षिता पृष्टानेवार्थानेकजातीयहृदयतया विदुरोऽपि पृच्छति—प्रजापतीनामिति सार्द्धम् । स प्रसिद्धः प्रजापतीनां पतिर्ब्रह्मा कान् प्रजापतीन् चक्लृपे कल्पितवान् । एवं सर्गान् प्राकृतसर्गान्नवविधान् अनुसर्गांस्तद्भेदान् मनून् स्वायंभुवादीन् मन्वन्तराधिपान् तत्तन्मन्वन्तरपालकान् राज्ञश्च यान् चक्लृपे तान् वर्णयेत्यपकर्षः । तेषां मन्वन्तराधिपानामपि ये वंशास्तांश्च वंश्यानामनुचरितानि च वर्णयेति ॥ २५ ॥ उपरीति । हे मित्राया आत्मज ! भूमेरुपरिष्टात् अधस्ताच्च ये लोका आसते तांश्च तेषां लोकानां संस्थामवयवविन्यासं प्रमाणं परिमाणं भूलोकस्य संस्थां परिमाणं च वर्णय ॥ २६ ॥

तिर्यगिति । तिरश्चां पश्वादीनां मानुषाणां देवानां सरीसृपाणां सर्पादीनां पतत्त्रिणां पक्षिणां गार्भा जरायुजाः स्वेदाच्च द्वाभ्यां जाताः स्वेदद्विजाः तत्र स्वेदजाः यूकामत्कुणादयः द्विजाः पक्षिणः उद्भिदस्तरुगुल्माद्यास्तेषां सर्गसंव्यूहं सर्गविभागं नोऽस्मभ्यं वद ॥ २७ ॥ गुणेति । रजआदिगुणावतारैर्ब्रह्मविष्णुरुद्रादिस्वरूपैर्विश्वस्य सर्गस्थित्यप्ययान् तेषामाश्रयमाधारं च सृजतः श्रीनिवासस्य हरेः उदारं श्रेष्ठं विक्रमं व्याचक्ष्व वर्णय ॥ २८ ॥ वर्णेति । रूपं लिङ्गं शीलमाचारः स्वभावः शमादिः ततः तैर्वर्णानामाश्रमाणां च विभागान् आख्याहीति सप्तमेनान्वयः । ऋषीणां जन्मकर्मादिकं वेदस्य विकर्षणं विभागं च आख्याहि ॥ २९ ॥ यज्ञस्येति । हे प्रभो ! यज्ञस्य वितानानि विस्तारान् योगस्याष्टाङ्गस्य च पथो मार्गान् नैष्कर्म्यस्य ज्ञानस्य तदुपायस्य च साङ्ख्यशास्त्रस्य वा मार्गान् । वकारश्चकारार्थकः । भगवता स्मृतं तन्त्रं पाञ्चरात्रोक्तमर्थं च आख्याहि ॥३०॥ पाखण्डेति । पाखण्डानां पन्थाः प्रवृत्तिस्तद्वैषम्यं पाखण्डमार्गाद्वैषम्यं वा प्रतिलोमानां चण्डालादीनां निवेशनं वर्णेषु उत्पत्तिः जीवस्य सत्त्वादिगुणप्रयुक्तकर्मजा गतयः कर्मफलानि यावतीः यावत्सङ्ख्याकाः याश्च यादृश्यश्च ताः आख्याहि । यावतीरिति पूर्वसवर्णदीर्घ आर्षः ॥ ३१ ॥ धर्मेति । अविरोधतः परस्परमविरोधेन धर्मार्थकाममोक्षाणां निमित्तानि उपायान् वार्तायाः कृष्यादिव्यापारस्य दण्डनीतेः अर्थशास्त्रस्य श्रुतस्य वेदविहितस्य कर्मणः पृथक् पृथक् विधिं प्रकारम् आख्याहि ॥ ३२ ॥ श्राद्धस्येति । हे ब्रह्मन् ! श्राद्धस्य च विधिं पितॄणामर्यमादीनां च सर्गं ग्रहाः सूर्यादयो नव, नक्षत्राणि अश्विन्यादीनि सप्तविंशतिः, तारा इतरतारा:, तेषां कालावयवे ज्योतिश्चक्रे संस्थितिम् आख्याहि ॥ ३३ ॥ दानस्येति । दानस्य तपसः कृच्छ्रादेश्च इष्टं यज्ञादि पूर्त्तं वापीकूपादि तयोश्च यत्फलं प्रवासस्थस्य देशान्तरगतस्य योऽनुष्ठेयो धर्मः उत अपि यश्चापि पुंसः आपदि विपद्यनुष्ठेयो धर्मः तमाख्याहि ॥ ३४ ॥ मुख्यं प्रश्नमाह—येनेति । वाशब्दः अन्येषां प्रश्नानां गौणत्वार्थः । हे अनघ ! येन वा धर्मेण धर्मस्य योनिः प्रवर्त्तकः जनार्दनः भगवान् तुष्येत् येषां यादृशानां वा भगवान् प्रसीदति एतत्सर्वं मे मह्यमाख्याहि ॥ ३५ ॥ अथवा मम श्रेयस्करमपृष्टमपि भवतैव कथ्यतामित्याह—अनुव्रतानामिति । हे द्विजोत्तम ! दीनवत्सलाः गुरवः पितरश्च अनुव्रतानां शिष्याणां पुत्राणां चेति चतुर्थ्यर्थे षष्ठ्यः । अनापृष्टमपि ब्रूयुः ॥ ३६ ॥

तत्त्वानामिति । हे भगवन् ! तेषां तत्त्वानां पृथिव्यादीनां प्रतिसंक्रमः प्रलयः कतिधा भवति । तत्र प्रलये एनं भगवन्तं क उपासीरन् । अनुपसंहृताः सन्तश्चामरव्यजनादिना प्रसुप्तं राजानमिव सेवन्ते के । उस्वित् के वाप्यनुशेरते शयानं भगवन्तमनुस्वपन्ति तेन भगवत्पार्षदादीनां तद्भक्तेस्तल्लोकस्य च नित्यत्वमभिप्रेतम् । "न च्यवन्ते च यद्भक्ता महत्यां प्रलयापदि" इति प्रसिद्धं काशीखण्डवचनम् ॥ ३७ ॥ पुरुषस्येति । पुरुषस्य जीवस्य संस्थानं तत्त्वं परस्य परमेश्वरस्य वा स्वरूपं यत्प्रसिद्धं गुरुशिष्ययोः प्रयोजनं नैगममौपनिषदं ज्ञानं तच्च वद ॥ ३८ ॥ निमित्तानीति । हे अनघ ! सूरिशब्देन समासो वा । तस्य ज्ञानस्य च यानि निमित्तानि साधनानि सूरिभिर्विद्वद्भिः प्रोक्तानि तानि च वद । गुरुं विना एतन्न भवतीत्याह–स्वत इति । स्वतो गुरूपदेशमन्तरेण पुंसां ज्ञानं भगवद्भक्तिर्विषयवैराग्यं च कुतः स्यात् ॥ ३९ ॥ एतानिति । हरेः कर्मणां विवित्सया ज्ञानलाभेच्छया "विद्लृ लाभे" पृच्छतः अजया अविद्यया नष्टचक्षुषः अतः अज्ञस्य मे मम एतान् प्रश्नान् मे मह्यं मामुद्धर्तुं मित्रत्वाद्धितकृत्त्वाद् ब्रूहि । विभक्ति-

भेदान्मेशब्दस्य न पौनरुक्त्यम् ॥ ४० ॥ तवाप्येतेन पुण्यं भविष्यतीत्याह—सर्वे इति । हे अनघ ! सर्वे वेदादयः तत्त्वोपदेशेन जीवाभयप्रदानस्य कलां लेशतुल्यफलतामपि न कुर्वीरन् ॥ ४१ ॥ स इति । पुराणे कल्पते प्रकाशत इति पुराणकल्पो बुभुत्सितोऽर्थः आपृष्टः पुराणकल्पोऽयम् । यद्वा । पुराणेषु कल्पते समर्थो भवति सः आपृष्टश्चासौ पुराणकल्पश्चेति सः मुनिप्रधानो मैत्रेयः इत्थं कुरुप्रधानेन विदुरेण भगवत्कथायां संचोदितः अत एव प्रवृद्धो हर्षो यस्य सः अत एव प्रहसन्निवेति वस्तुतो हर्षोत्थस्मितं कुर्वन् तं विदुरं प्रत्याह स्म ॥ ४२ ॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तमोऽध्यायः ॥ ७ ॥

—:❀:—

## अथाष्टमोऽध्यायः

मैत्रेय उवाच

सत्सेवनीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः ।
बभूविथेहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णम् ॥ १ ॥

अष्टमे तु हरेर्नाभेर्जातो ब्रह्मा न तं विदन् । तपसाऽतोषयत्तत्र श्लोका दहनवह्नयः ॥
उवाचेत्येकं च सार्द्धाः पञ्चवेदा अनुष्टुभः ॥ ८ ॥

सत्सेवनीय इति । वत हर्षे । पूरुवंशः सत्सेवनीयः सद्भिरुत्तमैरपि सेवितुं योग्यः । यत् यस्मात् इह पूरुवंशे भगवानेव प्रधानो यस्य तथाभूतः लोकपालः यस्त्वं बभूविथ जातोऽसि । यद्वा यद् यस्मिन् वंशे इह भगवत्प्रधानेष्वपि यस्त्वम् अजितस्य हरेः कीर्तीनां मालां पङ्क्तिं पदे पदे क्षणे क्षणे अभीक्ष्णं पुनः पुनर्नूतनयसि प्रश्नेन नवीनां करोषीत्यर्थः ॥ १ ॥ त्वत्प्रश्नोत्तराणि श्रीभागवत एव लभ्यन्तेऽतस्तद्भागविशेषमेव श्रावयामीत्याह—सोऽहमिति । स त्वया पृष्टोऽहं क्षुल्लसुखाय अल्पसुखार्थं महत् दुःखं गतानां प्राप्तानां नृणां तस्य दुःखस्य विरमाय निवृत्तये भागवतं पुराणं प्रवर्त्तये वर्णयामि । यत्पुराणं साक्षादेव भगवानृषिभ्य आह स्म । एतेन सुखाय कर्माणीत्यादिप्रश्नस्यापीदमेव युक्तमुत्तरमित्युक्तम् ॥ २ ॥ आसीनमिति । आद्यम् अकुण्ठसत्त्वम् अप्रहत-ज्ञानम् उर्व्यां पातालभूमौ आसीनमुपविष्टं भगवन्तं संकर्षणं देवम् । अतः संकर्षणात् परस्य वासुदेवस्य तत्त्वं याथात्म्यं विवित्सवो लब्धुमिच्छवः "विद्लृ लाभे" कुमारमुख्याः सनत्कुमाराद्या मुनयोऽन्वपृच्छन् ॥ ३ ॥

संकर्षणं विशिनष्टि—स्वमिति । यं वासुदेवाभिधमामनन्ति ऋषयो वर्णयन्ति तं स्वधिष्ण्यमाश्रयं भगवन्तं वासुदेवमेव बहु मानयन्तं ध्यानेऽनुभूयमानं बहु पूजयन्तं प्रत्यगात्मनि वासुदेवे धृतम् अन्तर्मुखीकृतम् अद्व्यम्बुजकोशं नेत्राम्बुजमुकुलं कृपावलोकनेन विबुधानां सनत्कुमारादीनामुदयाय अभ्युदयार्थम् ईषत् किञ्चिदुन्मीलयन्तं तमन्वपृच्छन्नित्यनुषङ्गः ॥ ४ ॥ मुनीन् विशिनष्टि—स्वर्धुनीति सार्द्धेन । वरार्थाः पतिकामाः सत्योऽहिराजकन्याः सप्रेम यथा भवति तथा नानाविधैर्बलिभिः यत्पद्ममर्चन्ति तत् संकर्षणस्य चरणौ उपधीयेते यस्मिंस्तच्चरणोपधानं पद्मं स्वर्धुन्याः गङ्गाया उदैरुदकैरार्द्रैः स्वजटाकलापैः जटासमूहैः उपस्पृशन्तः नमस्कुर्वन्तः तानि संकर्षणकर्माणि जानन्ति तज्ज्ञाः । अतः अस्य संकर्षणस्य कृतानि कर्माणि अनुरागेण प्रेमातिशयेन स्खलन्ति पदानि यस्मिंस्तेन वचसा मुहुः पुनः पुनर्गृणन्तो गायन्तः अन्वपृच्छन् स्वर्धुन्युदार्द्रैरिति श्रीभागवत-श्रवणार्थं सत्यलोकात् पातालमवतरन्तो गङ्गामध्यत एवावतीर्णाः इति भावः ॥ ५ ॥ पुनः संकर्षणं विशिनष्टि—किरीटेत्यर्द्धेन ।

किरीटानां सहस्रमेव साहस्रं तस्मिन् मणिप्रवेकाः मण्युत्तमास्तैः प्रद्योतितमुद्दाममुत्तमं फणानां सहस्रं यस्य तं संकर्षणमपृच्छन्। सेयं चतुःश्लोकी संकीर्णतया एकान्वयाऽपि क्लेशभयात् सर्वैः पृथग्वाक्यंर्व्याख्याता। यद्वा। आसीनमिति पद्ये अन्वपृच्छन् भगवतो ध्यानावस्थामवीक्ष्यैव जिज्ञासौत्कण्ठ्यात् प्रणम्यैवानु पश्चात् भगवन् भवतः परं तत्त्वं कथ्यतामित्यपृच्छन्। ततः स्वमेवेति ध्यानावस्थितं स्वागमनादुन्मीलिताक्षं च दृष्ट्वा फणोन्नमनेन श्रवणोन्मुखं च ज्ञात्वा मूर्ध्ना चरणोपधानपद्मं स्पृशन्तः गृणन्तश्च भगवद्वचनं प्रतीच्छमाणास्तस्थुरिति वाक्यद्वयात्मना व्याख्येयम्॥ ६॥ प्रोक्तमिति। अङ्ग हे विदुर! एतत् श्रीभागवतं किल तेन भगवत्तमेन। स्वार्थे तमप्। यद्वा। भगवत्सु ज्ञानिषु श्रेष्ठेन संकर्षणेन निवृत्तिधर्माभिरताय सनत्कुमाराय प्रोक्तम्। एकवचनं संघातार्थम्, पूर्वं बहुत्वोक्तेः। स च सनत्कुमारः पृष्टः सन् धृतव्रताय सांख्यायनाय आह स्म॥ ७॥ सांख्यायन इति। पारमहंस्ये धर्मे मुख्यः सांख्यायनो भगवद्विभूतीर्विवक्षमाणः वक्तुमिच्छुः। ब्रूञादेशस्य वचेरुभयपदित्वात् सन्नन्ताच्चानच्। अन्विताय अनुगताय अस्मद्गुरवे पराशराय बृहस्पतेः बृहस्पतये चैतज्जगाद॥८॥ प्रोवाचेति। पुलस्त्येनोक्तो दत्तवरः दयालुः स मुनिः पराशरः आद्यं मुख्यमेतत्पुराणं मह्यं प्रोवाच। हे वत्स! स उपदिष्टपुराणोऽहं श्रद्धालवे नित्यमनुव्रताय तव तुभ्यम् एतत्पुराणं कथयामि। तवेति षष्ठ्यन्तस्य चतुर्थ्यन्ते विशेषणे आर्षे। सोऽहन्त एतदिति वा पाठो भवेत्। पुलस्त्यवरकथा त्वेवम्—शक्तिनामानं स्वपितरं राक्षसभक्षितं श्रुत्वा पराशरो राक्षससत्रे प्रवृत्तो वसिष्ठवचनान्निवृत्तस्ततः पुलस्त्येन स्वसंततिरक्षणात्तुष्टेन वरो दत्तः पुराणप्रवक्ता भविष्यसीति॥ ९॥

एवं पाताले सङ्कर्षणात् भूमौ पराशरात् स्वर्गे बृहस्पतेः तदुपरि सनत्कुमारादिभ्यः सर्वत्र श्रीभागवतसम्प्रदायवृत्तिं प्रदर्श्य विभूतिकथनाय पद्मोद्भवं वक्तुमाह—उदाप्लुतमिति। यत् यदा नैमित्तिकप्रलये अमीलितदृक् अतिरोहितचिच्छक्तिरेव अहीन्द्रतल्पे शेषशय्यायामेकः गर्भोदकेऽधिशयानो नारायणः। तल्पे इत्यार्षम्, "अधिशीङ्" इति कर्मत्वात्। यद्वा "अधिपरी अनर्थकौ" इत्यनेनोपसर्गत्वबाधात् शीङः योगाभावात् न कर्मत्वम्। स्वात्मरतौ मायाविनोदं परित्यज्य स्वरूपानन्दरमणे कृतक्षणः सम्पादितावसरः, अत एव निरीहः त्यक्तसृष्ट्यादिविनोदः सन् योगनिद्रया नेत्रे न्यमीलयत् निमीलितवांस्तदा इदं विश्वमुदाप्लुतमेकार्णवोदके निमग्नमासीत्॥ १०॥ सोऽन्तरिति। स श्रीनारायणः कालात्मिकां स्वशक्तिमुदीरयाणः प्रेरयन् मुगभाव आर्षः। तेन च सर्वस्थूलशरीरनाशात् अन्तःशरीरे शरीरमध्य एव अर्पितानि निहितानि भूतसूक्ष्माणि त्रैलोक्यगतदेवमनुष्यादिसूक्ष्मशरीराणि येन तादृशः सन् यथा दारुणि काष्ठे रुद्धवीर्यः निरुद्धदाहशक्तिः अनलोऽग्निर्वसति, तथा स्वे स्वकीये पदे स्थाने तस्मिन् सलिले स्वेच्छया निरुद्धसृष्ट्यादिसामर्थ्य एव सन् जलस्तम्भनशक्त्या उवास। कालशक्तेः प्रेरणं पुनः सृष्टिसमये प्रबोधार्थमिति श्रीस्वामिपादाः। तदपि अग्रिमश्लोकानुकूलम्। भगवच्छरीरान्तर्गतलिङ्गशरीरसमूह एव समष्टिलिङ्गशरीरम्॥ ११॥ चतुर्युगानामिति। एवं चतुर्युगानां समास आर्षः। सहस्रं ब्रह्मणो निशापर्यन्तं स्वया चिच्छक्त्या सहाप्सु जाग्रदपि योगमायाशक्त्या स्वपन् ततश्च पूर्वमेव प्रबोधनार्थम् उदीरितया स्वेन प्रेरितया कालाख्यया स्वशक्त्या आसादितम् उद्बोधितं कर्मतन्त्रं जीवभोगप्रदः क्रियाकलापः येन तादृक् सन् स्वदेहे एवापीतान् सूक्ष्मरूपेण लीनान् लोकान् प्राणिसहितान् स्वशरीरान्निष्क्रामयितुं ददृशे। तङार्षः॥ १२॥ तस्येति। लोकसृष्ट्यर्थमर्थसूक्ष्मेषु सर्वजीवलिङ्गदेहेषु अभिनिविष्टा निष्कासनेच्छया प्रविष्टा दृष्टिर्यस्य तस्य नारायणस्य अन्तर्गतस्तनीयान् सूक्ष्मतरः अर्थः प्राकृतपदार्थविशेषः कालानुगतेन कालवशादुद्बुद्धेन रजसा गुणेन विद्धः संक्षोभितस्तदा सूष्यन् प्रसवं प्राप्नुवन्। गुणाभावः शता चार्षः। इडभावस्तु वेदकृत्वात्। तस्य नाभिदेशात् अभिद्यत नाभिं भित्त्वा निर्गतः॥ १३॥ स इति। सः आत्मा परमात्मा श्रीनारायणः योनिः कारणं यस्य तथाभूतः सः अर्थसूक्ष्मः पद्मकोशरूपः सन् स्वरोचिषा तत्प्रलयकालिकं विशालं सलिलमर्क इव विद्योतयन् कर्म जीवादृष्टं प्रतिबोधयते येनेति तथाभूतेन कालेन सहसा झटित्येव उदतिष्ठत् प्रलयमहार्णवजलादप्युपरि तस्थौ॥ १४॥ तदिति। उ विस्मये। सर्वान् गुणान् जीवभोग्यान् स्वर्गनरकादीन् अवभासयतीति तथाभूतं तल्लोकात्मकं पद्मं स एव विष्णुः प्रावीविशत्। स्वार्थे णिच्। अयं भावः—प्रलयारम्भे यस्योदरमेव वैराजः सूक्ष्मरूपेण प्राविशत् प्रलयान्ते च ततः पद्मरूपेणाविर्भूतं वैराजं गर्भोदशायी स एव विष्णुः प्रकर्षेणालुप्तशक्तिरेव अन्तर्यामितया प्रविष्टोऽभूत्। तस्मिन् भगवत्प्रविष्टे पद्मे स्वयं वेदमयः स्वत एव न त्वध्यापनाद्वेदप्रचुरो विधाता ब्रह्माऽभूत्। तं विशिनष्टि—अदृष्टपितृत्वेन यं स्वयम्भुवं लोका वदन्ति स्म। स इति यः प्राक्कल्पान्ते नारायणेन सह निद्रयैकीभूत आसीत्। तस्मिंश्च प्रबुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिं प्राप्तः। अत्र स्थूलो वैराजः सूक्ष्मो हिरण्यगर्भः सृष्ट्यादिकर्ता चतुर्मुख इति ब्रह्मण एव त्रैरूप्यं ज्ञेयम्॥ १५॥

तस्यामिति। स च स्वयम्भूः तस्यामम्भोरुहकर्णिकायामवस्थित एव लोकमपश्यमानः। शानजार्षः। तद्दर्शनार्थं युगपदेव दिक्चतुष्टये व्योम्नि निर्जनत्वादाकाशमात्रे विवृत्तनेत्रः प्रक्षिप्तदृष्टिः परिक्रमन् चतसृषु दिक्षु ग्रीवां चालयन्। क्रमेर्दीर्घाभाव आर्षः। अनुदिशं चतुर्षु दिक्षु चत्वारि मुखानि लेभे॥ १६॥ श्रीनारायणप्राप्तशक्त्यैव तस्य स्रष्टृत्वादिकं न स्वत इति वक्तुं ब्रह्मणो

विमोहमाह—तस्मादिति। युगान्ते प्रलये यः श्वसनो वायुस्तेनावघूर्णितं प्रकम्पितं यज्जलं तत उत्पन्ना ये ऊर्मयस्तेषां चक्रं समूहो यस्मिंस्तद्वशात् सलिलाद्विशेषेण रूढं कञ्जं कमलमुपाश्रितः अधिष्ठित आदिदेवोऽपि ब्रह्मा लोकतत्त्वं लोकात्मकपद्मतत्त्वमात्मानं चाद्धा तत्त्वेन नाविदन्न ज्ञातवान्। शबलुगभाव आर्षः, विन्दतेर्वा कल्प्यम्॥ १७॥ अविदुषस्तस्य वितर्कमाह—क इति। अब्जपृष्ठे स्थितो योऽसावहमित्येषः कः अनन्यत् अद्वितीयमेतदब्जमप्सु कुतो वा जातमतो यत्राधिष्ठाने एतत्पद्ममधिष्ठितं तदधिष्ठानभूतं किञ्चन वस्तु अधस्तादस्ति। हि यस्मात् तेन सताऽनुविद्यमानेनैवाधिष्ठानेन भाव्यमवश्यं भवितव्यम्। आवश्यके ण्यत्। अन्यथाधिष्ठेयस्यासम्भवादित्यर्थः। तथा च श्रुतिः—"सोऽपश्यत् पुष्करपर्णे तिष्ठन् सोऽमन्यत अस्ति वै तद्यस्मिन्निदमधितिष्ठति" इति॥१८॥ बहिर्मुखप्रवृत्त्या तदप्राप्तिमाह—स इति। सः अजो ब्रह्मा इत्थमुद्वीक्ष्य विचार्य तस्याब्जस्य नालनाडीभिर्नालच्छिद्रैरन्तर्जलं जलस्य मध्ये आविवेश। एवं खरनालस्य कमलस्य यन्नालं तस्य नाभिमधिष्ठानं श्रीनारायणनाभिपद्मं विचिन्वन् अर्वाग्गतस्तन्निकटगतोऽपि नाविन्दत न लेभे॥ १९॥ तमसीति। हे विदुर! अपारे तमसि अन्धकारे आत्मसर्गम् आत्मस्रष्टारं विचिन्वतस्तस्य ब्रह्मणः महान् त्रिनेमिः तिस्रः त्रीणि चातुर्मास्यानि नेमयो यस्य स कालोऽभूत्। अजस्य भगवतो हेतिः जगद्विनाशे शस्त्रविशेषः सुदर्शनांशरूपो वा यः कालः भयमीरयाण उत्पादयन्। मुगभाव आर्षः। देहभाजां प्राणिनामायुः परिक्षिणोति क्षयं नयति। तेन संवत्सरशतमतिक्रान्तमित्याशयः॥ २०॥ अन्तर्मुखतया तु दृष्टवानित्याह—तत इति। स देवो ब्रह्मा अप्रतिलब्धकामः अप्राप्ताधिष्ठानदर्शनरूपमनोरथ एव ततोऽन्वेषणात् निवृत्तः पुनः स्वधिष्ण्यं कमलकर्णिकारूपस्थानमासाद्य शनैः जिताः ये श्वासाः प्राणाः तैः निवृत्तं विषयविमुखीकृतं चित्तं येन सः आरूढः आश्रितः समाधिपर्यन्तो योगो येन तथाभूतः सन् न्यषीदत् उपविवेश॥ २१॥ कालेनेति। पुरुषायुषा संवत्सरशतात्मकेन कालेन अभिप्रवृत्तः सुनिष्पन्नो योगस्तेन विरूढ उत्पन्नो बोधो दिव्यज्ञानं यस्य सोऽजो ब्रह्मा यत्पूर्वं विचिन्वन्नपि नापश्यत तत्स्वकारणं भगवत्स्वरूपं स्वयमेवान्तर्हृदयेऽवभातमपश्यत्। उभयत्र तङार्षः॥ २२॥

तद्वर्णयति—मृणालेति। फणा एवातपत्राणि तैरायुतः सर्वतो युक्ताः ये मूर्द्धानस्तेषां रत्नानि किरीटस्थानि तेषां द्युभिः प्रभाभिर्हतं निरस्तं ध्वान्तमन्धकारं यस्मिंस्तस्मिन् युगान्ततोये स्थिते मृणालं पद्मतन्तुस्तद्वद् गौरश्चासावायतश्च यः शेषस्य भोगो देहः स एव पर्यङ्कः तस्मिन् शयानमेकं पुरुषमपश्यत्॥ २३ प्रेक्षामिति। सन्ध्याभ्रं नीविः परिधानं यस्य उरुरुक्ममूर्ध्नः भूयिष्ठकनकशृङ्गस्य रत्नानामुदकधाराणामोषधीनां सौमनस्यानां पुष्पसमूहानां च वन्यानां स्रजो माला यस्येति तथा उपरिस्थिताः वेणव एव भुजा अधःस्थिताः अङ्घ्रिपा वृक्षा एव अङ्घ्रयः पादा यस्य तस्य हरितोपलाद्रेः मरकतशिलामयपर्वतस्य प्रेक्षां शोभां क्षिपन्तं मरकतपर्वततुल्यतया शोभमानमित्यर्थः। अत्र शब्दमर्यादया सर्वाणि हरितोपलाद्रेर्विशेषणानि स्वगतसन्ध्याभ्राद्यः सादृश्याय पीताम्बरादीन्याक्षिपन्ति। तत्र सन्ध्याभ्रमिव पीताम्बरं कनकशृङ्गाणीव किरीटानि रत्नपङ्क्तिरिव रत्नमाला उदकधारा इव मुक्तामाला ओषधिपङ्क्तिः इव तुलसीमाला पुष्पपङ्क्तिरिव वनमाला वेणव इव भुजाः वृक्षा इव चरणाः इति तेन पीताम्बरेण सन्ध्याभ्रस्य किरीटैः कनकशृङ्गाणां शोभां क्षिपन्तमित्यादिकमर्थादायाति। अत्र रत्नोदधारौषधिसौमनस्या वन्यस्रजो वनमाला यस्येति स्वीयरत्नमुक्तापुष्पतुलसीमालाभिः। वनस्रक्शब्देन मालामात्रोक्तिः। यद्वा। रत्नादिर्वनस्रक् यस्येत्युभयत्र एकैव वनमाला व्याख्येया। "पत्रपुष्पमयी माला वनमाला पदावधिः" इति। अत्र रत्नपदं नवरत्नपदम्। "तुलसीपुष्परचिता नवरत्नैर्विराजिता। आपादलम्बिनो माला वनमाला प्रतीर्तिता॥" इत्युक्तेः॥ २४॥ आयामत इति। लोकत्रयं सावकाशं संगृह्यतेऽस्मिन् तथाभूतेन विचित्राणि दिव्यानि च यान्याभरणानि अंशुकानि वस्त्राणि च तेषां कृता श्रीः शोभा येन। आयामो दैर्घ्यं विस्तारो विशालता ताभ्यां स्वमानेन स्वानुरूपप्रमाणेन शोभनश्चासावमानो निरुपमः अपरिच्छिन्नो वा तेनेति वा देहेनोपलक्षितं स्वतो रम्यत्वेऽपि अपाश्रितवेषः स्वीकृतालङ्कारो देहो यस्य तम्। यद्वा। अपाश्रितं चिन्तितं वेषं ददतीत्यपाश्रितवेषदा ईहा इच्छा यस्य तम् अपश्यत्॥ २५॥ पुंसामिति। नखा एवेन्दवस्तेषां मयूखा रश्मयस्तैर्भिन्नाः संभिन्नाश्छुरिता अङ्गुलय एव चारूणि पत्राणि यस्य तत् स्वकामाय स्वाभिलषितफलाय विविक्तः शुद्धैर्वेदोक्तमार्गैरभ्यर्चितं पुंसां कामदुघमङ्घ्रिपद्मं कृपया किञ्चिदुन्नमय्य प्रदर्शयन्तम् अपश्यत्॥ २६॥ मुखेनेति। लोकानामार्तिहरं स्मितं यस्मिंस्तेन परिस्फुरद्भ्यां कुण्डलाभ्यां मण्डितेन अधरविम्बस्य विम्बस्येवातिरक्तस्याधरस्य भासा दीप्त्या शोणायितेन रक्तवदाचरितेनेत्यर्थः। सुनसेन शोभननासासंयुक्तेन सुभ्वा शोभने भ्रुवौ यस्मिंस्तेन स्वमुखेन प्रत्यर्हयन्तं पूजकान् प्रति संमानयन्तं भक्तैर्भोगाद्यनङ्गीकारात् स्वमुखदर्शनानन्ददानेनैव तत्सेवाऋणं परिशोधयन्तमित्याशयः। तं हरिमपश्यत्। सुभ्रुवा सुभ्रूणा इति वा वक्तव्ये सुभ्वा इत्यार्षः कचित्तथा पाठः॥ २७॥

कदम्बेति। हे वत्स विदुर! कदम्बस्य किञ्जल्काः केसरास्तत्तुल्यपिशङ्गवर्णेन वाससा पीताम्बरेण मेखलया रत्नसुवर्णमयेन कटिसूत्रेण च नितम्बे सुष्ठु अलंकृतं श्रीवत्सो नाम दक्षिणावर्तरोमरेखाविशेषस्तद्युक्तं यद्वक्षःस्थलं तस्य वल्लभेन प्रियेण तत्सङ्गतेन अनन्तधनेन बहुमूल्येन हारेण च स्वलंकृतमपश्यत्॥ २८॥ परार्ध्येति। परार्ध्या अमूल्याः केयूरेषु अङ्गदेषु मणिप्रवेका मण्युत्तमास्तैः पर्यस्ता व्याप्ताः दोर्दण्डा भुजदण्डा एव सहस्रमनन्ताः शाखा यस्य तं चन्दनवृक्षोऽपि मण्यादितुल्यैः

फलपुष्पादिभिर्योग्यप्रशाखो भवति। अव्यक्तं प्रधानं मूलमधोभागो यस्य। यद्वा। अव्यक्तं ब्रह्म मूलं यस्य ब्रह्माभिव्यक्तिरूपत्वात्। यद्वा। अनादित्वादव्यक्तमूलम्। वृक्षस्यापि मूलमव्यक्तं भवति। अहीन्द्रस्य शेषस्य भोगैर्देहावयवैः फणैर्वा अधिवीताः संवेष्टिताः वल्शाः स्कन्धाः यस्य तं "वनस्पतिः शतवल्श" इति श्रुतेर्वल्शशब्दः स्कन्धवाची। चन्दनवृक्षोऽपि सर्पैः संवेष्टितो भवति। लोकत्रयसंग्रहेणेत्युक्तत्वात्। एवंभूतं त्रिभुवनात्मकमङ्घ्रिपेन्द्रं वृक्षश्रेष्ठं भगवन्तमपश्यत्॥ २९॥ पुनः पर्वतरूपेण भगवन्तं वर्णयति—चराचरेति। चराचराणामोकः स्थानं पर्वतोऽपि तथा भवति। अहीन्द्रस्य शेषस्य बन्धुं मित्रं पर्वतोऽप्यहीन्द्राणां बन्धुर्भवति सलिलेनोपगूढमावृतं पर्वतोऽपि मैनाकादिस्तथा किरीटानां साहस्रमेव हिरण्यशृङ्गाणि यस्य तं पर्वतोऽपि मेर्वादिस्तथा आविर्भवत् स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मूर्त्तिमध्ये यस्य तं पर्वतस्यापि हि गर्भे कश्चिद्रत्नमाविर्भवति भगवानेव महीध्रः पर्वतस्तमपश्यत्॥ ३०॥ निवीतमिति। आम्नाया वेदा त एव मधुव्रता भ्रमरास्तैः श्रीर्यस्यास्तया स्वकीर्त्तिमय्या स्वकीर्तितुल्यया स्वकीर्त्तिं गायद्भिर्वेदरूपैः भ्रमरैराहितशोभया वनमालया प्रेक्षां क्षिपन्तमित्यत्रोक्तलक्षणया निवीतं कण्ठलम्बिन्या व्याप्तं तथा सूर्यादिभिरगममगम्यं स्वत्रयापारैराकलयितुमशक्यं त्रिषु लोकेष्वपि धाम स्फूर्तिर्येषां तैः परिक्रमद्भिः रक्षार्थं परितो धावद्भिः। दीर्घाभाव आर्षः। प्रधनिकैः प्रधनं संग्राम तत्प्रयोजनकैः सुदर्शनादिभिः शस्त्रैर्हेतुभूतैर्दुरासदं दुष्प्रापं हरिमपश्यत्। पर्वतादिसरूपं पश्यन् हरिरसाविति ज्ञातवानित्यर्थः॥ ३१॥ तर्हीति। लोकानां विसर्गे सर्जने दृष्टिः संकल्पो यस्य स जगतो विधाता स देवो ब्रह्मा यदैव भगवन्तमपश्यत्तर्ह्येव तदैव तस्य भगवतो नाभिसरसि सरोजं कमलं तत्रात्मानम् आत्मनश्चतुर्षु दिक्षु अम्भो जलं श्वसनं प्रलयवायुं वियत् आकाशं चेति पञ्चापि ददर्श। अतः पञ्चभ्यः परमन्यत् किमपि वस्तु न ददर्श॥ ३२॥ स इति। रजसा रजोगुणेन उपरक्तो व्याप्तः विसर्गे सृष्टौ अभिमुखः दत्तचित्तः अव्यक्तं वर्त्म मार्गो यस्य तस्मिन् भगवत्येवाभिवेशितः स्थिरीकृत आत्मा येन तथाभूतः स ब्रह्मा प्रजाः सिसृक्षन् स्रष्टुमिच्छन्निय देव नाभिसरोजादिपञ्चकं भगवन्त च दृष्ट्वा कर्मबीजं क्रियत इति कर्म जगत्तस्य बीजं कारणम् ईड्यं स्तुत्यं तं भगवन्तम् अस्तौत्॥ ३३॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायस्तृतीयस्याष्टमे निरमादिमाम्॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायामष्टमोऽध्यायः॥ ८॥

—:❀:—

## अथ नवमोऽध्यायः

### ब्रह्मोवाच

**ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते भगवतो गतिरित्यवद्यम्।**
**नान्यत् त्वदस्ति भगवन्नपि तन्न शुद्धं मायागुणव्यतिकराद्यदुरुर्विभासि॥ १॥**

नवमे तपसा तुष्टं हरिं ब्रह्मा विलोक्य च। सिसृक्षया तमस्तौषीत्तत्र श्लोकाः कृताब्धयः॥

चत्वार्युवाचेति पादोना त्रिषष्टिरनुष्टुभः॥ ९॥

ज्ञात इति। हे भगवन्! सुचिरात् बहुकालोपार्जिततपसः मे मया अद्य इदानीं त्वं ज्ञातोऽसि दृष्टोऽसि। नन्विति निश्चये। भगवतस्तव गतिस्तत्त्वं न ज्ञायत इति देहभाजां प्राणिनामवद्यं महान् दोषः। यतः त्वत् त्वत्तः अन्यत् किमपि वस्तु न नास्ति। यदपि त्वद्भिन्नं किञ्चित् अस्तीति प्रतीयते तदपि शुद्धं सत्त्वं न भवति। यत् यस्मात् मायायाः गुणानां व्यतिकरात् क्षोभात् त्वमेवोरुर्बहुरूपो विभासि प्रकाशसे॥ १॥ ननु त्वया दृष्टं रूपं गुणात्मकमेव, सत्यं तु ब्रह्मैव, अतस्त्वमपि तन्न जानासीत्याशङ्क्य तव निर्गुणरूपमपि अस्माद्रूपाद्भिन्नं नास्तीत्याह—रूपमिति द्वयम्। हे परम! हे आत्मन्! यस्य तव नाभिपद्मभवनात् अहम् आविरास प्रकटोऽभूवं तस्य अवबोधरसोदयेन चिच्छक्त्याविर्भावेन शश्वत् सर्वदा निवृत्तं तमः अविद्या यस्मात्तस्य तव यदेतत् अवताराणां शतस्य शुद्धसत्त्वात्मकस्य एकं बीजं मूलं सतामनुग्रहाय आदौ सर्गादौ गृहीतं त्वयैव स्वातन्त्र्येणाविष्कृतं रूपम् अस्ति। अहम्

आनन्दमात्रम् अविकल्पं निर्भेदम् अविद्धवर्चः अनावृतप्रकाशं यद् भवतः स्वरूपं तत् अतो रूपात्परं भिन्नं न पश्यामि। किन्तु इदमेव तत् अतो हेतोः विश्वस्य सृजम्। इगुरवेति कः। अतो नपुंसकविशेषणत्वम्। एकमुपास्येषु मुख्यम् अविश्वं विश्वस्मादन्यत् भूतेन्द्रियाणामात्मानं कारण ते तव अदः रूपम् उपाश्रितोऽस्मि स्वाश्रयतया गृहीतवानस्मि ॥ २-३ ॥ नन्वेवमपि सोपाधिकमेतदर्वाचीनमेव तत्राह—तद्वा इति। हे भुवनमङ्गल! यतस्ते त्वया उपासकानां नाऽस्माकं मङ्गलाय तद्वै तत्र सच्चिदानन्दात्मकमिदं रूपं ध्याने दर्शितं स्म न ह्यव्यक्तवर्त्मनिविष्टचित्तानामस्माकं त्वया सोपाधिकदर्शनं युक्तमिति भाव। इति हेतोस्तस्मै भगवते तुभ्यं नमोऽनुविधेम अनुवृत्त्या नमस्कुर्याम। आर्षः प्रयोगः। यो भवान् असत् सुप्रसङ्गो येषां तैर्नरकभाग्भिः नरकयोग्यैः जनैर्न आदृतोऽसि ॥ ४ ॥ ये त्विति। हे नाथ! श्रुतिर्वेदः स एव वातस्तेन नीतं प्रापितं त्वदीयचरणाम्बुजकोषस्य गन्धं प्रभावं ये तु कर्णविवरैर्जिघ्रन्ति आदरेण शृण्वन्ति तेषां स्वपुंसां परया श्रवणेन प्रवृद्धया भक्त्या गृहीतचरणस्त्वं तेषां हृदयाम्बुरुहात् नापैषि नापगच्छसि तत्र नित्यं प्रकाशसे ॥ ५ ॥ तावदिति। लोकः प्राणी यावत् अभयं ते तव अङ्घ्रिं न प्रवृणीत नाश्रयेत् तावदेव द्रविणं धनं गेहं प्रसिद्धं देहेति पाठान्तरम्। सुहृदः स्त्रीपुत्रमित्रादय तन्निमित्तं तेषां विनाशचिन्तया भयं भवति। गते शोकः पुनः स्पृहा तत तत्साधने प्रवृत्तो परेभ्यः परिभवः यथाकथञ्चित्प्राप्तावपि पुनर्विपुलो महान् लाभः भवति। तथा तावदेव पुनरार्त्तिमूल भयादिदुःखकारण ममेत्यसद्भ्रान्तिरूपः अवग्रहः अभिनिवेशो भवति। तवाङ्घ्रिप्रवरणे तु सर्वे निवर्त्तन्ते किं पुनस्तत्प्रकाशे सतीति भावः ॥ ६ ॥

दैवेनेति। सर्वाणामशुभानामुपशमनात् भवत तव प्रसङ्गात् श्रवणकीर्त्तनादिरूपाद्विमुखानीन्द्रियाणि येषां तथा दीनाः विषयेषु लम्पटाः लोभेनाभिभूतं मनो येषां ते तादृशाः सन्तो ये कामसुखानां लेशस्तस्यापि लवः स्वल्पो भाग तदर्थं शश्वत् निरन्तरमकुशलानि काम्यकर्माणि पापानि च कुर्वन्ति ते दैवेन दुरदृष्टेन हता धीर्येषां ते तथा मन्दमतय एवेति ॥ ७ ॥ क्षुदिति। हे उरुक्रम! क्षुत् तृट् च त्रिधातवश्च वातपित्तश्लेष्माण तथा शीतादिभिः इतरेतरात् भार्यापुत्रादिसंबन्धिषु परस्पराच्च काम एव दुष्पूरत्वेनाग्निस्तेन दुर्भरेण दुःसहेन अच्युतया रुषा चानवच्छिन्नक्रोधेन च मुहुरर्द्यमानाः प्रजाः संपश्यतो मे मनः सीदते क्लिश्यतीत्यर्थः। तङार्षः ॥ ८ ॥ यावदिति। हे ईश! भगवत तव इन्द्रियाणि अर्थाः विषयाश्च तद्रूपा या माया तस्या बलमाधिक्यं यस्मिं तदिदमात्मनः पृथक्त्वं देहेन्द्रियादिभावं त्वदिदमिति पाठे इदं देहादि आत्मनः त्वत् त्वत्तः पृथक् स्वस्य यावज्जनः पश्येत्तावत् व्यर्था मिथ्याध्यस्तापि असौ क्रियार्थो क्रियाणामर्थः फलं यस्यां सा संसृतिर्जन्ममरणादिलक्षणा न प्रतिसंक्रमेत न निवर्त्तते। तङार्षः। किन्तु दुःखनिवहं वहता प्रापयन्तो सत्येव तिष्ठति। तुमभाव आर्षः। ह्रस्वपाठः सुगम एव ॥ ९ ॥ अह्नीति। हे देव! अह्नि दिने आपृतानि व्यापृतानि अत एव आर्त्तानि करणानि इन्द्रियाणि येषां ते निशि रात्रौ निःशयाना अपि नानामनोरथविषयिण्या धिया स्वप्नदर्शनेन क्षणे क्षणे भग्ना निद्रा येषां तथा दैवेन आहता सर्वतः प्रतिहता अर्थरचना अर्थार्थोद्यमा येषाम् ईदृशाः। युष्मत्प्रसङ्गात् श्रवणकीर्त्तनादेर्विमुखा ऋषयो ज्ञानिनोऽपि इह जगति संसरन्ति जन्ममरणादिकमनुभवन्ति ॥ १० ॥ त्वमिति। हे नाथ! हे उरुगाय! श्रुतेन श्रवणेनेक्षितो ज्ञातः पन्थाः यस्य स त्वं ननु पुंसां भावो भक्तिरेव योग उपायस्तेन परिभाविते संशोधिते हृत्सरोजे आस्से तिष्ठसि। श्रवणं विनापि ते त्वद्भक्ता यद्यद्वपुधिया विभावयन्ति ध्यायन्ति सतां तेषामनुग्रहाय त्वं तत्तदेव वपुः प्रणयसे प्रकटयसि ॥ ११ ॥ नेति। एक एव नानाजनेषु अवहितः प्रविष्टः सुहृत् अन्तरात्मा च भवान् यत् यथा असतामलभ्यया सर्वभूतेषु दयया अतिप्रसीदति तथा हृदि बद्धकामैः सुरगणैः कर्तृभिः उपचितैः पुष्कलैरुपचारैः पुष्पोपहारादिसाधनैराराधितो न प्रसीदति ॥ १२ ॥ पुंसामिति। यतः सकामानां भवान्नातिप्रसीदत्यतोऽध्वराद्यैर्यज्ञादिभिर्विविधैः कर्मभिर्दानेन चोग्रतपसा व्रतचर्यया च भगवत तवाराधनमेव पुंसः सत्क्रियार्थः संश्चासौ क्रियार्थश्च उत्तमं फलं भवति। यत्र यस्मिंस्त्वयि अर्पितः धर्मः कर्हिचिदपि न ह्रियते न विनश्यति मोक्षपर्यवसायी भवति। कामनयाऽनुष्ठितस्तु फलं दत्त्वा नश्यति इत्यर्थः ॥ १३ ॥

शश्वदिति। शश्वत् स्फुरता स्वरूपमहसा स्वरूपचैतन्येनैव नितरां पीतौ निरस्तौ भेदमोहौ यस्य बोधश्चैतन्यमेव धिषणा विद्याशक्तिर्यस्य। यद्वा। बोध एव धिषणमाश्रयः तस्मै परस्मै पुरुषाय नमः। तथा विश्वस्योद्भवस्थितिलयेषु निमित्तं या माया तस्या लीलाविलास तद्रूपेण परिणाम तया रासः क्रीडा यस्य तस्मै ईश्वराय इदं नमः नमनं चकृम कुर्मः। कृतवन्त इति वा ॥ १४ ॥ यस्येति। यस्य अवतारगुणकर्मणां विडम्बनमनुकरणमस्ति येषु तानि नामानि देवकीनन्दनसर्वज्ञगोवर्द्धनोद्धरणादीनि असुविगमे प्राणोत्क्रमणसमये अत एव विवशाः अपि ये गृणन्ति केवलमुच्चारयन्ति तेऽनेकजन्मोपार्जितं शमलं पापं सहसा एव हित्वा अपावृतं निरस्तावरणमृतं सत्यं भगवन्तं यान्ति तम् अजं प्रपद्ये ॥ १५ ॥ यो वै इति। यः प्रथममेक एव ततः आत्मा स्वयमेव मूलमधिष्ठानं यस्य तत्प्रधानं भित्त्वा गुणत्रयरूपेण विभज्य अहं ब्रह्मा च गिरिशश्च स्वयं विभुः विष्णुश्च एते स्थित्युद्भवप्रलयहेतवः त्रयः पादाः स्कन्धा यस्य स त्रिपाद् भूत्वा तत उरवो बहवः प्ररोहाः शाखोपशाखा मरीच्यादिमन्वादिरूपाश्च यस्य सः उरुप्ररोहः सन् ववृधे। तस्मै भगवते भुवनाकाराय द्रुमाय नमः ॥ १६ ॥ लोक इति। अयं लोकः प्राणिमात्रं विकर्मणि पापे निरतः कुशले सुखहेतुभूते

हिते स्वे स्वकीये त्वया साक्षादुदिते यत्करोषि यदश्नासीत्यादिना प्रोक्ते भवदर्चनरूपे कर्मणि प्रमत्तः अनवहितो यावद् वर्त्तते तावदेव यो बलवान् इहाि न्नेव जन्मनि सद्य एव अस्य लाकस्य जीवितस्य आशामपि छिनत्ति भोगसुखवार्त्ता तु दूरत स्मै अनिमिषाय कालरूपाय नमोऽस्तु ॥ १७ ॥ यस्मादिति। आस्तां लोकस्य कथा सकललोकैर्नमस्कृतं यद् द्विपरार्द्धावस्थायि धिष्ण्यं स्थानं तदध्यासितः आरूढोऽप्यहं यस्मात्कालरूपात्त्वत्तो बिभेमि भीतश्च संस्त्वामेवावरुरुत्समानः प्राप्तुमिच्छन् बहवः सवा यागाः संवत्सरा वा यस्य तादृशो भूत्वा बहून् यागान् कृतेत्यर्थः। बहून् संवत्सरान् वा तपः तेपे कृतवान् तस्मै तुभ्यम् अधिमखाय यज्ञाधिष्ठात्रे नमः ॥ १८ ॥ तिर्यगिति। यस्तु स्वरूपानुभवेनैव निरता रतिर्विषयसुखापेक्षा येन तादृशोऽपि आत्मना स्वेन कृताः सेतवो मर्यादास्तत्परीप्सया पालनेच्छया आत्मनः स्वस्येच्छयैव जीवयोनिषु तिर्यङ्मनुष्यविबुधादिषु अवरुद्धदेहः स्वीकृतमत्स्यादिरामादिवामनादिमूर्त्तिः सन् रेमे। तस्मै पुरुषोत्तमाय भगवते नमः ॥ १९ ॥ य इति। यः दशार्द्धाः पञ्च तामिस्रान्धतामिस्रमोहमहामोहतमोरूपा पञ्च वृत्तयो यस्यास्तया अविद्यया निद्राहेतुभूतया अनुपहतोऽनभिभूतोऽपि जठरीकृता उदरे प्रविलापिता लोकयात्राः सर्वलोका येन सः जनस्य निद्राणस्याविवेकिनः सुखं वितृण्वन् निद्रासुखमादृगिति दर्शयन्नुपहर्सात्रित्यर्थः। यद्वा। पूर्वकल्पे श्रान्तस्य विश्रामसुखं स्फोरयन् भीमानामूर्मीणां माला विद्यन्ते यस्मिन्नम्भसि तज्जले जलमध्ये अहिरेव कशिपुः शय्या तस्याः स्पर्शोऽनुकूलो यस्यास्तां निद्रामुवाह निद्रितानुकरणं कृतवान् तस्मै ते नम इत्यपकर्षः ॥ २० ॥

यदिति। हे ईड्य ! यस्य नाभिपद्ममेव भवनं तस्मात् लोकत्रयमुपकरणं भोगसाधनं यस्य यद्वा लोकत्रयस्य सृष्ट्यादिद्वारोपकारकोऽहं यदनुग्रहेण आसम् उदरे स्थितो भवः प्रपञ्चो यस्य योगरूपनिद्रायाः अवसाने अन्ते सृष्ट्यारम्भसमये विकसन्नलिनवत् कृप पूर्णतया संतापहरमोक्षणं यस्य तस्मै ते तुभ्यं नमः ॥ २१ ॥ सोऽयमिति। समस्तजगतां सुहृत् एक आत्मा सोऽयं भगवान् यत् येन सत्त्वेन सत्त्वकार्येण ज्ञानेन भगेन ऐश्वर्यादिगुणेन च जगन्मृडयते सुखयति। तेनैव ज्ञानैश्वर्यादिना मे मम दृशं प्रज्ञामनुस्पृशतात् योजयतु। यथा ज्ञानादिना इदं विश्वं पूर्ववत् पूर्वकल्पवत् अहं स्रक्ष्यामि स्रष्टुं क्षमो भविष्यामि। यतोऽसौ भगवान् प्रणताः प्रिया यस्य तथाविधः अहं च प्रणतः अतस्तत्करिष्यतीति भावः ॥ २२ ॥ एष इति। प्रपन्नानां वरदः आत्मशक्त्या रमया लक्ष्म्या सह गृहीताः सर्वज्ञत्वादिगुणसहिताः अवतारा येन सः भगवान् यद्यत् कर्म करिष्यति तस्मिन् कर्मणि स्वस्य तस्यैव भगवतो विक्रमः प्रभावो यस्मिंस्तथाभूतमिदं विश्वं सृजतोऽपि मे चेतः चित्तम् एष भगवानेव युञ्जीत प्रवर्त्तयतु। यथा येनाहं कर्म कर्मासक्ति तत्कृतं शमलं वैषम्यादिकृतं पापं च विजह्यां त्यक्ष्यामि ॥ २३ ॥ नाभीति। इह अस्मिन्नम्भसि सतः शयानस्य अनन्तशक्तेर्यस्य पुंसो नाभिह्रदात् कमलद्वारा विज्ञाने शक्तिर्यस्य स महत्तत्त्वात्मकस्य चित्तस्याभिमानी अहम् आसम्। अतस्तस्य अस्य इदं विचित्रं विश्वात्मकं रूपं विवृण्वतो विस्तारयतो मे मम निगमस्य वेदस्यावयवभूतानां गिरां विसर्गं उच्चारणं मा रीरिषीष्ट अतिशयेन मा लुप्यतां मा विस्मृतो भवतु। "रिष हिंसायां" यङ्लुगन्तं लिङि कर्मकर्त्तरि रूपं छान्दसम् ॥ २४ ॥ सोऽसाविति। अदभ्रकरुणः बहुदयः पुराणः पुरुषः सोऽसौ मत्कारणभूतो भगवान् विवृद्धः प्रेमा यस्मिंस्तथाभूतेन स्मितेन नयनाम्बुरुहं विजृम्भन् उल्लासयन् आर्षः शाता विकासयन्निति यावत्। विश्वस्य विजयाय उद्भवाय चकारादस्मदनुग्रहाय च उत्थाय माध्व्या मधुरया गिरा नोऽस्माकं विषादं वैचित्यमपनयतात् निराकुर्यात्। माध्वीति "ऋत्व्यावास्त्व्ये"ति सूत्रेण मधुशब्दस्याणि स्त्रियां यण् छन्दसि निपात्यते ॥ २५ ॥ स्वसम्भवमिति। स्वस्य सम्भवो यस्मात्तं भगवन्तं तपः शरीरं विद्या उपासना समाधिः ऐकाग्र्यं तैरेवं निशाम्य दृष्ट्वा यावन्मनोवचः स्वमनोवचनशक्त्यनुसारेण स्तुत्वा च स ब्रह्मा खिन्नवत् यथा कार्यावसानमप्राप्य श्रान्तः खिन्नो भवति तथा विरराम तूष्णीं बभूव ॥ २६ ॥ अथेति द्वयम्। मधुसूदनः आत्मनः स्वस्य हेतोर्लोकसंस्थानं लोकरचना तद्विज्ञानविषये परिखिद्यत तदलभमानस्य। शाता आर्षः। ब्रह्मणोऽभिप्रेतमभिप्रायमन्वीक्ष्य ज्ञात्वा अथ तस्य कश्मलं विषादं शमयन्निव इव एवार्थे तेन भयङ्करतया प्रसिद्धेन कल्पं व्यतिकरोति विनाशयतीति कल्पव्यतिकरं तच्च तदम्भश्च तेन विषण्णं चेतो यस्य तं ब्रह्माणम् अगाधया गम्भीरार्थया वाचा आह स्म ॥ २७–२८ ॥

मेति। हे वेदगर्भ ! तन्द्रीं विषादकृतमालस्यं मा गाः मा प्राप्नुहि। किन्तु सर्गे सृष्टौ उद्यममावह कुरु। तेनैव मे दृशमनुस्पृशतादित्यादिकं यद् भवान् मां प्रार्थयते तद्धि मयाग्रे पूर्वमेवापादितं सम्पादितम् ॥ २९ ॥ तर्हि कथमहं न जानामि तत्राह—भूय इति। हे ब्रह्मन् ! तपः आलोचनं मदाश्रयां मद्विषयां विद्यामुपासनां चैव त्वं भूयः पुनरातिष्ठ कुरु। ताभ्यां तपोविद्याभ्यामन्तर्हृदि हृदयमध्ये अपावृतान् आवरणशून्यान् लोकान् देवमनुष्यादिसहितान् भूरादीन् द्रक्ष्यसि ॥ ३० ॥ तत इति। हे ब्रह्मन् ! ततः त्वं मद्भक्तियुक्तः समाहितः एकाग्रचित्तश्च सन् आत्मनि स्वस्मिंल्लोके च चेतनाचेतनात्मके जगति ततं व्याप्तं मां द्रष्टासि द्रक्ष्यसि। मयि च लोकान् आत्मनो जीवांश्च द्रक्ष्यसि ॥ ३१ ॥ यदा त्विति। लोको जनः यदा तु यदैव दारुषु अग्निमिव सर्वभूतेषु अवस्थितं मां प्रतिचक्षीत परिपश्येत्तर्ह्येव कश्मलं पापं जह्यात् त्यजेत् ॥ ३२ ॥ यदेति। भूतानि इन्द्रियाणि च आशयोऽन्तःकरणं च एतैर्विरहितमात्मानं जीवं शुद्धत्वंपदार्थं स्वरूपेण स्वस्यात्मभूतेन मया तत्पदार्थेन उपेतमेकीभूतं यदा पश्यन् भवति तदा स्वराज्यं

मोक्षमृच्छति प्राप्नोति ॥ ३३ ॥ नानाकर्मेति । नानाकर्मणां जीवसम्बन्ध्यनादिपुण्यपापानां वितानेन विस्तारेण वासनानुसारेण बह्वीः प्रजाः सिसृक्षतः स्रष्टुमिच्छतः व्यासङ्गान्तरासक्तचित्तस्यापि ते तव आत्मा चित्तमस्मिन् समयेऽपि यन्नावसीदति मोहं न प्राप्नोति स एष वर्षीयान् महत्तरो मदनुग्रहः ॥३४॥ ऋषिमिति । आद्यं प्रथमम् सृष्टिं वेदद्रष्टारं त्वां पापीयान् विक्षेपकारोऽपि रजोगुणो न बध्नाति विक्षेपादिकं कर्तुं न शक्ष्यति । यत् यस्मात् प्रजाः संसृजतोऽपि ते तव मनो मयि निर्वद्धमत्यासक्तम् । दशमस्कन्धे तु अस्य विक्षेपो न रजसा किन्तु मञ्जुमहिमदर्शनसौभाग्याद्दृष्टादेवेति ॥ ३५ ॥ ज्ञात इति । हि यस्मादहं देहिनां दुर्विज्ञेयोऽपि भवता त्वया ज्ञातोऽस्मि । यत् यस्मात् त्वं मां भूतैरिन्द्रियैर्गुणैः सत्त्वादिभिरात्मनाऽहंकारेण च अयुक्तं मन्यसे ॥ ३६ ॥

तुभ्यमिति । नालेन मार्गेण पुष्करस्य मूलमधिष्ठानं सलिले विचिन्वतः अन्वेषयतस्तवेति शेषः । मद्विचिकित्सायां भवितव्यमस्याश्रयेण न च तद्दृश्यते ततोऽस्ति नास्तीति मद्विषये संदेहे सति मे मया तुभ्यं त्वां कृतार्थयितुं 'क्रियार्थोपपदस्य' इति क्रियाग्रहणमपि कर्तव्यमिति वा चतुर्थी । आत्मा स्वरूपमन्तर्बहिर्न्तर्हृदि दर्शितः ॥ २७ ॥ यदिति । अङ्ग हे ब्रह्मन् ! मत्कथाया-मभ्युदयः प्रभावस्तेनाङ्कितं मत्स्तोत्रं यच्चकर्थ कृतवानसि । यद्वा । यच्च ते तव तपसि निष्ठा स्थितिर्जाता स एष सर्वोऽपि मदनुग्रहः ॥ ३८ ॥ प्रीत इति । ते तव भद्रमस्तु यद्यस्मात् लोकानां विजयस्य पालनस्येच्छया गुणमयं गुणमयत्वेन प्रतीयमानमपि मां निर्गुणमेव वर्णयन् त्वं अस्तौषीः स्तुतवानसि । इडभाव आर्षः । अतोऽहं त्वयि प्रीतोऽस्मि ॥ ३९ ॥ य इति । एतेन भवत्कृतेन स्तोत्रेण यः पुमान्नित्यं मां स्तुत्वा भजेत् तस्यापि सर्वकामवराणामीश्वरोऽहम् आशु शीघ्रं प्रसीदेयं तव प्रीत इति किमु वक्तव्यम् ॥ ४० ॥ पूर्तेनेति । पूर्तेन कूपारामादिना तपसा यज्ञैर्दानैर्योगसमाधिना च राद्धं सिद्धं यत्पुंसां निःश्रेयसं फलं तन्मत्प्रीति-रेवेति तत्त्वविदां मतम् ॥ ४१ ॥ अहमिति । हे धातः ! अहम् आत्मनां सर्वजीवानाम् आत्मा प्रेयसामपि मध्ये प्रेष्ठः प्रियतमः सन् स्थितः यत्कृते यदर्थं देहादिः प्रियो भवति स आत्माहम् । अतः मयि रतिं कुर्यात् ॥ ४२ ॥ सर्वेति । आत्मा त्वम् आत्मयोनिना आत्मा अहं योनिः कारणं यस्य तेन सर्ववेदमयेन सर्ववेदाभ्यासशालिना आत्मना अन्यनिरपेक्षेण यथा पूर्वं पूर्वकल्पे यथावस्थितं तथेदं त्रैलोक्यं याश्च मय्यनुशेरते उपसंहृतास्तिष्ठन्ति ताः प्रजाश्च सृज । यद्वा । अयं चासावात्मा च तेन इदमात्मना इत्येकं पदम् अन्यनिरपेक्षेणेत्यर्थः । मयि स्थितानामपि व्यक्तिमात्रं कर्तव्यमित्यनायास उक्तः ॥ ४३ ॥ तस्मै इति । प्रधान-पुरुषयोरीश्वरः कञ्जनाभः भगवान् जगत्स्रष्ट्रे तस्मै ब्रह्मणे एवम् इदं जगन्निर्माणप्रकारादिकं व्यज्य ज्ञापयित्वा स्वेन प्रदर्शितेन नारायणरूपेण तिरोदधे अदृश्योऽभूत् ॥ ४४ ॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां नवमोऽध्यायः ॥ ९ ॥

—:❀:—

# अथ दशमोऽध्याय

विदुर उवाच

अन्तर्हिते भगवति ब्रह्मा लोकपितामहः । प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः ॥ १ ॥

दशमे दशधा सर्गः प्राकृतादिविभेदोच्यते । श्लोकास्तु सार्द्धा ( २८।। ) एकोनत्रिंशच्चोवाचपञ्चकम् ॥
अनुष्टुभोऽप्यर्द्धयुता ( २९।। ) एकोनत्रिंशदीरिताः ॥ १० ॥

अन्तर्हित इति । भगवत्यन्तर्हिते सति लोकपितामहः विभुः ब्रह्मा दैहिकीर्देहजाः मानसीः संकल्पजाश्च प्रजाः कतिधा ससर्ज—ये चेति । हे भगवन् ! हे बहुवित्तम ! त्वयि त्वदग्रे ये च मे मयार्थाः संशयविषयाः पदार्थाः पृष्टास्तान् प्रश्नान् आनुपूर्व्येण एकैकशः वदस्व भाषयस्व यत्नेन वद वा । 'भासनोपसंभाषा' इति तङ् । तेन नोऽस्माकं सर्वसंशयान् छिन्धि ॥ १–२ ॥ एवमिति । हे भार्गव ! तेन क्षत्त्रा विदुरेणैवं संचोदित उत्तरदाने प्रवर्त्तितः कौषारवो मैत्रेयः मुनिः प्रीतः सन् हृदिस्थान् न तु विस्मृतान् तान् विदुरकृतान् प्रश्नान् प्रत्याह स्म तदुत्तरं दत्तवान् ॥ ३ ॥ विरिञ्चि इति । यत यथा भगवान् अजः आह स्म । 'भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम्' इत्युक्तवान् । विरिञ्चो ब्रह्माऽपि तथैवात्मनि परमात्मनि तस्मिन्नात्मानं मन आवेश्य दिव्यं वर्षशतं तपश्चक्रे ॥४॥ तद्विलोक्येति द्वयम् । एधमानेन प्रवृद्धेन तपसा आत्मसंस्थया परमात्मविषयया विद्यया उपासनया च विवृद्धं विज्ञानमेव बलं यस्य सः अब्जसंभूतो ब्रह्मा यदधिष्ठितः यत् पद्ममधिष्ठाय स्थितः । कर्त्तरि क्तः । तत्पद्ममम्भश्च तत्कालेन प्रलयकालेन कृतं वीर्यं बलं यस्य तेन वायुना कम्पितं विलोक्य अम्भसा सह वायुं न्यपात् पीतवान् नाशयामासेति ॥ ५–६ ॥ तदिति । यदधिष्ठितस्तद्वियद्व्यापि अत्युन्नतं पुष्करं कमलं विलोक्यानेन कमलेन प्राक् पूर्वकल्पान्ते लीनान् लोकान् कल्पिताऽस्मि स्रक्ष्यामीत्य-चिन्तयत् ॥ ७ ॥ पद्मकोशमिति । भगवता स्वयं करणीये कर्मणि चोदितः प्रवर्तितः ब्रह्मा द्विसप्तधा चतुर्दशलोकरूपेण उरुधा ततोऽपि बहुप्रकारेण भाव्यं भावयितुं योग्यम् अतिविस्तृतं तत् पद्मकोशमाविश्य तदेकमेव त्रिधा लोकत्रयरूपेण व्यभाङ्क्षीत् विभक्तं कृतवान् । ङकाररहितः पाठः ङकारवान् पाठश्चेद् भनक्तेः रूपम् । धातूनामनेकार्थता । यद्वा । भाव्यं वै राजोपास्यैर्ध्येयं तत्कमलं प्रथमं त्रिधा ततश्चतुर्दशधा ततः सूर्यचन्द्रादिलोकभेदेन उरुधा व्यभाङ्क्षीत् ॥ ८ ॥ एतावानिति । जीवलोकस्य व्यष्टिविराट्समूहस्य सृज्यस्य संस्थाभेदो रचनाविशेषः एतावान् त्रिलोकीरूप एव समाहितः शास्त्रे कथितः । ननु ब्रह्मणोऽपि जीवत्वात्तल्लोकस्यापि किमिति प्रत्यहं सृष्टिर्न भवति तत्राह—धर्मस्येति । हि यस्मादनिमित्तस्य निष्कामस्य धर्मस्य दशशताश्वमेधस्य शतजन्मसाधितस्य विपाकः फलरूपोऽसौ परमेष्ठी ब्रह्मा स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेतीति चतुर्थोक्तेः । उपलक्षणमेतत् सत्यलोकस्य महःप्रभृतिलोकानां तद्वासिनां च त्रैलोक्यस्य काम्यकर्मफलत्वात् प्रतिकल्प-मुत्पत्तिविनाशौ भवतः । महःप्रभृतीनां तूपासनासमुच्चितनिष्कामकर्मफलत्वात् द्विपरार्द्धपर्यन्तं न नाशः त्रिलोक्यां दह्यमानाया-मित्यादिना चैतत्स्फुटीभविष्यति । तत्रस्थानां च 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानं प्रविशन्ति परं पदम् ॥' इति वाक्यात्ततः परं प्रायेण मुक्तिरेवेति ज्ञेयम् । यद्वा योऽयं जीवलोकस्य एतावान् त्रिधा चतुर्दशधा बहुधा चेति संस्थाया रचनाया भेदः ब्रह्मणा कृतः स समाहृतः संक्षेपतः कथितः । ननु एकेन ब्रह्मणा कथमिदं शक्यं तत्राह—असौ परमेष्ठी अनिमित्तस्य शतजन्मसाधितस्य विपाकः फलरूपः अत एतत्सामर्थ्यम् ॥ ९ ॥ कालभेदेन लोकसृष्टिभेदं श्रुत्वा कालं पृच्छति—यदात्थेति । हे ब्रह्मन् ! हे प्रभो ! बहुरूपस्य अद्भुतकर्मणश्च हरे यत् कालाख्यं लक्षणं स्वरूपं तत्र तत्र त्वमात्थ अब्रवीस्तत् नोऽस्मान् प्रति कथं कालः कल्प्यते किं वा तस्य सूक्ष्मं च रूपमिति यथा यथावद् वर्णय ॥ १० ॥

गुणेति । गुणानां सत्त्वादीनां व्यतिकरात् वैषम्यात् महदादिपरिणामात् आकारः स्वरूपज्ञानं यस्य स गुणवैषम्यरूपकार्या-नुमेयः स्वतस्तु निर्विशेषः अत एवाप्रतिष्ठितः प्रतिष्ठा पर्यवसानं तद्रहितः आद्यन्तशून्यः काल इति सामान्यतः स्वरूपोक्तिः विशेषेण तूत्तराध्याये उपादीयते निमित्ततया स्वीक्रियत इत्युपादानं स काल उपादानं निमित्तं यस्मिंस्तथाभूतमात्मानमेव पुरुष ईश्वरः विश्वरूपेणासृजत् लीलया स्वव्यतिरेकेण सृज्यस्याभावात् । एतच्च वस्तुकथनमात्रम् । कालेन निमित्तेन चासृजदित्येतावदेव विवक्षितम् ॥ ११ ॥ स्वभिन्नसृज्याभावं दर्शयन् कालस्य निमित्ततामाह—विश्वमिति । प्रलये विष्णुमायया संस्थितं संहृतमतो ब्रह्मतन्मात्रमेव सद्विश्वम् अव्यक्ता मूर्तिर्यस्य तेनेश्वरेण कर्त्रा कालेन निमित्तेन परिच्छिन्नं पृथक् प्रकाशितम् ॥ १२ ॥ विश्वप्रवाह-

स्यानवच्छेदमाह— यथेति अर्द्धम्। एतद्विश्वं यथेदानीं दृश्यते अग्रे प्रलयात् पूर्वमपि तथैवासीत् पश्चाद् भाविप्रलयानन्तरमपीदृशमेव भविष्यति। सर्ग इति। प्राकृतः षड्विधः वैकृतश्च त्रिविध एवं सर्गो नवविधः। यस्तु प्राकृतो वैकृतश्च स उभयात्मको दशम इत्यर्थाद्बोध्यम्। अस्य प्रपञ्चस्य प्रतिसंक्रमः प्रलयः कालद्रव्यगुणैस्त्रिविध। कालेन नित्यप्रलयः द्रव्येण संकर्षणाग्न्यादिना नैमित्तिकः प्रलयः गुणैः स्वं स्वं कार्यं ग्रसमानैः प्राकृतिकः प्रलयः॥ १३॥ आद्य इति। आत्मनः परमात्मन सकाशाद् गुणवैषम्यं वैषम्यापन्नगुणत्रयात्मकः प्रकृतिविकारविशेषो यो महत्तत्त्वं तस्य महतो यः सर्गः स आद्यः। गुणवैषम्यमिति महतो लक्षणम्। यत्र यस्मात् द्रव्याणि पृथ्व्यादीनि ज्ञानानि ज्ञानेन्द्रियाणि देवता मनश्च क्रियाः कर्मेन्द्रियाणि च तेषामुदय उत्पत्तिर्यस्मात् सः अहङ्कारः तस्य अहङ्कारस्य सर्गो द्वितीयः। द्रव्येत्याद्यहमो लक्षणम्॥ १४॥ भूतसर्ग इति। द्रव्यशक्तिमान् महाभूतोत्पादकः तन्मात्रः शब्दादिपञ्चतन्मात्रारूपो भूतसर्गः भूतसूक्ष्मसर्गः स तु तृतीयः। यस्तु ज्ञानक्रियात्मकः ज्ञानकर्महेतुभूत ऐन्द्रियः इन्द्रियाणां सर्गः स चतुर्थः॥ १५॥ वैकारिक इति। यः वैकारिक सात्त्विकाहङ्कारकार्यभूतो देवसर्गः इन्द्रियाभिमानदेवानां दिग्वातादीनां यः सर्गः स पञ्चमः सर्गः। मनश्च यन्मयं यस्य सात्त्विकाहङ्कारस्य कार्यं सोऽपि सर्गः पञ्चम इत्यर्थः। हे प्रभो! अबुद्धिर्जीवानामावरणं विक्षेपश्च तां करोतीत्यबुद्धिकृत्तस्य तमसः तामिस्रादिपञ्चपर्वाविद्याया यस्तु सर्गः स तु षष्ठः॥ १६॥ षडिति। इमे षट् प्राकृताः प्रकृतित एवोत्पन्नाः सर्गा वर्णिता इति शेषः। वैकृतान् विकृतिः समष्ट्यात्मको ब्रह्मा तत्कृतानपि सर्गान्मे मत्तस्त्वं शृणु। रजोभाजः गृहीतरजोगुणस्य हरति दुःखं हरिः तादृशी मेधा तद्विषया मतिर्यस्य हरिमेधा तस्य। आर्षः असिच्। भगवतः इयं सर्गरूपा लीलेत्यर्थः। यद्वा। हरिर्मेधायां यस्य तस्य रजोभाजो ब्रह्मरूपस्य। अत्र पक्षे अबुद्धिकृत इति प्रथमान्तम्। अनवधानकृत इत्यर्थः॥ १७॥ सप्तम इति। तस्थुषां स्थावराणां यो मुख्यसर्गः स सप्तमः। मुखमिव प्रथमकृतत्वान्मुख्य इत्युच्यते। शाखादिभ्यो यत्। स च वनस्पत्यादिकः षड्विधः। ये पुष्पं विनापि फलन्ति ते वनस्पतयः वटपिप्पलादयः। फलपाकान्ता ओषधयः यवव्रीह्यादयः। आरोहणापेक्षा लताः कूष्माण्डादयः। त्वक्साराः कठिनत्वचो वेण्वादयः। लता एव काठिन्येनारोहणानपेक्षा वीरुधः। ये पुष्पैः फलन्ति ते द्रुमा आम्रादयः॥ १८॥

उत्स्रोतस इति अर्द्धम्। ते च वनस्पत्यादयः ऊर्ध्वं स्रोत आहारसञ्चारो येषां ते तथा तमःप्राया अव्यक्तचैतन्या अन्तःस्पर्शाः स्पर्शमेवान्तर्जानन्ति न तु वक्तुं शक्नुवन्ति। विशेषिणः अनेकभेदवन्तः। तिरश्चामिति। तिरश्चां तिर्यग्गच्छतां यः सर्गः सोऽष्टमः। स च पुनरष्टाविंशद्विधो मतः सम्मतः। विंशतिशब्दस्य तान्तत्वमार्षम्। अष्टाविंशतिधा मत इत्यपि पाठः। ते तिर्यञ्चश्च अविदः ह्यस्तनज्ञानशून्याः भूरितमसः अज्ञानबहुलाः क्रोधाधिकाः केवलाहारनिद्रामैथुनभयादिमात्रनिष्ठाश्चेति घ्राणज्ञा घ्राणेनैवेष्टमर्थं जानन्तीत्यर्थः। हृदि मनसि अवेदिनः सुखदुःखादिदीर्घानुसन्धानरहिताः॥ १९॥ भेदानाह— गौरिति। हे सत्तम! गौः अजः इत्याद्या इमे नव पशवः द्विशफाः द्विखुराः॥ २०॥ खर इति। हे क्षत्तः! खरादयः चमर्यन्ता एते षट् एकशफा भवन्ति। अश्वतरः गर्दभादश्वायामुत्पन्नः पञ्चनखान् पशून् शृणु॥ २१॥ श्वा इति। चक्षुरक्षरोनः श्लोकः। श्वादयो गोधान्ताः पञ्चनखाः इति द्वादश। एते सर्वे मिलिताः भूचराः सप्तविंशतिः मकरादयः इत्यग्रेऽन्वेति॥ २२॥ कङ्केति। मकरादयो जलचराः कङ्कादयः खगा पक्षिणः ते च अभूचरत्वेनैकीकृत्य गृहीताः एवमष्टाविंशतिः भेदा भवन्ति। तत्र चादिशब्दो ज्ञेयः। इयत्तायां तात्पर्याभावात्॥ २३॥ अर्वागिति। हे क्षत्तः! अर्वाक् अधःस्रोतः आहारसंचारो यस्य सोऽर्वाक्स्रोताः। ह्रस्वमार्षम्। इदं च नृणां लक्षणम् इति योऽयमेकविधो नृणां सर्गः स तु नवमः। ते च रजोगुणोधिको येषु ते कर्मपराः निरन्तरं कर्म कुर्वन्त एव तिष्ठन्ति। दुःखे च सुखमानिनः चकारात्सुखे दुःखसाधनत्वाभिमानवन्त इति ज्ञेयम्॥ २४॥ वैकृता इति। हे सत्तम! एते स्थावरतिर्यङ्मनुष्याख्यास्त्रयः सर्गाः वैकृता एव न तूभयात्मकाः तथा देवसर्गश्च वैकृतः। यस्तु वैकारिको देवसर्गः स तु प्राकृतेषु पूर्वमेव प्रोक्तः। अयं तु ततो न्यूनत्वाद्वैकृतः देवसर्गत्वात्तदन्तर्भूतश्च कौमारः सनत्कुमारादीनां सर्गस्तु उभयात्मकः। देवत्वेन प्राकृतो मनुष्यत्वेन वैकृत इत्यर्थः। यद्वा "भगवद्ध्यानपूतेन मनसाऽन्यांस्ततोऽसृजत्" इत्यग्रिमोक्तेः भगवद्ध्यानजन्यत्वेन भगवज्जन्यत्वाद् ब्रह्मजन्यत्वाच्च प्राकृतो वैकृतश्चेति॥ २५॥ देवेति सार्द्धम्। देवसर्गो दशमः स चाष्टविधः एकं सुवन्तमेकः प्रकारः। तथा च विबुधाः पितरः असुरा इति त्रयः। गन्धर्वाप्सरस एकः सिद्धा एकः यक्षरक्षांस्येकः चरणाः एकः भूतप्रेतपिशाचा एकः किन्नरादय एकः आदिशब्दात्किंपुरुषादयः। एतद्विशेऽध्याये स्पष्टं भविष्यति॥ २६॥ दशेति। हे विदुर! विश्वसृजा भगवता ब्रह्मणा च कृता एते दशविधाः सर्गास्ते तुभ्यं मया आख्याताः वर्णिताः। अतः परं वंशान् मन्वन्तराणि च प्रवक्ष्यामि। कालवर्णनं तु प्रक्रान्तत्वात् वंशेभ्यः पूर्वमेव॥ २७॥ एवमिति। एवममोघसङ्कल्पः हरिरेव रजःप्लुतः स्वेच्छया स्वीकृतरजोगुणः कल्पादौ आत्मभूः चतुर्मुखस्वरूपः स्रष्टा सन्नात्मा स्वयमेवात्मना स्वरूपभूतेन कालप्रधानपुरुषादिरूपसाधनेन आत्मानमेवोपादानभूतं विश्वरूपेण सृजति। आदिपदेन स्थितिसंहारयोर्ग्रहणम्। सत्त्वेन विष्णुरूपः सन् पाति तमसा रुद्ररूपः सन् संहरति च॥ २८॥

अतः परं क्वाचित्कं श्लोकद्वयम्—गुणव्यत्यय एतस्मिन् मायावित्त्वादधीशितुः। न पौर्वापर्यमिच्छन्ति नद्यां भ्राम्यद् भ्रमेरिव॥ देवासुरादयः क्षत्तः कल्पेऽस्मिन् यत्र कीर्तिताः। त एव नामरूपाभ्यामासन् मन्वन्तरान्तरे॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां दशमोऽध्यायः॥ १०॥

# अथैकादशोऽध्यायः

मैत्रेय उवाच

चरमः सद्विशेषाणामनेकोऽसंयुतः सदा । परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥ १ ॥

एकादशे पराण्वादिर्द्विपरार्धावधिर्महान् । कालो निरूपितस्तत्र श्लोकाः सार्द्धाः कुसिन्धवः ( ४१॥ ) ॥

श्रीण्युवाचेति द्विवेदाः ( ४२। ) पादयुक्ता अनुष्टुभः ॥ ११ ॥

कालस्य विशेषं वक्तुं तत्परिच्छेद्यं सूक्ष्मं स्थूलं च वस्तु लक्षयति—चरम इति । सतः कार्यमात्रस्य विशेषाणामंशानां यश्चरमः अन्त्यः यस्यांशो नास्ति अनेकः कार्यावस्थामप्राप्तः असंयुतः समुदायावस्थां च न प्राप्तः । अत एव सदा कार्यसमुदायावस्थयोरपगमेऽपि यो वर्त्तते स परमाणुर्विज्ञेय । यतो येभ्यः समुदितेभ्यो नृणां व्यवहृ ृणामैक्यभ्रमः अवयविबुद्धिर्भवति । तथा च पञ्चमेऽवयविनिराकरणे वक्ष्यति येषां समूहेन कृतो विशेष इति ॥ १ ॥ स्थूलमाह—सत एवेति । यस्य चरमोंऽशः परमाणुस्तस्य सतः सर्वकार्यमात्रस्य स्वरूपावस्थितस्य प्रलयमप्राप्तस्य यत्कैवल्यमैक्यं यस्य सः अविशेषः विशेषविवक्षारहितः निरन्तरः भेदविवक्षारहितः निरन्तरः भेदविवक्षारहितश्च सर्वोऽपि प्रपञ्चः परममहान् इत्यर्थः ॥ २ ॥ एवमिति । हे सत्तम ! यथा सूक्ष्मः स्थूलश्चायं पदार्थो निरूपित एवं संस्थानं परमाण्वाद्यवस्था तस्य भुक्तिर्व्याप्तिस्तया सौक्ष्म्ये स्थौल्ये च कालोऽप्यनुमितो भवति । चकारान्मध्यमावस्था गृह्यते । अनुमितत्वे हेतुः यतोऽयं कालः अव्यक्तः अप्रत्यक्षः व्यक्तभुक् अद्य घटः भविष्यति इत्यादिप्रसिद्धत्वाद्व्यक्तं विश्वं भुङ्क्ते व्याप्नोत्युत्पत्तिविनाशादिहेतुया परिच्छिनत्ति तथा विभुः समर्थः भगवान् भगवच्छक्तिविशेषः अस्ति ॥ ३ ॥ स काल इति । सतः प्रपञ्चस्य परमाणुतां परमाण्ववस्थां यो भुङ्क्ते सः कालः परमाणुकालः । यस्तु सतो विशेषं साकल्यं भुङ्क्ते स परममहान् तत्संज्ञकः कालः । अत्रायमर्थः—ग्रहर्क्षताराचक्रस्थ इत्यादिना सूर्यगत्यैव कालादिविभागस्य वक्ष्यमाणत्वात् सूर्यो यावता परमाणुदेशमतिक्रामति तावान् कालः परमाणुकालः । यावता च द्वादशराश्यात्मकं सर्वं भुवनकोशमतिक्रामति स कालः परमो महान् संवत्सरात्मकः । तस्यैवावृत्त्या तु युगमन्वन्तरादिक्रमेण द्विपरार्द्धान्तत्वमिति । यद्वा । सृष्टिमारभ्य संहारपर्यन्तं यावान् कालः स परममहानिति ॥ ४ ॥ अथ मध्यमकालावस्थामाह—अणुरिति । द्वौ परमाणू अणुः स्यात् द्वाभ्यां परमाणुभ्यामेकः अणुः स्यात् तं यावता सूर्योऽतिक्रामति साऽणुः कालः स्यादित्यर्थः । त्रयोऽणव एकस्त्रसरेणुः स्मृतः वृद्धैः कथितः त्रिभिरणुभिरेकस्त्रसरेणुर्भवति तं यावता सूर्योऽतिक्रामति स त्रसरेणुः कालः स्मृत इत्यर्थः । स तु प्रत्यक्ष इत्याह—स त्रसरेणुः गवाक्षगतजालरन्ध्रप्रविष्टेष्वर्करश्मिषु सूर्यकिरणेष्ववगतो दृष्टः सन् योऽसावतिलघुत्वेन खमाकाशमेवानुपतन् अगात् गतो भवति स त्रसरेणुरित्यर्थः । नगामिति पाठे तु खमेवानुपतन्नवगतो भवति । गां पृथ्वीं पतंस्तु नावगतो भवति एवं च परमाणोः षड्गुणस्त्रसरेणुः ॥ ५ ॥

त्रसरेणुरिति । त्रसरेणुत्रिकं यः भुङ्क्ते यावता सूर्योऽतिक्रामति स कालः त्रुटिः स्मृतः । शतं भागाः त्रुटिरूपा यस्मिन् स तथाभूतः त्रुटीनां शतेन एको वेधाख्यः कालः स्यादित्यर्थः । त्रिभिस्तैर्वेधैस्त्वेको लवः स्मृतः ॥६॥ निमेष इति । त्रिलवो निमेषो ज्ञेयः । ते निमेषास्त्रयः क्षणः इत्याम्नातः । पञ्च क्षणान् काष्ठां विदुः ताश्च काष्ठाः दश पञ्च च पञ्चदश च एकं लघु भवति ॥७॥ लघूनीति । पञ्चदशलघूनि चैका नाडिका समाम्नाता । द्वे ते नाडिके एको मुहूर्त्तो भवति । षट् सप्त वा नाडिकाः नृणां मनुष्याणां प्रहरो भवति । स एव यामो दिनस्य रात्रेश्च चतुर्थो भागः । ह्रासे षट् मध्ये सप्त वृद्धौ अष्ट तत्राप्यनियमार्थो वाशब्दः । देशादिभेदेन तद्भेदानां गणयितुमशक्यत्वात् ॥ ८ ॥ द्वादशार्द्धेति । त्रियवा गुञ्जा । पञ्चगुञ्जापरिमितो माषः । षोडशमाषपरिमित एकः सुवर्णः । चत्वारः सुवर्णा एकं पलम् । षोडशभिः पलैः प्रस्थः । द्वादशार्द्धं षट् उन्मीयतेऽनेनेत्युन्मानं पात्रम् । षट्पलताम्रविनिर्मितं प्रस्थप्रमितजलपूर्तियोग्यं पात्रं चतुर्भिः स्वर्णमाषैश्चतुरङ्गुलायामशलाकारूपेण रचितैः कृतमूलाच्छिद्रं तेन छिद्रेण यावत्प्रस्थपरिमितं जलं प्रविशति तेन च प्लुतं जले निमग्नं भवति तावान् कालो नाडिका । अत्र पलच्छिद्रयोराधिक्ये शीघ्रं निमज्जेत अल्पत्वे च विलम्बेन निमज्जेदिति । पलशलाकयोर्नियमस्तत्रापि रजतादिशलाकया छिद्रपुष्टिः स्यादिति सुवर्णस्य नियमो बोध्यः । इदं च स्थूलरीत्या वस्तुतो ज्योतिशास्त्रानुसारियन्त्रैः स्फुटता ॥ ९ ॥ यामा इति । हे मानद ! चत्वारश्चत्वारः अष्टौ यामाः मर्त्यानां मनुष्याणामहनी

अहोरात्रश्चत्वारो यामाः अहः चत्वारश्च यामाः रात्रिरित्युभे भवतः। उभयं मिलित्वैकमहूर्त्तानि पञ्चदशाहानि पक्षो भवति। स द्विविधः शुक्लः कृष्णश्चेति। तत्र यस्मिन् चन्द्रकलावृद्धिः स शुक्लः, यत्र च चन्द्रकलाह्रासः स कृष्ण इति ॥ १० ॥ तयोरिति सार्द्धम्। तयोः शुक्लकृष्णयोः पक्षयोः समुच्चयः समुदाय एको मासो नृणामित्यनुषङ्गः। तत्पूर्वोक्तो मासः पितॄणामहर्निशमहोरात्रः। तत्र कृष्णपक्षः अहः, शुक्लपक्षो रात्रिः। तौ पूर्वोक्तौ द्वौ मासौ नृणामृतुः। षण्मासा अयनं तच्च द्विविधं दक्षिणमुत्तरं च। दिवि स्वर्गे तु अयने दक्षिणोत्तरायणे अहनी देवानामहर्निशं प्राहुरित्यर्थः। उत्तरायणमहः दक्षिणायनं रात्रिः। ज्यौतिषिकास्तु मेषादिषट्के सूर्ये दिनं तुलादिषट्के रात्रिरित्याहुः। द्वादशमासा नृणां वत्सरः स्मृतः ॥ ११ ॥ संवत्सरेति अर्द्धम्। नृणामिति पितृदेवादीनामप्युपलक्षणं स्वस्वमानेन संवत्सरशतं परमुत्कृष्टं संपूर्णमायुर्निरूपितं पापादिनाऽऽयुःक्षयान्मध्येऽपि मरणं तपआदिनाऽधिकमप्यायुरिति ॥ १२ ग्रहर्क्षेति। ग्रहर्क्षतारोपलक्षितं यत् कालचक्रं तत्र स्थितः अनिमिषः कालव्यवस्थापकः विभुः सूर्यः परमाणुः सूक्ष्मकाल आदिर्यस्य तेन संवत्सरः अवसानं यस्य तेन कालेन जगत् द्वादशराश्यात्मकं भुवनकोषं पर्येति परिक्रामति ॥ १३ ॥

संवत्सर इति। हे विदुर ! संवत्सरादिभेदैः पञ्चधा अब्दः प्रभाष्यते कथ्यते। संवत्सरादिभेदश्च यावता कालेन रविर्द्वादशराशीन् पर्येति तावान् कालः सौरोऽब्दः संवत्सरः। यावता मध्यममानेन गुरुरेकं राशिं भुङ्क्ते तावान् बार्हस्पत्योऽब्दः परिवत्सरः। षष्ट्युत्तरदशतत्रयमिताहोरात्रैः सावनोऽब्दः इडावत्सरः। शुक्लादिदर्शान्तैः द्वादशभिः क्वापि त्रयोदशभिर्वा मासैश्चान्द्रोऽब्दः अनुवत्सरः। यावता चन्द्रः सप्तविंशतिर्नक्षत्राणि द्वादशकृत्वो भुङ्क्ते तावान् नाक्षत्रोऽब्दः वत्सरः। अन्ये पुनरेवमाहुः—यदा शुक्लपक्षप्रतिपदि रविसंक्रान्तिर्भवति तदा सौरचान्द्रमासयोर्युगपत् उपक्रमो भवति स संवत्सरः। ततः सौरमानेन वर्षे षट् दिनानि वर्द्धन्ते चान्द्रमानेन च वर्षे षट् दिनानि ह्रसन्तीति किञ्चिदूनद्वादशदिनव्यवधानादुभयोश्चन्द्रसूर्ययोरग्रपश्चाद्भावो भवति। एवं व्यवधानतारतम्येन पञ्चवर्षाणि यथाक्रमेणोक्तनामानि गच्छन्ति। तन्मध्ये च द्वौ मलमासौ भवतः ततः पुनः षष्ठः संवत्सराख्यो भवति इति ॥ १४ ॥ य इति। यः भूतभेदः महाभूतविशेषः तेजोमण्डलरूपः सूर्यः कालाख्यया स्वशक्त्या सृज्यमङ्कुरादितद्विषयां बीजादिशक्तिम् उरुधा बहुधा उरुशब्दाद्धा आर्षः। उच्छ्वसयन् कार्याभिमुखीं कुर्वन् उच्छ्वसितीत्युच्छ्वसः अच्। ततः तत्करोतीति णिजन्ताच्छता। पुंसः अभ्रमाय भ्रमनिवृत्तये आयुरादिव्ययेन विषयासक्तिं निवर्तयन् इत्यर्थः। स कामानां तु गुणमयं स्वर्गादिफलं ऋतुभिर्वितन्वन् दिवि आकाशे धावति। तस्मै वत्सरपञ्चकाय संवत्सरादिपञ्चविधवर्षप्रवर्त्तकाय सूर्याय बलिं हरत पूजां कुरुत ॥ १५ ॥ पितृदेवेति। इदं स्वस्वमानेन वर्षशतं पित्रादीनां परमायुः स्मृतं त्वया कथितं प्रत्यहं कल्पते सृज्यत इति कल्पस्त्रैलोक्यं तस्माद्बहिर्वर्तमाना ये विदो ज्ञानिनः स्युः सन्ति तेषां परेषामुत्कृष्टानां गतिमायुर्मानमाचक्ष्व कथय ॥ १६ ॥ भगवानिति। भगवान् भवान् भगवतः कालस्य गतिं ननु निश्चितं वेद। यतः धीराः योगिनः योगराद्धेन योगसिद्धेन चक्षुषा विश्वं सर्वमतीन्द्रियमपि वस्तु विचक्षते पश्यन्ति ॥ १७ ॥ कृतमिति। अवधीयते व्यवधीयतेऽनेनेत्यवधानं सन्ध्या अंशश्च तत्सहितं कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगं दिव्यैर्देवमानमितैर्द्वादशभिर्द्वादश सहस्रैर्वर्षैर्निरूपितम्। सहस्रैरित्युत्तरश्लोकसामर्थ्यात् ॥ १८ ॥ चत्वारीति। तत्र कृतादियुगेषु यथाक्रमं चत्वारि त्रीणि द्वे चैकं सहस्राणि तथा ततो द्विगुणानि शतानि च संख्यातानि। तत्र कृतयुगे चत्वारि सहस्राणि सन्ध्यांशयोश्चत्वारि चत्वारि शतानि इत्यष्टौ शतानि च। त्रेतायां त्रीणि सहस्राणि सन्ध्यांशयोस्त्रीणि त्रीणि शतानीति षट्शतानि। द्वापरे द्वे सहस्रे सन्ध्यांशयोर्द्वे द्वे शते इति चत्वारि शतानि कलियुगे। एकं सहस्रं सन्ध्यांशयोश्चैकैकं शतमिति द्वे शते चेति ज्ञेयम्। इदं च देवमानेन एतान्येव षष्ट्युत्तरशतत्रयगुणितानि नरमानेन भवन्ति। तत्रादौ षट्त्रिंशत्सहस्राणि वर्षाणि सन्ध्या। ततः सार्द्धत्रीणि लक्षाणि कलियुगम्। ततोऽन्ते षट्त्रिंशत्सहस्राणि सन्ध्यांशः। ततः चत्वारि लक्षाणि द्वात्रिंशत्सहस्राणि कलिः। कलेर्द्विगुणं द्वापरं त्रिगुणा त्रेता चतुर्गुणं कृतम्। सन्ध्यासन्ध्यांशवर्षाण्यपि द्वित्रिचतुर्गुणानि कार्याणि। एवं च मनुष्याणां षष्ट्यधिकशतत्रयवर्षमितं देवानां वर्षम्। एवं मनुष्याणां विंशति (४३२००००) सहस्राधिकत्रयश्चत्वारिंशल्लक्षैर्वर्षैश्चतुर्युगं शास्त्रेषु युगशब्देनोच्यते। तत्र अष्टाविंशतिसहस्राधिकैः सप्तदशभिर्लक्षैः (१७२८०००) कृतम्। (१२९६०००) षण्णवतिसहस्राधिकैर्द्वादशभिर्लक्षैस्त्रेता। (८६४०००) चतुःषष्टिसहस्राधिकैरष्टभिर्लक्षैर्द्वापरः। द्वात्रिंशत्सहस्राधिकैः चतुर्भिर्लक्षैः (४३२०००) कलिः ॥ १९ ॥

सन्ध्यांशयोरिति। शतसङ्ख्ययोः उक्तानि शतानि सङ्ख्या ययोस्तयोः युगस्यादौ सन्ध्या अन्तेऽंशस्तयोरन्तरेण मध्ये यः कालस्तमेव कालं तज्ज्ञा युगलक्षणाभिज्ञा युगं प्राहुः। अन्तरेणेत्यव्ययम् शेषे षष्ठी। यत्र युगे गवालम्भादिरूपो विशेषधर्मो विधीयते। सामान्यधर्मः श्रवणकीर्त्तनादिरूपस्तु सन्ध्यांशयोरप्यस्त्येवेति यस्य युगस्य यो धर्मः स एव तत्सन्ध्यासन्ध्यांशयोरपि प्रधानीभूतः। परन्तु सन्ध्यायां पूर्वयुगस्य सन्ध्यांशे उत्तरयुगस्य धर्माणां मिश्रणं भवति ॥२०॥ धर्म इति। कृते कृतयुगे चतुष्पात् संपूर्णो धर्मो मनुजान् समनुवर्त्तते। स एव धर्मः अन्येषु त्रेतादिष्वेकैकेन पादेन वर्धता वर्धमानेन। शता आर्षः। अधर्मेण अधर्महेतुना व्येति एकैकपादेन ह्रसतीत्यर्थः। एतच्च वैराग्यार्थं धर्मप्रयत्नाधिक्यार्थं वा स्वरूपकथनमात्रं न तु धर्मसंकोचार्थम् ॥ २१ ॥ त्रिलोक्या इति।

हे तात ! त्रिलोक्या बहिः स्थितानां महर्लोकप्रभृतीनाम् आब्रह्मणः ब्रह्मलोकपर्यन्तानां युगसाहस्रं चतुर्युगानां सहस्रसङ्ख्यासमुदाय एकदिनं भवति तावती चतुर्युगसहस्रपरिमितैव तेषां रात्रिर्भवति। यत् यस्यां रात्रौ विश्वसृक् ब्रह्मा निमीलति तदैव स्वपन्तं गर्भोदशायिनमनुस्वपिति तदा च प्रलयो भवति। एवं युगसहस्रद्वयं ब्रह्मणोऽहोरात्रः। तत्र मनुष्याणां चतुःषष्टिकोट्यधिकाष्टपद्मवर्षाणि (८०००६४००००००००) भवन्ति ॥ २२ ॥ निशेति। पुनश्च निशाया अवसाने अन्ते सति आरब्धो लोकस्य कल्पः सर्गश्चतुर्दशमनून् मुञ्जन् परिच्छिन्दन् व्याप्नुवन् यावद् भगवतो ब्रह्मणो दिनं तावदनुवर्त्तते। स्वं स्वमिति अर्द्धम्। साधिकां किञ्चिदधिकां चतुर्युगानामेकसप्ततिं स्वं स्वं कालं मनुर्भुङ्क्ते अनुभवति। तावत्कालं राज्यं करोति। तत्र देवमानेन द्विपञ्चाशत्सहस्राधिकान्यष्टलक्षाणि (८५२०००) वर्षाणि भवन्ति। मनुष्यमानेन तु त्रिंशत्कोट्यः सप्तषष्टिर्लक्षाणि विंशतिः सहस्राणि इति ॥ २३ ॥ मन्वन्तरेषु इति। मन्वन्तरेषु साधिकैकसप्ततिचतुर्युगमितेषु एकैकमनुकालेषु मनवः स्वायंभुवादयः तद्वंशाः पृथिवीपालका राजानः सप्तर्षयः सुरा देवाः सुरेशा इन्द्राः तानिन्द्रान् येऽनुवर्तन्ते ते च गन्धर्वादयः चकाराद् भगवदंशावताराश्च तत्र राजानोऽवताराश्च क्रमेण भवन्ति। सप्तर्षिमन्वादयस्तु युगपत्समकालमेव भवन्ति ॥ २४ ॥ एष इति। ब्राह्मः ब्राह्मणा कृतः दैनंदिनः दिनं दिनं क्रियमाणो यः सर्गः स एष त्रैलोक्यवर्त्तनः त्रैलोक्यस्य वर्त्तनमुत्पत्तिर्यस्मि तथाभूतो ज्ञेयः। यत्र यस्मिन् दैनंदिने सर्गे तिरश्चां नृणां पितॄणां देवानां च कर्मभिः पुण्यपापैः तदनुरूपः संभवो भवति ॥ २५ ॥ मन्वन्तरेष्विति। मन्वन्तरेषु स्वमूर्तिभिः सत्त्वं शुद्धसत्त्वं बिभ्रत् शुद्धसत्त्वमयमूर्तिं बिभ्राणो भगवान् उदितपौरुषः आविष्कृतपुरुषकारः स मन्वादिभिः सहेदं विश्वमवति ॥ २६ ॥

तमोमात्रामिति। त्रैलोक्यमात्रनाशार्थं तमसो मात्रां लेशमुपादाय स्वीकृत्योद्रिक्ततमस्कः अत एव प्रतिसंरुद्धः निवृत्तो विक्रमो व्यापारो यद्वा प्रतिसंरुद्धो वह्न्यादिभिरावृतः विक्रमो भूरादिलोकत्रयं येन 'विक्रमो भूर्भुवः स्वश्च' इत्युक्तेः। स कालेनानुगतमनुप्रविष्टमशेषं त्रैलोक्यस्य जीववृन्दं यस्मिन् स विभुः दिनात्यये तूष्णीं त्यक्तमायाविनोदः आस्ते ॥ २७ ॥ तमेवेति। निर्मुक्तः निवृत्तः शशी भास्करश्च यत्र यथा भवति तथा निशायामनुवृत्तायां सत्यां तमेवानु तत्कालानन्तरमेव भूर्भुवःस्वरात्मकास्त्रयो लोका अपि धीयन्ते कर्मकर्त्तरि स्वयमेव लीयन्ते ॥ २८ ॥ त्रिलोक्यामिति। शक्त्या भगवच्छक्तिरूपो यः संकर्षणमुखोद्भूतरुद्रगणाग्निस्तेन त्रिलोक्यां दह्यमानायां सत्यां तस्याग्नेरूष्मणा अर्दिताः पीडिता महर्लोकवासिनो भृग्वादयस्तस्माल्लोकाज्जनलोकं यान्ति ॥ २९ ॥ तावदिति। उत्कटः आटोपः क्षोभो येषां ते च ते चण्डवातेन ईरितोर्मयश्च तथाभूताः कल्पान्तेन कालेन एधिताः प्रवृद्धाः सिन्धवस्तावत्तदा सङ्कर्षणाग्निना दग्धं त्रिभुवनं सद्यः त्रिलोक्यां दग्धायामविलम्बेन प्लावयन्ति। दाहस्तु शतवर्षपर्यन्तो ज्ञेयः ॥ ३० ॥ अन्तरिति। तस्मिन् सलिले अन्तर्मध्ये अनन्तः शेष एव आसनं शय्या यस्य सः प्रसिद्धो हरिः योगः एव निद्रा योगाख्या विमलादीनां चिच्छक्तिवृत्तीनां पञ्चमी सैव तदानीं निद्रारूपा इति वा तया निमीले मीलिते अक्षिणी यस्य सः जनालयैः जनलोकवासिभिर्महर्लोकागतैरन्यैश्च स्तूयमान आस्ते शयनमनुकरोति ॥ ३१ ॥ एवमिति। कालस्य गत्या परया एवादिरूपया उपलक्षितैः एवंविधैश्चतुर्युगद्विसहस्रपरिमितैरहोरात्रैर्वयःशतं वर्षशतं परं प्राण्यन्तरायुरपेक्षयाऽत्यधिकमप्यस्य ब्रह्मण आयुरपक्षितमुपक्षीणमिव गतप्रायमिवेति वैराग्यार्थम् ॥ ३२ ॥ यदिति। तस्य ब्रह्मण आयुषो यदर्द्धं तत्परार्द्धमित्यभिधीयते। तत्रास्यायुषः पूर्वः परार्द्धोऽपक्रान्तः अपगतः अपरः परार्द्धो हि अद्य प्रवर्तते ॥ ३३ ॥ ब्रह्मण आयुषि बहवः कल्पा भवन्ति तेषां मध्ये कांश्चिदाह–पूर्वस्येति। पूर्वस्य परार्द्धस्यादौ ब्राह्मो नाम महान् कल्पः अभूत्। यत्र कल्पे ब्रह्मा अभवत् उत्पन्न इत्यर्थः। यं ब्रह्माणं शब्दब्रह्मेति विदुः। प्रभासखण्डोक्तेः श्वेतवराहादिभिः पितृकल्पान्तैस्त्रिंशद्भिः कल्पैरेव शुक्लप्रतिपदाद्यमावस्यान्तानि त्रिंशद्दिनानि ब्रह्मणो मासः। एवं कल्पानां द्वादशभिरावृत्तिभिः द्वादशमासाः वर्षं पञ्चाशता वर्षैरेकः परार्द्धः। तत्र पूर्वस्य परार्द्धस्यादौ श्वेतवराहकल्प एव ब्रह्मजन्मतिथित्वाद् ब्राह्मशब्देनोच्यते। सा तिथिश्च ज्योतिःशास्त्ररीत्या चैत्रशुक्लप्रतिपदेव ॥ ३४ ॥ तस्यैवेति। तस्यैव पूर्वपरार्द्धस्य चान्ते यं पितृकल्पमेव पाद्ममभिचक्षते मनीषिणः कथयन्ति स कल्पोऽभूत्। पाद्मत्वे हेतुमाह—यदिति। यत् यत्र कल्पे हरेर्भगवतो नारायणस्य नाभिरेव सरस्तस्मात् लोकसरोरुहं त्रिभुवनात्मकं कमलमासीत् उदपद्यत। तेन सर्वेष्वेव कल्पेषु लोकात्मकं पद्मं न भवति, किन्तु क्वचिदेवेत्युक्तम् ॥ ३५ ॥

अयमिति। हे भारत ! अयं तु वाराह इति विख्यातः कल्पो द्वितीयस्यापि परार्द्धस्यादौ एकापञ्चाशत्तमवर्षस्य प्रथमदिवसे कथितः। यत्रास्मिन् कल्पे हरिः स्वयमेव सूकर आसीत् ॥ ३६ ॥ कालपरिच्छेद्यानामायुरुक्त्वा कालापरिच्छेद्यं तत्त्वमाह–काल इति। द्विपरार्द्धाख्योऽयं कालः अनन्तस्य अव्याकृतस्य अक्षरब्रह्मणः अनादेश्च जगदात्मनः जगत्कारणस्य निमेष उपचर्यते केवलं न त्वनेनापि क्रमेण तस्यायुर्गणनमिति ॥३७॥ कालोऽयमिति। परमाण्वादिर्द्विपरार्द्धान्तोऽयं काल ईश्वरोऽप्यतिसमर्थोऽपि भूम्नः परिपूर्णस्य ब्रह्मणः ईशितुं नैव प्रभुर्नैव शक्नोति। यतो धाममानिनां देहगेहाद्यभिमानवतामेवेश्वरो विनाशे समर्थः न तु ब्रह्मणः ॥ ३८ ॥ भूम्न इत्युक्तं प्रपञ्चयन्नाह—विकारैरिति त्रयम्। विकारैः भूतेन्द्रियरूपैः षोडशभिर्युक्तैः प्रकृतिमहदहङ्कारतन्मात्ररूपाष्टप्रकृतिमिलितैः

सहित आरब्धः अन्तः पञ्चाशत्कोटियोजनविस्तृतः बहिश्च विशेषादिभिः पृथ्व्यादिभिर्दशगुणोत्तरोत्तराधिकैः सप्तभिरावृतः अयम् आण्डकोशो यत्र प्रविष्टः परमाणुवत् लक्ष्यते एवंविधाश्चान्येऽपि कोटिशोऽण्डराशयो यत्र अन्तर्गताः प्रविष्टाः परमाणुवद् दृश्यन्ते तत्सर्वेषां कारणानां प्रधानादीनामपि कारणमक्षरं ब्रह्म महात्मनः पुरुषस्य विष्णोः परं सर्वत उत्कृष्टं धाम स्वरूपम् आहुः। विष्णोः कारणार्णवशायिनः देह इति भक्ताः॥ ३९-४१॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायस्तृतीयस्कन्धस्यैकादशे व्यधात्॥

इति श्रीभागवते महापुराणे तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायामेकादशोऽध्यायः॥ ११॥

—:❀:—

## अथ द्वादशोऽध्यायः

मैत्रेय उवाच

**इति ते वर्णितः क्षत्तः कालाख्यः परमात्मनः। महिमा वेदगर्भोऽथ यथाऽस्राक्षीन्निबोध मे॥ १॥**

द्वादशे तु कुमारादिमनुसर्गविवर्द्धने। यौनोऽभून्मनुसर्गोऽत्र श्लोकाः सार्द्धा रसेषवः (५६॥)।
तावत्योऽनुष्टुभस्तत्रोवाचवाचां चतुष्टयम्॥ १२॥

इतीति। हे क्षत्तः! परमात्मनः कालाख्यो महिमा प्रभावविशेषस्ते तुभ्यमिति वर्णितः। अथ वेदगर्भो ब्रह्मा यथा प्रजा अस्राक्षीत्तत्प्रकारं कथ्यमानं मत्तस्त्वं निबोध शृणु॥१॥ ससर्जेति। आदिकृत् प्रजास्रष्टा ब्रह्मा अग्रे स्वसृष्टौ प्रथमम् अन्धतामिस्रादीनि पञ्च ससर्ज। ताश्च अज्ञानस्य वृत्तयः पूर्वसिद्धा एव सृष्ट्यारम्भे ब्रह्मणः सकाशात् प्रादुर्भूताः। तत्र तमो नाम स्वरूपाप्रकाशः मोहो देहाद्यहंबुद्धिः महामोहो भोगेच्छा तामिस्रं तत्प्रतिघाते क्रोधः अन्धतामिस्रं विषयविनाशेऽहमेव मृत इति बुद्धिः पातञ्जलेऽप्येता एवोक्ता अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा इति श्रीविष्णुस्वामिप्रोक्ता वा अज्ञानविपर्यासभेदभयशोकाः॥ २॥ दृष्ट्वेति। अज्ञानवृत्तीनां पापीयसीं सृष्टिं दृष्ट्वा तत्स्रष्टारमात्मानं बहुसमीचीनं नामन्यत। ततस्तदनन्तरं स्वदोषनिवृत्त्यर्थं कृतं यद् भगवतो ध्यानं तेन पूतेन विशुद्धेन मनसा अन्यां सृष्टिमसृजत्॥ ३॥ अविद्यानिवर्तिका विद्यैवेति ज्ञापयितुं विद्यावृत्तयोऽपि सनकाद्या आविर्बभूवुरित्याह—सनकं चेति। आत्मभूर्ब्रह्मा अथ सनकादींश्चतुरः निष्क्रियान् ऊर्ध्वरेतसः जितेन्द्रियान् मुनीन् असृजत्। प्रतिकल्पं मुख्यसर्गादय एव भवन्ति। सनकादयस्तु ब्राह्माख्ये प्रथमे कल्पे सृष्टा एवानुवर्त्तन्ते। ब्राह्मसर्गत्वादिह तत्सृष्टिरुक्ता। अत्र सारार्थसंदर्शिन्यां महाकल्पायुषां जीवतामेव प्रथमपरार्द्धान्ते परमेश्वरे प्रवेशात् पाद्मे कल्पे ब्रह्मा यथा पद्मादुत्पन्नस्तया ब्रह्मापि सनकादीनुदपादयत्। एते च सनकाद्या विद्यावृत्तयः साङ्ख्ययोगवैराग्यतपांसि एषु भक्तिर्गुणीभूता तिष्ठति। मुख्यभक्तेराविर्भावस्तु नारदरूपेण वक्ष्यते इत्युक्तम्॥ ४॥ तानिति। स्वभूर्ब्रह्मा तान् स्वपुत्रान् बभाषे। हे पुत्रकाः! यूयं प्रजाः सृजतेति। ते च मोक्षधर्माणः निवृत्तिधर्मनिष्ठाः वासुदेवपरायणाश्चातः तत् पित्राज्ञप्तं प्रजासर्जनं नैच्छन्। ज्ञानयोगः खल्वाविद्यककर्मयोगनिरासक एवेति॥ ५॥ स इति। स ब्रह्मा प्रत्याख्यातमनङ्गीकृतमनुशासनमाज्ञा यैस्तैः सुतैरेवं सृष्ट्याज्ञाप्रत्याख्यानेन अवध्यातः अवज्ञातः अत एव दुर्विषहं सोढुमशक्यं जातं क्रोधं नियन्तुं निग्रहीतुमुपचक्रमे प्रयत्नं कृतवान्॥ ६॥ विद्यापि कचिदविद्यया निवर्त्तते इति दर्शयितुं विद्यावति ब्रह्मणि अविद्यावृत्तिमुख्यस्य तामिस्रस्य क्रोधस्य रुद्ररूपेणाविर्भावमाह—धियेति। धिया बुद्ध्या निगृह्यमाणो विष्टभ्यमानोऽपि सद्यः तस्य ब्रह्मणो मन्युः क्रोधः तन्मन्युः स चासौ मन्युश्चेति वा प्रजापतेः ब्रह्मणो भ्रुवोर्मध्यान्नीललोहितवर्णः कुमारः समजायत। अयं चाविद्यावृत्तिमुख्यस्य तामिस्रस्य रुद्ररूपेणाविर्भावः॥ ७॥

स वै देवानां पूर्वजः भगवान् भवः रुरोद रोदनपूर्वकमुवाच। हे धातः! हे जगद्गुरो! मे मम नामानि स्थानानि च कुरु॥ ८॥ इतीति। तस्य रुद्रस्येत्येवंभूतं वचः परिपालयन् भगवान् पाद्मो ब्रह्मा भद्रया मधुरया वाचा अभ्यधात् उक्तवान्—मा रोदीः ते तव तद् उक्तं करोमीति॥ ९॥ यदिति। हे सुरश्रेष्ठ! सोद्वेगः भयसहितो बालक इव यत् यस्मात्त्वमरोदीः ततस्तस्मात्

रुद्र इति नाम्ना प्रजास्त्वामभिधास्यन्ति ॥ १० ॥ हृदादीनामहङ्कारकार्यत्वात् तदधिष्ठातृ रुद्रस्य तत्स्थानत्वात् क्रोधपक्षे हृत्तस्य जन्मस्थानं प्रवृद्धः सनेत्रपाणिपादेन्द्रियेषु प्रसरति। असुषु प्राणेषु श्वासाधिक्यसूच्यः आकाशे सिंहादिघोरशब्दैः वाय्वग्निजलानां शोषकत्वदाहकत्वप्लावकत्वैः मह्याः विकारैः शस्त्राद्यैः सिंहादिदेहैः सूर्यचन्द्रयोस्तापहिमाभ्यां मारकत्वमस्तीति तपस्विनामपि क्रोधदर्शनात्तपोऽपि क्रोधस्थानमित्यभिप्रेत्याह—हृदिति। हृदिन्द्रियादीनि एकादश ते तव स्थानानि अग्रे त्वत्प्रार्थनात. पूर्वमेव मया कृतानि ॥ ११ ॥ मन्युरिति। मन्युर्मनुः इत्याद्यैकादश नामानि ॥ १२ ॥ धीरिति। हे रुद्र ! धीर्वृत्तिरित्यादय एकादश ते तव स्त्रियः भविष्यन्ति ॥ १३ ॥ गृहाणेति। सयोषणः सस्त्रीकः सन् एतानि नामानि स्थानानि च गृहाण। एभिः स्थानैर्नामभिश्च युक्तस्त्वं बह्वीः प्रजाः सृज। यत् यस्मात् त्वं प्रजानां पतिरसि प्रजासृष्टावधिकृतोऽसि ॥ १४ ॥ इतीति। गुरुणा पित्रा ब्रह्मणा स भगवान् नीललोहितो रुद्र इति उक्तः सन् सत्त्वं बलमाकृतिः नीललोहितता स्वभावस्तीव्रता च तेन आत्मसमाः स्वेन समानाः प्रजाः ससर्ज ॥ १५ ॥ रुद्राणामिति। रुद्रेण सृष्टानां रुद्राणां भयङ्करस्वरूपाणामत एव समन्तात् जगत् ग्रसताम्। शाता आर्षः। असंख्यशः असंख्यातान् यूथान् निशाम्य दृष्ट्वा प्रजापतिर्ब्रह्मा अशङ्कत। एते त्वन्यसृष्टा अपि प्रजा ग्रसिष्यन्ति इति शङ्कामवाप्योवाच ॥ १६ ॥ अलमिति। हे सुरोत्तम ! उल्बणैः क्रूरैश्चक्षुर्भिर्मया सह दश दिशो दहन्तीभिः ईदृशीभिः सृष्टाभिः प्रजाभिरलम्। ईदृश्यः प्रजा न स्रष्टव्या इत्यर्थः ॥ १७ ॥ तप इति। ते तव भद्रं भवतु। त्वं सर्वभूतानां सुखावहं तपः आतिष्ठ. आचर। यतः इदं विश्वं यथापूर्वं पूर्ववत् तपसैव भवान् स्रष्टा स्रक्ष्यति। स्थितिसमये रुद्रलीला न भद्रायेति तपसि प्रवर्त्तना। अत्र यथापूर्वं सृष्टेति विपरीतलक्षणया यथा पूर्वकल्पान्ते प्रजा समहरस्तथा एतत्कल्पान्ते संहरिष्यसि इत्यर्थः। क्वचित्कल्पे ब्रह्मेव शिवोऽपि स्रजतीत्याशयात्तथोक्तिरित्यपरे ॥ १८ ॥ तपसेति। पुमान् तपसा एव अञ्जसा साक्षात् परं ज्योतिः सर्वभूतानां गुहासु अन्तःकरणेषु आवसति तथा तम् अधोक्षजं भगवन्तं विन्दते प्राप्नोति ॥ १९ ॥ एवमिति। आत्मभुवा एवम् आदिष्टो रुद्रो. गिरां पतिं ब्रह्माण परिक्रम्य प्रदक्षिणीकृत्य अमुं ब्रह्माणं बाढमित्यामन्त्र्य भवदाज्ञामङ्गीकृत्य तथैव करोमीत्युक्त्वा तपसे तपः कर्तुं वनं विवेश । २० ॥ अथेति। अथ पुनः सर्गं ध्यायतः सर्गः कथं वर्द्धेतेति चिन्तयतो भगवतो या स्वशक्तिः लोकरचनासामर्थ्यरूपा दत्ता तद्युक्तस्य ब्रह्मणो लोकसन्तानहेतवः लोकसृष्टिप्रवृत्तिहेतुभूताः दश पुत्राः प्रजज्ञिरे ॥ २१ ॥ मरीचिरिति। मरीचिः अत्रिरित्यादयः तत्र तेषु दशमो नारदः ॥ २२ ॥ उत्सङ्गादिति। स्वयंभुवः उत्सङ्गात् नारदः जज्ञे। अङ्गुष्ठात् दक्षः जज्ञे। प्राणाद्वसिष्ठः सञ्जातः। त्वयि त्वचः सकाशात् भृगुः सञ्जातः। पञ्चम्यर्थे सप्तमी। करात् क्रतुः सञ्जातः ॥ २३ ॥ पुलह इति। पुलहः नाभितः जज्ञे। पुलस्त्यः ऋषिः कर्णयोः जज्ञे। पञ्चम्यर्थे सप्तमी। अङ्गिरा मुखतः अत्रिः अक्ष्णः नेत्रात् जज्ञे मरीचिर्मनसोऽभवत् ॥ २४ ॥

धर्म इति। दक्षिणतः स्तनात् धर्मो जातः। यत्र यस्माद्धर्मात् स्वयं श्रीनारायणो जातः। पृष्ठतस्त्वधर्मो जातः। यस्मात् अधर्मात् लोकभयङ्करो मृत्युर्जातः ॥ २५ ॥ हृदीति। हृदयात् कामः जज्ञ इति सर्वत्र संबन्धः। भ्रुवोर्भ्रूभ्यां क्रोधः अधरदच्छदात् अधरोष्ठात् लोभः आस्यात् मुखात् वाक् वागधिष्ठात्री देवता मेढ्रात् उपस्थात् सिन्धवः पायोर्गुदात् अघाश्रयः पापप्रवर्त्तकः निर्ऋतिः राक्षसो जातः ॥ २६ ॥ छायाया इति। देहच्छायायाः कान्तेर्वा सकाशात् प्रभुः देवहूत्याः कपिलमातुः पतिः कर्दमो जज्ञे। एवं विश्वकृतो ब्रह्मणो मनसो देहतश्चेदं जगज्जज्ञे ॥ २७ ॥ अतिविवेकिनामपि कामजयो दुष्करोऽतो दुहित्रादिभिः सह रहसि न वसेदिति ज्ञापयितुमाह—वाचमिति। हे क्षत्तः ! स्वयंभूर्ब्रह्मा सकामः सन् मनः हरतीं। नुमभाव आर्षः। तन्वीं सुन्दरीं स्वदुहितरं वाचमकामामकामयमानामपि चकमे कामितवानिति। नोऽस्माभिः श्रुतम्। न इत्यव्ययम्। श्रुतमित्यनेनैतद्वक्तुमनर्हमपि त्वज्ज्ञानार्थमपराधाद्भिभ्यददोषदृगेव ब्रवीमीति द्योतितम्। दोषदृष्टौ तु मरीचिपुत्राणामिवाधः पातः स्यात् ॥ २८ ॥ तमिति। अधर्मे कृता मतिर्येन तं पितरं विलोक्य सुताः ब्रह्मपुत्रा मरीचिमुख्यास्तत्प्रभृतयो मुनयः विश्रम्भात् पितृत्वादस्मदुक्तं श्रोष्यति करिष्यति चेति विश्वासात् न तु कोपात् प्रत्यबोधयन् ॥ २९ ॥ नैतदिति। हे प्रभो ! त्वत् त्वत्तः पूर्वे ये ब्रह्मादयस्तैरेतन्न कृतं ये चापरे अग्रे भाविनस्ते तन्न करिष्यन्ति। यत् प्रभुः कामनिग्रहसमर्थोऽपि अङ्गजं काममनिगृह्य तद्वशीभूतस्त्वं स्वां दुहितरं गच्छेः ॥ ३० ॥ तेजीयसामिति। हे जगद्गुरो ! तेजीयसां पापसंश्लेषाभावात् अतितेजस्विनामपि युष्माकम्। तेजस्विशब्दादीयसुन् विन्लुक्। एतत् दुहितृगमनं सुश्लोक्यं सत्कीर्त्तिकरं न भवति। येषां युष्माकं वृत्तमाचारमनुतिष्ठन् लोकः प्राणिमात्रं क्षेमाय कल्पते समर्थो भवति। "यद्यदाचरति श्रेष्ठ" इत्याद्युक्तेः ॥ ३१ ॥ तस्मै इति। य आत्मस्थमात्मनि स्थितमविभक्तिनामरूपमिदं विश्वं स्वेन रोचिषा. स्वकीयेन सङ्कल्पात्मकज्ञानेन व्यञ्जयामास। स धर्मं पातुमधर्मान्निवर्त्तनेन रक्षितुमर्हति तस्मै भगवते केवलं नमः ॥ ३२ ॥ स. इत्थमिति। इत्थमुक्तप्रकारेण पुरः अग्रे गृणतः भाषमाणान् स्वपुत्रान् प्रजापतीन् दृष्ट्वा प्रजापतिर्ब्रह्मा व्रीडितः संस्तदा तन्वं तनुं तत्याज। तन्वादीनां बहुलं छन्दसीति वार्त्तिकात् यण्। तनुत्यागश्च तद्भावत्याग एव। सर्वत्र प्रलयादर्वाक् ब्रह्मशरीरत्यागायोगात्। महापातकस्य शरीरत्यागः प्रायश्चित्तमिति बोधयितुं तथा कथनम् ॥ ३३ ॥ तामित्यद्धम्। घोरां निन्द्यां तां त्यक्तां तनुं दिशो जगृहुः। यत् यां त्यक्तां तनुमेव नीहारं भूमिकां तम इति च विदुः व्यवहरन्ते अद्यापि तान्तमसा आव्रियन्ते ॥ ३४ ॥ कदाचिदिति।

समवेतान् सुसङ्गतान् लोकान् यथा पुरा पूर्वकल्पवदहं कथं स्रक्ष्यामीति कदाचित् ध्यायतः स्रष्टुर्ब्रह्मणश्चतुःसंख्यायुक्तान्मुखात् ऋगादयश्चत्वारो वेदा आसन् आविर्भूताः ॥ ३५ ॥ चातुर्होत्रमिति। होता उद्गाता अध्वर्युर्ब्रह्मेति होतॄणां कर्म चातुर्होत्रं कर्मतन्त्रं यज्ञादिविस्तारः उपवेदाः आयुर्वेदादयः नयः नीत्यादिशास्त्राणि तैः सह धर्मस्य चत्वारः सत्यं तपो दया दानमित्युक्ताः पादाः आश्रमाणां ब्रह्मचर्यादीनां चतस्रो वृत्तयश्च तथैव चतुर्मुखादासन् इत्यनुषङ्गः ॥ ३६ ॥

स वा इति। हे तपोधन ! विश्वसृजामीशः स वै वेदादीन्मुखतः मुखेभ्यः असृजत् इति सामान्यतः श्रुतम्। तत्रापि विशेषतः स देवो येन यद्यदसृजत्तन्मे मह्यं ब्रूहि ॥ ३७ ॥ ऋगिति। पूर्वादिभिर्मुखैः ऋग्यजुःसामाथर्वाख्यान् वेदान् क्रमाद्व्यधात्। चातुर्होत्र-सृष्टिमाह—शस्त्रमप्रगीतमन्त्र स्तोत्रं होतुः कर्म इज्यामध्वर्योः कर्मस्तुतिः संप्रगीतं स्तोमं स्तुत्यर्थमृक्समुदायं स्तुतये स्तोममिति समासः। त्रिवृत् स्तोमो भवतीत्यादिविहितमुद्गातृप्रयोज्यं कर्म प्रायश्चित्तं ब्रह्मणा प्रयोज्यं कर्म एतान्यपि चत्वारि क्रमात् पूर्वादिभि-र्मुखैः व्यधात् ॥ ३८ ॥ उपवेदसृष्टिमाह—आयुर्वेदमिति। आयुर्वेदं युद्धशास्त्रं गान्धर्वं वेदं गानशास्त्रं धनुर्वेदं स्थापत्यं स्थपतेः कर्म वेदं विश्वकर्म शास्त्रमेवं चतुरो वेदान् उपवेदाख्यान् क्रमात् आत्मनः पूर्वादिभिर्मुखैरसृजत् ॥ ३९ ॥ इतिहासेति। ईश्वरः सर्वदर्शनश्च ब्रह्मा इतिहासाः पुराणानि चेत्युभयात्मकं पञ्चमं वेदं सर्वेभ्यः ससृजे। सर्ववेदविवृत्तिरूपत्वात् ॥ ४० ॥ कर्मतन्त्रसृष्टिमाह—षोडशीति। षोडश्युक्थ्यौ पूर्वमुखात् पुरीषीचयनमग्निष्टुत् अग्निष्टोमः तौ दक्षिणमुखात् आप्तोर्यामश्चातिरात्रश्च तौ पश्चिममुखात् गोसवेन सहितं गोसवं वाजपेयमुत्तरमुखादसृजत् ॥ ४१ ॥ विद्येति। विद्या शौचं "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इत्युक्तेः। दानं दया भूताभयप्रदानस्य "कलां नार्हन्ति षोडशीम्" इत्युक्तेः। एवं च "तपः शौचं दया सत्यम्" इति प्रथमस्कन्धोक्ते-रविरोधः। वस्तुतो यस्य गुणस्य यदा प्राधान्यविवक्षा तदा तस्य धर्मपादत्वमिति यथाश्रुतेऽप्यदोषः। तपः सत्यं चेति धर्मस्य पदानि आश्रमांश्चतुरो ब्रह्मचर्यादीन् यथासंख्यं वृत्तिभिः सह पूर्वादिभ्योऽसृजत् ॥ ४२ ॥ सावित्रमिति। सावित्रमुपनयनादारभ्य त्रिरात्रं प्राजापत्यं व्रतान्याचरतः संवत्सरान्वं ब्राह्मं वेदग्रहणान्तं अथ च तथा बृहत् नैष्ठिकं मरणपर्यन्तम् इति ब्रह्मचर्ये वार्ता अनिषिद्धा। कृष्यादिवृत्तिः सञ्चयो याजनादिना वृत्तिः शालीनमयाचितवृत्तिः शिलोञ्छः पतितकणिशकणादानम् "ऊकालोऽज्झस्वदीर्घप्लुतः" पुंस्त्वं च। गृहे एता गृहाश्रमवृत्तय इत्यर्थः ॥ ४३ ॥ वैखानसा इति। वैखानसाः अकृष्टपच्याशिनः वालखिल्या लब्धे नवेऽन्नाद्ये पुराणत्यागिनः औदुम्बराः प्रातरुत्थाय यां दिशं पश्यन्ति तत आहृतैः फलादिभिर्जीवन्तः फेनपाः स्वयं पतितैः फलादिभि-र्जीवन्तः वने एवंविधा वनवासिनो भवन्ति। न्यासे संन्यासे पूर्वं कुटीचकः स्वाश्रमधर्मप्रधानः। कुटीचर इति पाठान्तरम्। वह्वोदः कर्मोपसर्जनीकृत्य ज्ञानप्रधानः। हंसो ज्ञानाभ्यासनिष्ठः निष्क्रियः। परमहंसः प्राप्ततत्त्वः एते यथोत्तरं श्रेष्ठाः ॥ ४४ ॥

न्यायादेरुत्पत्तिमाह—आन्वीक्षिकीति। आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिरिति क्रमान्मोक्षधर्मकामार्थविद्याः तथैव चेति पूर्ववत् पूर्वादिमुखैरेवोत्पन्ना इत्यर्थः। एवं यत्र क्रमो नोक्तस्तत्राप्ययं क्रमो ज्ञेयश्चतुःसंख्यासाम्यात्। एवं पूर्वादिमुखक्रमेणैव चतस्रो व्याहृतयश्चासन्नित्यर्थः। भूर्भुवःसुवरिति व्यस्तास्तिस्रो व्याहृतयः समस्ता चतुर्थी व्याहृतिः हि प्रसिद्धः। प्रणवोऽस्य ब्रह्मणो दह्रतः हृदयाकाशादासेति हृत्त्वत इति वा पाठः ॥ ४५ ॥ तस्येति। तस्य विभोः ब्रह्मणो लोमभ्योऽष्टाविंशत्यक्षरमुष्णिगाख्यं छन्दोविशेष आसीत्। त्वचः सकाशात् चतुर्विंशत्यक्षरं गायत्र्याख्यमासीत्। मांसात् चतुश्चत्वारिंशदक्षरं त्रिष्टुबाख्यमासीत्। स्नुतः स्नायोः द्वात्रिंशदक्षरमनुष्टुबाख्यम् आसीत्। प्रजापतेः अस्थ्नः अष्टाचत्वारिंशदक्षरं जगत्याख्यम् आसीत् ॥ ४६ ॥ मज्जाया इति। मज्जायाः चत्वारिंशदक्षरा पंक्तिरुत्पन्ना। प्राणतः षट्त्रिंशदक्षरं बृहत्याख्यमभवत्। महाकल्पे ब्रह्मा शब्दरूपोऽभवदित्युक्तं तदेव दर्शयन् वर्णानामुत्पत्तिक्रममाह—स्पर्श इति। स्पर्शः कादिमान्तवर्णसंघः तस्य ब्रह्मणः जीवः जीवकार्यमभवत्। कार्यकारणयो-रभेदविवक्षया सामानाधिकरण्यम्। स्वरः अकारादिः देहः देहाज्जातः उदाहृतः कथितः ॥४७॥ ऊष्माणमिति। ऊष्माणं शषसहाख्यं वर्णचतुष्कम्। आत्मनः ब्रह्मण इन्द्रियाणि इन्द्रियेभ्यो जातम् आहुः। ये अन्तस्थाः यरलवाः तान् बलं बलकार्यमाहुः। तथा प्रजापतेः ब्रह्मणो विहारेण क्रीडया षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाख्याः सप्त स्वरा भवन्ति स्म। अभवन्नित्यर्थः ॥४८॥ शब्देति। हे तात ! व्यक्ता वैखरी अव्यक्ता परापश्यन्तीमध्यमाः अव्यक्तः प्रणवो वा आत्मा स्वरूपं यस्य तस्य शब्दात्मकं ब्रह्म आत्मस्वरूपं यस्य तस्य ब्रह्मणः चित्ते ब्रह्म निर्गुणमक्षरं नानाशक्तिभिरुपबृंहितः पूर्णः सगुणश्चेति द्विविधोऽपि चिततः पूर्णः परः परमेश्वरोऽवभाति प्रकाशते ॥४९॥ तत इति अर्द्धम्। ततः वेदादिसर्गानन्तरं स ब्रह्मा या पूर्वं विसृष्टा सती नीहारतमोरूपाऽभवत्। ततः अपरां तनुमनि-षिद्धकामासक्तामुपादाय सर्गाय मनो दधे ॥५०॥ ऋषीणामिति। हे कौरव विदुर ! भूरि वीर्यं प्रजननसामर्थ्यं येषां तथाभूतानामपि ऋषीणां मरीच्यादीनां सर्गमविस्तृतं ज्ञात्वा तस्य सर्गस्य वृद्धये भूयश्चिन्तयामास ॥ ५१ ॥ अहो इति। नित्यदा सर्वदा व्यापृतस्य प्रजावृद्धये व्यापारं कुर्वतोऽपि मे मम प्रजा नह्येधन्ते न वर्द्धन्ते। एतदहो अद्भुतमत्याश्चर्यम्। अतो नूनं निश्चितमत्र प्रजावृद्धौ दैवं प्रारब्धं दुरदृष्टमेव विघातकं प्रतिबन्धकम् अस्ति ॥ ५२ ॥ एवमिति। एवं युक्तकृतः उचितं प्रयत्नं कुर्वतो दैवं दुरदृष्टनिवर्त्तकं भगवदनुग्रहं चावेक्षतः। शाता आर्षः। तस्य ब्रह्मणः रूपं द्वेधा। एकं श्मश्रुयुक्तमपरं कुचद्वययुतम् इति द्विविधमभूत्। यत

उभयमपि कस्य ब्रह्मणो जातत्वात् कायम् अभिचक्षते कथयन्ति। कस्यापत्यमित्यर्थे नडादित्वात् फक् नलोपश्छान्दसः। यद्वा। सास्य देवता इत्यर्थविवक्षणेऽण्। 'कस्येत्' इतीदुवृद्धिरिति ॥ ५३ ॥ ताभ्यामिति। ताभ्यां रूपविभागाभ्यां विभक्ताभ्यां रूपाभ्यां मिथुनं स्त्रीपुरुषात्मकं द्वन्द्वं समपद्यत अभूत्। तत्र मिथुने यस्तु पुमान् स स्वायंभुवाख्यः स्वराट् सार्वभौमो मनुरभूत् ॥ ५४ ॥ स्त्रीति। या च स्त्री शतरूपाख्याऽस्य महात्मनः महाबुद्धेः स्वायंभुवमनोर्महिषी भार्या आसीत्तदाप्रभृति मिथुनधर्मेण प्रजाः एधां-बभूविरे अवर्द्धन्त। भुवस्तङार्षः ॥ ५५ ॥ स चापीति सार्द्धम्। हे भारत! हे सत्तम स्वायंभुवो मनुरपि शतरूपायां पञ्चापत्यानि अजीजनत्। प्रियव्रतोत्तानपादौ द्वौ पुत्रौ आकूत्याद्याः तिस्रः कन्याश्च ॥ ५६ ॥ आकूतिमिति। आकूतिं रुचये प्रादात्। मध्यमां देवहूतिं तु कर्दमाय प्रादात् प्रसूतिं च दक्षाय प्रादात्। यतः यासां संसृतिभिः कृत्स्नं जगदापूरितम् ॥ ५७ ॥

इति श्रीभागवते तृतीये स्कन्धे टीकायां द्वादशोऽध्यायः ॥ १२ ॥

—:※:—

## अथ त्रयोदशोऽध्यायः

श्रीशुक उवाच

निशम्य वाचं वदतो मुनेः पुण्यतमां नृप। भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥

त्रयोदशे क्रोडमूर्त्तिरुज्जहार हरिर्धराम्। हिरण्याक्षमहंस्तत्र श्लोकाः सार्द्धाः खमार्गणाः (५०॥)

अनुष्टुभां तु (६२) द्वाषष्टिरुवाचनवकं तथा ॥ १३ ॥

निशम्येति। हे नृप! एवं वदतो मुनेः मैत्रेयस्य पुण्यतमां वाचं निशम्य वासुदेवकथायामादृतः आदरवान्। दृङो भावक्तान्तान्मत्वर्थीयोऽच्। कौरव्यो विदुरो भूयः पप्रच्छ ॥ १ ॥ स वै इति। हे मुने! स्वयम्भुवः ब्रह्मणः प्रियः पुत्रः सम्राट् सार्वभौमः स प्रसिद्धः स्वायम्भुवो मनुः प्रियां पत्नीं शतरूपां प्रतिलभ्य लब्ध्वा ततः किं चकार ॥ २ ॥ चरितमिति। हे सत्तम! राजर्षेस्तस्य आदिराजस्य चरितं श्रद्दधानाय मे मह्यं ब्रूहि। हि यस्मात् असौ मनुः विष्वक्सेनो भगवानाश्रयो यस्य तथाभूतोऽस्ति॥३॥ श्रुतस्येति। येषां हृदयेषु मुकुन्दस्य पादारविन्दं वर्त्तते तेषां तत्तद्गुणानामनुश्रवणं यत् तत् सुचिरं बहुकालं श्रमो यस्मिंस्तस्य पुंसां श्रुतस्य अध्ययनादेरर्थः प्रयोजनं फलमञ्जसा मुख्यतया ननु अयमेव सूरिभिर्विद्वद्भिरीडितः स्तुतिपूर्वकं प्रतिपादितः ॥ ४ ॥ इतीति। इत्येवं ब्रुवाणं पृच्छन्तं विनीतं सहस्रशीर्ष्णः हरेः चरणावुपधीयेते यस्मिंस्तं श्रीकृष्णः कृपया यस्योत्सङ्गे चरणौ प्रसारयति तमित्यर्थः। महाभारते विदुरगृहभोजने भगवांस्तदुत्सङ्गे चरणौ निधाय सुष्वापेति प्रसिद्धेः। विदुरं प्रति प्रहृष्टानि उदञ्चितानि रोमाणि यस्य स तथोक्तः विदुरेण भगवत्कथायां प्रणीयमानः प्रवर्त्यमानः मुनिर्मैत्रेयः अभ्यचष्ट अभ्यभाषत ॥ ५ ॥ यदेति। यदा स्वभार्यया शतरूपया साकं सह स्वायम्भुवो मनुर्जातस्तदा वेदगर्भं ब्रह्माणं प्रणतः प्राञ्जलिश्च सन्निदं वक्ष्यमाणमभाषत ॥ ६ ॥

त्वमिति। यतः सर्वभूतानां त्वमेक एव पिता। यतः जन्मकृत् उत्पादकः वृत्तिदः पोषकश्च। अतो यद्यपि तवान्यापेक्षा नास्ति अथापि तथापि नोऽस्माकं प्रजानां ते तव शुश्रूषा परिचर्या केन वा कर्मणा भवेत् ॥ ७ ॥ हे ईड्य! तुभ्यं नमोऽस्तु। आत्मनः शक्तिर्येषु तेषु अस्मच्छक्येषु कर्मसु यत्कर्म कृत्वा स्थितस्य ममेति शेषः। इह अस्मिंल्लोके विष्वक् सर्वतो यशो भवेत् तथा अमुत्र परलोकेऽपि सुगतिर्भवेत् तद्विधेहि। इदं कर्त्तव्यमिति कथय ॥ ८ ॥ प्रीत इति। हे तात! हे क्षितीश्वर! यस्मात् निर्व्यलीकेन

निष्कपटेन हृदा मां शाधि शिक्षयेति आत्मना स्वयमेव त्वयाऽर्पितं निवेदितं तस्मात् तुभ्यमहं प्रीतः। पत्ये शेते इतिवत्संप्रदानम्। अतो वां युवाभ्यां स्त्रीपुरुषाभ्यां स्वस्ति स्तात् कल्याणं भूयात्॥ ९॥ एतावतीति। हे वीर! अप्रमत्तैः सावधानैः सनकादयो न कुर्वन्ति वयं किमिति कुर्यामेति गतो मत्सरो येषां तैः स्वशक्त्या स्वशक्त्यनुसारेण गुरोराज्ञा सादरं यथा स्यात्तथा गृह्येतेति गुरौ जनकादौ पूज्ये आत्मजैः पुत्रादिभिरेतावत्येवापचितिः पूजा सेवा कार्येति॥ १०॥ स इति। स मदाज्ञापेक्षकस्त्वमस्यां स्वभार्यायामात्मनस्तव गुणैः सदृशानि अपत्यानि उत्पाद्य धर्मेण गां भूमिं भूमिस्थां प्रजां शास शाधि पालय। "बहुलं छन्दसि" इति शपो न लुक्। अतो हि यज्ञैः यज्ञादिभिः पुरुषं हरिं यज॥११॥ परमिति। हे नृप! एवं प्रजारक्षया मह्यं ममापि। षष्ठ्यर्थे चतुर्थी। परं शुश्रूषणं स्यात्। प्रजाभर्तुः प्रजारक्षकस्य ते तव हृषीकेशो भगवानप्यनुतुष्यति तुष्टो भविष्यति॥ १२॥ येषामिति। येषां यज्ञलिङ्गो यज्ञमूर्त्तिः जनार्दनो भगवान् न तुष्टस्तेषां सर्वोऽपि कर्मादौ श्रमः अपगतोऽर्थो यस्मात्तस्मै अपार्थाय निष्फलत्वायैव भवति। यत् यतः तैः स्वयमात्मैव नादृतः भगवत्यतुष्टे स्वार्थस्यैवासिद्धेः सर्वात्मत्वात्तस्य॥ १३॥ आदेश इति। हे प्रभो! हे अमीवसूदन पापनाशन! भगवतस्तव आदेशेऽहं वर्त्तेय वर्त्तिष्ये। परं त्विह अस्मिन् कार्ये स्थानमपेक्षितं तत्तु न दृश्यते। अतः प्रजानां मम च निवासस्थानमनुजानीहि परामृश॥ १४॥ यदिति। हे देव! सर्वसत्त्वानां यत् ओको निवासस्थानं मही सा तु महाम्भसि महति जले निमग्नाऽस्ति। अतोऽस्या देव्या भूमेरुद्धरणे यत्नो विधीयताम्॥ १५॥ परमेष्ठीति। परमेष्ठी तु ब्रह्माऽपि यथा मनुनोक्तं तथा पूर्वमपां पाने कृतेऽपि पुनरुद्भूतानामपां मध्ये सन्नां निमग्नां एनां भूमिमहं कथं सदुन्नेष्ये उद्धरिष्यामीति धिया चिरं दध्यौ॥ १६॥

सृजत इति। मे मम प्रजाः सृजतोऽपि सतः वार्भिर्जलैः प्लाव्यमाना निमज्ज्यमाना क्षितिः रसाङ्गता रसातलोपलक्षितं गर्भोदं गतेत्यर्थः। रसातलस्य भूविवरतया तत्र भुवो मज्जनासम्भवात्। अथानन्तरमत्र काले सर्ग नियोजितैरस्माभिः किमनुष्ठेयं किं कर्तव्यम्॥ १७॥ यस्येति अर्द्धम्। यस्य हृदयादहं पुत्रतया जातोऽस्मि स एवेशः यन्मया कर्त्तव्यं तद्विदधातु॥ १८॥ इतीति। हे अनघ! इत्येवमभिध्यायतो ब्रह्मणो नासाविवरात् अङ्गुष्ठशिरोमात्रप्रमाणको वराहतोकः सूक्ष्मो वराहः सहसा निरगात्॥ १९॥ तस्येति। हे भारत! तस्य ब्रह्मणः अभिपश्यत एव सतः खस्थः आकाशे स्थित एव सूक्ष्मो वराहः क्षणेनैव गजमात्रः प्रववृधे गजपरिमाणो जातः। तत् वर्द्धनं महदद्भुतमभूत्॥ २०॥ मरीचीति। मरीचिप्रमुखैर्विप्रैः कुमारैः सनकादिभिर्मनुना च सह ब्रह्मा तत्सौकरं वाराहं रूपं दृष्ट्वा चित्रधा बहुधा चित्रशब्दाद्धा आर्षः। तर्कयामास॥ २१॥ किमिति। दिव्यमलौकिकं सौकरं सूकररूपं व्याजश्छद्म वेषो यस्य तदेतत्सत्त्वं प्राणि किं ममाग्रेऽवस्थितम्! अहो बताश्चर्यमिदं यत् मे मम नासायाः सकाशाद्विनिःसृतम्॥ २२॥ दृष्ट इति। अङ्गुष्ठस्य शिरः ऊर्ध्वं पर्वतदेवमात्राप्रमाणं यस्य तथाभूतः प्रथमं दृष्टः पश्चात् क्षणेन गण्डशिलासमः स्थूलपाषाणसदृशो जातः। अपिस्विदिति सम्भावनायाम्। एष वराहमूर्त्तिर्यज्ञो विष्णुरेव मे मम मनः खेदयन् मोहयन् वर्त्तते॥ २३॥ इतीति। इत्येवं सूनुभिः सह तस्य ब्रह्मणो मीमांसतस्तर्कयतः सतः। आर्षः शता। अगेन्द्रसन्निभः गिरीन्द्रतुल्यः यज्ञपुरुषो भगवान् अगर्जत्॥२४॥ ब्रह्माणमिति। विभुः विष्णुः ककुभः दिशः प्रतिस्वनयता प्रतिध्वनयता स्वगर्जितेन ब्रह्माणं तान मरीच्यादीन् द्विजोत्तमांश्च हर्षयामास॥ २५॥ निशम्येति। मायामयसूकरस्य भगवतः अनिश्चयेन भूमज्जनेन वा यः स्वखेदः तं क्षयिष्णु क्षपणशीलं घुर्घुरितं सूकरजातिशब्दानुकरणं निशम्य ने पूर्वोक्ताः ब्रह्मादयो ये चान्ये जनतपःसत्यलोकनिवासिनस्ते च मुनयस्तं भगवन्तं पवित्रैस्त्रिभिः ऋग्यजुःसामसूक्तैः अगृणन् स्म अस्तुवन्। जनस्तप इत्यत्र सकारः आर्षः॥ २६॥ तेषामिति। गजेन्द्रवत् लीला यस्य स वेदानां वितानो मूर्तिर्यस्य स वेदा हि भगवन्निश्वासाः भगवन्निश्वास एव ब्रह्मनासां प्रविष्टः स एव सूकरो भगवान् तेषां सतां मुनीनामात्मगुणानुवादं मुनिकर्तृकभगवद्गुणकथनमेव तद्ब्रह्म वेदमवधार्य श्रुत्वा विबुधानां ब्रह्मादीनामुदयाय श्रेयोलाभाय भूयः पुनर्विनद्य नादं कृत्वा जलमाविवेश॥ २७॥

उत्क्षिप्तेति। उच्चैः क्षिप्तः वालः पुच्छं येन सः खचर आकाशचारी कठोरः कठिनाङ्गः सटाः कन्धरास्थाः केशास्तान् विधुन्वन् कम्पयन् खराणि कर्कशानि रोमाणि यस्यां सा त्वक् यस्य सः खुरैराहतानि इतस्ततश्चालितानि अभ्राणि येन सः सिते अतिशुक्ले दंष्ट्रे यस्य सः ईक्षा निरीक्षणमेव ज्योतिरालोको यस्य सः प्रकाशमाननेत्र इत्यर्थः। एवंभूतो महीध्रः पृथिव्या उद्धर्त्ता शैलतुल्यो वा भगवान् बभासे अशोभत॥ २८॥ घ्राणेनेति। क्रोडापदेशः छद्मवराहवपुः वस्तुतस्तु स्वयमध्वराङ्गः यज्ञमूर्तिः कराले भयङ्करे दंष्ट्रे यस्य तथाभूतोऽप्यकरालाभ्यां कृपायुक्ताभ्यां दृग्भ्यां गृणतः स्तोतॄन् विप्रान् उद्वीक्ष्य सम्यग्दृष्ट्वा घ्राणेन गन्धवत्याः पृथ्व्याः पदवीं विजिघ्रन् अन्वेषयन् कं जलमविशत्॥ २९॥ स इति। वज्रकूटो वज्रमयः पर्वतस्तद्वदङ्गं यस्य तस्य भगवतो निपातवेगेन विशीर्णा कुक्षिर्यस्य सः भगवत्प्रवेशस्थानमभूत्। उदन्वान् समुद्रः स्वप्राणत्यागशङ्कया आर्त्त इव स्तनयन् शब्दं कुर्वन् उत्सृष्टाः प्रसारिताः दीर्घा ऊर्मय एव भुजास्तैः क्रन्दनं सूचयन् भो यज्ञेश्वर! मा मां पाहि रक्षेति चुक्रोश॥ ३०॥ खुरैरिति। त्रीणि परूंषि सवनात्मकानि पर्वाणि यस्य सः त्रिपरुर्यज्ञमूर्तिर्भगवान् क्षुरप्रैः क्षुरप्रा आयताग्राः क्षुरास्तत्सदृशैरपो जलानि उत्पाराणां

पारशून्यानामप्यपां पारमवसानं यथा भवति तथा दरयन् विदारयन् तदा तत्र रसायां रसातलोपलक्षिते पातालतले गर्भोद इत्यर्थः। अतलादीनां सप्तानामेव भूविवरत्वेन पृथिवीत्वात् रसातले तस्याः स्थित्यसम्भवात्। यदुक्तं विष्णुधर्मे—"पाताल-मूलेश्वरभोगसंहितौ विन्यस्य पादौ पृथिवीं च बिभ्रतः। यस्योपमानं न बभूव सोऽच्युतो ममास्तु माङ्गल्यविवृद्धये हरिः॥" इति। अत्रापि सलिले स्वखुराक्रान्त इति वक्ष्यति। गां पृथ्वीं ददर्श। अग्रे दैनन्दिने प्रलयसमये तत्र तास्वप्सु सुषुप्सुः शिशयिषुः सन् जीवधानीं सर्वजीवाधारभूतां यां भूमिं स्वयमभ्यधत्त जठरे धृतवान् वेदरूपेणोक्तवान् वा॥ ३१॥ स्वदंष्ट्रयेति अर्द्धम्। जले निमग्नां महीं स्वदंष्ट्रयोद्धृत्य रसायाः रसातलात् उत्थितः ऊर्ध्वमागच्छन् स भगवान् संरुरुचे अत्यशोभत। रसाया इत्यनेन भूतलादिपङ्भूखण्डाः भग्नाः जले निमग्नाश्च तत उद्धृत्य भगवता स्वस्वस्थाने स्थापिताश्चेत्यर्थोऽज्ञेयम्॥ ३२॥ तत्रेति सार्द्धम्। तत्राम्भसि गदया आपतन्तं गदामुद्यम्य आगच्छन्तं रुन्धानं चतुर्षु दिक्षु प्रतिभ्रमणेन प्रतिबध्नन्तम् असह्यविक्रम-मदिदैत्यं हिरण्याक्षं सुनाभेन चक्रेण सन्दीपितः मयि विद्यमाने किमिति परिभवं सहस इत्युक्त्या प्रकटितः तीव्रो मन्युः क्रोधो यस्य स भगवान् लीलया इभं मृगराट् सिंह इव जघान। तेन च गजेन्द्रो जगतीं पर्वतप्रान्तभूमिं विभिन्दन् क्रीडया विदारयन् गैरिकया यथा अरुणगण्डतुण्डो भवति तथा तस्य रक्तमेव पङ्कस्तेनाङ्कितौ गण्डौ तुण्डं मुखं च यस्य तथाभूतो भगवान् जातः। अत्र श्वेत-वाराहकल्पे स्वायम्भुवमन्वन्तरारम्भे ब्रह्मनासात एव श्वेतवराह आविर्भूय केवल पृथ्वीमुद्धृत्यैवान्तरधात्ततः षष्ठे चाक्षुषमन्वन्तरे पुनराकस्मिके प्रलये जलादेवाविर्भूय नीलो वराहः पृथ्वीमुद्धरन् हिरण्याक्षं जघानेति वराहद्वयलीलामेकीकृत्यैवात्र मैत्रेयः प्राह स्मेति श्रीभागवतामृतकारिकाभ्योऽवगन्तव्यम्। ताश्च यथा—"द्विराविरासीत् कल्पेऽस्मिन्नाद्ये स्वायम्भुवान्तरे। घ्राणाद्विधेर्धरोद्धृत्यै चाक्षुषीये तु नीरतः॥ हिरण्याक्षं धरोद्धारे निहन्तुं दंष्ट्रिपुङ्गवः। चतुष्पात् श्रीवराहोऽसौ नृवराहः कचिन्मतः॥ कदाचिज्जलद-श्यामः कदाचिच्चन्द्रपाण्डरः। यज्ञमूर्त्तिः स्थविष्ठोऽय वर्णद्वययुतः स्मृतः॥ दक्षात् प्राचेतसात् सृष्टिः श्रूयते चाक्षुषान्तरे। अतस्तत्रैव जन्मास्य हिरण्याक्षस्य युज्यते॥ उत्तानपादवंश्यानां तनयस्य प्रचेतसाम्। दक्षस्यैव दितिः पुत्री हिरण्याक्षो दिते सुतः॥ कल्पारम्भे तदा नास्ति सुतोत्पत्तिर्मनोरपि। क्वासौ प्राचेतसो दक्षः क दितिः क दितेः सुतः॥ अतः कालद्वयोद्भूतं श्रीवराहस्य चेष्टितम्। एकत्रै-वाह मैत्रेयः क्षत्तुः प्रश्नानुसारतः॥ मध्ये मन्वन्तरस्यैव मुनेः शापान्मनुं प्रति। प्रलयोऽसौ बभूवेति पुराणे कचिदीर्यते। अयमाकस्मिको जातश्चाक्षुषेऽप्यन्तरे मनोः। प्रलयः पद्मनाभस्य लीलयेति तु कुत्रचित्॥ ३३॥

तमालेति। अङ्ग हे विदुर! तमालमिव नीलं गजस्येव लीलयाऽनायासेनैव मितया दन्तकोट्या दंष्ट्राग्रेण क्ष्मां महीमुत्क्षि-पन्तमुद्धरन्तमीशं प्रज्ञाय आलक्ष्य विरिञ्चिमुख्याः ब्रह्मादय ऋषयो बद्धाञ्जलयः सन्तः अनुवाको वैदिकं सूक्तं तत्सदृशैर्वाक्यैरुप-तस्थुः तुष्टुवुः। तङभाव आर्षः॥ ३४॥ जितं जितमिति। हे अजित! हे यज्ञानां भावन! पालक सम्पादक वा ते त्वया जितं जितम् उत्कर्ष आविष्कृतः। भावे क्तः। सम्भ्रमे वीप्सा। त्रयीमृगादिवेदत्रयरूपां स्वां स्वकीयां तनुं परिधुन्वते सर्वतः कम्पयते तुभ्यं नमः। यस्य रोमगर्त्तेषु अध्वराः यज्ञाः निलिल्युः लीना बभूवुस्तस्मै कारणं भूम्युद्धारः तदर्थं सूकराय ते तुभ्यं नमः॥ ३५॥ रूपमिति। हे देव! यदध्वरात्मकं तवैतद्रूपं तद्दुष्कृतात्मनां दुर्दर्शनं दर्शनायोग्यं यस्य त्वचि छन्दांसि गायत्र्यादीनि आसन्। यस्य रोमसु बर्हिः बर्हिषः कुशा आसन्। जातावेकत्वम्। रेफलोपेऽपि दीर्घाभाव आर्षः। यस्य दृशि नेत्रे आज्यं घृतमासीत्। यस्याङ्घ्रिषु चरणेषु चातुर्होत्रं चतुर्होतृवर्गः होत्रादिकर्मचतुष्टयं वा आसीत्॥३६। स्रुगिति। हे ईश! हे भगवन्। स्रुक् जुहूः तुण्डे मुखाग्रे आसीत् इत्यग्रेऽपि। स्रुवः नासयोः इडा हविर्भक्षणपात्रमुदरे चमसाः सोमपात्राणि कर्णरन्ध्रे आसन्। प्राशित्रं ब्रह्मभाग-पात्रमास्ये ग्रहाः सोमपात्राणि ते तव ग्रसने ग्रस्यतेऽनेनेति ग्रसनं मुखान्तर्वर्त्ति च्छिद्रं तस्मिन् यदग्निहोत्रं तत्ते तव चर्वणं भक्ष-णम्॥ ३७॥ दीक्षेति। दीक्षा दीक्षणीयेष्टिस्तवानुजन्म वारंवारमभिव्यक्ति उपसदः उपसदाख्यास्तिस्र इष्टयस्तव शिरोधरं ग्रीवा प्रायणीया दीक्षानन्तरेष्टिः उदयनीया अवसानेष्टि ते तव दंष्ट्रे यस्य तथाभूतस्त्वं प्रवर्ग्यो महावीरः यः प्रत्युपसदः पूर्वं क्रियते सः तव जिह्वा सभ्यो होमरहितोऽग्निः आवसथ्यः औपासनाग्निस्तयद्वन्द्वैक्यं तत् क्रतोः क्रतुरूपस्य ते एव शीर्षकं शिरः। चितयः इष्टका-चयनानि ते तव असवः पञ्च प्राणाः॥ ३८॥

सोम इति। हे देव! सोमः ओषधिविशेषस्तु तव रेतः सवनानि प्रातःसवनादीनि तव अवस्थितिः अवस्थानं बाल्याद्यवस्था वा जाग्रदाद्यवस्था वा संस्थाविभेदाः। अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्त इति संस्थाविभेदास्तव धातवः त्वङ्मांसाद्याः सप्त धावतः। सर्वाणि सत्राणि द्वादशाहादीनि बहुयागसङ्घातरूपाणि तव शरीरस्य सन्धिः सन्धयः। त्वं सर्वयज्ञक्रतुरिति असोमाः यज्ञाः ससोमाः क्रतवस्तद्रूपस्त्वमित्यर्थः। इष्टिर्यजनमनुष्ठानं बन्धनं च यस्य तथाभूतस्त्वम्॥ ३९॥ नम इति। मन्त्राः द्रव्यदेवताप्रकाशकानि वेदवाक्यानि देवता उद्देश्य विशेषा इन्द्रादयः द्रव्याणि आज्यदधिपयःसोमादीनि अखिलानि मन्त्रादीनि यस्मिंस्तस्मै सर्वक्रतवे अतः क्रियात्मने यज्ञादिव्यापाररूपाय ते तुभ्यं नमो नमः। वैराग्येण युक्तया भक्त्या आत्मजयोऽन्तःकरणस्थैर्यं तेनानुभावितं साक्षात्कृतं यत् ज्ञानं तस्मै विद्यागुरवे ज्ञानप्रदाय नमो नमः॥४०॥ दंष्ट्रेति। हे भूधर! हे भगवन्! यथा वनात् जलात् निःसरतो निर्गच्छतो मतङ्गजेन्द्रस्य गजश्रेष्ठस्य दता दन्तेन धृता पत्रयुक्ता

पद्मिनी विराजते तथा दंष्ट्राग्रकोट्या साधनेन त्वया कर्त्रा सभूधरा भूधरैः पर्वतैः सहिता भूर्मही धृता सती विराजते। सपत्रेत्यनेन तस्याः पत्रकोरकादिभिरुच्चनीचाः पर्वता उपमिताः ॥ ४१ ॥ त्वया भूर्विराजते इत्युक्तं त्वं च भुवा विराजस इत्याह—त्रयीमयमिति। अथ दता दन्तेन धृतेन भूमण्डलेन त्रयीमयं ते तवेदं सौकरं रूपं भूयसा अतिमहता शृङ्गोढघनेन शृङ्गे शिखरे ऊढः धृतो यो घनो मेघस्तेन कुलाचलेन्द्रस्य पर्वतश्रेष्ठस्य यथैव विभ्रमो विलासः शोभातिशयस्तथा चकास्ति शोभते ॥ ४२ ॥ संस्थापयेति। सतस्थुषां स्थावरसहितानां जगतां जङ्गमानां लोकानां निवासस्थानार्थं तव पत्नीं जगतां मातरमेनां भूमिं संस्थापय यतस्त्वं जगतां पिताऽसि। तथा च सति तत्र स्थिताः सन्तो वय त्वया सह स्थितायै अस्यै मात्रे नमसा विधेम विदध्याम नमनं कुर्याम। नमस्कारेण परिचरेमेति वा। विधेमेत्यार्षम्। याज्ञिकाः अरणीकाष्ठे यथा मन्त्रतोऽग्निं धारयन्ति तथा यस्यां भूमौ त्वं स्वतेजःधारणाशक्तिरूपं गर्भमधाः निहितवानसि एतेन पत्नीत्वं दर्शितम् ॥ ४३ ॥ क इति। हे प्रभो! तव त्वया कृतं रसां रसातलं गतायाः भुवः उद्विबर्हण-मुद्धरणमन्यतमस्त्वत्तो व्यतिरिक्तः कः श्रद्धीत कर्तुं स्पृहां कुर्यादित्यर्थः। यद्वा। अन्यतमः त्वद्विवेकिनो भिन्नः कः श्रद्धीत श्रुत्वापि विश्वासं कः कुर्यादित्यर्थः। परन्त्वसौ भूम्युद्धारः विश्वे सर्वे विस्मया यस्मिंस्तस्मिंस्त्वयि विस्मयः आश्चर्यजनको न भवति। यो भवान् मायया अचिन्त्यशक्त्या अतिविस्मयमिदं रेतोरूपबीजसाम्येऽपि ततो नानाविधपशुपक्षिमनुष्यादि विश्वं ससृजे। तङार्षः ॥ ४४ ॥

विधुन्वतेति। हे ईश! वेदमयं निजं वपुः विधुन्वता कम्पयता त्वया सटानां स्कन्धबालानां शिखाभिरग्रैरुद्भूता उच्छूलिता ये शिवाः पवित्राः अम्बुबिन्दवस्तैर्विमृज्यमाना अभिषिच्यमानाः जनस्तपःसत्यनिवासिनः। मुडार्षः। वयमद्य भृशमत्यन्तं पाविताः पवित्रीकृताः। उद्भूताः उद्धूता इति वा पाठः ॥ ४५ ॥ स वा इति। हे भगवन्! यो जनः अपारकर्मणस्तव कर्मणां पारमवधिमेष ते जानामीत्यभिमन्यते ज्ञातुमिच्छति वा। "एषृ गतौ" भौवादिकः। स वै बत भ्रष्टमतिः यस्य तव योगमायागुणैः सह योगेन संबन्धेन समस्तमेव विश्वं मोहितं भवति अतोऽस्माकं शं सुखं विधेहि कुरु ॥ ४६ ॥ इतीति। तैः ब्रह्मवादिभिर्मुनिभिरित्येवम् उपस्थीयमानः स्तूयमानः अविता रक्षिता भगवान् स्वखुरैराक्रान्ते सलिले अवनिं भूमिमुपाधत्त स्थापयामास। इति जलेऽपि धारणशक्त्याधानं दर्शयति ॥ ४७ ॥ स इति। भगवान् विष्वक्सेनः प्रजापतिर्हरिः इत्थं रसायाः रसातलात् लीलया उन्नीतामुद्धृता-मुर्वीमप्सु न्यस्य प्रतिष्ठाप्य ययौ अन्तर्दधे ॥ ४८ ॥ य इति। य एवंप्रकारां सुभद्राम् उशतीं कमनीयाम् एतां हरिमेधसः हरति दुःखं यद्विषया मेधा तस्य हरिमेधसः। असिजार्षः। कथनीयाः मायाः लीलाः अस्य सन्तीति कथनीयमायी तस्य हरेः कथां भक्त्या शृण्वीत शृणुयात्। तङार्षः। श्रवयेत वा श्रावयेद्वा। ह्रस्वमार्षम्। तस्यास्य श्रोतुः हृदिस्थो जनार्दनः आशु प्रसीदति। हृदि मनसि प्रसीदति इति वा ॥ ४९ ॥ तस्मिन्निति। सकलाशिषां सर्वपुरुषार्थानां प्रभौ स्वामिनि तस्मिन् भगवति प्रसन्ने सति किं दुर्लभं न किमपि। लवात्मभिस्तुच्छाभिस्ताभिराशीर्भिरलं न साध्यं यतः गुहाशयोऽन्तःकरणस्थः परः परमेश्वरः अनन्यदृष्ट्या अभेदभावेन फलराहित्येन भजतां वा जनानां प्रार्थनां विनापि स्वयमेव परां सर्वोत्तमां स्वगतिं स्वप्राप्तिं विधत्ते ॥ ५० ॥ को नामेति। पुरा कथानां मध्ये भवापहां जन्ममरणहरां भगवत्कथारूपां सुधां कर्णावेवाञ्जलयस्तैरापीय आ सर्वतस्तन्माधुर्यादिगुणाननुभूय नरेतरं पशुं विना लोके पुरुषार्थसारं भगवत्प्रसाद इति यो वेत्ति सः को नाम विरज्येत ॥ ५१ ॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

—:❀:—

# अथ चतुर्दशोऽध्यायः

श्रीशुक उवाच

निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः ।
पुनः स पप्रच्छ तमुद्यताञ्जलिर्न चातितृप्तो विदुरो धृतव्रतः ॥ १ ॥

चतुर्दशे तु सन्ध्यायां दितेः कामाग्रहादभूत् । गर्भः कश्यपजस्तत्रोवाचेत्येकादशेरितः ॥
श्लोकाः ( ५० ) खबाणास्त्रिशरा ( ५३॥ ) त्रिपादी चाप्यनुष्टुभः ॥ १४ ॥

निशम्येति । कौषारविणा मैत्रेयेणोपवर्णितां कारणसूकरात्मनः जगत्कारणभूतवराहावतारस्य हरेः कथां निशम्य श्रुत्वा न चातितृप्तः । चकार एवार्थः । अतः धृतं कथाश्रवणव्रतं येन सः उद्यताञ्जलिः स विदुरः पुनस्तं मैत्रेयं पप्रच्छ ॥ १ ॥ तेनेति । हे मुनिश्रेष्ठ ! येन स्वायम्भुवे भूमिरुद्धृता तेनैव यज्ञवराहरूपेण हरिणा चाक्षुषे आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम त्वत्त एव श्रुतवन्तो वयम् ॥२॥ तस्येति । हे ब्रह्मन् ! स्वदंष्ट्राग्रेण क्षोणीं भूमिं लीलया उद्धरतस्तस्य वराहस्य दैत्यराजस्य हिरण्याक्षस्य च मृधः युद्धं कस्माद्धेतोरभूत् ॥ ३ ॥ साध्विति । हे वीर ! त्वया साधु सम्यक् पृष्टं यत् यस्मात् एतत्प्रश्नमिषेण मर्त्यानां मृत्युपाशं विशातयति मोचयति तां हरेरवतारयोः वराहनृसिंहयोः कथां त्वं पृच्छसि ॥ ४ ॥ ययेति । मुनिना नारदेन गीतया यया हरिकथया अर्भको बाल एव उत्तानपदः पुत्रो ध्रुवः मृत्योर्मूर्ध्नि अङ्घ्रिं कृत्वैव हरेः पदं स्थानमारुरोह । यदा ध्रुवाय सुनन्दाभिर्विमानमानीतं तदाऽस्य देहत्यागोऽपेक्षितः स्यात् इति मत्त्वा मृत्यावासन्नेऽपि देहं न तत्याज । किन्तु सोपान इव तस्य मूर्ध्नि पदं दत्त्वा विमानमारुह्य विष्णुपदमारूढः । वक्ष्यति हि—'परीत्याभ्यर्च्य धिष्ण्याग्रम्' इत्यादिना ॥ ५ ॥ अथेति । प्रश्नोत्तरारम्भे अत्रापि त्वया पृष्टेऽर्थेऽपि देवानामनुपृच्छतां सतां देवदेवेन ब्रह्मणा पुरा पूर्वकाले वर्णितः इतिहासः मे मया श्रुतोऽस्ति ॥ ६ ॥ दितिरिति द्वयम् । हृच्छयः कामस्तेनार्दिता पीडिता अपत्यकामा च दाक्षायणी प्राचेतसस्य दक्षस्य पुत्री दितिः यजुषां यज्ञानां पतिं फलदातारमग्निर्जिह्वा मुखं यस्य तं पुरुषं भगवन्तं पयसेष्ट्वा पयोहोमेन पूजयित्वा अर्के सूर्ये निम्लोचति अस्तं गच्छति सति अग्न्यागारे अग्निहोत्रशालायामासीनं समाहितं कृतसमाधिं मारीचं मरीचेः पुत्रं स्वपतिं कश्यपं सन्ध्यायामेव चकमे । तत्रापि अग्निहोत्रशालायां तत्रापि समाहितं सन्ध्यायामपि सूर्यास्तकाल एवेत्यादिदेशकालाद्ययोग्यता दर्शिता । कामार्दितत्वादेवानुचितमपि स्ववाचा संभोगप्रार्थनं कृतवती ॥ ७–८ ॥ एष इति । हे विद्वन् ! आत्तं गृहीतं शरासनं धनुर्येन स एषः प्रसिद्धः कामः त्वत्कृते त्वया सह सङ्गत्यर्थं दीनां कृपणां मां विक्रम्य स्वशौर्यमाविर्भाव्य रम्भां कदलीं मतङ्गज इव दुनोति पीडयति ॥ ९ ॥ तदिति । तत्तस्मादिति दीनत्वात् प्रजावतीनां सपत्नीनां समृद्धिभिर्विभवैर्दह्यमानायां मयि भवान् अनुग्रहमायुङ्क्त सर्वतो युनक्तु सम्यक् करोतु । एवं चेत्ते तवापि भद्रमेव भविष्यति ॥ १० ॥ भर्त्तरीति । ननु भवद्विधो गुणवान् पतिर्यासां मादृशीनां स्त्रीणां प्रजया प्रजारूपेण जायते, "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतेः । तासां भर्त्तरि भर्तृविषये भर्तृचित्ते वा आप्त उरुर्मानो याभिस्तासां स्त्रीणां यशः लोकान् प्रत्याविशते सर्वेषु लोकेषु प्रसृतं भवति । तङार्षः ॥ ११ ॥ विवाहात् पूर्वमप्यहं त्वय्येवानुरक्तत्वादप्रत्याख्येयेत्याह—पुरेति । पुरा विवाहात् पूर्वकाले दुहितृषु वत्सलः भगवान् नोऽस्माकं पिता दक्षः हे वत्सा ! इति प्रथमं सर्वाः युगपत् संबोध्य ततः भवती कं वरं पतिं वृणीतेति नोऽस्मान् पृथक् पृथगपृच्छत । तङार्षः । यद्वा वृणीतेत्येकत्वमार्षम् । तत्र पृथक् इत्यस्यैकान्त इत्यर्थः ॥ १२ ॥

स इति । सन्तानभावनः सन्तानहितेप्सुः दक्षः आत्मजानां नोऽस्माकं भावमभिप्रायं विदित्वा साक्षान्नामाग्रहणेऽपि इङ्गितेन जनान्तरद्वारा वा विदित्वा तासामात्मजानां मध्ये यास्ते तव शीलमनुव्रताः अनुसृतास्ता अस्मान् त्रयोदश तुभ्यमददात् । तथा च त्रयोदशानामस्माकं त्वयि भावसाम्ये विषमाचरणमयुक्तमिति भावः ॥ १३ ॥ अथेति । हे कल्याण ! हे कञ्जविलोचन ! हे भूमन् महत्तम ! हि यस्मात् महीयसि त्वादृशे महत्तमे पुरुषे आर्तानां मादृशामुपसर्पणं समीपमागत्य याचनं मोघं वृथा न भवति । अथ त नम्मे काममभिलषितं कुरु सम्पादय ॥ १४ ॥ इतीति । हे वीर ! मारीचः कश्यपः इत्युक्तप्रकारेण बहुभाषिणीं कृपणां दीनां प्रवृद्धो योऽनङ्गः कामस्तेन कश्मलं मोहो यस्याः तां वाचाऽनुनयन् सान्त्वयन् प्रत्याह स्म । अत्र एष मां त्वत्कृते इति द्वाभ्यां कार्पण्यं भर्त्तर्याप्तेत्यादिबहुभाषितवम् ॥ १५ ॥ अथ सन्ध्याकालवञ्चनाय भार्यां प्रशंसति–एष त इति । हे भीरु ! त्वं यदिच्छसि तत्ते

प्रियम् एषः त्वया प्रार्थितोऽहं विधास्यामि करिष्यामि। यतः यस्याः भार्यायाः सकाशात् त्रैवर्गिकी धर्मार्थकामरूपा सिद्धिः फलं भवति तस्या भार्यायाः काममभिलषितं को न कुर्यात् सर्वोऽपि कुर्यादेव ॥१६॥ सर्वेति। यथा नाविको जलयानैर्नौभिः अन्यानप्यादाय स्वयं समुद्रं तरति तथा कलत्रवान् पुरुषः स्वाश्रमेण गृहस्थाश्रमेण सर्वाश्रमानितरानपि त्रीनाश्रमान् उपादाय अन्नादिप्रदानेन तेषामपि निर्वाहं कृत्वा स्वयमपि व्यसनार्णवं क्षुत्पिपासादिदुःखसमुद्रमत्येति उत्तरति॥ १७॥ यामिति। हे मानिनि! स्वर्गापवर्गाख्यश्रेयस्कामस्य पुरुषस्यात्मनो देहस्यार्द्धं यां पत्नीं श्रुतय आहुः। दम्पत्योः कर्मसु सहाधिकारात् यच्छब्दानां तामिति तृतीयश्लोकेन सम्बन्धः। यस्यां पत्न्यां स्वस्य धुरं दृष्टादृष्टकर्मभारमध्यस्य निक्षिप्य विज्वरो निश्चितः पुमान् चरति॥ १८॥ यामिति। दुर्गपतिर्यथा दस्यून् जयति तथा यां पत्नीमाश्रित्य इतराश्रमैर्ब्रह्मचर्याद्याश्रमैः दुर्जयान् जेतुमशक्यानपि इन्द्रियाण्येवारातयः शत्रवस्तान् हेलाभिरेव वयं गृहस्था जयेम। सभार्यस्येन्द्रियाणि न क्षुभ्यन्ति। अतः वयं तैर्न बाध्यामह इति दुर्गमत्र विषयभोग एव। स हि तत्र पतितान् ब्रह्मचार्यादीन् भ्रंशयति न तु गृहस्थान्, तेषां विषयभोगस्य विहितत्वेन भ्रंशकत्वाभावात्॥ १९॥ नेति। हे गृहेश्वरि! तां पूर्वोपकारकर्त्रीं त्वामनुकर्त्तुं स्वकृतोपकारैस्त्वत्सदृशीभवितुं कात्स्न्र्येनापि युक्तं यदायुस्तेन सम्पूर्णेनाप्यायुषा वाशब्दाज्जन्मान्तरैरपि वयं न प्रभवो न समर्थाः। कात्स्न्र्येनेति अनुकर्त्तुमित्यत्र वा योज्यम्। एवमन्ये च ये गुणगृध्नवो गुणग्राहकास्तेऽपि न प्रभवः॥ २०॥

अथापीति। अथापि त्वदुपकारानुरूपेणोपकर्तुमशक्यत्वेऽपि ते तव प्रजात्यै पुत्रोत्पत्त्यै एतं कामं मनोरथमलं पूर्णं करवाणि परन्तु यथा लोकाः मां नातिवोचन्ति न निन्देयुस्तथा मुहूर्त्तं सन्ध्याकालं प्रतिपालय प्रतीक्षस्व। अङ्गो विनापि वच उमार्षः किन्न वोचस्यसद्वृत्त इत्यग्रेऽप्येवम्, वोचधातुरेव वा कल्प्यः॥२१॥ स्वनिन्दामगणयन्तीं भीषयमाणः प्राह—एषेति। एषा सन्ध्या घोरतमा अतिभयङ्करी घोरं दर्शनं यस्याः सा घोराणां वेला च अतो न रतियोग्या यस्यां सन्ध्यायां भूतेषो रुद्र तस्यानुचराणि भूतानि भूतप्रेतपिशाचादीनि चरन्ति सर्वत्र पर्यटन्ति॥२२॥ एतस्यामिति। हे साध्वि! एतस्यां सन्ध्यायां भूतभावनः सर्वजनपालकः भगवान् भूतराट् भूतानां राजा रुद्रः भूतानां प्रमथादीनां परिषदः सभाः समूहास्तैः परीतः परिवेष्टितो वृषेण स्ववाहनेनाटति॥ २३॥ श्मशानेति। श्मशानेषु यश्चक्रानिलो वातमण्डली तस्मिन् या धूलिस्तया धूम्रा विकीर्णा विक्षिप्ताः विद्योता विद्योतिताश्च या जटास्तासां कलापो रचना यस्य सः भस्मना अवगुण्ठः प्रावृतः अमलः रुक्ममिव देहो यस्य स ते देवरः मम पितृव्यश्च देवो महादेवस्त्रिभिः सोमसूर्याग्निनेत्रैः पश्यति। सत्या दक्षकन्यात्वेन दितिभगिनीत्वात् एकस्य जामातरः परस्परं भ्रातरो व्यवह्रियन्ते। अतो मम भ्राताऽसौ तव देवर इति लज्जार्थमुक्तम्॥ २४॥ ननु स स्वजनेष्वसत्सु क्षंस्यत इति चेत्तत्राह—नेति। लोके संसारे यस्य महादेवस्य स्वजनः स्वकीयो जनो नास्ति तथापरः अस्वजनो वा नास्ति। तथात्यादृत अति आदरः स्नेहरूद्विषयोऽपि नास्ति तथा विगर्ह्यः द्वेषविषयत्वेन निन्द्यो वा कश्चिन्नोत नास्त्येव। वयं संसारिणो जीवा यस्येश्वरस्य श्रीमहादेवस्य चरणाभ्यामपविद्धां निर्माल्यवद् दूरतः परित्यक्तां भुक्तो भोगो यस्यास्तां दृष्टदोषाम् अजां मायामयीं विभूतिं व्रतैर्नानाविधसाधनैस्तमाराध्य तत आशास्महे प्रार्थयामहे॥ २५॥ अनिषिद्धसुखत्यागादुपहासो न कार्य इत्याह—यस्येति। अविद्याकृतं यत्पटलमात्मावरणं तद्भित्सवो भेत्तुमिच्छवः मनीषिणो यस्य श्रीमहादेवस्य अनवद्यं सर्वदोषनिवर्त्तकमाचरितं गृणन्ति गृह्णन्ति इत्यपि पाठः। निरस्तं साम्यमतिशयश्च यस्मात्तथाभूतोऽपि सतां गतिर्गुरुर्यत् यः स्वय स्वतन्त्रः भोगवैमुख्याय पिशाचचर्यामचरत्॥ २६॥ हसन्तीति। स्वात्मन् स्वात्मान। ङिलुगार्षः। रतस्य तस्य समीहितमभिप्रायं परशिक्षार्थत्वमविदुषः अविद्वांस इति द्वितीया प्रथमार्थे आर्षी। यद्वा। न विद्वान् यस्मात्तस्याविदुषः सर्वज्ञस्येति शिवविशेषणम्। समीहितमभिप्रेतं लोकशिक्षारूपमित्याचरितविशेषणम्। यस्याचरितं भोगवैमुख्याय कृतं दुर्भगाः मन्दभाग्या एव हसन्ति यैर्दुर्भगैः पुरुषैः कर्तृभिः वस्त्रमाल्याभरणानुलेपनैः करणैः श्वभोजनं शुनां भोज्यं शरीरं स्वात्मतया अयमेवात्मेति बुद्ध्या उपलालितं ते भ्रान्तास्तं हसन्तीत्याशयः॥ २७॥

ब्रह्मादय इति। सर्वोत्कृष्टा हि ब्रह्मादयस्तेऽपि येन श्रीरुद्रेण कृताः सेतवो मर्यादास्तत्पालकास्तदाज्ञानुसारिण इत्यर्थः। इदं विश्वं यत्कारणं यो रुद्रः कारणं यस्य तथाभूतेन येन कृतमित्यर्थः। ब्रह्मादिसर्वजनमोहिनी माया च यस्याज्ञाकरी। अहो आश्चर्यं तस्य विभूम्नः महत्तमस्य पिशाचचर्या दृश्यते। अतः पिशाचवदिदमाचरितं विडम्बनमनुकरणमात्रमेव अतर्क्यमित्यर्थः॥ २८॥ सेति। भर्त्रा कश्यपेन कर्त्रा एवमुक्तप्रकारेण संविदिते ज्ञापने कृतेऽपि सति। भावे क्तः। मन्मथेन उन्मथितमिन्द्रियं मनो यस्याः सा दितिः वृषलीव वेश्येव गतत्रपा निर्लज्जा सती ब्रह्मर्षेः कश्यपस्य वासो वस्त्रं जग्राह विचकर्ष॥ २९॥ स इति। कश्यपो भार्याया दितेस्तं विकर्मणि सन्ध्यायां प्रतिषिद्धे रतिकर्मणि निर्बन्धं हठं ज्ञात्वा अथानन्तरं दिष्टाय दैवरूपाय सर्वप्रवर्तकाय परमेश्वराय तं प्रसादयितुं नत्वा अथानन्तरं रहसि अग्निशालां परित्यज्यान्यत्रैकान्तस्थले तया भार्यया सह उपविवेशेति मैथुनं लक्ष्यते॥ ३०॥ अथेति। अथ सलिलमुपस्पृश्य सलिले स्नात्वा प्राणानायम्य प्राणायामं कृत्वा वाग्यतः धृतमौनः भर्गशब्दवाच्यं विरजं निर्विकारं सलोप आर्षः। अदन्तोऽप्ययमस्तीति परे। ज्योतिर्ज्ञानरूपं सनातनं नित्यं ब्रह्म ध्यायन् तद्वाचकं प्रणवं गायत्रीं वा जजाप॥ ३१॥ दितिस्त्विति।

हे भारत ! तेन स्वकृतेन कर्मावद्येन कर्मदोषेण व्रीडिता सती अत एवाधोमुखो सती दितिर्विप्रर्षिं कश्यपमुपसङ्क्रम्य समीपं गत्वा अभ्यभाषत ॥ ३२ ॥ न मे इति । हे ब्रह्मन् ! अहं यस्य श्रीशिवस्य अहसम् अपराधम् । पुंस्त्वमार्षम् । अकरवं कृतवती स भूतानां प्रमथादीनामृषभः स्वामी भूतानां पतिः पालकः रुद्रः इमं मे गर्भं माऽवधीत् मा हन्तु । न मे इति पाठे लुङ्लोपः । अवधीदिति च्छेदः ॥ ३३ ॥ नम इति । सतां महते देवाय असताम् उग्राय भयङ्कराय सतां मीढुषे कामवर्षणाय न्यस्तदण्डाय च असतां तु धृतदण्डाय मन्यवे च रुद्राय शिवाय नमः । अत्र स्त्रीत्वान्मयि कृपां कुर्यात् कि वा मम दोषात् दण्डयेदित्युभयविधानि विशेषणानि मीढुषे इति "दाश्वान् साह्वान्" इति छान्दसो निपातः ॥ ४॥ स इति । भामा भगिनीभर्त्ता ब्रह्मपुत्रस्यैव दक्षस्य प्रचेतसः पुनरुत्पन्नत्वेन ब्रह्मपुत्रदक्षकन्यापि सती भगिन्येवेति रुद्रस्य भामत्वम् । भगवान् उरुर्महाननुग्रहो यस्य सतीपतिः देवः स रुद्रः व्याधस्यातिक्रूरस्याप्यनुकम्प्यानामनुकम्पितुं योग्यानां स्त्रीणां नोऽस्माकं प्रसीदताम् । तङार्षः । सतीपतिरित्यनेन स स्त्रीणां स्वभावं वेत्तीति दर्शयति । सत्या अनुरोधाद्वा तद्भगिनीं मामनुकम्पताम् ॥ ३५ ॥ स्वेति । स्वसर्गस्य स्वगर्भस्य लोक्यां लोकद्वयार्हामाशिषं शुभमाशासानां प्रार्थयन्तीं रुद्रभयेन प्रवेपतीं कम्पमानाम् । आर्षः शता । भार्यां निवृत्तः सन्ध्यानियमो जपादिरूपो यस्य सः प्रजापतिः कश्यपः प्राह स्म ॥ ३६ ॥

अप्राप्यत्यादिति द्वयम् । हे अभद्रे अशुभे ! हे चण्डि कोपने ! ते तवात्मजश्चित्तस्याप्रायत्वात् अशुचित्वात् मौहूर्त्तिकात् सन्ध्यामुहूर्तसंबन्धिनो दोषात् उत अपि मन्निदेशातिचारेण ममाज्ञोल्लङ्घनेन देवानां महादेवानुचराणां हेलनादवज्ञानाच्च अभद्रौ तव जाठराधमौ पुत्राधमौ भविष्यतः । तौ च सपालान् लोकपालैः सहितान् त्रीन् लोकान् मुहुः पुनः पुनः आक्रन्दयिष्यतः रोदयिष्यतः ॥ ३७–३८ ॥ प्राणिनामिति द्वयम् । तदा ताभ्यां दीनानामकृतागसां निरपराधानां प्राणिनां हन्यमानानां सतां प्राणिषु हन्यमानेष्वित्यर्थः । स्त्रीणां च निगृह्यमाणानां पातिव्रत्यधर्माच्चाल्यमानानां सतीनामाचारमर्यादाभङ्गेन महात्मसु कोपितेषु सत्सु असौ प्रसिद्धः विश्वेश्वरः लोकस्य भावनः पालकः भगवान् क्रुद्धः सन्नवतीर्य वराहनरसिंहरूपाभ्यामाविर्भूय यथा शतपर्वधृक् वज्रधर इन्द्रः । धृञेः क्विप् । अद्रीन् नाशितवान् तथा तौ त्वत्पुत्रौ हनिष्यति ॥ ३९–४० ॥ वधमिति । हे प्रभो ! सुनाभं सुदर्शनचक्रं तेन उदारो भूषितो बाहुर्यस्य तेन भगवता साक्षान्मह्यं मम पुत्रयोर्वधमाशासे अनुमन्ये । क्रुद्धात् ब्राह्मणात्तु वधो माभूत् ॥ ४१ ॥ नेति । ब्रह्मदण्डो ब्राह्मणशापस्तेन दग्धस्य मृतस्य भूतानां प्राणिनां भयं ददातीति भूतभयदस्तस्य च उभयत्र । शेषे षष्ठी । नारकाश्च नरकवासिनोऽपि नानुगृह्णन्ति अनुग्रहं न कुर्वन्ति तथा यां यां योनिमसौ ब्रह्मदण्डदग्धो लोकभयदश्च गतो भवति तत्रस्था अपि नानुगृह्णन्ति ॥ ४२ ॥ कृतेति द्वयम् । कृतं यद् दुष्कर्म तेन यः शोकः ततो योऽनुतापः पश्चात्तापस्तेन सद्यः प्रत्यवमर्शनात् युक्तायुक्तविचारेणापराधक्षमापनात् भगवति उरुमानाच्च भवे श्रीरुद्रे मयि अपि आदराच्च हेतोः तव पुत्रस्य हिरण्यकशिपोः पुत्राणां चतुर्णां तु मध्ये एक एव प्रह्लादः सतां मतः प्रमाणत्वेन संमतो भविता भविष्यति । यस्य तव पौत्रस्य शुद्धं यशो भगवद्यशसा समं सह सदृशं वा गास्यन्ति ॥ ४३–४४ ॥ योगैरिति । योगैर्दाहाद्युपायैर्दुर्वर्णं हीनवर्णं हेम स्वर्णमिव तद्यथा शोध्यते तथा यस्य शीलमनुवर्तितुं निर्वैरादिभिर्गुणैरात्मानमन्तःकरणं साधवः भावयिष्यन्ति शोधयिष्यन्ति ॥ ४५ ॥ यदिति । यस्य भगवतः प्रसादात् अनुग्रहाद्यदात्मकं भगवदात्मकमिदं विश्वमपि प्रसीदति अनुग्रहं करोति । स स्वदृक् सर्वसाक्षी भगवान् यस्य तव पौत्रस्य अनन्यया दृशा एकान्तया भक्त्या तोष्यते तोक्ष्यति तोषं प्राप्स्यति । तङ्फलोपाभावावार्षौ ॥ ४६ ॥ स इति । स वै महाभागवतो महात्मा निर्मलचित्तः महाननुभावः अग्न्याद्यैश्वर्यदाह्यत्वादिरूपः प्रभावो यस्य महतामपि महिष्ठः अतिशयेन महान् सः त्वत्पौत्रः प्रवृद्धया भक्त्या अनुभाविते संशोधिते आशये चित्ते भगवन्तं वैकुण्ठं निवेश्य अवस्थाप्य इमं देहाद्यभिमानं विहास्यति त्यक्ष्यति ॥ ४७ ॥ अलम्पट इति । तव पौत्रः अलम्पटः । जितेन्द्रिय इत्यर्थः । शीलधरः सुस्वभावः शीलधन इति पाठान्तरम् । गुणानां सत्यप्रतिज्ञत्वधैर्यादीनामाकरः जन्मभूमिः परेषां समृद्ध्या हृष्टः परेषु दुःखितेषु सत्सु स्वयमपि तद्दुःखेन व्यथितो दुःखितः न भूतो न जातः शत्रुर्यस्य सः अभूतशत्रुः शत्रुदृष्टिरहितः निदाघो ग्रीष्मः तत्र भवं नैदाधिकं तापं यथा उडुराजश्चन्द्रो हरति तथा जगतः सर्वलोकस्य शोकहर्त्ता भविष्यति ॥ ४८ ॥ अन्तरिति । तव पौत्रः अमलम् अब्जनेत्रं स्वपुरुषाणां स्वभक्तानामिच्छानुरूपं गृहीतं रूपं येन तं श्रीर्लक्ष्मीर्या ललना स्त्री तस्या ललामं भूषणभूतं पतिं स्फुरन्ती ये कुण्डले ताभ्यां मण्डितमाननं यस्य तं भगवन्तम् अन्तः स्वहृदये बहिश्च सर्वत्र द्रष्टा द्रक्ष्यतीत्यपरिच्छिन्नदर्शित्वमुक्तम् ॥ ४९ ॥ श्रुत्वेति । जनिष्यमाणं पौत्रं भागवतं श्रुत्वा अहो मम पापमपि सत्फलमिति संचिन्त्य दितिर्भृशमत्यन्तममोदत जहर्ष । तथा कृष्णाद्भगवतः स्वपुत्रयोर्वधं विदित्वा महामना उत्साहयुक्तमना आसीत् ॥ ५० ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायो निरमात् तृतीयस्य चतुर्दशे ॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्दशोऽध्यायः ॥ १४ ॥

—:❀:—

# अथ पञ्चदशोऽध्यायः

## मैत्रेय उवाच

प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः। दधार वर्षाणि शतं शङ्कमाना सुरार्दनात् ॥ १ ॥

पञ्चदशे तु वैकुण्ठवर्णनं द्वारपालयोः। शापो मुनीनां च तत्र (५०) पञ्चाशच्छ्लोकसंमितिः ॥
षडुवाचेति सार्द्धास्तु पञ्चशैला अनुष्टुभः ॥ १५ ॥

प्राजापत्यमिति। गर्भस्थमेव परेषां देवादीनां तेजो हन्तीति पचाद्यच्। तत् प्राजापत्यं प्रजापतिना कश्यपेन धृतं तत्तु तेजो वीर्यं गर्भं दितिः ताभ्यां सुराणां यदर्दनं पीडा भविष्यति तस्माच्छङ्कमाना असुरार्दनात् विष्णोः सकाशाच्छङ्कमाना वा सती शतं वर्षाणि उदरे दधार ॥ १ ॥ लोक इति। तेन गर्भस्थतेजसा लोके हतः निरस्त आलोकः सूर्यादिप्रकाशो यस्मिंस्तथाभूते सति लोकपाला इन्द्रादयश्च हतौजसः हतगौरुपाः सन्तो ध्वान्तेन तमसा दिशां व्यतिकरं संकरमियं पूर्वा दिगियं पश्चिमा दिगिति विवेकाभावं विश्वसृजे ब्रह्मणे न्यवेदयन् ॥ २ ॥ तम इति। हे विभो! यत् यस्मात् वयं भृशं संविग्नाः भीताः स्म। एतत्तमः त्वं वेत्थ एव। हि यस्मात् कालेनास्पृष्टमनभिभूतं वर्त्म ज्ञानमार्गो यस्य तस्य भगवत तव अव्यक्तमज्ञातं किञ्चिन्नास्त्येव ॥ ३ ॥ देवदेवेति। हे देवानां देव! हे जगतां धातः स्रष्टः! लोकनाथानामपि शिखामणे आदरणीय! त्वं परेषां पूर्वेषामुत्कृष्टानां वा अपरेषामर्वाचीनानां निकृष्टानां वा सर्वेषां भूतानां भाववित् अभिप्रायज्ञोऽसि। अतः केनाभिप्रायेण दितिगर्भो वर्द्धत इत्यपि त्वं जानास्येवेति भावः ॥ ४ ॥

नम इति। विज्ञानं चिच्छक्तिरेव वीर्यं बलं यस्य तस्मै गृहीतो गुणभेदो रजोगुणो येन मायया इदं ब्रह्म देहम् उपेयुषे गृहीतवते व्यक्तस्य प्रपञ्चस्य योनये कारणाय यद्वा न व्यक्ता केनापि प्रमाणेन विज्ञाता योनिर्यस्य तस्मै ते नम इति ॥ ५ ॥ य इति द्वयम्। ये आत्मनां जीवानां भावनं पालकं स्वात्मन्येव प्रोतानि ग्रथितानि भुवनानि येन तं परं सदसदात्मकं कार्यकारणरूपं त्वा त्वामनन्येन भावेन निष्कामभक्त्या भावयन्ति ध्यायन्ति। सुपक्वयोगानां जितानि श्वासाः इन्द्रियाणि आत्मा मनश्च यैः लब्धो युष्माकं प्रसादो यैस्तेषां कुतश्चिदपि हेतोः पराभवो न भवति ॥ ६–७ ॥ यस्येति। यस्य तव वाचा वेदरूपया सर्वाः प्रजाः गावः वृषाः तन्त्या दामन्या इव यन्त्रिताः स्वस्वाधिकारे प्रयोजिताः आयत्ताः अधीनाः सावधाना वा सत्यो बलिं हरन्ति स्वाधिकारानुरूपाणि कर्माणि कुर्वन्तीत्यर्थः। तस्मै मुख्याय नियन्त्रे प्राणरूपाय वा तुभ्यं नमः ॥ ८ ॥ स त्वमिति। हे भूमन्! सः त्वं तमसा अन्धकारेण अहोरात्रभागाभावेन लुप्तानि कर्माणि येषां तेषामस्माकं शं सुखं विधत्स्व कुरु। अदभ्रा अनल्पा दया यस्यां तया दृष्ट्या आपन्नान् शरणागतान् आपद्गतान् वाऽस्मान् ईक्षितुमर्हसि ॥ ९ ॥ एष इति। हे देव! काश्यपं कश्यपसम्बन्धि ओजो वीर्यं तेनैव दित्यामर्पितं स्थापितं तदेव एष दितेर्गर्भः सर्वाः दिशस्तिमिरयंस्तमोव्याप्ताः कुर्वन् एधति शुष्के काष्ठेऽग्निरिव वर्द्धते ॥ १० ॥ स इति। हे महाबाहो! स शब्दगोचरः देवादीनां ये शब्दाः विज्ञप्तिवाक्यानि तेषां गोचरो विषयभूतो भगवान् आत्मभूर्ब्रह्मा दितेः कुचेष्टितं स्मृत्वा प्रहस्य रुचिरया मधुरया गिरा देवान् प्रीणन् सन्तोषयन् प्रत्याचष्ट प्रत्यभाषत ॥ ११ ॥ मानसा इति। युष्मदपेक्षया पूर्वं जाता मानसाः सनकादयो मे मम सुताः लोकेषु जनेषु विगतस्पृहाः प्रयोजनरहिता एव विहायसा आकाशमार्गेण सर्वान् लोकांश्चेरुः ॥ १२ ॥ त इति। ते एकदा सर्वलोकनमस्कृतम् अमलात्मनः भगवतः वैकुण्ठस्य विष्णोर्वैकुण्ठाख्यं निलयं स्थानं ययुः ॥ १३ ॥ वसन्तीति। अनिमित्तं स्वप्रयोजनाभावः निमित्तं प्रवर्तकं यस्मिंस्तेन निष्कामेण धर्मेण ये हरिमाराधयन् ते वैकुण्ठस्य भगवत इव मूर्त्तिर्येषां तथाभूता एव सर्वे पुरुषा यत्र वसन्ति ॥ १४ ॥ यत्रेति। यत्र च श्रीवैकुण्ठे आद्यः कारणरूपः पुमान् परमपुरुषः शब्दगोचरः शास्त्रैकप्रमाणकः वृषो धर्ममूर्त्तिः कामवर्षणो वा भगवान् विरजं रजोगुणेनाननुविद्धम्। सलोप आर्षः। अदन्तोऽध्ययमिति परे। सत्त्वं विष्टभ्य शुद्धसत्त्वमयीं मूर्त्तिं धृत्वा स्वानां नः स्वकीयान् भक्तानस्मान्। शेषे षष्ठी। मृडयन् सुखयन्नास्ते ॥ १५ ॥ यत्रेति। यत्र च सर्वर्तुश्रीभिः सर्वेषु ऋतुषु श्रीः पुष्पफलादिसंपद्येषां तैः कामदुघैः अभीष्टानि वर्षद्भिर्द्रुमैः मूर्त्तिमत् कैवल्यं मोक्ष इव विशेषेण भ्राजत् शोभमानम्। शता

आर्षः। नैःश्रेयसं नाम वनमति ॥ १६ ॥ वैमानिका इति। यत्र वैकुण्ठे वने वा सललनाः सस्त्रीकाः वैमानिकाः विमानचारिणो जनाः अन्तर्जले जलमध्ये अनुविकसन्मध्वः प्रसरन्मकरन्दाः याः माधव्यः वासन्त्यो लताः अनुविकसन्त्यश्च ताः मधुयुक्ताः माधव्यो वा तासां गन्धेन खण्डिता विहिनता धीर्येषां तथाभूता अपि तद्गन्धप्रापकमनिलं क्षिपन्तः भगवल्लीलामाधुर्य-तिरस्कृतं तम् अगणयन्तः लोकानां शमलानि कामादिदोषान् क्षपयन्ति निराकुर्वन्ति। तादृशानि भर्त्तुः स्वामिनो भगवतश्चरितानि गायन्त्येव न तु माधवीगन्धलोभेन विरमन्ति। तेषां नित्यप्राप्तविषयसुखानामपि भगवत्सेवानन्दासक्तिर्दर्शिता ॥ १७ ॥ पारावतेति। यत्र पारावतादीनां पक्षिणां यः कोलाहलः सभृङ्गाधिपे भगवद्वनमालाधिकारिणि भृङ्गश्रेष्ठे हरिहरि इत्याकारकस्वपक्षशब्देन हरिकथामिवोच्चैर्गीयमाने सति। शानजार्षः, चानश् वा। अचिरमात्रं क्षणमात्रं विरमते समाप्तो भवति। तङार्षः। अन्यभृतः कोकिलाः दात्यूहाश्चातकाः पक्षिणः कूजन्तो भृङ्गध्वनिमाकर्ण्य हरिकथागानं मत्वा स्वकोलाहलं त्यक्त्वा भृङ्गध्वनिं शृण्वन्ति। तत्र पक्षिणामपि हरिकथाश्रवणानन्दः तेषां गुणग्राहित्वं निर्मत्सरत्वं च सूचितम् ॥ १८ ॥

मन्दारेति। यस्मिन् वैकुण्ठे मन्दारपारिजातौ सुरतरुविशेषौ कुरवस्तिलकवृक्षः अर्णः पुष्पविशेषः नागो नागकेसरः मन्दारकुन्दादयोऽतिसुगन्धाः सुमनसः पुष्पजातयोऽपि तुलसिकाभरणेन भगवता तस्यास्तुलस्याः गन्धे अर्चिते संमानिते सति तस्यास्तुलस्यास्तपो बहु मानयन्ति न त्वसूयन्ति। तेषां गुणग्राहित्वं निर्मत्सरत्वं चेति सुमनस्त्वं सूचितम् ॥ १९ ॥ यत्सङ्कुलमिति। यद्वैकुण्ठं हरेः पदयोर्या आनतिर्नमस्कारस्तन्मात्रेण दृष्टैः भगवद्भानां वैदूर्यमारकतहेममयैस्तन्निर्मितैः विमानैः सङ्कुलं व्याप्तमस्ति। बृहन्ति कटितटानि यासां ताः स्मितेन शोभीनि मुखानि यासां ता. अपि स्त्रियः उरुक्रयाद्यैः परिहासादिभिः येषां कृष्णात्मनां कृष्णचेतसां मनसि रजः रजोगुणसमुद्भवं कामं न आदधुः न जनयामासुः ॥ २० ॥ श्रीरूपिणीति। रूपिणी अतिसुरूपा चरणा-रविन्दं क्वणयती मन्दगत्या नूपुरेण शब्दयन्ती। मित्त्वाभावाद्ध्रस्वो नुमभावश्चार्षौ। श्रीर्लक्ष्मीः हरेः सद्मनि स्फटिककुड्ये स्फटिकमयभित्तौ उपेतहेम्नि मध्ये शोभार्थं संयुक्तसुवर्णे मुक्तदोषा प्रसारितभुजेन लीलाम्बुजेन च उपलक्षिता पाणिधृतेन संमार्जतीव स्वच्छभूभित्तौ प्रतिबिम्बिता शोधन्या संमार्जनं कुर्वतीव संलक्ष्यते। लीलाम्बुजमत्र मार्जनीस्थानीयम्। यद्वा। संमार्जतीव संमार्जनकारिणी अन्या दासीव मुक्तदोषा निर्दोषा। अयं भावः—यद्यपि तत्र रजो नास्त्येव तथापि भित्तिप्रतिबिम्बिता सती विनयभक्तिभ्यां तथा लक्ष्यते। यस्याः श्रियः अनुग्रहणे श्रीरस्यास्त्वनुग्रहं करोतीत्येतदर्थमन्येषां ब्रह्मादीनां यत्नः साधनप्रयासो भवति ॥ २१ ॥ वापीष्विति। अङ्ग हे देवाः! यत् यस्मिन् लोके प्रेष्याभिः स्वपरिचारिकाभिरन्विता श्रीर्लक्ष्मीर्निजवने स्वविहार-वाटिकायां तुलसीभिरीशं भगवन्तमभ्यर्चती सती। नुमभाव आर्षः। विद्रुममणिमयानि तटानि यासां तासु अमलाः स्वच्छाः अमृततुल्या आपो यासां तासु वापीषु। समासान्ताभाव आर्षः। स्वलकं शोभनकेशम् उन्नसमुन्नतनासिकं स्ववक्त्रं मुखमीक्ष्य। ल्यबार्षः। भगवता उच्छेषितं चुम्बितमित्यमत अमन्यत। तत्र जलप्रतिबिम्बितनीलोत्पलमेलनात् भगवता मन्मुखं चुम्बितमिति तस्या भावो जातः। अनेन लक्ष्म्या अपि सौभाग्यसुखं भगवदनुग्रहेणैवेति द्योतितम् ॥ २२ ॥

यदिति। ये जनाः अघभिदो हरेः रचना सृष्ट्यादिलीला तस्या अनुवादात् वर्णनादन्यविषयाः अथकामादिविषया मतिघ्नीः कुकथाः शृण्वन्ति ते यत् वैकुण्ठं न व्रजन्ति। हन्त खेदे। याः आत्तसाराः गृहीतसारा निःसारा इत्यर्थः। यद्वा। आत्तः सारः श्रोतृजनपुण्यं याभिस्ताः कुकथाः हतभगैर्नष्टभाग्यैर्नृभिः श्रुताः सत्यस्तांस्तान् श्रोतॄन् अशरणेषु निराश्रयेषु तमःसु नरकेषु क्षिपन्ति। अतो हतभाग्यानामेव कुकथासु प्रवृत्तिः ॥ २३ ॥ य इति। यत्र यस्यां नृगतौ सहधर्म धर्मेण सहितं तत्त्वविषयं ज्ञानं भवति तां नोऽस्माकं ब्रह्मादीनामप्यर्थितां याचितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः सन्तोऽपि ये भगवत आराधनं न वितरन्ति न कुर्वन्ति।। ते अमुष्य भगवतो विततया विस्तृतया मायया संमोहिता एव। बतेति खेदेऽवधारणे वा ॥ २४ ॥ यच्चेति। अनिमिषां देवानां। किन्नन्तस्य मिषतेः रूपम्। ऋषभो हरिस्तस्यानुवृत्त्या दूरे यमो येषां यद्वा दूरीकृतयमनियमाः दूरेहम इति पाठे दूरी-कृताहङ्काराः। अलुगार्षः। नोऽस्माकमप्युपरिभूताः अधिकाः यतोऽस्माभिः स्पृहणीयमेव न तु प्राप्यं शीलं येषां ते भर्त्तुर्हरेर्यत्सुयश-सस्य मिथः परस्परं कथने योऽनुरागस्तेन वैक्लव्यं वैवश्यं तेन बाष्पकला अश्रुबिन्दुस्तया सह पुलकीकृतं रोमाञ्चितमङ्गं येषां ते यद्वैकुण्ठं व्रजन्ति ॥ २५ ॥ तदिति। विश्वगुरुणा हरिणा अधिकृतम् अधिष्ठितं भुवनेषु एकं मुख्यं वन्द्यं दिव्यमप्राकृतं विचित्राणि यानि विबुधाग्र्याणां विमानानि तेषां शोचिर्दीप्तिर्यस्मिंस्तत् अपूर्वमदृष्टपूर्वं तत् उक्तविधं वैकुण्ठं मुनयः सनकाद्याः अष्टाङ्गयोगमाया-बलेन उपेत्य भगवति तु योगमायाचिच्छक्तिविलास इति ज्ञेयम्। भगवतो योगमायाबलेन वा उपेत्य अन्यथा तेषां प्रवेशासम्भवात्। अथो परां मुदं प्रापुः। अपूर्वमिति क्रियाविशेषणं वा ॥२६॥ तस्मिन्निति। तस्मिन् वैकुण्ठे षट् कक्षाः प्राकारद्वाराणि अतीत्य अतिक्रम्य असज्जमानाः भगवद्दर्शनौत्कण्ठ्यात् तत्तदद्भुतदर्शने काप्यासक्तिमकुर्वाणास्ते मुनयः सनकादयः अथानन्तरं सप्तमायां कक्षायाम्। ङीबभावः आर्षः। समानं वयो ययोस्तौ तत्र कालविक्रमाभावात् गृहीते गदे याभ्यां तौ द्वारपालत्वात् परार्ध्यैः श्रेष्ठैः केयूरादिभि-र्विटङ्कौ रुचिरो वेषो ययोस्तौ देवौ द्वारपालावचक्षत अपश्यन् ॥ २७ ॥ मत्तेति। असितं नीलं यद्बाहुचतुष्टयं तस्य मध्ये विन्यस्तया

मत्ता द्विरेफा भ्रमरा यस्यां तया वनमालया निवीतौ कण्ठलम्बिन्या अलङ्कृतौ कुटिलया भ्रुवा स्फुटौ उत्फुल्लौ यौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्यां च स्फुटनिर्गमाभ्यामित्यस्य नासाश्वासाभ्यामिति विशेषणपदं वाऽध्याहार्यम्। रक्तेक्षणेन रक्तनेत्रेण च मनाक् ईषत् रभसं किञ्चित् कोपक्षुभितं यथा भवति तथा वक्त्रं दधानौ द्वौ अचक्षतेत्यनुषङ्गः ।। २८ ।।

द्वारीति। एतयोः पार्षदयोर्मिषतोः पश्यतोः सतोस्तावनादृत्यापृष्ट्वा गन्तव्यं वेति प्रश्नमकृत्वैव याः पूर्वाः षट् द्वारः पुरटालङ्कृतवज्रमय्यः कपाटिका यासु ता यथा विविशुस्तथाऽस्यां सप्तम्यामपि द्वारि ते मुनयः निविविशुः। तङ्भाव आर्षः। यतः ये अविहताः क्वापि न निवारिताः अविषमया उत्कृष्टापकृष्टस्त्रीपुंस्त्वादिवैषम्यरहितया स्वदृष्ट्या विगताभिशङ्काः शङ्काशून्याः सन्तः सर्वत्र देशे काले च विश्वं चरन्ति ।। २९ ।। तानिति। वातः पवन एव रशना तदुपलक्षितं वस्त्रं येषां तान् नग्नानित्यर्थः। ब्राह्मे कल्पे जातत्वेन वृद्धानपि दशार्द्धवयसः पञ्चवर्षबालकवत् प्रतीयमानान् विदितमात्मतत्त्वं यैस्तान् अतदर्हणान् तत् स्खलनं नार्हन्ति तान् चतुरः कुमारान् सनत्कुमारादीन् वीक्ष्य तेषां तेजः प्रभावमहो अत्रापि धाष्टर्यमित्येवं विहस्य भगवतः ब्रह्मण्यदेवस्य प्रतिकूलं शीलं ययोस्तौ पार्षदौ वेत्रेण तिर्यग्वेत्रधारणेन चकारान्मा विशतमिति वचनेन च अस्खलयतां निवारितवन्तौ ।। ३० ।। ताभ्यामिति। एवं ताभ्यां हरेः प्रतिहारपाभ्यां द्वारपाभ्यामनिमिषेषु अन्येषु देवेषु मिषत्सु पश्यत्सु सत्सु स्वर्हत्तमाः भगवत्समीपमतिशयेन गन्तुमर्हा अपि हि यतो निषिद्ध्यमानाः अतः सुहृत्तमो भगवांस्तस्य दिदृक्षितं दर्शनेच्छा तस्य भङ्गे प्रतिरोधे सति य ईषत् कामानुजः स्वल्पः क्रोधस्तेन सहसा झटिति उपप्लुतानि व्याप्तानि अक्षीणि येषां तथाभूताः सन्तस्त ऊचुः ।। ३१ ।। को वामिति। उच्चैर्महत्या जन्मान्तरेष्वनेकेषु कृतया भगवत्परिचर्यया इमं लोकमेत्य इह निवसतां तद्धर्मिणां तस्य भगवतो धर्मा ब्रह्मण्यत्वसमदर्शित्वादयस्तद्वतां मध्ये वां युवयोरेव कोऽयं विषमः स्वभावः कैश्चित् प्रवेष्टव्यं कैश्चिन्नेति विषमा बुद्धिः प्रशान्तपुरुषे गतविग्रहे च तस्मिन् भगवति कुहकयोः कुटिलचित्तयोः वां युवयोः आत्मवत् स्वदृष्टान्तेन यथा आवां कुटिलौ तथान्योऽपि कश्चित् कुटिलः प्रवेक्ष्यत्येवं को वान्यः परिशङ्कनीयः। अता भक्तिं विनाऽत्रागमनासंभवाद् भगवति विरोधासंभवादत्र निषेधकौ भवन्तावेव कुटिलौ ।। ३२ ।। नहीति। इह वैकुण्ठे समस्तमेव विश्वं कुक्षौ यस्य तस्मिन् यत्र भगवति आत्मनि परमात्मनि आत्मानं सर्वमेव जीवात्मानं धीरा ज्ञानिनः नभसि महाकाशे नभः घटाकाशमिव अन्तरं भिन्नं न पश्यति। तस्यास्य परमेश्वरस्य सुरलिङ्गिनोः देवचिह्नयोः। वस्तुतस्त्वसुरयोरेव युवयोः शेषे षष्ठी। युवाभ्यामित्यर्थः। यथाऽन्यस्य राजादेर्भयं भवति तथा उदरभेदि देहभेदप्रयुक्तं भयं यद्वा कश्चिच्छत्रुः कपटेनागत्य हरेरुदरं भेत्स्यतीति भयं ततः कारणाद् व्युत्पादितं विशेषेण शङ्कितं तत्किं नाम कारणम् इति ब्रूतम् ।।३३।।

तदिति। यस्माद् वृथैव भगवति भयमारोप्य वयं निवारितास्तस्मादमुष्य परमस्य विकुण्ठभर्तुः वैकुण्ठनाथस्य भृत्याभ्यां मन्दधीभ्यामपि वां युवाभ्यां भद्रशब्दार्थकप्रकृष्टशब्दयोगे चतुर्थ्यन्तपदमिदं प्रकृष्टं भद्रमेव कर्तुमिहास्मिन्नपराधे धीमहि चिन्तयेम। आर्षम्। अतः अन्तरस्य भेदस्य भावः सत्ता तद्दृष्ट्या भेददर्शनेन दोषेणेतो वैकुण्ठलोकात् व्रजतम्। यत्र येषु लोकेषु कामः क्रोधस्तथा लोभ इमे त्रयोऽस्य पापीयसः भेदद्रष्टुः रिपवः सन्ति ।। ३४ ।। तेषामिति। अस्त्रपूगैरपि अनिवारणम् अनिवार्यं तेषां मुनीनामित्युक्तप्रकारम् ईरितं भाषितरूपं तं घोरं ब्रह्मदण्डमवधार्य श्रुत्वा सद्य एव उभावपि हरेरनुचरौ उरु अधिकं बिभ्यतः बिभ्यतौ सन्तौ। बहुत्वमार्षम्। केचित्तु बिभ्यतः बिभ्यतुरित्यर्थः। उकारस्याकार आर्षः इत्याहुः। मुनिभ्यो द्वारपालापेक्षयाऽपि उरु बिभ्यतः भयं भावयत इति हरिविशेषणतया स्वामिपादा व्याचख्युः। अतिकातरेणातिभयेन सद्य एव तेषां पादग्रहौ पदग्रहणं कुर्वन्तौ सन्तौ दण्डवदपतताम् ।। ३५ ।। भूयादिति। अघोनि इत्यार्षम्। अघवति सापराधे य उचितो दण्डः भगवद्भिः भवद्भिः अकारि कृतः स भूयात्। यो दण्डः नौ आवयोः अशेषं सुराणां देवानां भवतां हेलनमपराधजनितपापमपि हरेत। किन्तु वो युष्माकं योऽनुतापः प्रवेशनिषेधजस्तापस्तस्य कलया लेशेन तज्जन्यदोषेण अधोऽधो मूढां योनिं व्रजतोर्नौ आवयोः भगवत्स्मृतिघ्नो मोहो मा भवेत्। यद्वा। वः युष्माकं यः कृपानिमित्तोऽनुतापः वृथाशप्तावितिपश्चात्तापस्तस्य कलया लेशेन अधोऽधो व्रजतोर्नौ आवयोर्यः मोहः स इह मूढयोर्नावपि भगवत्स्मृतिघ्नो मा भवेत् किन्तु मोहोऽपि स्मृतिमेव प्रवहतादिति प्रार्थना ।। ३६ ।। एवमिति। एवं पूर्वरीत्या स्वानां भृत्यानां सदतिक्रमं स्वभृत्यकर्तृकं सतां सनकादीनामपराधं तदैव विबुध्य आर्याणां हृद्यः मनोज्ञः सहश्रीः लक्ष्मीसहितोऽरविन्दनाभो भगवान् परमहंसा ये महामुनयः तेषाम् अन्वेषणीयौ ध्येयौ चरणौ चलयन् मुनिकोपशमनाय त्वराव्याजेन पद्भ्यामेवेत्यर्थः। तस्मिन् देशे ययौ आययौ। यद्वा। मच्चरणदर्शनप्रतिघातजं क्रोधं तौ दर्शयन् शामयिष्यामीत्याशयेन पद्भ्यामेवाययौ ।। ३७ ।। तमिति। ते मुनयः स्वपुंभिः स्वभृत्यैः प्रतिहृतं मार्गं एवानीय समर्पितमौपयिकं छत्रचामरव्यजनपादुकादिगमनसाधनजातं यस्य तं स्वसमाधेरपि मूर्तिमद् भाग्यम्। अधुना तु अक्ष्णोः विषयं प्रत्यक्षं हंसयोरिव श्रीः शोभा ययोस्तयोरुभयतश्चलतोर्व्यजनयोश्चामरयोर्यः शिवः सुखकरः शीतलमन्दसुगन्धो वायुस्तेन लोलन्तश्चलन्तः शुभ्रातपत्रशशिकेसराः शुभ्रं यदातपत्रं छत्रं तदेव शशिसादृश्याच्छशी तस्य केसराः मुक्तादामविलम्बास्तेभ्यो गलन्ति शीकराम्बूनि अम्बुकणा यस्मिंस्तमागतं भगवन्तमचक्षत अपश्यन्। अत्रातिशयोक्त्या

मुक्ताविलम्बानां केसरत्वेन छत्रस्याधोमुखकमलाकारत्वमारोपितं तेन छत्रस्य सौगन्ध्यमार्दवादानि व्यञ्जितानि। शीकराम्बूनां शशिसम्बन्धित्वेनामृतत्वम्॥ ३८॥

कृत्स्नेति। कृत्स्नस्य द्वारपालमुनिवृन्दस्य प्रसादेऽनुग्रहे सुमुखं तेषु अनुग्रहं कुर्वन्तमित्यर्थः। स्पृहणीयानां कान्तिसौकुमार्यादि-गुणानां धाम आश्रयं स्नेहपूर्वको योऽवलोको भगवत्कृतस्तस्य कलया प्रसरेण हृदि संस्पृशन्तं प्रविशन्तं श्यामे पृथौ विशाले च उरसि शोभितया श्रिया लक्ष्म्या स्वर्लोकस्य त्रैलोक्यविवक्षायां सत्यलोकपर्यन्तः स्वर्गस्तस्य चूडामणिवत् स्थितमात्मधिष्ण्यं स्वस्थानं वैकुण्ठं सुभगयन्तं शोभयन्तम् अचक्षत॥३९॥ पीतेति। पृथुर्विस्तृतो नितम्ब आश्चर्यत्वेन विचरतेऽस्येति पृथुनितम्बि तस्मिन् पीतांशुके पीताम्बरे विस्फुरन्त्या काञ्च्या मेखलया अलिभिर्भ्रमरैर्विरुतया नादितया वनमालया च उपलक्षितमित्यध्याहारः। सुभगयन्तमिति पूर्वेण सम्बन्धो वा। वल्गुषु सुन्दरेषु प्रकोष्ठेषु वलयानि यस्य तं विनतासुता गरुडस्तस्यांसे स्कन्धे विन्यस्तो निहितो वामहस्तो येन तमितरेण दक्षिणेन हस्तेन अब्जं सनालं कमलं धुनानं लीलया भ्रमयन्तम्। विन्यस्येति पाठे तु वल्गु इत्यादि हस्तविशेषणम्॥४०॥ विद्युदिति। स्वकान्त्या विद्युतः तडितः क्षिपती तिरस्कुर्वती ये मकराकृतिनी कुण्डले ताभ्यां यन्मण्डनमलङ्करणं तस्मिन्नर्हे गण्डस्थले यस्मिंस्तच्च तदुन्नसं च उदग्रनासिकं च मुखं यस्य तं मणिमत् मणियुक्तं किरीटं यस्य तं दोर्दण्डानां भुजदण्डानां यः षण्डः समूहः तस्य विवरे मध्ये स्थितेन हरता विहरता मनोहरेण मुनीनां चित्तं चोरयता वा परार्ध्येन उत्कृष्टेन मुक्तादिहारेण कन्धरगतेन कन्धरा-वलम्बिस्वर्णसूत्रद्वारा वक्षोदेशं गतेन कौस्तुभेन मणिना च शोभमानम्॥ ४१॥ अत्रेति। इन्दिरायाः लक्ष्म्याः उत्स्मितं सौन्दर्यगर्वः। अत्र भगवति उपसृष्टमस्तंगतमिति स्वानां भक्तानां धिया विरचितं भक्तैरित्येवं मनसि तर्कितमित्यर्थः। यद्वा अत्र भगवति सर्वसौन्दर्यादिगुणकदम्बमुपसृष्टमिति हेतोः इन्दिरायाः सर्वोत्तमकान्तलाभहृष्टाया उत्कृष्टं स्मितं यत्र तत् स्वानां भक्तानां धिया विरचितमिति स्वभक्तैर्ध्यानार्थं यथाभूतं तर्कितं तथारूपेणैवाविर्भूतम्। मह्यमिति चतुर्थी षष्ठ्यर्थे। मम भवस्य रुद्रस्य भवतां चकारादन्येषां च सर्वेषामुपासनार्थं बहुसौष्ठवेन सौन्दर्येण आढ्यं युक्तमङ्गं मूर्तिं भजन्तं प्रकटयन्तम्। यद्वा। भवस्य भवतां च मह्यं पूज्यमङ्गमिति महधातोरदन्तात्। निरीक्ष्य च न विशेषतस्तृप्ता दृशो येषां ते मुदा हर्षेण पूर्णाः कैः शिरोभिर्नेमुर्नमश्चक्रुः॥ ४२॥ तस्येति। तस्यारविन्दनयनस्य भगवतः पदारविन्दयोर्ये किञ्जल्काः केसरतुल्या अङ्गुलयस्तैर्मिश्रः सम्बद्धो यस्तुलसीमकरन्दस्तस्य वायुः स्वविवरेण नासारन्ध्रेण अन्तर्गतः प्रविष्टः सन् अक्षरं ब्रह्म तज्जुषां ब्रह्मानन्दसेविनामपि तेषां मुनीनां चित्ततन्वोः संक्षोभं चित्ते आनन्दपारवश्यं तनौ रोमाञ्चं चकार॥ ४३॥ ते वै इति। ते मुनयः सुन्दरतरे अरुणे अधरोष्ठे कुन्दपुष्पवद्धासो यस्मिंस्त-मित्यर्थः। हासे प्रकाशमानाः कुन्दसदृशाः दन्ता एवोपचाराद्धासशब्देनोच्यन्ते। अमुष्य भगवतो वदनमेव सन्तापहारकत्वादसित-पद्मस्य कोशस्तमुद्वीक्ष्य सम्यग् वीक्ष्य तेनैव लब्धाशिषः प्राप्तमनोरथाः सन्तः पुनः नखा एवारुणमणयश्चिन्तामणिवत्प्रकाशमाना अभीष्टपूरकाश्च तेषां श्रयणमाश्रयणं तदीयमङ्घ्रिद्वन्द्वं चरणद्वयम् अव अधःप्रदेशे एत्य किञ्चिदीक्षित्वा। ओमाङोश्च इति पररूपम्। निदध्युः पुनः पुनर्मुखं ददृशुः। "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः। स्वामिपादास्तु युगपत्सर्वाङ्ग-लावण्यग्रहणाशक्तेः पश्चान्निदध्युर्ध्यातवन्त इत्याहुः॥ ४४॥

पुंसामिति। योगमार्गैः गतिं मोक्षादिकं मृगयतामभिकाङ्क्षताम्। शतार्षः। निवृत्तिप्रेषणाण्णिच् वा। पुंसां ध्यानस्या-स्पदं विषयभूतं नयनयोरभिरामं बहुमतमत्यादृतं पौंस्नं पौरुषं वपुः दर्शयानं दर्शयमानम्। मुगभाव आर्षः। अनन्यसिद्धैरन्येष्वसिद्धै-रसाधारणैः औत्पत्तिकैः स्वाभाविकैः अष्टभोगैः अणिमाद्यष्टविभूतिभिर्युतं भगवन्तं ते मुनयः समगृणन् सम्यगस्तुवन्॥ ४५॥ य इति। हे अनन्त! यस्त्वं दुरात्मनां हृदि गतोऽप्यन्तर्हितो न स्फुरसि इत्यर्थः। स नोऽस्माकमन्तर्हितो न भवसि परं नयनमूलं नयनविषयतां त्वमद्यैव राद्धः प्राप्तोऽसि। यर्हि यदैव भवदुद्भवेन भवत उत्पन्नेन नोऽस्माकं पित्रा ब्रह्मणाऽनुवर्णितरहाः उपदिष्ट-रहस्यः भगवान् अभूत्तर्ह्येवास्मत्कर्णविवरेणास्मद्गुहामन्तःकरणं गतः प्रविष्टः। यद्वा यो दुरात्मनां हृदि गतोऽपि अन्तर्हितः स त्वमस्माकं नयनमूलं केवलमद्यैव न राद्धः। किन्तु यर्ह्येव पित्रानुवर्णितरहाः कर्णविवरेण नः गुहां गतोऽभूः तदैव नयनमूलं राद्धः॥ ४६॥ तमिति। हे भगवन्! सत्त्वेन शुद्धसत्त्वमूर्त्या एषां स्वभक्तानां सम्प्रति सम्यक् प्रतिक्षणं रतिं प्रीतिं रचयन्तं तं शास्त्र-प्रसिद्धं त्वामेव परमुत्कृष्टमात्मत्वं विदाम विद्मः प्रत्यभिजानीमः। आर्षम्। आत्मतत्त्वमेव परं तं त्वां विदाम इति वा। यत्तत्त्वम् उद्ग्रन्थयो निरहंमानाः अत एव विरागाः मुनयः तेऽनुतापः कृपा तेन विदितैर्ज्ञातैर्दृढैर्भक्तियोगैः हृद्येव विदुः॥ ४७॥ नेति। अङ्ग हे हरे! ये त्वदङ्घ्रिरेव शरणं येषां ते कीर्तनमर्हति कीर्तन्यं तदर्हतीति यत्। तव तत्तीर्थं पवित्रं यशो यस्य तस्य भगवतः कथायाः रसज्ञाः कुशलाश्च ते जनाः ते तव प्रसादभूतमात्यन्तिकं मोक्षमपि न गणयन्ति नाद्रियन्ते। ते तव भ्रुवः उन्नयैरुज्जृम्भणैरर्पितं भयं यस्मिन् तादृशमन्यत् इन्द्रादिपदं न गणयन्तीति किमु वक्तव्यम्॥ ४८॥ काममिति। हे भगवन्! इतः पूर्वमस्माकं वृजिनं नाभ-वत्। इदानीं तु सर्वाण्यपि जातानि अतस्त्वद्भक्तौ शप्तौ अतस्तैः स्ववृजिनैः स्वकृतैः पापैर्निरयेषु नीचयोनिषु नोऽस्माकं कामं यथेष्टं भवो जन्म स्तात्। यदि तु नश्चेतः अलिवत्ते पदयोः रमेत। अलिर्यथा कण्टकैर्विध्यमानोऽपि पुष्पेषु रमते तद्वद्विघ्नानविगणय्य

रमेत। अङ्घ्रिभ्यां शोभा यासां ता नः वाचो यदि तुलसिवत् शोभेरन्। यथा तुलसी गुणनैरपेक्ष्येण हरिसम्बन्धितयैव शोभते तथा यदि नो वाचः शोभेरन् यदि च कर्णरन्ध्रः ते गुणगणैः पूर्येत। यद्यपि रन्ध्रशब्दाद्याचकरीत्याऽल्पमेव याचनं प्रतीयते तथापि वस्तुतः रन्ध्रस्य शब्दैः पूरणासंभवान्नित्यं श्रवणं याचितम्॥ ४९॥ प्रादुरिति। हे ईश! हे पुरुहूत! हे विपुलकीर्ते! यदिदमलौकिकं सर्वसौष्ठवाढ्यं रूपं विग्रहं प्रादुश्चकथ प्रदर्शितवानसि। तेन तद्दर्शनेन नोऽस्माकं दृशो नेत्राणि अलम् अतिशयेन निर्वृतिं सुखमवापुः प्रापुः। अनात्मनाम् अवशीभूतमनसां दुरुदयः दुरवगमोऽपि यो भवान् इत् इत्थं प्रत्यक्षतया प्रतीतः अस्माभिर्दृष्टस्तस्मै भगवते इदं केवलं नमो विधेम नमनं कुर्मः। इदन्नम इति मूर्द्धसु धृतानञ्जलीन् दर्शयन्ति। यद्वा। इत् इति नम इत्यस्य विशेषणम् भगवच्चरणं प्रतिगच्छदिति। विधेमेत्यार्षम्॥ ५०॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायस्तृतीये टीकां पञ्चदशे व्यधात्॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चदशोऽध्यायः॥ १५॥

—:❀:—

## अथ षोडशोऽध्यायः

ब्रह्मोवाच

**इति तद्गृणतां तेषां मुनीनां योगधर्मिणाम्। प्रतिनन्द्य जगादेदं विकुण्ठनिलयो विभुः॥ १॥**

षोडशेऽसान्त्वयद्विष्णुर्मुनीन् द्वारपयोस्तदा। शापोऽप्यनुग्रहस्तत्र श्लोकास्त्रिंशच्च सप्त च॥

उवाचषट्कं सपादा अष्टवेदा अनुष्टुभः॥ १६॥

इतीति। विकुण्ठः निलयो यस्य स विभुर्हरिः इत्युक्तप्रकारेण गृणतां स्तुवतां तेषां सनकादीनां तद् भाषितं प्रतिनन्द्य इदं जगाद शापमङ्गीकृत्य तदनुग्रहं प्रार्थितवान्॥ १॥ एताविति। जयो विजयश्चेत्येतौ यौ मह्यं मम पार्षदौ वो युष्माकं बहु यथा स्यात्तथा यदतिक्रममपराधमक्रान्तां कृतवन्तौ मां कदर्थीकृत्य अवज्ञाय एव तत्कृतवन्तौ, न तत्र ममापि संमतिरस्ति। अकार्ष्टामिति वाच्ये अक्रान्तामित्यार्षम्॥ २॥ यस्त्विति। हे मुनयः! मामनुव्रतैः मदाशयानुसारिभिः भवद्भिः देवानां युष्माकं हेलनादवज्ञानात् हेतोः यस्त्वेतयोर्दण्डो धृतः स एव दण्डोऽस्माभिरनुमतोऽङ्गीकृतः॥ ३॥ तदिति। यस्मात् ब्रह्म ब्राह्मणा मे मम परं दैवतं तस्माद्वो युष्मान् अद्य प्रसादयामि। स्वपुंभिर्मदीयैर्भृत्यैरसत्कृता अवज्ञाता इति यत्तदवज्ञानमात्मकृतमेव मन्ये॥ ४॥ यन्नामानीति। भृत्ये कृतागसि कृतापराधे सति लोको जनो यस्य स्वामिनो नामानि गृह्णाति अनेनैव स्वामिना भृत्यद्वारैवमसाधु कर्म कृतमतोऽयं दुरात्मेति निन्दति सोऽसाधुवादो निन्दावचनम्। आमयः कुष्ठरोगः त्वचं त्वचः सौन्दर्यमिव तस्य स्वामिनः कीर्तिं हन्ति॥ ५॥ यस्येति। यस्य अमृतवदाह्लादके अमले यशसि यः श्रवणेन अवगाहः प्रवेशः सः आश्वपचात् श्वपचं चाण्डालमभिव्याप्य सर्वमपि जगत्सद्य एव पुनाति। सोऽहं विकुण्ठः अप्रतिहतः भवद्भ्यो ब्राह्मणेभ्य एव उपलब्धा प्राप्ता सुशोभना तीर्थभूता कीर्त्तिर्येन सः। वः युष्माकं प्रतिकूला वृत्तिर्यस्य तथाभूतं चेत् स्वाङ्गभूतं बाहुमपि छिन्द्यां बाहुस्थानीयं लोकेश्वरमपि हन्यां वा। भृत्यादीनां पादस्थानीयानां तु का वार्ता॥ ६॥

यदिति। यस्याः लक्ष्म्याः प्रेक्षालवार्थमवलोकलेशार्थम् इतरे ब्रह्मादयो नियमान् वहन्ति तपोव्रतादीनि कुर्वन्ति। सा चञ्चलत्वेन प्रसिद्धाऽपि श्रीः लक्ष्मीः येषां ब्राह्मणानां सेवया चरणपद्मात् लग्नः पवित्रो रेणुर्येभिस्तम् अत एव सद्यः क्षतो निरस्तोऽखिलो मलो दोषो यस्य तं यद्वा चरणपद्मयोः स्थितः पवित्रो रेणुर्यस्य अतः सद्यः क्षतोऽखिललोकस्य मलो येन तं

ब्राह्मणसेवयैव मच्चरणरेणवो जगत्पवित्रयन्ति इत्यादिरर्थः। प्रतिलब्धं प्राप्तं शीलं सुस्वभावो येन तं ततः श्रिया विरक्तमपि मां श्रीः न विजहाति। तेषां वः प्रतिकूलवृत्तिं स्वबाहुमपि छिन्द्यामिति पूर्वेणान्वयः॥ ७॥ नाहमिति। यत् यथा श्च्योतता क्षरता घृतेन प्लुतं विलोडितं पायसादि अनुग्रासं प्रतिग्रासं रसास्वादपूर्वकं चरतो भुञ्जानस्य मयि अवहितैः समर्पितैर्निजकर्मणां पाकैः फलैस्तुष्टस्य निष्कामस्य ज्ञानिनो ब्राह्मणस्य मुखतोऽश्नामि तथा विताने यज्ञे श्च्योतद्घृतप्लुतं यजमानस्य हविश्चरुपुरोडाशादिकं हुतभुगग्निस्तेन मुखेन अदन् अश्नन् अपि तथा नाश्नामि। तथा ब्राह्मण एव मम श्रेष्ठं मुखमत तदपमानेन एतैर्मम मुखतिरस्कार एव कृतः॥ ८॥ येषामिति। अखण्डा अनवच्छिन्ना विकुण्ठा अप्रतिहता च योगमाया विलासभूता विभूतिर्यस्य सः तथा यस्य चाङ्घ्रिणाम्भः पादोदकं गङ्गा चन्द्रो ललामं चिह्नं यस्य तेन श्रीमहादेवेन सहितान् सर्वान् लोकान् सद्यः पुनाति। एवंभूतः परमेश्वरः परमपावनोऽपि सन्नहं येषाममलं पवित्रमङ्घ्रिरजः किरीटैर्बिभर्मि तान् विप्रान् अपकुर्वतोऽपि कोऽन्यो न विषहेत न क्षाम्येत्॥ ९॥ य इति। ये अघेन पापेन क्षता हशो येषाम् अहेरिव मन्युर्येषां ते द्विजवरान् मदीयाः दुहतीः दोग्ध्रीः गा इत्यर्थः। दुहितृरिति पाठेऽपि मदीया दुहितृः सूर्यरूपस्य मम सुता गा इत्यर्थः। सूर्यसुताश्च गाव इति श्रुतेः। अलब्धशरणानि रक्षकहीनानि भूतानि चेति त्रीणि मम तनूः शरीराणि मत्तो भेदबुद्ध्या द्रवयन्ति पश्यन्ति तान् मम मदीयोऽधिकृतो दण्डनेता यो यमस्तस्य गृध्राकाराः दूताः रुषा क्रोधेन कुषन्ति चञ्चुभिश्छिन्दन्ति॥ १०॥ य इति। ये तु क्षिपतस्तिरस्कुर्वतोऽपि ब्राह्मणान् मयि धिया मदात्मकत्वबुद्ध्या अर्चयन्तः तुष्यद्धृदः सन्तुष्टचित्ताः स्मितं हासस्तदेव सुधा तयोक्षितं सिक्तं पद्ममिव वक्त्रं येषां ते अनुरागेण कलया मधुरया वाण्या अहमिव अहं यथा भृगुं युष्मान् वा सन्तोषयामि तथा आत्मवत् कुपितं पुत्रं स्निग्धः पितेव कुपितं पितरं सत्पुत्र इव वा गृणन्तः स्तुवन्तः संबोधयन्ति सन्तोषयन्ति तैरहमुपाहृतो वशीकृतो भवामि॥ ११॥ तन्मे इति। तत्तस्मान्मम पूर्वोक्ताभिप्रायबलात् स्वभर्तुः स्वयोः स्वामिनो मम अवसायं निश्चयमलक्षमाणावजानन्तावेतौ युष्मासु यः कृतो व्यतिक्रमोऽपराधस्तस्य गतिं फलं प्रतिपद्य प्राप्य सद्यः आशु भूयः पुनः ममान्तिकं समीपमितां प्राप्नुताम्। तत् स एव युष्मत्कृतो मे मय्यनुग्रहः यत् भृतयोः भृत्ययोर्विवासः दूरनिवासः वियोगः अचिरतः शीघ्रं कल्पतां समाप्यतामिति सोऽयमनुग्रहः। यद्वा। जयविजययोरुपरि ममानुग्रहः॥ १२॥ अथेति। अथ उशतीं कमनीयां सुरसां च देवीं मुनीनां बुद्ध्या विविधवितर्कादिमय्या सह क्रीडन्तीं पूज्यां च ऋषिकुलाय हितां ऋषीणां कुल्यां जलाशयरूपां च ऋषयो मन्त्रास्तत्प्रवाहरूपां वा तस्य हरेः सरस्वतीं वाणीं नदीं च आस्वाद्य तन्माधुर्यमनुभूय मन्युना सर्पतुल्येन दष्टानामपि क्रोधविषव्याप्तानां हि मनोरसानुभवाभावात् प्रियभाषणमपि न सहते। तेषां तु आत्मापि बुद्धिरपि मनोऽपि नातृप्यत अलमिति नामन्यत प्रत्युत तत्पानेच्छाऽवर्द्धत॥ १३॥

सतीमिति। व्यादाय कर्णौ प्रसार्य सतीं श्रेष्ठां लघ्वीमल्पाक्षरां गुरुभिरर्थैर्गह्वरां दुष्प्रवेशाम् अभिप्रायेण अगाधाम् अर्थतो गम्भीरां च वाणीं शृण्वन्तो मुनयः विगाह्य विचार्यापि तस्य चिकीर्षितं किमस्मानभिनन्दति निन्दति वा अस्मत्कृतं दण्डं संकोचयति व्यवस्थापयति वा निरस्यति वा अस्मान् वाऽपराधेन योजयति भूयो प्रसादाधिक्येनेति वा न विदुः। तत्राभिनन्दनपक्षः शक्तिवृत्त्यात्मको व्याख्यात एव। निन्दनपक्ष आर्थव्यञ्जनागम्यो वक्तृबोद्धव्यवैशिष्ट्यलेशोद्भावितो भगवदनभिमतोऽपि विद्वद्भिर्मुनिभिः स्वतः सम्भवि संज्ञकभेदेषु आत्मनैव सम्भावितः, "अस्मासु वा य उचितो ध्रियतां स दण्डः" इत्यग्रिमोक्तेः। अतः संक्षेपेण सोऽपि व्याख्यायते। तथाहि एतौ तौ पार्षदौ मह्यमिति सर्वज्ञानपि मुनीन् यत्परिचाययति स तेन मत्पार्षदावप्यभि-शपथ एतावदपि बलं धद्ध्व इति व्यञ्जितं कदर्थीकृत्य मां यद्वो बह्वक्रान्तामतिक्रममित्यत्र सनकाद्यतिक्रमात् पूर्वं भगवत्कदर्थना-भावादियं तेषु भगवतो वक्रोक्तिः कोपव्यञ्जिका। स एवानुमतोऽस्माभिरिति अस्मदननुमतिर्यद्यभविष्यत्तदा युष्मत्कृतदण्डोऽपि नासेत्स्यत्। ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छेमं तं तु मे इत्यग्रिमोक्तेः। तद्धीत्यात्मकृतं मन्य इति जयविजययोरात्मत्वेन स्वीकारात् प्रेमाधिक्यम्। सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिरिति मुनिष्वादरमात्रं छिन्द्यां स्वबाहुमपीति पुनरपि तयोः प्रेमास्पदता। यत्सेवयेति मुनिषु पुनरप्यादरः सोऽपि बाह्य एव। ब्राह्मणसेवयैव किं तस्य चरणरेणुः पवित्रोऽभूत् तयैव किं तस्याखिला मलाः क्षताः तयैव किं लक्ष्मीस्तं न त्यजतीति हेत्वसत्त्वादिति नाहं तथाऽद्मीत्यादौ यूयं ब्राह्मणा भोजनप्रियाः केवलं भोजनीया एवेति ब्राह्मणमुखेनाहं भुञ्जे इति ख्यातिर्लोकेषु विस्तारिता। घासं चरत इति श्लेषेण ब्राह्मणः खलु गौरिवादरणीयश्चारणीयः पशुबुद्धित्वादेव मद्दत्तेन गौरवेण हृष्यति न तु युष्माभिर्मत्सुखतात्पर्यका काचिन्मदीयपरिचर्या संभवेदिति येषां बिभर्मीति किरीटेषु ब्राह्मणपादरजोधारणादेव मम योगमायैश्वर्यवत्त्वं तथा तस्मादेव हेतोर्मच्चरणोदकं सर्वजगत्पावनी गङ्गेति गौरवमुपहास एव फलतं दुहतीर्मदीया इति गोब्राह्मणयोर्भेदो नास्ति। द्वयोरेव सत्त्वतुल्यत्वादिति पुनरपि हास एव। ये ब्राह्मणानिति ब्राह्मणानां खलु क्रोध औत्पत्तिक एव धर्मस्तं चाहं मद्भक्ताश्च सहामह एवेति सहिष्णुतासुधा मद्भक्तेभ्य एव मया दत्तेति तयैवाहं वशीकृतः स्यामिति। जयविजययोस्तु सहिष्णुतायाः सम्प्रत्यनुदयान्मम तत्रौदासीन्यं जातमतः शापोऽपि वः प्राभवदन्यथा तु नैव प्राभविष्यदत एवाम्बरीषे ममौदासीन्याभावात् दुर्वाससः कोपोत्क्षिप्तजटाया अपि वैफल्यं प्रत्युत मत्स्वरूपचक्रकृतः संताप॥ १४॥ ते इति। योगमायया आरब्धः आविष्कृतः पारमेष्ठ्यस्य परमैश्वर्यस्य महोदयः परमोत्कर्षो येन तं तद्दर्शनेन प्रहृष्टा अत एव

क्षुभिता रोमाञ्चिता त्वक् येषां ते । कुपितत्वच इति पाठेऽपि सञ्जातरोमकूपोक्त्या रोमाञ्चित्वमेवोक्तं ते विप्राः अधिराजत्वमाविष्कृत्य राजशिक्षार्थं ब्राह्मणान् मानयन्तीति ज्ञात्वा हृष्टाः प्राञ्जलयः सन्तः प्रोचुः ।। १५ ।। अभिनन्दनपक्षं ज्ञात्वापि श्रीमुखादेव श्रोतुमाहुः—न वयमिति । हे भगवन् ! हे देव ! स्वयमध्यक्षः सन् तद्धीत्यात्मकृतं मन्य इत्युक्त्वा मयापराधः कृत इति तथा तदनुग्रहो मम इत्यादिना ममानुग्रहः कृतः स्यादिति यत्प्रभाषसे तेन यत्तव चिकीर्षितं तद्वयं न विद्मः ।। १६ ।। ब्रह्मण्यस्येति । ब्रह्मण्यस्य ब्राह्मणानां हितस्य ते ब्राह्मणाः किल परं दैवं तत्तल्लोकशिक्षार्थमेवेति शेषः । वस्तुतस्तु हे प्रभो ! देवदेवानां विप्राणां भगवानेव आत्मा दैवतमाराध्यश्च ।। १७ ।। त्वत्त इति । सनातनः धर्मस्त्वत्त एव प्रवर्त्तते तवैव तनुभिरवतारैः रक्ष्यते च धर्मस्य परमः फलभूतः गुह्यः सर्ववेदरहस्यं निर्विकल्पः निर्विशेषश्च भवानेन मतः ।। १८ ।।

तरन्तीति । निवृत्ताः निवृत्तिधर्मनिष्ठाः योगिनो यस्य तवानुग्रहात् अञ्जसा अनायासेनैव मृत्युं जन्ममरणादिदुःखं तरन्ति स भवान् परैरनुगृह्येतेति यत्तत् किंस्वित् न किञ्चिदित्यर्थः ।। १६ ।। यमिति द्वयम् । अर्थं ऐश्वर्यादि तदर्थिभिर्देवाद्यैः स्वशिरसा धृतः पादरेणुर्यस्याः सा धन्यैः पुण्यवद्भिरर्पितसङ्घ्रौ यत्तुलस्या नवदाम माला तद्धाम स्थानं यस्य तस्य मधुव्रतपतेः भ्रमरमुख्यस्य लोकं स्थानं त्वच्चरणं कामयमानेव इवशब्द एवकारार्थः । ईदृशी विभूतिर्लक्ष्मीः अनुवेलमवसरेऽवसर उपयाति सेवते । अयं हि तस्य आशयः—अयं हि सारग्राही मधुव्रतोऽतिचञ्चलस्वभावोऽप्यङ्घ्रिगतायां तुलस्यां सपरिवारो निश्चलः सन् रमते । अतोऽङ्घ्रिलावण्यमत्यधिकं स्यात् । ततोऽहं वक्षसि स्थितापि बहुसेवकसंघर्षमङ्गीकृत्यापि तुलस्या सह सापत्न्येऽपि चरणावेव सेविष्य इति परमभागवतेषु प्रसङ्गः परमासक्तिर्यस्य ईदृशो यस्त्वं विविक्तचरितैर्विशुद्धैः परिचरणैरनुवर्तमानां सेवमानामपि तां लक्ष्मीं नात्याद्रियम् नातीवादृतवान् । तङ्भाव आर्षः । स त्वं किं द्विजानाम् अनुपथं पथि लग्नं यत्पुण्यरजस्तेन पुनीतः पूतः सन् श्रीवत्सलक्ष्मलक्ष्मीनिवासत्वमित्याशयः । अगाः प्राप्तवानसि । तत एव हेतोश्च किं त्वं भगभाजनः ऐश्वर्यपात्रमसि । नैवेत्यर्थः । पुनीत इत्यत्र क्तप्रत्यये श्ना आर्षः । "तथा पुनीता तनुभिः पदैस्त्व" इत्यष्टमस्कन्धश्लोकवत् । यद्वा । यस्त्वां नाद्रियत् तं त्वां कि द्विजानुपथपुण्यरजः श्रीवत्सलक्ष्म च पुनीतः पवित्रीकुरुतः । स त्वं किमर्थं ते उभे अगाः स्वीकृतवानसि । ताभ्यामाधिक्याभावादित्यर्थः । अतो यत्सेवया चरणपद्मेत्यादिवचनं लोकसंग्रहार्थमेव ।। २०–२१ ।। धर्मस्येति । त्रिष्वेव कृतादियुगेषु दृश्यते इति हे त्रियुग ! नोऽस्माकं भक्तानां वरदया अभीष्टप्रदया सत्त्वेन सत्त्वमय्या भगवतस्ते तव तनुवा मूर्त्या तत्तदवतारेण "तन्वादीनां छन्दसि बहुलम्" इत्युवङ् । तदभिघाति तेषां धर्मपादानामभिघातकं यद्रजस्तमश्च तन्निरस्य दूरीकृत्य स्वैः असाधारणैस्त्रिभिस्तपोदानदयात्मकैर्धर्मस्य तव पद्भिर्द्विजानां देवतानां च प्रयोजनाय इदं चराचरात्मकं विश्वं नूनं भृतं पालितम् । निरस्येति लोडन्तं वा । दूरीकुरु इत्यर्थः ।।२२।। न त्वमिति । आत्मनः त्वयैव गोपो रक्षा यस्य तत् द्विजोत्तमानां कुलं स सूनृतेन प्रियवाक्यसहितेन सुसम्यगर्हणेन पूजनेन वृषः श्रेष्ठस्त्वं यदि गोप्ता रक्षणशीलो नाभविष्यः । तृन्नन्तत्वान्न कर्मणि षष्ठी । क्रियातिपत्तेरेवोचितत्वाल्लुङन्ततया व्याख्यातुं न युज्यते । तर्ह्येव तदैव हे देव ! तव त्वया प्रवर्तितः शिवः पन्थाः धर्ममार्गः नङ्क्ष्यति अनङ्क्ष्यत् । हि यस्मात् ऋषभस्य श्रेष्ठस्य तव यदाचरितं तदेव लोकः प्रमाणत्वेनाग्रहीष्यत् । अतो यत्सेवयेति वचो लोकशिक्षार्थमेव, "यद्यदाचरति श्रेष्ठः" इत्यादिगीतोक्तेः ।। २३ ।।

तत्त इति । सत्त्वस्य निधेः जनाय क्षेमं विधित्सोः कर्तुमिच्छोः जनायेति क्रियया संप्रदाने क्षेमशब्दयोगे षष्ठ्यर्थे वा चतुर्थी । निजशक्तिभिः उद्धृताः निर्मूलिताः अरयो धर्मविरोधिनो येन तादृशस्य ते तव तत् धर्ममार्गविनाशनम् अनभीष्टमिव अनभिप्रेतमेव इव एवार्थे एतावता तु त्र्यधिपतेः त्रिगुणनियन्तुः विश्वभर्तुः अपि धर्मत्राणाय अवनतस्य नमनं कृतवतस्तव तेजः प्रभावो न क्षतं विहतं न भवति । यतः स नमनादिश्च ते तव विनोदो लीलामात्रम् ।। २४ ।। यं वेति । हे अधीश ! अनयोः स्वभृत्ययोः यं दममस्माभिर्विहितमन्यं वा दण्डं वृत्तिं तु वा विशेषतोऽधिकां जीविकां वा भवान् विधत्ते । यद्वा । द्वाःस्थयोरपूर्वजनप्रवेशनिवारणस्योचितत्वादनागसौ निरपराधावेतौ ये वयं किल्बिषेण दुःखहेतुशापेनायुङ्क्ष्महि याजितवन्तस्तेष्वस्मासु य उचितः स्वापराधानुरूपो दण्डः स ध्रियतां विधीयताम् । तदेतद् भवत्कृतं सर्वं निर्व्यलीकं श्रद्धापूर्वकमनुमन्महि वयमनुमन्यामहे ।। २५ ।। एताविति । हे विप्राः ! एतौ मत्पार्षदौ सुरेतरगतिमासुरयोनिं प्रतिपद्य प्राप्य सद्यः जन्मप्रभृति मयि यः संरम्भः क्रोधावेशस्तेन सम्भृतः संवृद्धो यः समाधिः चित्तैकाग्रता तेनानुबद्धो दृढीकृतो योगो ययोस्तादृशौ सन्तौ आशु शीघ्रमेव भूयः पुनः मत्सकाशं मत्समीपमुपयास्यतः आगमिष्यतः । वो युष्माकं यः शापः स मयैव निर्मितः युष्मन्मुखेन मयैव निर्मित इति तत् अवैत जानीत ।। २६ ।। अथेति द्वयम् । एवं भगवता प्रोक्तास्ते मुनयः सनकादयो जन्मत्रयेण शापमुक्तिरूपमनुग्रहं कृत्वा अथ नयनयोर्य आनन्दस्तस्य भाजनं पात्रं स्वयंप्रभं चैतं विकुण्ठं भगवन्तं दृष्ट्वा तादृशमेव स्वयंप्रभं तदधिष्ठानं स्थानं वैकुण्ठं लोकं च दृष्ट्वा प्रकाशान्तरानपेक्षत्वात् सत्त्वपरिणामत्वाच्चेति । अथ भगवन्तं परिक्रम्य प्रणिपत्य अनुमान्य अनुज्ञाप्य च वैष्णवीं श्रियं सम्पदं शंसन्तो मुदिता हृष्टाः प्रतिजग्मुः ।। २७–२८ ।। भगवानिति । एवं मुनिगमनानन्तरं भगवान् अनुगौ भृत्यौ जयविजयौ प्रत्याह स्म—यातं मनुष्यलोकं गच्छतं मा भैष्टं भयं मा कुरुतम् । तत्रापि शंसुखमस्तु । ब्रह्मतेजः ब्राह्मणशापं हन्तुं निरसितुं समर्थोऽपि नेच्छे

तन्निरासेच्छां न करोमि। तत्रार्षः। हि यतः तन्मे मम मतं सम्मतं हीत्यत्र तु इति वा पाठः। अत्र स्वामिपादा आहुः—यद्यपि सनकादीनां क्रोधो न संभवति ब्रह्मदर्शित्वात्। न च जयविजययोर्ब्राह्मणप्रातिकूल्यं भगवदनुसारित्वात्। न च भगवतः स्वभक्तोपेक्षा भक्तवत्सलत्वात्। न च वैकुण्ठगतानां पुनर्जन्म "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति वाक्यविरोधात्। तथापि भगवतः सिसृक्षादिवत् कदाचिद्युयुत्सा समजनि। तदाऽन्येषामल्पबलत्वात् स्वपार्षदानां तुल्यबलत्वेऽपि प्रतिपक्षत्वाभावेन युद्धानुपपत्तेरित्येतावेव ब्राह्मणनिवारणे प्रवर्त्य तेषु च क्रोधमुद्दीप्य तच्छापव्याजेन प्रतिपक्षौ विधाय युद्धकौतुकं सम्पादनीयमिति भगवतैव व्यवसितमतः सर्वं संगच्छते। अत्र शिवपुराणवचोऽपि केऽप्युदाजह्रुः—"लक्ष्म्याः पत्युः समुत्पन्ना योद्धुमिच्छा मुनीश्वराः। एकस्मिन् दिवसे विष्णुर्विचारतत्परोऽभवत्॥ केन युद्धं प्रकर्तव्यं मया चैवं विचार्य च। जयश्च विजयैव कुमारैः शापितौ तदा॥" इति। अत एवात्राप्युक्तं शापो मयैव निमित इति हन्तुं नेच्छे मतं तु मे इति च। परे तु जयविजयोरेव प्रेमविजृम्भिता काचिद्युद्धेच्छा ततश्च भक्तमनोरथपूरकस्य भगवतोऽपि कापीच्छाऽजनि इत्याद्याचक्षते। यत्तु "एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा। पुराऽपवादिता द्वारि विशन्ती मय्युपारते॥" इति पद्यमस्मात् पद्यादग्रे दृश्यते तदसाम्प्रदायिकम्॥ २९॥

मयीति। मयि यः संरम्भः क्रोधस्तस्य योगः अनवरतसंबन्धस्तेन ब्रह्महेलनं ब्राह्मणतिरस्कारजं पापं निस्तीर्य निरवशेषमपोह्य अल्पीयसैव कालेन पुनर्मे निकाशं समीपं प्रत्येष्यतं प्रत्यागमिष्यथः। आर्षमेतत्। प्रत्याङ्पूर्वस्य इष्यतेर्लोटि वा रूपम्। अत्र ब्रह्मशापरक्षार्थं भगवानेकव्यक्त्या जयविजयौ भूमिं प्रास्थापयत्। व्यक्त्यन्तरेण चापुनरावृत्तिनियमरक्षार्थं वैकुण्ठ एवास्थापयत्। यथा गरुडो वज्रस्यामोघत्वरक्षार्थं पक्षमेकं तत्याजेति। अत एव वामनचरिते "तानभिद्रवतो दृष्ट्वा" इत्यादिप्रकरणे जयविजययोरुल्लेखः सङ्गच्छते॥ ३०॥ द्वाःस्थाविति। भगवानेवं द्वाःस्थावादिश्य आज्ञाप्य विमानश्रेणय एव भूषणं यस्य तत् सर्वातिशयया सर्वत उत्कृष्टया लक्ष्म्या सम्पदा जुष्टं पूर्णं स्वं धिष्ण्यं स्वकीयं स्थानमाविशत्॥ ३१॥ ताविति। तौ तु गीर्वाणऋषभौ देवश्रेष्ठौ पार्षदौ दुस्तराद् ब्रह्मशापाद्धरिलोकतः पतन्तौ हतश्रियौ नष्टतेजसौ अत एव विगतस्मयौ विगतगर्वौ चाभूताम्॥ ३२॥ तदेति। हे पुत्रकाः! देवाः तदैव विकुण्ठस्य भगवतो धिषणात् स्थानात्तयोर्निपतमानयोः सतोः। आर्षः शानच् चानश् वा। विमानाग्र्येषु वसतां महान् उच्चैः हाहाकार आसीत्॥ ३३॥ तावेवेति। तावेव हरेः पार्षदप्रवरावधुना दितेर्जठरे निर्विष्टमुल्बणं सन्ध्याकाले धृतत्वाद् भयङ्करं काश्यपं तेजः वीर्यं प्राप्तौ स्वदेहत्वेनाङ्गीकृतवन्तौ॥ ३४॥ तयोरिति। तयोर्यमयोः सहैव गर्भं प्रविश्य सहैवोत्पत्स्यमानयोः श्लेषेणान्तकतुल्ययोश्च असुरयोस्तेजसा अद्य वः युष्माकं तेज आक्षिप्तमभिभूतम्। एतर्हि इदानीं भगवानेव तत् लोकोपद्रवणं विधित्सति विधातुमिच्छति। अतः अधुनैव तत्प्रशमो न शक्यः॥ ३५॥ विश्वस्येति। यो भगवान् विश्वस्य स्थितिलयोद्भवहेतुः आद्यः योगेश्वरैरप्यस्मदादिभिर्दुरत्ययाऽनुल्लङ्घ्या योगमाया यस्य सः स एव त्र्यधीशः त्रिलोकेशः भगवान् नोऽस्माकं क्षेमं विधास्यति। तत्रैवं सति इहास्मिन् सङ्कटे अस्मदीयेन विमृशेन विचारेण कियानर्थः सिद्ध्यति॥ ३६॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां षोडशोऽध्यायः॥ १६॥

—:*:—

## अथ सप्तदशोऽध्यायः

### मैत्रेय उवाच

निशम्यात्मभुवा गीतं कारणं शङ्कयोज्झिताः । ततः सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः ॥ १ ॥

जन्म सप्तदशे त्वादिदैत्ययोर्लोकभीतिदम् । हिरण्याक्षप्रभावश्च तत्र श्लोकाः कृवल्लयः ( ३१ ) ॥
अनुष्टुभः ( ३५॥ ) सार्द्धपञ्चत्रिंशदेकम् वाच च ॥ १७ ॥

निशम्येति । आत्मभुवा ब्रह्मणा गीतं वर्णितं देवतेजस्तिरस्कारकारणं तच्छान्तिकारणं च क्षेमं विधास्यतीत्यादि च निशम्य श्रुत्वा शङ्कया सन्देहेन उज्झितास्त्यक्ताः रहिताः सन्तः सर्वे दिवौकसो देवास्ततो ब्रह्मस्थानात् त्रिदिवाय स्वर्गं प्राप्तुं न्यवर्तन्त आजग्मुः ॥१॥ दितिरिति । साध्वी दितिस्तु भर्तुः कश्यपस्य आदेशात् लोकानाक्रन्दयिष्यत इति तद्वाक्यात् स्वापत्याभ्यां परिशङ्किना लोकोपद्रवं शङ्कमाना सती विष्णुहस्ततो वधाद्वा शङ्कमाना मनुष्यमानेन वर्षशते पूर्णे सति यमौ सह गर्भं प्रविष्टौ पुत्रौ प्रसुपुवे प्रसूतवती ॥ २ ॥ उत्पाता इति । तयोर्जायमानयोः सतोः तत्र तदा दिवि भुवि अन्तरिक्षे च लोकस्योरुभयमासमन्ताद्वहन्ति ते बहव उत्पाता निपेतुरुद्बभूवुः ॥ ३ ॥ सहेति । अचलाः पर्वतास्तत्सहिता भुवः भूखण्डाः चेलुश्चलितवत्यः । सर्वा दिशः प्रजज्वलुः वह्निज्वालायुक्ता जाताः । सोल्काः साङ्गारा अशनयश्च पेतुः । आर्तिहेतवः लोकपीडासूचकाः केतवो धूमकेत्वादयश्च उदयं चक्रुरिति शेषः ॥ ४ ॥ ववौ इति । सुदुःस्पर्शः कठिनस्पर्शः फूत्कारानिति तीव्रवायुशब्दानुकरणं तान्मुहुः ईरयन् ध्वनयन् नगपतीन् महावृक्षान् उन्मूलयन् मूलत उत्पाटयन् वात्याश्चक्रवायवः एव अनीकं सेना यस्य रज एव गगनपर्यन्तोत्थितो ध्वजो यस्य । वात्यानीतरजोध्वज इति पाठे वात्याभिरानीतं रज एव ध्वजो यस्य एवंविधो वायुर्ववौ ॥ ५ ॥ उद्धसदिति । उच्चैर्हसन्त्य इव तडितो येषु तेषामम्भोदानां मेघानां घटया समूहेन नष्टो भागणः सूर्यादिप्रभासमूहो यस्मिंस्तस्मिन् व्योम्नि प्रविष्टं यत्तमः अन्धकारस्तेन पदं तत्तत्स्थानं न व्यादृश्यते स्म ईषदपि नादृश्यत ॥ ६ ॥ चुक्रोशेति । उद्गतोर्मिभिः उत्थिततरङ्गैः क्षुभितमुदरं तत्स्था मकरादयो यस्य सः । उदूर्मिरिति पृथक्पदपाठे बहुव्रीहिः । वार्द्धिः समुद्रः विमना दुःखितचित्त इव चुक्रोश । शुष्काणि पङ्कजानि यासु ता उदपाना उदकानि पिबन्ति येष्विति वापीकूपतटाकादयस्तैः सहिताः सरितो नद्यश्चुक्षुभुः ॥ ७ ॥ मुहुरिति । सराह्वोः राहुग्रस्तयोः शशिसूर्ययो-र्मुहुः पुनः पुनः परिधयः परिवेषा अभूवन् । निर्घाता निरभ्रगर्जितानि रथनिर्ह्रादाः रथध्वनितुल्यध्वनयो विवरेभ्यो गिरिगुहाभ्यः प्रजज्ञिरे जाताः ॥ ८ ॥ अन्तरिति । अन्तर्ग्रामेषु ग्राममध्येषु मुखत उल्बणं भयसूचकं वह्निं वमन्त्य उद्गिरन्त्यः शिवाः सृगाल्यः सृगालानामुलूकानां च टङ्कारैर्ध्वनिभिः सह अशिवमपशकुनं यथा भवति तथा प्रणेदुः ध्वनितवत्यः ॥ ९ ॥ सङ्गीतवदिति । ग्रामसिंहाः श्वानः शिरोधरां कन्धरामुन्नमय्य उद्धृत्य सङ्गीतवद्रोदनवच्च विविधा वाचो भाषणानि ततस्ततस्तत्र तत्र व्यमुञ्चन्न-कुर्वन् ॥ १० ॥ खरा इति । हे क्षत्तः ! खरा गर्दभाश्च कर्कशैस्तीक्ष्णैः खुरैर्धरातलं पृथ्वीं घ्नन्तः खार्कारो गर्दभजातिशब्दः तस्मिन् रभसः संभ्रमो हर्षो वा येषां ते मत्ताः सन्तो वरूथशः संघशः पर्यधावन् ॥ ११ ॥

रुदन्त इति । रासभात् रासभशब्दात् त्रस्ता खगाः रुदन्तः क्रोशन्तो नीडात् कुलायात् उदपतन् । उपरि उड्डीयाधो निपेतुरित्यर्थः । घोषे आभीरपल्ल्यामरण्ये च ये पशवस्ते शकृत् पुरीषं मूत्रं च अकुर्वंत उत्ससृजुः ॥ १२ ॥ गाव इति । गावः अत्रसन् त्रस्ता अभूवन् । असृग्दोहाः रक्तं दुहत्यश्च बभूवुः । तोयदा मेघाः पूयवर्षिणः कश्मलवर्षिणो जाताः । देवलिङ्गानि देवता-प्रतिमाः व्यरुदन् तासामश्रुस्रावोऽभूत् । अनिलं वायुं विनापि द्रुमाः पेतुः ॥ १३ ॥ ग्रहानिति । पुण्यतमान् शुभकरान् ग्रहान् बुध-गुर्वादीन् भगणान् अन्यानि बहूनि नक्षत्राणि च अन्ये क्रूरग्रहाः शन्यङ्गारकादयोऽतिदीपिताः अतिदीप्तिमन्तः सन्तोऽतिचेरुः अति-क्रम्य जग्मुरित्यर्थः । वक्रगत्यावृत्य परस्परं युयुधुश्च । तङभाव आर्षः । ग्रहाणाम् अतिचारवक्रत्वे युद्धं च ज्योतिषशास्त्रे प्रसि-द्धानि ॥ १४ ॥ दृष्ट्वेति । उक्तान् ततोऽन्यांश्च महोत्पातान् दृष्ट्वा ब्रह्मपुत्रान् स्वशापाद्यभिज्ञान् सनकादीन् ऋते विना अतत्त्वविदः शापादिकारणानभिज्ञाः अतो भीताः प्रजाः विश्वस्य संप्लवं प्रलयमागतं मेनिरे ॥ १५ ॥ ब्रह्मशापेऽपि भगवद्भक्तानामकृतैरपि सुकृतैः सर्वाधिकप्रभावादिसम्पत्तिं बहुभिः कृतैरपि पापैर्नरकादिगन्धस्याप्यभावं च व्यक्तमाह—

ताविति। तौ जातावादिदैत्यौ सहसा आशु व्यज्यमानमात्मपौरुषं पूर्वसिद्धं स्वपौरुषं ययोस्तौ अश्मसारेण अयस्तुल्येन कायेनाद्रिपती इव पर्वतश्रेष्ठाविव ववृधाते। सन्धिरार्षः॥ १६॥ दिवीति। हेमकिरीटकोटिभिः स्वर्णमयमुकुटाग्रैर्दिविस्पृशौ दिवं स्पृशन्तौ निरुद्धाः व्याप्ताः काष्ठा दिशो याभ्यां तौ स्फुरन्त्यङ्गदानि यासु ता भुजा ययोस्तौ। अङ्गदेति पुंवद्भावाभाव आर्षः। भुजाशब्दः स्त्रियामप्यस्ति। चरणैः पदे पदे प्रतिपदविन्यासं गां भूमिं कम्पयन्तौ सुशोभना काञ्ची मेखला यस्यां तया कट्या प्रकाशेनोच्चत्वेन चार्कं सूर्यमतीत्य अतिक्रम्य तस्थतुः। इयं प्रौढिः पञ्चषदिनवयस्कयोरेवेत्याहुः॥ १७॥ प्रजापतिरिति। तयोर्यमयोर्मध्ये यः कश्यपस्य स्वदेहात्प्राक् प्रथममजायत तं हिरण्यकशिपुं यथा ज्येष्ठतया प्रजाः विदुः सा दितिर्यमग्रतः प्रथममसूत तं हिरण्याक्षं यथा कनिष्ठतया प्रजाः विदुस्तथा प्रजापतिः कश्यपः तयोर्नाम नामकरणाख्यं संस्कारम् अकार्षीत्। प्रथमं हिरण्यकशिपोस्ततो हिरण्याक्षस्येति क्रमेण कृतवानित्यर्थः। तत्रायं भावः—यदा हि गर्भाधानसमये योनिपुष्पं प्रविशद्वीर्यं द्विधा विभक्तं सत् आदिपश्चाद्भावेन प्रविशति तदा यमौ भवतः। तयोश्च पितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः। अत एव कश्यपात् पूर्वजातत्वाद्दितेः पश्चाज्जातोऽपि हिरण्यकशिपुरेव ज्येष्ठः हिरण्याक्षः कनिष्ठः॥ १८॥ चक्रे इति। स्वदोर्भ्यां स्वभुजबलेन उद्धतः अनम्रः ब्रह्मणो वरेण चाकुतोमृत्युः सर्वतो मृत्युरहितो हिरण्यकशिपुः सपालान् त्रीन् लोकान् स्ववशे चक्रे। यद्वा उद्धतः अकुतोमृत्युश्च हिरण्यकशिपुः स्वदोर्बलेनैव लोकान् वशे चक्रे। ब्रह्मवरेण चेति चकाराद् ब्रह्मवरोऽपि तत्र सहायमात्रमभूत् इति भावः॥ १९॥

हिरण्याक्ष इति। हिरण्याक्षस्तस्यानुजः अत एव तस्य प्रियः अतः स्वयमपि तत्प्रीतिकृत् अतस्तत्प्रीतये युयुत्सुर्गदापाणिश्च सन्नन्वहं रणं युद्धं मृगयन् कदाचिद्दिवं स्वर्गं यातः। आर्षः शता। निवृत्तप्रेषणान्मृगयतेर्ण्यन्ताण्णिज्वा॥ २०॥ तमिति। दुःसहः जवो वेगो यस्य तं रणन्ती ध्वनन्तौ काञ्चनमये नूपुरे यस्य तं पुष्पपल्लवादिनिर्मिता वैजयन्ती तया स्रजा जुष्टमलङ्कृतम् अंसे स्कन्धे न्यस्ता महती गदा येन तम्। मनसा शौर्येण वीर्येण बलेन ब्रह्मवरेण च उत्सिक्तं गर्वितम् असृण्यम् अंकुशानर्हम्। अर्हार्थे यत्। अकुतोभयं सर्वतो निर्भयं तं हिरण्याक्षं वीक्ष्य देवाः भीताः सन्तो तार्क्ष्यात् गरुणात् त्रस्ता अहयः सर्पा यथा तथा निलिल्यिरे अन्तर्हिताः बभूवुः॥ २१-२२॥ स इति। स च दैत्यराट् हिरण्याक्षः सेन्द्रान् देवगणानपश्यन् युद्धं विनैव स्वेन हिरण्याक्षसंनिधिना महसा तेजसैव तिरोहितान् अत एव क्षीवान् प्रमत्तान् क्षीबानिति पाठे पौरुषहीनांश्च दृष्ट्वा ज्ञात्वा भृशमतीव व्यनदत् अगर्जत्॥ २३॥ तत इति। ततः स्वर्गान्निवृत्तः महासत्त्वः महाबलः हिरण्याक्षः क्रीडिष्यन् मत्तो द्विप इव गम्भीरं भीमो निःस्वनस्तरङ्गजन्यो ध्वनिर्यस्मिंस्तं वार्धिं समुद्रं विजगाहे विलोडितवान्। समुद्रे कश्चित् प्रतियोद्धा चेत्तेन युद्धयेयेत्याशयेनेति भावः॥२४॥ तस्मिन्निति। तस्मिन् हिरण्याक्षे तत्र प्रविष्टे सति सन्नधियः विशीर्णबुद्धयः ससाध्वसाः भीताः वरुणस्य सैनिकाः यादोगणाः ग्राहाद्याः जलजन्तवः तेन अहन्यमाना अपि तस्य हिरण्याक्षस्य वर्चसा तेजसा प्रधर्षिता अभिभूताः सन्तो दूरतरं प्रदुद्रुवुः॥ २५॥ स इति। हे तात! महाबलः स वर्षपूगान् बहून् संवत्सरान् उदधौ समुद्रे चरन् विहरन् श्वसनेन स्वश्वासेन ईरितान् उत्थितान् महोर्मीनुच्चैस्तरङ्गान् मौर्व्या मुरुर्लोहविशेषस्तद्रचितया मूर्वातृणविशेषस्तन्मयरज्ज्वा दृढं निबद्धया वा गदया मुहुर्मुहुरभिजघ्ने प्रजहार। तङार्षः। ततश्च विभावरीं नाम प्रचेतसो वरुणस्य पुरीमासेदिवान् प्राप्तवान्। अत्र वर्षपूगानित्यनेन पाद्मकल्प उत्पन्नावेव हिरण्यकशिपुहिरण्याक्षौ वाराहकल्पे भगवता निहताविति सूचितम् इत्याहुः। शेषं तत्रादिदैत्यं गदया पतन्तमित्यत्र प्रागुक्तम्॥२६॥ तत्रेति। तत्र पुर्याम् असुरलोकानां पालकं यादोगणानामृषभं स्वामिनं प्रचेतसं वरुणमुपलभ्य दृष्ट्वा स्मयन् हसन्। शता आर्षः। प्रलब्धुं वञ्चयितुमुपहसितुं वा नीचवत् प्रणिपत्य हे अधिराज! मे मह्यं संयुगं युद्धं देहीति जगाद। मया सह युध्यस्वेति प्रार्थितवान्॥ २७॥

त्वमिति। प्रभो हे समर्थ! त्वं लोकपालानामप्यधिपतिः। लोकपालोऽधिपतिरित्यपि पाठः। अत एव दुर्मदेन य आत्मानं वीरं मन्यन्ते तेषां वीर्यापहः अत एव बृहच्छ्रवाः महायशाः असि। यत् यतः भवान् पुरा काले लोके अखिलान् दैत्यान् दानवांश्च विजित्य राजसूयेनायजत् इष्टवान्। वाक्यभेदान्न प्रथमपुरुषदोषः। अयज इत्यपि क्वापि पाठः। विजित्येति विपरीतलक्षणा तेन तदानीं दैत्याभावात्तदा सर्वैं राजसूयः कर्तुं शक्यः। ते न शक्तिश्चेत् संप्रति मां जित्वा राजसूयं कुरु। कृतोऽपि राजसूयस्ते तदैव सिद्धयेत् यदि मां जयेरिति॥ २८॥ स इति। सः भगवान् अपां पतिर्वरुणः उत्सिक्तो वृद्धो मदो यस्य तेन विद्विषा शत्रुणा तेनैवं दृढं यथा स्यात्तथा प्रलब्ध उपहसितः अतः समुत्थमपि रोषं स्वया धिया विचारात्मिकया बुद्ध्या शमयन् व्यवोचत् तं प्रत्युवाच। अङ्ग हे दैत्यराज! वनम् उपशमं युद्धादिकौतुकादुपरमं गता इति॥ २९॥ पश्यामीति। हे असुरर्षभ! रणमार्गेषु कोविदं निपुणं त्वां संयुगे युद्धे यः आराधयिष्यति स्वनैपुण्येन संतोषयिष्यति तं पुरातनात् पुरुषादन्यं न पश्यामि। अतस्तमिहि गच्छ यतः भवादृशा मनस्विनः शूराः युद्धे पराजिता यं गृणते श्लाघन्ते इत्यर्थः। तङार्षः॥३०॥ तमिति। तं वीरमारात्

शीघ्रमेवाभिपद्य प्राप्य विरूयः विगतगर्वस्त्वं वीरशये रणभूमौ श्वभिर्वृतो मृतः सन् शयिष्यसे। अधुना तु गर्वरोगरणकण्डूभ्यां तव निद्रा नास्ति। तदा तु त्वं योग्यशय्यायां श्वभिः परिचारकैः परिचर्यमाणः शयिष्यस इति भावः। यो भगवान् सतां स्वभक्तानामनुग्रहेच्छया त्वद्विधानामसतां दुष्टानां प्रशान्तये विनाशाय रूपाणि अवतारान् धत्ते। अतस्त्वामपि केनचिद्रूपेण हनिष्यति॥ ३१॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां सप्त.शोऽध्यायः॥ १७॥

—:❀:—

## अथाष्टादशोऽध्यायः

मैत्रेय उवाच

तदेवमाकर्ण्य जलेशभाषितं महामनास्तद्विगणय्य दुर्मदः।
हरेर्विदित्वा गतिमङ्ग नारदाद्रसातलं निर्विविशे त्वरान्वितः॥ १॥

अष्टादशे तु रक्षोभिर्हिरण्याक्षवराहयोः। महायुद्धमभूत्तत्र श्लोका नागदृशः (२८) स्मृताः।।

चत्वार्युवाचेत्यङ्ध्यूनाः पञ्चरामा (३४।।) अनुष्टुभः॥ १८॥

तदिति। अङ्ग हे विदुर! एवं तत्प्रागुक्तं जलेशेन वरुणेन भाषितं प्रतियोद्धारं हरिं श्रुत्वा महामनाः हृष्टचित्तः निर्भयचित्तो वा दुर्मदः स हिरण्याक्षः शयिष्यसे वीरशये इति तत् वरुणवचनं विगणय्य अनादृत्य नारदात् हरेर्गतिं स्थितिं स्थानं विदित्वा ज्ञात्वा त्वरान्वितः हरेः अन्यत्र गमनशङ्कया शीघ्रमेव रसातलं गर्भोदमेव निर्विविशे निर्विवेश। तङ्गार्षः॥ १॥ पूर्वं वराहचरिते युद्धलीला संक्षेपादुक्ता तां किञ्चिद्विस्तरेण वक्तुमाह—ददर्शेति। तत्र रसातले धराधरं पर्वताकारम् अग्रदंष्ट्रया दंष्ट्राग्रेण प्रकर्षेण ऊर्ध्वं नीयमाना अवनिर्येन तम्। अरुणश्रिया युक्तेन अक्ष्णा नेत्रेण स्वरुचः हिरण्याक्षतेजांसि मुष्णन्तं हरन्तम् अभितो जयतीत्यभिजित् तं वराहमूर्तिं भगवन्तं ददर्श। दृष्ट्वा चाहो आश्चर्यं वनगोचरो वारिचरो मृगः वराहोऽस्ति। यद्वा। मया तु प्रतियोद्धाऽन्विष्यते। अयं तु वनगोचरो वनवासी मृगः इत्युक्त्वा जहास च। निन्दायां प्रयुक्ताऽपि भारती हरिं स्तौत्येव। वनगोचरो जलशायी मुनिभिर्मृग्यत इति मृगः॥ २॥ आहेति। तत एनं भगवन्तं स आह स्म। हे अज्ञ! एहि युद्धार्थमागच्छ महीं विमुञ्च। यतः विश्वसृजा ब्रह्मणा रसौकसां रसातलवासिनां नोऽस्माकम्। शेषे षष्ठी। इयमर्पिता दत्ता अन्यथाऽस्याः पातालावतरणं न घटते। हे सुरेष्वधम! हे आसादितसूकराकृते! ममेक्षतः पश्यतः सतः। आर्षः शता। अनया भूम्या सह स्वस्ति मङ्गलं यथा स्यात् तथा न यास्यसि। स्तुतौ तु हे विश्वसृज! इगुपधेति कः। अज्ञ! नास्ति ज्ञो यस्मात् हे सुरोत्तम! सुरा अधमा यस्मात् इयं मही तुभ्यम् अर्पिता ममेक्षमाणस्यापि सतो मामनादृत्यापि त्वमनया सह वर्तमानो नोऽस्मदीयं स्वस्ति समस्तं मङ्गलं राज्यं न यास्यसि न प्राप्स्यसि किम्। यास्यस्येवेति नात्र सन्देहस्तथाऽप्यस्मत्कृपया विमुञ्चेत्यर्थः। आसादिता लीलया स्वीकृता सूकराकृतिर्येन॥ ३॥ त्वमिति। हे मूढ! त्व किन्नोऽस्माकं सपत्नैः शत्रुभिर्देवैः अभवाय अस्मद्विनाशाय भृतो धृत आश्रितः पुष्टो वा यो भवान् मायया वाराहादिवेषान्तरधारणलक्षणकपटेन तत्रापि परोक्षजित् अस्मत्परोक्षे असम्मुखे जयतीति तथाभूतः सन् असुरान् हंसि। इदानीं तु योगमाया लोकव्यामोहिकैव बलं यस्य तम् अत एवाल्पं पौरुषं बलं यस्य तं

त्वां संस्थाप्य हत्वा सुहृदां त्वद्धतबन्धूनां रुदतां शुचः अश्रूणि प्रमृजे। तङार्षः। स्तुतौ तु अभवाय मोक्षाय वृत आश्रितः यो बलनिरपेक्षया मायया युक्त्या क्रीड़या संकल्पमात्रेण वा हन्ति हत्वा सद्गतिं करोति। अत एव परोक्षे दूरत एव जयति। अल्पं पौरुषं यस्मात् तं त्वां सम्यक् स्थापयित्वा भक्त्या हृदि स्थिरीकृत्येत्यर्थः। हे मूढ! प्रमूढान् प्रात्याप्याययतीति तथा प्रा पूर्ताविति धातोः कः। सुहृदां शुचः संसारदुःखानि मृजे नाशयामि। यतस्त्वं समर्तुर्बन्धवानपि मोचयसीति भावः॥ ४॥ त्वयीति। अस्मद्भुजच्युतया अस्मद्भुजविसृष्टया गदया शीर्णं भिन्नं शिरो यस्य तस्मिंस्त्वयि संस्थिते मृते सति ये च देवा ऋषयो ये चान्येऽपि भक्ताः मनुष्यादयस्तुभ्यं बलिं हरन्ति ते सर्वे स्वयमेव मत्प्रयत्नमन्तरेणैव अमूलास्त्वद्रूपाश्रयनाशादनाश्रयाः सन्तो न भविष्यन्ति नङ्क्ष्यन्त्येवेत्यर्थः। यद्वा। त्वन्नाशे स्वयमेवामूला न भविष्यन्ति किमिति काका भविष्यन्त्येवेति। स्तुतौ तु अस्मद्भुजच्युतयाऽपि गदया न शीर्णं यस्य तथाभूते त्वयि सुखं स्थिते सति ये तुभ्यमधुना बलिं हरन्ति। नवीनाः भक्ताः ये च पूर्वं भक्ता ऋषयो देवाश्च ते सर्वे स्वयमेवोद्यमं विनैव अमूला न भविष्यन्ति। किन्तु दृढमूला एव भविष्यन्ति॥ ५॥ स इति। सः भगवान् अरेर्हिरण्याक्षस्य दुरुक्तान्येव तोमराः शस्त्रविशेषास्तैस्तुद्यमानो व्यथ्यमानोऽपि दंष्ट्राग्रे गतां गां पृथ्वीं भीतामुपलक्ष्य दृष्ट्वेति यथा ग्राहेण मकरेणाहतो जले व्यथितः सकरेणुः हस्तिनीभिः सहित इभो गजो जलान्निःसरेत्तथा तोदं मृषन् सहमान एवाम्बुमध्याद्बहिर्निरगात्। वस्तुतः अरेर्हिरण्याक्षस्य दुरुक्ततः दुर्वचनात् अमरैर्निमित्तभूतैः तुद्यमानः तद्दुःखं दृष्ट्वाऽनुकम्पया पीड्यमानः तोदं पाक्षिकदुरुक्तव्यथां पाक्षिकसूक्तसुखप्राप्त्या मृषन् ग्राहेण न हत इत्यादि॥ ६॥ तमिति। झषो मकरो द्विरदं गजं यथा अनुद्रवति तथा तं भगवन्तं सलिलान्निःसरन्तमनुद्रुतोऽनुधावन् करालदंष्ट्रः अशनिवत् निःस्वनो यस्य स हिरण्यवत् कपिशाः केशा यस्य स हिरण्याक्षः अब्रवीत्। गतह्रियां त्यक्तलज्जानामसतामवीराणां युष्माकं किं नु विगर्हितमस्ति। निन्दाभयाभावात् पलायनं नायुक्तमित्यर्थः। स्तुतौ तु गतह्रिताम् असतामस्माकं धरोद्धारविघ्नकरणादिकं किं विगर्हितमतो धिगस्मान्॥ ७॥

स इति। अरेर्हिरण्याक्षस्य पश्यत एव सतो विश्वसृजा ब्रह्मणा विबुधैर्देवैश्चाभिष्टुतः प्रसूनैः पुष्पैरापूर्यमाणश्च पाठान्तरे विश्वसृजाम्। शेषे षष्ठी। विश्वसृड्भिः प्रजापतिभिः विबुधैश्चेति स भगवान् सलिलस्य उदस्तात् उपरि उच्छब्दादस्तात्यन्तं छान्दसमव्ययम्। गोचरे व्यवहारयोग्यप्रदेशे गां भूमिं विन्यस्य निधाय तस्यां भूमौ स्वसत्त्वं स्वसामर्थ्यमाधारशक्तिमधात् निहितवान्। यथा सा पुनर्न निमज्जेत्॥ ८॥ परेति। परा पराक् पृष्ठतः अनुषक्तमनुलग्नं तपनीयोपकल्पं सुवर्णमयभूषणं महती गुर्वी गदा यस्य तं काञ्चनमयः चित्रो दंशः कवचो यस्य तं दुरुक्तैर्दुर्वचनैरभीक्ष्णं पुनः पुनर्मर्माणि मनआदीनि प्रतुदन्तं व्यथयन्तं तं हिरण्याक्षं प्रति दुरुक्तश्रवणेन प्रचण्डमन्युः अतिक्रुद्धः सूक्तश्रवणेन प्रहसन् भगवान् बभाषे। अत्र प्रचण्डमन्युत्वादिकं देवभयनिवृत्त्येऽनुकरणमात्रम्॥ ९॥ सत्यमिति। भो अभद्र असुर! वयं वनगोचरा जलनिवासिनो मृगा इति यत्त्वया उक्तं तत् सत्यमथापि युष्मद्विधान् ग्रामसिंहान् शुनो मृगये अन्वेषयामि। यत्तु ममेक्षतो न स्वस्ति यास्यसीत्युक्तं तत् मृत्युपाशैः प्रतिमुक्तस्य बद्धस्य तव विकत्थनं स्वश्लाघावचनं मादृशाः धीराः न गृह्णन्ति॥ १०॥ एते इति। रसौकसां रसातलवासिनां युष्माकमेते वयं न्यासहराः प्रजापतिदत्तपृथ्वीहराः अत एव ते तव गदया द्राविताः पलायनं कारिताः अत एव गतह्रियो निर्लज्जा अथापि आजौ युद्धे कथञ्चित्तिष्ठामहे। तङार्षः। हे इति पृथक् पदं वा। यद्वा। बलं प्रकाशयामः "प्रकाशनस्थेयाख्ययोश्च" इति तङ्। यतोऽस्माभिरपि स्थेयम्। यतः बलिना त्वया सह वैरमुत्पाद्य क्व यामः पलायनेऽपि गन्तव्यदेशाभावात्॥ ११॥ त्वमिति। त्वं किल प्रसिद्धः पदौ पादावेव रथा येषां पद्रथानां पादचारिणां ये यूथपास्तेषामधिपः अतः अनूहः निःशङ्कः सन्नेव नोऽस्माकमस्वस्तये परिभवाय आशु शीघ्रं घटस्व प्रयतस्व। अस्मान् संस्थाप्य हत्वा स्वकानाम् अश्रु। तुदादित्वमार्षम्। प्रमृज। यः पुमान् स्वां स्वीयां प्रतिज्ञां नातिपिपर्त्ति न सम्यक् पूरयति सः असभ्यः सभायोग्यो न भवति॥ १२॥ स इति। रुषा क्रोधेन भगवता भृशमत्यन्तम् अधिक्षिप्तः सत्यं वयमित्यादिना तिरस्कृतः प्रलब्धः एते वयमित्यादिना उपहसितश्च स हिरण्याक्षः क्रीड्यमानः क्रीडां कार्यमाणः। क्रीडतेर्ण्यन्तात्कर्मणि शानच्। अहिराट् महासर्पो यथा क्रुध्यति तथा उल्बणमधिकं क्रोधमाजहार आनीतवान्॥ १३॥ सृजन्निति। अमर्षितः क्रुद्धः अत एव श्वासान् विसृजन् विमुञ्चन् अत एव मन्युना प्रचलितानि क्षुभितानीन्द्रियाणि यस्य स दैत्यः आसाद्य समीपमागत्य तरसा वेगेन गदय हरिमभ्यहनत्। शब्लुगभाव आर्षः॥ १४॥ भगवानिति। भगवांस्तु रिपुणा शत्रुणा उरसि निसृष्टं प्रक्षिप्तं गदावेगं तिरश्चीनः सन् योगारूढो यथान्तकं मृत्युं वञ्चयति तथा अवञ्चयत्॥ १५॥ पुनरिति। पुनः स्वां गदामादाय अभीक्ष्णशः पुनः पुनर्भ्रामयन्तमसुरम्। मित्त्वे ह्रस्वाभाव आर्षः। व्यवस्थितविभाषया वा। हन्तुं क्रुद्धः अतः संरम्भात् क्रोधात् दष्टो दच्छदो दन्ताच्छादक ओष्ठो येन तथाभूतो हरिरभ्यधावत् धावनं कृत्वा तत्समीपं जगाम॥ १६॥ तत इति। हे सौम्य! ततस्तदनन्तरं प्रभुः समर्थो भगवान् स्वगदया अरातिं शत्रुं दक्षिणस्यां भ्रुवि आजघ्ने। पराङ्कर्मकत्वे तङार्षः। सोऽसुरोऽपि कोविदः गदायुद्धे कुशलः अतस्तां हरिणा प्रयुक्तामप्राप्तामेव गदां स्वगदया अभ्यहनत्। शब्लुगभाव आर्षः॥ १७॥

एवमिति । हरिणी हरितवर्णे अक्षिणी यस्य सः हिरण्याक्षो हरिश्च उभावेव सुसंरब्धौ अतिक्रुद्धौ अन्योन्यं जिगीषया जेतुमिच्छया गुर्वीभ्यां गदाभ्यामन्योन्यं परस्परमेवमुक्तप्रकारेणाभिजघ्नतुः ॥ १८ ॥ तयोरिति । तयोर्हरिहर्यक्षयोः स्पृधोः स्पर्द्धमानयोः । स्पर्द्धतेः स्पृध आर्षः । तिग्माभ्यां तीक्ष्णधाराभ्यां गदाभ्यामाहतानि ताडितान्यङ्गानि ययोः, अत एव क्षतादास्रवयतीति क्षतास्रवं रुधिरं तस्य घ्राणमवघ्राणं तेन विवृद्धो मन्युः क्रोधो ययोः इलायां भूम्यां निमित्तभूतायां भूम्यर्थं परस्परं जिगीषया जेतुमिच्छया विचित्रमार्गान् गदायुद्धभ्रमणभेदान् चरतोः कुर्वतोर्मृधः सङ्ग्रामः इला गौः तदर्थं शुष्मिणोर्मत्तवृषभयोः सङ्ग्राम इव व्यभात् बभौ ॥ १९ ॥ दैत्यस्येति । हे कौरव्य विदुर ! दैत्यस्य यज्ञा अवयवा यस्य तस्य यज्ञावतारस्य मायया गृहीता वाराहतनुर्येन तस्य महात्मनो भगवतश्चेति मध्यां निमित्तभूतायां द्विषतोर्युध्यमानयोर्विमर्दनं युद्धं तिदृक्षुर्द्रष्टुमिच्छुः ऋषिभि-र्मरीच्यादिभिर्वृतः सहितः स्वराट् ब्रह्मा आगात् ॥ २० ॥ आसन्नेति । सहस्रणीः ऋषिसहस्राणां नेता भगवान् ब्रह्मा आसन्नं प्राप्तं शौण्डीरं साहसोत्साहो येन तम् अपेतसाध्वसं निर्भयं कृतः प्रतीकारः प्रहारप्रतिक्रिया येन तम् अहार्यः अप्रतिकार्योऽसह्यो वा विक्रमो यस्य तमेवंभूतं दैत्यं विलक्ष्य आदिसूकरं नारायणं हरिं जगाद ॥ २१ ॥ एष इति द्वयम् । हे देव ! यतः एषोऽसुरस्ते तवाङ्घ्रिमूलमुपेयुषां शरणागतानां विप्राणां सौरभेयीणां गवाम् अनागसां निरपराधानां भूतानाम् आगस्कृत् अपराधारोपकः तत्परिहारप्रवृत्तौ भयकृत् भीतं ज्ञात्वा दुष्कृत् प्राणादिहर्त्ता अस्मत्तो राद्धो लब्धो वरो येन सः अत एव स्वयमप्रतिरथः प्रतिपक्षरहितः कण्टकः सन्मार्गप्रतिरोधकः प्रतिरथमन्वेषन् अन्वेषयन् । आङ्पूर्वादीप उञ्छे इत्यतः शता उपसर्गवशादन्वेषार्थे वृत्तिः । लोकानटति ॥ २२-२३ ॥ मैनमिति । हे देव ! मायाविनं दृप्तं गर्वितं निरङ्कुशमसत्तमम् अतिदुष्टम् एवं बालवत् बालो यथा उत्थितम् उत्थितमस्तकमाशीविषं सर्पं पुच्छाकर्षणादिना क्रीडयति तथा मा आक्रीड आक्रीडय । आर्षस्तङभावः । यद्वा । आशीविषं यथा सर्पमिवैनं बालोऽज्ञः स इव मा आक्रीड । यद्वा बालवन्मा क्रीड अहमेनमुत्थितमाशीविषं मन्ये इति शेषः ॥ २४ ॥ नेति । हे देव ! हे अच्युत ! स्वभावत एव दारुणोऽप्येषः यावत् स्वां स्वबलकरीमासुरीं वेलां प्राप्य न वर्द्धेत तावदेव स्वां मायामचिन्त्यशक्तिमास्थाय आविष्कृत्य अघं दोषरूपमेनं जहि । अत्र सर्वज्ञस्यापि ब्रह्मणः प्रेमवशादनिष्टाशङ्कित्वम् ॥ २५ ॥ वेलामेवाह-एषेति । हे प्रभो ! हे सर्वात्मन् ! छम्बडित्यव्ययं विनाशवाचकम् । लोकानां विनाशकारी । सन्ध्यायामेव प्रलयप्रसिद्धेः । अत एव घोरतमा अतिभयंकरी एषा सन्ध्या उपसर्पति आश्वायास्यति । ततः पूर्वमेव सुराणां जयमावह सम्पादय ॥ २६ ॥ अधुनेति । अधुना एषः अभिजिन्नाम मौहूर्तिको योगो मध्याह्ने घटीद्वयमितः कालः अगात् गतप्रायः । अतो यावन्मुहूर्त्तशेषोऽस्ति तावदेव सुहृदां त्वद्भक्तानां नोऽस्माकं शिवाय सुखार्थं दुस्तरं दुर्जयमेनमाशु निस्तर जहि ॥ २७ ॥ दिष्टयेति । विहितं शापानुग्रहसमये एतौ सुरेतरगतिं प्रतिपद्य सद्य इत्यादिना त्वयैव निर्मितम् । यद्वा । तदा विश्वेश्वरः क्रुद्धोऽवतीर्य हनिष्यतीति कश्यपेनैव विहितं मृत्युरूपं त्वामयं स्वयमेवासादितः प्राप्तस्तद्दिष्टया सर्वेषां भाग्येनैवातो मृधे युद्धे एनं विक्रम्य पराक्रमं कृत्वा हत्वा लोकान् शर्मणि सुखे आधेहि स्थापय सुखोत्तरान् कुरु ॥ २८ ॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायामष्टादशोऽध्यायः ॥ १८ ॥

—:❀:—

# अथैकोनविंशोऽध्यायः

मैत्रेय उवाच

**अवधार्य विरिञ्चस्य निर्व्यलीकामृतं वचः । प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत् ॥ १ ॥**

ऊनविंशे प्रार्थितेन ब्रह्माद्यैर्हरिणा मृधे । हिरण्याक्षो हतस्तत्र श्लोका अष्टाग्नयः ( ३८ ) स्मृताः ॥

अनुष्टुभश्चतुर्वेदा ( ४४ ) उवाचेति चतुष्टयम् ॥ १९ ॥

अवधार्येति । विरिञ्चस्य ब्रह्मणो निर्व्यलीकं निष्कपटं प्रीतिकरत्वादमृतं च निर्व्यलीकमृतमिति पाठे ऋतं सत्यं च वचोऽवधार्य श्रुत्वा महानपि भयाविष्टतया कालात्मनोऽपि मम मुहूर्त्तबलमुपदिशतीति विहस्य स भगवान् प्रेमगर्भेण प्रेमसहितेन अपाङ्गेन कटाक्षेण तद् ब्रह्मवचनमग्रहीत् अनुमोदनेन स्वीकृतवान् । इमं शीघ्रमेव किञ्चिद्युयुत्सासुखपूरणे सत्यद्य रात्रावेव हन्मीति ॥१॥ तत इति । ततः अक्षजो ब्रह्मणो घ्राणेन्द्रियात् प्रादुर्भूतो भगवान् उत्पत्य अकुतोभयं सर्वतो भयरहितमत एव मुखतः अभिमुखं विचरन्तं सपत्नं शत्रुमसुरं गदया हनौ कपोलस्याधोदेशे जघान ॥ २ ॥ सेति । सा भगवत्प्रयुक्ता गदा तद्धनुमप्राप्तैव तेनासुरेण स्वगदया हता भगवत्कराद्विहता विच्युता विघूर्णिता च सती भूमावपतत् । ततो रेजे । तद् भगवत्करात् पतनं तत्रस्थानां पश्यतामाश्चर्यमिवाभवत् । यद्वा । तदित्यस्यावृत्त्या रेजे इत्यनेनापि सम्बन्धः । तद्दैत्यपौरुषं रेजे गदापतनं च युद्धलीलायां स्वपार्षदस्य बलातिशयद्योतनार्थम् ॥ ३ ॥ स इति । सोऽसुरस्तदा लब्धतीर्थो लब्धप्रहारावकाशोऽपि निरायुधमपि भगवन्तं न बबाधे न प्राहरत् । किन्तु सः मृधे युद्धे निरायुधो न हन्तव्य इति धर्मं मानयन् विष्वक्सेनं भगवन्तं प्रकोपयंश्च बभूवेत्यन्वयभेदात् स इत्यस्य न पौनरुक्त्यम् ॥ ४ ॥ गदायामिति । गदायामपविद्धायां भगवतो हस्ताद्विच्युतायां सत्यां पश्यतां ब्रह्मादीनां मुखाद् भयेन हाहाकारे विनिर्गते सति विभुः भगवान् तद्धर्मं तस्य दैत्यस्य निरायुधाबाधनरूपं धर्मं मानयामास बह्वमन्यत । सुनाभं सुदर्शनचक्रं चास्मरत् स्मरणेनागतं स्वहस्तस्थितमकरोत् । चकाराद्गदामपि पूर्वं समस्मरैवेति गम्यते ॥ ५ ॥ तमिति । दैत्यवधार्थं व्यग्रं त्वरयाऽऽकुलं चक्रं यस्य तं तथापि चक्राय दैत्यमारणाज्ञामदत्त्वा स्वपार्षदमुख्येन दितिपुत्राधमेन सह विषज्जमानं विशेषेण सङ्गं प्राप्नुवन्तं क्रीडन्तं भगवन्तं प्रति तत्र देशे काले वा खेचराणाम् आकाशे स्थित्वा युद्धं पश्यताम् अतद्विदाम् तत्प्रभावमजानतां देवादीनां ते तुभ्यं स्वस्त्यस्तु । अमुमसुरं जहीत्येवमादिकाश्चित्रा विविधप्रकारिका वाचः आसन् स्म । अत्र दितिपुत्राधमेन दितिपुत्राभिधेन दितिजाभिधेनेति पाठत्रयम् । छन्दोभङ्गः ॥ ६ ॥ स इति । स हिरण्याक्षः तं हरिमात्तरथाङ्गं गृहीतचक्रं निशाम्य दृष्ट्वा युद्धेऽपि श्रमाभावेन पद्मपलाशवत्प्रसङ्गं लोचनं यस्य तथाभूतमग्रतो व्यवस्थितं च विलोक्य अमर्षेण परिप्लुतानि व्याप्तानि मनश्चक्षुरादीनीन्द्रियाणि यस्य तथाभूतः अत एव रुषा श्वसन् श्वासान् विमुञ्चन् स्वस्य दन्तच्छदमोष्ठमासमन्ताददशत् ॥ ७ ॥ करालेति । कराला भयङ्करा दंष्ट्रा यस्य सोऽसुरः क्रोधयुक्ताभ्यां चक्षुर्भ्यां दहन्निव सञ्चक्षाणः पश्यन् इदानीं हतोऽसीति वदन् वस्तुतः ज्ञातोऽसीति वदन् अभिप्लुत्य झटिति समीपमागत्य स्वगदया हरिमाहनत् । शब्लुगभावः आर्षः ॥ ८ ॥ पदेति । हे साधो ! यज्ञसूकरः यज्ञावतारवराहमूर्तिर्भगवान् तत्प्रयुक्तां वातरंहसं वायुवेगां तामायान्तीमेव गदां शत्रोस्तस्य मिषतः पश्यत एव सतः सव्येन वामेन पदा लीलयाऽनायासेनैव प्राहरत् भूमौ पातितवान् ॥ ९ ॥ आहेति । तत आयुधमादत्स्व गृहाण घटस्व प्रयतस्व । यतस्त्वं जिगीषसीत्याह स्म च । इत्येवं भगवतोक्तः सोऽसुरः तया पतितया पुनर्गृहीतया गदया भूयः पुनर्भगवन्तं ताडयन् भृशं व्यनदत् ॥ १० ॥ तामिति । तां तेन प्रयुक्तां गदामापततीमापतन्तीम् । नुमभाव आर्षः । वीक्ष्य स भगवान् सम्यक् सम्मुखमवस्थित एव प्राप्तां पन्नगीं गरुत्मान् गरुड इव लीलयैव जग्राह ॥ ११ ॥ स्वेति । एवं गदाग्रहणेन स्वपौरुषे स्वबले प्रतिहते सति हतः विगतः मानो गर्वो यस्य सः अत एव विगतप्रभः विनष्टतेजाः महासुरो हिरण्याक्षा हरिणा दीयमानामपि स्वगदां लज्जया नैच्छत् न जग्राह ॥ १२ ॥ जग्राहेति । त्रिशिखं तिस्रः शिखा अग्रभागा यस्य तत् ज्वलन् यो ज्वलनोऽग्नि तद्वल्लोलुपं स्वकार्यकरणव्यग्रं शूलं धृतवराहरूपाय यज्ञाय भगवते तं हन्तुं जग्राह प्राहिणोत् । यथा कश्चित् विप्राय विप्रं हन्तुम् अभिचरन् मरणफलकं यागं कुर्वन् भवति तथा ॥ १३ ॥

तदिति । दैत्यानां मध्ये महाभटेन महाशूरेण ओजसा बलेन अर्पितं प्रयुक्तम् अन्तः खे आकाशमध्ये चकासत् दीप्यमानम् उदीर्णा उद्गता दीधितिर्दीप्तिर्यस्य तत् त्रिशूलं हरिरिन्द्रो यथा तार्क्ष्यस्य गरुडस्य उज्झितं त्यक्तं पतत्रं पक्षं चिच्छेद तथा निशातनेमिना

तीक्ष्णधारेण चक्रेण भगवान् चिच्छेद। पुरा खलु देवान्निर्जित्यामृतकलशं नयता गरुडेनेन्द्रप्रयुक्तस्य वज्रस्यामोघस्य मानं दातुं पतत्रमेकं त्यक्तं तत्रेन्द्रो वज्रेण चिच्छेदेतीतिहासोऽत्रानुसन्धेयः ॥ १४ ॥ वृक्णे इति। अरिणा अराः सन्त्यस्येत्यरि चक्रं तेन स्वशूले बहुधा वृक्णे छिन्ने सति प्रवृद्धो रोषो यस्य सोऽसुरः नदन् प्रत्येत्याभिमुखमागत्य कठोरेण कठिनतरेण मुष्टिना विभूतिमत् लक्ष्म्याश्रयभूतं विस्तीर्णं हरेर्वाराहस्य उरो वक्षः प्रहृत्य प्रताड्य साक्षाद्युद्धे स्वसामर्थ्याभावमवधाय अन्तरधीयत अन्तर्हितवान्। "धीङ् धारणे" दिवादिः ॥ १५ ॥ तेनेति। हे क्षत्तः! तेनासुरेणेत्थं मुष्टिना आहतस्ताडितः आदिसूकररूपो भगवान् स्रजा पुष्पमालया हतो द्विपो गज इव मनाक् किञ्चिदपि नाकम्पत ॥ १६ ॥ अथेति। अथान्तर्द्धानानन्तरं सोऽसुरः योगमायानामचिन्त्य-शक्तीनामीश्वरे नियन्तरि हरौ उरुधा बहुधा। धा आर्षः। मायामसृजत्। यां मायां विलोक्य त्रस्ताः प्रजाः अस्य विश्वस्य उपसंयमं प्रलयं मेनिरे ॥ १७ ॥ प्रववुरिति। प्रचण्डाः प्रचण्डवेगाः दुस्पर्शाः वायवः प्रववुः। पांसवं पांसुकृतं तमोऽन्धकारमैरयन वायव एव प्रेरितवन्तः ग्रावाणः पाषाणाः क्षेपणैर्यन्त्रविशेषैः प्रहिताः प्रयुक्ता इव दिग्भ्यो निपेतुः ॥ १८ ॥ द्यौरिति। पूयं केशान् असृक् विट् मूत्रम् अस्थि चेत्यादीनि असकृत् पुनः पुनर्वर्षद्भिः सविद्युत्स्तनयित्नुभिः विद्युत तडितः स्तनयित्नवो गर्जितानि तत्सहितैर्मेघैर्नष्टो भगणो नक्षत्रगणो यस्यां तथाभूता द्यौरभूत्। अनेन दैत्यबलातिरेकाद् ब्रह्मदत्तमुहूर्त्तातिक्रमो गम्यते। अह्नि नक्षत्राणा-मसम्भवात् ॥ १९ ॥ गिरय इति। हे अनघ! गिरयः पर्वताः नानायुधमुचः नानायुधानि मुञ्चन्तः प्रत्यदृश्यन्त। दिग्वाससो नग्नाः शूलिन्यो मुक्तमूर्द्धजा यातुधान्यश्च प्रत्यदृश्यन्त ॥ २० ॥ बहुभिरिति। आततायिभिः हिंसाशीलैर्बहुभिर्यक्षरक्षोभिः पत्तिभिश्च अश्वरथकुञ्जरैस्तदारोहिभिश्च उत्सृष्टाः प्रयुक्ताः वैशसाः अत्युग्राः हिंस्राः क्रूराः छिन्धि भिन्धीत्येवंरूपा वाचः अश्रूयन्त ॥ २१ ॥ प्रादुष्कृतानामिति। भगवान् त्रिपात् त्रीणि सवनानि पादा यस्येति त्रयोऽस्य पादा इति श्रुतेर्यज्ञमूर्तिः तत्रआदिपादयुक्तो धर्ममूर्तिर्वा। दैत्येन प्रादुष्कृतानामासुरीणां मायानां विनाशयत् विनाशयितुम्। शेषे षष्ठी हेतौ शता। विनाशनमिति पाठे चक्रविशेषण दयितं स्वस्यातिप्रियं सुदर्शनास्त्रं प्रायुङ्क्त ॥ २२ ॥ तदेति। भर्तुः कश्यपस्यादेशं त्वत्पुत्रं भगवानवतीर्य हनिष्यतीत्येवंभूतं स्मरन्त्या दितेर्हृदि सहसा अकस्मादेव वेपथुः प्रकम्पः समभवत्। स्तनात् असृक् रुधिरं च प्रसुस्रुवे। तङार्षः। कर्मकर्त्तरि वा ॥ २३ ॥

विनष्टास्विति। स्वमायासु विनष्टासु सतीषु स दैत्यः भूयः पुनरात्रज्य अभिमुखमागत्य रुषा केशवमुपगूहमानो बाह्वोरन्तरे निधाय संवष्टयन्नप्यमुं बहिर्बाहुमध्याद्बहिरवस्थितं ददृशे। तङार्षः ॥ २४ ॥ तमिति। वज्रवत् सारं दार्ढ्यं येषां तैर्मुष्टिभि-र्निघ्नन्तं तमधोक्षजो भगवान् करेण कर्णमूलेऽहन्। यथा मरुत्पतिरिन्द्रः त्वाष्ट्रं वृत्रं तथा ॥ २५ ॥ स इति। विश्वसृजा भगवता अवज्ञया उपेक्षयैव न तु बलेन हतः सन् परिभ्रमद्गात्रं यस्य उद्स्ते बहिर्निर्गते लोचने यस्य विकीर्णाः विक्षिप्ताः बाह्वादयो यस्य स हिरण्याक्षः अपतत्। यथा नभस्वता वायुना लुलित उत्पाटितो नगेन्द्रो महाद्रुमः पतति तथा ॥ २६ ॥ क्षिताविति। क्षितौ शयानं कराला दंष्ट्रा यस्य तं परितो दष्टो दच्छदः ओष्ठो येन तं तथापि भगवत्स्पर्शादकुण्ठवर्चसमप्रतिहततेजस्कं तं तत्रागता अजादयः वीक्ष्याहो इमां संस्थितिं मृत्युं को नु लभेतेति शशंसुः ॥ २७ ॥ यमिति। असतः आरोपिताल्लिङ्गात् लिङ्गशरीरात् मुमुक्षया आत्मानं मोक्तुमिच्छया योगसम्पन्नसमाधिना रहः एकान्ते यं भगवन्तं ध्यायन्ति तस्यैव पदा पादेन एष दैत्यऋषभः दैत्यश्रेष्ठो दैत्यापसद इति पाठे दैत्याधमः हतस्तस्य मुखं प्रपश्यन् तनुं शरीरमुत्ससर्ज तत्याज। वराहस्य पूर्वपादयोरेव करत्वात् करेणाहन्निति पदाहत इति च न विरोधः ॥ २८ ॥ एताविति। एतौ हिरण्याक्षहिरण्यकशिपू अस्य भगवतः तौ जयविजयाख्यौ पार्षदौ ब्राह्मणशापात् असद्गतिमसुरयोनिं यातौ पुनश्च कतिपयैर्जन्मभिः भगवतः स्थानं प्रपत्स्येते गमिष्यतः ॥ २९ ॥ नम इति। अखिलयज्ञतन्तवे सम स्तयज्ञप्रवर्त्तकाय स्थितौ जगद्रक्षणे निमित्ते गृहीता स्वेच्छोपात्ता अमला रजस्तमोभ्यामननुविद्धा सत्त्वमूर्तिर्येन तस्मै ते तुभ्यं नमो नमः। द्विरुक्तिरादरार्था। जगतां प्राणिनामरुंतुदः मर्मभेत्ताऽयमसुरो दिष्ट्या स्वदुष्टकर्मणा दैवादिभागेन च हतः। हे ईश! स्वत्पादयोर्भक्त्या सेवया वयं निर्वृताः शत्रुवधेन त्वया सुखिताः कृता इत्यर्थः ॥ ३० ॥ एवमिति। असह्यविक्रमं दुर्धर्षपराक्रमं हिरण्याक्षं स आदिसूकरो भगवान् एवमुक्तप्रकारेण सादयित्वा निहत्य पुष्करविष्टरः कमलासनो ब्रह्मा तदादिभिर्देवैः समीडितः संस्तुतः सन् अखण्डितः अनन्त उत्सवो यस्मिंस्तं स्वं स्वीयं लोकं वैकुण्ठं जगाम ॥ ३१ ॥ मयेति। हे सुमित्र! यथा उदारविक्रमो महाबलपराक्रमो हिरण्याक्षो महामृधे हरिणा क्रीडनवत् मृद्रचितपुत्तिकावदनायासेन निराकृतो विनाशितस्तथा कृतावतारस्य धृतवराहरूपस्य हरेश्चेष्टितं चरितं यथानूक्तं गुरूक्तिमनतिक्रम्य मया ते तुभ्यमवादि कथितम् ॥ ३२ ॥

इतीति। हे द्विज शौनक! इत्युक्तप्रकारेण कौषारवेण मैत्रेयेण ख्यातां कथितां भगवतो वराहस्य कथां श्रुत्वा महाभागवतः क्षत्ता विदुरः परं महान्तमानन्दं लेभे ॥ ३३ ॥ अन्येषामिति। पुण्यश्लोकानां पवित्रकीर्तीनामत एव उद्दामं सर्वतः प्रसृतं यशो येषां तेषामन्येषामपि सतां तद्भक्तानां कथामुपश्रुत्य मोद आनन्दो भवेत्। श्रीवत्साङ्कस्य भगवतः कथामुपश्रुत्य मोदो भवेदिति किं पुनर्वक्तव्यम् ॥ ३४ ॥ य इति। करेणूनां हस्तिनीनां क्रोशन्तीनां रुदतीनां सतीनां झषेण मकरेण ग्रस्तं चरणाम्बुजं ध्यायन्तं गजेन्द्रं कृच्छ्रतस्तद्ग्रसनदुःखात् द्रुतं शीघ्रममोचयत् ॥ ३५ ॥ तमिति। ऋजुभिर्निष्कपटैः अनन्यशरणैर्नृभिरेकान्तभक्तैः

सुखाराध्यमपि असाधुभिः दुराराध्यं तं हरिं कृतज्ञः को न सेवेत ॥ ३६ ॥ यो वा इति । हे द्विजाः ! कारणेन दैत्यवधादिहेतुना सूकरात्मनः धृतवराहरूपस्य भगवतो विक्रीडितं क्रीडारूपं हिरण्याक्षवधं यो वै य एव प्राणी शृणोति गायति कीर्तयति श्रुत्वाऽनुमोदते च सः अञ्जसा प्रायश्चित्तान्तरप्रयासमन्तरेणैव ब्रह्मवधात् अपि विमुच्यते ॥ ३७ ॥ एतदिति । अलं पवित्रं एतद् भगवच्चरितं शृण्वतामिति कीर्त्तनादि कुर्वतामप्युपलक्षणम् । महापुण्यं धन्यं धनकरं यशस्यं यशस्करमायुपः आशिषां सर्वमनोरथानां च पदं सम्पादकं युधि युद्धे प्राणेन्द्रियाणां शौर्यस्य सामर्थ्यस्य वर्द्धनमन्ते प्रारब्धसमाप्तौ नारायणो गतिः फलतया प्राप्तो भवति ॥ ३८ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायो निरमात् तृतीयस्योनविंशके ॥

इति श्रीभागवते महापुराणे तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायामेकोनविंशोऽध्यायः ॥ १९ ॥



## अथ विंशोऽध्यायः

### शौनक उवाच

**महीं प्रतिष्ठामध्यस्य सौते स्वायंभुवो मनुः । कान्यन्वतिष्ठद् द्वाराणि मार्गायावरजन्मनाम् ॥ १ ॥**

विंशे विद्यायक्षरक्षःसुरादेः सृष्टिरीर्यते । वंशे वक्तुं मनोरत्र श्लोकाः सार्द्धास्त्रिमार्गणाः ( ५३ ॥ )
चत्वार्युवाचेत्यङ्कन्यधुना: पञ्च बाणा ( ५४ ॥ ) अनुष्टुभः ॥ २० ॥

महीमिति । हे सौते ! सूतस्य रोमहर्षणस्य पुत्र ! स्वायंभुवो मनुः प्रतिष्ठां सर्वजनस्थानभूतां महीमध्यस्य प्राप्य अवरं सनकाद्यपेक्षयाऽर्वाचीनं जन्म येषां जीवानामीश्वरे लीनानां मार्गाय ततो निर्गमाय कानि द्वाराण्यन्वतिष्ठत् कृतवान् । अर्वाचीनान् प्राणिनः सृष्टवान् इत्यर्थः ॥ १ ॥ क्षत्तेति त्रयम् । श्रीकृष्णोक्तमन्त्रानङ्गीकारात्तद्भक्तपाण्डवप्रतिपक्षित्वाच्च श्रीकृष्णे अघवान् कृतापराध इति हेतोः सापत्यं दुर्योधनादिभिरपत्यैः सहितमग्रजं धृतराष्ट्रं यो विदुरस्तत्याज स महाभागवतः कृष्णस्यैकान्तिकः परम-स्नेहविषयः सुहृच्च महित्वे ज्ञानवैराग्यभक्त्यादिभिर्महिम्नि द्वैपायनाद्वेदव्यासादनवरः अन्यूनः तस्य व्यासस्य देहजः पुत्रः सर्वात्मना सर्वभावेन श्रीकृष्णमेवाश्रितः तत्परान् श्रीकृष्णभक्तांश्चाप्यनुव्रतः सेवमानः तीर्थसेवया विरजाः निर्मलः क्षत्ता विदुरः कुशावर्ते गङ्गाद्वार आसीनं तत्त्ववित्तमं तत्त्वज्ञेष्वप्यतिश्रेष्ठं मैत्रेयमुपगम्य किमप्यपृच्छत् ॥ २–३–४ ॥ तयोरिति । हे सूत । तयोर्विदुर-मैत्रेययोः संवदतोः संवादं कुर्वतोः सतोर्हरेः पदाम्बुजाश्रयाः अत एव अमलाः सर्वदोषनिवर्तिका अघघ्नीः अघघ्न्यः । पूर्वसवर्णदीर्घ आर्षः । गाङ्गाः गङ्गासम्बन्धिन्यः । अण्णन्ताट्टाप् आर्षः । आप इव अमलाः कथाः हि अवश्यं प्रवृत्ताः ॥ ५ ॥ ता इति । हे सूत ! ते तव भद्रं भवतु । कीर्त्तन्यानि कीर्त्तनार्हाणि उदाराणि महान्ति कर्माणि यस्य तस्य ताः कथाः नोऽस्मान् प्रति कीर्त्तय । यतः रसज्ञो जनः हरिलीलामृतं पिबन् हरिलीलाः शृण्वन् को नु तृप्येत । तङार्षः ॥ ६ ॥ एवमिति । व्यासोक्तिः । भगवत्यर्पितमध्यात्मं मनो येन सः उग्रश्रवाः सूतः नैमिषमयनं तेषां तैः ऋषिभिरेवं पृष्टः तान् ऋषीन् प्रति भवत्पृष्टं कथयामि श्रूयतामित्याह स्म ॥ ७ ॥ हरेरिति । स्वमायया धृता क्रोडतनुर्वाराहमूर्तिर्येन तस्य हरेः रसातलाद्गोः पृथ्व्या उद्धरणम् । तथा अवज्ञया अनायासेनैव तेन हिरण्याक्षं हतं चेति तद्रूपां च लीलां निशम्य सञ्जातो हर्षो यस्य स भारतो विदुरो मुनिं मैत्रेयमाह स्म पुनः पप्रच्छ ॥ ८ ॥ प्रजेति । हे ब्रह्मन् मैत्रेय ! प्रजापतीनां पतिः ब्रह्मा प्रजासर्गे निमित्ते प्रजापतीन् मरीच्यादीन् सृष्ट्वा स्वयं किमारभत किं कृतवान् । अव्यक्तस्य भगवतो मार्गं वेत्तीति तादृशः त्वं यद्वा इदं ब्रह्मणो विशेषणं तन्मे ब्रूहि ॥ ९ ॥ य इति । ये मरीच्यादयो विप्राः यस्तु क्षत्रियः स्वायंभुवो मनुः ते वै तेऽपि ब्रह्मण आदेशात् आज्ञात एतत् जगत् कथमभावयन् उत्पादयामासुः ॥ १० ॥ सद्वितीया

इति। किं सद्वितीयाः सभार्याः इदं विश्वमसृजन् उत अथवा कर्मसु प्रजासर्गादिषु स्वतन्त्राः भार्यानिरपेक्षा एव जाताः। आहोस्वित् अथवा सर्वे संहता मिलिताः सन्त इदं समकल्पयन् स्म॥ ११॥ ब्रह्मा किमारभतेति प्रश्नस्य यक्षादीन् सृष्टवान् इत्युत्तरं वक्तुं पूर्वोक्तां सृष्टिमनुस्मारयति—दैवेनेति। मन्वादिप्रश्नानां तूत्तराध्यायमारभ्योत्तरं भविष्यति दुर्वितर्क्येण दैवेन जीवादृष्टे परेण प्रकृत्यधिष्ठात्रा महापुरुषेण अनिमिषेण सदा सावधानेन कालेन च जातः क्षोभः साम्यावस्थात्यागलक्षणं वैषम्यं यस्य तथाभूतं यत् भगवतो गुणत्रयात्मकं प्रधानं तस्मात् जातः॥ १२॥

रज इति। स्वतः सत्त्वप्रधानस्यापि महतः कार्योत्पत्तिकाले कार्यानुरूपं रजःप्रधानत्वं जातं तस्माद्दैवचोदिताद् भगवत्प्रेरितात्सूत्रात्मसंज्ञान्महतः त्रिलिङ्गस्त्रिगुणो भूतादिरहङ्कारो जातः। स च वियदादीनि पञ्चशः शब्दादितन्मात्राणि वियदादिमहाभूतानि चक्षुरादिज्ञानेन्द्रियाणि वागादिकर्मन्द्रियाणि तत्तद्देवताश्चेत्येवं पञ्च पञ्च ससर्ज। वीप्सायां शस्॥ १३॥ तानीति। तानि च वियदादीनि एकैकशः प्रत्येकं भौतिकं पञ्चमहाभूतानां मिलितानां कार्यमण्डं स्रष्टुमसमर्थानि सन्ति। दैवयोगेन भगवदनुप्रवेशेन संहत्य मिलित्वा हैमं हेमकार्यवत्प्रकाशबहुलमण्डमवासृजन् ससृजुः॥ १४॥ स इति। स आण्डकोशो निरात्मकः अचेतनस्तत्रत्यसमष्टिजीवस्यानुद्बोधात् साग्रं किञ्चिदधिकं साग्रशब्दः संपूर्णवाची वा। संपूर्णं वर्षसाहस्रमब्धिसलिले कारणार्णवोदकेऽशयिष्ट अवात्सीत्। अनु तदनन्तरं तमाण्डकोशमीश्वरो महत्स्रष्टा गर्भोदशायिरूपेणावासीत् अधिष्ठितवान्॥ १५॥ तस्येति। तस्य नारायणस्य नाभेः सकाशात् सहस्रार्काणामिवोरुः अधिका दीधितिर्दीप्तिर्यस्य तत् तथा सर्वेषां जीवनिकायानां जीवसमूहानामोकः स्थानभूतं पद्ममभूत्। यत्र पद्मे स्वराट् ब्रह्मा स्वयमभूत्॥ १६॥ स इति। यः सलिलाशये सलिलं गर्भोदमेवाशयो गृहं तस्मिन् शेते नारायणस्तेन भगवताऽनुविष्टः अधिष्ठितः प्रेरितः सन् स ब्रह्मा स्वया संस्थया नामरूपगुणादिव्यवस्थया यथा पूर्वं पूर्वकल्पे यथा आसीत्तथा लोकसंस्थां लोकरचनां निर्ममे कृतवान्॥ १७॥ स्रष्टव्येषु यक्षादिषु जीवानामहङ्कारोऽविद्यया विना न संभवतीति प्रथममविद्यावृत्तीराह—ससर्जेति। स ब्रह्मा अग्रतः प्रथमं छायया प्रभाप्रतियोगिन्या तमोरूपया अबुद्धया यतस्त्वबुद्धिकृतः प्रभोरित्युक्तत्वात्। देहच्छायया वा पञ्च पर्वाणि भेदाः यस्यास्तां पञ्चभेदामविद्यां ससर्ज। ते पञ्च भेदास्तु—तामिस्रम् अन्धतामिस्रं तमः मोहः महातमः महामोह इति ज्ञेयाः इति शेषः। एत एव अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा उच्यन्ते। एतेषां विवरणं द्वादशेऽध्याये ससर्जाग्रेऽन्धतामिस्रमित्यत्रोक्तम्॥ १८॥ केनचिद्विशेषेणासाधारणां सृष्टिमाह—विससर्जेति। येन कायेन छायाद्वारा अविद्यां सृष्टवान् तत्तमोमयम् आत्मनः कायं नाभिनन्दन् सृष्ट्यारम्भे तमसैवावृतोऽभूवमिति असन्तुष्यन् विससर्ज त्यक्तवान्। द्विपरार्द्धायुषस्तस्य देहत्यागो नाम तदभिमानत्यागः ग्रहणं च तत्तद्भावापत्तिरिति। यद्वा। तत्तत्सृष्ट्यर्थं योगिवच्छरीरत्यागे तद्ग्रहणे चापि भोगस्य तावद्विद्यमानत्वान्नानुपपत्तिरिति ज्ञेयम्। तद्विसृष्टः कायो रात्रिरभूत् तां च तद्विसृष्टां क्षुत्तृषोः समुद्भवो यस्यां तां रात्रिरूपां तनुं तत एव तदानीमेव जातानि यक्षरक्षांसि जगृहुः। एतेन अविद्यागर्भावरणविच्छेदे यक्षरक्षसामत्यधिकाविति विवक्षितम्। अत्र च या अस्य सा तनूरासीत्तामपाहत सा तमिस्राऽभवदित्यादिश्रुतिरनुसन्धेया॥ १९॥ क्षुत्तृड्भ्यामिति। ततश्च क्षुत्तृड्भ्यामुपसृष्टा अभिभूतास्ते यक्षा राक्षसाश्च तं ब्रह्माणं प्रजग्धुं भक्षयितुम् अभितो दुद्रुवुः। ततश्च क्षुत्तृडर्दिताः ते अत एनं पितेति बुद्ध्या मा रक्षतेत्येके परस्परमूचुः। अन्ये तु जक्षध्वं भक्षयत इत्येवमूचुः। तङार्षः॥ २०॥

देव इति। देवो ब्रह्मा संविग्नो भीतः सन् हे यक्षरक्षांसि! यतो यूयं मे प्रजाः सुता बभूविथ अभूत। एकत्वमार्षम्। अतो मां मा जक्षत मा जक्षित। इडभावः शब्लुक् चार्षः। किन्तु रक्षतेति तान् प्रत्याह स्म। एवमुग्रस्वभावाः यक्षराक्षसाः ब्रह्मणस्तमःस्वभावाज्जाताः। ये जक्षध्वमित्यूचुस्ते यक्षाः ये मा रक्षतेति ते राक्षसा इत्यूह्यम्। एतत्तिर्यगादितामससर्गस्याप्युपलक्षणम्॥ २१॥ तामसीमुक्त्वा सात्त्विकीं सृष्टिमाह—देवता इति। या या देवताः द्युतिमत्यः सात्त्विक्यः सात्त्विक्या स्वप्रभयाऽदीव्यन् द्योतमानाः अभूवन्। तास्ताः कर्मभूताः प्रमुखतः प्राधान्येनासृजत्। यद्वा। स्वप्रभया दीव्यन् द्योतमानो ब्रह्मा या याः देवताः कर्माणि असृजत् ते देवाः देवयन्तः क्रीडयन्तः। क्रीडयितुं हेतौ शता। तां ब्रह्मणा विसृष्टाम् अहः दिवसरूपां प्रभामहारिषुः अग्रहीषुर्जगृहुः। आर्षः। अत्र ब्रह्मणो मनसि सत्त्वांशः प्रसाद आविरभूत् ततो देवा बभूवुः। स च प्रसादो दिनं बभूव। तच्च ते जगृहुरित्येतावानाशयः॥ २२॥ देवता इति स्त्रीत्वेन निर्दिष्टानामप्यर्थमात्रविवक्षया ते इति पुंस्त्वेन प्रतिनिर्देशः। एवं यक्षरक्षांसीत्यत्रापि ज्ञेयम्। ब्रह्मणो मनसि राजसः कामोऽभूत्ततः असुराः जाताः। स च कामः सन्ध्याऽभूत् तां चासुरा जगृहुरित्याह—देव इति। देवो ब्रह्मा जघनतः कटिमारभ्य जानुपर्यन्तो जघनः तस्मात् अतिलोलुपान् कामप्रदेशजातत्वेन स्त्रीष्वतिलम्पटान् अदेवान् असुरान् सृजति स्म असृजत्। अतस्ते लोलुपतया एनं ब्रह्माणमेव मैथुनाय अभिपेदिरे प्राप्ताः॥ २३॥ तत इति। स भगवान् ब्रह्मा तेषां कामचेष्टां दृष्ट्वा हसन् जातः। ततश्च निरपत्रपैर्निर्लज्जैस्तैरसुरैरन्वीयमानः हठादनुगम्यमानस्तन्निवृत्त्यर्थं क्रुद्धो जातस्ततोऽपि निवृत्तिमदृष्ट्वा भीतः संस्तरसा वेगेन परापतत् पलायत॥ २४॥ स इति। स ब्रह्मा वरदं प्रपन्नाना-

मार्तिहरं भक्तानामनुग्रहाय तदिच्छानुरूपमेवात्मानं दर्शयतीति तथा तं हरिम् उपव्रज्य गत्वा प्रार्थितवान् इति शेषः ॥ २५ ॥ पाहीति । हे परमात्मन् ! हे प्रभो ! ते तव प्रेरणयाऽहं प्रजाः असृजं ता इमाः पापाः पापिष्ठाः प्रजाः मामेव यभितुं मैथुनेन धर्षयितुम् । इडार्षः । उपाक्रामन्ति अनुगच्छन्ति । अतस्ताभ्यो मां पाहि ॥ २६ ॥ त्वमिति । क्लिष्टानां लोकानां क्लेशनाशनस्त्वमेक एव तवानासन्नौ अनाश्रितौ पादौ यैस्तेषां त्वद्विमुखानां क्लेशदोऽपि किल त्वमेक एव ॥ २७ ॥ स इति । विविक्तमसंदिग्धमध्यात्मदर्शनं परचित्तज्ञानं यस्य सः भगवान् अस्य ब्रह्मणः कार्पण्यं दैन्यमवधार्य निश्चित्य घोरां कामकश्मलामात्मनः स्वस्य तनुं विमुञ्चेत्युक्तवान् । इत्येवमुक्तो ब्रह्मा तां तनुं विमुमोच ॥ २८ ॥ मत्वा मूढधियः स्त्रियमित्यग्रिमोक्तेः तां सन्ध्यामेव स्त्रियं कल्पयित्वा स्त्रीलम्पटा असुरा मुमुहुरित्याह—तामिति त्रयम् । हे धर्म विदुर ! नूपुराभ्यां क्वणन्ती चरणाम्भोजे यस्यास्तां मदेन विह्वले लोचने यस्यास्तां काञ्चीकलापेन विलसत् यद्दुकूलं तेनाच्छन्नं रोधः कटितटं यस्यास्तां नभसि सशब्दमुड्डीनाः पक्षिण एव नूपुरकाञ्च्यादयः सन्ध्यारुण्यमेवारुणदुकूलम् अन्योन्याश्लेषया उपमर्देन हेतुना उत्तुङ्गौ निरन्तरौ अन्तरालरहितौ पयोधरौ यस्यास्ताम् । श्लेषयेति भिदादिकल्पनयाङ् ततष्टाप् ङित्यपि गुण आर्षः । सुपां सुलुगिति टाप्रत्ययस्य यादेशो वा । अत्र तत्तदाकारा मेघखण्डा एव करचरणस्तनादयः सुष्ठु नासा यस्यास्तां सुद्विजां सुदतीं स्निग्धः स्नेहपूर्वको हासो लीलावलोकनं कटाक्षनिरीक्षणं च यस्यास्तां व्रीडया लज्जयाऽऽत्मानं देहं गूहन्तीं वस्त्राञ्चलेनावृण्वानां नीलानामलकानां वरूथः स्तोमो विद्यते यस्यास्ताम् । अन्तरा छिद्रोत्थौ यत् किञ्चित्सूर्यप्रकाशावेव हासावलोकने कदाचित्तत्तन्मेघखण्डान्तर्द्धानं लज्जया निगूहनम् ऊर्ध्वत लर्यन्तपतितदीर्घश्याममेघखण्डाः नीलालकाः ब्रह्मणा विसृष्टां तनुं स्त्रियं स्त्रीरूपामुपलभ्य दृष्ट्वा सर्वेऽसुराः सम्मुमुहुः ॥ २९–३१ ॥

अहो इति । अस्याः स्त्रिय अहो आश्चर्यं रूपं सौन्दर्यम् । अहो नवं नवीनं वयः । अहो धैर्यं यतः कामयमानानामस्माकं मध्य इयमकामेव विसर्पति विचरतीति स्वात्वात्कामस्त्वति इतीवशब्दः ॥ ३२ ॥ वितर्कयन्त इति । विश्रम्भात् अस्मान् स्वीकरिष्यतीति विश्वासात् तां प्रमदाकृतिं सन्ध्यामभिसंभाव्य कुशलप्रश्नादिना सत्कृत्य बहुधा वितर्कयन्तः कुमेधसः असुराः पर्यपृच्छन् । असिजार्षः ॥ ३३ ॥ काऽसीति । हे रम्भोरु ! हे भामिनि ! त्वं का किंजातीयाऽसि कस्य भार्यादिः असि अत्रागमने ते तव कोऽर्थः प्रयोजनं रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रयाह तेन तत्प्रदर्शनेन दुर्भगान् तन्मूल्यदाने असमर्थान् दरिद्रान्नोऽस्मान् विबाधसे कामोद्दीपनेन पीडयसि ॥ ३४ ॥ या वेति । हे अवले ! किं जात्यादिप्रश्नेन या वा काचित्त्वं भव । तव सदर्शनं तु दिष्ट्या अस्मद्भाग्येनैव जातम् । परन्तु ईक्षमाणानामस्माकं मनः कन्दुकक्रीडया उत्सुनोषि कामोद्दीपनेन विमथ्नासि । अस्तं गच्छन् चञ्चलः सूर्य एव कन्दुकः ॥ ३५ ॥ नैकत्रेति । हे शालिनि शोभने ! पतत्पतदङ्गमुच्चलन्तं कन्दुकं मुहुर्वारंवारं करतलेन घ्नन्त्याः । नुमार्षः । ते तव पादपद्मम् एकत्र न जयति न तिष्ठति । यद्वा । नैकत्र अनेकगतिविलासेषु जयति सर्वोत्कर्षेण वर्त्तते । बृहतोः स्तनयोर्भाराद्भीतं तव कृशं मध्यमुदरं विषीदति श्राम्यति । अमला क्रोधादिविकाररहिता तव दृष्टिः शान्ता मन्थरेव प्रसरति । सुशिखासमूहः शोभनः केशकलापश्चास्ते । सुशिखाः समूहेति पाठे तु शोभनान् केशान् अवकीर्यमाणान् समूहवधानेत्यर्थः । मेघविच्छेदो मध्यविषादः तारकारूपा दृष्टिः तम एव केशा इत्याद्यूह्यम् ॥३६॥ इतीति । इत्येवं वदन्तो मूढधियः भ्रान्तचित्ता असुराः प्रमदायतीं प्रमदावदाचरन्तीं क्यङन्ताच्छता नुमभावश्चार्षः । कामोद्दीपनेन प्रलोभयन्तीं सायन्तनीं सन्ध्यां स्त्रियं मत्वा जगृहुः ॥ ३७ ॥ ब्रह्मणो यदा सौन्दर्यं स्मृत्यारूढमभूत् तदा तस्माद्गन्धर्वादयोऽभूवन् सौन्दर्यं च ज्योत्स्नाभूतां च ते जगृहुरित्याह—प्रहस्येति । भावेनाभिप्रायेण गम्भीरं दुरवगाहं यथा स्यात् तथा प्रहस्य आत्मना स्वयमेवात्मानं जिघ्रन्त्या कान्तिकान्तिमतोरैक्योपचारात् कान्त्या सौन्दर्येण भगवान् ब्रह्मा गन्धर्वाप्सरसां गणान् ससर्ज । प्रहसनमात्मावघ्राणं च सौन्दर्यानुभवचातुर्यविकारः ॥ ३८ ॥

विससर्जेति । तां चैतामपि कान्तिमतीं सौन्दर्ययुक्तामत एव प्रियां तनुं विससर्ज त्यक्तवान् । तां च त्यक्तां ज्योत्स्नां चन्द्रिकाभूतां तनुं त एव विश्वावसुः पुरोगमो मुख्यो येषु ते गन्धर्वादयः प्रीत्या आददुः गृहीतवन्तः । तङभाव आर्षः ॥ ३९ ॥ कदाचिद् ब्रह्मण आलस्यमभूत् तस्माच्च भूतपिशाचाद्या बभूवुः । तच्चालस्यं जृम्भादिरूपमभूत् । तच्च त एव जगृहुरित्याह—सृष्ट्वेति । आत्मनस्तन्द्रिणा आलस्येन । पुंस्त्वमार्षम् । भगवान् ब्रह्मा भूतपिशाचांश्च सृष्ट्वा तान् दिग्वाससो नग्नान् मुक्तकेशांश्च वीक्ष्य दृशो नेत्रे न्यमीलयत् ॥ ४० ॥ जगृहुरिति सार्द्धम् । तां च तेन विसृष्टां प्रभोर्ब्रह्मणः जृम्भणाख्यां तनुं ततो ज ता भूतप्रेतादयो जगृहुः । तस्या एव आलस्यं जृम्भणं निद्रा उन्माद इति चतुर्विधभेदो द्रष्टव्यः । यया इन्द्रियाणां विक्लेदो वैवश्यं भूतेषु दृश्यते तां निद्रां प्रचक्षते । येन दोषविशेषेण उच्छिष्टान् मलमूत्रादिसंयुक्तान् प्राणिनः भूतादयो धर्षयन्ति भ्रान्तान् कुर्वन्ति तं धषमुन्मादं प्रचक्षते । अतः प्रेतादिधर्षिता उन्मत्ता उच्यन्ते ॥ ४१ ॥ कदाचिदात्मनो बलिष्ठत्वं पारोक्ष्यञ्च भावयामास । ताभ्यां साध्याः पितरश्च बभूवुः । ते च हव्यकव्ये बभूवतुरित्याह—ऊर्जस्वन्तमिति । भगवान् प्रभुः अजः ब्रह्मा आत्मानमूर्जस्वन्तं बलवन्तं मन्यमानः परोक्षेण अदृश्यरूपेण साध्यान् गणान् पितृगणांश्चासृजत् ॥ ४२ ॥ त इति । ते तु साध्याः पितरश्च आत्मनां सर्गो यस्मात्तं ब्रह्मणा

सृष्टं कायं हव्यकव्याम्नरूपं प्रतिपेदिरे जगृहुः। यत् येन सम्प्रदानत्वनिमित्तेन कायेन कवयः कर्मकोविदाः साध्येभ्यः पितृभ्यश्च वितन्वते श्राद्धादिना हव्यं कव्यं च ददति ॥ ४३ ॥ अन्तर्द्धा ं भावयामास यस्माच्च सिद्धविद्याधरा बभूवुरित्याह—सिद्धानिति। स ब्रह्मा तिरोधानेन दृश्यत्वे सत्यप्यन्तर्द्धानशक्त्या सिद्धान् विद्याधरांश्च देवविशेषान् असृजत्। तेभ्यः सिद्धादिभ्योऽन्तर्द्धानाख्यमद्भुतमात्मानं शरीरमदात् ॥ ४४ ॥ आत्मनः प्रतिबिम्बं भावयामास त ाच्च किन्नरकिंपुरुषा बभूवुरित्याह—स किन्नरानिति। प्रभुर्ब्रह्मा आत्माभासं प्रतिबिम्बं दर्पणं वा विलोकयन् प्रतिबिम्बसौन्दर्यदर्शनेन अहं सुन्दर इत्यात्मनैवात्मानं सुन्दरं मानयन् प्रत्यात्म्येन तेन प्रतिबिम्बेन सकिन्नरान् किंनरसहितान् किंपुरुषान् असृजत्। आत्मना आत्मनो माननं च सुन्दरस्य प्रतिबिम्बदर्शिनः शिरःकम्पादिचेष्टाः अत एव तत्सृष्टानां मिथः संमाननेन नित्यं मिथुनीभावः ॥ ४५ ॥ ते त्विति। यत् प्रतिबिम्बात्मकं रूपं स्त्रीपुंसयोः पारस्परिकदर्शनरूपमभूत् तत्तु परमेष्ठिना ब्रह्मणा त्यक्तं ते किंनराः जगृहुः। अतस्ते उषसि प्रातःकाले कर्मभिः तत्पराक्रमानुवर्णनैस्तमेव मिथुनीभूय स्त्रीपुरुषौ मिलित्वा गायन्तो जाताः ॥ ४६ ॥ मनसैव शयानं देहं तत्याज स चाहिसर्पादिरूपोऽभूदित्याह—देहेनेति। सर्गे अनुपचिते वृद्धिमप्राप्ते सति कथं वृद्धिः स्यादिति बहुचिन्तया भोगवता भोग आभोगो विस्तारः पादादिप्रसारणं तद्वता देहेन शयानः मनोरथापूर्त्तौ क्रोधात् तत् भोगक्रोधयुक्तं वपुरुत्ससर्ज त्यक्तवान् ॥ ४७ ॥

य इति। अङ्ग हे विदुर! अमुतः अमुष्मात्। ये केशा अहीयन्त प्रच्युता जातास्ते अहयो जज्ञिरे प्रसर्पतः पादाद्याकुञ्चनादिना प्रचलतोऽमुष्मात् देहाद्ये हस्तपादाद्याः विच्युतास्ते सर्पाः। ये च मुण्डकन्धराद्यास्ते नागाः। अगा न भवन्तीति नागाः अतिवेगवन्तः। भोगवतो जातत्वात् भोगेन फणेन उरुर्विस्तीर्णा कन्धरा येषां सर्वे चैते तत्क्रोधयोगात् क्रूराश्च तेषामवान्तरजातिभेदः सर्पसिद्धान्ते प्रसिद्धः ॥ ४८ ॥ सृष्टिर्मे पूर्णैव समपद्यतेति मिथुनं सिसृक्षतस्तस्य मनसि यदा आनन्दो बभूव तदा तस्मान्मनवोऽभूवन्। ते च सृष्टिपूर्तिमयीं पुरुषाकारतां जगृहुरित्याह—स इति। सः आत्मभूर्ब्रह्मा यदात्मानं कृत्यकृत्यमिव मन्यमानोऽभूत्तदा अन्ते लोकभावनान् सर्वलोकपालान् मनून् मनसा ससर्ज। तेषु तदानीं स्वायंभुवो मनुः प्रकटं सर्वैरदृश्यत। अन्ये च यथासमयं दृश्या इति ज्ञेयम्। अन्ते इत्युपादानान्मनुसर्गः सर्वान्तेऽभूदिति। अतस्तदनन्तरं वक्ष्यमाण ऋषिसर्ग एतत्पूर्वमेव ज्ञेय इत्याहुः ॥४९॥ तेभ्य इति। आत्मवान् जीवानां स्वामी स ब्रह्मा तेभ्यो मनुभ्यः स्वीयं पुरुषं पुरुषाकारं परं देहम् असृजत् ददौ। तान् मनून् दृष्ट्वा ये पुरा तेभ्यः पूर्वं सृष्टा देवादयस्ते तं प्रजापतिं प्रशशंसुः ॥ ५० ॥ अहो इति। हे जगत्स्रष्टः! अहो बत एतन्मनुष्याकारनिर्माणं ते त्वया सुकृतं कृतं सुष्ठु कार्यं कृतम्। यस्मिन् पुरुषशरीरे क्रियाः स्वर्गादिसाधनभूताः प्रतिष्ठिताः सर्वाः क्रियाः पुरुषशरीरसाध्या इत्यर्थः। अतः साकं पुरुषशरीरेण सह यज्ञादिद्वारा वयमप्यन्नं भोगजातमदामहे अनुभवेम। शब्लुगभावः तङ् चार्षः। हे इति संबोधनेऽव्ययं वा लोट् च अत्र दशमद्वादशविंशाध्यायेषु क्वचित् क्रमेण क्वचित्क्रमातिक्रमेणाप्युक्तानां सर्गाणामयं क्रमो ज्ञेयः—आदौ पञ्चपर्वाविद्या १, ततो वनस्पतिवृक्षादयः २, ततः सर्पादयः ३, ततो गोमहिषादयः ४, तता यक्षराक्षसासुरकिन्नरकिम्पुरुषादयः ५, ततः सनकादिमरीच्यादयः ६, ततो मनुमनुष्याः ७, ततः पूर्वसृष्टा अपि स्त्रीपुंसरूपेण वर्द्धन्ते स्म। अत्रर्षिसर्गः पश्चादुक्तोऽपि पूर्वमेव ज्ञेयः सनकादिष्वन्तर्भूतश्च। तदनन्तरं रुद्रोद्भवस्तश्च मरीच्यादिसृष्टिर्द्वादशाध्याये ज्ञेया ॥ ५१ ॥ तपसेति। तपसा ज्ञानेन विद्यया उपासनया सुष्ठु समाधिश्चित्तैकाग्र्यं यत्र तेन योगेन च युक्तः हृषीकेशः वशीकृतेन्द्रियश्च सन् ऋषिर्ब्रह्मा ऋषीन् ऋषिरूपाः अभिमताः सुकृतप्रधानत्वात् प्रियाः प्रजाः ससर्ज ॥ ५२ ॥ तेभ्य इति। तत्पूर्वोक्तमृषीणामुत्पादकं समाधिपर्यन्तो योगश्च तज्जनिता ऋद्धयः अणिमादयः सिद्धयश्च तपो ज्ञानं च विद्या उपासना च विरक्तिश्च तद्वत् यच्छरीरं तस्य देहस्यैकैकशोंऽशं तेभ्य ऋषिभ्योऽदात्। एकस्मै एकस्मै यथाऽधिकारं भक्तिज्ञानयोगादिषु मध्ये एकमेकमदादित्यर्थः। अत एव केचिज्ज्ञानप्रधानाः केचिद्भक्तिप्रधानाः केचिद्योगप्रधाना दृश्यन्त इत्याशयः ॥ ५३ ॥

इति श्रीमद्भागवते तृतीये स्कन्धेऽन्वितार्थप्रकाशिकायां विंशोऽध्यायः ॥ २० ॥

—:❀:—

# अथैकविंशोऽध्यायः

विदुर उवाच

स्वायम्भुवस्य च मनोर्वंशः परमसंमतः । कथ्यतां भगवन् यत्र मैथुनेनैधिरे प्रजाः ॥ १ ॥

एकविंशे कर्दमस्य देवहूत्या सहाच्युतः । विवाहयोगं प्राहात्र श्लोकाः सार्धा रसेषवः ( ५६ ॥ ) ॥

प्रदुवाचेति संपूर्णा ( ६१ ) एकषष्टिरनुष्टुभः ॥ २१ ॥

स्वायंभुवस्येति । हे भगवन् ! चकारोऽप्यर्थे । प्रजापतिवंशस्तु त्वया कथितः । परमैः सद्भिः सम्मत आदृतः स्वायंभुवस्य मनोरपि वंशः कथ्यताम् । यत्र वंशे स्त्रीपुंसयोर्मैथुनेन हेतुना प्रजा एधिरे ववृधिरे । आमभावः आर्षः ॥ १ ॥ प्रियव्रतेति । स्वायंभुवस्य वै सुतौ प्रियव्रतोत्तानपादौ यथा येन प्रकारेण वर्णाश्रमप्रयुक्तं धर्मं सप्तद्वीपवतीं महीं च जुगुपतुः तत्र कथ्यताम् ॥ २ ॥ तस्येति । हे अनघ ! हे ब्रह्मन् ! तस्य वै स्वायंभुवस्य एव दुहिता पुत्री देवहूतिरिति विश्रुता प्रसिद्धा । देहहूतिरिति ह्रस्वान्तस्य इतिशब्देन सह सुपेति समासः । कर्दमस्य प्रजापतेः पत्नी त्वयोक्ता ॥ ३ ॥ तस्यामिति । महायोगी सः कर्दमः योगलक्षणैर्यमादिभिर्युक्तायां तस्यां देवहूत्यां कतिधा कतिभिः प्रकारैः वीर्यं ससर्ज कत्यपत्यान्यसृजत् । तत् शुश्रूषवे श्रोतुमिच्छवे मह्यं वद ॥ ४ ॥ रुचिरिति । हे ब्रह्मन् ! यो भगवान् ब्रह्मणः सुतः स रुचिर्दक्षो वा दक्षश्च मानवीं मनुपुत्रीं यथाक्रममाकूतिं प्रसूतिं च भार्यां लब्ध्वा भूतानि अपत्यानि यथा ससर्ज तत्र वदेत्यनुषङ्गः ॥ ५ ॥ प्रजा इति । ब्रह्मणा प्रजाः सृजेति उदितः उक्तो भगवान् कर्दमः सरस्वत्यां तत्तीरे सहस्राणां दश समा दशसहस्रसंवत्सरान् तपस्तेपे चकार ॥ ६ ॥ तत इति । ततस्तस्मिन् तपसि यद्वा ततस्तपश्चरणानन्तरं तावतापि तपसा दर्शनमप्राप्येत्यर्थः । कर्दमः समाधिश्चित्तैकाग्र्यं तद्युक्तेन क्रियायोगेन पूजाप्रकारेण प्रपन्नानां वरदाशिषं वरप्रदं "दाश्वान् साह्वान्" इति छान्दसो निपातः हरिं भक्त्या संप्रपेदे सिषेवे ॥ ७ ॥ तावदिति । यावत्संप्रपेदे तावत् पुष्कराक्षः भगवान् प्रसन्नः सन् कृते युगे शाब्दं वेदप्रतिपाद्यं यद् ब्रह्म सच्चिदानन्दात्मकं तन्मयं वपुर्दधत् सन् कर्दमं प्रत्यात्मानं दर्शयामास ॥ ८ ॥ स इति चतुष्कम् । विरजं निर्मलम् अर्कस्येवाभा दीप्तिर्यस्य तं पद्मोत्पले दिनरात्रिविकासे सितानां पद्मानामुत्पलानां च स्रक् यस्य तं स्निग्धाः चिक्कणाश्च ते नीलाश्च ये अलकाः केशास्तेषां व्रातः समूहो वक्त्राब्जे यस्य तं विरजं निर्मलमम्बरं वस्त्रं यस्य तं किरीटधारिणं त्रिभिर्हस्तैः शङ्खचक्रगदाधरं श्वेतोत्पलं क्रीडनकं क्रीडासाधनं यस्य तमेकेन चतुर्थेन हस्तेन कमलं भ्रमयन्तमित्यर्थः । मनःस्पर्शं मनस्यानन्दजनकं स्मितमोक्षणं च यस्य तं गरुत्मतः गरुडस्य अंसदेशे स्कन्धप्रदेशे विन्यस्ते निहिते चरणाम्भोजे येन तम् आकाशे अवस्थितं वक्षसि श्रीर्लक्ष्मीर्यस्य तं कौस्तुभरत्नं कन्धरायां यस्य तं भगवन्तं दृष्ट्वा लब्धो मनोरथो यस्य सः अतो जातहर्षः प्रीतिस्वभाव आत्मा यस्य सः कर्दमः मूर्ध्ना क्षितावपतत् दण्डवत् प्रणतवान् । ततश्च कृताञ्जलिः सन् गीर्भिस्त्वभ्यगृणात् तुष्टाव ॥ ९–१२ ॥

जुष्टमिति । हे ईड्य ! अखिलसत्त्वराशेः सत्त्वकार्यज्ञानादिपूर्णस्य तव दर्शनान्नोऽस्माभिरद्यादगोः सांसिद्धयं साफल्यं जुष्टं सेवितं प्राप्तमित्यर्थः । इतः पूर्वमक्षिणी विफले अभूतामित्यर्थः । यस्य तव दर्शनं सद्भिः पुण्यप्रकर्षवद्भिर्जन्मभिः रूढयोगाः सिद्धयोगाः योगिनः आशासते प्रार्थयन्ते ॥ १३ ॥ य इति । हे ईश ! ये तव मायया हतबुद्धयो भवन्ति ते भवसिन्धोः पोतं त्वत्पादारविन्दं कामानां लवाय तं प्राप्तुमुपासते । त्वं तु तेभ्योऽपि कामान् रासि ददासि । ये कामास्तैः प्रार्थ्यन्ते ते कामा निरये नरकतुल्यसूकरादियोनिष्वपि स्युः ॥ १४ ॥ तथेति । यः कामान्निन्दामि सोऽहमपि तथा निन्दायोग्य एव । यतः गृहमेधो गृहाश्रमस्तत्र धेनुं धर्मार्थकामरूपत्रिवर्गदोग्ध्रीं समानशीलां भार्यां परिवोढुकामः परिणेतुमिच्छन्नेव दुराशयः कामासक्तचित्तोऽहम् अशेषस्य सर्वपुरुषार्थस्य मूलं कामदुघाङ्घ्रिपस्य भक्तप्रार्थितार्थप्रदकल्पवृक्षस्य तव मूलमङ्घ्रिमूलमुपेयिवान् उपगतोऽस्मि ॥ १५ ॥ ननु मुक्तय एव किमिति न भजसि अनधिकारादित्याह—प्रजापतेरिति । हे अधीश ! हे शुक्ल शुद्ध ! प्रजापतेः प्रजापालकस्य ते तव वचसा "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते" इत्यादिवेदरूपेण तन्त्या दाम्ना अयं कामैर्हतः अभिभूतः सर्वोऽपि लोकः अनुबद्धः पशुवत्तत्तत्कर्मणि नियुक्त तत्तत्कर्म करोतीत्यर्थः । अहं च किल लोकानुगतः कामहत एव । अतोऽनिमिषाय

कालात्मने तुभ्यं त्वां प्रसादयितुं बलिं हरामि कर्ममयीं च त्वदाज्ञां पालयामि। अतस्तदर्थं भार्यां चेच्छामीति चकारस्यार्थः। ऋणत्रयापाकरणार्थमिति किलेत्युक्तम् ॥ १६ ॥ लोकानिति। ये लोकान् कामाभिभूतान् जनान्ताननुगतान् अनुसृतान् पशून् यज्ञांश्च हित्वा अनादृत्य ये ते तव चरणरूपमातपत्रं नानाविधतापत्रयनिवर्तकं छत्रमाश्रितास्ते परस्परं यः त्वद्गुणानां वादः कथा तदेव सीधु मद्यं संसारविस्मारकत्वात् पीयूषममृतं रुचिकरत्वात् तेन निर्यापिताः निरस्ता देहधर्माः क्षुत्पिपासादयो यैस्तादृशा भवन्ति ॥ १७ ॥ न ते इति। अजरं ब्रह्म तस्मिन् अक्षरूपे भ्रमिर्भ्रमणरूपम् अविभ्रमणशीलत्वादुपचारेण भ्रमिरूपनिर्देशः। यद्वा। अजरात्ते भ्रमिर्भ्रमण यस्य तत्। पुंस्त्वमार्षम्। अधिकमासेन सह त्रयोदश मासाः अरा नेभिं नामि च प्रविष्टा यस्य तत् एकैकस्यारस्य त्रिंशत् त्रिंशत् एवं त्रिशतं त्रिगुणं शतं षष्टिश्चाहोरात्राः पर्वाणि ग्रन्थिविशेषा यस्य तत् शतशब्दे विभक्तेरलुगार्षः। षट् ऋतवो नेमयो यस्य तत् अनन्ताः क्षणलवादयश्छदाः पत्राणि पत्राकाराः धाराः सन्ति यस्य तत् त्रीणि चातुर्मास्यानि नाभयश्चक्रमध्यस्थाः सच्छिद्रा वर्तुलाकारा अक्षाधारभूताः यस्य तत् करालस्रोतः तीव्रवेगं ते तव यत् वत्सरात्मकं कालचक्रं तत्सर्वं जगत् आच्छिद्य आकृष्य धावदपि वृथैव विनाशयदपि एषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवति प्रतिक्षणं त्वद्भजनेन सफलत्वात् ॥ १८ ॥

एक इति। प्रथमं भगवान् त्वमेक एव सन्नपि जगतः सिसृक्षया आत्मन् स्वात्मन्येव। ङिलुक् छान्दसः। अधि अधिकृतया अद्वितीयया स्वशक्तिभूतया योगमायया आविर्भूताभिः स्वशक्तिभिः रजःसत्त्वतमोरूपाभिः अदो विश्वं सृजसि पासि पुनर्ग्रसिष्यसे चेति ऊर्णनाभिः कीटविशेषो यथा तथा ॥ १९ ॥ नेति। हे अधीश! नोऽस्माकं भक्तानामस्मदभिलाषानुरोधेन यद् भूतसूक्ष्मरूपं पदं शब्दादिविषयसुखं मायया तनुषे विस्तारयसि ददासि तदेतद्यपि तवेप्सितमिष्टं न भवति तथापि अस्मदनुग्रहायास्तु। ऋणत्रयापाकरणानन्तरमेव मोक्षायास्तु। तदपि कृपया देहीत्यर्थः। यर्हि यतः मायया परिच्छिन्न इव लसन्ती तुलसी यस्यां तथाभूतया। कवभाव आर्षः। तनुवा तन्वा "तन्वादीनां छन्दसि बहुलम्" इत्युवङ्। विलक्षितो दृष्टोऽसि। एवंभूतस्य तव दर्शनं भुक्तिमुक्तिप्रदमित्यर्थः। यद्वा। एतत्पदं मत्काम्यमानं वस्तु भक्तहितेच्छोस्तव दातुमीप्सितं न भवति। न राति रोगिणे पथ्यमिति त्वदुक्तेः। यच्च नोऽस्मभ्यं भूतसूक्ष्मं शब्दादिविषयं तनुषे ददासि तत्खलु माययैव मदनुरोधेनैवेत्यर्थः। तथापि दीयमानमेतन्ममानुग्रहायास्तु त्वत्कृपाप्राप्त्यर्थमप्यस्तु। यतः यर्हि वरदानसमये लसत्तुलस्या तनुवा विशेषेण लक्षितो दृष्टोऽसि। अतस्तव दर्शनदानमेव कृपायां लिङ्गम् ॥ २० ॥ तामिति। अनुभूत्या आत्मज्ञानेनैव उपरतः अनपेक्षितः क्रियार्थः क्रियासाध्यं फलं यस्य तं स्वमायया आवर्तितं सम्पादितं लोकस्य तन्त्रमुपकरणं येन तम् अल्पीयसि अत्यल्पेऽप्याराधने सकामे भक्तेऽपि वा कामान् वर्षतीति तथा तम् अत एव नमनीयं वन्दनीयं पादसरोरुहं यस्य तमेवंभूतं भुक्तिमुक्तिप्रदं त्वा त्वामभीक्ष्णं पुनः पुनर्नमामि ॥ २१ ॥ इतीति। इत्येवम् अव्यलीकं निष्कपटं यथा तथा प्रस्तुतः स्तुतः सुपर्णस्य गरुडस्य पक्षयोरुपरि रोचमानः प्रेमस्मिताभ्यां सहितेनोद्वीक्षणेन विभ्रमन्ती भ्रूर्यस्य सः अब्जनाभः भगवान् अमृतेन अमृतवत्सुखकरेण वचसा तं कर्दमं प्रत्यावभाषे ॥ २२ ॥ विदित्वेति। यदर्थं यस्य कन्यालाभस्यार्थमात्मनो नियमैः शमदमादिभिस्त्वयाऽहमेवं समर्चितः सम्यक् पूजितस्तत् तव चैत्त्यं चित्तगममभिप्रायम्। दिगादियदन्तात्स्वार्थेऽण्। विदित्वा ज्ञात्वा मे मया पुरा त्वद्विज्ञापनात्पूर्वमेव समयोजि सम्यक् सम्पादितम् ॥ २३ ॥ न वै इति। हे प्रजाध्यक्ष! मयि संगृभितः एकाग्रीकृत आत्मा चित्तं यैस्तेषाम्। "हृग्रहोर्भः०" इति छान्दसो भकारः। ह्रस्वत्वमार्षम्। मदर्हणं मदाराधनं जातु कदाचिदपि मृषा निष्फलं नैव स्यात्। भवद्विधेषु तु सुतरां मदर्हणं निष्फलं न भवति ॥ २४ ॥ प्रजापतीति। यो ब्रह्मावर्त्ताख्यं पुण्यक्षेत्रमधिवसन् सप्तार्णवां सप्तसमुद्रवतीं महीं शास्ति स सम्राट् प्रजापतेर्ब्रह्मणः सुतः विख्यातं मङ्गलं सदाचरणं यस्य स मनुः स्वायंभुवः अस्ति ॥ २५ ॥ स चेति। हे विप्र! राजर्षिः धर्मकोविदः स मनुश्च त्वां दिदृक्षुः द्रष्टुमिच्छन् परश्वः इतोऽनागते द्वितीयेऽहनि शतरूपया महिष्या सह इह तव स्थाने आयास्यति ॥ २६ ॥

आत्मजामिति। हे प्रभो! असितापाङ्गीं नीलकटाक्षां वयसा शीलेन गुणैर्जितेन्द्रियत्वादिभिश्चान्वितां युक्तां पतिं स्वानुरूपं भर्तारं मृगयन्तीमभिकाङ्क्षन्तीम् आत्मजां स्वपुत्रीम् अनुरूपाय योग्याय ते तुभ्यं दास्यति ॥ २७ ॥ समाहितमिति सार्द्धम्। इमान् परिवत्सरान् दशसहस्रसंवत्सरपर्यन्तं यत्र यस्यां भार्यायां ते हृदयं समाहितम् अभिसन्धानेन स्थितमस्ति। याचते त्वया आत्मनि स्वस्मिन् भृतं स्थापितं वीर्यं नवधा नवकन्यारूपेण प्रसविष्यति। सा नृपवधूः राजकन्या त्वामाशु शीघ्रमेव कामं यथेच्छं भजिष्यति। इडार्षः ॥ २८ ॥ वीर्यं इति अर्द्धम्। त्वदीये वीर्ये त्वद्वीर्यजातासु नवसु कन्यासु ऋषयो मरीच्यादयः अञ्जसा साक्षात् आत्मनः "आत्मा वै पुत्रनामासि" इति श्रुतेः। आत्मांशान् पुत्रान् आधास्यन्ति उत्पादयिष्यन्ति ॥ २९ ॥ त्वं चेति। त्वं च मे मम निदेशं पुत्रोत्पादनाद्याज्ञां सम्यगनुष्ठाय संपाद्य अत एव उशत्तमः शुद्धसत्त्वः ऋणत्रयाद्विनिर्मुक्तो वा तीर्थं पात्रं तेन दानं लभ्यते। मयि तीर्थीकृतः समर्पितः अशेषक्रियार्थः समस्तक्रियाफलं येन तथाभूतः सन्नन्ते मां प्रपत्स्यसे प्राप्स्यसि ॥३०॥ कृत्वेति। आत्मवान् जितेन्द्रियः त्वं सर्वजीवेषु गार्हस्थ्ये अन्नादिप्रदानेन दयां कृत्वा संन्यासे च मत्तः सर्वभूतेभ्योऽभयमस्त्विति

सङ्कल्पेन अभयं दत्त्वा मयि सर्वाधारभूते आत्मानं जगच्च सहैव द्रक्ष्यसि। तथात्मनि स्वस्मिन् अपि मां च द्रक्ष्यसि॥ ३१॥ सहेति। हे महामुने! तव क्षेत्रे भार्यायां देवहूत्यां त्वद्वीर्येण त्वत्कन्यापत्यवृन्देन सह स्वांशकलयाऽहमवतीर्य तत्त्वानां प्रकृतिपुरुषेश्वराणां स्वरूपविवेचनीं संहितां साङ्ख्यशास्त्रं प्रणेष्ये कथयिष्यामि ॥ ३२॥ एवमिति। प्रत्यग् भूतेषु प्रत्याहृतेषु अक्षेषु जायते आविर्भवतीति प्रत्यगक्षजो भगवान् तं कर्दमं प्रति एवमनुभाष्य अथानन्तरं सरस्वत्या नद्याः परिश्रितात् विन्दुसरसः विन्दुसरोवरतीरस्थात् कर्दमाश्रमात् जगाम॥ ३३॥ निरीक्षत इति। तस्य कर्दमस्य निरीक्षतः भक्त्या पश्यत एव सतः। आर्षः शत्ता। अशेषैः सिद्धेश्वरैरभिष्टुतः सिद्धमार्गो वैकुण्ठमार्गो यस्य। यद्वा। अशेषसिद्धेश्वराभिष्टुतश्चासौ सिद्धैर्मृग्यत इति सिद्धमार्गश्च स भगवान् पत्ररथेन्द्रः पक्षिराजो गरुडस्तस्य पक्षैरुच्चारितमुदीर्णं अभिव्यक्तं सामनी बृहद्रथन्तरे यस्मिंस्तत्स्तोमं सामाधारभूतऋक्समुदायमाकर्णयन् ययौ। समस्तपाठे उच्चारितः स्तोमः स्तोत्रीयसमुदायो यस्य तत्सामाकर्णयन् बृहद्रथन्तरे पक्षौ स्तोम आत्मेति श्रुतेः॥ ३४॥ अथेति। शुक्ले शुद्धे भगवति संप्रस्थिते सम्यक् प्रयाते सति अथानन्तरं भगवान् कर्दमर्षिस्तं परस्य इति भगवता निर्दिष्टं कालं प्रतिपालयन् प्रतीक्षमाणो विन्दुसरसि विन्दुसरसस्तीरे स्वाश्रमे आस्ते स्म॥ ३५॥

मनुरिति द्वयम्। हे सुधन्वन् विदुर! सभार्यः शतरूपासहितः मनुः स्वायंभुवः शातकौम्भा सुवर्णमयाः परिच्छदा अलङ्कारा यस्मिंस्तं स्यन्दनं रथमास्थाय आरुह्य तत्र स्वां दुहितरं कन्यामारोप्य दुहितुः पत्यन्वेषणार्थं महीं पर्यटन् सर्वतः संचरन् सन् भगवान् यदहः समादिशत् निर्दिष्टवान् तस्मिन्नहनि शान्तव्रतस्य उपशमशीलस्य मुनेस्तत्पूर्वोक्तमाश्रमपदं प्रति उपायात् आगतः॥ ३६-३७॥ यस्मिन्निति। प्रपन्ने कर्दमे भृशमत्यन्तमर्पितया निहितया कृपया सम्परीतस्य सम्यग् व्याप्तस्य भगवतो नेत्रात् अश्रुबिन्दव. आनन्दाश्रूणि यस्मिन् सरसि न्यपतन्॥ ३८॥ तदिति। तत्सरः वै बिन्दुसर इति नाम्ना प्रसिद्धं सरस्वत्या नद्या परितः श्रितं वलयितम्। परिप्लुतमिति पाठान्तरम्। पुण्यमुपस्पर्शनादिभिः पुण्यजनकं पापनाशनं च शिवमारोग्यकरममृतं तद्वत्स्वादु च जलं यस्मिंस्तत् अत एव महर्षिगणैः सेवितम्॥ ३९॥ पुण्येति। कूजन्तः पुण्या मृगा द्विजाः पक्षिणश्च येषु तैः पुण्यानां द्रुमाणां लतानां च जालैः समूहैर्युक्तमिति शेषः। सर्वेषु ऋतुषु यानि फलानि पुष्पाणि च तैराढ्यं समृद्धं वनराजिः स्वत उत्पन्नवृक्षपङ्क्तिस्तस्याः श्रिया शोभया अन्वितम् ॥ ४०॥ मत्तेति। मत्तैर्द्विजगणैः पक्षिसमूहैर्घुष्टं नादितं मधुपानेन मत्ता ये भ्रमरास्तेषां विभ्रमो विलासो यस्मिंस्तत् मत्ता बर्हिणो मयूरा एव नटास्तेषामाटोपो नृत्यसम्भ्रमो यस्मिंस्तत् मिथ आह्वयन्तो मत्ताः कोकिला यत्र तत्॥ ४१॥ कदम्बेति। कदम्बचम्पकादिभिर्वृक्षैः चूतपोतैराम्रबालकैश्चालङ्कृतम्॥ ४२॥ कारण्डवैरिति। कारण्डवादिभिः पक्षिभिर्वल्गु मनोहरं यथा स्यात्तथा कूजितम्॥ ४३॥ तथैवेति। तथैव हरिणादिभिर्मृगैः गोपुच्छैर्गोलांगूलाख्यैर्वानरभेदैर्हरिभिः सिंहैः मर्कैः मर्कटैः नकुलैः नाभिभिः कस्तूरीमृगैर्वृतम् ॥ ४४॥ प्रविश्येति। सहानुगः अनुगैर्भृत्यादिभिः सहितः आदिराजो मनुस्तत्तीर्थवरं प्रविश्य तस्मिंस्तीर्थे हुतः हुताशनो ब्रह्मचारियोग्योऽग्निर्येन तम् आसीनं मुनिं ददर्श॥ ४५॥ विद्योतमानमिति सार्द्धम्। तपसि चिरमुग्रा तीव्रा युक् योगो यस्य तेन वपुषा विद्योतमानं भगवतो यत्स्नेहयुक्तमपाङ्गेन कटाक्षेणावलोकनं तस्मात् तथा तस्य भगवतो व्याहृतम् भाषणमेवामृतकला अमृतमयस्य चन्द्रस्य कला तन्मयं यत् पीयूषममृतं तस्य श्रवणेन च यद्वा तद्व्याहृतमेवामृतकलस्य चन्द्रस्य आ सम्यक् पीयूषं तस्य श्रवणेन च नातिक्षामं नातिकृशं तपसा कृशं सन्तमपि भगवदवलोकनादिना पुनः किञ्चित् स्थूलत्वं प्राप्तमित्यर्थः। मुनिं ददर्शेत्यनुषङ्गः॥ ४६॥ प्रांशुमिति। प्रांशुमुन्नतमष्टवितस्तिमिततनुं पद्मपलाशवदक्षिणी यस्य तं जटिलं जटाधारिणं चीरं वासो यस्य तमसंस्कृतमनिर्णिक्तम् अर्हन्तेऽनेनेत्यर्हणं महारत्नं यथा मलिनं भवति तथाऽतितेजस्वित्वेऽपि मर्दनादिसंस्काराभावान्मलिनं तं मुनिं उपसंसृत्य समीपमागत्य ददर्शेत्यनुषङ्गः॥ ४७॥

अथेति। अथ उटजं पर्णशालामुपायातं प्राप्तं पुरः पादयोः समीपे प्रणतं नृदेवं मनुं प्रतिनन्द्य आशीर्भिरभिनन्द्यानुरूपया तद्योग्यया सपर्यया पूजया प्रत्यगृह्णात् सत्कृतवान्॥ ४८॥ गृहीतेति। गृहीतमर्हणमासनफलजलादिरूपं येन तम् आसीनमुपविष्टं संयतं स्ववाक्यश्रवणाय तूष्णीं स्थितं मनुं श्लक्ष्णया मधुरया गिरा प्रीणयन् भगवत आदेशं प्रागुक्तं स्मरन् मुनिः कर्दमः इति वक्ष्यमाणमाह स्म॥ ४९॥ नूनमिति। हे देव राजन्! नूनं ते तव चङ्क्रमणं पर्यटनं सतां संरक्षणाय असतां वधाय च। यत् यस्मात् हि त्वं हरेर्भगवतो विश्वपालिनी शक्तिरेव असि॥ ५०॥ मनुस्तं भगवन्तं प्रणमति—य इति। स्थाने जगत्पालने निमित्ते सति स्थान इति युक्तमित्यर्थेऽव्ययं वा। यस्त्वम् अर्केन्द्वादीनां रूपाणि आधत्से बिभर्षि। तत्र प्रतापयशोऽधृष्यत्वैश्वर्यसर्वत्रप्रवेशदुष्टनिग्रहणशिष्टपालनगाम्भीर्यरक्षादिरूपाणि ज्ञेयानि। तस्मै ते तुभ्यं शुक्लाय निर्मलाय भगवते नमः॥ ५१॥ नेति त्रयम्। हे राजन्! यदा त्वं जैत्रं जयप्रदं मणिगणैरर्पितं खचितं मणिगणानामर्पितमर्पणं यत्रेति वा मणिगणा अर्पिता यत्र वा तं रथमास्थायाधिरुह्य विस्फूर्जन्नादं कुर्वत् चण्डं परेषां भयजनकं कोदण्डं धनुर्यस्य सः रथेन रथसान्निध्यमात्रेण अघान् दुराचारान् त्रासयन् स्वसैन्यानां चरणैः क्षुण्णं सङ्कट्टितं भुवो मण्डलं वेपयन् बृहतीं महतीं सेनां विकर्षन् अंशुमान् सूर्य इव रथेन न पर्यटसि तदैव

वर्णाश्रमाणां निबन्धनं यैः ते भगवता रचिताः प्रवर्तिताः सर्वे सेतवः धर्ममर्यादाः दस्युभिर्दुराचारैः भिद्येरन् ॥ ५२–५४ ॥ अधर्म इति । त्वयि दण्डधरे शयाने निश्चिन्ते सति व्यङ्कुशैः निष्प्रतिपक्षैः लोलुपैः केवलमर्थकामपरायणैर्नृभिर्निमित्तभूतैरधर्मश्च समेधेत वर्द्धेत । दस्युभिरुत्पथैर्ग्रस्तोऽयं सर्वोऽपि लोको विनङ्क्ष्यति ॥ ५५ ॥ अथापीति । यद्यपि मर्यादारक्षणायैव मुख्यं तव पर्यटनम् । अथापि हे वीर ! यदर्थं त्वमिहास्मदाश्रमे आगतस्तत्प्रयोजनं पृच्छे । तद्भावः । तत् त्वदागमनप्रयोजनं वयं निर्व्यलीकेन निष्कपटेन सहर्षेण वा हृदा चित्तेन प्रतिपद्यामहे अङ्गीकुर्महे ॥ ५६ ॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायामेकविंशोऽध्यायः ॥ २१ ॥



## अथ द्वाविंशोऽध्यायः

### मैत्रेय उवाच

**एवमाविष्कृताशेषगुणकर्मोदयो मुनिम् । सव्रीड इव तं सम्राडुपारतमुवाच ह ॥ १ ॥**

द्वाविंशे तु सुतां दत्वा कर्दमाय मनुर्निजाम् । स्वपुरं प्रययौ तत्र श्लोकाः सार्द्धा नवान्वयः ( ३९॥ ) ॥
चत्वार्युवाचेति पादोनद्विवेदाः ( ४१॥। ) अनुष्टुभः ॥ २२ ॥

एवमिति । एवमाविष्कृतो वर्णितः अशेषाणां गुणानां कर्मणां चोदय उत्कर्षो यस्य सः । सम्राट् मनुः सव्रीड इव स्वकीर्तिश्रवणात् प्रत्याख्यानाशङ्कया वा सलज्ज इव सन् उपारतं वर्णयित्वा तूष्णीं स्थितं निवृत्तिनिरतमिति वा तं मुनिं प्रत्युवाच ॥१॥ स्वकन्यापरिणयं वक्ष्यन् ब्रह्मक्षत्रसम्बन्ध ईश्वरेणैव कृत इत्याह—ब्रह्मेति । छन्दोमयो वेदरूपः ब्रह्मा ईश्वरः आत्मनः छन्दोमयस्य परीप्सया पर्याप्तुमिच्छया पर्याप्तिः पालनं वेदप्रवर्तनं तस्येच्छया तपोविद्यायोगयुक्तान् अलम्पटान् विषयासक्तिरहितान् वेदप्रवृत्ति-योग्यगुणानिति भावः । युष्मान् ब्राह्मणान् स्वमुखतः असृजत् ॥ २ ॥ तत्त्राणायेति । तेषां ब्राह्मणानां त्राणाय रक्षणायास्मान् क्षत्रि-यान् सहस्रपात् भगवान् दोःसहस्रात् भुजसहस्रात् असृजत् । अतो हि तस्य भगवतो ब्रह्म ब्राह्मणजातिं हृदयं क्षत्रं क्षत्रियं जातिं च अङ्गं भुजं प्रचक्षते वेदज्ञाः कथयन्ति ॥ ३ ॥ अत इति । यत एकस्मादेवोभयोरुत्पत्तिः अतः ब्रह्म ब्राह्मणः क्षत्रं क्षत्रियश्च आत्मान-मन्योन्यं रक्षतः ब्राह्मणः सन्मार्गप्रवृत्त्या क्षत्रियं क्षत्रियो जीविकादिना ब्राह्मणं रक्षतीति वस्तुतो यः सदसदात्मकः कार्यकारणरूपः तथापि अव्ययो निर्विकारः देवः ईश्वरः स एव सर्वान् रक्षति । स्म पादपूर्त्तौ ॥ ४ ॥ तवेति । तव संदर्शनादेव मम धर्मविषयाः सर्वे संशयाः छिन्नाः । यद्यस्मात् स्वयमपृष्ट एव भगवान् भवान् रिरक्षिषोः प्रजापालनेच्छोर्मम धर्ममाह स्म । न यदा रथमास्था-येत्यादिना उक्तवान् ॥ ५ ॥ दिष्ट्येति । यः अकृतात्मनाम् अवशीकृतचित्तानाम् । शेषे षष्ठी । दुर्दर्शः द्रष्टुमशक्यः स भगवान् भवान् मे मया दिष्ट्या भाग्येन दृष्टः । भवतः शिवं मङ्गलकरं पादरजो मे मया दिष्ट्या स्वभाग्येनैव शीर्ष्णा शिरसा स्पृष्टं शिरसि धृतम् ॥ ६ ॥ दिष्ट्येति । दिष्ट्या एवायं त्वया अनुशिष्टः धर्मं शिक्षितः आतिथ्यादिना चास्मद्भाग्येनैव त्वया महान-नुग्रहः अनुशासनादिरूपः कृतः । अपावृत्तैः आवरणरहितैः कर्णरन्ध्रैः उशतीः उशत्यः कमनीयाः । पूर्वसवर्णदीर्घ आर्षः । ते गिरो दिष्ट्या स्वभाग्येनैव जुष्टाः सेविताः श्रुताः ॥ ७ ॥ त्वद्दर्शनात् सर्वे क्लेशा निवृत्ताः । एकः शेषोऽस्ति सोऽपि निवर्तनीत इत्याह—स इति ! हे मुने ! स भवान् दुहितुः स्नेहेन परिक्लिष्टः व्याकुलः आत्मा मनो यस्य तस्य अत एव दीनस्य मम श्रावितं विज्ञापनं कृपया श्रोतुमर्हसि । मध्यमपुरुष आर्षः ॥ ८ ॥ प्रियव्रतेति । प्रियव्रतोत्तानपदोः स्वसा च पुत्रिकाकरणशङ्कानिरासाय मम दुहिता

इयं देवहूतिः वयःशीलगुणादिभिः युक्तं पतिमन्विच्छति ॥ ९ ॥ यदेति। यदा तु नारदादेषा भवतः शीलं श्रुतं विद्यारूपं वयः गुणांश्च अशृणोत्। तदाप्रभृति त्वय्येव कृतो निश्चयः अयमेव मम पतिः योग्य इत्येवंरूपो यथा तथाभूता आसीत् ॥ १० ॥ तदिति। हे द्विजाग्र्य! ततो हेतोः गृहमेधेषु गृहस्थोपयुक्तेषु कर्मसु सर्वात्मना सर्वप्रकारेण ते तवानुरूपामनुकूलां मया श्रद्धयोपसमीप आहृतामानीतामिमां प्रतीच्छ प्रतिगृहाण ॥ ११ ॥

उद्यतस्येति। उद्यतस्य उद्यमं विना स्वत एव प्राप्तस्य कामस्याभिलषितस्य विषयस्य प्रतिवादः प्रत्याख्यानं निर्मुक्तसङ्गस्य विरक्तस्यापि नहि शस्यते शोभनं नैव भवति। शक्यत इति पाठान्तरम्। कामेषु विषयेषु रक्तस्यासक्तस्य प्रतिवादो न शस्यते इति किं पुनर्वक्तव्यम्। तवान्तर्गतं कामं ज्ञात्वैवाहमागतोऽतो मयि नापलपनीयमिति भावः ॥ १२ ॥ य इति। यः पुमानुद्यतं काममनादृत्य प्रतिष्ठानुरोधाल्लज्जया वा प्रत्याख्याय पश्चात् कीनाशं कृपणमदातारमपि जनमभियाचते। तस्य निर्लोभत्वादिना स्फीतमुज्ज्वलमपि यशः क्षीयते याच्ञया नश्यति। महत्त्वाभिमानश्चावज्ञयाऽपमानेन हतो विनष्टो भवति। तेन परिणामदर्शिना वर्त्तमानं वैराग्यं भाविना कामेन ग्रसिष्यमाणमनुमाय प्रथममेव दैवाल्लब्धः अनिषिद्धो विषयः स्वीकार्यः ॥ १३ ॥ अहमिति। हे विद्वान्! त्वा त्वां विवाहार्थं समुद्यतं प्रयतमानमहमशृणवं श्रुतवानस्मि। अत एव यस्य गार्हस्थ्यावधिकं ब्रह्मचर्यं स उपकुर्वाणस्तथाभूतस्त्वमतो मे मया प्रत्तां श्रद्धया दत्तां कन्यां प्रतिगृहाण ॥ १४ ॥ बाढमिति। बाढं सत्यमहमुद्वोढुकामः परिणेतुकामः अस्मि। तवात्मजा पुत्री च अप्रत्ता कस्मैचिद्दातुमप्रतिश्रुता अतोऽसौ वैवाहिको विधिः आद्यः प्रथमः। ततः पूर्वं विवाहाभावात् मुख्यो वा आवयोर्वरकन्ययोरनुरूपो योग्य एव ॥ १५ ॥ काम इति। हे नरदेव! अस्यास्ते पुत्र्याः कामः कामितः समाम्नायविधौ प्रतीतः "गृभ्णामि ते सौभगत्वाय हस्तं पत्या" इत्यादिमन्त्रप्रसिद्धः स विवाहो भूयात्। स्वया एवाङ्गकान्त्या श्रियं भूषणादिकृतशोभां क्षिपतीं तिरस्कुर्वतीमिव स्थितां ते तव सार्वभौमस्य तनयां क एव नाद्रियेत आद्रियेतैवेत्यर्थः। स्वयैव कान्त्या इति वा पाठः ॥१६॥ यामिति। क्वणतोर्नूपुराभ्यां शब्दं कुर्वतोरङ्घ्र्योः पादयोः शोभा यस्या इति वा ताम्। हर्म्यपृष्ठे प्रासादोपरि विक्रीडतीम्। नुमभाव आर्षः। कन्दुके संलग्ने विह्वले चञ्चले अक्षिणी यस्यास्तां यां विलोक्य संमोहेन विमूढं व्याकुलं चेतश्चित्तं यस्य सः विश्वावसुर्गन्धर्वः स्वाद्विमानान्न्यपतत् ॥ १७ ॥ तामिति। तां ललनानां ललामं भूषणभूताम् असेवितौ श्रियो लक्ष्म्याश्चरणौ यैस्तैरदृष्टां द्रष्टुमप्यशक्याम् अतो विश्वावसुनाऽपि आकाशचारिणी तस्याः कान्तिरेव दृष्टा न तु साक्षात् सेति सूचितमित्याहुः। मनोः त्वं वत्सां पुत्रीमुच्चपदः उत्तानपदः स्वसारं भगिनीं स्वयमेवाभियातां प्राप्तां पत्यर्थं प्रार्थयन्तीं बुधः स्वार्थकुशलः को नानुमन्येत नाङ्गीकुर्यात्। प्रियव्रतस्य तदा विरज्य गतत्वान्नोल्लेखः ॥ १८ ॥

अत इति। यावदपत्योत्पत्तिस्तावद्गार्हस्थ्यं ततः संन्यास इति भाषाबन्धः समयः तमाह—अतः मे मम आत्मनो देहात् च्युतं तेजो वीर्यं यावद्बिभृयात्तावदिति समयेन साध्वीमिमां भजिष्ये। इडार्षः। अतोऽनन्तरं पारमहंस्य आश्रमे मुख्यान् प्राधान्येनोपादेयान् शुक्लेन भगवता प्रोक्तान् अविहिंस्रान् हिंसाशून्यान् शमादीन् धर्मान् बहु यथा स्यात्तथा अनुष्ठेयान् मन्ये। अतः तान् अनुष्ठास्यामि तत एनां त्यक्ष्यामीत्याशयः ॥ १९ ॥ ननु ब्रह्मणा त्वं सृष्ट्यैवाज्ञप्तः न तु संन्यास इत्याशङ्क्याह—यत इति। यतः निमित्तभूतादुपादानभूताच्चेदं दृश्यमानं देवादिभेदेन विचित्रं विश्वमभवत् उदपद्यत। यत्र यस्मिंश्च कारणभूते संस्थास्यते प्रलयं यास्यति। यत्र च यत्रैव अवतिष्ठते इदानीं वर्तते। एषः प्रजापतीनामपि पतिः भगवान् अनन्तः परं केवलं मह्यं मम प्रमाणं तेन तु "त्वं च सम्यगनुष्ठाय निदेशं मे" इत्यादिना ऋणत्रयापाकरणानन्तरं संन्यास एवाज्ञप्तः। अत एवमेव करिष्ये ॥ २० ॥ स इति। हे उग्रधन्वन् विदुर! स कर्दमः इयदेव आबभाषे उक्तवान्। ततश्च अरविन्दनाभं भगवन्तं धिया उपगृह्णन् चिन्तयन् तूष्णीं मौनेन आसीत्। स्मितेन मन्दहासेन शोभितं यन्मुखं तेन देवहूत्याश्चित्तं लुलुभे प्रलोभितवान्। तङार्षः। मुनेर्मुखेन कर्त्रा देवहूत्याश्चित्तं प्रलोभ्यते स्मेति वा देवहूत्या मुखेन मुनेश्चित्तं लुलुभे इति वा। एतेन विरक्ताय कन्या दत्तेति मनुशतरूपयोरनुतापो नाभूदिति व्यञ्जितम् ॥ २१ ॥ स इति। अनु तदनन्तरं स मनुः महिष्याः स्वभार्यायाः अस्मै कन्या देयेति दुहितुः स्वकन्याया अयं मम पतिर्योग्य इति च व्यवसितं निश्चितं स्फुटं यथा भवति तथा ज्ञात्वा महिष्या वचसा दुहितुर्व्यवसितं ज्ञात्वेति वा गुणगणैराढ्याय युक्ताय तस्मै कर्दमाय तुल्यां गुणगणयुक्तां कन्यां स्वयमपिः प्रहर्षितः सन् ददौ। प्रधर्षित इति पाठे तु गुणगणविवशः ॥ २२ ॥ शतरूपेति। महाराज्ञी शतरूपा महाधनानमूल्यान् पारिबर्हान् विवाहोचितदेयान् भूषा भूषणानि वासांसि परिच्छदान् गृहोपकरणानि पात्रादीनि दम्पत्योर्दुहितृजामात्रोः प्रीत्या पर्यदात् ॥ २३ ॥ प्रत्तामिति द्वयम्। गतव्यथः वरान्वेषणचिन्तारहितः औत्कण्ठ्येन उन्मथितः क्षुभित आशयो यस्य स सम्राट् मनुः सदृक्षाय सदृशाय वराय प्रत्तां दत्तां दुहितरं बाहुभ्यामुपगुह्यालिङ्ग्य तस्य विरहं सोढुमशक्नुवन् हे अम्ब मातः! हे पितः! हे वत्से! इति परस्परं सम्बोधयन् मुहुः बाष्पकलाः नेत्राम्बुकणान् मुञ्चन् नेत्रोदकैर्दुहितुः शिखाः आसिञ्चत्। वत्सेति सन्धिरार्षः ॥ २४–२५ ॥ आमन्त्र्येति द्वयम्। मुनिवरं कर्दममामन्त्र्यानुज्ञाप्य तेन चानुज्ञातः सन् सभार्यो रथमारुह्य सहानुगो नृपो मनुः ऋषिकुल्यायाः ऋषिकुलहितायाः ऋषीणां नद्या वा सर-

स्वत्या उभयोः सुरोधसोः शोभनतटयोरुपशान्तानामृषीणामामाश्रमस्य सम्पदः फलादिसम्पत्तीः पश्यन् स्वपुरं प्रति प्रतस्थे गमनं कृतवान् ॥ २६–२७ ॥ तमिति । तं स्वपतिं मनुमायान्तमभिप्रेत्य ज्ञात्वा प्रहर्षिताः प्रजा गीतसंस्तुतिवादित्रैः सह ब्रह्मावर्तात् प्रत्युदीयुः । समानेतुं सम्मुखं ययुरित्यर्थः । ब्रह्मावर्तानिति पाठे तु ब्रह्मावर्तान् प्रत्यायातमित्यन्वयः । प्रजापतिमिति समस्तपाठे मनुविशेषणम् । ब्रह्मावर्तस्था जनाः प्रत्युदीयुरिति शेषेणान्वयः ॥ २८ ॥

ब्रह्मावर्तस्थलमाह—बर्हिष्मतीति । यत्र ब्रह्मावर्ते सर्वसम्पत्समन्विता बर्हिष्मती नाम पुरी अस्ति । यत्र स्थाने अङ्गं विधुन्वतः कम्पयतो यज्ञस्य यज्ञवराहस्य रोमाणि न्यपतन् ॥ २९ ॥ बर्हिष्मतीनाम निर्वक्ति—कुशा इति । त एवेति विधेयलिङ्गम् । तानि पतितानि रोमाण्येव शश्वत् सदा हरितं वर्चः वर्णो येषां तथाभूताः कुशाः काशाश्च आसन् जाताः । ऋषयो यैः कुशैः काशैश्च यज्ञघ्नान् यज्ञविरोधिनो राक्षसान् पराभाव्य पराभवं नीत्वा यज्ञमीजिरे कृतवन्तः ॥ ३० ॥ कुशेति । भगवान् मनुरपि कुशकाशमयं बर्हिरा तरणविशेषमास्तीर्य यतो यज्ञात् धृतवराहावतारात् भुवं स्थानं लब्धवान् सन् तृन्नन्तं तमेव यज्ञपुरुषमयजत् । अत एव सा पुरी बर्हिष्मतीति ख्याता । स्वर्गादपि भूः श्रेष्ठा तत्रापि तत्स्थानं श्रेष्ठमित्याशयः ॥ ३१ ॥ बर्हिष्मतीमिति सार्द्धद्वयम् । यां बर्हिष्मतीं नाम पुरीं पूर्वं समावसत् पूर्वं यस्यामुषितः तां निविश्य प्रविश्य तस्यां पुर्यामाध्यात्मिकादितापत्रयविनाशनं भवनं प्रविष्टः प्रत्यूषेषु प्रत्यूषःसु प्रातरारभ्येत्यर्थः । सस्त्रीभिः स्त्रीसहितैः । कवभाव आर्षः । सुरगायकैः गन्धर्वादिभिः सम्यग्गीयमाना सती निर्मला कीर्तिर्यस्य तथाभूतोऽपि सभार्यः सप्रजः सपुत्रश्च विभुः समर्थो मनुः अनुबद्धेन प्रेमानुबद्धेन हृदा हरेः कथाः शृण्वन् । अन्याविरोधतः धर्मार्थमोक्षाणामविरोधेन तत्साधनानुष्ठानपूर्वकं कामान् विषयान् बुभुजे ॥ ३२–३३ ॥ निष्णातमिति द्वयम् । यत् यस्मात् योगमायासु ऐच्छिकभोगरचनासु निष्णातं कुशलमपि भगवत्परं मुनिं मुनितुल्यं स्वायम्भुवं मनु भोगाः आ ईषदपि भ्रंशयितुं चलयितुं न शेकुः । अतः विष्णोः कथाः शृण्वतः तं ध्यायतः तत्सेवां कुर्वतः तन्नामादि ब्रुवतश्च तस्य मनोः स्वान्तरं मन्वन्तराख्यं कालं यापयन्तीति ते यामाः कालावयवाः प्रहरा अयातयामाः सफला आसन् । यातो गतो यामो यस्य पक्वान्नस्य तद् गतसारं यातयाममुच्यते । तथाऽन्यदपि गतसारं निष्फलं यातयाममुच्यते । "जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्" इत्यमरः ॥ ३४–३५ ॥ स इति । वासुदेवप्रसङ्गेन परिभूतं गतित्रयं जाग्रदादिसात्त्विकादिआध्यात्मिकादितापत्रयं वा येन स मनुः एवं युगानामेकसप्ततिपरिमितं कालं निन्ये यापयामास ॥ ३६ ॥ शारीरा इति । हे वैयासे ! व्यासपुत्र विदुर ! अकङभाव आर्ष. । ये शारीराः ज्वराद्याः मानसाः शोकाद्याः आध्यात्मिकाः दिव्या अन्तरिक्षप्रभवाः अनावृष्ट्यादिजन्याः आधिदैविकाः ये च मानुषाः शत्रुजन्या अन्ये च भौतिका व्याघ्रसर्पादिप्रभवाश्च क्लेशाः हरिरेव संश्रयः आश्रयो यस्य तं मनुं कथं बाधन्ते बाधेरन् ॥ ३७ ॥ य इति । यो मनुः सदा सर्वभूतहितः सन् मुनिभिरपि पृष्टो नृणां मनुष्याणां सर्वसाधारणान् तथा वर्णाश्रमाणां विशेषांश्च नानाविधान् शुभान् स्वर्गापवर्गसाधनभूतान् धर्मान् प्राह स्म ॥ ३८ ॥ एतदिति । वर्णनीयस्य कथनीयकीर्त्तेरादिराजस्य मनोरद्भुतमेतच्चरितं ते तुभ्यं मया वर्णितम् । अथ तदपत्यस्य देवहूतेरुदयमुत्कर्षं मत्तः शृणु ॥ ३९ ॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां द्वाविंशोऽध्यायः ॥ २२ ॥

—:֍:—

## अथ त्रयोविंशोऽध्यायः

मैत्रेय उवाच

पितृभ्यां प्रस्थिते साध्वी पतिमिङ्गितकोविदा । नित्यं पर्यचरत् प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥

त्रयोविंशे कामगमे विमाने विविधा रतिः । देवहूत्या कर्दमस्य श्लोकास्तत्र नगेषवः ( ५७ ) ॥
अनुष्टुभोऽत्र ( ६३ ) त्रिषष्टिरुवाचेति तु पञ्चमम् ॥ २३ ॥

पितृभ्यामिति । पितृभ्यां मनुशतरूपाभ्यां प्रस्थिते गमने कृते । भावे क्तः । साध्वी पतिव्रता इङ्गितकोविदा पत्युश्चेष्टादिमात्रेणाभिप्रायज्ञा देवहूतिः प्रभुमीश्वरं भवं रुद्रं भवानी यथा परिचरति तथा पतिं कर्दमं नित्यं प्रीत्या पर्यचरत् सेवितवती ॥ १ ॥ विश्रम्भेणेति द्वयम् । भो विदुर ! कामं दम्भं द्वेषं लोभम् अघं मदं च विसृज्य नित्यमप्रमत्ता सावधाना उद्यता प्रयत्नयुक्ता च देवहूतिः विश्रम्भेण विश्वासेन आत्मनोर्देहमनसोः शौचेन स्नानसंतोषादिजन्येन गौरवेण आदरेण दमेनेन्द्रियनिग्रहेण शुश्रूषया सौहृदेन प्रेम्णा मधुरया वाचा च तेजीयांसं तेजस्विनमपि । ईयसुन् विष्मतोर्लुक् । कर्दममतोषयत् ॥ २–३ ॥ स इति द्वयम् । स वै प्रसिद्धः देवर्षिषु वर्यः श्रेष्ठः कर्दमः मानवीं मनोः कन्यां समनुव्रतां दैवात् अपि गरीयसः दैवमप्यन्यथाकर्तुं शक्तात् पत्युः सकाशात् महाशिषः पुत्रादीन् मनोरथान् आशासानामभिकाङ्क्षन्तीं व्रतचर्यया कर्शितां क्लिष्टां तत्रापि भूयसा कालेन व्रतपरतया क्षामामतिकृशां दृष्ट्वेति शेषः । कृपयातिपीडितः प्रेम्णा गद्गदया स्खलिताक्षरया वाचाऽब्रवीत् ॥ ४–५ ॥ तुष्ट इति । हे मानवि ! मानदायाः मम सम्मानं कुर्वत्यास्तव परमया सुश्रूषया सेवया परया भक्त्या चाद्याहं तुष्टः प्रीतोऽस्मि । यतः त्वया योऽयं समुचितः श्लाघ्यः देहिनामतीव सुहृत्प्रियतमो देहः स मदर्थे क्षपितुं क्षपयितुं नावेक्षित उपेक्षितः तिष्ठतु नश्यतु वेत्येवं न गणितः । त्वं मत्सेवार्थं देहमप्यनादृतवतीत्यर्थः । यद्वा परमपतिव्रतायास्तव देहः मदर्थे क्षपितुं समुचित एवेति ॥ ६ ॥ ये इति । स्वधर्मनिरतस्य मे तपः समाधिर्ध्यानं विद्या उपासना तासु य आत्मयोगश्चित्तैकाग्र्यं तेन विजिताः प्राप्ताः ये भगवत्प्रसादाः दिव्याः भोगाः तानेव अभयान् नरकादिभयरहितान् अशोकान् नाशशङ्काशोकरहितान् ते त्वयापि मदनुसेवनया अवरुद्धान् वशीकृतान् त्वं प्रपश्य । अहं तुभ्यं दिव्यां दृष्टिं वितरामि ददामि । यया दृष्ट्या तान् द्रक्ष्यसि ॥ ७ ॥ अन्ये इति । भगवतः उरुक्रमस्य हरेः भ्रुवः कालस्य उद्विजृम्भः वक्रीभावस्तेन विभ्रंशिता अर्थरचना मनोरथाः येषु ते अन्ये पुनर्भोगाः स्वर्गाद्याः किं न किमपि अतितुच्छा इत्यर्थः । अतः मत्सेवयैव त्वं सिद्धाऽसि कृतार्थाऽसि तस्मात् निजधर्मेण पातिव्रत्येन दुह्यन्ते पूर्यन्ते तान् नरैः कर्तृभिः नृपविक्रियाभिः नृपा वयं भोगयोग्या इति या विक्रियाः अभिमानविशेषाः ताभिर्हेतुभिर्दुरधिगान् अलभ्यान् दिव्यान् अलौकिकान् विभवान् भोगान् भुंक्ष्व ॥ ८ ॥

एवमिति । अखिलाः योगमायाः विचित्रपदार्थरचनाशक्तयो विद्याश्च तत्तदुपासनाः तासु विचक्षणं निपुणं कर्दममेवं पूर्वोक्तप्रकारेण ब्रुवाणमवेक्ष्य अबला देवहूतिः गताधिः विगतमनोव्यथा आसीत् । ततश्च संप्रश्रयः विनयः प्रणयः स्नेहस्ताभ्यां विह्वलया गद्गदाक्षरया गिरा वाचा तमाह स्म । परे त्वाहुः—संप्रश्रयप्रणयाभ्यामेव विह्वलं यथा स्यात्तथा यान्ती कर्दमं प्रति गच्छन्ती या गीस्तया विह्वलयेति विश्वपावत् । ईषद्व्रीडायुक्तोऽवलोक एव विलसद्धसितमाननं यस्याः सा आह स्म । अङ्गनामुकुटमणेस्तस्याः स्फुटं संभोगप्रार्थनाय रसाभासत्वात् तद्व्यञ्जनार्थं लज्जाहसितप्रेक्षितमवलोकमेव मुखं चकार । तेन राद्धमित्यादिवक्ष्यमाणश्लोकाशयं मुनिः स्वयमूहितवान् । सा तु मुखेन किमपि नोवाच । देवहूतिरुवाचेत्यत्रापि इङ्गितेनेति शेषो ज्ञेय इति ॥ ९ ॥ राद्धमिति । हे द्विजवृष द्विजश्रेष्ठ ! हे विभो ! हे भर्तः ! अमोघाः सफलाः योगमायाः शक्तयस्तासामधिपे नियन्तरि त्वयि यदेतत्त्वदुक्तं सर्वं राद्धं सिद्धमस्ति तदहमवैमि जानाम्येव । ते त्वया यः समयोऽभ्यधायि भाषाबन्धः कृतः सकृत् गर्भसंभवमात्रपर्यन्तोऽङ्गसङ्गः स भूयात् । गरीयसि श्रेष्ठे भर्तरि निमित्ते सति सतीनां स्त्रीणां प्रसव एव गुणो महाँल्लाभः प्रसवाभावे तु वन्ध्येयमिति निन्दैवेति भावः । गुणप्रसव इति समस्तपाठे तु गुणानां प्रसव इति अपत्यमिषेण पत्युर्गुणा एव प्रसूयन्ते ताभिरिति

मम मत्तः सदपत्यानि भवन्तु इति गरीयसि पत्यौ सति सतीनां यतो गुणप्रसवः गुणविस्तारो भवति। अतः पुत्रोत्पत्त्या मम गुणविस्तारे जाते पश्चात्त्वदुक्तं पारमहंस्यधर्मानुष्ठानं भवतु इत्याशयः ॥ १० ॥ तत्रेति। हे ईश ! तत्राङ्गसङ्गे यथोपदेशं कामशास्त्रोक्तानुसारेण इतिकृत्यं साधनकलापम् अनङ्गोद्दीपकम् अभ्यङ्गभोजनपानादि उपशिक्ष सम्पादय। तङ्भाव आर्षः। येन साधनेन ते त्वया कृतः संक्षोभितो यो मनोभवः कामस्तेन धर्षितायाः पीडितायाः मे ममातिरिरंसया भृशं रन्तुमिच्छया कर्शितः। अत एव दीनश्च एष आत्मा देहः सिद्ध्येत कार्श्यदैन्यादिपरिहारेण रतिसमर्थो भवेत्। आर्पस्तङ्। ततश्च सदृशं भोगानुरूपं भवनं च विचक्ष्व विचारय ॥ ११ ॥ प्रियाया इति। हे क्षत्तः ! एवं ज्ञापितः कर्दमः प्रियायाः भार्यायाः प्रियं कर्तुमिच्छन् अनु अनन्तरमेव योगमचिन्त्यशक्तिमास्थितः सन् तर्हि तत्क्षणमेव कामं यथेच्छं गच्छतीति तथाभूतं विमानमाविरचीकरत् आविर्भावयामास ॥ १२ ॥ विमानं वर्णयति—सर्वेति। सर्वकामदुघं सर्वाभिलषितपूरकं दिव्यमलौकिकं सर्वैः रत्नैः समन्वितं खचितं सर्वर्द्धीनां सर्वसम्पदामुपचयस्तस्योदर्कं उत्तरोत्तराभिवृद्धिर्यस्मिंस्तत् मणिमयैः स्तम्भैरुपस्कृतं भूषितम् ॥ १३ ॥ दिव्येति। दिव्यैरुपकरणैर्गार्हस्थ्यनिर्वाहकैः पात्रपीठकादिभिरुपेतं सम्पन्नं सर्वेषु शीतोष्णादिकालेषु सुखावहमनुकूलं पट्टिकाः अल्पविस्ताराः पट्टवस्त्ररचिता ध्वजविशेषास्ताभिः पताका विस्तृता ध्वजास्ताभिश्च विचित्राभिरलङ्कृतम् ॥ १४ ॥ स्रग्भिरिति। विचित्राणि नानावर्णानि माल्यानि मालानिर्माणयोग्यानि पुष्पाणि यासु ताभिः मञ्जु मधुरं यथा तथा सिञ्जतः ध्वनन्तः षडङ्घ्रयो भ्रमरा यासु ताभिः स्रग्भिः विराजितम्। दुकूलैः सूक्ष्मैः कार्पासैः क्षौमैरतसीतन्तुभवैः कौशेयैः कृमिकोशोत्थैश्च नानाविधवस्त्रैर्विराजितम् ॥ १५ ॥ उपरीति। उपर्युपरि विन्यस्तेषु विरचितेषु निलयेषु गृहेषु पृथक् पृथग् विभक्तं क्षिप्तैः स्थितैः कशिपुभिः कान्तं कमनीयं पर्यङ्कैः व्यजनैः आसनैश्च कान्तम् ॥ १६ ॥

तत्रेति। तत्र तत्र भित्त्यादिषु विनिक्षिप्तैर्विरचितैर्नानाविधैः शिल्पैरुपशोभितं महामरकतस्थल्या इन्द्रनीलमणिमयभूम्या जुष्टं युक्तं विद्रुमैः प्रवालै रचिताभिर्वेदिभिरुपवेशनस्थानविशेषैश्च जुष्टम् ॥ १७ ॥ द्वाःस्विति। द्वारेषु विद्रुममयदेहल्या उदुम्बरेण भातं शोभितं वज्रखचितकपाटयुक्तम् इन्द्रनीलमणिमयेषु शिखरेषु प्रासादाग्रेषु हेमकुम्भैरधिश्रितमधिष्ठितम् ॥ १८ ॥ चक्षुष्मदिति। वज्रभित्तिषु निर्मित्तैः खचितैः चक्षुष्मन्त इव ये पद्मरागाग्र्याः पद्मरागश्रेष्ठास्तैः। यद्वा पद्मरागाग्र्यैश्चक्षुष्मदिव तथा विचित्रैर्वितानैर्वितानसमूहैः महार्हैरनर्घ्यैर्हेममयतोरणैर्वन्दनमालेति ख्यातैश्च जुष्टम् ॥ १९ ॥ हंसेति। कृत्रिमानपि हंसादीन् स्वान् स्वजातीयान् मन्यमानैर्हंसानां पारावतानां च व्रातैः समूहैस्तत्र तत्राधिरुह्याधिरुह्य च निकूजितम् ॥ २० ॥ विहारेति। यथोपजोषं यथापेक्षितं रचितैः विहारस्थानं क्रीडास्थानं विश्रामः बाह्यत आगत्य श्रमापनोदनार्थमुपवेशस्थानं संवेशनं शयनगृहं प्राङ्गणं गृहाद्बहिः अजिरं प्राकाराद्बहिः एतैः आत्मनः स्वस्य कर्दमस्यापि विस्मापनं विस्मयजनकमिवेति स्वनिर्मितत्वेन स्वस्याश्चर्याभावादिवशब्दः ॥ २१ ॥ ईदृगिति। ईदृगेवंविधं तद् गृहं विमानं नातिप्रीतेन देहादेर्मलिनत्वात् परिचारकाद्यभावाच्चानतिसंतुष्टेन चेतसा पश्यन्तीं देवहूतिं योगबलेन सर्वभूतानामाशयमभिप्रायं जानातीति स कर्दमः स्वयमेव प्रावोचत् ॥२२॥ निमज्ज्येति। हे भीरु ! अस्मिन् विन्दुसरआख्ये ह्रदे पूर्वं निमज्ज्य स्नात्वा तत इदं विमानमारुह अधिरोह। गुणाभाव आर्षः। यतः इदं तीर्थं शुक्लेन भगवता आनन्दाश्रुनिपातेन कृतमतो नृणामाशिषां वाञ्छितार्थानां यापकं प्रापकमस्ति ॥ २३ ॥ सेति द्वयम्। सा कुवलयेक्षणा देवहूतिर्भर्तुर्वचः समादाय स्वीकृत्य सरजं मलिनं वासः वस्त्रं वेणीभूतान् जटिलान् केशान् मलपङ्केन संछन्नमत एव शवलौ विवर्णौ स्तनौ यस्मिंस्तथाभूतमङ्गं शरीरं च बिभ्रती सती शिवानां निर्मलानां सुखकराणां जलानामाशयमाश्रयं शिवा जलाशया जलचरा यत्रेति वा सरस्वत्या मध्यस्थं तत्सरः विन्दुसर आविवेश प्रविष्टवती ॥ २४–२५ ॥

सान्तरिति। सा अन्तःसरसि निमग्ना सती तत्र वेश्मस्थाः दशशतानि कन्यका ददर्श। ताश्च सर्वाः किशोरवयसः उत्पलस्येव देहगन्धो यासां तादृश्य आसन् ॥ २६ ॥ तामिति। तां देवहूतिं दृष्ट्वा ताः स्त्रियः सहसा आशु उत्थाय प्राञ्जलयः सत्यो वयं तुभ्यं त्वां परिचरितुं कर्मकरीः किङ्कर्यः। पूर्वसवर्णदीर्घः आर्षः। अतः किं तव दास्यं करवाम तन्नः शाधि आज्ञापयेति प्रोचुः ॥ २७ ॥ स्नानेनेति द्वयम्। एवमुक्त्वा च मानदाः सम्मानकर्त्र्यः स्त्रियो महार्हेण अतिश्रेष्ठेन स्नानेन स्नानसाधनेन सुगन्धितैलादिना तां मनस्विनीमुत्साहयुक्तां देवहूतिं स्नापयित्वाऽस्यै देवहूत्यै निर्मले शुद्धे नूत्ने नवीने दुकूले सूक्ष्मे वस्त्रे परिधानोत्तरीये तथा परार्घ्यानि अमूल्यानि वरीयांसि श्रेष्ठतमानि तत्प्रियाणि च द्युमन्ति दीप्तिमन्ति च भूषणानि सर्वगुणोपेतं षड्रसोपेतमन्नं च अमृतमिव स्वादु आसवं मादकं च पानं पेयं चास्यै ददुः ॥ २८–२९ ॥ अथेति। अथ देवहूतिः आदर्शे दर्पणे स्वं स्वीयमात्मानं देहं स्रग्विणं स्रजं बिभ्रतं पुंस्त्वं सर्वत्रात्मशब्दसामानाधिकरण्यात् विरजं निर्मलमम्बरं वासो यस्य तं विरजं निर्मलं कृतं स्वस्त्ययनं मङ्गलं यस्य तं ताभिः कन्याभिर्बहु मानितं सेवितं ददर्शेति शेषः ॥ ३० ॥ स्नातमिति। स्नातमुद्धर्य क्षालितं कृतं शिरःस्नानमभ्यङ्गो येन तं यथाश्रुतं वा सर्वाभरणभूषितं निष्कं पदकं ग्रीवायां यस्य तं वलयिनं कूजन्ती काञ्चन नूपुरे यस्य तादृशम् ॥ ३१ ॥

श्रोण्योरिति। श्रोण्योर्नितम्बयोरध्यस्तया धृतया काञ्च्या काञ्चनमय्या बहूनि रत्नानि यस्यां तया काञ्च्या मेखलया महार्हेण श्रेष्ठेन हारेण रुचकेन कुङ्कुमादिमङ्गलद्रव्येन च भूषितं "रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः" इति विश्वः ॥३२॥ सुदतेति। सुदता सुन्दरदन्तपङ्क्त्या सुभ्रुवा शोभनया भ्रुवा श्लक्ष्णा मनोहरा स्निग्धोऽपाङ्गो नेत्रप्रान्तो यस्य तेन अत एव पद्मकोशेन स्पर्द्धत इति पद्मकोशस्पृत्। स्पर्द्धतेः स्पृध् आर्षः। तेन चक्षुषा नीलैरलकैश्च लसत् शोभमानं मुखं यस्य तं सुदता सुभ्रुवा चक्षुषेति च जातावेकवचनानि। ईदृशं स्वमात्मानम् ॥ ३३ ॥ यर्हीति। एवंभूतं पत्यू रमणयोग्यमात्मानं दृष्ट्वा यदा ऋषीणामृषभं श्रेष्ठं दयितं प्रियं पतिं भर्तारं सस्मार तदा यत्र सः कर्दम आस्ते तत्र स्वयमपि स्त्रीभिः सह आस्ते स्म। तत्रात्मानं पत्युरेकासने आसीनमेव विवेद। न तु जलह्रदात् पदव्या आयान्तमित्यद्भुतैव योगगतिः ॥ ३४ ॥ भर्तुरिति। भर्तुः पुरस्तात् अग्रे स्त्रीसहस्रैर्वृत-मात्मानं निशाम्य दृष्ट्वा तस्य भर्तुर्योगगतिं च दृष्ट्वा संशयं कथमेतदभूदिति विस्मयं प्रत्यपद्यत ॥ ३५ ॥

स इति द्वयम्। हे अमित्रहन्! जातभावः तद्दर्शनादुद्बुद्धकामः स मुनिः कृतं मलनिवर्तकं स्नानं यया अपूर्ववत् तपोदशातो नूतनवद्विभ्राजन्तीम्। शतार्षः। विवाहसमये यदात्मनो रूपं तदेव पुनर्बिभ्रतीं संवीतौ कञ्चुक्यादिना वेष्टितौ रुचिरौ स्तनौ यस्यास्ताम्। स्तनमिति पाठे रूपविशेषणम्। विद्याधरीसहस्रेण सेव्यमानां सुवाससं तां विलोक्य तद्विमानमारोहयत् ॥ ३६-३७ ॥ तस्मिन्निति। अलुप्तः महिमा प्रभावो यस्य सः प्रियया भार्यया सहानुरक्तः विद्याधरीभिरुपचीर्णं शुश्रूषितं वपुर्यस्य स मुनिस्तस्मिन् विमाने उत्कचकुमुद्गणवान् विकसत्कुमुदगणवान् अपीच्योऽतिसुन्दरः ताराभिरावृतो नभःस्थः उडुपतिः पूर्णचन्द्र इव बभ्राज रराज। तत्र चन्द्र इव मुनिः नभ इव विमानं तारा इव स्त्रियः कुमुदानीव तासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥ तेनेति। अनङ्गस्य कामस्य सखा उद्दीपको मारुतः शीतसुगन्धमन्दानिलस्तेन सौभगं सौन्दर्यं यासां तासु तथा घुघुनिर्गङ्गा यस्याः ऊर्ध्वतः पातेन शिवः सर्वपाप-निवर्तकः स्वनो ध्वनिर्यासु तासु अष्टलोकपानां विहारो यस्मिन् स कुलाचलेन्द्रः पर्वतश्रेष्ठो मेरुस्तस्य द्रोणीषु दरीषु शिखराणामन्त-र्विजनप्रदेशेषु वा ललनावरूथी स्त्रीरत्नसमूहवान् सिद्धैर्नुतः स्तुतः स मुनिस्तेन विमानेन चिरं धनदवत् रेमे ॥ ३९ ॥ वैश्रम्भके इति। वैश्रम्भकादिषु पञ्चसु देवोद्यानेषु मानसे सरसि च रतः प्रीतः सन् स मुनिः रामया स्त्रिया सह रेमे ॥ ४० ॥ भ्राजिष्णुनेति। भ्राजिष्णुना प्रकाशमानेन महीयसा महत्तमेनातिश्रेष्ठेन कामगेन यथेष्टं गच्छता विमानेन अनिलवदप्रतिहतगतिर्लोकांश्चरन् वैमा-निकान् विमानैश्चरतो देवादीन् अत्यशेत अतिक्रम्य स्थितः ॥ ४१ ॥ किमिति। यैः पुंभिस्तीर्थपदः भगवतः व्यसनात्ययः तापत्रय-विनाशकश्चरणः आश्रितस्तेषामुद्दामचेतसां सत्यसङ्कल्पानां धीराणां पुंसां किं दुरापादनं सम्पादयितुं किमशक्यं न किम-पीत्यर्थः ॥ ४२ ॥ प्रेक्षयित्वेति। स्वसंस्थया द्वीपवर्षादिरचनया यावानस्ति तावन्तमत एव बह्व्याश्चर्याणि यस्मिंस्तं भुवो गोलं मण्डलं पत्न्यै भार्यायै प्रेक्षयित्वा दर्शयित्वा। ल्यबभाव आर्षः। महायोगी कर्दमः स्वाश्रमाय न्यवर्तत स्वाश्रमं प्रत्यागतवान् ॥ ४३ ॥ विभज्येति। आत्मानं नवधा विभज्य आत्मनो नव रूपाणि कृत्वा सुरते उत्सुकां मानवीं मनुकन्यां रामां स्वभार्यां विशेषेण रमयन् वर्षपूगान् संवत्सरगणान् मुहूर्तवत् रेमे ॥ ४४ ॥

तस्मिन्निति। तस्मिन्नुत्कृष्टे विमाने उत्कृष्टां निरतिशयसुखकरीं रतिकरीं रतिवर्द्धिनीं शय्यां श्रिता अधिष्ठिता अपीच्येन अतिसुन्दरेण पत्या च सङ्गता संयुक्ता सती तमनेकवर्षसमूहात्मकं कालं नाबुध्यत। एतावान् कालो गत इति न ज्ञातवती ॥ ४५ ॥ एवमिति। एवं यथेष्टं योगानुभावेन रममाणयोः कामलालसयोः दम्पत्योः शतं शरदः संवत्सरा मनागीषत्काल इव व्यतीयुः अतिक्रान्ताः ॥ ४६ ॥ तस्यामिति। आत्मवित् सर्वसंकल्पवित् पत्न्या बह्वपत्यसंकल्पं जानन् मरीच्यादिविवाहार्थं ब्रह्मणः सङ्कल्पं जानन् वा विभुः कर्दमः तां प्रियामात्मनो देहार्द्धेन भावयन् चिन्तयन् आधानकाले स्त्रीध्यानेन अपत्यं स्यादिति स्वं रूपं नोधा नवधा। आर्षः प्रयोगः। विधाय तस्यां रेत आधत्त निहितवान्। आत्मवित्त्वेन तस्यामनासक्तत्वाद्वीर्यस्याल्पच्यवनात् कन्याप्रसवो जातः। "पुमान् पुंसोऽधिके शुक्रे स्त्रिया" इति वचनात् ॥ ४७ ॥ अत इति। अतः पूर्वोक्तादेव हेतोः सा देवहूतिः चारूणि सर्वाण्यङ्गानि यासां तथा लोहितोत्पलस्य गन्ध इव गन्धो यासां तथाभूतास्ताः सर्वाः स्त्रियः स्त्रीरेव प्रजाः अपत्यानि सद्यस्तस्मिन्ने-वाहनि सुषुवे प्रसूतवती ॥ ४८ ॥ पतिमिति द्वयम्। समयस्य पूरितत्वात्तदा अपत्योत्पत्त्यनन्तरमेव प्रव्रजिष्यन्तं सर्वं त्यक्त्वा गन्तुमिच्छन्तं पतिमालक्ष्य तच्चेष्टया ज्ञात्वा पतिदर्शनस्वाभाव्यात् बहिः स्मयमाना अन्तस्तु विक्लवेन व्याकुलेन विदूयता तप्यमानेन। शतार्षः। हृदयेन उपलक्षिता अधोमुखी नखा एव मणयस्तेषां श्रीः शोभा यस्मिंस्तेन पदा भूमिं लिखन्ती उशती कमनीया सती पतिव्रता देवहूतिः अश्रुकलां निरुध्य ललितां मृद्वीं वाचमुवाच ॥ ४९-५० ॥ सर्वमिति। यद्यपि मह्यं मदर्थं भवता यत्प्रतिश्रुतं विवाहसमये प्रतिज्ञातं तद् भगवान् समर्थो भवान् सर्वमुपोवाह सम्पादितवान्। अथापि प्रपन्नायाः शरणमागतायाः मे मम त्वमभयं दातुमर्हसि। भाविनो दैन्यात् संसाराच्च यद्भयं यन्निवर्त्तय ॥ ५१ ॥ तत्र दैन्यादाह—ब्रह्मन्निति। हे ब्रह्मन्! दुहितृभिः समाः वयःशीलादिभिस्तुल्यास्तत्पतयस्तुभ्यं त्वया विमृग्याः अवश्यमन्वेषणीयाः। संसारभयादाह—तावत् त्वयि वनं प्रव्रजिते संन्यस्य गते सति मे मम विशोकाय संसारदुःखनिवृत्त्यर्थं कश्चित् ज्ञानी पुत्रोऽपि स्यात्। अतः कञ्चित्कालं

स्थित्वैतद्द्वयं संपादनीयम् ॥ ५२ ॥ एतावतेति । हे प्रभो ! इन्द्रियाणामर्थेषु विषयेषु शब्दादिषु यः प्रकृष्टः सङ्गस्तेन परित्यक्तः अनुपासितः परात्मा भगवान् यया तस्याः मे मम व्यतीतेनातिक्रान्तेनैतावता शतवर्षपरिमितेन कालेनालम्। एतावान् कालो वृथा गतः ॥ ५३ ॥ इन्द्रियेति । इन्द्रियार्थेषु विषयेषु सज्जन्त्या आसक्तया अत एव परं भावं तत्त्वं ब्रह्मवित्त्वं महावैराग्यं च अजानन्त्या अननुसन्दधत्या मया । नुम्वा पाठस्त्वार्षः । यद्यपि त्वयि प्रकृष्टः सङ्गः कृतस्तथापि स मे ममाभयाय त्वत्प्रसादेन तत्त्वज्ञपुत्रलाभात् संसारभयनिवृत्तयेऽस्तु ॥ ५४ ॥ सङ्ग इति । य एव सङ्गः अधिया अज्ञानेनापि इदमग्रेऽप्यन्वेति । असत्सु विषयाविष्टचित्तेषु विहितः कृतः सन् संसृतेर्हेतुर्भवति स एव सङ्गः साधुषु भवादृशेषु अज्ञानेनापि कृतः सन् निःसङ्गत्वाय संसारनिवृत्तये कल्पते हेतुर्भवति ॥ ५५ ॥ नेति । इह संसारे यस्य कर्मकायवाङ्मनोव्यापारो धर्माय पुण्योत्पत्तये न कल्पते समर्थो न भवति तद्द्वारा च विरागाय न कल्पते तद्द्वारा च तीर्थपदस्य भगवतः सेवायै आराधनार्थं न पर्यवस्यति। स प्राणी जीवन्नपि मृततुल्य एव ॥ ५६ ॥ साऽहमिति । या विमुक्तदं त्वां प्राप्यापि संसारबन्धनान्न मुमुक्षेय मोक्षेच्छां न कृतवती । साऽहं भगवतो मायया दृढं यथा स्यात्तथा वञ्चिता मोहिता ॥ ५७ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायस्तृतीयत्रयोविंशे व्यधादिमाम् ॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां त्रयोविंशोऽध्यायः ॥ २३ ॥

— :❁:—

## अथ चतुर्विंशोऽध्यायः

मैत्रेय उवाच

**निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः । दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥**

चतुर्विंशे देवहूत्यां कपिलाख्यहरेर्जनिः । प्रव्रज्या कर्दमस्यात्र श्लोकाः शैलपयोधयः ( ४७ ) ॥

अनुष्टुभस्त्वष्टवेद ( ४८ ) उवाचेति च सप्तकम् ॥ २४ ॥

निर्वेदेति । एवं निर्वेदवादिनीं वैराग्यं कथयन्तीं शालिनीं श्लाघ्यां मनोर्दुहितरं देवहूतिं प्रति दयालुः मुनिः कर्दमः शुक्लाभिव्याहृतमहं स्वांशकलयाऽवतीर्येति भगवद्वाक्यं स्मरन्नाह स्म ॥ १ ॥ मा खिद इति । हे राजपुत्रि ! हे अनिन्दिते ! इत्थमहं वञ्चिता भाग्यहीनेत्येवमात्मानं प्रति मा खिदः खेदं मा कार्षीः । आर्षः । अक्षरो विनाशादिविकारशून्यो भगवानेव तवोद्धारार्थमदूरात् शीघ्रमेव ते गर्भं संप्रपत्स्यते तव पुत्रो भविष्यतीत्यर्थः ॥ २ ॥ धृतेति । यद्यपि पूर्वमेवानेकजन्मसु धृतानि अनुष्ठितानि व्रतानि यया तथाभूताऽसि तथापोदानीमपि दमेन बाह्येन्द्रियनिग्रहेण नियमेन स्नानजपादिनियमेन कृच्छ्रचान्द्रायणादितपोभिर्द्रविणानां हिरण्यान्नादीनां दानैश्च श्रद्धया प्रेम्णा चेश्वरं भगवन्तं भज । एवं ते तव भद्रं कल्याणं भविष्यति ॥ ३ ॥ स इति । त्वया आराधितः स शुक्लः शुद्धो भगवान् मामकं मदीयं भगवानपि कर्दमस्य पुत्रो जात इति यशो वितन्वन् विस्तारयन् औदर्यः त्वत्पुत्रः सन् ब्रह्म भावयत्युपदिशतीति तथा च संस्ते तव हृदयग्रन्थिं चिज्जडात्मकमहंकारलक्षणं बन्धं छेत्ता छेत्स्यति ॥ ४ ॥ देवहूतीति । देवहूतिः अपि । दैर्घ्यमार्षं मन्ये । प्रजापतेः कर्दमस्य सन्देशं गौरवेण सम्यक् श्रद्धाय विश्वस्य कूटस्थं निर्विकारं गुरुं यः पुत्रो भूत्वा गुरुर्भविष्यति तं पुरुषं पुरुषोत्तमं भगवन्तमभजत् ॥ ५ ॥

तस्यामिति। बहुतिथे बहूनां पूरणे बहुतरे इत्यर्थः। बहुशब्दाड्डटि बहुपूगगणेति तिथुक्। काले गते सति मधुसूदनः कार्दमसंबन्धि वीर्यं भक्तिप्रभावमापन्नस्तेन वशीकृतः सन् काष्ठे महाभूतरूपः स्थित एवाग्निर्यथाऽऽविर्भवति तथा तस्यां देवहूत्यां जज्ञे आविर्बभूव न तु शुक्रशोणितसंबन्धेन। एवमवतारान्तरेष्वपि॥ ६॥ अवादयन्निति। तदा घनावनाः इत्येकं पदम्। वर्षन्तो घना इव देवाः व्योम्नि आकाशे वादित्राणि अवादयन्। तं हरिं गन्धर्वा गायन्ति स्म। मुदा अप्सरसो नृत्यन्ति स्म॥ ७॥ पेतुरिति। खेचरैर्देवैरपवर्जिताः विमुक्ताः दिव्याः सुमनसः पुष्पाणि पेतुः। सर्वा दिशः अम्भांसि जलानि सर्वप्राणिनां मनांसि च प्रसेदुः प्रसन्नानि निर्मलानि अभूवन्॥ ८॥ तदिति। सरस्वत्या नद्या परिश्रितं परिवेष्टितं तद्विन्दुसरःसंज्ञकं कर्दमस्याश्रमपदं स्थानं प्रति मरीच्यादिभिर्ऋषिभिः साकं सह स्वयंभूर्ब्रह्मा अभ्ययात् आगच्छत्॥ ९॥ भगवन्तमिति द्वयम्। हे शत्रुहन्! सत्त्वेन सत्त्वगुणाङ्गीकारेण तत्त्वानां प्रकृत्यादीनां निरूपणं संख्यानं यस्मिंस्तस्य सांख्यशास्त्रस्य विशेषेण ज्ञप्त्यै ज्ञापनाय अंशेन जातं परब्रह्मरूपं भगवन्तं विद्वान् स्वराट् स्वतः सिद्धज्ञानः अजः ब्रह्मा प्रहृष्यमाणैः आनन्दाश्रुप्रभृतिविकारयुक्तैरसुभिः इन्द्रियैरुपलक्षितः विशुद्धेन चेतसा तस्य भगवतश्चिकीर्षितं सभाजयन् सम्मानयन् अभिनन्दयन् कर्दमं चकाराद्देवहूतिं चेदं वक्ष्यमाणमभ्यधात् अभ्यभाषत॥ १०–११॥ त्वयेति। हे तात! हे मानद! यत् मम वाक्यं भवान् मानयन् सन् जगृहे। ततः त्वया मे मम उपचितिः पूजा निर्व्यलीकतः निष्कपटतया कल्पिता कृता। निर्व्यलीकत इत्यस्य जगृहे इत्यनेन वा संबन्धः॥ १२॥ एतावतीति। पुत्रकैः सत्पुत्रैः। अनुकम्पायां कन्। पितरि एतावत्येव शुश्रूषा सेवा कार्या। यत् गुरोः पितुर्वचः वाक्यं गौरवेण हेतुना बाढमिति यथाऽऽज्ञापयसि तथा करवाणीत्यनुमन्येत अङ्गीक्रियेत॥ १३॥ इमा इति। हे वत्स! हे सभ्य! सुमध्यमाः शोभनाङ्ग्यः इमास्तव दुहितरः स्वैः प्रभावैः वंशैरेतं सर्गमनेकधा अपत्यपरम्परया बृंहयिष्यन्ति वर्द्धयिष्यन्ति॥ १४॥ अत इति। यथाशीलं यथारुचि आसां शीलादिसादृश्येनेमाः स्वात्मजाः कन्यास्त्वमृषिमुख्येभ्यो मरीच्यादिभ्यः परिदेहि प्रयच्छ। तेनाद्य भुवि स्वयशो विस्तृणीहि वितनु॥ १५॥ वेदेति। हे मुने! भूतानां शेवधिं सर्वाभीष्टं देहं बिभ्राणं कपिलं जगत्कारणभूतं पुरुषोत्तममेव त्वद्गृहे स्वमाययाऽवतीर्णमहं वेद॥ १६॥ ज्ञानेति द्वयम्। ज्ञानं साङ्ख्यशास्त्रोत्थं परोक्षं तत्त्वज्ञानं विज्ञानमपरोक्षं दर्शनं योगोऽष्टाङ्गस्तेन प्राणिकर्मणां जटाः मूलानि वासना उद्धरन् उत्पाटयिष्यन् हिरण्यवत्प्रकाशमानाः केशा यस्य सः पद्मे इवाक्षिणी यस्य सः पद्माकारा मुद्रारेखा तद्युक्तं पदाम्बुजं यस्य स एष कैटभार्दनः कैटभाख्यदैत्यनिहन्ता भगवान् हे मानवि! ते गर्भमुदरं प्रविष्टः। अत एव अविद्यास्वरूपाज्ञानं संशयाः मिथ्याज्ञानानि तन्मयं तव ग्रन्थिं हृदयग्रन्थिं ज्ञानाद्युपदेशेन छित्त्वा गां भूमिं विचरिष्यति॥ १७–१८॥

अयमिति। अयं पुत्रो लोके कपिल इत्याख्यां नामधेयं गन्ता गमिष्यति प्राप्स्यति। सिद्धगणानां योगिसमूहानाम् अधीशो नियन्ता सांख्यशास्त्राचार्यैः सुसंमतः सत्कृतः ते तव कीर्तिवर्द्धनश्च भविष्यति। अयमेव "ऋषिं प्रसूतं कपिलं महान्तम्" इति श्रुत्यामुक्तः। अन्यो दर्शनकर्त्ता तु वेदविरुद्धानीश्वरवादान्नादर्त्तव्यः। तथैव हि श्रीशङ्कराचार्याद्यैरुक्तं पाद्मवचनं चात्राहुः— "कपिलो वासुदेवाख्यस्तत्त्वं सांख्यं जगाद ह। ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च॥ तथैवासुरये सर्ववेदार्थैरुपबृंहितम्। सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह॥ सांख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम्।" इति॥ १९॥ ताविति। एवं तौ कर्दमं देवहूतिं चाश्वास्य सान्त्वयित्वा जगतः स्रष्टा हंसो ब्रह्मा मरीच्यादीन् विवाहार्थमवस्थाप्य कुमारैः सनत्कुमारादिभिश्चतुर्भिः सहेति शेषः। सहनारदः नारदसहितश्चेति नैष्ठिकैरेतैः पञ्चभिः सहितो हंसेन यानेन त्रिधाम तृतीयं धाम स्वर्गस्तस्य परमं परां काष्ठामापन्नं सत्यलोकं ययौ॥ २०॥ गत इति। हे क्षत्तः! शतधृतौ ब्रह्मणि गते सति तेन चोदित आज्ञप्तः कर्दमस्तदनन्तरं विश्वसृजां विश्वसृग्भ्यो मरीच्यादिभ्यः स्वदुहितॄर्यथोचितं शीलरुक्माद्यनुरूपं यथा स्यात्तथा प्रादात् प्रायच्छत्। यथोदितमिति पाठेऽपि ब्रह्मणा यथाशीलमित्युक्तत्वादयमेवार्थः॥ २१॥ मरीचये इति। मरीचये कलां प्रादात्। अथ अत्रये अनसूयां प्रादात्। अङ्गिरसे श्रद्धामयच्छत। पुलस्त्याय हविर्भुवमयच्छत्॥ २२॥ पुलहायेति। पुलहाय युक्तां शीलादिभिर्योग्यां गतिमयच्छत्। क्रतवे च सतीं साध्वीं क्रियामयच्छत्। वसिष्ठाय अपि अरुन्धतीमयच्छत्॥ २३॥ अथर्वण इति। यया यज्ञः वितन्यते समृद्धः क्रियते शान्त्यैव वितता यज्ञाः सफला भवन्ति तां शान्तिं शान्त्यधिष्ठात्रीं देवताम् अथर्वणे अददात्। कृतोद्वाहान् विप्रर्षभान् सदारान् समलालयत् प्रियवस्तुदानप्रियवचनादिभिः संतोषितवान्॥ २४॥ तत इति। हे क्षत्तः! कृतदाराः ते ऋषयस्तं निमन्त्र्य गमनानुज्ञां संप्रार्थ्य नन्दि हर्षमापन्नाः सन्तः स्वं स्वमाश्रममण्डलं प्रातिष्ठन् जग्मुः। तद्बभाव आर्षः॥ २५॥ स चेति। स च कर्दमः विबुधर्षभं देवश्रेष्ठं त्रियुगं युगत्रये दर्शनार्हम्। यद्वा। त्रीणि युगानि ज्ञानादयः षड्गुणा यस्य तं भगवन्तमाज्ञाय विविक्त एकान्ते तमुपसङ्गम्य समीपं गत्वा मूर्ध्ना प्रणम्य सम्यग् विनयपूर्वकमभाषत॥ २६॥

अहो इति। अहो! स्वैः स्वीयैरमङ्गलैः दुष्कृतैरिह निरये नरकतुल्ये संसारे पापच्यमानानां भृशं दह्यमानानां मादृशानां भूयसा कालेन बहुकालयोगध्यानादिसाधनानुष्ठानेन देवताः प्रसीदन्ति प्रसन्ना भवन्ति॥ २७॥ बह्विति द्वयम्। बहुषु जन्मसु विपक्वेन बह्वभ्यासपक्वेन सम्यक् योगो यत्र तेन समाधिना चित्तैकाग्र्येण यस्य तव पदं स्वरूपं शून्यागारेषु निर्जनस्थानेषु यतयः सर्वतो विरक्ताः संन्यासिनो द्रष्टुं यतन्ते। यश्च स्वानां पक्षस्य पोषणः स एष भगवान् हेलनं लोककृतावज्ञारूपं लाघवम्

अस्मदपराधं नगणय्य अगणयित्वा। नञ्भिन्नेन नशब्देन सुप्सुपेति समासः। अतो ल्यप्। ग्राम्याणामविवेकिनां नोऽस्माकं गृहेषु जातः यः स्वानामिति स्वगृहे जन्मनि हेतुः॥ २८-२९॥ स्वीयमिति। भक्तानां मानवर्द्धनः ज्ञानं ज्ञानसाधनं सांख्यशास्त्रं चिकीर्षुः कर्तुमिच्छुर्भगवान् अथाहं स्वांशकलयेति स्वीयं वाक्यमृतं सत्यं कर्तुं मे मम गृहेऽवतीर्णोऽसि॥ ३०॥ तानीनि। भगवन्! अचिन्त्यशक्तिमन्! यानि यानि च अलौकिकानि चतुर्भुजादीनि तव रूपाणि स्वजनानां रोचन्ते रुचिकराणि भवन्ति, तान्येव अरूपिणः प्राकृतरूपरहितस्य ते तव अभिरूपाणि योग्यानि न तैस्तव हीनता। यद्वा यानि चतुर्भुजादीनि रूपाणि तान्येव तेऽभिरूपाणि। यानि च मनुष्यसरूपाण्यपि स्वजनानां रोचन्ते तान्यपि ते रोचन्ते॥ ३१॥ तमिति। सूरिभिर्विवेकिभिः तत्त्वबुभुत्सया तत्त्वानां प्रकृतिपुरुषादीनां याथात्म्यं बोद्धुमिच्छया अद्धा साक्षात् सदाऽभिवादार्हेण प्रणामयोग्यं पादपीठं यस्य तम् ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रियां भगशब्दवाच्यानाम्। अत एव वीर्यशब्देन धर्मो ग्राह्यः। पूर्त्तं महातडागमिव तैः पूर्णं तं कपिलमहं प्रपद्ये॥ ३२॥ परमिति। परं प्रपञ्चातीतं प्रधानं प्रकृतिरूपं पुरुषं तदधिष्ठातारं महान्तं महत्तत्त्वरूपं काल प्रकृत्यादि-क्षोभकं कविं सर्वज्ञं प्रधानाद्याविर्भावलयसाक्षिणं त्रिवृतं त्रयाणां सत्त्वरजस्तमसां वृत् वर्तनं यस्मिन् तमहङ्कारूपं लोकपालमिन्द्रादि-रूपम् आत्मनः स्वस्यानुभूत्या चिच्छक्त्या अनुगतः स्वस्मिन् लीनः प्रपञ्चो यस्य तम्। अनुगतः अनुप्रविष्टः प्रपञ्चः कर्मभूतो येन कर्त्रा इति वा स्वच्छन्दाः स्वाधीनाः शक्तयो यस्य तं कपिलं प्रपद्ये॥ ३३॥ आ स्मेति। स्माभोति पादपूरणे। प्रजानां पतिं त्वाम् अद्य आपृच्छ संन्यासार्थमनुज्ञां प्रार्थये। "व्यवहिताश्च" इति व्यवहितेनाङा संबन्धात्तङ्। त्वया पुत्ररूपेणावतीर्णानि अपाकृतानि पित्रादीनामृणानि यस्य सः। यद्वा। अवतीर्णं निवृत्तं प्रजाः सृजेति पितुराज्ञारूपमृणं यस्य स इति। उत अपि त्वय्येवाप्तकामः पूर्णमनोरथोऽप्यहम् अतः परिव्रजतां संन्यासिनां पदवीं मार्गमास्थितस्त्वामेव हृदि युञ्जन् ध्यायन् अत एव विशोकश्च सन् विचरिष्ये। तदर्थः॥ ३४॥ मयेति। हे मुने! हि यस्मात् सत्यलौकिके सत्ये वैदिके लौकिके च कृत्ये मया लोकस्य प्रमाणरूपं वचः प्रोक्तम्। अथवा लौकिकत्रिवर्गविषये तु मन्वादिभिरपि प्रोक्तं प्रमाणं सति सत्यरूपे अलौकिके मत्प्राप्तिलक्षणे तु मया प्रोक्तमेव प्रमाणम्। यदुक्तम्—"ये वै भगवता प्रोक्ता उपायाः" इत्यादि। अथ तस्मात् तुभ्यं तव पुत्रो भविष्यामीति यदवोचमुक्तवांस्तत् ऋतं सत्यं यथा स्यात्तथा मया अजनि जन्म स्वीकृतम्॥ ३५॥

मत्प्रसादात्तव गृहे स्थितस्यापि मुक्तिः सुलभैव। यदि तु गन्तव्यमेवेत्याग्रह तदा मामनुस्मरन् गच्छेत्याह—एतदिति। अस्मिन् लोके मे ममैतज्जन्म दुराशयात् दुष्ट आशयोऽन्तःकरणं यस्मिन् तस्मादात्मत्वेनानुसंहितात् संसारबन्धहेतुभूताल्लिङ्गदेहात् मुमुक्षूणामात्मदर्शने संमताय उपयुक्ताय तत्त्वानां प्रकृतिपुरुषेश्वराणां प्रसंख्यानाय विविक्ततया कथनाय मया भृतं विद्धि इत्युत्तरेण संबन्धः॥ ३६॥ एष इति। एष आत्मपथः परमात्मप्राप्तिमार्गः अव्यक्तः दुर्ज्ञेयः अतश्चिरन्तनोऽपि भूयसा कालेन नष्टः परिभ्रष्टः अतस्तमेव पुनः प्रवर्तयितुमिमं देहं मया भृतं धृतमिति त्वं विद्धि॥३७॥ गच्छेति। यथा त्वं गन्तुं मां पृच्छसि तथात्र व्यवस्थातुं मयापि आपृष्टस्त्वं यद्वा धातूनामनेकार्थत्वात् मया पृष्टः अनुज्ञातस्त्वं कामं यथेच्छं गच्छेत्यर्थः। मयि संन्यस्तेन समर्पितेन कर्मणा अविद्याशब्दवाच्येन सुदुर्जयं मृत्युं संसरणहेतुभूतं पापसमूहं जित्वा अमृतत्वाय मां भज विद्याशब्दवाच्यं मदुपासनं कुरु। 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति श्रुतेः॥३८॥ मामिति। आत्मानं स्वाभिन्नं सर्वेषां भूतानां गुहाया-मन्तःकरणे शेते साक्षितया तं स्वयंज्योतिः स्वप्रकाशं माम् आत्मनि स्वस्मिन्नेवात्मना मनसा वीक्ष्य विशोकः सर्वसंतापरहितः सन् अभयं सर्वभयरहितं मोक्षरूपं मामृच्छसि प्राप्स्यति॥ ९॥ मात्र इति। यया च विद्ययाऽसौ संसारभयमतितरिष्यति चकारादभयं मां च प्राप्स्यति तां सर्वकर्मणां शमनीम् उन्मूलिनीमाध्यात्मिकीमात्मतत्त्वप्रकाशकरीं विद्यामस्यै स्वमात्रे वितरिष्ये वदिष्यामि। तदर्थः॥ ४०॥ एवमिति। तेन कपिलेनैवं सम्यक् उदितोऽनुज्ञातः प्रजापतिः कर्दमः प्रीतः संस्तं प्रदक्षिणीकृत्य वनमेव जगाम॥ ४१॥ व्रतमिति। स कर्दमो मुनिः मौनं मुनीनां संबन्धि मौनाहिंसादिकं व्रतम् आस्थितः आश्रितः आत्मा एवैकः शरणमाश्रयो यस्य सः निःसङ्गः अनग्निः परित्यक्तगृहाश्रमत्वादाहवनीयाद्यग्निरहितः अनिकेतनः नियतावसथरहितः क्षोणीं भूमिं व्यचरत्॥ ४२॥ मन इति चतुष्कम्। यत् सदसतः कार्यकारणसङ्घातात् परं तत् तस्मिन् गुणानामवभासो यस्मात्तस्मिन् विगुणे एकया एकान्तया अव्यभिचारिण्या भक्त्या अनुभाविते अपरोक्षीकृते ब्रह्मणि मनो युञ्जान एकाग्रीकुर्वन् निरहङ्कृतिः देहादावभिमानरहितः निर्ममः तेषु स्वीयत्वबुद्धिरहितः निर्द्वन्द्वः शीतोष्णादिद्वन्द्वरहितः समदृक् भेदाग्राहकः किन्तु स्वदृक् स्वयमेव पश्यन् प्रशान्ता ऊर्मयो यस्य स उदधिः समुद्रो यथा तथा प्रत्यक् प्रवणा प्रशान्ता विक्षेपरहिता धीर्यस्य स धीरः सर्वज्ञे प्रत्यङ् जीवस्तस्यात्मनि वासुदेवे भगवति परेण उत्कटेन भक्तिभावेन लब्धः स्थिरीकृत आत्माऽन्तःकरणं येन सः मुक्तं बन्धनमज्ञानं यस्य स कर्दमः भगवन्तं सर्वभूतेषु अवस्थितम् अपश्यत्। सर्वभूतानि आत्मनि भगवति अवस्थितानि अपश्यत्॥ ४३-४६॥ इच्छेति। भगवद्भक्तियुक्तेन अत एवाविद्यानिवृत्त्या इच्छाद्वेषादिविहीनेन सर्वत्र समेन चेतसा हेतुभूतेन कर्दमेन भागवती भगवत्प्राप्तिलक्षणा गतिः प्राप्ता। प्राप्ता भागवतीं गतिमिति पाठान्तरम्॥ ४७॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्विंशोऽध्यायः॥ २४॥



# अथ पञ्चविंशोऽध्यायः

शौनक उवाच

कपिलस्तत्त्वसंख्याता भगवानात्ममायया । जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥

पञ्चविंशे तु कपिलो भक्तियोगस्य लक्षणम् । देवहूत्यै प्राह तत्र श्लोका आम्नायसिन्धवः ( ४४ ) ॥

नद्योवाचेति ( ४८॥ ) सार्द्धाष्टचत्वारिंशदनुष्टुभः ॥ २५ ॥

कपिल इति । अजः जन्मरहितः भगवान् एव आत्ममायया नृणामात्मतत्त्वस्य प्रज्ञप्तये ज्ञापनाय स्वयमेव साक्षात् तत्त्वानां संख्याता गणकः साङ्ख्यशास्त्रप्रवर्तकः कपिलो जातः ॥ १ ॥ न हीति । हि यस्मात् पुंसां वर्ष्मणः श्रेष्ठस्य सर्वयोगिनां च वरिम्णः वरिष्ठस्यास्य कपिलस्य विश्रुतौ कीर्त्तौ कीर्तिश्रवणे । अत्र वरिम्ण इत्यत्र भावे विहितोऽपीमनिच् लक्षणया अतिशये वर्त्तते यद्वा हेतौ पञ्चमीयं वरत्वादित्यर्थः । यद्वा । अस्य वर्ष्मणः कपिलाकारस्य देहस्य यो वरिमा श्रेष्ठत्वं तस्य विश्रुतौ ख्यातौ श्रुतदेवस्य भूरिशः श्रुतो देवो येन तथाभूतस्यापि मे मम असव इन्द्रियाणि न तृप्यन्ति अलमिति न मन्यन्ते । श्रुतेन श्रवणेन दीव्यति द्योतते इति कपिलविशेषणं वा ॥ २ ॥ यद्यदिति । तस्मात् स्वानां छन्देन इच्छया आत्मा देहाविर्भावो यस्य सः भगवान् कपिलः आत्ममायया यद्यत् यानि यानि चरितानि विधत्ते अकरोत् । तानि कीर्तन्यानि कीर्तनार्हाणि चरितानि श्रद्दधानस्य मे ममानुकीर्त्तय ॥ ३ ॥ द्वैपायनेति । यथा त्वं मां प्रचोदयसि एवं विदुरेणाप्यान्वीक्षिक्यां कपिलोक्तब्रह्मविद्यायां प्रचोदितो भगवान् द्वैपायनस्य व्यासस्य सखा पराशरशिष्यः मैत्रेयोऽपि प्रीतः सन् तथा तत्प्रश्नानुसारेण विदुरं प्रतीदं वक्ष्यमाणं प्राह स्म । तच्छृणु इति शेषः ॥ ४ ॥ पितरीति । पितरि कर्दमेऽरण्यं प्रति प्रस्थिते गते सति भगवान् कपिलो मातुर्देवहूत्याः प्रियं कर्तुमिच्छया तस्मिन्नेव विन्दुसरे विन्दुसरसस्तीरे अवात्सीत् । सरे इत्यार्षम् ॥ ५ ॥ तमिति । धातुर्ब्रह्मण एष मानवि ! ते गर्भं प्रविष्ट इत्यादिं वचः संस्मरती । नुमभाव आर्षः । देवहूतिः आसीनम् अकर्माणं कर्ममार्गान्निवृत्तं तत्त्वज्ञानमार्गस्याग्रं पारं सिद्धान्तं दर्शयतीति तथा तं स्वसुतं कपिलम् आह स्म ॥ ६ ॥ निर्विण्णेति । हे भूमन् ! हे प्रभो ! असतामिन्द्रियाणां तर्पणात् । तर्षणादिति पाठे विषयाभिलाषादित्यर्थः । नितरां भृशमहं निर्विण्णा खिन्नाऽस्मि संभाव्यमानेन निरन्तरं क्रियमाणेन येनेन्द्रियतर्पणेनाहमन्धन्तमः महामोहं प्रपन्ना प्राप्ताऽस्मीति ॥ ७ ॥

तस्येति । तस्य दुष्पारस्य दुरन्तस्यान्धस्य गाढस्य तमसः पारं गमयतीति पारगस्तथाभूतं त्वमेव सत् श्रेष्ठं चक्षुः मे मया बहूनां जन्मनामन्ते भाव्ये सति त्वदनुग्रहादेव अद्य लब्धं न स्वसाधनबलात् ॥ ८ ॥ य इति । यो वै पुंसामीश्वरः आद्यो भगवान् स एव भवान् तमसा अज्ञानेनान्धस्य लोकस्य चक्षुः प्रकाशकः सूर्य इव उदितः ॥ ९ ॥ अथेति । अथ तस्मात् हे देव ! त्वं मे मम संमोहमपाक्रष्टुं दूरीकर्तुमर्हसि । यः सम्मोह एतस्मिन् देहादौ अहं ममेतीत्येवंप्रकारः अवग्रहः अभिमानस्त्वया योजितः । अत्र प्रथम इति शब्दोऽभिमानाभिनयद्योतकः । द्वितीयः प्रकारे तत्कार्यरागादिपरिग्रहार्थः ॥ १० ॥ तमिति । स्वभृत्यानां संसार एव तरुस्तस्य कुठारं मूलोच्छेदकं तं शरण्यं शरणयोग्यं त्वा त्वामहं शरणं गताऽस्मि । तथा प्रकृतेः पूरुषस्य च परस्येति पाठेऽपि स एवार्थः । तत्त्वजिज्ञासया सद्धर्मविदां मोक्षोपायज्ञानां वरिष्ठं त्वामहं नमामि ॥ ११ ॥ इतीति । पुंसामपवर्गवर्द्धनं मोक्षे रतिजनकमत एव निरवद्यं स्वमातुरीप्सितमित्येवं निशम्य धियाऽभिनन्द्य आत्मवतां जितमनसां सतां गतिः फलभूतो भगवान् कपिल ईषत् स्मितेन शोभितमाननं यस्य तादृक् सन् बभाषे ॥ १२ ॥ योग इति । पुंसां निःश्रेयसाय मोक्षाय आध्यात्मिकः आत्मनिष्ठः योगो मे मम सम्मतः । यस्मिन् योगे निष्पन्ने सति दुःखस्य सुखस्य चात्यन्तम् उपरतिः निवृत्तिर्भवति ॥ १३ ॥ तमिति । हे अनघे ! यमात्मयोगं श्रोतुकामानामृषीणां पुरा पूर्वकालेऽहमवोचमुक्तवान् तं सर्वैरङ्गैः शमदमादिभिर्नैपुणं यथा भवति तथेमं योगं ते तुभ्यं प्रवक्ष्यामि ॥ १४ ॥ चेत इति । अस्यात्मनो जीवस्य चेतः खलु चेत एव बन्धाय मुक्तये च मतं कारणतया संमतं गुणेषु विषयेषु सक्तं चेतोऽस्य बन्धाय भवति । पुंसि भगवति रतमासक्तं तु मुक्तये भवति । वाशब्दस्त्वर्थे ॥ १५ ॥ अहमिति त्रयम् । यदा मनः देहेन्द्रियादवहमित्यभिमानः स्त्रीपुत्रादिषु ममेत्यभिमानस्ताभ्यामुत्थैः उत्पन्नैः

कामलोभादिभिर्मलैर्दोषैर्यदा वीतं रहितम् अदुःखम् असुखं समं शुद्धं भवति। तदा ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन च आत्मना मनसा पुरुषः केवलं शुद्धं प्रकृतेः परं निरन्तरं निर्भेदं स्वयंज्योतिः अणिमानम् अतिसूक्ष्मम्। अत्रापि लक्षणयाऽतिशये इमनिच्। अखण्डितमपरिच्छिन्नम् उदासीनम् आत्मानं स्वरूपं परिपश्यति। प्रकृतिं च हतौजसं क्षीणबलां पश्यति ॥ १६–१८ ॥

नेति। योगिनां मुमुक्षूणां ब्रह्मसिद्धये ब्रह्मत्वप्राप्तये अखिलात्मनि भगवति युज्यमानया क्रियमाणया भक्त्या सदृशः शिवः सुखरूपोऽन्यः पन्था नास्ति ॥ १९ ॥ प्रसङ्गमिति। स्त्रीपुत्रमित्रादौ प्रसङ्गमासक्तिमात्मनो जीवस्याजरं दृढं पाशं कवयो विदुः। स एव प्रसङ्गः साधुषु कृतस्तु वैराग्याद्युत्पादनेन अपावृतं निरावरणं मुक्तिद्वारं भवति ॥ २० ॥ साधूनां लक्षणान्याह—तितिक्षव इति। तितिक्षवः सहनशीलाः कारुणिकाः दयालवः सर्वदेहिनां सुहृदः अजातशत्रवः शान्ताः अनुग्राः साधवः शास्त्रानुवर्तिनः साधु सुशीलं भूषणं येषां ते ॥ २१ ॥ मयीति। ये च मयि अनन्येन अव्यभिचारेण भावेन मनसा दृढां भक्तिं कुर्वन्ति। मत्कृते मदर्थं त्यक्तानि कर्माणि यैस्ते त्यक्ताः स्वजनाः मित्राणि बान्धवाश्च यैस्ते ॥ २२ ॥ मदिति। ये मदाश्रयाः मद्विषयाः मृष्टाः शुद्धाः कथाः शृण्वन्ति कथयन्ति च। मद्गतचेतसः तान् एतान् विविधाः तापाः न तपन्ति ॥ २३ ॥ त इति। हे साध्वि! सर्वसङ्गविवर्जितास्ते एते पूर्वोक्तगुणाः साधवो ज्ञेयाः। हि यस्मात् ते साधवः सङ्गदोषहराः दुःसङ्गजदोषनिवर्तकाः। अथ तस्मात् ते त्वया तेषु सङ्गः प्रार्थ्यः ॥ २४ ॥ सतामिति। सतां प्रसङ्गात् मम वीर्यस्य सम्यक् वित् वेदनं यासु तथाभूताः हृत्कर्णयोः रसायनाः सुखप्रदाः कथाः भवन्ति प्रवर्त्तन्ते। तासां जोषणात् सेवनात् आशु शीघ्रमेव अपवर्गवर्त्मनि मोक्षप्रदे भगवति प्रथमं श्रद्धा विश्वासस्ततो रतिः प्रीतिस्ततो भक्तिः प्रेमातिशयश्चानुक्रमिष्यति अनुक्रमेण भविष्यति ॥ २५ ॥ भक्त्येति। मम रचना सृष्ट्यादिलीला तस्या अनुचिन्तया या भक्तिस्तया दृष्टश्रुतात् ऐहिकामुष्मिकात् ऐन्द्रियात् इन्द्रियजन्यसुखात् जातविरागः सन् पुमान् यत्त आलस्यादिरहितः सावधानः योगयुक्तः योगमास्थितश्च सन् ऋजुभिर्भक्तिप्राधान्यादनायासैर्योगमार्गैः प्राणायामादिभिश्चित्तस्य ग्रहणे यतिष्यते यत्नं करिष्यति ॥ २६ ॥ असेवयेति। प्रकृतेर्गुणानां विषयाणामसेवया वैराग्येण विजृम्भितं युक्तं यज्ज्ञानं तेन योगेन मय्यर्पितया भक्त्या च अयं जीवः इहैव देहे प्रत्यगात्मानं मामवरुन्धे प्राप्नोति ॥ २७ ॥ काचिदिति। उचितामुक्तिं साधयितुं योग्या त्वयि भक्तिः काचित् कास्वित् किंस्वरूपेत्यर्थः। तत्रापि मम स्त्रिया गोचरा स्त्रीत्वमार्षं भाति योग्या कीदृशी यया भक्त्याऽहं ते तव निर्वाणं मोक्षाख्यं पदं स्वरूपं च अञ्जसा सुखेन अन्वश्नवै प्राप्नवानि। "अशूङ् व्याप्तौ" अञ्जसा त्विति पाठे अहं त्विति संबन्धः ॥ २८ ॥ य इति। हे निर्वाणात्मन्! निरतिशयानन्दरूपे भगवति बाणस्तत्र क्षिप्तः शर इव यस्त लक्षीकरोति स योगस्त्वया उदित उक्तः। स कीदृशः तस्याङ्गानि च कति यतस्तत्त्वानामवबोधनं निर्विचिकित्सितं ज्ञानं भवति ॥ २९ ॥ तदिति। हे हरे! तदेतत्साङ्ख्यं दुर्बोधं दुःखेनापि बोद्धुमशक्यमपि भवतः अनुग्रहात् योषा अतो मन्दधीरप्यहं यथासुखमनायासेनैव बुध्येय तथा मे मम विजानीहि विशेषेण ज्ञापय ॥ ३० ॥ विदित्वेति। यत्र यस्यां मातरि तन्वा शरीरेण जातस्तस्यां मातरि जातस्नेहः कपिलः मातुर्देवहूत्याः इत्थमुक्तप्रकारकमर्थं भक्तियोगसाङ्ख्येति त्रिकश्रवणरूपं प्रयोजनं विदित्वा तत्त्वान्याम्नायन्ते निरूप्यन्ते यस्मिन् यच्च वृद्धाः सांख्यमिति प्रवदन्ति, तत्सांख्यशास्त्रं तथा भक्तिवितानं भक्तिविस्तारं योगं चेत्येतत्तत्पृष्टं त्रयं प्रोवाच ॥ ३१ ॥

देवानामिति द्वयम्। एकमेकरूपं शुद्धम् अविकृतं मनो यस्य तस्य पुंसः गुणाः शब्दादयो विषयाः लिङ्ग्यन्ते ज्ञायन्ते यैस्तेषां गुणलिङ्गानां गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितमानुश्रविकं तदेव कर्म येषां तेषां शास्त्रीयकर्मण्येव यज्ञादौ भगवत्सेवादौ च प्रवृत्तानां देवानामिन्द्रियाणां या सत्त्वे सत्त्वमूर्तौ हरावेव स्वाभाविकी अयत्नसिद्धा अनिमित्ता निष्कामा वृत्तिः प्रवृत्तिः सा भागवती भक्तिः सिद्धेर्मुक्तेरपि गरीयसी गुरुतरा। या भक्तिः निगीर्णं भुक्तमन्नमनलो जाठराग्निर्यथा प्रयत्नान्तरं विनैव जरयति तद्वत् कोशं लिङ्गशरीरमाशु शीघ्रमेव जरयति क्षपयति ॥ ३२–३३ ॥ नेति। ये मत्पादयोः सेवायामभिरताः आसक्ताः मदीहाः मदर्थमेवेहाः सर्वेन्द्रियचेष्टा येषां ते अन्योन्यतः परस्परं प्रसज्य मिलित्वा मम पौरुषाणि पराक्रमान् सभाजयन्ते श्लाघयन्ति। ते केचित् भागवताः ममैकात्मतां ब्रह्मात्मैकत्वलक्षणं सायुज्यमपि न स्पृहयन्ति। सालोक्यादेस्तु का वार्ता ॥ ३४ ॥ पश्यन्तीति। हे अम्ब! ते सन्तः रुचिराणि प्रसन्नानि वक्त्राणि अरुणानि च लोचनानि येषु तानि वरप्रदानि दिव्यानि अप्राकृतानि मे मम रूपाणि पश्यन्ति। मया साकं सह स्पृहणीयां वाचं वदन्ति। नित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति भावः ॥ ३५ ॥ आत्मानन्दोऽप्यवश्यं भावीत्याह—तैरिति। दर्शनीया अवयवा मम मुखनेत्रादयः तैः उदाराणि यानि विलासो लीला हासो मन्दहासः ईक्षितं दर्शनं वामसूक्तं मधुरभाषणं तैश्च। यद्वा। बहुव्रीहिणा अध्याहृतस्य मद्रूपैरित्यस्य द्वे विशेषणे। हृत आत्मा मनो येषां तान् तथा हृताः प्राणाः ज्ञानकर्मेन्द्रियाणि येषां तान् अतो मोक्षमनिच्छतोऽपि भक्तान् मद्भक्तिरेव अण्वीं सूक्ष्मां गतिं ब्रह्मात्मैकत्वलक्षणां मुक्तिं प्रयुङ्क्ते प्रापयति। प्रेमभक्तांस्तु भगवतो विलासादिभिर्हृतचित्तादिकान् भक्तान् अण्वीं गतिं प्रयुङ्क्ते। भो भक्ताः! ब्रह्मात्मैकत्वलक्षणां मुक्तिं गृह्णीतेति प्रयोगमात्रं करोति, न तु दित्सत्यपि; भक्तिमहारत्नप्राप्त्या कृतार्थानां रजतस्वर्णादितुल्यब्रह्मात्मैक्यदानानौचित्यादिति व्याचक्षते ॥ ३६ ॥

विभूत्यादिसुखं च तत्राधिकमित्याह—अथो इति। अतो अविद्यानिवृत्त्यनन्तरं यद्यपि न एकान्तभक्ता मम मायाविनः मायाधिपतेस्तामतिश्रेष्ठत्वेन प्रसिद्धां विभूतिं सत्यलोकादिगतां भोगसम्पत्तिं तथा भक्तिमनु स्वत एव प्रवृत्तं प्राप्तमपि अणिमाद्यष्टाङ्ग-मैश्वर्यं भागवतीं च श्रियं वैकुण्ठस्थां भोगसम्पत्तिम् अस्पृहयन्ति। यद्यपि ते न स्पृहयन्ति। नञर्थे अ इति पृथगप्यव्ययम्। "अभावे अ न नो नहि" इति हैमः। उदाहृतं च अविप्र इव भाषसे। विप्र इव न भाषसे इत्यर्थः। तथापि परस्य परमेश्वरस्य मे मम लोके वैकुण्ठे भद्रां दुःखेनासंभिन्नां श्रियमश्नुवते प्राप्नुवन्त्येव। तुशब्दोऽवधारणे ॥ ३७ ॥ नापि कचित्तदैश्वर्यनाश इत्याह—नेति। शान्तं शुद्धं सत्त्वं तद्रूपे वैकुण्ठे मत्पराः अतो मया रक्ष्यमाणाः कर्हिचिदपि न नंक्ष्यन्ति स्वरूपतो भोग्यतो वा नाशं न प्राप्नुवन्ति। यतः अनिमिषः कालो मे हेतिः शस्त्रं तन्नो लेढि न ग्रसते। येषाम् अहं प्रियः निरतिशयप्रीतिविषयः आत्मा सुत इव स्नेहविषयः सखेव विश्वासास्पदं गुरुरिवादरणीयवचनः सुहृदो मित्राणि इव हितकारी इष्टं दैवमिव पूज्यः ॥ ३८ ॥ इममिति द्वयम्। इमं लोकं तथैवामुं परलोकं च विसृज्य उभावपि लोकौ विसृज्य हेयतया निश्चित्य उभयाथिनमुभयलोकगामिनम्। इ ण स्ताच्छील्ये णिनिः। आत्मानं देहं विसृज्य तदभिमानं परित्यज्य इह जन्मनि ये आत्मानं देहमनुवर्त्तन्ते। पुत्रकलत्रादयः ये च रायो धनानि पशवो गृहाश्च तान् अन्यांश्च सर्वान् विसृज्य तेषु ममतामपोह्य विश्वतोमुखं पुत्रादिरूपेण प्रकाशमानं सर्वत्र व्यापकं वा मामेवं पुत्रादिभावेनानन्यया फलानुसन्धानरहितया भक्त्या भजन्ति। तान् मृत्योः जन्ममरणादिसंसारात् अतिपारये अत्यन्तं पारं नयामि पुनर्न संसारयामि ॥ ३९–४० ॥ नेति। सर्वभूतानामात्मनोऽन्तर्यामिणः प्रधानपुरुषयोरपीश्वरात् भगवतः मत् मत्तः अन्यत्र मद्भजनं विना तीव्रं दुःसहं संसारभयं न निवर्त्तते ॥ ४१ ॥ मद्भयादिति। अयं वातः मद्भयात् वाति चलति। मद्भयात् सूर्यः तपति। मद्भयादेव इन्द्रो वर्षति। अग्निर्दहति मद्भयादेव मृत्युश्चरति। एते मत्तो भीता एव स्वस्वव्यापारे प्रवर्त्तन्ते ॥ ४२ ॥ ज्ञानेति। अत एव योगिनो ज्ञानवैराग्याभ्यां युक्तेन भक्तियोगेन क्षेमाय मोक्षलाभाय अकुतोभयं मे मम पादमूलं प्रविशन्ति भजनीयतया आश्रयन्ते ॥ ४३ ॥ एतावानिति। तीव्रेण भक्तियोगेन मनो मयि अर्पितं सत् तत्रैव स्थिरं निश्चलं भवतीत्येतावानेवास्मिन् लोके पुंसां निःश्रेयसोदयः उत्कर्षः ॥ ४४ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायस्तृतीयपञ्चविंशे व्यधादिमाम् ॥
इति श्रीभागवते तृतीये स्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चविंशोऽध्यायः ॥ २५ ॥



## अथ षड्विंशोऽध्यायः

श्रीभगवानुवाच

**अथ ते संप्रवक्ष्यामि तत्त्वानां लक्षणं पृथक्। यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥**

षड्विंशे कथ्यते सर्वभावानां जन्मलक्षणम्। पुंप्रकृत्योर्विवेकाय तत्र श्लोका गुणाद्रयः ( ७६ ) ॥
अनुष्टुभोऽपि तावन्त्य उवाचेति त्रिकं ततः ॥ २६ ॥

भक्त्यादित्रयप्रश्ने भक्तिमुक्त्वा साङ्ख्यमाह—अथेति। अथेदानीं तत्त्वानां प्रकृतिपुरुषादीनां पृथक् लक्षणं स्वरूपो-त्पत्त्यादिकं वक्ष्यामि यत् तत्त्वलक्षणं ज्ञात्वा मुमुक्षुः पुरुषः प्राकृतैः गुणैर्विमुच्येत ॥ १ ॥ ज्ञानमिति। आत्मदर्शनरूपं हृदय-ग्रन्थेरहङ्कारस्य भेदनं यद् ज्ञानं पुरुषस्य निःश्रेयसाय मोक्षाय वेदान्ता आहुस्तत्ते तुभ्यं वर्णये ॥ २ ॥ तत्र पुरुषं लक्षयति—अनादिरिति। आत्मैव पुरुषः स च अनादिः निर्गुणः प्रकृतेः परः अन्यः असङ्गः प्रत्यग्धामा अन्तःस्फूर्तिः ज्ञानरूपः स्वयंज्योतिः स्वयंप्रकाशः येन समन्वितं व्याप्तं सत् विश्वं प्रकाशत इति शेषः। विश्वप्रकाशक इत्यर्थः। प्रत्यग्धामेति लक्षणं विशेषणश्च

क्षणिकत्वसंसारित्वज्ञानादिगुणत्वसंसारित्वज्ञानविषयत्वादीनि व्यावर्त्यन्ते ।। ३ ।। स इति। स एष उक्तलक्षणो विभुः स्वतन्त्रः पुरुषः सूक्ष्मामविभक्तनामरूपां सत्त्वादिगुणमयीं दैवीं देवस्य भगवतः शक्तिरूपां यदृच्छयैवोपगतां प्राप्तां प्रकृतिं लीलया हेतुभूतया लीलार्थमभ्यपद्यत स्वीकृतवान्। अत्र आवरणविक्षेपशक्तिभेदेन प्रकृतिर्द्विधा—तत्रावरणशक्त्या सैव जीवोपाधिरविद्या, विक्षेपशक्त्या सैव परमेश्वरोपाधिर्माया। जीवेश्वरभेदेन पुरुषो द्विधा। तत्र यः प्रकृत्यविवेकेन संसरति स जीवः। यस्तु प्रकृतिं वशीकृत्य विश्वसृष्ट्यादि करोति स परमेश्वरः। अत एव लीलयाऽभ्यपद्यतेत्युक्तम्।। ४।। इदानीं प्रकृत्यविवेकेन जीवस्य संसारप्रकारमाह—गुणैरिति। चतुर्भिः गुणैः सत्त्वादिभिः सरूपाः स्वसमानरूपा अत एव विचित्राः देवमनुष्यतिर्यगादिरूपाः प्रजाः सृजतीं प्रकृतिं विलोक्य स जीवः इह संसारे निमित्ते ज्ञानं गूहति आवृणोतीति तथा तया प्रकृतेरेवाविद्याख्यवृत्त्या युक्तः सद्यः मुमुहे आत्मानं विस्मृतवान् ।। ५ ।। एवमिति । एवं पराभिध्यानेन प्रकृतौ देहादिरूपेण परिणतायामात्माध्यासेन प्रकृतेर्गुणैः क्रियमाणेषु कर्मसु कर्तृत्वं पुमानात्मनि स्वस्मिन् मन्यते ।। ६ ।। तदिति। तत्तस्मात् कर्तृत्वाभिमानादेव साक्षिणः अस्य पुरुषस्य वस्तुतोऽकर्तुरेव सतः कर्मभिर्बन्धः ईशस्य स्वतन्त्रस्यैव तत्कृतं कर्मबन्धकृतं भोगे पारतन्त्र्यं निर्वृतात्मन आनन्दस्वरूपस्यैव संसृतिः जन्ममरणादिप्रवाहश्च भवति ।। ७ ।। नन्वहं करोमीति चैतन्यसामानाधिकरण्येनैव कर्तृत्वादिप्रतीतेः पुरुष एव कर्त्ताऽस्तु इति चेत्तत्राह—कार्येति। यद्यप्यहङ्कारिगतमेव कर्तृत्वादिकं भोक्तृत्वं च प्रतीयते, तथापि विकारस्य जडपर्यवसानत्वात् कूटस्थस्य स्वतो विकाराभावात् कार्यं शरीरं कारणमिन्द्रियं कर्ताऽहङ्कारस्तद्भावापत्तौ पुरुषस्य प्रकृतिमेव कारणं विदुः। भोगस्य च जडे असम्भवाच्चैतन्यपर्यवसानत्वाच्च सुखदुःखानां भोक्तृत्वे प्रकृतेः परं विलक्षणं चेतनं पुरुषं कारणं विदुः। एषां च विकारस्योपाधिप्राधान्यं भोगस्योपहितप्राधान्यम्।। ८ ।।

प्रकृतेरिति। हे पुरुषोत्तम ! सदसत् कार्यं कारणं स्थूलं सूक्ष्मं वा सर्वमपि विश्वं यदात्मकं तयोः अस्य विश्वस्य कारणयोः प्रकृतेः पुरुषस्य चेत्येतयोर्लक्षणं ब्रूहीति ।। ९ ।। यदिति। यत् त्रिगुणमव्यक्तमतिसूक्ष्मं नित्यमुत्पत्तिविनाशरहितमविशेषं पृथ्व्यादिवदाकारविशेषरहितं विशेषवत् पृथिव्यादिनानाविशेषाश्रयभूतं सदसदात्मकं कार्यकारणं रूपम् एवंभूतं प्रधानं मुख्यं कारणं तदेव प्रकृतिं प्राहुः ।। १० ।। पञ्चभिरिति। पञ्चभिः पञ्चभिः चतुर्भिस्तथा दशभिः एतच्चतुर्विंशतिकम् एतानि चतुर्विंशतिर्यस्मिन् गणे तं गणं प्राधानिकं प्रधानकार्यात्मकं विदुः ।। ११ ।। एतदेव विवृणोति - महाभूतानीति। महाभूतानि भूः आपः इत्यादीनि पञ्चैव गन्धादीनि गन्धरसरूपस्पर्शशब्दाख्यानि तन्मात्राणि पृथिव्यादीनां सूक्ष्मावस्थाविशेषास्तावन्ति पञ्चैव मे मम मतानि ।। १२ ।। इन्द्रियाणीति। श्रोत्रं त्वक् इत्यादीनि मेढ्रान्तानि नव दशमः पायुरुच्यत इति दश इन्द्रियाणि। तत्र श्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि कर्मेन्द्रियाणि ।। १३ ।। मन इति। एकमेवान्तरात्मकमन्तःकरणं परं तु लक्षणरूपया चिह्नभूतया सङ्कल्पाध्यवसायाभिमानचिन्तारूपया वृत्त्या मनो बुद्धिरहङ्कारश्चित्तमित्येवं चतुर्धा तस्य भेदो लक्ष्यते ।। १४ ।। एतावानेवेति। सगुणस्य ब्रह्मणः यावानयं सन्निवेशः अवस्थाविशेषो मया प्रोक्तः स एतावानेवान्यैरपि सङ्ख्यातः। काले मतभेदमाह—यस्तु कालः स तु पञ्चविंशकः। अल्पार्थे कन्। प्रकृतेरेवावस्थाविशेषः। यद्वा पुरुष एव कालः ।। १५ ।। प्रभावमिति। एके पौरुषं पुरुषस्य भगवतः प्रभावं विक्रममेव कालमाहुः। यतः कालात् प्रकृतिमविद्यामीयुषः प्राप्तस्य अत एव देहादावहङ्कारेण तुविमूढस्य भ्रान्तस्य कर्तुर्जीवस्य भयं भवति ।। १६ ।। स्वमतमाह—प्रकृतेरिति। हे मानवि ! सत्त्वादिगुणत्रयसाम्यरूपस्य अत एव निर्विशेषस्य वस्तुनः प्रकृतेः सृष्टेः पूर्वं यतश्चेष्टासाम्यावस्थात्यागपरिणामान्तरप्राप्तिर्हेतुभूता भवति। स भगवानेव कालयतीति काल इत्येवमुपलक्षितः व्यवह्रतो भवति। अतो न तत्त्वान्तरम् ।। १७ ।। एतत् स्फुटयति—अन्तरिति। य एषः आत्ममायया सत्त्वानां सर्वप्राणिनामन्तः पुरुषरूपेणान्तर्यामिरूपेण बहिश्च कालरूपेण सम्यक् तद्विकाररहित एवान्वेति अनुस्यूतो वर्तते स भगवानेवेत्यन्वयः। तदेवं प्रकृतेश्चतुर्विंशतिर्भेदाः गुणत्रयं तु प्रकृतिरेवेति न पृथक्त्वम्। जीवेश्वरयोरैक्यविवक्षया पञ्चविंशतिस्तत्त्वानि। तयोर्भेदविवक्षायां च षड्विंशतिः। कालस्य पृथक्त्वे सप्तविंशतिः। प्रकृतेरपि पृथक्त्वेऽष्टाविंशतिः ।। १८ ।। दैवादिति। दैवात् कालात् जीवादृष्टसहकृतात् क्षुभिता वैषम्यं प्राप्ता धर्मा गुणाः यस्यास्तस्यां स्वकीयायां योनौ अभिव्यक्तिस्थाने प्रकृतौ परः पुमान् परमपुरुषो वीर्यं चिच्छक्तिमाधत्त। सा प्रकृतिः हिरण्मयं प्रकाशबहुलं महत्तत्त्वमसूत ।। १९ ।।

विश्वमिति। कूटस्थः लयविक्षेपशून्यः जगतः अङ्कुरस्थानीयः महान् आत्मगतं स्वस्मिन् सूक्ष्मरूपेण स्थितं विश्वमहङ्कारादिप्रपञ्चं व्यञ्जयन्। हेतौ शता। व्यञ्जयितुमात्मप्रस्वापनमात्मानं प्रस्वापयतीति तथा यत्पूर्वं प्रलयसमये महान्तं प्रकृतौ लयं कृतवत्तत् तीव्रं तमः स्वतेजसाऽपिबत् नाशितवानित्यर्थः। पुंस्त्वं तु तत्त्वपदत्यागेन महानित्यस्यैव विवक्षया ।। २० ।। यत्तदिति। यत् तत् सर्वागमप्रसिद्धं सत्त्वं सत्त्वगुणं स्वच्छं विशदं शान्तं भगवतः पदमुपलब्धिस्थानमत एवाधिष्ठानाधिष्ठेयाभेदमभिप्रेत्य वासुदेवाख्यं चित्तं यदाहुस्तन्महदात्मकमेव विद्धि। अत्रायमर्थः—अधिभूतरूपेण तस्यैव महानिति संज्ञा। अध्यात्मरूपेण चित्तमिति। उपास्यरूपेण वासुदेव इति। अधिष्ठाता तु क्षेत्रज्ञः। एवमहङ्कारमनोबुद्धिषु सङ्कर्षणानिरुद्धप्रद्युम्ना उपास्या

रुद्रचन्द्रब्रह्मणोऽधिष्ठातारः ॥ २१ ॥ स्वच्छत्वमिति । यथा परा भूसंसर्गात् प्राक्तनी अपां प्रकृतिः स्वतःसिद्धः स्वभावः फेनपङ्कतरङ्गादिरहिता मधुरा स्वच्छा च तथा स्वच्छत्वं निर्मलत्वमविकारित्वं लयविक्षेपराहित्यं शान्तत्वं रागादिशून्यत्वं चेत्येवंरूपाभिर्वृत्तिभिश्चेतसो लक्षणं प्रोक्तम् ॥ २२ ॥ महदिति द्वयम् । भगवद्वीर्यं चिच्छक्तिस्तेन संभव उत्पत्तिर्यस्य तस्मात् विकुर्वाणात् महत्तत्त्वात् क्रियासु शक्तिर्यस्य सः तथाभूतः उपलक्षणतया ज्ञानद्रव्यशक्तिः अहङ्कारः वैकारिकः सात्त्विकः तैजसो राजसः तामसश्चेति त्रिविधः समपद्यत बभूव । यतः यस्मादहङ्कारात् मनसः इन्द्रियाणां च महतां भूतानाम् आकाशादीनाम् अपि भवः उत्पत्तिर्जाता ॥ २३–२४ ॥ सहस्रेति । यमहङ्कारं साक्षात् सहस्रशिरसमनन्तं सङ्कर्षणाख्यं भूतेन्द्रियमनोमयं भूतेन्द्रियमनसां कारणं पुरुषं प्रचक्षते ॥ २५ ॥ कर्तृत्वमिति । देवतादिरूपेण कर्तृत्वम् इन्द्रियरूपेण करणत्वं भूतादिरूपेण कार्यत्वमित्यहङ्कृतेरहङ्कारस्य लक्षण स्यात् । एवं सात्त्विकत्वेन शान्तत्वं राजसत्वेन घोरत्वं तामसत्वेन मूढत्वमिति वाहंकृतेर्लक्षणं स्यात् ॥ २६ ॥ वैकारिकादिति । वैकारिकात् सात्त्विकात् विकुर्वाणादहङ्कारान्मनस्तत्त्वमजायत । यत् यस्य मनसः सङ्कल्पविकल्पाभ्यां विषयचिन्तनविशेषचिन्तनाभ्यां कामस्य कामनारूपवृत्तेः सम्भव उत्पत्तिर्वर्त्तते भवति इति लक्षणम् । २७ ॥ यदिति । यत् यत्र मनसि स्थितं हृषीकाणामिन्द्रियाणामधीश्वरं शारदं शरत्कालिकं यदिन्दीवरं नीलोत्पलं तदिव श्यामं योगिभिः शनैराराध्यम् अनिरुद्धाख्यं विदुः ॥ २८ ॥ तैजसादिति । हे सति ! विक्रियमाणात् तैजसात् राजसादहङ्काराद् बुद्धितत्त्वमभूत् । द्रव्यस्फुरणरूपं विज्ञानं बुद्धितत्त्वस्य वृत्तिरित्यर्थः । चित्तव्यावृत्त्यर्थं चेदम् । चेतनारूपं ज्ञानं तु चित्तधर्मः । तथा घटपटादिसविकल्पकज्ञाने इन्द्रियाणामनुग्रहः अनुग्राहकत्वं बुद्धेर्लक्षणम् । यद्यपि चित्तादीन्यपि इन्द्रियानुग्राहकाणि तथापि बुद्धयैव तत्र विशेषः । तथा हि शब्दं शृणोमीत्यत्र चित्तेन चेतनामात्रं निधीयते बुद्ध्या शब्दोऽयमिति स्फूर्तिः मनसा शब्दे जिघृक्षा अहङ्कारेण स्वाभिमानार्पणम् ॥ २९ ॥

द्रव्यस्फुरणं प्रपञ्चयति—संशय इति । संशयः एकस्मिन्ननेकप्रकारं ज्ञानं स्थाणुर्वा पुरुषो वेति विपर्यासो मिथ्याज्ञानं पीतः शङ्खः शुक्तौ इदं रजतमिति निश्चयो यथार्थप्रमाणज्ञानं स्मृतिः स्मरणं स्वापो निद्रा इत्येवं पृथक् असाङ्कर्येण वृत्तितः वृत्तिभिर्बुद्धेर्लक्षणमुच्यते । "प्रमाणविपर्ययविकल्पनिद्रास्मृतय" इति पातञ्जलोक्तेः ॥ ३० ॥ तैजसानीति । क्रियाज्ञानविभागशः कर्मेन्द्रियज्ञानेन्द्रियविभागेनोभयविधान्यपीन्द्रियाणि तैजसानि राजसाहङ्कारादेव जातानि ज्ञानेन्द्रियाणां वैकारित्वशङ्कानिरासायैवकारः । हि यस्मात् प्राणस्य क्रियाशक्तिः बुद्धेश्च विज्ञानशक्तिता अतः प्राणस्य तैजसत्वात्तत्क्रियाशक्तिमतामिन्द्रियाणामपि तैजसत्वम् । तथा बुद्धेरपि तैजसत्वात्तदीयज्ञानशक्तिमतामपीन्द्रियाणां तैजसत्वम् ॥ ३१ ॥ तामसादिति । भगवतो वीर्येण कालमायांशरूपेण चोदितात् प्रेरितात् अत एव विकुर्वाणात्तामसाहंकारात् शब्दरूपं मात्रं सूक्ष्मं द्रव्यमभूत् तस्मान्नभ आकाशमभूत् । श्रोत्रं तु शब्दगमित्यादिभिर्विषयोत्पत्त्यनन्तरं तत्संबन्धमात्रं कथ्यते । न तूत्पत्तिस्तस्याः प्रागेव कथितत्वात् । शब्दं गच्छतीति तथा शब्दग्राहकम् ॥ ३२ ॥ अर्थेति । अर्थाश्रयत्वमर्थप्रकाशत्वं द्रष्टुर्लिङ्गत्वं कुड्याद्यन्तरितस्य गजो यातीति वदतो गजद्रष्टुः पुरुषस्य ज्ञापकत्वं लिङ्गं यद् द्रष्टृदृश्ययोरित्युक्तत्वात् नभस्तन्मात्रत्वं सूक्ष्मरूपत्वं च शब्दस्य लक्षणं कवयो विदुः ॥ ३३ ॥ भूतानामिति । भूतानां छिद्रदातृत्वमवकाशदातृत्वं बाह्यान्तर्व्यवहारास्पदत्वं च प्राणानामिन्द्रियाणामात्मनो मनसश्च धिष्ण्यत्वं नाड्यादिच्छिद्ररूपेण स्थानत्वं च नभसः वृत्तिः कार्यरूपमेव लक्षणमेवमुत्तरत्राप्येकेन श्लोकेन तन्मात्रमहाभूतयोरुत्पत्तिः । द्वितीयेन तन्मात्रलक्षणं तृतीयेन महाभूतलक्षणमित्यनुसन्धेयम् ॥ ३४ ॥ नभस इति । शब्दस्तन्मात्रमसाधारणो गुणो यस्य तस्मात् कालगत्या विकुर्वतो नभसः सकाशात् स्पर्शः तन्मात्रमभवत् । ततः स्पर्शाद्वायुरभवत् । ततः स्पर्शस्य संग्रहः सम्यग्ग्रहणं यथा भवति सा त्वक् ॥ ३५ ॥ मृदुत्वमिति । मृदुत्वं कठिनत्वं च शैत्यमुष्णत्व च नभस्वतो वायोस्तन्मात्रत्वमसाधारणगुणत्वं च एतत्स्पर्शस्य स्पर्शत्वं लक्षणमित्यर्थः ॥ ३६ ॥ चालनमिति । चालनं वृक्षशाखादीनां प्रकम्पनं व्यूहनं तृणादीनां संमेलनं प्राप्तिः सर्वत्राप्रतिहतगतिः द्रव्यशब्दयोर्नेतृत्वं तत्र द्रव्यस्य गन्धवतो घ्राणं प्रति तथा शैत्यादिमतः स्पर्शनं प्रति शब्दस्य दूरस्थस्य श्रोत्रं प्रतीत्यादि यथायोग्यमूह्यम् । सर्वेन्द्रियाणामात्मत्वमुपोद्बलकत्वं भुक्तान्नादिप्रापकत्वेन कार्यक्षमतासम्पादकत्वमिति यावत् । वायोरेतत्कर्मैवाभिलक्षणम् ॥३७॥ वायोरिति । स्पर्शस्तन्मात्रं यस्य तस्माद्दैवेन कालेनेरितात् प्रेरितात् वायोः सकाशात् रूपमभूत् । ततो रूपात् तेजः समुत्थितमुत्पन्नमभूत् । तत्र चक्षुरिन्द्रियं रूपस्योपलम्भनं ग्राहकमित्यर्थः ॥ ३८ ॥

द्रव्येति । हे साध्वि ! द्रव्याकृतित्व द्रव्यस्याकारसमर्पकत्वं गुणता द्रव्योपसर्जनतया प्रतीतिः सैव संस्था संनिवेशः शब्दस्य स्वातन्त्र्येणैव प्रतीतिः अप्रत्यक्षद्रव्यस्पर्शादेरपि स्वातन्त्र्येणैव प्रतीतिः । रूपस्य तु नैवमिति तस्यायं विशेष उक्तः । व्यक्तिसंस्थात्वं द्रव्यस्य या संस्था संनिवेशः सैव संस्था यस्य तथात्वम् । द्रव्यस्य स्थूलसूक्ष्मतया ऋजुवक्रतया चास्यापि तथात्वेन प्रतीतिरित्यर्थः । तेजसस्तेजस्त्वमसाधारणधर्मत्वं च रूपमात्रस्य वृत्तयः लक्षणानि ॥ ३९ ॥ द्योतनमिति । द्योतनं प्रकाशनं पचनं तण्डुलादेः क्षुत् तृट् च तद्द्वारेण पानमदनं च हिममर्दनं शैत्यनाशनं शोषणं च एताः तेजसो वृत्तयः कार्यभूतानि लक्षणानि ॥ ४० ॥ रूपेति ।

दैवेन कालादिना चोदितात् प्रेरितात् विकुर्वाणात् रूपं मात्रा यस्य तस्मात्तेजसः रसमात्रमभूत्। तस्माद्रसात् अम्भः जलमभूत्। जिह्वा रसनेन्द्रियं ततः रसस्य ग्रहो ग्रहणं भवति ॥ ४१ ॥ कषाय इति। स्वतः एको मधुर एव रसः भौतिकानां संसर्गिद्रव्याणां बीजादीनां विकारेण कषायः मधुर इत्यादिः नैकधा षड्धा विभिद्यते ॥ ४२ ॥ क्लेदनमिति। क्लेदनमार्द्रीकरणं पिण्डनं मृदादेः पिण्डीकरणं तृप्तिः तृप्तिकरत्वं प्राणनं जीवनम् "आपोमयः प्राण" इति श्रुतेः। आप्यायनं तृड्वैक्लव्यनिवर्त्तनम् उन्दनं मृदुकरणम्। ओदनमिति पाठेऽपि स एवार्थः। तापापनोदः सूर्यादिजनिततापनिवर्तनं भूयस्त्व कूपादावुद्धृतस्यापि पुनः पुनरुद्गमः स्वसम्मेलनेन दुग्धादिद्रव्यान्तरस्य बहूकरणं वा इमाः क्लेदनादयः अम्भसः वृत्तयः कार्यभूतानि लक्षणानि ॥ ४३ ॥ रसेति। दैवादिचोदितात् विकुर्वाणाद्रसतन्मात्रादम्भसो गन्धतन्मात्रमभूत्। तस्मात् पृथ्वी अभूत्। गन्धगः गन्धग्राहकस्तु घ्राणः ॥ ४४ ॥ करम्भ इति। एक एव गन्धः संसर्गिद्रव्याणामवयववैषम्याद्विकारात् करम्भो मिश्रगन्धः यथा व्यञ्जनादीनां हिंग्वादिसंस्कारैः पूतिर्दुर्गन्धः सौरभ्यं कर्पूरादेः शान्तः शतपत्रादेः उदग्रो लशुनादेः इत्यादिभिर्भेदैः पृथक् विभिद्यते ॥ ४५ ॥ भावनमिति। ब्रह्मणो भावनं प्रतिमादिरूपेण साकारतापादनम्। स्थानं जलादिविलक्षणतया तन्नैरपेक्ष्येण स्थितिः। धारणं जलाद्याधारत्वं सतामाकाशादीनां विशेषणमवच्छेदकत्वं घटाकाशः मलिनाकाशः धूम्रो वायुरित्यादिप्रतीतेः। सर्वेषां सत्त्वानां प्राणिनां तत्तद्गुणानां पुंस्त्वादीनामुद्भेदः परिणामविशेषैः प्रकटीकरणं पृथिव्या वृत्तिः कार्यमेव लक्षणम् ॥ ४६ ॥ श्रोत्रादीनां शब्दादिग्राहकत्वमेव लक्षणमित्याह—नभ इति। नभस आकाशस्य गुणविशेषः शब्दः यस्य अर्थो ग्राह्यो विषयः तच्छ्रोत्रमुच्यते। एवमग्रेऽपि ॥ ४७–४८ ॥

भूमेरित्यर्द्धम्। परस्येति। परस्य कारणस्याकाशादेर्धर्मः शब्दादिः परस्मिन् कार्ये वाय्वादौ समन्वयात् आकाशादेरुपादानतयाऽनुवृत्तत्वात्। हि यतो दृश्यते अतो हेतोर्भावानामाकाशादीनां सर्वं एव विशेषः। शब्दादिगुणो भूमावुपलक्ष्यते दृश्यते तत्राकाशादिचतुर्णामन्वयात् जलादिषु यथान्वयमेव न सर्वः आकाशे त्वन्यान्वयाभावादेकः शब्द एव ॥ ४९ ॥ कारणोत्पत्तिमुक्त्वा कार्योत्पत्तिमाह—एतानीति। यदा एतानि महदादीनि महदहङ्कारपञ्चमहाभूतानीति सप्त असंहत्य अमिलित्वा स्थितानि तथा भूतेभ्यः कार्योत्पत्त्यसंभवात्तदा कालः क्षोभकः कर्म जीवादृष्टं गुणः सत्त्वादिः तैरुपेतः विशिष्टो जगदादिर्भगवान् उपाविशत् प्रथमं संहननकारिण्या शक्त्या सर्वतत्त्वसम्मेलनार्थमविशत्। ततो वर्षसहस्रान्तेऽन्तर्यामित्वेन प्राविशत् इति ज्ञेयम्। तन्मात्राणि महाभूतेषु इन्द्रियाणि चाहङ्कारेऽन्तर्भाव्य सप्तेत्युक्तम्। अतः सर्वेष्वेव प्रवेशो बोध्यः ॥ ५० ॥ तत इति। ततः तेन भगवत्प्रवेशेन अनुविद्धेभ्यः क्षुभितेभ्यः अत एव युक्तेभ्यः परस्परं प्रधानगुणभावेन मिलितेभ्यस्तत्त्वेभ्यः अचेतनमधिष्ठातृचेतनरहितमण्डमुत्थितमुत्पन्नम्। यस्मादण्डादसौ विराट् समष्टिपुरुषः देहः उदतिष्ठत् प्रादुरभूत्। ऊर्ध्वकर्मविवक्षया तङ्भावः ॥ ५१ ॥ एतदिति सार्द्धम्। एतच्च विशेषाख्यमण्डं बहिः प्रधानेन व्यापकेनावृतैः क्रमवृद्धैः क्रमश उत्तरोत्तरदशगुणाधिकैस्तोयादिभिः तोयतेजोवाय्वाकाशाहङ्कारमहत्तत्त्वैः परिवृतम्। यत्राण्डे हरेर्भगवतः रूपं रूपभूतः अयं देवमनुष्यादिः लोकवितानः लोकविस्तारोऽस्ति हरेरिति पुरुषाभेदाभिप्रायेण ॥ ५२ ॥ तत्राध्यात्मादिविभागमाह—हिरण्मयादिति। सलिलेशयात् जलेस्थितात् हिरण्मयात् प्रकाशबहुलादण्डकोशात् उत्थाय तत्रस्थ एवौदासीन्यं त्यक्त्वा तमाविश्य तमधिष्ठायैव महादेवो भगवान् खमिन्द्रियच्छिद्रं बहुधा निर्बिभेद पृथक् चकार ॥ ५३ ॥ निरभिद्यतेति। अस्य विराजः प्रथमं मुखं निरभिद्यत। ततस्तत्र मुखे वाणी वागिन्द्रियं तया वाण्या सह तदधिष्ठाता वह्निरभवत् प्राविशत्। अथो नासे नासिकाच्छिद्रे निरभिद्येतामेतयोर्नासाच्छिद्रयोरधिष्ठानभूतयोः प्राणोतः प्राणेन उतः स्यूतः विशिष्टः सन् घ्राण इन्द्रियमभवदित्यनुषङ्गः। प्राणोत इति विशेषणं सर्वेन्द्रियेष्वपि लिङ्गपरिणामेन द्रष्टव्यं प्राणाधीनस्थितिकत्वात् ॥ ५४ ॥ घ्राणादिति। घ्राणादनन्तरं वायुश्च तद्देवताऽभवत् अविशत्। एवमग्रेऽपि पञ्चम्यन्तानां तदनन्तरमिति व्याख्या ज्ञेया। अन्यत्र प्राणाधिष्ठातृतयाऽश्विनीकुमारावुक्तावत्र तु वायुरिति विशेषः। अक्षिणी इन्द्रियाधिष्ठाने अभिद्येतामेतयोश्चक्षुरिन्द्रियमभवत्। तस्मात्तदनन्तरं सूर्यो देवता प्राविशदिति शेषः। कर्णौ इन्द्रियाधिष्ठाने अनु अनन्तरमभिद्येताम्। ततः श्रोत्रमिन्द्रियं दिशश्च देवताः प्राविशन् न्यभिद्येतामन्वभिद्येतामित्येकार्थं पाठद्वयम् ॥ ५५ ॥ निर्बिभेदेति। ततश्च विराजस्त्वक् अधिष्ठानं निर्बिभेद निर्भिन्ना। ततस्तत्र रोमादय इन्द्रियस्थानापन्ना ज्ञेयाः। अत्र विशेषो द्वितीयस्कन्धे दशमेऽध्याये वस्तुनो मृदु इति श्लोके व्याख्यातो द्रष्टव्यः। आदिपदेन केशाः तत्र ओषधयश्च देवता आसन् प्राविशन्। ततश्च शिश्नमधिष्ठानं निर्बिभेदे भिन्नं जातम् ॥ ५६ ॥

रेत इति। रेत इन्द्रियं तस्मात्तस्मिन्नापो देवता आसन् प्राविशन्। अग्रेऽपि देवतास्थले प्रवेशोऽर्थो ज्ञेयः। ततश्च गुदमधिष्ठानं निरभिद्यत। गुदात् गुदोत्पत्तेरनन्तरं तत्र अपान इन्द्रियमासीत्। अपानादनन्तरं च सर्वलोकभयङ्करो मृत्युस्तत्र देवता आसीत् ॥ ५७ ॥ हस्ताविति। हस्तौ निरभिद्येतां ताभ्यां तयोर्बलमिन्द्रियमासीत् स्वराट् इन्द्रश्च तत्तस्य देवता आसीत्। पादौ च निरभिद्येतां ताभ्यां तयोर्गत्याख्यमिन्द्रियमासीत्। ततस्तत्र हरिरुपेन्द्रो देवताऽऽसीत् ॥ ५८ ॥ नाड्य इति। अस्य विराजः

नाड्योऽधिष्ठानभूता निरभिद्यन्त ताभ्यस्तासु लोहितमिन्द्रियस्थानीयमाभृतं पूर्णं ततस्तस्य नद्यो देवताः समभवन्। ततः उदरमधिष्ठानं निरभिद्यत ॥ ५९ ॥ क्षुदिति। ततस्तत्र क्षुत्पिपासे इन्द्रियस्थानीये स्याताम्। एतयोर्देवता तु समुद्रोऽभूत्। अथ चास्य हृदयं कमलाकारं भिन्नं हृदयात् हृदये मन इन्द्रियमुत्थितं स्थितम् ॥ ६० ॥ मनस इति। मनसश्चन्द्रमा देवता जातः बुद्ध्यादीनामपि हृदयमेवाधिष्ठानं बुद्धिरिन्द्रियं बुद्धेर्गिरां पतिः ब्रह्मा देवता-अहङ्कार इन्द्रियं तत्र रुद्रः देवता चित्तमिन्द्रियं तत्र चैत्यः क्षेत्रज्ञो जीवोऽधिष्ठाताऽभूदिति स्वामिपादाः। परे तु चैत्यश्चित्ताधिष्ठाता वासुदेवः स एव चित्ते उपास्यः स एव समष्टिजीवस्य हिरण्यगर्भस्य प्रद्युम्नत्वेनान्तर्यामी। स एव च व्यष्टिजीवानामनिरुद्धत्वेनान्तर्यामीति व्याचख्युः ॥ ६१ ॥ अत्र देहादिसंघाते क्षेत्रज्ञो मुख्य इति वक्तुमन्येषामसामर्थ्यमाह—एत इति। पुनःशब्दस्तथापीत्यर्थे। अभ्युत्थिताः अहङ्काराज्जाता एते हि प्रसिद्धा देवास्तं विराजमुत्थापयितुं खानि स्वस्थानानि क्रमात् विविशुस्तथाप्यस्योत्थापने नैवाशकन् ॥ ६२ ॥ एतदेव स्पष्टयति—वह्निरित्यादिभिः सप्तभिः। वह्निर्देवता वाचा इन्द्रियेण मुखं भेजे तदा विराट् नादतिष्ठत् इत्यादि स्पष्टम् ॥ ६३–६९ ॥ चित्तेनेति। चैत्यश्चित्ताधिष्ठाता क्षेत्रज्ञो जीवः व्याख्यान्तरे वासुदेवः चित्तेन स्वशक्तिभूतेनेन्द्रियेण सह हृदयकमलं स्वाधिष्ठानं यदा प्राविशत् तदैव विराट् पुरुषः सलिलादुदतिष्ठत। इह ल्यब्लोपे पञ्चमी। सलिलमधिष्ठाय कार्यक्षमो जातः ॥ ७० ॥ यथेति। येन जीवेन विना प्राणादयो यथा प्रसुप्तं पुरुषं मनुष्यादिमोजसा स्वबलेनोत्थापयितुं न प्रभवन्ति तथा वह्न्यादयो देवा अपि क्षेत्रज्ञप्रवेशमन्तरेण विराजमुत्थापयितुं नाशक्नुवन् ॥ ७१ ॥ तमिति। भक्त्या विरक्त्या ज्ञानेनेति प्रथममीश्वरे भक्तिः ततोऽन्यत्र विरक्तिः ततो योगेन प्रवृत्तया एकाग्रया धिया यत् ज्ञानं प्रकृतिपुरुषविवेकः तेनास्मिन् आत्मनि देह एव तं प्रत्यगात्मानं विविच्य चिन्तयेत् ॥ ७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां षड्विंशोऽध्यायः ॥ २६ ॥



## अथ सप्तविंशोऽध्यायः

### श्रीभगवानुवाच

**प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः। अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ १ ॥**

तप्तविंशे तु बहुभिः साधनैः पुंप्रधानयोः। विवेकेन मोक्षरीतिस्त्रिंशत्पद्यानि ( ३० ) तत्र तु ॥

उवाचेति त्रयं साङ्घ्रिरेक( ३१। )त्रिंशदनुष्टुभः ॥ २७ ॥

प्रकृतीति। पुरुषः प्रकृतिस्थोऽपि प्रकृतिकार्ये देवमनुष्यादिशरीरे स्थितोऽपि अविकारात् रागादिविकाराभावात् अकर्तृत्वात् निर्गुणत्वाच्च जलार्कवत् जले प्रतिबिम्बितसूर्य इव प्राकृतैर्गुणैः तत्कृतैः पुण्यपापादिभिः सुखदुःखादिभिश्च नाज्यते न लिप्यते। यथा जलगताः कम्पादयः प्रतिबिम्बितेऽर्के प्रतीयमाना अपि वस्तुतोऽर्कगता न भवन्ति, तथाऽन्तःकरणगता एव सुखादयोऽध्यासेनात्मनि प्रतीयन्ते न तु तत्र वस्तुतः सन्ति ॥१॥ स इति। स एष दोषरहितोऽप्यात्मा यर्हि यदा अहंक्रिया देहादावात्माभिमानस्तया विमूढः आत्मा यस्य सः तथाभूतः सन् प्रकृतेर्गुणेषु शब्दादिविषयेष्वभिविषज्जते आसक्तो भवति, तदा देहेन्द्रियादिभिः क्रियमाणेष्वपि कर्मसु अहं कर्त्ताऽस्मीत्यभिमन्यते अभिमानं करोमि ॥ २ ॥ तेनेति। तेन कर्तृत्वाभिमानेन प्रासङ्गिकैः देहादिकृतैः कर्मदोषैः पुण्यपापात्मकैः अवशः तदधीनः अत एवानिर्वृतः सुखमलभमानः सदसन्मिश्रयोनिषु देवतिर्यङ्मनुष्यादियोनिषु संसारपदवीं जन्ममरणादिलक्षणामभ्येति ॥ ३ ॥ अर्थे इति। यद्यपि देहानामेव जन्मादि न त्वात्मनः अतः अर्थे जन्ममरणादिरूपे

अविद्यमानेऽपि। हि यस्मात् यथा स्वप्ने अविद्यमानस्याप्यनर्थस्य स्वशिरश्छेदादिरूपस्यागमः प्राप्तिर्जागरणमन्तरेण न निवर्तते तथा विषयान् ध्यायतोऽस्य जीवात्मनः संसृतिः मनुष्यादियोनिषु भ्रमणं तत्र सुखदुःखादिसाक्षात्कारश्च न निवर्त्तते॥ ४॥ अत एवेति। अतस्तस्मादेव असतां दुष्टानामिन्द्रियाणां पथि मार्गे विषये प्रकर्षेण सक्तं चित्तं तीव्रेण भक्तियोगेन विरक्त्या च शनैर्बहुकालं विषयासक्तस्य झटिति वशागमनस्य दुर्घटत्वात्तत्रोद्वेगमकुर्वन् वशं नयेत्॥ ५॥ भक्तिविरक्त्योस्तोत्रत्वे कारणानि वदन् ज्ञानेन मोक्षप्रकारमाह—यमादिभिरिति षट्कम्। यमादिभिर्योगपथैर्योगमार्गैरभ्यसन् पुनः पुनश्चित्तमेकाग्रीकुर्वन् श्रद्धयान्वितः मयि भगवति सत्येन फलाभिसन्धिरहितेन भावेन प्रेम्णा मत्कथाश्रवणेन चकारात् कीर्तनस्मरणादिना सर्वभूतेषु समत्वेन समदृष्ट्या सर्वत्र निर्वैरेण वैरत्यागेन अप्रसङ्गतः सर्वत्रासक्तित्यागेन ब्रह्मचर्येणाष्टाङ्गेन मौनेन वृथाऽऽलापवर्जनेन बलीयसा भगवत्प्रीत्यर्थमनुष्ठितेन स्ववर्णाश्रमविहितधर्मेण यदृच्छया प्रयत्नं विना उपलब्धेन प्राप्तेनान्नादिना संतुष्टः मितभुक् परिमितमेव भुञ्जानो मुनिः विविक्तशरण एकान्तवासी शान्तः रागादिहीनः मैत्रः सर्वेषां हितेच्छुः करुणः दयावान् आत्मवान् धैर्यवान् सानुबन्धे पुत्रकलत्राद्यनुबन्धसहितेऽस्मिन् देहे असदाग्रहमहममाभिमानमकुर्वन् प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं याथात्म्यं येन तेन ज्ञानेन निवृत्तानि बुद्ध्यवस्थानानि जाग्रदादीनि यस्य सः। अत एव दूरीभूतमन्यस्य भगवद्व्यतिरिक्तस्य दर्शनं यस्य सः आत्मदृक् मुक्तलिङ्गं देहाद्युपाधिविनिर्मुक्तम् असति मिथ्याभूतेऽहंकारे सदाभासं सद्रूपेणाभासमानं सतः परमार्थभूतस्य परमात्मनो बन्धुं तदभिन्नमित्यर्थः। यद्वा सतः कारणस्य प्रधानस्य बन्धुमधिष्ठानम् असतः तुच्छस्य प्रपञ्चस्य चक्षुः चक्षुरिव प्रकाशकं सर्वेषु कार्यकारणेषु अनुस्यूतं व्याप्तम् अद्वयं सर्वात्मकं चक्षुषा चक्षुरवच्छिन्नेनार्केण गगनस्थमर्कमिव आत्मना अहङ्कारावच्छिन्नेन आत्मानं शुद्धम् उपलभ्य दृष्ट्वा प्रतिपद्यते जानाति। एकस्यैवावच्छेदानवच्छेदाभ्यां करणकर्मत्वे चक्षुषे वेति दृष्टान्तः॥ ६–११॥

अहङ्कारोपहितेन शुद्धब्रह्मप्रतिपत्तिं सदृष्टान्तमाह—यथेति द्वयम्। यथा जले स्थित आभासः सूर्यप्रतिबिम्बो यदा गृहान्तर्वर्तिस्वच्छभित्तौ स्फुरति तदा गृहकोणस्थितैः पुरुषैः प्रथमं भित्त्यादौ स्थले स्थित आभासो दृश्यते। ततश्च कुतोऽयं प्रकाश इति विमृशद्भिस्तैस्तेन भित्त्यादौ स्थले स्थितेन स्वाभासेन सूर्यप्रतिबिम्बेन यथा जलस्थ आभासोऽवदृश्यते। गगनस्थस्य सूर्यस्य गृहमध्ये प्रतिबिम्बायोगात् पुनश्चायमप्याभासः कुत इति तथैव जलस्थेनाभासेन दिवि स्थितः सूर्यो लक्ष्यते, तथा अविवेकिभिः प्रथमं भूतेन्द्रियमनांसि चैतन्यप्रकाशवन्ति दृश्यन्ते। ततश्च जडेष्वेषु प्रकाशः कुतस्त्यः इति भूतेन्द्रियमनोमयैः देहेन्द्रियमनोभिरवच्छिन्नैः स्वाभासैरात्मप्रतिबिम्बैस्त्रिवृत् त्रिगुणोऽहङ्कारः सतो ब्रह्मणः आभासो यस्तेन रूपेण लक्षितो भवति। अहङ्कारस्थाभासं विना विषयाभासानुपपत्तेः। अनेन च सदाभासवताऽहंकारेण सत्यदृक् परमार्थज्ञप्तिरूप आत्मा लक्षितो भवति॥ १२–१३॥ इदानीं सुषुप्तिसाक्षित्वेन शुद्धात्मप्रतिपत्तिमनुभवतो दर्शयति—भूतेति त्रिकम्। इह निद्रावस्थायां भूतानि सूक्ष्माणि तन्मात्राणि इन्द्रियाणि मनो बुद्धिः आदिशब्देन अहंकारः तेषु असति असत्तुल्ये अव्याकृते निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियश्च तिष्ठति। यश्च तदा सुषुप्तो भूतसूक्ष्मादेरहंकारविषयस्य लीनत्वात् तद्विषयेऽहकरणेऽहंकारेऽपि नष्टे सति स्वयमनष्टोऽपि नष्टवित्तो यथा स्वयमनष्टोऽप्यातुरो व्याकुलः सन्नष्टवद् भवति तथा मृषैवात्मानं नष्टवन्मन्यमानो भवति न तथा प्रकाशते। सुषुप्तौ विशेषरूपेणानुभवाभावेऽपि तदन्ते सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति केवलस्यात्मनः प्रतिसन्धानम्। प्रतिसन्धाने च साहंकारप्रतीतावपि निरहंक्रियत्वमुपपादयति। साहकारस्य अहंकारसहितस्य द्रव्यस्य कार्यकारणसंघातस्य योऽनुग्रहः प्रकाशकः अवस्थानमाश्रयश्च द्रव्यविशेषणतयाऽहंकारस्यापि दृश्यत्वाच्च तद्द्रष्टा आत्मा तद्व्यतिरिक्त इति तमात्मानं असौ विवेकिजन एवं प्रत्ययमृश्य विचारेण विविच्यात्मानं प्रतिपद्यते जानाति॥ १४–१६॥

पुरुषमिति। हे ब्रह्मन्! हे प्रभो! पुरुषव्यतिरेकेण प्रकृतेः स्वरूपालाभात् प्रकृतिव्यतिरेकेण च पुरुषस्याभिव्यक्त्यभावादित्यन्योन्यापाश्रयत्वात् परस्परं दृढतरसम्बन्धादित्यर्थः। अनयोः प्रकृतिपुरुषयोरुभयोरपि नित्यत्वाच्च पुरुषं प्रकृतिः कर्हिचिदपि न विमुञ्चति॥ १७॥ यथेति। यथा भूमेर्गन्धस्य च यथा चापां रसस्य च व्यतिरेकतः विश्लेषतः पृथग्भावोऽवस्थानं न भवति तथा बुद्धेः प्रकृतेः परस्य पुरुषस्य च व्यतिरेकतो भावो न भवति॥ १८॥ अकर्तुरिति। स्वतः कर्तृत्वरहितस्यापि पुरुषस्य प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु कर्तृत्वमात्मनि मन्यते इत्युक्तत्वात्। अयं कर्मबन्धः जन्मादिलक्षणो यदाश्रयः ये गुणा आश्रयो यस्य स यदधीनः तेषु प्रकृतिगुणेषु सत्सु प्रकृतेर्नित्यत्वात्तदसाधारणगुणेषु सत्त्वादिष्वपि नित्यतया सर्वदैव वर्तमानेषु सत्सु अतः संसारबन्धात् पुरुषस्य कैवल्यं मोक्षः कथं घटते॥ १९॥ क्वचिदिति। तत्त्वावमर्शेनात्मतत्त्वज्ञानेन क्वचित् पुरुषविशेषे अवस्थाविशेषे च निवृत्तम् अनुसन्धानाभावेन निवृत्तप्रायमपि उल्वणं संसारभयम् अनिवृत्तनिमित्तत्वात्। निमित्तस्य प्रकृतिगुणस्य सत्त्वादेरनिवृत्तत्वात् पुनः प्रत्यवतिष्ठते उपस्थितं भवति॥ २०॥ नहि प्रकृतिसंबन्धमात्रं बन्धहेतुः, किन्तु गुणबुद्ध्या तदासक्तिः तन्निवृत्तौ सत्यां मोक्षो घटते। क्वचिदुद्भवस्तु साधनवैकल्यादित्यभिप्रेत्य साधनातिशयं कथयन् परिहरति—अनिमित्तेति त्रयम्। निमित्तं फलं तदनिमित्तमप्रवर्तकं यस्मिंस्तेन फलाभिसन्धिरहितेन स्ववर्णाश्रमोचितधर्मेण अमलात्मना निर्मलेन मनसा

चिरं श्रुतसम्भृतया मत्कथाश्रवणेन पुष्टया अत एव तीव्रया मयि भक्त्या दृष्टं तत्त्वं प्रकृतिपुरुषयोर्याथात्म्यं येन तेन ज्ञानेन बलीयसा वैराग्येण च तपसा युक्तेनाष्टाङ्गेन योगेन तीव्रेणात्मविषयकसमाधिना अहर्निशं दह्यमाना अभिभूयमाना पुरुषस्य मोहिका प्रकृतिरविद्या लिङ्गशरीरम् । यथा अग्नेर्योनिः आविर्भावहेतुः अरणिः काष्ठं स्वतः आविर्भूतेनाग्निना दह्यमाना विनश्यति, तथा शनकैः साधनतारतम्यानुसारेणेहास्मिन्नेव जन्मनि तिरोहिता भवित्री ॥ २१–२३ ॥ भुक्तेति । भुक्तो भोगो यस्याः सा अत एव परित्यक्ता नित्यशः दृष्टो दोषो दुःखहेतुत्वं यस्याः सा ईश्वरस्य स्वतन्त्रस्य स्वे महिम्नि परमानन्दस्वरूपे स्थितस्य पुरुषस्याशुभं संसारभयं पुनर्नाधत्ते न सम्पादयतीत्यर्थः । सुषुप्तौ निद्रया लयोऽत्र तु साधनेनेति विशेषः ॥ २४ ॥ यथेति । यथा हि अप्रतिबुद्धस्य निद्रामुपगतस्य पुंसः प्रस्वापः स्वप्नः बहूननर्थान् स्वशिरश्छेदादीन् बिभर्ति पुष्णातीति तथाभूतोऽपि स एव संस्कारवशेन स्फुरन्नपि प्रतिबुद्धस्य मोहाय नैव कल्पते समर्थो नैव भवति ॥ २५ ॥

एवमिति । एवं रीत्या विदितं तत्त्वं येन तस्य अत एवात्मारामस्य मयि परमेश्वरे मानसं मनो युञ्जतः पुरुषस्य प्रकृतिः कर्हिचिदपि नापकुरुते मोहं कर्तुं नैव शक्नोति ॥ २६ ॥ यदेति त्रयम् । बहूनि जन्मानि यस्मिंस्तेन कालेन यदा अध्यात्मरतः स्वरूपनिष्ठो मुनिः विवेकी अत एव आब्रह्मभुवनात् सर्वत्र जातवैराग्यश्च मद्भक्तः प्रतिबुद्धः विज्ञातः अर्थः परमपुरुषार्थो येन स्वदृशा स्वरूपज्ञानेन छिन्नः संशयो यस्य सः धीरः तदा भूयसा महता मत्प्रसादेन निःश्रेयसं निरतिशयानन्दं कैवल्याख्यं मोक्षशब्दवाच्यं मदाश्रयं मत्स्वरूपं स्वसंस्थानं देहादिव्यतिरिक्तं स्वरूपमिहैव देहेऽञ्जसा साक्षात् प्राप्नोति लिङ्गादिनिर्गमे प्रारब्धावसाने लिङ्गशरीरभङ्गे सति यत् गत्वा प्राप्य योगी पुनः संसारं प्रति न निवर्तेत न निवर्तते ॥ २७–२९ ॥ यदेति । अङ्ग हे मातः । अम्बेति पाठो वा । एवं मोक्षे त्वणिमादयः सिद्धयोऽन्तरायरूपा आयान्ति तासु योगेनोपचितासु सुसमृद्धासु अनन्यहेतुषु न योगादन्यो हेतुर्यासां तासु मायासु मोहिकासु यदा सिद्धस्य निष्पन्नयोगस्य चेतो न विषज्जते । अथ तदा आत्यन्तिकी परमपुरुषार्थरूपा मे मदीया मत्प्राप्तिलक्षणा गतिः स्यात् । यत्र यस्यां गतौ सत्यां मृत्योर्हासो गर्वो न भवति । तासु विषक्तौ तु संसारानिवृत्तेः सिद्धोऽपि मया वशीकृत इति मृत्योर्हासो भवत्येव ॥ ३० ॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तविंशोऽध्यायः ॥ २७ ॥



# अथाष्टाविंशोऽध्यायः

श्रीभगवानुवाच

योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे । मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥

अष्टाविंशे ध्यानवता योगेन निरुपाधिकम् । स्वरूपज्ञानमुक्तं तच्छ्लोका उक्ताः कृताब्धयः ( ४४ ) ॥
उवाचेत्येकमर्द्धाढ्याः सप्त बाणा ( ५७॥ ) अनुष्टुभः ॥ २८ ॥

योगस्येति । हे नृपात्मजे ! योगो हि द्विविधः सबीजो निर्बीजश्च । तत्र निर्बीजो निरालम्बनो यो गीतायामुक्तः "यतो यतो निश्चरति मनः" इत्यादि । सबीजस्तु सालम्बनस्तस्य योगस्य लक्षणं वक्ष्ये । येनैव विधिना विहितेन योगेन मनः प्रसन्नं त्यक्तकामादिकालुष्यं विशुद्धं सत् सत्पथं सतो भगवतो मार्गं याति तत्रैव स्थिरं भवति ॥ १ ॥ तत्र योगाङ्गेषु यमादीनाह— स्वधर्मेति । तत्र अहिंसासत्यास्तेयापरिग्रहब्रह्मचर्यमौनानि यमाः तदन्यानि नियमाः । शक्त्या यथाशक्ति निष्कामं स्वधर्माचरणं विधर्मात् स्वधर्मबाधकान्निवर्तनं दैवात् प्रारब्धाल्लब्धेनान्नादिना संतोषः आत्मविदां चरणार्चनम् ॥ २ ॥ ग्राम्येति । ग्राम्यधर्मः त्रैवर्गिकधर्मस्तस्मान्निवृत्तिः । मोक्षधर्माः श्रवणकीर्तनादयस्तेषु रतिः । मितं च तन्मेध्यं शुद्धं च तस्यादनं तत्र मितं नाम "द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् ॥" इति स्मृतिप्रसिद्धम् । तत्राधिकादने आलस्यादि स्यात् अशुद्धादने च चित्तं दुष्येदिति द्वयमुक्तम् । शश्वन्नित्यमिति यथासंभवं सर्वेषामेव विशेषणं विविक्तमेकान्तं तत्रापि क्षेमं निर्बाधं तस्य स्थानस्य सेवनम् ॥ ३ ॥ अहिंसेति । अहिंसा प्राणिमात्रद्रोहत्यागः सत्यम् अस्तेयं परस्वानाहरणं यावताऽर्थेनान्नादिना देहनिर्वाहस्तावतोऽर्थस्य परिग्रहः ब्रह्मचर्यं तपःशौचं विशुद्धिः सा च स्नानादिना देहविशुद्धिः स्वाध्यायो वेदपाठादिः पुरुषस्य हरेरर्चनम् ॥ ४ ॥ मौनमिति । अत्र स्वधर्मादयो मौनान्ताः यमनियमाः आसनादीन्यङ्गान्याह । सतः समीचीनस्य स्वस्तिकादे-रासनस्य जयेन शरीरस्य स्थैर्यं शनैः प्राणजयः प्राणायामेन प्राणवायोर्वशीकरणम् इन्द्रियाणां मनसा विषयात् हृदि प्रत्याहारः प्रत्या-हृत्यावस्थापनम् ॥५॥ स्वेति । स्वधिष्ण्याणां प्राणस्थानानां मूलाधारादीनां मध्य एकस्मिन् देशे मनसा सह प्राणस्य धारणं वैकुण्ठस्य हरेर्लीलानामभिध्यानं तथा आत्मनः मनसः समाधानमात्माकारता ॥ ६ ॥ एतैरिति । एतैः स्वधर्माचरणादिभिरन्यैश्च व्रतदानादिभिः पथिभिरुपायैः असत्पथमसतामिन्द्रियाणां पथि वर्तमानम् अत एव दुष्टं मनः जिताः प्राणाः ये तथाभूतोऽपि अतन्द्रितः अनलसः सन् शनकैः बुद्ध्या युञ्जीत ॥ ७ ॥ शुचाविति । जितासनः चिरमुपविशन्नपि क्लमरहितः शुचौ देशे आसनं कुशाजिन-चैलोत्तरमास्तरणं प्रतिष्ठाप्य तस्मिन् स्वस्तिकं स्वस्तिकासनेन ऋजुकायः समासीनः समभ्यसेत् प्राणजयाभ्यासं कुर्यात् । "ऊरू जङ्घाऽन्तराधाय पादाग्रे जानुमध्यगे । योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः ॥" इति हि स्वस्तिकासनम् ॥ ८ ॥

प्राणस्येति । पूरककुम्भकरेचकैः प्राणायामैः प्राणस्य मार्गं नाड्यादि शोधयेत् । तत्र प्राणायामस्त्रिविधः । तत्र बाह्यवायोरन्तःप्रवेशनं पूरकः । प्रवेशितस्य धारणं कुम्भकः । धृतस्य बहिर्निःसारणं रेचकः । तैः प्रतिकूलेन रेचककुम्भकपूरकैश्च । वाकारश्चार्थे । चित्तं स्थिरं सत्पुनरपि चञ्चलं यथा न स्यात्तथा शोधयेत् । प्राणे स्ववशे सति तद्वशवर्ति मनोऽपि वशे भवेत् ॥ ९ ॥ मन इति । जितः श्वासो येन तस्य योगिनो मनोऽचिरात् आशु विरजं निर्मलं स्यात् । यथा वै वाय्वग्निभ्यां ध्मातं संतप्तं लोह सुवर्णादिधातुः मलं त्यजति निर्मलं भवति तथेत्यर्थः ॥ १० ॥ प्राणायामैरिति । प्राणायामैः दोषान् वातपित्तादीन् दहेत् । धारणाभिः किल्बिषान् पापानि दहेत् । प्रत्याहारेण संसर्गान् शब्दादिविषयसम्बन्धान् दहेत् । ध्यानेनानीश्वरान् गुणान् रागादीन् दहेत् । तत्र मनसो वायुना सह स्थिरीकरण धारणा । तत्र स्थिरस्य वृत्तिसंततिर्ध्यानम् । वृत्तिनिरोधः समाधिरिति भेदः ॥ ११ ॥ यदेति । यदा स्वं मनः योगेन विरजं निर्मलं सुसमाहितं स्ववशवर्ति स्यात् तदा स्वनासाग्रेऽवलोकनं यस्य तत्र दत्तदृष्टिः सन् इत्यर्थः । भगवतः काष्ठां मूर्तिं ध्यायेत् । इतस्ततो दृष्टिचालने मनसो विक्षेपः स्यात् । नेत्रमुद्रणे च निद्राख्यो लयः स्यादित्यत उक्तं नासाग्रावलोकनः ॥ १२ ॥ ध्येयं हरिमाह—प्रसन्नेति षट्कम् । प्रसन्नवदनाम्भोजं पद्मगर्भ इवारुणे ईक्षणे यस्य तं नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् । अत्र तुर्यं पद्ममपि ज्ञेयम् ॥ १३ ॥ लसत्पङ्कजस्य किञ्जल्के इव पीते

कौशेये वाससी यस्य तं श्रीवत्सो लाञ्छनं वक्षसि यस्य तं भ्राजत् कौस्तुभेन तदीयस्वर्णसूत्रेणामुक्ता संश्लिष्टा कन्धरा यस्य तम् ॥ १४ ॥ मत्तद्विरेफाणां कला मधुरो ध्वनिर्यस्यां तया वनमालया परीतं व्याप्तं परार्द्ध्यानि अमूल्यानि हारवलयादीनि यस्य तम् ॥ १५ ॥

काञ्चीगुणेन मेखलासूत्रेणोल्लसन्ती श्रोणी कटिर्यस्य तं भक्तानां हृदयाम्भोजमेव विष्टरमासनं यस्य तं दर्शनीयतममतिसुन्दरं शान्तं सुशालम् अतो भक्तानां मनोनयनानि वर्द्धयति हर्षयतीति तथा तम् ॥ १६ ॥ अपीच्यमतिसुन्दरं दर्शनं यस्य तं सर्वैर्लोकैर्नमस्कृतं कैशोरे पञ्चदशवर्षे वयसि सन्तं स्थितं भृत्यानामनुग्रहे कातरं व्यग्रम् ॥ १७ ॥ कीर्तन्यं कीर्तनार्हं तीर्थं पुण्यं यशो यस्य तं पुण्यश्लोकानां बलिभीष्मादीनां यशस्करं यावत्समग्राङ्गान्मनो न च्यवते नापगच्छति तावत् समग्राण्यङ्गानि यस्मिंस्तमेवभूतं भगवन्तं ध्यायेत् ॥ १८ ॥ स्थितमिति । स्थितं व्रजन्तमासीनमुपविष्टं वा शयानं वा प्रेक्षणीयमीहितं लीला यस्य तं गुहाशयं हरिं शुद्धभावेन चेतसा ध्यायेत् ॥ १९ ॥ तस्मिन्निति । तस्मिन् भगवद्विग्रहे लब्ध पदं स्थिरीभूतं तत्रापि सर्वावयवेषु संस्थितं प्रतिष्ठितं स्वचित्तं विलक्ष्य ज्ञात्वा मुनिः योगी भागवत एकत्रैकस्मिन्नङ्गे संयुञ्ज्यात् ॥ २० ॥ संचिन्तयेदिति । रेखात्मकैः वज्राङ्कुशध्वजसरोरुहैर्लाञ्छनैः आढ्यम् उत्तुङ्गाश्च रक्ताश्च विलसन्तो ये नखास्तेषां चक्रवालं मण्डलं तस्य ज्योत्स्नाभिराहतो महतां ध्यातॄणां हृदयान्धकारोऽविद्यालक्षणो येन । महदित्यन्धकारसामानाधिकरण्ये आत्वापत्तिः तादृशविवक्षायां त्वार्षः प्रयोगः । तत् भगवतश्चरणारविन्दं संचितयेत् । अत्र सर्वं चरणारविन्दादिविशेषणमपि ध्येयत्वेनैवोच्यते ॥ २१ ॥ यच्छौचेति । यस्य चरणारविन्दस्य शौचेन क्षालनजलेन निःसृतायाः प्रवृत्तायाः सरित्प्रवराया गङ्गाया उदकेन तीर्थेन संसारतारकेण मूर्धनि अधिकृतेन धृतेन शिवः मङ्गलरूपो जगद्वन्द्यो महादेवोऽपि शिवोऽभूत् । आत्मानं कृतकृत्यममन्यत । ध्यातुर्मनसि यः शमलशैलः पापपर्वतस्तस्मिन्निसृष्टं निक्षिप्तं वज्रं स्वलाञ्छनरूपं येन तत् भगवतश्चरणारविन्दं चिरं दीर्घकाल ध्यायेत् ॥ २२ ॥ जान्विति । यत् जलजलोचनया कमलनेत्रया सुरैर्वन्दितया अखिलस्य जगतो विधातुः स्रष्टुर्ब्रह्मणो जनन्या लक्ष्म्या स्वस्या ऊर्वोर्निधाय करपल्लवरोचिषा प्रकाशमानकरपल्लवेन संलालितं स्पर्शचातुर्येण यत्संसेवितं तत् अभवस्य संसारनिवर्तकस्य विभोर्भगवतो जानुद्वयं तत्पर्यन्तं जङ्घाद्वयं हृदि कुर्यात् ध्यायेत् ॥ २३ ॥

ऊरू इति । सुपर्णस्य गरुडस्य भुजयोः स्कन्धयोरधि उपरि शोभमानौ ओजसो बलस्य निधी आश्रयौ अतसिकाकुसुमकान्तिवत् कान्त्या भासमानौ विभोरूरू हृदि कुर्यादित्यनुषङ्गः । तथा व्यालम्बि आगुल्फं लम्बमानं यत्पीतं वरं श्रेष्ठं वासस्तस्मिन् वर्तमानो यः काञ्चीकलापस्तेन परिरम्भः संश्लेशो विद्यते यस्य तद्विभोर्नितम्बविम्बं हृदि कुर्यात् ॥ २४ ॥ नाभिह्रदमिति । भुवनानां कोशस्य समूहस्य गुहा अधिष्ठानं यदुदरं तत्र स्थितं यत्र च नाभिह्रदे आत्मयोनेर्ब्रह्मणो धिषणं धिष्ण्यमाविर्भावस्थानमखिललोकात्मकं पद्मं व्यूढमुत्थितं तत् अमुष्य हरेर्नाभिह्रदं ध्यायेत् । तथा विशदानां स्वच्छानां हाराणां मयूखैर्गौरम् । हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव यौ स्तनौ तयोर्द्वयं ध्यायेत् । हरिन्मणिवर्णो वृषो धर्मो यत्र तयोः स्तनयोरिति वा तद्दक्षिणस्तनस्य धर्मत्वात् विशदहारमयूखगौरमित्यनेन दक्षिणस्तनोपरि दक्षिणावर्त्तश्रीवत्सरेखामपि हारकान्तिमिव ध्यायेदित्यपि सूचितम् ॥ २५ ॥ वक्ष इति । महाविभूतेः लक्ष्म्या अधिवासं स्थानं पुंसां ध्यातॄणां मनोनयनयोर्निर्वृतिमानन्दमादधानम् अखिलैर्लोकैर्ब्रह्मादिभिर्नमस्कृतस्य ऋषभस्य श्रेष्ठस्य हरेः वक्षः तथा कौस्तुभमणिर्यो भूषणार्थं धृतः तस्याधिकं भूषणमर्थः प्रयोजनमस्य तम् कौस्तुभमणिरपि येन भूषितं तं कण्ठं च मनसि कुर्यात् ध्यायेत् ॥ २६ ॥ बाहूनिति । मन्दरगिरेः परिवर्तनेन परिभ्रमणेन निर्णिक्तानि उज्ज्वलीकृतानि बाहुवलयान्यङ्गदानि येषु तान् समुद्रमथनार्थमधिश्रिताः लोकपाला येषु तान् भगवतो बाहून् संचिन्तयेत् तथा दशशतानि अनन्तानि अरा यस्य तत् असह्यं तेजो यस्य तत् सर्वतो भक्तरक्षक सुदर्शनचक्रं तथा तस्य भगवतः करसरोरुहे राजहंसवच्छोभमानमपां तत्त्वं दैत्यहृदयप्रकम्पनध्वनिकं शङ्खं च संचिन्तयेत् ॥ २७ ॥ कौमोदकीमिति । अरातयः शत्रवः दैत्यादयस्ते एव भटा योद्धारस्तेषां शोणितमेव कर्दमं तेन दिग्धां लिप्तामत एव प्रियां भगवतः कौमोदक्याख्यां गदां स्मरेत् । तथाऽस्य भगवतः कण्ठे मधुव्रतानां भृङ्गाणां वरूथस्य सङ्घस्य गिरा शब्देनोपघुष्टां नादितां मालां वनमालाममलं विशुद्धं चैत्यस्य जीवस्य तत्त्वं मणिं च स्मरेत् । यद्यपि चैत्यशब्देन परमात्मा गृह्यते तथाप्यत्र जीव एव गृह्यते । "आत्मानमस्य जगतो निर्लेपमगुणालयम् । बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिः ॥" इति वैष्णवोक्तेः । कौस्तुभस्यैवानन्ताः किरणा जीवा इति भावः ॥२८॥ भृत्येति । यत् विस्फुरन्ती ये मकरकुण्डले तयोर्वल्गितेन प्रचलनेन विद्योतितौ अमलौ कपोलौ यस्मिंस्तत् उदारा परमानन्ददात्री नासा यस्मिंस्तत् भृत्येषु स्वभक्तेषु अनुकम्पिता सञ्जाताऽनुकम्पा । तारकादित्वादितच् । यद्वा अनुकम्पितमनुकम्पा तद्वती । भावे क्तान्तादर्शआद्यच् । या धीस्तया गृहीता मूर्तिर्येन तस्य भगवतो वदनारविन्दं संचिन्तयेत् ॥ २९ ॥

यदिति । यत् वदनारविन्दं कर्तृ अलिभिः परिषेव्यमानं मीनद्वयाश्रयं च श्रीनिकेतं शोभाश्रयमरविन्दं कर्म स्वया विभूत्या शोभयाऽधिक्षिपत् तिरस्कुर्वद्वर्त्तते तत्र कुन्तलैरलीनामधिक्षेपः नेत्रद्वयस्याधिक्षेपः तत्राप्यब्जपदेनोपमानान्तरं च ज्ञेयम् ।

यत्र कुटिलानां कुन्तलानां वृन्देन समूहेन जुष्टं युक्तमब्जे इव नेत्रे यस्मिंस्तत् उल्लसन्त्यौ भ्रुवौ यस्मिंस्तत् मनमयं मनस्याविर्भवत् तद्वदनारविन्दम् अतन्द्रितः सावधानः सन् ध्यायेत् ॥३०॥ तस्येति। कृपयाऽधिकं भक्तानामाध्यात्मिकाद्यं घोरं दुःसहं यत्तापत्रयं तस्योपशमनाय विनाशाय तेन कृपयैव अक्ष्णोः अक्षिभ्यां निसृष्टं प्रवृत्तं विपुलः प्रसादः पुरुषार्थो यस्मात्तत् स्निग्धेन स्नेहयुक्तेन स्मितेनानुगुणितं द्विगुणत्रिगुणादिक्रमेण संवृद्धं तस्य भगवतः अवलोकं विपुलभावनया प्रेमातिशयेन गुहायां हृदि चिन्तयेत् ध्यायेत् ॥ ३१ ॥ हासमिति। अवनताः शरणमागता ये अखिला लोकास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशेषतो निर्मूलं यथा भवति तथा शोषयतीति तथाभूतम्। तथा अत्युदारं शोकसागरादुद्धृत्यानन्दसागरे मज्जनं ददानं हरेर्हासं ध्यायेत्। तथा मुनिकृते मुनीनामुपकाराय मकरध्वजस्य कामस्य संमोहनाय निजमायया स्वेच्छया रचितं परिगृहीतं तस्य भ्रूमण्डल ध्यायेत्। मुनीनप्ययमुद्वेजयतीति कोपेनेवेत्युत्प्रेक्षा ॥ ३२ ॥ ध्यानेति। स्वस्य देहकुहरे हृदयाकाशे अवसितस्य प्रत्यक्षस्य विष्णोः ध्यानायनमतिसुन्दरतया प्रयत्नं विनैव ध्यानस्य विषयभूतं बहुलया अधिकया अधरोष्ठस्य भासा कान्त्या अत्यरुणीभूतास्तनवः सूक्ष्माः द्विजा एव कुन्दमुकुलानि तेषां पंक्तिः स्फुरति यस्मिंस्तत् प्रहसितमुच्चैर्हसितं ध्यायेत्। आर्द्रया प्रेमरसपूरितया भक्त्या आदरातिशयेत तस्मिन्नेवार्पितमनाः सन् पृथक् ततो व्यतिरिक्तं न दिदृक्षेत् किमपि द्रष्टुं नेच्छेत्ततो मनो न विचालयेत्। तद्भाव आर्षः ॥ ३३ ॥ समाधिमाह—एवमिति। तत्र सबीजो निर्बीजश्चेति द्विधा योगः। तत्र निर्बीजः "यतो यतो निश्चरति" इति गीतायामुक्तस्तत्र दुष्करः समाधिः। सबीजे तु परमानन्दमूर्तौ हरौ ध्यायमाने सुखेन चित्तोपरमः अतः स एवात्रोपक्षिप्तः। एवं पूर्वोक्तध्यानेन हरौ सर्वदुःखहर्त्तरि भगवति प्रतिलब्धो भावः प्रेमातिशयो येन सः अत एव तया भक्त्या द्रवत् शैथिल्यं प्राप्नुवत् हृदयमहङ्कारो यस्य सः प्रमोदात् प्रकृष्टात् हर्षात् उद्गतानि उत्थितानि पुलकानि रोमाणि यस्य सः औत्कण्ठ्येन हर्षातिशयात् कण्ठनिरोधेन प्रवृत्तया बाष्पकलया च मुहुरर्द्यमानः आनन्दसंप्लवे निमज्ज्यमानः दुर्ग्रहस्य भगवता ग्रहणे बडिशं मत्स्यवेधनमिवोपायभूतं चित्तमपि शनकैः ध्येयाद् वियुङ्क्ते तत्र तद्धारणेऽपि शिथिलप्रयत्नो भवति ॥ ३४ ॥ मुक्तेति। यर्हि यदा एवं भगवदानन्दानुभवेन विषयेभ्यो विरक्तं स्वाश्रयाहङ्कारविलयात् मुक्ताश्रयमत एव ध्यातृध्येयानुसन्धानाभावान्निर्विषयं च सन्मनः अर्चिर्दीपज्वाला सा यथा तैलवर्ती अश्नती साश्रया सप्रकाशा सती तैलवर्त्त्यपगमे निराश्रया निष्प्रकाशा च सती स्वकारणमहाभूतज्योतीरूपेण परिणमति। तद्वत् सहसा अनायासेन निर्वाणं लयमृच्छति। नानाविधवृत्तिरूपतां परित्यज्य परमकारणब्रह्माकारा भवति। अत्र अस्यां दशायां पुरुषः प्रतिनिवृत्तगुणप्रवाहः सन् अव्यवधानं ध्यातृध्येयविभागशून्यम् अत एव एकमखण्डम्। अनु अनुगतम् आत्मानमीक्षते ॥ ३५ ॥

सोऽपीति। उपलब्धा प्रत्यक्षीकृता परस्य आत्मनः काष्ठा तत्त्वं येन सोऽपि स एव पुरुषः एतया योगाभ्यासलब्धया अत एव चरमया अविद्यारहितया इति सुषुप्तितो विशेषः। तत्र ह्यविद्या भवति मनसो निवृत्त्या तस्मिन् पुरुषार्थभूते सुखदुःखबाह्ये महिम्नि ब्रह्मस्वरूपे अवसितः अवसानं निष्ठां प्राप्तः यत् दुःखयोः सुखदुःखयोर्हेतुत्वं भोक्तृत्वं पूर्वं स्वात्मन्यपश्यत्तदपीदानीमसति अविद्याकृतत्वेन तुच्छे कर्तरि अहङ्कारे विधत्ते तन्निष्ठमेव मन्यते ॥ ३६ ॥ देहमिति। चकारोऽप्यर्थे। चरमः चरमशरीरे वर्तमानः सिद्धो योगी यतः कारणात् आत्मनः स्वरूपमध्यगमत्। अतः मदिरामदेनान्धो यथा परिकृतं कटितटे परिवेष्टितं वासस्तत्र स्थितं गतं वा नानुसन्धत्ते तद्वत् दैवात् प्रारब्धकर्मवशात् आसनादुत्थितमुत्थाय तत्रैव स्थितं वा ततोऽपेतमन्यत्र गतं ततः पुनरप्युपेतमागतं वा तमात्मसाक्षात्कारहेतुभूतं देहमपि न पश्यति न स्मरति। सुखदुःखादेरनुसन्धानस्य का वार्ता ॥ ३७ ॥ देहोऽपीति। दैववशगः प्रारब्धसंस्कारवशेन गच्छन् सासुरिन्द्रियप्राणादिसहितो देहोऽपि यावत् स्वारम्भकं प्रारब्धं कर्मास्ति तावत्तत्प्रति समीक्षते प्रारब्धवशाज्जीवत्येव। अधिरूढः प्राप्तः समाधिपर्यन्तो योगो येन सः अत एव प्रतिबुद्धं वस्तु आत्मतत्त्वं येन सः सप्रपञ्चं धनपुत्रादिसहितं स्वाप्नं स्वप्नजमिव तं देहं पुनर्न भजते अहं ममेति नाभिमन्यते ॥ ३८ ॥ प्रतिबोधप्रकारमाह—यथेति। अतिस्नेहवशादात्मत्वेनाभिमतादपि पुत्राच्च वित्ताच्च मर्त्यः मरणधर्मा पित्रादिदेहो यथा पृथक् प्रतीयते तथात्मत्वेनाभिमतादेहेन्द्रियान्तःकरणात् अपि पुरुषस्तद्द्रष्टा पृथक् ॥३९॥ पृथगवस्थानाभावेऽपि भेदं सदृष्टान्तमाह—यथेति। अत्रोल्मुकशब्दपौनरुक्त्यादादिम उल्मुकशब्दो ज्वलत्काष्ठवाची द्वितीयो ज्वालारहितवह्निव्याप्ताङ्गारवाची। तथा च यथा उल्मुकात् ज्वलतः काष्ठात् अग्निः पृथक् यथा च स्वसंभवात् अग्नेः संभूतात् धूमात् विस्फुलिङ्गाच्च अग्निः पृथक् तत्तस्मात् आत्मत्वेनाग्निस्वरूपत्वेनाभिमतादपि उल्मुकात् वह्निव्याप्ताङ्गारात् अपि तदाहकः प्रकाशकश्चाग्निर्यथा पृथगेव। यद्वा यथा उल्मुकात् इति ल्यब्लोपे कर्मणि पञ्चमी। उल्मुकं विलोक्य संदेहविषयोऽग्निः स्वसम्भवात् विस्फुलिङ्गात् धूमाद्वापि पृथक् निश्चीयते तथा आत्मत्वेनाभिमतात् उल्मुकादपि अग्निः पृथगेव। चक्रवर्ती तु उल्मुकयथाशब्दयोः पुनरुक्तिमेवं निवर्तयति—उल्मुकाद्दह्यमानात्काष्ठात् यथाग्निः पृथक् यथा च उल्मुकात् पृथक् तथा विस्फुलिङ्गादपि पृथक्। यथा च विस्फुलिङ्गात् पृथक् तथा स्वसंभवाद् धूमादपि पृथक्। कीदृशात् आत्मत्वेनाग्निस्वरूपत्वेनाभिमतात्। अज्ञो हि उल्मुकं धूमं विस्फुलिङ्गं चाग्निरयमिति मन्यते। यद्वा द्वितीययथाशब्दस्य यथावदित्यर्थः। द्वितीयमुल्मुकात् इति पदम् उल्मुकमत्तीति अग्निविशेषणम् इति व्याचख्यौ। एतन्मते च यथाग्निः पृथगुल्मुकादित्यन्तपादपाठः ॥ ४० ॥

दार्ष्टान्तिके योजयति—भूतेति। तथा भूतेन्द्रियान्तःकरणात् धूमस्थानीयात् प्रधानात् उल्मुकस्थानीयात् जीवसंज्ञितात् विस्फुलिङ्गस्थानीयाच्च द्रष्टा सर्वसाक्षी आत्मा परमात्मा ब्रह्मसंज्ञितः भगवान् अग्निस्थानीयः पृथक्। स्वामिपादास्तु निष्कर्षार्थमाहुः— भूतादेर्द्रष्टा तेभ्यः पृथक् तस्मादपि जीवसंज्ञितात् ब्रह्मसंज्ञितः पृथक् तथा प्रधानादपि तत्प्रवर्तको भगवान् पृथक्॥ ४१॥ सर्वभूतेष्विति। भूतेषु भूतकार्येषु घटशरावादिषु यथा तदात्मतां पृथ्व्यादिमहाभूतात्मतां पश्यति तथा सर्वभूतेषु च स्थावरजङ्गमात्मकेषु तदुपादानतयाऽऽत्मानमात्मनि च तत्कार्यतया सर्वभूतानि अनन्यभावेन अभेदेनेक्षेत॥४२॥ स्वेति। स्वयोनिषु स्वाभिव्यक्तिस्थानेषु तृणदार्वादिषु स्थितमेकमेव ज्योतिरग्निर्योनीनां गुणवैषम्यात् ह्रस्वत्वदीर्घत्वकुटिलत्वादिगुणवैषम्यादेव तथा तथा नाना यथा प्रतीयते तथा प्रकृतौ देहादिशरीरे स्थित आत्मापि देवादिर्देहकृतभेदेन नाना प्रतीयते। वस्तुतस्तु सर्वत्र ज्ञानैकरूप एव॥४३॥ पुरुषं प्रकृतिः कर्हिचिन्न विमुञ्चतीति कथं विमुक्तिरिति प्रश्नस्योत्तरमुपसंहरति—तस्मादिति। पूर्वोक्तभक्त्यादिसाधनसमूहान् भगवद्भक्त इमां दृश्यमानां सदसदात्मिकां कार्यकारणात्मना परिणतां स्वां स्वस्य विमोहकरीं दुर्विभाव्यामचिन्त्यमाहात्म्यां दैवीं देवस्य परमेश्वरस्य शक्तिरूपां प्रकृतिं पराभाव्य निवर्त्य स्वरूपेण ब्रह्मरूपेणावतिष्ठते न पुनः संसरति॥ ४४॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायामष्टाविंशोऽध्यायः॥ २८॥



## अथैकोनत्रिंशोऽध्यायः

देवहूतिरुवाच

लक्षणं महदादीनां प्रकृतेः पुरुषस्य च। स्वरूपं लक्ष्यतेऽमीषां येन तत् पारमार्थिकम्॥ १॥

ऊनत्रिंशे तु बहुधा भक्तिः कालबलं तथा। सृष्टिश्च बहुधा तत्र श्लोकाः सार्द्धाः शराब्धयः (४५॥)

उवाचेति त्रयं तत्र तर्कवेदा (४६) अनुष्टुभः॥ २९॥

लक्षणमिति। हे प्रभो! अमीषां महदादीनां लक्षणं यथा सांख्येषु कथितमस्ति येन च लक्षणेन तेषां महदादीनां पारमार्थिकपरस्परविभक्तं स्वरूपं लक्ष्यते ज्ञायते तत् महदादीनां प्रकृतेः पुरुषस्य च लक्षणं त्वया कथितं तत्प्रकृत्यादिस्वरूपज्ञानं यन्मूलं यस्य भक्तियोगस्य साधनं प्रचक्षते तस्य भक्तियोगस्य मार्गं भेदं मे मह्यं विस्तरशो ब्रूहि॥ १–२॥ विराग इति। हे भगवन्! येन संसृतिवर्णनेन मुमुक्षुः पुरुषः सर्वत्र इहामुत्र च विरागो विगतरागो भवेत् ता जीवलोकस्य विविधाः संसृतीर्मम आचक्ष्व कथय॥ ३॥ कालस्येति। परेषां ब्रह्मादीनामपि परस्य नियन्तुस्ते त्वदात्मकस्य अत एवेश्वरस्य रूपमिव रूपं यस्य तस्यामितप्रभावस्य कालस्य स्वरूपमाचक्ष्व। यद्धेतोः यद्भयाद्धेतोर्जनाः कुशलं पुण्यं कुर्वन्ति॥ ४॥ लोकस्येति। देहादौ मिथ्याभिमतेः अचक्षुषः ज्ञानशून्यस्य अत एवानाश्रये अपारे तमसि अज्ञानकार्ये संसारे चिरं कालं प्रसुप्तस्य पतितस्य कर्मसु अनुबद्धया आसक्तया धिया श्रान्तस्य लोकस्य प्राणिजातस्य प्रबोधाय योगानां ज्ञानयोगादीनां भास्कर इव प्रदर्शकः त्वम् आविरासीः॥ ५॥

इतीति। हे कुरुश्रेष्ठ! इत्येवंविधं श्लक्ष्णं सरसं मातुर्वचः प्रतिनन्द्य सत्कृत्य महामुनिः कपिलः प्रीतो जातहर्षः करुणयार्दितः परिप्लुतः संस्तां मातरमाबभाषे॥ ६॥ भक्तियोग इति। हे भामिनि मातः! भाविनि इति पाठे भावोऽभिप्रायस्तद्वति पुरुषे मार्गैः प्रकारविशेषैर्भक्तियोगो बहुविधो भाव्यते सम्पद्यते। यतः स्वभावहेतुभूता ये तमआदयो गुणास्तेषां मार्गेण वृत्तिभेदेन पुंसां भावोऽभिप्रायो विभिद्यते। भक्तिः स्वतो निर्गुणापि पुंसां स्वभावादिभिः तामसादिभेदव्यपदेशं लभते इति॥ ७॥ अभीति।

यः पुरुषो हिंसां दम्भं मात्सर्यं च अभिसन्धाय संकल्प्य संरम्भी क्रोधी भिन्नदृक् आत्मपरात्मनोः भेददर्शी यः पुरुषो मयि परमेश्वरे भावं भक्तिं कुर्यात् स हिंसादम्भमात्सर्यैस्त्रिविधोऽपि तामसः ॥ ८ ॥ विषयानिति । विषयान् यशः सत्कीर्तिमैश्वर्यं धनादि एव वा अभिसन्धाय सङ्कल्प्य पृथग्भावः भेददर्शी यः अर्चादौ प्रतिमादौ आदिपदात् सूर्यादिग्रहणं मामर्चयेत् स विषयकीर्त्यैश्वर्यैस्त्रिधापि राजसः ॥ ९ ॥ कर्मेति । कर्मनिर्हारं पापक्षयमुद्दिश्य परस्मिन् परमेश्वरे वा तदर्पणं यथा स्यात्तथा भगवत्प्रीतिमुद्दिश्य यष्टव्यमिति विधिसिद्धिमुद्दिश्य वा यः पृथग्भावो भेददर्शी मां यजेत पूजयेत् स कर्मनिर्हारभगवदर्पणविधिसिद्धिभेदात् त्रिधाऽपि सात्त्विकः । भेददर्शनमर्चादावचनं च त्रिष्वपि समानम् । अत्र भक्तियोगभेदप्रस्तावेऽपि भक्तभेदकथनं भक्तियोगभेदे पर्यवस्यति । कैश्चित् भक्तिपरत्वेनैव किञ्चित्क्लेशेन व्याख्यातम् ॥ १० ॥ तदेवं तामसादिभक्तिषु त्रयस्त्रयो भेदास्तासु यथोत्तरं श्रैष्ठ्यं तथा च श्रवणकीर्तनादयो नवापि तामसादिभेदेन प्रत्येकं नव नव भेदा भवन्ति । अतः सगुणा भक्तिरेकाशीतिभेदेति सूचितम् । निर्गुणा भक्तिस्त्वेकविधैव । देवानां गुणलिङ्गानामित्यादि तल्लक्षणं पूर्वमुक्तमपि प्रसङ्गात् पुनराह—मदिति द्वयम् । मद्गुणानां भक्तवात्सल्यादीनां श्रवणमात्रेण सर्वगुहाशये सर्वसाक्षिणि मयि पुरुषोत्तमे अविच्छिन्ना प्रत्ययान्तररहिता अहैतुकी हेतुः फलान्तराभिसन्धिः कारणं च तद्रहिता अव्यवहिता भेददर्शनरहिता यथा गङ्गाया अम्भसोऽम्बुधौ समुद्रे गतिर्भवति तथा मनोगतिरिति या भक्तिः प्रीतिः सा निर्गुणस्य भक्तियोगस्य लक्षणं स्वरूपमुदाहृतम् ॥ ११-१२ ॥ सालोक्येति । जना निर्गुणभक्ताः मत्सेवनं विनाऽन्यत् सालोक्यं मया सहैकस्मिन् लोके वासं सार्ष्टिं समानैश्वर्यं सामीप्यं निकटवर्तित्वं सारूप्यं समानरूपत्वं सायुज्यमेकत्वम् अपि मया दीयमानमपि न गृह्णन्ति । कुतस्तत्कामनेत्यर्थः ॥ १३ ॥

स एवेति । अतः स उक्तलक्षण एव भक्तियोगाख्य आत्यन्तिकः अत्यन्ते सर्वान्ते भवः आत्यन्तिकः चरमकाष्ठामापन्नः उदाहृतः येन भक्तियोगेन पुरुषस्त्रिगुणं संसारमतिव्रज्य अतिक्रम्य मद्भावाय ब्रह्मत्वायोपपद्यते ॥ १४ ॥ एतादृश्या भक्तेः साधनान्याह—निषेवितेनेति । नित्यशः नित्यं निषेवितेन स्वनुष्ठितेन अनिमित्तेन फलाभिसन्धिरहितेन । चक्रवर्ती तु निषेवितानिमित्तेनेति समस्तपाठमभिप्रैति । अतो न च्छन्दोभङ्गोऽपि । महीयसा श्रद्धादियुक्तेन शस्तेन स्तुत्येन तत्रापि नातिहिंस्रेण तदङ्गपत्रपुष्पादित्रोटनरूपहिंसाया आवश्यकत्वादतिशब्दः । एतानि विशेषणानि यथोचितमग्रेऽपि योज्यानि । स्वधर्मेण नित्यनैमित्तिकेन यज्ञादिक्रियायोगेन पाञ्चरात्रादिपूजाप्रकारेण वा मामेतीति शेषेण वाक्यपूर्तिः कार्या । एवमग्रेऽपि ॥ १५ ॥ मदिति । मद्धिष्ण्यं मत्प्रतिमातद्दर्शनस्पर्शपूजास्तुत्यभिवन्दनैः भूतेषु स्थावरजङ्गमात्मकेषु मद्रूपभावनया सत्त्वेन धैर्येण असङ्गमेन वैराग्येण च मामेति ॥ १६ ॥ महतामिति । महतां बहुमानेन दीनानामनुकम्पया विषये षष्ठी । गुणैरात्मतुल्येषु मैत्र्या चैव हिंसास्तेयानृतवर्जनादियमेन जपपाठादिनियमेन च मामेति ॥ १७ ॥ आध्यात्मिकेति । आध्यात्मिकस्य वेदान्तादिशास्त्रस्यानु नित्यं श्रवणात् मे मम नामसंकीर्तनाच्च आर्जवेन मनसो वचसश्चाकौटिल्येन आर्याणां सन्मार्गिणां सङ्गेन तथा निरहंक्रियया देहादावात्माभिमानराहित्येन मामेति ॥ १८ ॥ मदिति । मद्धर्मणो मदर्थमेव धर्माद्यनुष्ठानं यस्य तस्य भगवद्धर्मानुष्ठातुः पुरुषस्यैतैः पूर्वोक्तैर्गुणैः परिसंशुद्धो निर्मलः आशयो मनः श्रुतमात्रो गुणो यस्य तं मामञ्जसा अप्रयत्नेनैवाभ्येति मद्गुणश्रवणमात्रेण मय्यासक्तो भवति ॥ १९ ॥ यथेति । वातः रथः प्रापको यस्य स गन्धः आशयात् स्वस्थानात् पुष्पादेः सकाशात् घ्राणमिन्द्रियं यथा स्वयमेव आवृङ्क्ते प्राप्नोति आत्मसात्करोति एवं योगरतमत एव अविकारि विशुद्धं च यच्चेतस्तदात्मानं परमात्मानं मामावृङ्क्ते आत्मसात्करोति ॥ २० ॥ अहमिति । अहं सर्वेषु भूतेषु सदैवावस्थितः तेषां भूतानामात्मा च अस्मि तं मामवज्ञाय तत्र मम दृष्टिमकृत्वा मर्त्यः मरणधर्मकदेहात्मदर्शी योऽर्चायां मामर्चति स अर्चाविडम्बनं कुरुते । अत्र अहमित्यादिचतुर्भिः श्लोकैः क्रमेण अवज्ञोपेक्षाद्वेषनिन्दाः निषिध्यन्ते ॥ २१ ॥ य इति । सर्वेषु भूतेषु आत्मानं प्रत्यगात्मानमीश्वरमन्तर्यामिणं चैवं रूपद्वयेन सन्तं विद्यमानं मां हित्वा उपेक्ष्य यो मौढ्यान्मौर्ख्यात् अर्चां प्रतिमां भजते सेवते स भस्मन्येव जुहोति । तत्कृता सेवा भस्मनि होमवन्निष्फला भवतीत्यर्थः । अत्र स्वभक्तान् शिक्षयितुम् उपालम्भनिभोक्तिः । अधुनापि गुरवः प्रियमपि स्वशिष्यं स्वसेवारतमपि अन्यत्रापराधलेशमात्रदृष्ट्यैव मत्सेवां करोषि भस्म करोषि मां केवलं दुःखयस्येवेत्याक्षिपन्ति । वस्तुतस्तु प्रतिमापूजने निषेधो नास्त्येव । अर्चायामेव हरये इति अर्चादावर्चयेत्तावदित्यादि वचनात् ॥ २२ ॥

द्विषत इति । परकाये स्थितं मां द्विषतः मानिनः देहाद्यात्ममानिनः भिन्नदर्शिनः भूतेषु बद्धवैरस्य पुरुषस्य मनः शान्तिं न ऋच्छति न प्राप्नोति ॥ २३ ॥ अहमिति । हे अनघे ! उच्चावचैर्द्रव्यैरुत्पन्नया सम्पादितया क्रियया सामग्र्याऽर्चायामर्चितोऽप्यहं भूतग्रामाणामवमानिनो निन्दकस्य जनस्य नैव तुष्ये तुष्टो नैव भवामि । तद्वार्पः ॥ २४ ॥ ननु तर्ह्यर्चादावर्चनं व्यर्थमेव नेत्याह—अर्चादाविति । यावत्सर्वभूतेष्ववस्थितमीश्वरं सर्वनियन्तारं मां स्वहृदि न वेद तावत् स्ववर्णाश्रमाचारप्राप्तं कर्मकृत् तत्कुर्वन् यथावकाशमर्चादौ मामर्चयेत् । अनेन कर्मनिष्ठाया अपि स एवावधिरित्युक्तम् ॥ २५ ॥ आत्मनश्चेति । यः स्वात्मनः स्वस्य परस्यान्यस्य चापि अन्तरा अन्तरं भेदम् उत् अपि अरमल्पम् अल्पमपि भेदं करोति । यद्वा अन्तरा मध्ये उदरमुदरोपलक्षितं

शरीरं करोति शरीरप्रयुक्तं भेदं पश्यति। परे तु आत्मनः परस्यापि च उदरम् अन्तरा भिन्नं करोति मन्यते। स्वोदरपूरणमेव करोति नान्यस्मै भोजनादिकं ददाति इत्याहुः। तस्य भिन्नदृशोऽहं मृत्युरूपः सन् उल्बण दुःसहं संसारभयं विदधे सम्पादयामि॥ २६॥ अथेति। अथ अतः सर्वभूतेषु कृतालयं कृतवासं भूतात्मानं सर्वभूतान्तर्यामिण मां दानमानाभ्यां मैत्र्या अभिन्नेन चक्षुषा समदर्शनेन मदात्मकबुद्ध्या च अर्हयेत्॥ २७॥ तत्रापि यथोत्तरं सम्मानाधिक्यं कार्यमित्याशयेन यथोत्तरं श्रैष्ठ्यमाह—जीवा इति। हे शुभे! अजीवानामिति पञ्चम्यर्थे षष्ठी। अचेतनेभ्यो मृत्पाषाणादिभ्यो जीवाः सचेतनाः वृक्षादयः श्रेष्ठास्ततः प्राणभृतः श्वासोच्छ्वासवन्तो जङ्गमाः श्रेष्ठास्ततः सचित्ता ज्ञानवन्तः प्रवरास्ततश्चेन्द्रियाणां वृत्तयो येषु ते रूपरसादिज्ञानवन्तः श्रेष्ठाः। परे तु अजीवेभ्यो जीर्णसस्यादिभ्यः जीवाः अजीर्णसस्यादयः श्रेष्ठाः। ततः प्राणभृतः भूमिष्ठजल-कर्षणवमनादिलिङ्गेन प्राणवृत्तिभृतः जीवत्पाषाणादयः ततः सचित्ताः पूर्वमुद्भवनादिक्रियाः पश्चादिन्द्रियेण लब्धा इति सज्ञानाः पर्वताः ततश्चेन्द्रियवृत्तयः वृक्षाद्याः श्रेष्ठा इन्द्रियवृत्तयो वृक्षाणामपि सूक्ष्माः सन्त्येव तस्मात् पश्यन्ति पादपाः तस्माज्जिघ्रन्ति पादपा इत्यादि भारतमोक्षधर्मेषु स्मरणात्। तरुषु प्रभूता तु स्पर्शवृत्तिरेवेत्याहुः॥ २८॥ तत्रेति। अतः तत्र तेभ्यः स्पर्शवेदिभ्योऽपि रसवेदिनः मत्स्यादयः मृत्तिकादिषु स्वभाव्याभोऽयज्ञानिनो गण्डूपद्यादयो वा प्रवराः श्रेष्ठाः ततो गन्धविदो भ्रमरादयः वकुलादि-पुष्पसूक्ष्मकोटा वा श्रेष्ठाः ततः शब्दविदः सर्पादयः शब्दश्रवणेन पलायनवन्तः केचित् जलकीटा वा वराः॥ २९॥ रूपेति। ततो रूपभेदविदः काकादयः श्रेष्ठास्तत उभयतोदतः ऊर्ध्वाधोदन्तवन्तः मर्कटादयः सर्पादयो वा श्रेष्ठाः। तेषां तेभ्यः अपादेभ्यो बहुपदाः भ्रमरादयः श्रेष्ठाः। तेभ्यश्चतुष्पादाः श्रेष्ठाः। तेभ्यो द्विपान्मनुष्यः श्रेष्ठः॥ ३०॥ तत इति। ततस्तेषु चत्वारो वर्णा इत्यादि स्पष्टम्॥ ३१॥

अर्थेति। अर्थज्ञादपि संशयच्छेत्ता मीमांसकः श्रेयान् ततोऽपि केवलात् स्वकर्मकृत् श्रेयान्। ततोऽपि यः आत्मनो धर्मम् अदोग्धा तत् फलेच्छारहितः स मुक्तसङ्गो निष्कामः श्रेयान्॥ ३२॥ तस्मादिति अर्द्धम्। तस्मादपि मय्यर्पिता अशेषाः क्रिया अर्थो क्रियाफलानि आत्मा देहादिसङ्घातश्च येन सः। अत एव निरन्तरः मत्प्राप्त्यावन्तरायरहितः श्रेष्ठः॥ ३३॥ मयीति। मय्यर्पित आत्मा येन तस्मात् अत एव मयि संन्यस्तं कर्मक्रियाफलं येन तस्मात् अत एव समदर्शनात् सर्वत्र समं पश्यतः अत एवाकर्तुः कर्तृत्वाभिमानशून्यात् पुंसः सकाशात् परमुत्कृष्टं भूतं जीवं न पश्यामि॥ ३४॥ मनसेति। जीवकलया जीवरूपेण सर्वभूतेषु भगवान् ईश्वरः प्रविष्टः इति मनसा एतानि चराचरात्मकानि भूतानि बहु मानयन् प्रणमेत्॥ ३५॥ भक्तियोगमुपसंहरति—भक्तीति। हे मानवि! भक्तियोगः योगः अष्टाङ्गयोगः साङ्ख्योक्तज्ञानयोगश्च मयोदीरितः ययोर्द्वयोर्मध्य एकतरेणैव पुरुषो मुमुक्षुः पुरुषं भगवन्तं व्रजेत्॥ ३६॥ जीवस्य संसृतीः कालस्य स्वरूपं च पूर्वपृष्टमुत्तरयति—एतदिति सार्द्धम्। प्रधानं प्रकृतिं पुरुषं तत्प्रवर्तकं परं तद्व्यतिरिक्तं च तथा कर्मणो विविधं चेष्टितं संसृतिलक्षणं यस्मात् एतदेव दैवमित्यभिधीयते। दैवप्रेरितकर्मकृताः संसृतयो विचित्रा इत्यर्थः। एतत्सर्वं परमात्मनो भगवतो ब्रह्मणो रूपं रूपभेदस्य वस्तूनामन्यथात्वस्य आस्पदमाश्रयः कारण दिव्यमद्भुत-प्रभावमेतदेव भगवतो रूपं काल इत्यभिधीयते। यद्वा परं महत्तत्त्वं दैवमिन्द्रियाधिष्ठातृदेवतावर्गं कर्मसु विविधं चेष्टितं यस्य तमिन्द्रियवर्गं रूपभेदास्पदं स्वभावः यश्च काल इत्यभिधीयते। तदेतद्भगवत एव रूपं न ततः पृथक्। शेषं समम्॥ ३७॥ भूतानामिति सार्द्धम्। महदादीनां तत्तदभिमानिनां भिन्नदृशां भेददर्शिनां भूतानां प्राणिनां च यतः कालात् जन्ममरणादिभयं भवति। भयमेवाह—यश्च भूतानामन्तः प्रविश्य भूतैः पञ्चमहाभूतैः पञ्चमहाभूतविकारैरेव सर्वाणि भूतानि अत्ति संहरति। असौ सः अखिलाश्रयः अधियज्ञः यज्ञादिफलदाता विष्ण्वाख्यः कालः कलयतां वशीकुर्वतां ब्रह्मादीनामपि प्रभुः वशीकर्त्ता॥ ३८॥ न चेति। अस्य कालात्मनो भगवतः कश्चिदपि दयितः प्रियो न चास्ति न च द्वेष्योऽस्ति न बान्धवोऽस्ति। अतः असौ स्वयं सदा अप्रमत्तः सावधान एव अन्तकृत् संहर्ता सन् प्रमत्तं विषयासक्त्या स्वोद्धारप्रयत्नशून्यं जनमाविशति विनाशाय प्रविशति॥ ३९॥ यद्भयादिति। यस्य कालस्य भयात् वातः वायुर्वाति सर्वत्र प्रचरति। सूर्यश्च तत्तत्कालानुरूपं यद्भयात्तपति यद्भयाद्देवः पर्जन्यो वर्षति। यद्भयाद् भगणो नक्षत्रसमूहो भाति॥ ४०॥ यदिति। ओषधिभिः सह वनस्पतयो वृक्षा लताश्च यस्माद् भीताः स्वे स्वे काले पुष्पाणि फलानि च गृह्णन्ति प्रकटयन्ति॥ ४१॥ स्रवन्तीति। यस्माद् भीताः सरितः स्रवन्ति। यतश्च भीत उदधिर्नोत्सर्पति स्वमर्यादामुल्लङ्घ्य पृथ्वीं न प्लावयति यद्भयादग्निरिन्धे दीप्यते यद्भयाद् गिरिभिः सहिता बहुभाराक्रान्ता भूर्जले न निमज्जति॥ ४२॥

नभ इति। यस्य नियमात् आज्ञावशात् अदः नभः श्वसतां प्राणिनां पदं स्थानमवकाशं ददाति यन्नियमात् महान् महत्तत्त्वं ब्रह्मा वा स्वदेहं जगदङ्कुरभूतं वैराजं सप्तभिः पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहत्तत्त्वैरावृतं लोकं तनुते ब्रह्माण्डरूपेण विस्तारयति॥ ४३॥ गुणेति। चराचरमेतद्विश्वं येषां वशेऽस्ति ते गुणाः रजःसत्त्वतमोरूपास्तदभिमानिनस्तन्नियन्तारो देवा

ब्रह्मविष्णुरुद्राः यद्भयात् अस्य विश्वस्य सर्गादिषु सर्गस्थितिप्रलयेषु अनुयुगं प्रतिकल्पं वारंवारं प्रवर्तन्ते ॥ ४४ ॥ स इति। स कालो जनेन पित्रादिना जनं पुत्रादिं जनयन्नादिकृद् भवति मृत्युनाऽन्तकं मारकमपि चौरव्याघ्रादिकं मारयन्नन्तकरो भवति स्वयं त्वनादिः जन्मरहितः अनन्तो मरणशून्यः अव्ययः अपक्षयादिविकारशून्यश्च ॥ ४५ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायस्तृतीयस्योनत्रिंशे व्यधादिमाम् ॥

इति श्रीभागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

—:❀:—

## अथ त्रिंशोऽध्यायः

कपिल उवाच

तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम्। काल्यमानोऽपि बलिनो वायोरिव घनावलिः ॥ १ ॥

त्रिंशे कान्तादिसक्तानां कामिनां तामसी नृणाम्। पापादधोगतिस्तत्र श्लोका वेदगुणा (३४) मताः।
उवाचेत्येकमर्द्धाब्ध्याश्चतुरामा (३४॥) अनुष्टुभः ॥ ३० ॥

तस्येति। बलिना कालेन काल्यमानोऽपि इतस्ततो विचालनपूर्वकं पीड्यमानोऽपि। बलिन इति पाठान्तरम्। अयं प्राणी इतस्ततो विचाल्यमानाऽपि घनावलिर्मेघपङ्क्तिर्यथा वायोर्विक्रमं न वेद तथा तस्य पूर्वोक्तप्रभावस्यैतस्य कालस्य उरुमधिकं विक्रमं विनाशकत्वमयं जनः प्राणी नैव वेद नैव जानाति ॥ १ ॥ विक्रममाह—यमिति। अयं पुमान् दुःखेन प्रयासेन सुखहेतवे सुखार्थं यं यं धनपुत्रादिरूपमर्थमुपादत्ते सम्पादयति तं तमर्थं कालात्मको भगवान् धुनोति विनाशयति। यत्कृते यदर्थनिमित्तं पुमान् शोचति ॥ २ ॥ शोके हेतुः—यदिति। यद्यस्मात् दुर्मतिः अयं जनः सानुबन्धस्य पुत्रकलत्रादिसहितस्य अध्रुवस्य नश्वरस्य देहस्य संबन्धीनि गृहक्षेत्रवसूनि मोहात् ध्रुवाणि नित्यानि मन्यते अतस्तद्विहतौ शोचति ॥ ३ ॥ जन्तुरिति। वा एवार्थे। एतस्मिन् भवे संसारे अयं जन्तुः जीवो यां यां देवमनुष्यादियोनिमनुव्रजेत् प्राप्नुयात्तस्यां तस्यां योनौ स निर्वृतिं सुखं लभते अतो न विरज्यते विरक्तो नैव भवतीत्यर्थः ॥ ४ ॥ नरकस्य इति। देवस्य हरेर्मायया विमोहितः अयं पुमान् नरकस्थोऽपि नारक्यां नरकयोग्यविष्ठाहारादिभिर्जातायां निर्वृतौ प्रीतौ सत्यां तं नरककीटादिदेहं त्यक्तुं नैवेच्छति ॥ ५ ॥ आत्मेति। आत्मा देहः जायासुतागारपशुद्रविणबन्धवश्च एतेषु निरूढमूलं प्रसृतमनोरथं हृदयं यस्य सः आत्मानं बहु मन्यते कृतार्थं मन्यते ॥ ६ ॥ सन्दह्यमानेति। एषामात्मादीनासुदुह्नाधिना पोषणचिन्तया संदह्यमानानि परितप्तानि सर्वाणि अङ्गानि यस्य स मूढः दुराशयश्च जनः अविरतं निरन्तरं दुरितानि पापानि करोति ॥ ७ ॥ आक्षिप्तेति द्वयम्। असतीनां पुंश्चलीनां स्त्रीणां रहसि रचितया मायया संभोगादिरूपया कलभाषिणां शिशूनामालापैश्च आक्षिप्तः आकृष्ट आत्मान्तःकरणमिन्द्रियाणि च यस्य सः गृही गृहाश्रमी कूटाः वित्तशाठ्यादिकपटप्राया धर्माः येषु तेषु दुःखतन्त्रेषु दुःखप्रधानेषु गृहेषु अतन्द्रितः आलस्यरहितः सन् दुःखस्य प्रतीकारं निवृत्त्युपायं कुर्वन्नपि सुखवन्मन्यते न तु सुखं लभते ॥ ८-९ ॥ अर्थैरिति। इतस्ततः शास्त्रमर्यादोल्लङ्घनेन सर्वतो गुर्व्या महत्या हिंसया पीडया आपादितैरर्थैर्धनादिभिः तान् पुत्रकलत्रादीन् पुष्णाति येषामेवं पोषेण स पुमान् शेषभुक् सर्वोपभुक्तावशिष्टं पापकर्म वा भुङ्क्ते तादृशः सन् भोगोऽपि तस्य दुर्लभ इत्यर्थः। स्वयमधो नरकं याति ॥ १० ॥ वार्तायामिति। लोभेन अभिभूतः हतविवेकः निःसत्त्वः अशक्तः स वार्तायां जीविकायां पुनः पुनरारब्धायां लुप्यमानायां दैवेन विघ्नितायां सत्यां परार्थे परस्वे स्पृहां कुरुते ॥ ११ ॥ कुटुम्बेति। कुटुम्बस्य भरणे अकल्पः असमर्थः मन्दभाग्यः वृथोद्यमः निष्फलयत्नः श्रिया विहीनः कृपणः दीनः मूढधीश्च सः ध्यायन् किं कर्तव्यमित्यादि चिन्तयन् श्वसिति उच्चैः श्वासान् विमुञ्चति ॥ १२ ॥ एवमिति। एवं पूर्वोक्तप्रकारेण स्वस्य भरणे

पोषणे अकल्पमसमर्थं तस्य कलत्रादयः गोजरं वृद्धबलीवर्दं कीनाशा दुष्टाः कृषीवला यथा नाद्रियन्ते तथा यथा पूर्वं स्वपोषणदशाया-माद्रियन्ते स्म तथेदानीं नाद्रियन्ते भोजनाच्छादनादिकमपि न प्रयच्छन्ति ।। १३ ।। तत्रेति द्वयम् । तत्राप्येवमनादरदशायामप्य-जातनिर्वेदः अनुत्पन्नवैराग्यः स्वयमात्मना पूर्वं भृतैः पुष्टैः भ्रियमाणः पोष्यमाणः जरया उपात्तं स्वीकृतं वैरूप्यं बलीपलितादि येन सः मरणाभिमुख आसन्नमृत्युः अवमत्या परिभवपूर्वकमुपन्यस्तमग्रे प्रक्षिप्तमन्नादिकं गृहपालः श्वा इवाहरन् भुञ्जानः आमयावी अजीर्णरोगवान् अतः अप्रदीप्ताग्निः अत एवाल्पाहारः अत एव चाल्पं चेष्टितं यस्य सः गृह एवास्ते ।। १४-१५ ।। वायुनेति । उत्क्रमता ऊर्ध्वं गच्छता । दीर्घाभाव आर्षः । प्राणवायुना उद्गते उद्वर्तिते तारे कनीनिके यस्य स कफेन श्लेष्मणा संरुद्धा नाड्यो यस्य सः अतः कासश्वासाभ्यां कृत आयासो यस्य सः कण्ठे घुरघुरायते घुरड्घुरडशब्दवान् भवति । अव्यक्तानुकरणेति कृभ्वादियोगं विनापि डाच् डाजन्तात् क्यष्विधानात् ज्ञापकात् "लोहितादिडाज्भ्यः" इति क्यष् । "वा क्यषः" इति पाक्षिकस्तङ् । नित्यमाम्रेडिते डाचीति डस्य पररूपं टिलोपः ।। १६ ।।

शयान इति । शयानः परिशोचद्भिः स्वबन्धुभिः परिवीतः परिवेष्टितः तैर्वाच्यमानः हे बन्धो ! हे तातेत्याहूयमानोऽपि न ब्रूते । यतः कालस्य मृत्योः पाशस्य वशं गतः ।। १७ ।। एवमिति । उक्तप्रकारेण कुटुम्बभरणे व्यापृत आत्मा चित्त यस्य सः अजितेन्द्रियः उरुवेदनया महत्या पीडया अस्ता नष्टा धीर्यस्य सः स्वानां बन्धूनां रुदतां सतां म्रियते ।। १८ ।। मृतस्य पापपुण्याभ्यां द्वे गती । तत्र पापगतिमाह—यमेति । तदा मरणसमये प्राप्तावात्मानमानेतुमागतौ भीमौ भयङ्करौ सरभसं सक्रोधमीक्षणं ययोस्तौ यमदूतौ दृष्ट्वा त्रस्तं हृदयं यस्य सः शकृन्मलं मूत्रं च विमुञ्चति ।। १९ ।। यातनेति । तौ यमदूतौ मृतं यातनायोग्ये देहे आवृत्य निरुध्य गले कण्ठे बलात् पाशैर्बद्ध्वा यथा दण्ड्यं दण्डार्हं जनं राजभटा बद्ध्वा नयन्ति तथा दीर्घमध्वानं नयतः गमयतः ।। २० ।। तयोरिति द्वयम् । तयोर्दूतयोस्तर्जनैश्छिन्धि भिन्धीत्यादिदुर्वचनैर्भिन्नं व्याकुलं हृदयं यस्य सः । अत एव जातः वेपथुः कम्पो यस्य सः पथि मार्गे श्वभिर्भक्ष्यमाणः दश्यमानशरीरः अतः आर्तः पीडितः स्वं स्वीयमघं पापमनुस्मरन् भवति ।। २१ ।। क्षुदिति । क्षुत्तृड्भ्यां परीतः व्याप्तः अर्कदवानलानिलैः सन्तप्यमानः कशया चर्ममय्या रज्ज्वा पृष्ठे च ताडितः सूर्यदवाग्निभ्यां तप्ता वालुका यस्मिंस्तस्मिन् पथि निराश्रमोदके निर्गतः आश्रमो विश्रामस्थानमुदकं च यस्मिंस्तस्मिन् पथि अशक्तः चलितुमसमर्थोऽपि कृच्छ्रेण कष्टेन चलति ।। २२ ।। तत्रेति । यतः श्रान्तः अतो मूर्च्छितः संस्तत्र तत्र मार्गे पतन् पुनरुत्थितश्च सन् तमसा अन्धकारप्रचुरेण पापीयसा पापियोग्येन दुःखबहुलेन पथा मार्गेण यमस्य सादनं प्रति नीतो भवति ।। २३ ।। योजनानामिति । अध्वनः संबन्धिनां योजनानां नवतिं नव च सहस्राणि पापाल्पत्वे त्रिभिर्मुहूर्तैः पापाधिक्ये च द्वाभ्यां मुहूर्ताभ्यां नीतः अतिक्रामितः सन् यमस्थाने यातनाः प्राप्नोति ।। २४ ।। संक्षेपतो यातना दर्शयति—आदीपनमिति । उल्मुकादिभिः ज्वलत्काष्ठादिभिर्वेष्टयित्वा स्वगात्राणामादीपनं प्रज्वा-लनं क्वापि स्वेन कृत्तं छिन्नं परतोऽपि वा अन्येन वा छिन्नं यदात्मनः स्वस्य मांसं तस्यादनं भक्षणं प्राप्नोति वृत्त्यन्तर्गतस्य मांसस्य कृत्तमिति विशेषणसंबन्ध आर्षः । एकतकारो वा पाठः । तस्य स्वेनैव कृतं परतः कृतं वाऽऽत्ममांसस्यादनं प्राप्नोतीत्यर्थः ।। २५ ।। जीवत इति । यमसादने यमपुरे श्वगृध्रैर्जीवत एव स्वस्यान्त्राणामभ्युद्धारः बहिर्निष्कासनं जीवत इत्यादीपनादिषु सर्वत्र द्रष्टव्यम् । मृतस्य पीडाऽसम्भवात् दशद्भिः सर्पादिभिः आत्मनो वैशसं पीडाम् ।। २६ ।।

कृन्तनमिति । अवयवशः अङ्गानां कृन्तनं शस्त्रैश्छेदनं गजादिभ्यः भिदायाः अवयवानां विदारणस्य आपनं प्रापणं गिरिशृङ्गेभ्यः पातनम् अम्बुगर्तयोः रोधनं च ।। २७ ।। या इति । एताः यातनाः प्रोक्ताः याश्च तामिस्रादयः पञ्चमे विस्तरेण वक्ष्यमाणा यातनाः मिथः परस्परं सङ्गेन आसक्त्या निर्मिताः पापाचारेण सम्पादितास्ता नरो वा नारी वा भुङ्क्ते अनुभवति ।।२८।। न चैतदसंभावितं तादृशराजदण्डस्य वनितादिसुखस्य चात्र लोकेऽपि दृश्यमानत्वादित्याह—अत्रैवेति । हे मातः ! स्वर्गो नरकश्चा-त्रैव लोके वर्तत इति प्रचक्षते विवेकिनो वदन्ति । यतः या एव यातना नारक्यो नरकसम्बन्धिन्यस्ता इह लोकेऽपि कीटादावुप-लक्षिताः प्रत्यक्षा एव ।। २९ ।। एवमिति । कुटुम्बं बिभ्राणः कुटुम्बपोषणपर उदरंभरः स्वदेहपोषणमात्रपरो वा एवमुक्तप्रकारेण उभयं कुटुम्बं देहं चेहैव विसृज्य त्यक्त्वा प्रेत्य यमलोकं प्राप्य तस्य तत्पोषणार्थं कृतस्य पापस्येदृशं फलं भुङ्क्ते ।। ३० ।। एक इति । भूतद्रोहेण प्राणिपीडया यद् भृतं पुष्टं कृतं तदिदं स्वकलेवरं स्थूलशरीरं कुटुम्बं चेहैव हित्वा कुशलात् पुण्यादितरत् पापं तदेव पाथेयं पथि यममार्गे भोग्यं यस्य सः एकः स्वयमेव ध्वान्तं नरकं प्रतिपद्यते प्राप्नोति ।। ३१ ।। दैवेनेति । हृतं वित्तं यस्य स आतुर इव यद्वा हृतं लोकस्य वित्तं येन स चोर इवातुरः पुमान् तस्य कुटुम्बपोषस्य शमलं पापं पापफलं दैवेन परमेश्वरेण आसादितं निरये नरके भुङ्क्ते ।। ३२ ।। केवलेनेति । केवलेनाधर्मेण कुटुम्बभरणे उत्सुकः आसक्तो जीवस्तमसो नरकस्य चरममन्तिमं पदं स्थानमन्धतामिस्राख्यं याति ।। ३३ ।। अध स्तादिति । नरलोकस्य मनुष्यदेहप्राप्तेरधस्तादर्वाक् यावतीर्यावत्यो यातनाः । पूर्वसवर्णदीर्घं आर्षः । आदिपदेन श्वशूकरादियोनयश्च यास्ताः सर्वाः क्रमेण समनुक्रम्य संप्राप्य तत्र दुःखभोगेन पापक्षयाच्छुचिः सन् पुनरत्र नरत्वमाव्रजेत् प्राप्नोति ।। ३४ ।।

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां त्रिंशोऽध्यायः ।। ३० ।।

## अथैकत्रिंशोऽध्यायः

श्रीभगवानुवाच

कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये । स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥

एकत्रिंशे तु मिश्रेण कर्मणा राजसी गतिः । मानुषी वर्ण्यते श्लोकास्तत्र सार्द्धा गजाब्धयः ( ४८॥ ) ॥

उवाचेति त्रयं सार्द्धाः षट्पञ्चाशदनुष्टुभः ( ५६॥ ) ॥ ३१ ॥

कर्मणेति । पुनरत्राव्रजेदित्युक्तं तत्र जन्तुर्जीवो देहोपपत्तये देहलाभाय दैवमीश्वरस्तदेव नेत्रं नेतृप्रवर्तकं यस्य तेन कर्मणा कञ्चित् पुरुषं प्रविशति ततश्च तस्य रेतःकणाश्रयः रेतसः कणमाश्रयो यस्य सः रेतोद्वारा स्त्रिया उदरं प्रविष्टो भवति ॥ १ ॥ कललमिति । एकरात्रेण कललं शुक्रशोणितमिश्रं भवति । पञ्चरात्रेण बुद्बुदं वर्तुलाकारं भवति । दशाहेन च कर्कन्धूर्बदरी-फलाकारं कठिनं भवति । ततः परं पेशो मांसपिण्डाकारं जरायुप्रकृतिभूतं भवति । अण्डं वेति पद्यादियोन्यन्तरापेक्षयोक्तम् ॥ २ ॥ मासेनेति । ततो मासेन शिरो भवति । द्वाभ्यां मासाभ्यां बाह्वङ्घ्र्याद्यङ्गानां विग्रहो विभागो भवति । ततस्त्रिभिर्मासैर्नख-लोमास्थिचर्माणि भवन्ति पुंस्त्वादिश्च लिङ्गमिन्द्रियच्छिद्राणि च तेषामुद्भवश्च भवति ॥ ३ ॥ चतुर्भिरिति । चतुर्भिर्मासैर्मांसादयः सप्त धातवो भवन्ति । पञ्चभिर्मासैः क्षुत्तृषारुद्भवो भवति । षड्भिर्मासैर्जरायुणा चर्मविशेषेण वीतो वेष्टितः कुक्षौ दक्षिणे पार्श्वे भ्राम्यति दक्षिणे पुरुषमधिकृत्योक्तम् । पुंगर्भो दक्षिणे स्त्रीगर्भो वामे इति प्रसिद्धेः ॥ ४ ॥ मातुरिति । मातुर्जग्धेन भक्षितेन अन्नेन पानेन आद्येन फलाद्यैश्च आप्यायनीनामकनाभिसंबद्धनाडीद्वारा प्राप्तैरेधन्तो वर्द्धमानाश्च धातवो यस्य । एधदिति शता आर्षः । मार्कण्डेयपुराणे—"नाडी चाप्यायनी नाम नाभ्यां तस्य निबध्यते । स्त्रीणां तथाऽन्त्रसुषिरे सा निबद्धोपजायते ॥ क्रमात्ते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा । तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति वै ॥" इति । जन्तूनां कीटादीनां संभवो यस्मिंस्तस्मिन् विण्मूत्रयोर्गर्त्ते अतः असम्मते अयोग्ये मात्रुदररूपे स्थाने जन्तुः शेते तिष्ठति ॥ ५ ॥ कृमिभिरिति । तत्रत्यैः क्षुधितैः कृमिभिर्मुहुः पुनः पुनः क्षतानि खाद्यमानानि सर्वाण्यङ्गानि यस्य सः सौकुमार्यात् कोमलत्वात् उरुः अधिकः क्लेशो यस्य सः जन्तुः प्रतिक्षणं मूर्च्छामाप्नोति ॥ ६ ॥ कट्विति द्वयम् । उल्बणैर्दुःखदैर्मातृभुक्तैः कटुतीक्ष्णलवणरूक्षाम्लादिभिरन्नैरुपस्पृष्टः अत एव सर्वेष्वङ्गेषूत्थिता वेदना यस्य सः उल्वेन जरायुणा संवृतः संवेष्टितः बहिश्च मातुः अन्त्रैरावृतः भुग्नं कुटिलीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य सः पञ्जरे बद्धः शकुन्तः पक्षीव स्वाङ्गचेष्टायामप्यकल्पः असमर्थः तस्मिन् मातृकुक्षौ शिरः कृत्वा आस्ते ॥ ७–८ ॥ तत्रेति । तत्र गर्भे दैवात् पूर्वकर्मवशात् भगवदिच्छावशाद्वा लब्धा स्मृतिर्येन सः अतो जन्मशतोद्भवं बहुजन्मसंचितं कर्म स्मरन् दीर्घं बहुकालमनुच्छ्वासं यथा भवति तथा स्थितः सन् किं नाम शर्म सुखं विन्दते ॥ ९ ॥ आरभ्येति । सप्तमात् मासादारभ्य लब्धबोधोऽपि संजातसुखदुःखादिज्ञानोऽपि सूतिहेतुभूतैर्वातैर्वेपित इतस्ततश्चालितः सन् विष्ठाभूः विष्ठाभवः कृमिरिव सोदरः विष्ठाकृमिभ्राता इव तत्सहोत्पन्नत्वात् एकत्र न आस्ते ॥ १० ॥ नाथमान इति । नाथमानः भगवत्कृपा मे भूयादित्याशिषं कुर्वन् अतः । शानच् । ऋषिरात्मदर्शी पुनर्गर्भवासात् भीतश्च सप्त धातवो वध्रयो बन्धनभूता यस्य सः जीवः कृताञ्जलिः सन् येन भगवता उदरेऽर्पितः तं विक्लवया विह्वलया वाचा स्तुवीत गर्भे विध्यादेरसम्भवात् । हेतुहेतुमतोर्लिङिति फले लिङ् । तेन यो भगवन्तं भजेत स स्तुवीतेत्यर्थः । अन्यस्तु न स्तुवीत तस्यैवाग्रे संसारो वर्ण्यते न तु भगवत्स्तोतुः शास्त्रविरोधात् कश्चिदेव पुण्यकृद्धरिं स्तौति न सर्वोऽपीति ॥ ११ ॥

तस्येति । येन भगवता असतो दुष्टस्य मे ममानुरूपा योग्या ईदृशी गर्भवासादिरूपा गतिः फलमदर्शि प्रदर्शिता उपसन्नं शरणागतमुपपन्नमिति वा पाठः । स्वेनैव निर्मितं यज्जगत् तदवितुं रक्षितुं स्वेच्छयैव आत्ता गृहीता नाना तनवः मूर्तयो येन तस्य भगवतः अकुतोभयं रामकृष्णाद्यवतारेषु भुवि चलच्चरणारविन्दं संसारतापसन्तप्तोऽहं शरणं व्रजामि ॥ १२ ॥ य इति । भूतेन्द्रियाशयमयीं देहेन्द्रियान्तःकरणाकारेण परिणतां मायां प्रकृतिमवलम्ब्यात्मत्वेन स्वीकृत्य तत्प्रयुक्तकर्मभिः पुण्यपापैरावृत आत्मा स्वरूपं यस्य स इव बद्ध इव च यः आस्ते सोऽहं यस्तु भगवान् अत्रैव मात्रुदरे आस्ते तम् आतप्यमाने हृदयेऽवसितं प्रतीतमपि विशुद्धम् अविकारम् अखण्डः अविद्यया अप्रतिबद्धः बोधो यस्य तं भगवन्तं नमामि ॥ १२ ॥ य इति । पञ्चभूतरचिते

शरीरे अयथा मिथ्यैव छन्नः न वस्तुतः यतस्तेन शरीरेण रहितः असङ्गः अत एव अयथैव इन्द्रियगुणार्थचिदात्मकः इन्द्रियाणि च गुणाः सत्त्वादिगुणपरिणामा देहान्तःकरणादयः अर्थाः शब्दादयः चित् चिदाभासः तदात्मकः सोऽहं तेन शरीरेणाविकुण्ठो महिमा यस्य तम्। अवगुण्ठेति पाठे अवसन्नं गुण्ठमावरणं यस्य स महिमा यस्येत्यर्थः। तम् एनम् ऋषिमात्मदर्शिनं प्रकृतिपूरुषयोः परं नियन्तारं पुमांसमहं वन्दे ॥ १४ ॥ यदिति। यस्य मायया नष्टस्मृतिः उरूणि सत्त्वादिगुणनिमित्तानि कर्माणि नितरां वन्धनानि यस्मिंस्तस्मिन् सांसारिके पथि प्रवृत्तिमार्गे अत तदभिश्रमेण तदुचितव्यापारव्याकुलत्वेन चरन्नयं जीवः यद्वा यन्मायया मोहितः सांसारिके पथि चरन् तदभिश्रमेण नष्टस्मृतिरयं जीवस्तस्य महतो भगवतोऽनुग्रहमन्तरेण कया युक्त्या केनोपायेन पुनः लोकं स्वरूपं प्रवृणीत जानीयात्। अत एवैकशरणतया भजनमेव युक्तम् ॥ १५ ॥ ज्ञानमिति। यदेतत् त्रैकालिकं कालत्रयसंबन्धिज्ञानं मम जातं तत्तं विना कतमो मय्यदधात् किन्तु स्थिरचरेषु स्थावरजङ्गमेषु अनुवर्तितोंऽशः अन्तर्यामिरूपो येन सदैव एव न्यदधात्। अत एव जीवबन्धनभूतानां कर्मणां पदवीं मार्गमनुवर्तमानाः वयं कर्मानुसारेण प्राप्तं यदाध्यात्मिकादितापत्रयं तस्योपशमनाय निवृत्तये तमेव भजेम ॥ १६ ॥ देहीति। हे भगवन्! अन्यदेहविवरे मातुरुदरकुहरे यः असृग्विण्मूत्रकूपे स्मिन् पतितः अतस्तत्र जठराग्निना भृशं तप्तो देहो यस्य सः अत एव कृपणा दीना धीर्यस्य सः इतो विवरात् विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन्नसौ देही वर्तते स भवता कदा बहिर्निर्वास्यते निर्गमयिष्यते ॥ १७ ॥

येनेति। हे ईश! भवादृशेन निरुपमेन पुरुदयेन निरतिशयदयावता येन भगवता दशमास्यः दशमासपरिमितस्तदयोग्योऽप्यसावहमीदृशीं दुर्लभां गतिं ज्ञानं पूर्वजन्मादिस्मरणं च सम्यग् ग्राहितः स दीनानां नाथः पालको भगवान् स्वेनैव कृतेनोपकारेण स्वयमेव तुष्यतु। अञ्जलिं नमस्कारं विना को नाम पुमान् अस्य तव तदुपकाररूपं प्रतिकुर्यात् प्रत्युपकारं कर्तुं शक्नुयात्। तत्प्रतिचिकीर्षां को नु कुर्यात् इति वा ॥ १८ ॥ पश्यतीति। अयमपरः पश्वादिः सप्तवध्रिर्जीवः स्वे देहे शारीरिके शरीरभवे सुखदुःखे केवलं पश्यति अहं तु यत्सृष्टया धिषणया यद्दत्तेन विवेकज्ञानेन दमशरीरी इत्युपलक्षणं शमदमादियुक्तशरीरवान् आस अभवं तमेव च पुराणमनादिं सर्वकारणं पुरुषं सर्वत्र पूर्णं चैत्यमहङ्कारास्पदमिवापरोक्षतया बहिश्च हृदि च प्रतीतं पश्ये पश्यामि। तङर्थः ॥ १९ ॥ सोऽहमिति। हे विभो! बहुभिर्दुःखैः सहवासो यथा स्यात्तथाऽत्रैव वसन्नपि स त्वत्सम्पादितविवेकोऽहं गर्भाद्बहिर्नि निर्जिगमिषे न निर्गन्तुमिच्छामि। तङर्थः। तत्र हेतुमाह—यत्र गर्भाद्बहिरन्धकूपे अन्धकूपवद्विवेकतिरोधायके उपयातं प्राप्तं जनं देवस्य तव दुस्तरा माया उपसर्पति। तया मोहितस्य मिथ्या मतिः देहपुत्रादावहंममाभिमानो भवति। यदनु यस्य पश्चादेतत्संसृतिचक्रं नानाविधकर्मतत्प्रयुक्तनानाविधगर्भवासदुःखानुभवादिपरम्परा भवति ॥ २० ॥ तस्मादिति। तस्मात् बहिर्निःसरणप्रयुक्तदोषात् यथा भूयः पुनः अनेकरन्ध्रं नानागर्भवासादिरूपमेतद्व्यसनं दुःखं नवच्छिद्रस्थूलदेहलक्षणा विपत्तिर्वा मे मा भविष्यत् न भविष्यति। इलोप आर्षः। तथा अत्रैव स्थितो विगतविक्लवः दुःखबाहुल्येऽपि धैर्यमालम्ब्याऽव्याकुलः सुहृदा आत्मना सारथिरूपया स्ववशवर्तिन्या बुद्ध्या उपसादितो हृदयं प्रापितौ विष्णोः पादौ येन तथाभूतश्च सन्नहमाशु शीघ्रमेवात्मानं तमसः संसारदुःखादुद्धरिष्ये ॥ २१ ॥ एवमिति। दशमास्यः दश मासाः परिच्छेदका यस्य स ऋषिर्जीवः एवमुक्तप्रकारेण कृता मतिर्येन तादृक् भवति। ततश्च अवाचीनमवाङ्मुखं तं प्रसूत्यै बहिर्निर्गमाय प्रसूतिहेतुर्मारुतः सद्यः तत्क्षणमेव क्षिपति प्रेरयति। यद्वा यः दशमास्यः गर्भ एव एवं भगवन्तं स्तुवन् मोदते कृतमतिर्भवति स ऋषिर्मोक्षयोग्यो भवति। यस्तु अन्यः तं त्ववाचीनं प्रसूत्यै संसरणाय सूतिमारुतः सद्यः क्षिपति भगवत्स्तोता तु सूतिमारुतक्षेपं विनाऽनायासेनैव गर्भान्निःसरतीति भावः ॥ २२ ॥ तेनेति। तेन सूतिवातेन सहसा अवसृष्टः स्वस्थानात् प्रचालितः शिरः अवाक् अधः कृत्वा आतुरः अवशः निरुच्छ्वासः मूर्च्छितः अत एव हता विनष्टा पूर्वोक्ता स्मृतिर्यस्य सः अतिकृच्छ्रेण विनिष्क्रामति ॥ २३ ॥

पतित इति। भुवि यन्मातुरुदरादसृङ्मूत्रं पतितं तस्मिन् पतितः विष्ठाभूः कृमिरिव चेष्टते गर्भवासकालिके ज्ञाने गते विनष्टे सति तद्विपरीतां गतिं गतः देहाद्यात्माभिमानं प्राप्तः सन् रोरूयति रोरूयते भृशं रोदितीति। तङभाव आर्षः। एतेन यस्य गर्भे पूर्वोक्तं ज्ञानं जातं बाल्यपौगण्डावस्थायां तिरोहितं भवति तस्य सत्सङ्गादिभिः पुनरुदेति अन्यस्य नेति ॥ २४ ॥ परच्छन्दमिति। परस्य बालस्य छन्दमभिप्रायमविदुषा अजानता जनेन सः बालः पुष्यमाणः अत एवानभिप्रेतमनिष्टं क्षुधया स्तन्यार्थं रोदने उदरव्यथां परिकल्प्यौषधादिकमुदरव्यथया रोदने च क्षुधां परिकल्प्य दीयमानं स्तन्यादिकं चापन्नः प्राप्तो भवति। तथापि प्रत्याख्यातुमनीश्वरः असमर्थः सन् रोरूयतीत्यनुषङ्गः ॥ २५ ॥ शायित इति। जन्तुः शिशुः समासे तु जन्तवो मशकमक्षिकादयः स्वेदजाः मत्कुणादयश्च तैर्दूषिते दुःखप्रदे अशुचौ मलमूत्रादिलिप्ततया अशुद्धे पर्यङ्के शायितः शयनं कारितः अङ्गानां कण्डूयने संघर्षणे आसने उपवेशने उत्थाने चेष्टने च नेशः असमर्थः रोरूयति इत्यनुषङ्गः ॥ २६ ॥ तुदन्तीति। आमा कोमला त्वग् यस्य तं विगतगर्भज्ञानं रुदन्तं तं शिशुं कृमिकं क्षुद्रं कृमिं यथा अन्ये कृमयो व्यथयन्ति तथा दंशा मशका मत्कुणादयस्तुदन्ति व्यथयन्ति ॥ २७ ॥ इतीति द्वयम्। इत्येवं शैशवं पञ्चवर्षाणि तद्भवं पौगण्डं यौवनादर्वाग्भवमध्ययनादिजं च दुःखं भुक्त्वा

यौवने च अज्ञानात् हेतोः न लब्धमभीप्सितं येन इद्धः प्रदीप्तो मन्युः क्रोधो यस्य सः शुचाऽर्पितः शोकेन व्याप्तः कामी देहेन सहैव वर्द्धमानेन मानेनाहङ्कारेण मन्युना च आत्मनोऽन्ताय विनाशाय कामिषु विग्रहं करोति ॥ २८–२९ ॥ भूतैरिति। अबुधः असद्ग्राहः अन्यथाग्राही कुमतिश्च देही पञ्चभिर्भूतैरारब्धे देहे असकृत् मुहुः अहंममेति मतिं करोति ॥ ३० ॥ तदर्थमिति। योऽयम् अविद्यया देहाद्यात्माभिमानेन कृतं यत्कर्म तेन बद्धयते विरच्यते तादृशः देहः क्लेशं जन्ममरणजराव्याध्यादिदशायां दुःखमेव ददत् अनुयाति अनुवर्तते। पुनः पुनरायाति वा तदर्थमेव देहार्थमेव जन्तुः कर्म कुरुते। येन कर्मणा बद्धः सन् स्वयं संसृतिं श्वसूकरादिनानायोनिं याति। यो देहः क्लेशं ददाति तमेव पापकर्मणाऽपि पुष्यतीति मौढ्यम् ॥ ३१ ॥ यदीति। यदि जन्तुर्जीवः शिश्नोदरार्थे कृत उद्यमः प्रयत्नो यैस्तैः असद्भिर्जुष्टे पथि मार्गे आस्थितः संस्तैः पुनः रमते। यद्वा यद्यसद्भिः आस्थितः अधिष्ठितः सन् तेषां पथि रमते। यद्वा पथि सन्मार्गे स्थितोऽपि यदि असद्भिः सह रमते तदा पुनः पूर्ववत् यातनादेह आवृत्त्येत्याद्युक्तप्रकारेण तमो नरकं विशति। अत्र व्यतिरेकेण यदि रुद्भिर्हरिसेवाकृद्भिः सह रमते तदा हरिं प्राप्नोतीति लभ्यते ॥ ३२ ॥ सत्यमिति द्वयम्। येषां सङ्गात् सत्यशौचाद्याः भगान्ताः क्षयं यान्ति तेषु अशान्तेषु विषयवैतृष्ण्यरहितेषु अत एव मूढेषु विषयासक्तेषु अत एव खण्डितात्मसु देहात्मद्धिषु कामक्रोधादिभिर्विक्षिप्तचित्तेषु वा खण्डित आत्मा यैस्तेष्वात्मघातिष्विति वा योषितां क्रीडामृगवत् वानरवदधीनेषु अतो नरकादिदुःखावश्यकत्वात् साधुभिः शोच्येषु असाधुषु दुराचारेषु सङ्गं न कुर्यात् ॥ ३३–३४ ॥

नेति। अस्य पुंसो यथा योषितां सङ्गात् यथा च तासां योषितां सङ्गिनां सङ्गतो मोहो विषयासक्तिः तदुपयुक्तकर्मभिर्बन्धश्च भवेत्तथाऽन्यस्यासतः प्रसङ्गतो मोहादिर्न भवेत् ॥ ३५ ॥ न च विवेकिनां धियं भ्रंशयितुं योषिन्न शक्नोतीति वाच्यमित्याह—प्रजापतिरिति। प्रजापतिर्ब्रह्मा स्वां दुहितरं सरस्वतीं दृष्ट्वा तस्याः रूपेण सौन्दर्येण धर्षितः मोहितः तदा तद्दुरभिप्रायमालक्ष्य रोहिद्भूतां मृगीरूपेण पलायमानां सोऽपि ऋक्षरूपी सन् हृतत्रपः गतलज्जो मरीच्यादीनां पश्यतामेवान्वधावत् ॥ ३६ ॥ तत्सृष्टेति। यद्येवं तर्हि तेन ब्रह्मणा सृष्टाः मरीच्यादयस्तैः सृष्टाः कश्यपादयस्तैः सृष्टा ये देवमनुष्यादयस्तेषु मध्ये इह संसारे नारायणमृषिमृते [illegible] नारायणं विना वर्त्तमानेषु नारायणमनुपासानेष्वित्यर्थः। ततोऽन्यो योषिन्मय्या मायया न खण्डिता न मोहिता धीर्यस्य तथाभूतः पुमान् को नु न कोऽपीत्यर्थः ॥ ३७ ॥ बलमिति। स्त्रीमय्या स्त्रीरूपायाः मे मम मायाया बलं मोहकत्वरूपं सामर्थ्यं पश्य। या स्त्री केवलं भ्रुवोर्विजृम्भेण विक्षेपेण दिशां जयिनः शूरानपि पदाक्रान्तान् स्वाधीनान् करोति। यद्वा शूरानपि त्रेण पदाक्रान्तान् करोतीति केवलं निर्णीतम्। "निर्णीतं केवलम्" इत्यमरः ॥ ३८ ॥ सङ्गमिति। अतः सत्सेवया सत्सङ्गेन आत्मरूपो लाभो येन सः आत्मभावः आत्मबोध इति चापि पाठद्वयम्। अत एव योगस्य परं पारं परमफलमारुरुक्षुः प्राप्तुमिच्छुः जनः जातु कदाचिदपि प्रमदासु स्त्रीषु सङ्गमासक्तिं न कुर्यात्। याः प्रमदा अस्य मुमुक्षोर्निरयस्य द्वारं वदन्ति तत्सङ्गान्नरके पतति ॥ ३९ ॥ या इति। या देवेन भगवता निर्मिता योषिद्रूपा माया शनैः शुश्रूषादिव्याजेन उपयाति समीपमायाति तां योषितं तृणैरावृतं कूपमिव निपातहेतुम् आत्मनो मृत्युमनर्थकरीमीक्षेत ॥ ४० ॥ मुमुक्षुस्त्रिया पुरुषप्रसङ्गो न कार्य इत्याह—यामिति। पूर्वजन्मनि स्वयं पुमान् स्त्रीसङ्गतोऽन्तकाले स्त्रीध्यानेन स्त्रीत्वं प्राप्तो जीवः ऋषभायतीम् ऋषभायमाणां पुरुषवदाचरन्तीम्। शता आर्षः। यां मम मायां मोहाद्वित्तापत्यगृहप्रदं पतिं मन्यते ॥ ४१ ॥ तामिति। तां मम मायां पत्यपत्यगृहात्मकं यथा मृगयोर्व्याधस्य गायनमनुकूलत्वेन प्रतीयमानमपि मृगस्य मृत्युः तथा दैवेन स्वप्रारब्धेनोपसादितं प्रापितमात्मनो मृत्युमेव विजानीयात् ॥ ४२ ॥ ननु व्यापकस्य नित्यस्याविकारिणः कथं पूर्वोक्ता संसृतिः लोकान्तरगमनं जन्ममरणं च भोगेन कर्मक्षये सति पुनः कुतः कर्मसम्भव इत्याशङ्क्याह—देहेनेति। जीवभूतेन जीवोपाधिभूतेन लिङ्गदेहेन पुमान् जीवो लोकाल्लोकं देहाद्देहान्तरं चानुव्रजन् प्रारब्धकर्मफलं भुञ्जानोऽविरतं निरन्तरं देहान्तरप्राप्तिहेतुभूतानि कर्माणि करोत्येव। एतेन कर्मणामसमाप्तिरुक्ता ॥ ४३ ॥

जीव इति। जीवो जीवस्योपाधिर्लिङ्गदेहः तथा अस्यात्मनः अनुगतोऽनुवर्ती स च भूतेन्द्रियमनोमयः स्थूलभूतविकारो देहो भोगायतनं तस्योभयविधस्य देहस्य निरोधः कार्यायोग्यताऽस्य जीवस्य मरणमुच्यते तच्च स्थूलदेहविगमे स्थूलान्तरप्राक्काले भवेत्। सुषुप्त्यादौ तु स्वकार्याकारित्वेऽपि कार्यं प्रति योग्यताऽस्त्येव। सुषुप्तिभङ्गे सद्य एव तद्योग्यतादर्शनात् स्थूलदेहस्याविर्भावस्त्वस्य संभवो जन्म उच्यते। स च भोगायतनदेहविगमे स्थूलान्तरप्राप्तौ गर्भान्निष्क्रमणसमये भवेत् ॥ ४४ ॥ द्रव्येति। अत्र स्वामिपादानां मते द्रव्येत्येकमेव पद्यं दृष्टान्तभूतम्। तत्रार्थः द्रव्योपलब्धिस्थानस्य नेत्रगोलकादेर्द्रव्येक्षायां रूपादिदर्शने काचादिदोषेण यदाऽयोग्यता तदैव चक्षुरिन्द्रियस्याप्ययोग्यता। अनयोः स्थानचक्षुषोर्यदा अयोग्यता तदा एव द्रष्टुर्जीवस्य द्रष्टृत्वायोग्यता। एवं स्थूलदेहवैकल्ये लिङ्गस्य वैकल्यं तदेव जीवस्य मरणं न स्वत इत्यर्थः। एतावानेव पाठः सम्यग् भाति। यदि तु एतत्पद्यार्द्धादग्रे श्लोकमेकं पठित्वा एतदुत्तरार्द्धं पठ्यते तदा श्लोकद्वयस्येयं व्याख्या। मृत्युजन्मनोर्लक्षणं पुनः स्पष्टमाह—द्रव्येति। द्रव्याणां पृथिव्यादीनां सर्ववस्तूनामुपलब्धिस्थानस्य स्थूलदेहस्य नाशे द्रव्येक्षायां वस्तुसाक्षात्कारे यदा यत् अयोग्यता तदेव पञ्चत्वं स्थूलदेहनाशे सूक्ष्मदेहस्यापि द्रव्योपलब्ध्ययोग्यता तदेव जीवस्य मरणं न स्वत इत्यर्थः। यदा तु पुनराविर्भूतेन स्थूलदेहेन

द्रव्याणां दर्शनं भवति तदा तत्राहंनानात् अप्रमेवाहमित्यात्माभिमानादुत्पत्तिर्जन्मेत्युच्यते। अत्र दृष्टान्तः—यथा अक्ष्णोर्गोलकयोर्यदा काचकामलादिदोषेण द्रव्यावयवस्य रूपादेर्दर्शने अयोग्यता भवति, तदैव चक्षुष इन्द्रियस्यापि तद्दर्शने अयोग्यता भवति। यदा चानयोर्गोलकेन्द्रिययोरयोग्यता भवति, तदैव द्रष्टुर्जीवस्यापि द्रष्टृत्वायोग्यता भवति। एवं स्थूलदेहवैकल्ये लिङ्गदेहस्यायोग्यता तयोर्देहयोरयोग्यत्वे जीवस्याप्ययोग्यत्वेन मरणव्यवहारो न तु वस्तुत द्विनाशः॥ ४५–४६॥ तस्मादिति। यस्मान्न वस्तुतो जीवस्य जन्ममरणादि तस्मात् मरणात् संत्रासो न कार्यः। जोवने च कार्पण्यं दैन्यं न कार्यं जोवनप्रयत्ने च संभ्रम आसक्तिर्न कार्यः। जीवस्य गतिम् अच्छेद्यादाद्यादितत्त्व बुद्ध्वा धोरो देहादौ मुक्तसङ्गः आसक्तिरहितश्च सन्निह संसारे चरेत्॥ ४७॥ सम्यगिति। मायाविरचिते लोके सम्यक् याथात्म्यस्य दर्शनं यस्यास्तस्या योगवैराग्याभ्यां युक्तया बुद्ध्या कलेवरं विन्यस्य इदमपि प्राकृतं नश्वरं मत्तो भिन्नमिति बुद्ध्या तदभिमानं त्यक्त्वा चरेत्॥ ४८॥

इति श्रीमद्भागवते तृतीयस्कन्धेऽन्वितार्थे एकत्रिंशोऽध्यायः॥ ३१॥



## अथ द्वात्रिंशोऽध्यायः

कपिल उवाच

**अथ यो गृहमेधीयान् धर्मानेवावसन् गृहे। काममर्थं च धर्मान् स्वान् दोग्धि भूयः पिपर्ति तान्॥ १॥**

द्वात्रिंशे सात्त्विकैर्धर्मैरज्ञस्योर्ध्वगतिर्मता। पुनरागमनं चैव तत्र श्लोकास्त्रिसिन्धवः (४३)॥

अनुष्टुभश्चतुर्वेदाः सार्द्धा एकमुवाच (४४।) च॥ ३२॥

अथेति द्वयम्। यो गृह एवावसन् गृहमेधो गृहाश्रमस्तदीयानेव धर्मानाचरन् तान् धर्ममर्थं च कामं च दोग्धि तत्फलमिच्छति। ततः भूय एव तान् धर्मादीन् पिपर्त्ति पूरयति अनुतिष्ठति। यथा गाश्चारयित्वा दुग्धानि दोग्धि पुनर्दुग्धप्रत्याशया ताश्चारयति स चापि कामैर्मूढः भगवद्धर्मात् पराङ्मुखो विमुखः सन् श्रद्धयान्वितः क्रतुभिर्यज्ञैर्देवान् श्राद्धैः पितॄंश्च यजते पूजयति॥ १–२॥ तदिति। तेषु पितृदेवेषु या श्रद्धा तया आक्रान्ता मतिर्यस्य सः पितृदेवार्चन एव व्रतं यस्य सः स पुमान् सोमपाः सन् तत्र सोमममृतं पीत्वा पुनरिमं लोकमेष्यति आगमिष्यति॥ ३॥ यदेति। यदा च कल्पान्ते अनन्तः शेष आसनं यस्य सः हरिः अतः स अहीन्द्र एव शय्या तस्यां शेते। तदा ये एते गृहमेधिनां गृहस्थानां प्राप्याः भूर्भुवःस्वरात्मकाः लोकास्ते लयं विनाशं यान्ति॥ ४॥ ये इति त्रयम्। ये तु धोरा जितेन्द्रिया निःसङ्गा भगवति न्यस्तानि कर्माणि यैः प्रशान्ताः क्रोधादिरहिताः शुद्धचेतसः निवृत्तिधर्मनिरता निर्ममाः निरहङ्कृताः ये कामार्थयोः हेतवे प्रयोजनाय स्ववर्णाश्रमोचितत्वेनानुष्ठितान् धर्मान्न दुह्यन्ति न दुहन्ति धर्मफलरूपकामान्नेच्छन्ति। श्यन् आर्षः। ते स्वधर्माख्येन सत्त्वेन निमित्तेन। तत्त्वेनेति पाठेऽप्ययमेवार्थः। परिशुद्धं यत्तेन चेतसा हेतुना सूर्यद्वारेण विश्वतोमुखं सर्वतो व्याप्तं परे ब्रह्मादयः अवरेऽस्मदादयस्तेषामीशम् अस्य विश्वस्य प्रकृतिमुपादानकारणम् उत्पत्त्यन्तभावनं निमित्तकारणं च पुरुषं यान्ति॥ ५–७॥ परमेश्वरत्वेन हिरण्यगर्भोपासकानामपि क्रमेण मुक्तिरित्याह—द्विपरार्द्धेति। द्विपरार्द्धस्य हिरण्यगर्भायुःकालस्यावसाने अन्ते ब्रह्मणो हिरण्यगर्भस्य यः प्रलयो भगवति लयस्तावत्पर्यन्तं ये परस्य हिरण्यगर्भस्य परिचिन्तकाः परमेश्वरत्वेनोपासकास्ते तु ब्रह्मलोकमध्यासते सत्यलोके तिष्ठन्ति॥ ८॥ क्ष्माम्भ इति द्वयम्। पराख्यं द्विपरार्द्धलक्षणं कालमनुभूय तावत्कालं स्वाधिकारं निर्वाह्य क्ष्मादीनि पञ्चमहाभूतानि मनश्चेन्द्रियाणि चार्थाश्च शब्दादयः भूतादिश्चाहङ्कारः एवमादिभिः परिवृतं संयुक्तं ब्रह्माण्डं प्रतिसंजिहीर्षुः संहर्तुमिच्छुः सन् यर्हि गुणत्रयात्मा गुणत्रयात्मकप्रपञ्चाभिमानी परः

इन्द्रादिभ्यः उत्कृष्टः स्वयंभूर्हिरण्यगर्भः अव्याकृतं सर्वविकारशून्यं परमेश्वरं विशति मुक्तो भवति ॥ ९ ॥ तदा एवं हिरण्यगर्भोपासनया परेत्य दूरं गत्वा भगवन्तं हिरण्यगर्भमनुप्रविष्टा जितो वशीकृतो मरुत् प्राणा मनश्च यैस्ते विरागा ये योगिनः तेऽपि अमृतं परमानन्दरूपं पुराण पुरुषं प्रधानमुत्कृष्टं ब्रह्म तेन ब्रह्मणा साकमेव उपयान्ति न तु पूर्व यतस्तदा अगताभिमानाः। तथा च स्मृतिः—"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥" इति ॥ १० ॥

भगवदुपासकास्तु साक्षादेव तं प्राप्नुवन्तीत्यतस्तं भजेत्याह—अथेति। अथ तस्मात् हे भामिनि मातः! सर्वभूतानां हृत्पद्मेषु कृत आलयः निवासस्थानं येन तं सर्वान्तरात्मानं मत्तः श्रुतोऽनुभावो यस्य तं भगवन्तं भावेन परमप्रेम्णा शरणं व्रज ॥ ११ ॥ भगवद्भक्ताः साक्षाद् भगवन्तं प्राप्नुवन्ति हिरण्यगर्भोपासकास्तु क्रमेणेत्युक्तं भेदेनोपासने तु ब्रह्मादयोऽप्यावर्त्तन्ते इत्याह—आद्य इति त्रयम्। यः स्थिरचराणामाद्यः स्रष्टा वेदा गर्भे यस्य स ज्ञानाधिको ब्रह्मा स निःसङ्गेन निष्कामेण कर्मणा युक्तोऽपि भेददृष्ट्या देहाद्यात्माभिमानेन च दोषेण सगुणं ब्रह्मज्ञानैश्वर्यादिपूर्णं पुरुषर्षभं पुरुषोत्तमं पुरुषं श्रीनारायणं संसृत्य प्रलये तदेकीभूयापि पुनः सृष्टिकाले ईश्वरमूर्तिना कालेन गुणानां सत्त्वादीनां व्यतिकरे परिणामे जाते सति कर्तृत्वात् जगतः करणेऽधिकृतत्वात् यथा पूर्वं पूर्वकल्पवत् ऋषिभिर्मरीच्यादिभिः योगेश्वरैः सनत्कुमाराद्यैर्योगसिद्धैरन्यैश्च सह प्रजायते न केवलं स एव ॥ १२–१४ ॥ ऐश्वर्यमिति। ये तु कर्मिणो ब्रह्मलोकं गतास्तेऽपि स्वधर्मविनिर्मितं तत्फलभूतं पारमेष्ठ्यं परमेष्ठिना संपादितमैश्वर्यं निषेव्य सुखं भुक्त्वा गुणव्यतिकरे सति भोगेन पुण्यात्मकसत्त्वगुणक्षये सति पुरुषं प्राप्य यथा पूर्वं स्वस्वाधिकारेण पुनरायान्ति। "आब्रह्मभुवनाल्लोकाः पुनरावर्तिन" इति वाक्यात् ॥ १५ ॥ ये त्विति त्रिकम्। इह संसारे ये तु कर्मस्वासक्तमनसः रजसा गुणेन कुण्ठं कुण्ठितं विक्षिप्तं मनो येषां कामेषु आत्मा मनो येषां ते अजितेन्द्रियाः गृहेषु अभिरतः आशयो येषां ते ये श्रद्धया अन्विताः सन्तः अप्रतिषिद्धानि तत्तत्फलसाधकानि तथा नित्यान्यपि सन्ध्योपासनादीनि च कृत्स्नशः सर्वाणि कर्माणि कुर्वन्ति तथाऽनुदिनं पितॄन् यजन्ति। ते पुरुषाः त्रैवर्गिकाः त्रिवर्गमात्रनिष्ठाः अत एव हरिः संसारदुःखहर्त्री मेधा यस्य तस्य कथनीया उरवो विक्रमा यस्य तस्य मधुद्विषो हरेः कथायां विमुखाः भवन्ति ॥ १६–१८ ॥ नूनमिति। ये च अच्युतस्य कथासुधां हित्वा त्यक्त्वा विड्भुजः शूकराः पुरीषमिव असद्गाथाः कुकथाः शृण्वन्ति ते नूनं निश्चितं दैवेन स्वप्रारब्धेन विहताः नाशिताः ॥ १९ ॥ दक्षिणेनेति। गर्भाधानमारभ्य श्मशानान्ताः क्रियाः कुर्वन्ति तादृशाः ते श्लोकचतुष्के कथिताः जनाः भगवन्तं न प्राप्नुवन्ति किन्तु "धूमो रात्रिस्तथा कृष्णः" इत्युक्तेन दक्षिणेन पथा मार्गेण अर्यम्णः पितृराजस्य सम्बन्धिनं पितृलोकं व्रजन्ति। पितृलोकात् पुनः प्रजामनु स्वपुत्रादिषु प्रजायन्ते च ॥ २० ॥ ततः कथं प्रजायन्त इत्यपेक्ष्याह—तत इति। हे सति! ततः पितृलोकं प्राप्यानन्तरं तत्र भोगेन क्षीणं सुकृतं येषाम् अतो देवैस्तदधिष्ठातृभिः सद्यो विभ्रंशित उदयो भोगो येषां ते विवशाः सन्तः ततो लोकात् पुनरिमं लोकं प्रति पतन्ति। ततः प्रजामनुप्रजायन्त इति भावः ॥ २१ ॥ तस्मादिति। तस्मात् त्वं सर्वभावेन परमप्रेम्णा तस्य गुणा भक्तवात्सल्यादयः एवाश्रयो विषयो तस्याः तया भक्त्यैव भजनीयं पदाम्बुजं यस्य तं परमेष्ठिनं परमेश्वरं भजस्व ॥ २२ ॥

वासुदेव इति। वासुदेवे सर्वान्तर्यामिणि भगवति प्रयोजितः निरन्तरमनुष्ठितो भक्तियोगो ब्रह्म दृश्यते येन तथाभूतं यज्ज्ञानं तत् वैराग्यं सर्वत्र वैतृष्ण्यं चाशु शीघ्रमेव जनयति ॥ २३ ॥ यदेति द्वयम्। उतेत्यवधारणे। यदा अस्य भक्तस्य चित्तं भगवद्गुणानुरागेण तस्मिन्नेव निश्चलतया विशुद्धं सदिन्द्रियवृत्तिभिः समेष्वर्थेषु शब्दादिविषयेषु इदं प्रियमिदमप्रियमिति वैषम्यं नैव गृह्णाति। स तदैव आत्मना विशुद्धचित्तेन निःसङ्गं प्रत्यध्यासरहितं तत्र हेतुः समं च तद्दर्शनं प्रकाशरूपं च तम् अत एव हेयोपादेयविभागरहितम् आरूढं पदं स्वरूपभूतं परमात्मनैकीभूतमात्मानमीक्षते ॥ २४–२५ ॥ समेष्वर्थेष्वित्युक्तं तदेव साम्यं दर्शयति—ज्ञानमात्रमिति। ज्ञानमात्रमेक एव पदार्थः। उपनिषत्सु परं ब्रह्म योगशास्त्रे परमात्मा ईश्वरः सांख्ये पुमान् भक्तिशास्त्रे भगवानिति प्रसिद्धः। ज्ञानमात्रत्वेन समेष्वर्थेषु दृश्यादिभिः दृश्यद्रष्टृकरणैः पृथग्भावैः ईयते प्रतीयते ॥ २६ ॥ ननु ज्ञानमात्ररूपं नित्यप्राप्तमेवेति किं साधनैराप्यते तत्राह—एतावानिति। यत् यस्तु कृत्स्नशः साकल्येन सर्वत्रासङ्गः अनासक्तिः स एतावानेव योगिनः साधननिष्ठस्य समग्रेण योगेन साधनेन अभिमतः शास्त्रसम्मतोऽर्थः फलं युज्यते प्राप्यत इति प्रपञ्चसङ्गव्युदास एव योगफलमित्यर्थः ॥ २७ ॥ ज्ञानमिति। पराचीनैः पराङ्मुखैरिन्द्रियैः शब्दादिधर्मिणा शब्दादिर्धर्मोऽस्ति यस्य तेन अर्थरूपेण घटपटादिरूपेण भ्रान्त्या एकं ज्ञानरूपं निर्गुणं ब्रह्मैवावभाति न त्वर्थः पृथगस्ति। प्रतीतिस्तु भ्रान्तिरेव तत्र भेददर्शनपूर्वकाहंममासति बन्धनम् अतस्तन्निरासे यत्नो मुमुक्षुणा विधेय एव ॥२८॥ अर्थरूपत्वमुदाहृत्य दर्शयति—यथेति। यथा महान् महत्तत्त्वमेव अहंरूपः अहङ्काररूपः स च त्रिवृत् त्रिगुणात्मकः पुनश्चाकाशादिमहाभूतरूपेण पञ्चविधः मनइन्द्रियरूपेणैकादशविधश्च स्वराट् समष्टिपुरुषः तस्येदं ब्रह्माण्डं वपुः। यतः समष्टिरूपात् सर्वमपि जगद्व्यष्टिरूपं भवति। एवं च यथा महदादिरूपेण ब्रह्मैवावभाति तथा एकमेव ज्ञानमवभाति ॥ २९ ॥ एतदिति। श्रद्धया भक्त्या विरक्त्या नित्यशः योगाभ्यासेन च समाहितात्मा अत एव

निःसङ्गः पुरुष एतत्सर्वं ब्रह्मात्मकं परिपश्यति ॥ ३० ॥ इतीति । हे गुर्वि मातः ! इत्युक्तरीत्या येन प्रकृतेः पुरुषस्य च तत्त्वं याथार्थ्यमनुबुध्यते तदेतत् ब्रह्मदर्शनं ज्ञानं कथितम् ॥ ३१ ॥ अनेनापि भक्तियोगेनैव भगवानेव प्राप्य इत्याह—ज्ञानयोग इति । नैर्गुण्यो निर्गुणविषयो मन्निष्ठो ज्ञानयोगो भक्तिलक्षणो योगश्च तयोर्द्वयोरपि भगवच्छब्दो लक्षणं ज्ञापको वाचको यस्य सः एक एवार्थः फलम् ॥ ३२ ॥

ननु ज्ञानयोगस्यात्मलाभः फलं भक्तियोगस्य भजनीयेश्वरप्राप्तिरिति कुत एक एवार्थ इत्यत आह—यथेति । यथा बहूनां रूपरसादिगुणानामाश्रयो गुडक्षीरादिरेक एव पदार्थः पृथग्द्वारैर्मार्गभेदप्रवृत्तैरिन्द्रियैर्नाना प्रतीयते चक्षुषा शुक्ल इति रसनेन मधुर इति घ्राणेन सुगन्धिरिति स्पर्शनेन शीत इति तद्वदेकोऽपि भगवान् शास्त्रवर्त्मभिर्नाना प्रतीयते, ज्ञानमार्गे निर्गुण इति भक्त्यादि-मार्गे सगुण इति ॥ ३३ ॥ शास्त्रवर्त्मानि प्रपञ्चयति—क्रिययेति । अत्र क्रियादित्रयं गृहस्थस्येत्यादिक्रमाश्रमेषु यथोचितं योज्यम् । क्रियया पूर्तरूपया क्रतुभिर्यज्ञैः दानैः तपः कृच्छ्रादि स्वाध्यायः वेदाध्ययनं मर्शनं वेदविचारस्तैः आत्मनो मनस इन्द्रियाणां च जयेन निषिद्धवर्जनेन शमदमात्मकेन कर्मणां संन्यासेन भगवति समर्पणेनेति भगवानेवेयते ॥ ३४ ॥ योगेनेति । विविधाङ्गेन योगेन भक्तियोगेन चेत्येवं सर्वत्र भक्तियोगमिश्रणं तं विना सर्वस्य व्यर्थत्वात् । एवहिशब्दाभ्यां भक्तियोगः केवलोऽपि क्रियादि-साध्यं वस्तु प्रापयतीति उभयचिह्नेन सकामनिष्कामलक्षणेन धर्मेण तमेवाह—य इति । यो धर्मः प्रवृत्तिनिवृत्तिमानिति तत्र सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एव सगुणरूपमिति भावः ॥ ३५ ॥ आत्मेति । आत्मनस्तत्त्वस्य याथात्म्यस्याववोधेन दृढेन स्थिरेण वैराग्येण च एभिः क्रियादिसाधनजातैः सगुणः कल्याणगुणपूर्णः निर्गुणश्च स्वदृक् स्वप्रकाशो भगवानेव यथाधिकार-मीयते प्राप्यते ॥ ३६ ॥ प्रावोचमिति । त्रिधा सगुणा एका निर्गुणा इति भेदेन चतुर्विधं भक्तियोगस्य स्वरूपं ते तुभ्यं प्रावोच-मुक्तवानस्मि । तथा यो जन्तुषु प्राणिष्वन्तः प्रविश्य धावति उत्पत्तिनिधनादि करोति अत एवाव्यक्ता गतिश्चेष्टा यस्य तस्य कालस्य च रूपं ते प्रावोचम् ॥ ३७ ॥ जीवस्येति । अङ्ग हे मातः ! यासु संसृतिषु प्रविशन् आत्मा जीवः आत्मनो गतिं स्वरूपं न वेद । ताः अविद्यया यानि कृतानि कर्माणि तैर्निर्मिताः प्राप्ताः बह्वीर्देवमनुष्यनरकादिरूपा जीवस्य संसृतीश्च प्रावोच-मित्यनुषङ्गः ॥ ३८ ॥ नेति । एतत् खलाय शाठ्येन पृच्छकाय न उपदिशेत् अविनीताय अनम्राय न च स्तब्धाय गर्विताय नापि च भिन्नाय दुराचाराय मतान्तरेण भेदं गताय वा । तथा धर्मध्वजाय दाम्भिकाय च कर्हिचिदपि नोपदिशेत् ॥ ३९ ॥ नेति । लोलुपाय विषयभोगासक्ताय नोपदिशेत् । नापि गृहारूढचेतसे नापि मे ममाभक्ताय तथा मद्भक्तद्विषां मद्भक्तद्वेषिभ्योऽपि जातु कदाचिदपि नोपदिशेत् ॥ ४० ॥ श्रद्दधानायेति द्वयम् । श्रद्दधानायेत्यादिभ्यो दीयताम् । वस्तूनां मध्ये यस्याहमेव प्रियस्तस्मै एतत् दीयताम् उपदिश्यताम् ॥ ४१–४२ ॥ य इति । हे अम्ब ! यः पुरुषो मच्चित्तः सन् सकृत् श्रद्धया इदमाख्यानं शृणुयात् यश्च तथाभूतोऽभिधत्ते सोऽपि मत्पदवीमेति ॥ ४३ ॥

इति श्रीभागवते महापुराणे तृतीये स्कन्धेऽन्वितार्थप्रकाशिकायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

—:❀:—

## अथ त्रयस्त्रिंशोऽध्यायः

### मैत्रेय उवाच

एवं निशम्य कपिलस्य वचो जनित्री सा कर्दमस्य दयिता किल देवहूतिः ।
विस्रस्तमोहपटला तमभिप्रणम्य तुष्टाव तत्त्वविषयाङ्कितसिद्धिभूमिम् ॥ १ ॥

त्रयस्त्रिंशे देवहूत्या ज्ञानलाभेन वर्णिता । जीवन्मुक्तिस्तत्र सप्तत्रिंशच्छ्लोका ( ३७ ) उदीरिताः ॥
उवाचपञ्चकं चापि चन्द्रवेदा ( ४१ ) अनुष्टुभः ॥ ३३ ॥

एवमिति । कपिलस्य जनित्री माता जनिता मन्त्रे इति णिलोपश्छान्दसः । कर्दमस्य दयिता सा देवहूतिः एवं कपिलस्य वचो निशम्य विस्रस्तं निरस्तं मोहरूपं देहाद्यात्माध्यासरूपं पटलमात्मावरणं यस्यास्तादृशी सती तत्त्वानि प्रकृतिपुरुषेश्वरादीनि

विषयो यस्य तेन ज्ञानेनाङ्कितः युक्ता ये सिद्धास्तेषां भूमिमाश्रयं गुरुं सिद्धीति पाठे तत्त्वान्येव विषयस्तेनाङ्किता सिद्धिः सांख्यज्ञानं तस्य भूमिं क्षेत्रं प्रवर्त्तकं तं कपिलमभिप्रणम्य तुष्टाव ।। १ ।। अथेति । यस्य तव जठरे उदरे जातं यदब्जं कमलं तस्मात् साक्षाज्जातो योऽजो ब्रह्मा सोऽपि ते तव अन्तःसलिले सलिलमध्ये शयानं गर्भोदशायिरूपं भूतानि इन्द्रियाणि अर्थाः शब्दादयः आत्मानो जीवास्तन्मयं गुणानां प्रवाहो यस्मात् सत् व्यक्तम् अशेषस्य प्रपञ्चस्य बीजं कारणं ते वपुः केवलं दध्यौ । न तु झटिति साक्षाद् दृष्टवान् ।। २ ।। स इति । स एव गुणानां प्रवाहेण उन्मेषेण विभक्तं वीर्यं सृष्ट्यादिशक्तिर्येन शक्तिद्वारेण सृष्ट्यादिकर्त्ता न साक्षात् वस्तुतः अनीहः निष्क्रियः अवितथाभिसन्धिः सत्यसङ्कल्पः आत्मनां जीवानामीश्वरः अतर्क्याः सहस्रशः शक्तयो यस्य सः भवानेव विश्वस्य सर्गादि विधत्ते करोति ।। ३ ।। स त्वमिति । हे नाथ ! युगान्ते प्रलयसमये यस्य तवोदरे एतद्विश्वमासीत् स त्वं मया जठरे कथं नु धृतः न कथमपीत्यर्थः । अतः तव मायैवेयम् । यथा मायया शिशुः अङ्घ्रि पादाङ्गुष्ठं पिबतीति तथाभूतश्च सन्नेक एव वटपत्रे भवान् शेते स्म तथेदमपि शिशुत्वमित्यर्थः ।। ४ ।। त्वमिति । अतो हे विभो ! न मया त्वमपत्यान्तर-वज्जठरे धृतः, किन्तु पाप्मनां पापिष्ठानां प्रशमाय विनाशाय निदेशभाजामाज्ञानुवर्तिनां विभूतये समृद्धये च त्वं सदैव देहतन्त्रः स्वेच्छया स्वीकृतमूर्तिर्भवसीति । यथा तत्तत्कार्याय सूकरादयस्तवावतारास्तथात्मपथोपलब्धये ज्ञानमार्गप्रदर्शनायायमपि स्वेच्छयैव तवावतारः ।। ५ ।। यदिति । कचित् कदाचिदपि यस्य तव नामधेयस्य श्रवणात् अनुकीर्तनाद्वा यस्य तव प्रह्वणात् प्रह्वाचरणात् प्रणामात् । प्रह्वशब्दादाचारक्विबन्ताल्ल्युट् । यस्य स्मरणाच्च श्वादः श्वपचोऽपि सद्यस्तत्क्षणमेव सवनाय कल्पते सोमयाजिवदादरणीयो भवति । एतेन दुर्जात्यारम्भप्रारब्धपापनाशो व्यञ्जितः । यद्येवं तर्हि हे भगवन् ! ते तव दर्शनादहं कृतार्था जातेति कुतः पुनः किं पुनर्वक्तव्यम् ।। ६ ।।

अहो बतेति । यस्य जिह्वाग्रे तुभ्यं त्वां प्रीणयितुं तव नाम वर्तते स श्वपचोऽपि अतः त्वन्नामोच्चारणादेव हेतोः गरीयान् श्रेयान् अहो बताश्चर्यं त्वन्नाममाहात्म्यं ये ते तव नाम गृणन्ति कीर्त्तयन्ति ते एवार्याः सर्वतः श्रेष्ठाः ते तपस्तेपुः कृतवन्तः जुहुवुर्होमं कृतवन्तः सस्नुः सर्वतीर्थेषु स्नानं कृतवन्तः ब्रह्म वेदमनूचुः वेदाध्ययनादि कृतवन्तः तव नामकीर्त्तने तपआद्यन्तर्भूतमतस्ते पुण्यतमाः । यद्वा ते जन्मान्तरे तपस्तेपुरित्यादि त्वन्नामकीर्तनेन महाभाग्योदयादवगम्यते ।। ७ ।। तमिति । परं ब्रह्मरूपं परं पुमांसं पुरुषोत्तमं प्रत्यक् स्रोतसि विषयेभ्यः प्रत्याहृते आत्मनि मनसि संविभाव्यं संचिन्त्यमिति स्वतेजसा स्वरूपप्रकाशेन ध्वस्तो गुणप्रवाहः संसारो येन तं विष्णुं वेदा गर्भे यस्य तं कपिलं त्वामहं वन्दे ।। ८ ।। ईडित इति । कपिलाख्यः परः पुमान् परमपुरुषो भगवानेवं देवहूत्या ईडितः स्तुतः मातृवत्सलः तत्र प्रीतियुक्तः विक्लवया स्नेहेन गद्गदया अविप्लवया गम्भीरया वाचा इति वक्ष्यमाणं मातरं प्रत्याह स्म ।। ९ ।। मार्गेणेति । हे मातः ! मे मया उदितेन उपदिष्टेन ते त्वया सुसेव्येन सुखमनुष्ठेयेन अत आस्थितेन अनुष्ठितेनानेन मार्गेणाचिरात् शीघ्रमेव त्वं परां काष्ठां परमफलरूपां मुक्तिमवरोत्स्यसि प्राप्स्यसि ।। १० ।। श्रद्धत्स्वेति । एतत् मह्यं मम चतुर्थ्यार्षी । मम मतं त्वं श्रद्धत्स्व एतस्मिन् मते श्रद्धां कुर्वित्यर्थः । यद् ब्रह्मवादिभिः ब्रह्मोपदेष्टृभिः जुष्टं प्रीत्या सेवितं येन सेवितेनैतन्मतेन त्वमपि अभवं संसारनिवर्त्तकम् । अभयमिति पाठे सर्वभयरहितं सर्वभयनिवर्तकं मां यायाः यास्यसि । संभावनायां लिङ् । अतद्विदः एतन्मतानभिज्ञास्तु मृत्युमृच्छन्ति मृत्युग्रस्ते संसार एव पतन्ति ।। ११ ।। इतीति । इत्येवं तां ब्रह्मविरसेवितां सतीं श्रेष्ठाम् । उशतीमिति पाठे कमनीयां सुकरामात्मनो गतिमात्मप्राप्तिमार्गमात्मतत्त्वं वा मात्रे प्रदर्श्य तया ब्रह्मवादिन्या ब्रह्म त्मतत्त्वाभिज्ञया स्वमात्रानुमतोऽनुज्ञातो भगवान् कपिलो ययौ ।। १२ ।। सा चापीति । सा चापि देवहूतिरपि तनयोक्तेन पुत्रोपदिष्टेन योगादेशेन योगयुक् सती सरस्वत्या आपीडे पुष्पमुकुटवदलङ्कारभूते तृतीयान्तपाठे मुकुटेनेव सरस्वत्या वेष्टिते तस्मिन् बिन्दुसरआख्ये आश्रमे समाहिता समाधिमती जाता ।। १३ ।।

तां विशिनष्टि—अभीक्ष्णेति । अभीक्ष्णं योऽवगाहः स्नानं तेन कपिशान् पिशङ्गान् जटिलान् कुटिलान् अलकान् उग्रतपसा कृशं चीरिणं वल्कलादिधारिणम् आत्मानं बिभ्रतीम् ।। १४ ।। प्रजापतेरिति । यत् प्रजापतेः कर्दमस्य तपोयोगाभ्यां विजृम्भितमतिशयितम् अतः अनौपम्यं वैमानिकैर्देवैरपि प्रार्थ्यं स्वगार्हस्थ्यमभूत् ।। १५ ।। पय इति । यत्र पयःफेननिभाः पयःफेनसदृशः मृदुलाः शुभ्राः दान्ताः हस्तिदन्तेन निर्मिताः रुक्मपरिच्छदाः स्वर्णमयाः परिकराः यासु तथाभूताः शय्याः हैमानि सुवर्णरचितानि सुस्पर्शान्यास्तरणानि येषु तान्यासनानि च अभूवन् ।। १६ ।। स्वच्छेति । यत्र च माहान्त्यनर्घाणि मारकतानि इन्द्रनीलान्यलङ्कारार्थं संयुक्तानि येषु तेषु स्वच्छस्फटिकमयकुड्येषु रचिताः प्रतिबिम्बिता वा रत्नालङ्कारसंयुता ललनाः पद्मरागा-दिरत्नमयाः प्रदीपाश्च आभान्ति ।। १७ ।। गृहेति । बहुभिरमरद्रुमैः पारिजातादिभिः कुसुमितैः रम्यं कूजन्ति विहङ्गानां मिथुनानि यस्मिंस्तत् गायन्तो मत्ता मधुव्रता भ्रमरा यस्मिंस्तत् गृहोद्यानम् आभाति ।। १८ ।। यत्रेति । यत्र गृहोद्याने स्थितायामुत्पलगन्धिन्यां वाप्यां प्रविष्टं कर्दमेनोपलालितमात्मानं देवहूतिं विबुधानामनुचराः किन्नरगन्धर्वादयो जगुः ।। १९ ।। हित्वेति । किं बहुना आखण्डलयोषितामिन्द्रस्त्रीणामपि ईप्सिततमं तत् स्वगार्हस्थ्यं हित्वा तत्राभिमानं त्यक्त्वा पुत्रभूतेश्वरविरहेणातुरा व्याकुला सती

वदनं किञ्चिद्व्यथाकुलं चकार ॥ २० ॥ वनमिति । ज्ञातं तत्त्वं यया तथाभूताऽपि पत्यौ कर्दमे वनं प्रति प्रव्रजिते संन्यस्य गते सति अपत्यस्य कपिलस्य विरहेणातुरा सा देवहूतिः वत्से नष्टे सति वत्सला गौर्यथातुरा भवति तथाऽभूत् ॥ २१ ॥ तमेवेति । हे वत्स विदुर ! तमेवापत्यरूपं कपिलं हरिं संसारहर्तारं देवं परमेश्वरं ध्यायती सती । नुमभाव आर्षः । अचिरतोऽल्पेनैव कालेन तादृशे पूर्वोक्तप्रकारके गृहे निःस्पृहा बभूव ॥ २२ ॥ ध्यायतीति पञ्चकम् । भक्तेः प्रवाहो नैरन्तर्यं स एव योगस्तेन बलीयसा अप्रतिहतेन वैराग्येण युक्तानां यथोचितपूजाजपादीनाम् आहारशयनादीनां चानुष्ठानजातेन अनुष्ठानसमूहेन ब्रह्मात्मसाक्षात्कारहेतुना ब्रह्मत्वापादकेन च ज्ञानेनेति शुद्धिकारणैः विशुद्धेनात्मना मनसा स्वसुतः कपिलो ध्यानस्य गोचरं योग्यं प्रसन्नवदनं यद् भगवद्रूपमाह स्म तद्ध्यायती । नुमभाव आर्षः । क्वापि नुमवान् पाठ । तदा चात्मानमपि स्वानुभूत्या स्वरूपप्रकाशेन तिरोभूतं मायागुणैः कृतं देहेन्द्रियान्तःकरणरूपं विशेषणं यस्मात्तं विश्वतोमुखं तदभिन्नतया सर्वगतं ध्यायती सती आत्मनां जीवानां संश्रये कारणे भगवति ब्रह्मणि अभेदेनावस्थिता मतिर्यस्याः सा अत एव निवृत्ता जीवस्यापत्तिरापद्रूपा अविद्या यस्याः । यद्वा निवृत्ता जीवापत्तिर्जीवभावो यस्यास्तस्या भावस्तत्त्वं तस्मात् क्षीणाः क्लेशाः रागादयो यस्याः आप्ता निर्वृतिः परमानन्दो यया तथाभूता नित्या रूढो लब्धप्रतिष्ठः समाधिर्यस्यास्तस्या भावस्तत्त्वं तस्मात् परावृत्तः शान्तो गुणनिमित्तो भ्रमो देहाद्यात्माध्यासो यस्याः सा देवहूतिः तदा स्वप्ने दुःखादियुक्तं दृष्टमात्मानं यथा उत्थितो दुःखादियुक्तं न स्मरति तथाऽऽत्मानं न सस्मार ॥ २३–२७ ॥

तद्देह इति । तस्या देहः परतः पराभिः कर्दमसृष्टविद्याधरीभिः पोषः पोषणं यस्य तथाभूतोऽपि आधेर्मनो व्यथाया असंभवात् अकृशः मनोनिर्वृतिरतिस्थूलं करणीति वैद्यकात् अभ्यङ्गोद्वर्तनाद्यभावान्मलैरवच्छन्नोऽपि सधूमः पावक इव बभौ ॥ २८ ॥ स्वाङ्गमिति । वासुदेवे प्रविष्टा धीर्यस्याः सा तपोयोगप्रचुरं मुक्ता विकीर्णाः केशा यस्मिं तत् गतमम्बरं वस्त्रं यस्मात्तत् दैवेन प्रारब्धेन गुप्तं रक्षितं स्वाङ्गमपि सा न बुबुधे न ज्ञातवती ॥ २९ ॥ एवमिति । एवं कपिलोपदिष्टेन मार्गेण सा देवहूतिरचिरतः परम् आत्मानं ब्रह्मनिर्वाणं नित्यमुक्तं भगवन्तमवाप ॥ ३० ॥ तदिति । हे वीर ! यत्र सा संसिद्धिम् उपेयुषी मुक्तिमवाप तत् स्थानं नाम्ना सिद्धपदं त्रैलोक्ये विश्रुतं प्रसिद्धं पुण्यतमं क्षेत्रमासीत् ॥ ३१ ॥ तस्या इति । हे सौम्य ! योगेन विधूता विलीना मार्त्याः दैहिकाः धातुमला यस्य तत् तस्या देवहूत्या तन्मर्त्यं शरीरं सिद्धिदा सिद्धैः सेविता च स्रोतसां नदीनां प्रवरा श्रेष्ठा कपिला इति ख्याता सरिन्नदी अभूत् ॥ ३२ ॥ कपिलो ययाविति प्रागुक्तं प्रपञ्चयति—कपिल इति । महायोगी भगवान् कपिलोऽपि मातरं समनुज्ञाप्य अनुज्ञां संप्राप्य पितुराश्रमात् प्रागुदीचीमीशानीं दिशं ययौ । यद्वा प्राक् प्रथममुदीचीं दिशं ययौ पश्चाच्च गङ्गासागर एव स्थिरतामवापेति ॥ ३३ ॥ सिद्धेति । सिद्धचारणादिभिः स्तूयमानः समुद्रेण दत्तमर्हणमर्घ्यं निकेतनं निवासस्थानं च यस्मै सः साङ्ख्यशास्त्रस्य ये आचार्यास्तैरभिष्टुतः स्वयमपि समाहितः एकाग्रमनाः योगं समास्थाय त्रयाणामपि लोकानामुपशान्त्यै मोक्षाय आस्ते । उपशान्त्यै समाहित आस्ते इति वा ॥ ३४–३५ ॥ एतदिति । हे अनघ ! हे तात ! यन्मनुवंशादि तव त्वयाऽहं पृष्ट एतत्तुभ्यं मया निगदितं कथितं प्रसङ्गात् कपिलस्य देहहूत्याश्च पावनः पापनाशकः संवादश्च कथितः ॥ ३६ ॥ य इति । इदमात्मयोगं भगवद्ध्यानं गुह्यं सर्वशास्त्ररहस्यं कपिलमुनेर्मतं योऽनुदिनं केवलं शृणोति यश्च केवलमभिधत्ते वा श्रावयति स सुपर्णकेतौ गरुडध्वजे भगवति कृतधीः निष्पन्नभक्तियोगः सन् भगवत्पदारविन्दं लभते प्राप्नोति ॥ ३७ ॥

नित्यं सतां चरणसेवकतां गतोऽपि सद्भूसुरान्वयभवोऽपि जराङ्कतोऽपि ।
हन्तातिमुग्धपशुपालसुताङ्कपालिव्यालीढबुद्धिरधुना विधुनोमि धैर्यम् ॥ १ ॥

इति श्रीभागवते महापुराणे तृतीयस्कन्धेऽन्वितार्थप्रकाशिकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

**समाप्तोऽयं तृतीयः स्कन्धः ॥**

—:❀:—

# अथ चतुर्थः स्कन्धः

## प्रथमोऽध्यायः

॥ श्रीगोविन्दाय नमो नमः ॥

मैत्रेय उवाच

मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे । आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ॥ १ ॥

॥ ॐ नमो भगवते वासुदेवाय ॥

आनन्दधामनि विवेकरसेऽद्वितीये तस्मिन् पदेऽस्तु मम चित्तमगोचरेऽपि । यस्त्वद्व्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति ॥ १ ॥

यावन्निरञ्जनमजं पुरुषं जरन्तं संचिन्तयामि निखिले जगति स्फुरन्तम् । तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥२॥

प्रेम्णा मुकुन्दपदकञ्जयुगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या । गङ्गासहायजरठो हरितोषहेतोः स्कन्धेऽन्वयाय विदधाति मतिं चतुर्थे ॥ ३ ॥

मनुकन्यान्वया आद्ये यत्र यज्ञादिमूर्तिभिः । आविर्भावो हरेस्तत्र श्लोकाः ( ६६ ) षट्षष्टिरीरिताः ॥

अनुष्टुभोऽत्र नवषट् ( ६९ ) उवाचेति तु सप्तकम् ॥ १ ॥

तृतीयस्कन्धे सर्गं निरूप्य विसर्गमाह—मनोरिति । मनोः सकाशाच्छतरूपायां पत्न्याम् आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ख्याताः तिस्रः कन्या जज्ञिरे । चकारात् प्रियव्रतोत्तानपादनामानौ द्वौ पुत्रौ चेति ज्ञेयम् ॥ १ ॥ आकूतिमिति । नृपः स्वायम्भुवो मनुः भ्रातृमतीमप्याकूतिं शतरूपानुमोदितः पुत्रिकाधर्ममाश्रित्य रुचये तन्नाम्ने प्रजापतये प्रादात् । पुत्रिकाधर्मश्च—"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥" भाषाबन्धेन कन्यादानम् । स च यद्यपि अभ्रातृकायां कन्यायां पुत्रार्थिन एवोचित तथापि शतरूपानुमोदनात् पुत्रबाहुल्येच्छया कृतः । यद्वा न केवलं पुत्रबाहुल्यकाम एव किन्तु आकूतिसूनोरवतारत्वं सर्वज्ञतया ज्ञात्वा भगवान् मे दौहित्रोऽपि पुत्रो भूयादिति कामादिति भावः । यद्वा मनुर्मनीषायुक्तेः मनोर्भगवन्मनीषारूपत्वात्तत्पत्न्याश्च इच्छाशक्तिरूपत्वेन आकूतेश्च बाह्यविक्रमतया तत्र यज्ञावतारो भविष्यतीति निश्चयात् प्रजापालनेऽधिकृतेन मनुना स्वसाहाय्यार्थं पत्न्या सह संमन्त्र्य तथा कृतमिति नात्र शास्त्रविरोधविचारः ॥ २ ॥ प्रजापतिरिति । भगवान् ब्रह्मवर्चस्वी च रुचिः प्रजापतिः परमेण भगवद्विषयकेण तीव्रेण समाधिना ध्यानेन तस्यामाकूत्यां मिथुनं स्त्रीपुरुषयोर्युगलरूपमजीजनत् जनयामास । ब्रह्मवर्चस्वीति समासान्ताभाववत आर्षात् ब्रह्मवर्चशब्दाद्विनिः ॥ ३ ॥ यस्तयोरिति । तयोर्द्वयोर्मध्ये यः पुरुषः स यज्ञस्वरूपधृक् यज्ञनामकोऽवतारः साक्षात् विष्णुरेव द्वितीयस्कन्धेऽवतारवर्णने सुयज्ञ इत्यपि तस्य नाम । या स्त्री सा दक्षिणेति नाम्ना प्रसिद्धा भूतेर्लक्ष्म्या अंशभूता अवताररूपा अनपायिनी सर्वदा भगवत्सहचारिणी ॥ ४ ॥ आनिन्य इति । विततरोचिषं प्रसृतदीप्तिं स्वपुत्र्याः पुत्रं नप्तारं स्वायम्भुवो मनुः स्वसंकल्पस्य सिद्धत्वान्मुदा युक्तः स्वगृहमानिन्ये अत्यादरेणानीतवान् । रुचिश्च दक्षिणां नाम कन्यां जग्राह ॥ ५ ॥ तामिति । यजुषां यज्ञानां पतिः । यद्वा यजुषामुपलक्षणतया सर्ववेदानां पतिर्भगवान् यज्ञः कामयानां कामयमानां ताम् उवाह । तुमभावः । आगमशास्त्रस्यानित्यत्वात् कामयानशब्दः सिद्धोऽनादिश्चेति वामनसूत्रम् । "कामयानसमस्थया तुलाम्" इति रघुवंशे प्रयोगश्च । लक्ष्म्यंशभूतायास्तस्या विष्णोरवतारभूतेन यज्ञेन सह विवाहे शास्त्रविरोधो नास्ति । ततश्च तुष्टायां तस्या दक्षिणायां स्वयमपि तत्संबन्धात्तोषमापन्नः प्रसन्नः सन् द्वादश आत्मजात् अजनयत् ॥ ६ ॥

तोष इति । तोषः प्रतोषः इत्याद्याः द्विषट् द्वादश पुत्राः ॥७॥ तुषिता इति । "मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः । ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ॥" इति वक्ष्यति । तत्र स्वायम्भुवेऽन्तरे तोषादयः तुषिता नाम प्रसिद्धाः देवा आसन् । मरीचि-

मिश्राः मरीच्याद्याः ऋषय आसन्। यज्ञः हरेरवतारः आसीत्। स एव स्वयं सुरगणेश्वर इन्द्रश्च जातः। तत्र काले इन्द्राधिकारयोग्यस्य कस्यचिदन्यस्याभावात्॥ ८॥ प्रियव्रतेति। महौजसौ महाबलौ प्रियव्रतोत्तानपादौ मनुपुत्रावास्ताम्। मनुश्च स्वायम्भुव उक्त एव। इति यज्ञस्य द्वैरूप्येण षड्विधत्वमुक्तम्। तयोः प्रियव्रतोत्तानपदोः पुत्रपौत्रनप्तॄणां वंशैस्तदन्तरं तस्य स्वायंभुवस्य मन्वन्तरमनुवृत्तं व्याप्तं पालितमिति यावत्। यद्वा अनुवृत्तम् अनुचरितं तन्मयमेव तदन्तरं स्वायम्भुवमन्वन्तरमित्यर्थः। मन्वन्तरशब्दो "मन्वन्तराणि सद्धर्मः" इति वचनात् धर्मसाधकपण्णां समुदाये रूढस्तदुपलक्षितकालोऽप्युपचारान्मन्वन्तरमित्युच्यते॥ ९॥ देवहूतिमिति। हे तात विदुर! मनुः देवहूतिनाम्नीमात्मजां कर्दमाय अदात्। तत्सम्बन्धिचरितनिरूपणं गदतो मम सकाशात् भवता श्रुतप्रायम्। तृतीयस्कन्धे देवहूतिकन्यान्वयस्यानुक्तत्वेनाश्रुतत्वात् प्रायग्रहणम्॥ १०॥ दक्षायेति। भगवान् मनुः ब्रह्मणः पुत्राय दक्षाय प्रसूतिं कन्यां प्रायच्छत्। यया कृतो महान् सर्गः त्रिलोक्यां विततः विस्तृतो जातः॥ ११॥ या इति। मरीच्यादिनवब्रह्मर्षीणां पत्नयः। आर्षी ह्रस्वता। क्षत्तर्ब्रह्मर्षीत्यपि पाठः। कलादयो या नव कर्दमसुताः मया प्रोक्तास्तासां प्रसूतिप्रसव पुत्रपौत्रादिविस्तारं मे मया प्रोच्यमानं निबोध शृणु॥ १२॥ पत्नीति। कर्दमात्मजा कला मरीचेः पत्नी तु कश्यपं पूर्णमानं च सुषुवे। ययोर्वंशविस्तारेण सर्वं जगदापूरितम्॥ १३॥ कश्यपस्य वंशं विस्तृतत्वात् षष्ठे वक्ष्यति। पूर्णिम्न आह—पूर्णमेति। हे परन्तप! पूर्णिमा विरजं विश्वगं चेति द्वौ पुत्रौ देवकुल्यां नाम्नीं कन्यां चासूत। या देवकुल्या हरेः पादशौचात् पादप्रक्षालनप्रभावाज्जन्मान्तरे दिवः सरिद्वरा गङ्गाऽभूत्॥ १४॥ अत्रेरिति। अत्रेः पत्नी अनसूया सुष्ठु यशो येषां तान् आत्मा श्रीविष्णुः ईशः शङ्करः ब्रह्मा च तेषामंशैः सम्भवः प्रादुर्भावो येषां तान् दत्तं दुर्वाससं सोममिति ख्यातान् त्रीन् सुतान् जज्ञे जनयामास। अन्तर्भावितण्यर्थः॥१५॥ अत्रेर्गृह इति। हे गुरो! अत्रेर्गृहे स्थित्युत्पत्त्यन्तहेतवः सुरश्रेष्ठाः किञ्चित् किंस्वित् चिकीर्षवः किं कर्तुमिच्छवः सन्तो जाताः। एतत्कार्यं मे मह्यमाख्याहि॥ १६॥

ब्रह्मणेति। ब्रह्मणा सृष्टौ चोदितः ब्रह्मविदां वरः अत्रिः पत्न्या सह ऋक्षं नाम कुलाद्रिं ययौ। तत्र च तपसि स्थितोऽभूत्॥ १७॥ तस्मिन्निति त्रयम्। प्रसूनानां स्तवकाः येषु तेषां पलाशाशोकवृक्षाणां काननानि यत्रेति तथा तस्मिन् तथा निर्विन्ध्याया नद्याः स्रवद्भिर्वाभिर्जलैः समन्ततः सर्वतः उद्घुष्टे शब्दायमाने तस्मिन्नृक्षपर्वते प्राणायामेन मनः संयम्य य एको जगदीश्वरस्तमहं शरणं प्रपद्ये। स आत्मसमां प्रजां मह्यं प्रयच्छत्विति चिन्तयन् निर्द्वन्द्वोऽनिलभोजनो मुनिरेकपादेन वर्षशतमतिष्ठत्। अत्र तिष्ठन्नेव प्राणायामांश्चकारेति ज्ञेयम्। संयम्येति क्त्वा तु नेत्रे सम्मील्य हसतीतिवत् तुल्यकाल एव ज्ञेयः॥ १८–२०॥ तप्यमानमिति द्वयम्। प्राणायाम एवैधः काष्ठं तद्वत् संदीपको यस्य तादृशेन मुनेः अत्रेर्मूर्ध्नो बहिर्निर्गतेनाग्निना त्रिभुवनं तप्यमानं वीक्ष्य सर्वज्ञत्वात् पूर्वस्थाने स्थिता एव ज्ञात्वा त्रयः प्रभवो ब्रह्मविष्णुरुद्राः अप्सरोमुनिगन्धर्वादिभिर्वितायमानं विस्तार्यमाणं यशो येषां ते तदाश्रमपदं ययुः॥ २१–२२॥ तत्प्रादुर्भावेति। तेषां ब्रह्मादीनां प्रादुर्भावः प्राकट्यं तस्य संयोगः सन्निधिस्तेन विद्योतितं प्रकाशितं समावेर्व्युत्थाय दर्शनार्थं प्रवृत्तं मनो यस्य तादृशो मुनिरत्रिः प्रत्यभ्युत्थानार्थमेकपादेनोत्तिष्ठन्नुत्कर्षेण तिष्ठन्नेव तान् विबुधर्षभान् ददृशे ददर्श। तङार्षः॥ २३॥ प्रणम्येति सार्द्धम्। अर्हणं पूजनद्रव्यमञ्जलौ यस्य स मुनिः वृषहंससुपर्णेषु स्वस्ववाहनेषु स्थितान् स्वैः स्वैश्चिह्नैः त्रिशूलकमण्डलुशङ्खादिभिश्चिह्नितान् कृपया योऽवलोकोऽवलोकनं तेन सह हसच्च तद्वचनं चेति तेन यद्वा हसत्प्रसीदद्वदनं यस्मात्तेन कृपावलोकेन उपलम्भितान् प्रसन्नत्वेन ज्ञापितान् विबुधर्षभान् भूमौ दण्डवत्प्रणम्य उपतस्थे अपूजयत्॥ २४॥ तद्रोचिषेति। संहताञ्जलिः रचिताञ्जलिः मुनिरत्रिः तेषां रोचिषा तेजसा प्रतिहते अक्षिणी पुनर्निमील्य ततः चेतस्तत्प्रवणं युञ्जन् तदेकनिष्ठं कुर्वन् सर्वलोकेषु गरीयसः पूज्यान् ब्रह्मविष्णुशिवान् श्लक्ष्णया मधुरया सूक्तया गम्भीरार्थया वाचा अस्तावीत्॥ २५–२६॥ विश्वेति। विश्वस्य उद्भवस्थितिलयेषु विभज्यमानैः व्यवस्थया स्थापितैर्मायागुणैः सत्त्वादिभिर्हेतुभिः अनुयुगं प्रतिकल्पं विशेषेण गृहीताः देहाः यैस्ते शास्त्रप्रसिद्धाः ब्रह्मविष्णुगिरिशास्तान् वो युष्मानहं प्रणतोऽस्मि। तेभ्यः सकाशादेक एव मे मया इहोपहूत आकारितः शरणं तं प्रपद्य इत्येकस्यैव निर्दिष्टत्वात्। स च भवतां मध्ये क इति युष्माभिः कथ्यतामिति शेषः। यद्यपि ब्रह्मादयः प्रथमकल्प एव प्रादुर्भवन्ति तथापि ब्रह्मरुद्रयोः प्रलये सूक्ष्मस्वरूपेण भगवति स्थितयोः पुनः कल्पादौ प्रादुर्भावः विष्णोरपि तत्तदवसरे "परित्राणाय साधूनाम्" इत्यादिवाक्यात् प्रादुर्भावो भवति इत्यनुयुगमित्यविरुद्धम्॥ २७॥

तूष्णीं स्थितान् पुनः स्पष्टीकृत्याह—एक इति। विविधैः प्रधानैरुत्कृष्टैरुपचारैरूपोभिर्वा पूजितः एक एव भगवान् प्रजननाय पुत्रत्वेन तस्य लाभाय मया इह अन्तःकरणे चित्तीकृतः चित्तेनैक्यं नीतः। चित्तस्थीकृत इति वा चिन्तित इत्यर्थः। तत्र तनुभृतां देहधारिणां सर्वेषामपि मनसोऽपि दूरा अगोचरा यूयं त्रयोऽपि कथं नु अत्रागताः? अत इह एकस्य चिन्तने त्रयाणामागमने मे मम महान् विस्मयः संशयोऽस्त्यतः अत्र कारणं ब्रूत तथा मत्संदेहनिवृत्तये प्रसीदत। विबुधप्रधाना इति पाठे संबोधनम् इति पाठे एकदेवविशेषणम्॥ २८॥ इतीति। हे प्रभो विदुर! इत्येवं तस्यात्रेर्वचः श्रुत्वा ते त्रयोऽपि विबुधेषु देवेषु ऋषभाः श्रेष्ठाः

प्रहस्य तमृषिं श्लक्ष्णया मधुरया वाचा प्रत्याहुः स्म ॥ २९ ॥ यथेति। हे ब्रह्मन्! सत्संकल्पस्य सत्यसंकल्पस्य ते। शेषे षष्ठी। यथा संकल्पः कृतस्तेन संकल्पेन तथैव अवश्यभाव्यं न त्वन्यथा। यतः यदेकं जगदीश्वराख्यं तत्त्वं भवान् ध्यायति ते वयं त्रयोऽपि एकमेव तत्त्वं नास्माकं भेदोऽस्तीत्यर्थः ॥ ३० ॥ अथेति। अङ्ग हे मुने अथ तस्माद्वेताः अस्मदंशसंभूताः लोके तत्तद्गुणैर्विश्रुताः प्रसिद्धास्ते आत्मजा भवितारो भविष्यन्ति। ते तव यशो लोके विस्रक्ष्यन्ति विस्तारयिष्यन्ति। अन्तर्भूतणिजर्थस्य सृजधातोः रूपम्। ततस्ते भद्रं भविष्यति ॥ ३१ ॥ एवमिति। एवं समाजिताः पूजितास्ते सुरेश्वराः ताभ्यां दम्पतिभ्यां कामवरमभीष्टार्थं दत्त्वा दम्पत्योरत्रयनसूययोर्मिषतोः पश्यतो ततः स्थानात् स्वस्वधाम प्रतिजग्मुः ॥३२॥ सोम इति। ब्रह्मणोंऽशेन सोमोऽभूत्। विष्णोरंशेन तु योगवित् दत्तः अभूत्। शङ्करस्यांशो दुर्वासा अभूत्। अङ्गिरसः प्रजाः संतानानि निबोध शृणु ॥ ३३ ॥ श्रद्धेति। अङ्गिरसः पत्नी श्रद्धा तु धर्मानुष्ठानकालाभिमानिनीर्देवतारूपाः सिनीवाली दृष्टेन्दुकला अमा कुहूर्नष्टेन्दुकला अमा राका संपूर्णे शशिनि पूर्णिमा तथा चतुर्थी अनुमतिः कलोने शशिनि पूर्णिमा इति चतस्रः कन्यकाः असूत। केचित्तु एताः क्रमेण कृष्णचतुर्दश्यमापूर्णिमाशुक्लचतुर्दश्यभिमानिन्य इत्याहुः ॥ ३४ ॥ तत्पुत्राविति। साक्षाद् भगवान् ब्रह्मिष्ठः ब्रह्मनिष्ठश्च उतथ्यो बृहस्पतिश्चेति तस्याङ्गिरसः पुत्रौ अपरौ ताभ्यः कन्याभ्यो भिन्नौ स्वारोचिषेऽन्तरे ख्यातौ आस्ताम्। तथा च श्रद्धायां चतस्रः कन्या द्वौ पुत्रौ चेति ॥ ३५ ॥ पुलस्त्यो हविर्भुवि स्वपत्न्यामगस्त्यं पुत्रमजनयत् सोऽगस्त्योऽन्यस्मिन् जन्मनि दह्याग्निर्जोठराग्निर्जात इति तस्य स्तुतिः। महातपाः विश्रवाश्च पुलस्त्यस्य द्वितीयः पुत्र इति शेषः ॥ ३६ ॥

तस्येति। तस्य विश्रवसो यक्षाणां पतिः इडविडायां विश्रवसः भार्यायां जातः सुतः कुबेरः अभूत्। स च देवः देवान्तःपाती अत एव रावणादिभिन्नस्वभावः तथाऽन्यस्यां केशिन्यां भार्यायां तस्य रावणः कुम्भकर्णो विभीषणश्चेति त्रयः पुत्रा जाता इति शेषः ॥३७॥ पुलहस्येति। हे महामते विदुर! पुलहस्य भार्या गतिः सती पतिव्रता कर्मश्रेष्ठं वरीयांसं सहिष्णुं चेति त्रीन् सुतान् असूत ॥ ३८ ॥ क्रतोरिति। क्रतोरपि भार्या क्रिया षष्टिसहस्राणि वालखिल्यान् तापसविशेषान् ऋषीन् मन्त्रद्रष्टॄन् अत एव ब्रह्मतेजसा वेदाध्ययनादिजनितप्रभावेण प्रकाशमानान् असूत ॥३९॥ ऊर्जायामिति। हे परन्तप विदुर! वसिष्ठस्य ऊर्जायां तन्नाम्न्यां भार्यायाम् अरुन्धतीत्यस्या एव नामान्तरम्। ते प्रसिद्धाः अमलाः शुद्धमनसः चित्रकेतुः प्रधानो ज्येष्ठः श्रेष्ठो वा येषां ते जज्ञिरे जाताः। ते च तृतीयमन्वन्तरे सप्तर्षयो जाताः ॥ ४० ॥ तानाह—चित्रकेतुरिति। चित्रकेतुः सुरोचिश्चेत्याद्याः द्युमदन्ताः सप्तर्षयः वसुभृद्यान इत्येकः। शक्त्यादयस्तु अपरे चित्रकेत्वादिभ्यः अन्ये ज्ञेयाः। अन्यस्यां भार्यायामिति श्रीस्वामिपादाः ॥ ४१ ॥ अथर्वा तृतीयस्कन्धे ब्रह्मपुत्रेष्वगणितोऽपि ब्रह्मपुत्र एव ज्ञेयः। स एव कर्दमजामातृषु सर्वान्ते निरूपितः। अथात्रिमरीच्यादिभिस्तस्य समकक्षत्वं ज्ञापयितुमत्र तद्वंशमध्य एव निरूपयति—चित्तिरिति। अथर्वणः पत्नी चित्तिनाम्नी तृतीयस्कन्धे चित्तिरेव शान्तिनाम्ना निर्दिष्टा। धृतव्रतम् अश्वशिर इव शिरो यस्य तमश्वशिरसं दध्यञ्चं नाम पुत्रं लेभे। अथ मे मया निरूप्यमाणं भृगोर्वंशं निबोध शृणु ॥४२॥ भृगुरिति। महाभागो भृगुः ख्यात्यां नाम पत्न्यां धातारं च विधातारं चेति पुत्रौ भगवत्परां श्रियं च पुत्रीमिति पुत्रान् अजीजनत्। पुत्रौ च पुत्री च पुत्रान्, "पुमान् स्त्रिया" इत्येकशेषः ॥ ४३ ॥ आयतिमिति। तयोर्धातृविधात्रोः। शेषे षष्ठी। ताभ्यामित्यर्थः। मेरुः सुमेरुपर्वताभिमानी देवः आयतिं नियतिं च द्वे कन्ये यथाक्रममदात्। ताभ्यां धातृविधातृभ्यां तयोरायतिनियत्योर्मृकण्डनामा प्राणनामा च द्वौ पुत्रावभवतां जातावित्यर्थः ॥ ४४ ॥ मार्कण्डेय इति। मृकण्डस्य मार्कण्डेयनामा मुनिः प्राणाच्च वेदशिरो नामा मुनिरभवत्। कविश्चापि भार्गवः भृगोः पुत्रोऽभूत्। यस्य कवेः भगवान् उशनाः सुतोऽभवत् ॥ ४५ ॥ सर्वे इति अर्द्धम्। हे क्षत्तः विदुर! ते सर्वे अत्र नवैते इति त एते इत्यपि पाठौ। मुनयः सर्गैः पुत्रपौत्रादिसंततिभिः त्रीन् लोकान् अभावयन् पूरितवन्त। एष इति। एष कर्दमस्य दौहित्रो दुहितृसम्बन्धी सन्तानो वंशः तव तुभ्यं कथितः। स च शृण्वतः श्रद्धानस्य सद्यः पापहरः परः श्रेष्ठश्चेति ॥ ४६ ॥

प्रसूतिमिति। प्रसूतिनाम्नीं मानवीं मनोस्तृतीयां पुत्रीमजात्मजः ब्रह्मणो देहाज्जातो न तु प्राचेतस इत्यर्थः। दक्षः उपमेये परिणीतवान्। स दक्षस्तस्यां प्रसूत्याममललोचनाः षोडश दुहितॄः कन्याः ससर्ज। अत्रेदं बोध्यम्—धर्मसिद्धितः पूर्वं दक्षस्याभिमान-प्राधान्यादभिमानस्य च मनोमूलकत्वात्तस्य च स्वाधिष्ठातृचन्द्राधीनत्वाच्चन्द्रस्य च प्रजापतिसंवत्सरात्मकस्य "स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोडशी कला" इति बृहदारण्यकश्रुतौ पञ्चदशरात्रिशब्दवाच्यास्तिथि-रूपाः एका स्वरूपभूता ध्रुवा नित्या कला एवं षोडशकलत्वेन प्रसिद्धत्वात्तदभेदविवक्षायामुपचारान्मनसोऽपि षोडशकलत्वमतः षोडश कन्या जाताः ॥ ४७ ॥ त्रयोदशेति। विभुर्दक्षः तासु कन्यासु त्रयोदश धर्मायादात् दत्तवान्। अग्नये एकामदात्। युक्तेभ्यः प्रचेतोवद्वैकमत्येन मिलितेभ्यः पितृभ्यः एकामदात्। भवच्छिदे संसारनिवर्तकाय भवाय श्रीरुद्राय एकामदात् ॥ ४८ ॥ तासां नामान्याह—श्रद्धेति। एताः श्रद्धामैत्रीदयाद्यास्तत्तत्सात्त्विकशक्तीनामधिष्ठात्र्यो देवता ज्ञेयाः। तद्वंशाश्च तदनुरूपा मूर्त्तिः

शुद्धसत्त्वरूपा बुद्धिः एताः धर्मस्य पत्नयः पत्न्यः। ह्रस्वत्वमार्षम् ॥ ४९ ॥ श्रद्धेति। श्रद्धा शुभं पुण्यं स्वदृष्टमसूत। अत्र श्रद्धायुक्तस्यैव श्रेष्ठं कर्मफलं भवतीत्यतः श्रद्धायाः शुभः पुत्र इत्यादि स्वयं कल्प्यम्। मैत्री प्रसादमसूत। एवमग्रेऽप्यसूतेत्यस्यानुषङ्गः। स्मयं धर्मेपूत्साहं स्पष्टमन्यत् ॥ ५० ॥ योगमिति। उन्नतिः पुष्टिवत् दर्पं तपोयोगादिषु सामर्थ्यप्रख्यापनमसूत। प्रश्रयं विनयम्। अन्यौ स्मयदर्पावधर्मांशौ ज्ञेयौ ॥ ५१ ॥ मूर्त्तिरित्यर्द्धम्। सर्वेषां गुणानां ज्ञानैश्वर्यवैराग्यशमदमादीनामुत्पत्तिर्यया शुद्धसत्त्वात्मिकया बुद्ध्या सा तथाभूता सर्वगुणार्णवस्य भगवत उत्पत्तिर्यतः सेति वा मूर्तिर्नरनारायणावृषी असूतेति पूर्वस्यैवानुषङ्गः। साक्षात् क्रियानुक्तिस्तु लौकिकानां प्रसूतिधर्माणां तत्राभावेन तयोरवतारत्वं ज्ञापयितुम्। तत्र नारायणो भगवदवतारः नरस्तु तस्यांशावेशः। "नरो विष्णुसमाविष्टः स्वयं नारायणो हरिः" इति वचनात्। मूर्त्तिश्च शुद्धसत्त्वस्वरूपा भगवत्प्रकाशिका शक्तिः ॥ ५२ ॥ ययोरिति। ययोः नरनारायणयोर्जन्मनि प्रादुर्भावकाले अदः विश्वं सुनिर्वृतमानन्देन व्याप्तं सत् अभ्यनन्दत्। मनांसि ककुभो दिशः वाताः सरितः अद्रयश्च प्रसेदुः। मनोदिग्वातसरिदद्रीणां प्रसादश्च क्रमात् क्रोधादिराहित्यं प्रकाशविशेषः स्पर्शसुखत्वं नैर्मल्यं मण्याद्याविष्कारश्चेति ॥ ५३ ॥ दिवीति। दिवि तुर्याणि वाद्यान्यवाद्यन्त। देवैः कृताः कुसुमवृष्टयश्च धर्मसदने पेतुः। मुनयस्तुष्टाः सन्तः तुष्टुवुः स्तोत्रं चक्रुः। गन्धर्वकिन्नराः जगुः भगवद्यशसो गानं कृतवन्तः ॥ ५४ ॥ नृत्यन्तीति। देव्यः देवानां सम्बन्धिन्यः स्त्रियोऽप्सरसो नृत्यन्ति स्म। एवं भूमौ दिवि च परमं मङ्गलम् आसीत्। ब्रह्माद्याः सर्वे देवाः धर्मसदन आगत्याभिष्टवैः स्तोत्रैर्भगवन्तम् उपतस्थुः स्तुतिं चक्रुः। तङभाव आर्षः ॥ ५५ ॥

य इति। खे आकाशे घटाकाशमठाकाशादिरूपभेदमिव कल्पव्यमार्षम्। गन्धर्वनगरमिव वा यस्मिन् आत्मनि अधिष्ठाने निजया मायया इदं विश्वं रचितं तस्यात्मनः प्रतिचक्षणाय उपदेशादिना प्रकाशनाय एतेन प्रत्यक्षेण ऋषिमूर्त्तिर्यस्मिन् तेन रूपेण प्रकृत्यादित्वात्तृतीयाय आत्मानमद्य धर्मसदने प्रादुश्चकार। यद्वा य ऋषिमूर्तिना रूपेण प्रादुः प्रादुर्भावं चकार। तस्मै परस्मै पुरुषाय नमः ॥ ५६ ॥ सोऽयमिति। सृष्ट्यादिकार्यलिङ्गेनानुमेयं न त्वस्माकमपरोक्षं तत्त्वं महिमा यस्य सोऽयमवतीर्णो भवान् स्थितिव्यतिकरोपशमाय स्थितेर्जगन्मर्यादायास्तत्तन्नियमस्य व्यतिकरः सङ्करः विघ्नैरन्यथाभावस्तस्योपशमाय निवृत्तये सत्त्वेन गुणेन सृष्टान् भगवतोत्पादितान्नोऽस्मान् सुरगणान् अदभ्रा अनल्पा करुणा कृपा यत्र तादृशेन श्रियो निकेतं यत् अमलं शुद्धम् अरविन्दं तत् क्षिपता स्वसौन्दर्येण तापहारकत्वेन च तिरस्कुर्वता अवलोकनेन नेत्रेण दृश्यात् पश्यतु ॥ ५७ ॥ एवमिति। हे तात विदुर ! सुरगणैर्देवसमूहैः ब्रह्मादिभिरेवं पूर्वोक्तप्रकारेणाभिष्टुतौ स्तुतिपूर्वकं प्रार्थितौ तत्प्रार्थनानुसारेण कृपादृष्ट्या तानवलोक्य पुनश्च लब्धोऽवलोको यैस्तैः सुरगणैर्गन्धपुष्पादिभिरर्चितौ पूजितौ गन्धमादनं पर्वतं तपःसिद्धैः सेवितं तपश्चरितुं ययतुः जग्मतुः ॥ ५८ ॥ताविति। तौ हि प्रसिद्धाविमौ नरनारायणौ भगवतो हरेरंशौ अवताररूपौ कृष्णौ यदूनुद्वहति पालयतीति यदूद्वहः कृष्णः देवकीपुत्रः कुरून् उद्वहतीति कुरूद्वहः कृष्णः कुन्तीपुत्रः इति तौ उभौ कृष्णनामानौ भुवः भारव्ययाय इहास्मिन् भारते समागतौ तत्रार्जुनेंऽशमात्रं श्रीकृष्णस्तु स्वयं भगवानेव, "अर्जुने तु नरावेशः कृष्णो नारायणः स्वयम्" इति तन्त्रवचनात्। नरनारायणौ बदरिकाश्रमस्थौ अपि मूर्तिभेदेनात्रावतीर्णौ। यद्वा ताविमौ हरेरंशौ नरनारायणौ कर्तारौ इह द्वापरान्ते यदूद्वहकुरूद्वहौ कृष्णौ कर्मभूतौ आगतौ प्राप्तौ। कृष्णार्जुनयोः स्वांशिनोस्तावंशौ प्रविष्टावित्यर्थः। तथैव भागवतामृतोक्ता कारिका। यथा—"कर्तारौ तौ हरेरंशौ नरनारायणावृषी। द्वापरान्ते कर्मभूतावायातौ कृष्णफाल्गुनौ ॥" इति। तथा चात्र अंशाविति प्रथमान्तं कृष्णफाल्गुनाविति द्वितीयान्तम् ॥ ५९ ॥ स्वाहेति। अभिमानिनः अग्न्यभिमानिदेवतारूपात् अग्नेः सकाशात् स्वाहा अग्निस्त्रोहुतभोजनमिति त्रयाणां विशेषणम्। पावकं पवमानं शुचिं चेति त्रीन् आत्मजान् अजीजनत्। "निर्मथ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः। यश्चासौ तपते सूर्यः शुचिरग्निस्त्वसौ स्मृतः ॥" इति कूर्मोक्तस्तद्विशेषो ज्ञेयः। यद्वा अभिमानिनः सर्वाग्नीनामभिमानिनो देवानित्यात्मजविशेषणम् ॥ ६० ॥ तेभ्य इति। तेभ्यः पावकपवमानशुचिनामभ्यः पञ्चचत्वारिंशदग्नयः समभवन् जाताः। तत्र चत्वारिंशद्विकृतिसम्बन्धिनः पञ्च प्रकृतिसम्बन्धिनः त एव स्वपितृभिः पावकपवमानशुचिभिस्त्रिभिः स्वपितामहेन मूलपुरुषरूपेणैकेन चाग्निना सहैकोनपञ्चाशज्जाता इत्यर्थः ॥ ६१ ॥ वैतानिक इति। वैतानिके वेदप्रतिपादिते यज्ञरूपे कर्मणि येषामग्नीनां नामभिः ब्रह्मवादिभिः कर्मकाण्डनिष्णातैराग्नेय्यः अग्निदेवताका इष्टयो निरूप्यन्ते क्रियन्ते निःपूर्वस्य रूपधातोरिदं ह्रस्वपाठे तु निःपूर्वस्य वपतेरुपसर्गवलाल्लब्धदानार्थस्येति। ते एवैतेऽग्नयो न लौकिकाः, अतो न बहूनां वैयर्थ्यम् इति भावः ॥ ६२ ॥

दक्षस्य स्वधाख्यकन्याया वंशमाह—अग्निष्वात्ता इति। अग्नौ पक्वं पुरोडाशादि ये स्वदन्ते ते अग्निष्वात्ताः बर्हिषदो दैत्यादीनां पितरः सौम्याः सोमपास्तेऽग्निष्टोमादिकर्मदेवतारूपाः पितरः पुरोडाशादिभुजो दर्शपौर्णमासादिकर्मदेवताः आज्यपा आघाराज्यभागदेवताः। एतेषु च येषामग्नौ करणमस्ति ते साग्नयः। एतद्रहितास्तेऽनग्नयः। तेषामेवं विभक्तानां दाक्षायणी दक्षकन्या स्वधानाम्नी पत्नी अभवत् ॥ ६३ ॥ तेभ्य इति। सा हि स्वधा सर्वपितृशक्तिरूपा तेभ्यः पितृभ्यो वयुनां धारणीमिति नाम्न्यौ द्वे कन्ये गर्भे दधार। वयुनामित्यत्र मेनामिति वा पाठः। उभे ते कन्ये ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे चा[illegible]। अतयोर्जीवन्मुक्तत्वात्

सन्ततिर्न जातेति भावः ॥ ६४ ॥ भवस्येति । सती हि दक्षस्याभिमानांशाज्जाताऽतो ब्रह्मणाऽहङ्काराधिष्ठात्रे भवाय दापिता सा च तस्य पत्नी तं देवं पुत्रदाने समर्थमप्यनुव्रता तत्सेवातत्परापि गुणशीलाभ्यामात्मनः सदृशं योग्यं पुत्रं न लेभे न प्राप्तवती। गुणशीलतः आत्मनः सदृशं देवमनुव्रतापि सती पुत्रं न लेभे इति वाऽन्वयः ॥ ६५ ॥ तत्र हेतुः—पितरीति । स्वे पितरि दक्षे भवाय अनगासे निरपराधाय "क्रुधद्रुह०" इति सम्प्रदाने चतुर्थी । रुषा हेतुना अप्रतिरूपे प्रतिकूलाचारपरे सति अप्रौढव सती आत्मना स्वयमेव न त्वन्येन प्रेरिता योगमास्थिता भवं भावयन्तो अग्निधारणामाश्रित्य आत्मानं देहमजहात् त्यक्तवती अतः पुत्रं न लेभे ॥ ६६ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां प्रथमोऽध्यायः ॥ १ ॥

—:❀:—

# अथ द्वितीयोऽध्यायः

विदुर उवाच

**भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः । विद्वेषमकरोत् कस्मादनादृत्यात्मजां सतीम् ॥ १ ॥**

द्वितीये विश्वसृग्यज्ञे विद्वेषो रुद्रदक्षयोः । मिथस्ततश्च शापोऽत्र श्लोकाः सार्द्धाः शराग्नयः ( ३५।। ) ॥

चत्वार्युवाचेति साङ्घ्रिः षट्त्रिंशच्चाप्यनुष्टुभः ( ३६। ) ॥ २ ॥

भव इति । दुहितृवत्सलोऽपि दक्षः आत्मजां सतीम् अनादृत्य शीलवतां श्रेष्ठेऽपि भवे श्रीरुद्रे कस्माद्विद्वेषमकरोत्। भवस्य सौशील्यात् दक्षस्य तत्प्रीत्यभावेऽपि दुहितृवात्सल्याद् भवद्वेषो न घटत इति भावः ॥ १ ॥ क इति । कः प्रजापतिर्दक्षः चराचराणां गुरुं पूज्यं निर्वैरं शान्तं भावे क्तः । शान्तिरेव विग्रहो यस्य शान्तिरूपम् आत्मारामं जगतो महत् दैवतं तं श्रीशिवं कथं द्वेष्टि स्म । यद्वा चराचरगुरुं जगतो दैवतं च को नाम द्वेष्टि निर्वैरं च कथं द्वेष्टीत्यन्वयः। गुरुर्हि वैरवानप्यशान्तदेहोऽपि बहिर्दर्श्यपि जगदनादृतोऽपि न द्वेषार्हः किमुत निर्वैरादिमान् ॥ २ ॥ एतदिति । हे ब्रह्मन्! यतो हेतोः जामातुः शिवस्य श्वशुरस्य दक्षस्य च विद्वेषः अभूत् । यतश्च सती दुस्त्यजानपि प्राणान् तत्यजे तत्याज । तङार्षः । एतत् मे मह्यमाख्याहि ॥ ३ ॥ पुरेति। पुरा प्रथमकल्पे स्वायंभुवमन्वन्तरे विश्वसृजां मरीच्यादीनां सत्रे यत्र ऋत्विगादयो गुणप्रधानभावं त्यक्त्वाऽहमहमिकया कर्म कुर्वन्ति सर्वे चाविशेषेण फलभागिनो भवन्ति तत्सत्रसंज्ञको यागविशेषस्तत्र सानुगाः शिष्यादियुक्ताः परमर्षयो वसिष्ठ-नारदादयः प्रसिद्धा ऋषयस्तथाऽमरगणा इन्द्रादयः साध्यादयश्च सर्वेऽपि मुनयोऽग्नयश्च पूर्वोक्ताः समेताः मिलिता आसन्निति शेषः ॥ ४ ॥ तत्रेति द्वयम् । रोचिषा प्रकाशेन तन्महत्सदः तेषां महतीं सभां वितिमिरमन्धकाररहितं कुर्वन्तमर्कमिव भ्राजमानं प्रकाशमानं तत्र प्रविष्टं दक्षमिति शेषः । दृष्ट्वा विरिञ्चिं ब्रह्माणं शर्वं शिवं च ऋते तस्य दक्षस्य भासाऽऽक्षिप्तमभिभूतं तेजो येषां ते सहाग्नयः अग्निभिः सहिताः सदस्या ऋषयश्च स्वधिष्ण्येभ्य उदतिष्ठन् उत्थिताः ॥ ५-६ ॥ सदस इति । भगवान् दक्षः सदसस्पतिभिः सभ्यमुख्यैः साधु सम्यक् सत्कृतः सम्मानितो लोकगुरुं सर्वप्राणिश्रेष्ठं पूज्यमजं ब्रह्माणं नत्वा तस्याज्ञया निषसाद उपविवेश ॥ ७ ॥

प्रागिति । स्वोपवेशनात् प्राक् पूर्वमेव निषण्णमासीनं मृडं शिवं दृष्ट्वा तेन शिवेन अनादृतः अभ्युत्थानाभावेन असत्कृतः सः दक्षः न अमृष्यत् शिवकृतावमानं नासहत । ततश्च वामं वक्रं यथा स्यात्तथा अभिवीक्ष्य चक्षुर्भ्यां शिवं दहन्निव सदस्यान्

प्रत्युवाच ॥ ८ ॥ श्रूयतामिति । हे देवादिभिः सह वर्तमाना ब्रह्मर्षयः ! साधूनां वृत्तमाचारं ब्रुवतः अज्ञानात् भ्रमान्न ब्रुवतः मत्सरात् परोत्कर्षासहनाच्च न ब्रुवतः मे मम वचनं भवद्भिः श्रूयताम् ॥ ९ ॥ अयमिति । निरपत्रपः निर्लज्जः अयं शिवस्तु लोकपालानां यशोघ्नः तुल्यजातीनां सतामेकस्याप्रतिष्ठायां सर्वेषामेव दुर्यशो लोकैरुद्घुष्यतेऽतः लोकपालेषु सदाचारो नष्ट इति सामान्यप्रवादहेतुत्वात्तेषां यशोनाशको जातः । यतो येन स्तब्धेन सदाचाररहितेन ध्वस्तेनेति पाठे भ्रष्टेन सद्भिः आचरितः पन्था मार्गो दूषितः । दक्षेण निन्दायां प्रवर्तितापि भारती श्रीरुद्रं स्तौत्येव । तथा हि—अमितयशःशालित्वात् लोकपालानां यशस्तिरस्कर्त्ता निरपत्रपः सर्वापेक्षया महत्त्वात् सर्वेभ्यो निःशङ्क । यद्वा निर्गता अपत्रा त्राणं भावेऽङ् येषां ते निरपत्रास्तान् अशरणान् पातीति निरपत्रपः अत एव "वृक्ष इव दिवि तिष्ठति" इति श्रुतेः । स्तब्धेन स्थितरूपेण येन सद्भिराचरितोऽपि अभ्युत्थानादिः पन्थाः दूषितः त्यक्तः सर्वेषामेतदपेक्षया कनिष्ठत्वात् ॥ १० ॥ एष इति । यद्यस्मात् साधुवत् विप्राग्निमुखतः विप्राग्निसम्मुखे सावित्र्या इव पवित्राया मे दुहितुः पाणिमग्रहीत् । अतः एष मे शिष्यतां प्राप्तः । स्तुतौ तु यद्यप्येष मे दुहितुः पाणिमग्रहीत् तथापि सर्वेषामीश्वर एष किं मे शिष्यतां प्राप्तः अपि तु नेत्यर्थः । साधुवत् साधोरिव वस्तुतस्त्वसाधोर्मम । यद्वा एष मे अशिष्यतामशिष्टतां गुणमपि सर्वज्ञत्वात् स्वयं प्राप्तः ज्ञातवान् तथापि सावित्र्या इव सद्गुणशालिन्यास्तस्याः पाणिं गुणज्ञतयैवाग्रहीत् ॥ ११ ॥ गृहीत्वेति । मर्कटस्य लोचने इव लोचने यस्य तादृगप्ययं मृगशावस्याक्षिणी इवाक्षिणी यस्यास्तस्या मत्पुत्र्याः पाणिं गृहीत्वा प्रत्युत्थानाभिवादार्हे मयि वाचापि उचितं प्रणामादि न अकृत नाकरोत् । स्तुतौ तु मर्कटेष्विव विषयलम्पटेष्वपि मादृशेषु लाचनं कृपादृष्टिर्यस्य सः अयोग्यस्यापि मम कन्यायाः कृपया पाणिं गृहीत्वा ममाभिमानातिशयं दृष्ट्वा कृपया तन्निवृत्तये प्रत्युत्थानाभिवादार्हे मयि वाचाऽप्युचितं न अकृत ॥ १२ ॥

लुप्तेति । लुप्ताः क्रिया यस्य तस्मै अशुचये मानिने भिन्नसेतवे अमर्यादाय शिवाय शूद्राय उशतीं कमनीयां वेदलक्षणां गिरमिव बालां पुत्रीम् अनिच्छन्नपि अदां दत्तवानस्मि । स्तुतौ तु ब्रह्मत्वाल्लुप्तक्रियाय आ सर्वतः शुचये मानिने भिन्नसेतवे चास्मै परमेश्वराय स्वस्यायोग्यत्वमवेद्यानिच्छन्नपि यथा ब्रह्मवेषधराः शूद्रा एव ब्राह्मणायापि लोभादिना वेदवाचं ददति अध्यापयन्ति तथा बालाम् अदाम् । शूद्रायेवेत्यत्र शूद्रा एवेति च्छेदः । "भोभगो" इत्यनेन कृतो यकारो लोपस्य वैकल्पिकत्वान्न लुप्तः ॥ १३ ॥ प्रेतेति । घोरेषु प्रेतानामावासेषु स्थानेषु प्रेतादिभिर्वृतः व्युप्तकेशः प्रकीर्णकेशः नग्नो दिगम्बरः उन्मत्तवद्धसन् रुदन्नटति । स्तुतावपि स्वातन्त्र्यबोधनम् । उन्मत्तवन्न तु उन्मत्तः ॥ १४ ॥ चितेति सार्द्धम् । चिताभस्मना कृतं स्नानं येन स तथा प्रेतानां मुण्डकल्पिताः स्रजो मालाः यस्य स प्रेतस्रक् । नृणामस्थीनि भूषणानि यस्य स नृस्थिभूषणः । प्रेतास्थिग्रन्थिभूषण इति पाठान्तरम् । शिव इत्यपदेशो नाममात्रं यस्य सः हीति वास्तवे । वस्तुतस्तु अशिवः अमङ्गलरूप एव यतः स्वयं मत्तो निषिद्धाचारः तथाभूता मत्ता एव जनाः प्रिया यस्य स तथाभूतश्चेति तमोमात्रात्मकः केवलं तमोरूपः आत्मा स्वभावो येषां ते तथा तेषां प्रथमभूतानां पतिः स्वामी । स्तुतौ तु प्राप्तसिद्धिर्वैष्णवानां चिताभस्मेत्यादिपुराणान्तरे प्रसिद्धमिति चक्रवर्त्ती । शिवो मङ्गलरूपोपदेशो नामव्याहारो यस्य अतः नास्त्यन्यः शिवो यस्मात् अमत्तः अमत्तजनप्रियश्च तामसानामपि प्रमथादीनां पतिः कृपया पालकः ॥ १५ ॥ तस्मा इति । बत खेदे । ममेच्छाभावेऽपि परमेष्ठिना ब्रह्मणा चोदिते प्रेरणे कृते सति मया उन्मादानां भूतविशेषाणां नाथाय नष्टशौचाय दुर्हृदे दुष्टचित्ताय तस्मै रुद्राय साध्वी सती दत्ता । स्तुतौ तु बत हर्षे । परमेष्ठिना चोदिते सति उन्मादान्नाथते उपतापयति तस्मै नष्टानामपि शौचं यस्मात् दुष्टेष्वपि हृत्सदयं मनो यस्य तस्मै मया साध्वी दत्ता ॥ १६ ॥ विनिन्द्येति । क्रुद्धो दक्षः अप्रतीपमप्रतिकूलं यथा भवत्येवं स्थितमपि गिरिशं शिवमेवं पूर्वोक्तप्रकारेण दक्षो विनिन्द्य अथ तदनन्तरमप उपस्पृश्य हस्तपादादिक्षालनाचमनादि कृत्वा शप्तुं शापं दातुं प्रचक्रमे प्रारम्भं कृतवान् ॥ १७ ॥ अयमिति । देवानां यजने यज्ञे देवगणेष्वधमः अयं भवः इन्द्रोपेन्द्रादिभिः देवैः सह स्वहविर्भागं न लभताम् । स्तुतौ तु देवगणा अधमा यस्मात् सः अयं भवः देवैः सह भागं न लभतां किन्तु अग्रभोजित्वात् पूर्वमेव लभताम् । यद्वा सर्वस्वामित्वात् तेषु भुक्तवत्सु सत्सु पश्चाल्लभताम् । अतः पुनर्यज्ञसन्धाने तथैव भविष्यतीति ज्ञेयम् ॥ १८ ॥ निषिद्ध्यमान इति । हे कौरव्य विदुर ! सदस्यमुख्यैर्ब्रह्मादिभिः शापदानं निन्दनं च मा कुर्विति निषिध्यमानोऽपि स दक्षो गिरित्राय शापं विसृज्य दत्त्वा सभ्यवचनानादरेण द्वेषोत्पादनात् विवृद्धमन्युः सन् तस्मात् स्थानाद्विनिष्क्रम्य निःसृत्य निजं निकेतनं स्वगृहं प्रति जगाम ॥ १९ ॥ विज्ञायेति । एवं श्रुत्वापि शिवे तूष्णीं स्थिते गिरिशस्यानुगानां पार्षदानामग्रणीर्मुख्यः अत एव रोषकषायेण रोषदोषेण दूषितः देहप्रकम्परक्तनेत्रादिविकारं प्राप्त नन्दीश्वरः दक्षाय तथा ये च तत्र द्विजाः तदवाच्यतां तस्य शिवस्यावाच्यतां निन्दामन्वमोदंस्तेभ्यश्च । तङभाव आर्षः । दारुणं शापं विससर्ज दत्तवान् ॥ २० ॥

य इति । अज्ञः पृथग्दृष्टिर्भेददर्शी यो दक्षः एतन्मर्त्यं मरणधर्मकं स्वशरीरमुद्दिश्य उत्कृष्टं मत्वा अप्रतिद्रुहि प्रतिद्रोहमकुर्वति भगवति शिवे द्रुह्यति अतः तत्त्वतः ज्ञानात् विमुखः प्रच्युतो भवेत् ॥ २१ ॥ गृहेष्विति । कूटाः कपटप्रधानाः धर्मा येषु

तेषु गृहेषु। अनिजभाव आर्षः। गृहेषु कूटा ये धर्माः तेष्विति वा ग्राम्यसुखेच्छया तुच्छविषयसुखलाभाय सक्तः वेदवादैः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्याद्यर्थवादैः विपन्ना तत्त्वविचारासमर्था धीर्यस्य तादृक् सन् कर्मतन्त्रं कर्मकाण्डं वितनुतां वितनुतात्। वितनुते इति पाठः॥ २२॥ बुद्ध्येति। परो देहादिरमेवात्मत्वेनाभितो ध्यातुं शीलं यस्यास्तया बुद्ध्या विस्मृता आत्मनः स्वस्य गति तत्त्वज्ञानं येन अत एव पशुः पशुतुल्यः स दक्षः अतितरां स्त्रीकामः अस्तु तथा अचिरादेव बस्तमुखः छागमुखः अस्तु॥ २३॥ विद्येति। असौ कर्ममय्यां कर्मात्मिकायामविद्यायां विद्येति बुद्धिर्यस्य अतोऽसौ जडः शापयोग्यश्च अज इति पाठे छागतुल्यः। द्विजान् शपति शर्वं शिवमवमन्यते तं शर्वावमानिनममुं दक्षं ये अनु अनुवर्त्तन्ते ते सर्वे इह संसारे संसरन्तु जन्ममरणादिक्लेशमनुभवन्तु॥ २४॥ गिर इति। श्रुतायाः वेदरूपायाः पुष्पिण्याः पुष्पाणीवार्थवादा मनःक्षोभकत्वात् सन्ति यस्याः अर्थवादबहुलाया इत्यर्थः। गिरः वाचः मधुगन्धतुल्येन प्ररोचनेन भूरिणा मन्ना मनःक्षोभकेनोन्मथित आत्मा मनो येषां ते हरद्विषः संमुह्यन्तु कर्मस्वासक्ता भवन्तु॥ २५॥ सर्वेति। जिह्वाधीनतया सर्वं भक्षयन्ति ते सर्वभक्षाः तथा वित्तेषु देहेन्द्रियेषु च अहंतया ममतया च आरमन्ति ते वित्तदेहेन्द्रियारामाः तथा वृत्त्यै जीविकार्थमेव धृतानि विद्यातपोव्रतानि यैस्ते याचका याचनस्वभावाः हरद्विषो द्विजा एवंभूताः सन्त इह संसारे विचरन्तु॥ २६॥ तस्येति। तस्य नन्दिनः एवं द्विजकुलाय शापं ददतः। वदत इति वा पाठः। शापं श्रुत्वा भृगुः ब्रह्मदण्डरूपं दुरत्ययं शापं प्रत्यसृजत् प्रतिकूलतया दत्तवान्॥ २७॥ भवेति। ये भवव्रतधरा ये च तान् व्रतधारिणः समनुव्रताः अनुसरन्ति ते सच्छास्त्रस्य वेदस्य परिपन्थिनो विरोधिनो भूत्वा पाखण्डिनो भवन्तु॥ २८॥ नष्टेति। नष्टं शौचं शुद्धत्वं येषां ते मूढा विवेकाकुशला धीर्येषां ते जटाभस्मास्थिधारिणः चेति। यत् यस्मात् सन्तः शिवदीक्षायां विशन्तु। यत्र यस्यां शिवदीक्षायां सुरा गोडी पैष्टी माध्वी आसवस्तालादिसंभवमद्यविशेषस्तत्समाहारः सुरासवं तदेव दैवत्वेनादरणीयम्॥ २९॥

ब्रह्म यूयं पुंसां पुरुषार्थेच्छूनां सेतुं मर्यादारूपं विधारणं धारकं च ब्रह्म वेदं तदर्थज्ञान् ब्राह्मणांश्च परिनिन्दथ अतः पाखण्डं वेदविरुद्धमार्गमेवाश्रिताः॥ ३०॥ एष इति। एष एव लोकानां वर्णाश्रमाचारनियामकः शिवः तत्तत्फलजनकत्वात् शुद्धः सनातनः पन्थाः मार्गः एतद्विरुद्धमार्गोऽकल्याणकर इत्याशयः। यं वेदमार्गं पूर्वं ब्रह्मादयोऽनुसंतस्थुः तदुक्तं धर्ममनुष्ठितवन्तः। तङभाव आर्षः। यस्य प्रमाणं मूलं जनार्दनः॥ ३१॥ तदिति। तत्पूर्वोक्तं परमं तत्त्वं प्रमाणभूतं शुद्धं सतां सनातनं वर्त्म मार्गं तत ब्रह्म वेदं निगर्ह्य विनिन्द्य पाखण्डं यात गच्छत। यत्र मार्गे वो युष्माकं दैवं भूतराट् भूतानां तामसानां राजा महाभैरवोऽस्ति। स्तुतो तु भूतेषु प्राणिषु राजत इति॥ ३२॥ तस्येति। तस्य भृगोरेवं पूर्वोक्तप्रकारेण शापं ददत एव स प्रसिद्धो भगवान् भवः अन्योन्यशापादुभयोर्नाश इति किञ्चिद्विमना इव सानुगः ततः स्थानान्निश्चक्राम। स्वगमनानन्तरं स्वीयः कश्चित् सत्रे विघ्नं कुर्यादित्यनुगान् गृहीत्वा जगामेति विमनस्त्वं च पाखण्डोत्पत्तिवशात् स्वस्य क्षत्यभावाद् किञ्चिदित्युक्तम्। इवेत्यनेन किञ्चित्तदभिप्रेतमपि जातमिति सूचितम्। पाखण्डशास्त्रस्य तत्प्रणीतत्वेन तत्प्रवृत्तिरपि तस्याभिप्रेता। तदुक्तं पाद्मोत्तरखण्डीयगुणत्रयविवरणाध्याये पार्वतीं प्रति शङ्करेणैव—"शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्। येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि॥ प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम्। मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम्॥" इति श्रीरुद्रस्य तादृक्छास्त्रप्रणयनं च सर्वमार्गभ्रष्टानां पतितानां सन्मार्गं नेतुं कथञ्चिदप्यशक्यानां प्रायश्चित्तानर्हाणां तत्राधिकारार्थं शापोऽपि वेदमार्गं परित्यज्य वामादिमार्गेण शिवमर्चतामेव। वस्तुतस्तु वामादिमार्गाणां सर्वैः प्रामाणिकैरप्रामाणिकत्वेन व्यवस्थापनात् तान् प्रति न शास्त्रव्यापारः, अपि तु सामान्यतः कलिप्रभावात् स्वमतिकल्पितनानाविधपाखण्डमार्गैर्मद्यादिप्रधानैरुपचारैराराधनकर्तॄन् प्रत्येव। तेष्वेव च वामादिमार्गो अपीति वेदाद्युक्तमार्गेण शिवमर्चतां तु न कोऽपि दोषो नापि शापप्रसक्तिः॥ ३३। तेऽपीति द्वयम्। हे महेष्वास विदुर! ते विश्वसृजो मरीच्यादयः यत्र यस्मिन् सत्रे ऋषभः सर्वदेवाधिदेवो हरिः भक्तानां दुःखहर्ता इज्यः पूज्यः तत्सहस्रपरिवत्सरान् सहस्रपरिवत्सरसाध्यं स्वसत्रं संविधाय समाप्य यत्र प्रयागे यमुनयाऽन्विता गङ्गाऽस्ति तत्र अवभृथं स्नानमाप्लुत्य कर्मसाङ्गतासिद्ध्यै दानं कृत्वा विरजेनात्मना निर्मलान्तःकरणेन युक्ताः सर्वे ततः स्थानात् स्वं स्वं धाम गृहं ययुः॥ ३४-३५॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां द्वितीयोऽध्यायः॥ २॥

—:❀:—

# अथ तृतीयोऽध्यायः

**मैत्रेय उवाच**

**सदा विद्विषतोरेवं कालो वै ध्रियमाणयोः । जामातुः श्वशुरस्यापि सुमहान् तिचक्रमे ॥ १ ॥**

तृतीये तु सतीं दक्षयज्ञं जिगमिषुं शिवः । अवारयन्नीतिवाक्यैस्तत्र श्लोका मरुद्दशः ( २५ ) ॥

अनुष्टुभश्चतुस्त्रिंशदुवाचेति ( ३४ ) चतुष्टयम् ॥ ३ ॥

सदेति । एवं सदा विद्विषतोरेव ध्रियमाणयोः धृङ् अवस्थान इति धातोरवतिष्ठमानयोर्जामातुः श्वशुरस्यापि भवदक्षयोः सुमहान् कालोऽतिचक्रमे व्यतीतः केवलं दक्षस्यैव द्वेषकर्तृत्वेऽपि छत्रिन्यायेनोभयोर्द्वेषकर्तृत्वमुक्तम् ॥ १ ॥ यदेति । यदा तु दक्षः सर्वेषां प्रजापतीनां मरीच्यादीनामाधिपत्ये मुख्यत्वेन नियामकत्वे ब्रह्मणा परमेष्ठिनाऽभिषिक्तस्तदा तस्य भूयो गर्वोऽभवत् ॥ २ ॥ इष्ट्वेति । सोऽतिगर्वितो दक्षो ब्रह्मिष्ठान् भवं तत्पक्षीयांश्चाभिभूय भागदानामन्त्रणाद्यकरणेन तिरस्कृत्य वाजपेयसंज्ञकेन यागेनेष्ट्वा क्रतुषु उत्तमं बृहस्पतिसवं नामकं यागविशेषं कर्तुं समारेभे इति ब्राह्मणस्य बृहस्पतिसवो मुख्यस्तत्पूर्वाङ्गत्वेन वाजपेयानुष्ठानं "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति श्रुतेः । यद्यपि रुद्ररहितो यागो नास्त्येव तथापि द्वेषगर्वाभ्यां दक्षो विधिमप्यतिचकाम ॥ ३ ॥ तस्मिन्निति । तस्मिन् बृहस्पतिसवे सर्वे ब्रह्मर्षयो देवर्षयः पितरो देवताश्च सभर्तृकाः तेषां पत्न्यश्च कृतस्वस्त्ययनाः आसन् । सभर्तृका इत्यनेन दक्षिणाभिः प्रथमपूजितानामपि पत्नीपूजनसमये पुनः पूजनं द्योतितम् ॥ ४ ॥ तदुपश्रुत्येति त्रयम् । नभसि खेचराणां गन्धर्वादीनां प्रजल्पतां सतां तत्पितुर्यज्ञमहोत्सवं दाक्षायणी दक्षकन्या देवी देवस्य शिवस्य पत्नी सती उपश्रुत्य स्वनिलयस्याभ्याशे समीपे सर्वतो दिग्भ्यः व्रजतीः । नुमभाव आर्षः । विमानानि यानानि यासां ताः सुप्रेष्ठाः प्रेष्ठैर्भर्तृभिः सहिताः निष्काणि पदकानि कण्ठे यासां ताः निष्ककण्ठीः सुवाससः लोलाक्षीश्चपलनेत्राः मृष्टानि उज्ज्वलानि कुण्डलानि यासां ताः उपदेवाः यक्षगन्धर्वादयस्तेषां वराः श्रेष्ठाः सुन्दर्यः स्त्रियो दृष्ट्वा औत्सुक्यात् भूतपतिं देवमीश्वरं पतिं श्रीशिवमभ्यभाषत ॥५–७॥ प्रजापतेरिति । ते तव श्वशुरस्य प्रजापतेर्दक्षस्य साम्प्रतमिदानीं यज्ञमहोत्सवो निर्यापितः प्रवर्त्तितः । हे वाम प्रकृत्या चतुर ! ते तव यद्यर्थिता इच्छास्ति यद्वा यदि अर्थिता मम प्रार्थना स्वीकृता तदा वयं च सर्वे तत्राभिसराम गच्छाम । लोट् । हि यस्मात् अमी विबुधा व्रजन्ति । अद्यापि यागा न निर्वृत्त इति भावः ॥ ८ ॥ तस्मिन्निति । तस्मिन् यज्ञमहोत्सवे ध्रुवं निश्चितं सुहृदां पित्रादीनां दिदृक्षवो मम भगिन्यः स्वकैर्भर्तृभिः सह ध्रुवं गमिष्यन्ति । अहमपि तस्मिन् यज्ञे पितृभ्यामुपनीतं दत्तं परिबर्हमलङ्कारादिं पारितोषिकं भवता सहार्हितुं स्वीकर्तुं कामये । अर्हितमिति पाठे सत्कृतं परिबर्हम् ॥ ९ ॥ तत्रेति । हे मृड श्रीशिव ! तत्र यज्ञे चिरं बहुकालपर्यन्तमुत्कण्ठमुत्सुकं मनो यस्याः साहं ननु भर्तृसंमिता पतिसहिताः मे स्वसॄः भगिनीः द्रक्ष्ये तथा मातृष्वसॄः द्रक्ष्ये । क्लिन्ना स्नेहेन आर्द्रा धोर्यस्याः तां मातरं च द्रक्ष्ये । तथा महर्षिभिः भृग्वादिभिरुन्नीयमानं प्रवर्त्यमानमध्वरेषु यागेषु ध्वजवदुत्कृष्टं यागं यद्वा उत्क्षिप्यमाणं यज्ञे केतुं यूपं वा द्रक्ष्ये । तङार्षः ॥ १० ॥

त्वयीति । हे अज ! हे भव ! एतद्गुणत्रयात्मकं विश्वमाश्चर्यं तर्कागोचरं त्वयि आत्मनस्तव मायया विनिर्मितं रचितं भाति । अत तव नाश्चर्यबुद्धिः अथाप्यहं योषित् तेन चातत्त्ववित् तत्त्वं यथार्थस्वरूपं न जानामि । अत एव दीना कृपणा भवताऽनुकम्प्या अतो मे भवक्षितिं जन्मभूमिं पितृगेहोपलक्षितं तत्रत्यं सर्वं दिदृक्षे द्रष्टुमिच्छामि ॥ ११ ॥ पश्येति । हे अभव जन्मादिरहित ! सुहृद्वियोगदुःखानभिज्ञेत्यर्थः । हे शितिकण्ठ ! अन्येषां संबन्धरहितानामपि योषितः कान्तसखाः भर्तृभिः सहिताः स्वलंकृताः वरूथशो यूथशः प्रयान्तीः दक्षयज्ञं गच्छन्तीस्त्वं पश्य । यासां योषितां कलहंसतुल्यपाण्डुभिः श्वेतैर्व्रजद्भिर्विमानैर्नभो मण्डितम् ॥ १२ ॥ कथमिति । अन्ययोषितामपि यत्रोत्कण्ठा तत्र हे सुरवर्य ! सुताया मम देहः पितृगेहकौतुकं यज्ञमहोत्सवं निशम्य श्रुत्वा कथं नेङ्गते कथं तद्द्रष्टुं न प्रचलति । आह्वानाभावेऽपि गमने दोषो नेत्याह—सुहृत्संबन्धि सौहृदं मित्रगृहं तथा भर्तुः पत्युः राज्ञश्च गुरोश्च देहकृतः पितुश्च केतनं गृहमनाहुता अप्यभियन्ति गच्छन्ति । अनाहुता इति ह्रस्वत्वमार्षम् ॥ १३ ॥ तदिति । तत्तस्मात् हे अमर्त्य ! हे ईश ! मे प्रसीद । यतो भवान् कारुणिकः अतः मम वाञ्छितं दक्षयज्ञमहोत्सवे गमनं कर्तुमर्हत्येव । यथा अदभ्र-

चक्षुषा अनल्पज्ञानेन सर्वज्ञेनापि त्वया कृपया आत्मनः स्वदेहस्यार्द्धऽहं निरूपिता स्थापिता। अर्द्धनारीश्वरत्वेन विख्यातत्वात्। तथा याचितः सन् मामनुगृहाण ॥ १४ ॥ एवमिति। सुहृदां श्रेष्ठमनसां प्रियः गिरित्रः शिवः एवं प्रियया सत्या अभिभाषितः प्रार्थितः ततश्च कः प्रजापतिर्दक्षः यान् कुवागिषून् कुत्सिता वाच एव इषवो वाणा अत एव मर्म हृदयं भिन्दन्तीति मर्मभिदस्तान् विश्वसृजां समक्षतः संमुखे सभामध्ये आह स्म तान् सतीप्रार्थनया संस्मारितः सन् तस्याः स्त्रीस्वभावादविवेकं दृष्ट्वा प्रहसन् उपहासं कुर्वन् अभ्यधत्त प्रत्युत्तरं दत्तवान्। यद्यपि आत्मारामस्य शिवस्य दक्षकुवाग्भिर्न मर्मभेदः, तथापि स्वोपाधिभूतगुणस्वभावप्रदर्शनार्थं क्वचिच्छोकमोहादिप्रकटनम्। यथा हरेर्दैत्यहननादिके क्रोधः ॥ १५ ॥ त्वयेति। हे शोभने! अनाहुता अपि बन्धुषु मित्रादिगृहेषु जना अभियन्ति गच्छन्तीति यत् त्वयोदितमुक्तं तच्छोभनं युक्तमेव। परन्तु ते सुहृदादयो यदि बलीयसा अप्रतिकार्येण अनात्म्यमदेन देहाद्यभिमाननिमित्तदर्पेण तज्जातेन मन्युना क्रोधेन च अनुत्पादितदोषदृष्टयः नास्ति उत्पादिते आरोपिते दोषे दृष्टिर्येषां ते तथाभूता भवन्ति तदा तद्गृहगमने न कश्चिद्दोषः। अन्यथा तु तद्गृहगमने कल्याणं न भवेत् ॥ १६ ॥

विद्येति। विद्या तपो वित्तं वपुः शरीरसौन्दर्यादि वयः यौवनं कुलं ब्राह्मणादिकुले जन्म तैः षड्भिः सतां विवेकहेतुत्वेन गुणभूतैरपि असतां ज्ञानादिनाशकत्वेन इतरैर्दोषभूतैरेषां स्मृतौ हृतायां कर्तव्याकर्तव्यानुसन्धाने नष्टे सति तैरेव प्रत्युत भृतमानदुर्दृशः भृतः पुष्टो यो मानोऽहं विद्यावांस्तापसो धनाढ्यादिगर्वस्तेन दुष्टा दृक् दृष्टिर्येषां ते स्तब्धा अनम्राः सन्तो भूयसां महत्तमानां धाम प्रभावं न पश्यन्ति। सर्पमुखप्रविष्टदुग्धवत्तेषां गुणा दोषायैव भवन्ति ॥ १७ ॥ नेति। स्वजनत्वापेक्षया एते स्वजना इति दृष्ट्या एतादृशानामनवस्थितात्मनामनवस्थितचित्तानां गृहान्न प्रतीयात् न गच्छेत्। ये वक्रधिया कुटिलबुद्ध्या युक्ताः अभ्यागतान् आह्वानं विनापि प्रीत्या स्वयमेवागतान् स्वजनान् आरोपिताभिर्भ्रूभिः अमर्षणं क्रोध तद्युक्तैरक्षिभिश्च अभिचक्षते सम्मुखं पश्यन्ति ॥ १८ ॥ तथेति। यः अरिभिः शत्रुभिः कर्तृभूतैः शिलीमुखैः शरैः करणैरर्दिताङ्गश्छिन्नाङ्गः रोगी शयने शेते सोऽपि पुरुषस्तथा न व्यथते। यद्वा तथा न व्यथते यतः शेते यथा स्वानां वक्रधियां दुरुक्तिभिर्निन्दावचनैर्मर्मसु हृदयादिषु ताडितो दूयता तप्यमानेन। शतार्षः। हृदयेन दिवानिशं तप्यति निद्रामपि न लभते ॥ १९ ॥ व्यक्तमिति। हे सुभ्रु! ह्रस्वत्वमपाणिनीयमपि बहुभिः प्रयुक्तम्। उत्कृष्टा गतिः स्थितिर्यस्य तस्य प्रजापतेर्दक्षस्यात्मजानां कन्यानां मध्ये त्वं सम्मता प्रियासि इति व्यक्तं मम निश्चितम्। अथापि तथापि पितुः सकाशान्मानं सत्कारं न प्रपत्स्यसे न लप्स्यसे। यतः मदाश्रयात् मम संबन्धात् कः प्रजापतिर्दक्षस्त्वय्यपि परितप्यते अतः मानं न लप्स्यसे ॥ २० ॥ पापच्यमानेनेति। पूर्वकर्मजदुःस्वभावाग्निना पापच्यमानेनातिसंतप्यमानेन हृदा हृदयेन कृत्वा आतुराणि व्याकुलानि इन्द्रियाणि यस्य तथाभूतो दक्षः स्वकोयाभिर्लौकिकीभिः सत्कुलजन्माभिजनधनधान्यादिभिः समृद्धिभिरेषामस्मत्सदृशानां पुरुषबुद्धिसाक्षिणां जीवबुद्धिवृत्तिद्रष्टॄणां सर्वज्ञानां पदं परमोत्कृष्टमैश्वर्यं कष्टं विनाऽनायासेनाधिरोढुं प्राप्तुमकल्पोऽसमर्थः सन् यथा असुराः हरेरैश्वर्यं प्राप्तुमशक्ताः केवलं हरिं द्विषन्ति तथा स परं केवलं द्वेष्टि न प्राप्तुं शक्नोतीत्यर्थः। यद्वा तेषा महात्मनां समृद्धिभिरणिमादिभिः पुण्यकीर्त्यादिभिश्च पापच्यमानेन अन्यत् समानम् ॥ २१ ॥ ननु सदाचारप्राप्तो दक्षस्य सत्कारो भवता कुतो न कृत इत्यत आह—प्रत्युद्गमेति। हे सुमध्यमे! प्रत्युद्गमः उत्थाय संमुखागमनं प्रश्रयणं स्नेहोचिता क्रिया अभिवादनं नमस्कारः एषां समाहारः तत् यत् जनैर्मिथः विधीयते तत्तु प्राज्ञैर्भागवतैः चेतसा पुरुषाय गुहाशयाय अन्तर्यामिणे एव साधु सम्यक् विधीयते। परिपूर्णे तस्मिन् कायिकव्यापारयोगात् अतोऽन्तर्यामिदृष्ट्या मनसा मया सर्वं कृतमेव दक्षस्य देहाभिमानवत्त्वात् स्फुटतया तु न कृतः तदभिमाननिवृत्तयेऽनुग्रह एवायं मया कृत इति भावः ॥ २२ ॥

गुहाशयायैव प्रत्युद्गमादि विधीयते इति प्रतिपादयति—सत्त्वमिति। विशुद्धं रजस्तमोभ्यामसंभिन्नं सत्त्वमन्तःकरणं सत्त्वगुणो वा तदेव पूर्वं गुहाशब्देनोक्तं तदेव वसुदेवशब्दितमवयववृत्त्या वसुदेवशब्देनोक्तं यत् यस्मात् तत्र विशुद्धे सत्त्वे पुमान् भगवान् वासुदेवः यः पूर्वं परपुरुषगुहाशयशब्दैरुक्तः सः अपावृतः अपगतमावृतमावरणं माया यस्मात् स तथाभूतः सन् ईयते प्रतीयते तस्मात्तद्वसुदेवशब्दितमित्यर्थः। अयमर्थः—वसुदेवे भव इति हि वासुदेवः परमेश्वरः प्रसिद्धः स च विशुद्धे सत्त्वे प्रतीयते। अतः अण्प्रत्ययार्थेन प्रयीतिपर्यवसायिना भवतिना प्रसिद्धेन वसुदेवरूपः प्रकृत्यर्थो निर्द्धार्यते। ततश्च वसयति देवमिति वसत्यस्मिन् देव इति वा वसुः दीव्यति द्योतते इति देवः वसुश्चासौ देवश्च वसुदेवः इति वसुदेवशब्दवाच्यं शुद्धं सत्त्वं वसुरिति वसधातोरदन्ताच्चुरादेर्वस इति भ्वादेर्वा औणादिक उः। यत्तु भावार्थदीपिकापुस्तकेषु वासयतीति दीर्घपाठो दृश्यते स तु लेखकप्रमादात्। न च वसतेर्ण्यर्थान्तर्भावसूचनायेति वाच्यम्, व्याख्याग्रन्थेष्वेवं रीतेरदर्शनात्। ततश्च "तत्र भवः" इत्यणि वासुदेव इति सिद्धम्। अत्र प्रतीतिर्भवतेरर्थः। तस्मिन् सत्त्वेऽन्तःकरणे च मे मया भगवान् अधोक्षजः वासुदेवः नमसा नमस्कारेणानुविधीयते सेव्यते मनसा इति वा पाठः ॥ २३ ॥ तदिति। तत् ततो हेतोः स दक्षस्तव देहकृत् पिताऽपि मम द्विट् अतः ते तव न

निरीक्ष्यो न द्रष्टव्य. । ये च तदनुव्रताः दक्षानुवर्तिनः तेऽपि न निरीक्ष्याः । हे वरोरु ! यः दक्षः विश्वसृजां यज्ञे गतमनागसं निरपराधमपि मां दुर्वचसा ग्राम्याणामिवासभ्यवचसा तिरोऽकरोत् मम तिरस्कारं कृतवान् ॥ २४ ॥ यदीति । यदि मद्वचः निषेधविषयमतिहाय उल्लङ्घ्य पितृगृहं त्वं व्रजिष्यसि तदा ततो गमन.त् भवत्यास्तव भद्रं कल्याणं न भविष्यति । यतः संभावितस्य श्रेष्ठत्वेनाभिमतस्य सर्वदा सत्कृतस्य यदा कदाचित् स्वजनात् सदा सत्कारकर्तुः पराभवस्तिरस्कारो भवति, तदा स तिरस्कारस्तस्य सद्यः मरणाय कल्पते मरणपर्यवसायी भवति ॥ २५ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां तृतीयोऽध्यायः ॥ ३ ॥



## अथ चतुर्थोऽध्यायः

मैत्रेय उवाच

एतावदुक्त्वा विरराम शङ्करः पत्न्यङ्गनाशं ह्युभयत्र चिन्तयन् ।
सुहृद्दिदृक्षुः परिशङ्किता भवान्निष्क्रामती निर्विशती द्विधाऽऽस सा ॥ १ ॥

तुर्ये गता पितुर्यज्ञं सती तेनावमानिता । प्राणांस्तत्याज तत्र स्युः श्लोका जलधिवह्नयः ( ३४ ) ॥
उवाचेति त्र्यं सार्द्धा नववेदा ( ४९ ) अनुष्टुभः ॥ ४ ॥

एतावदिति । शङ्करः एतावत्पूर्वोक्तमुक्त्वा उभयत्र बलाद्वारणे तत्र गमने च पत्न्या अङ्गस्य नाशं चिन्तयन् विरराम । बलाद्वारणेन प्राणत्यागे स्वस्मिन् दुर्यशः स्यादिति मत्वा तूष्णीमास । सा च सती सुहृद्दिदृक्षुः भवात् परिशङ्किता चेत्यौत्सुक्य-शङ्कयोस्तुल्यबलत्वात् औत्सुक्येन गृहान्निष्क्रामती । नुमभाव आर्षः । शङ्कया निर्विशती चेति यामि न वा यामीति द्विधा विचारपरा आस । बभूवार्थेऽव्ययम् । गता नाप्यगता इति द्विधाऽऽसेति वा ॥ १ ॥ सुहृदिति । सुहृदां दिदृक्षायाः यः प्रतिघातस्तेन दुर्मनाः अत एव पित्रादिस्नेहाद्रुदन्ती नुमार्षः । अत एव अश्रूणां कलाभिः बिन्दुभिः अतिविह्वला अश्रूणि कलयतीति अश्रुकलेति भिन्नं पदं वा । अतः जातवेपथुः भवानी सती नास्ति प्रतिपूरुषः तुल्यः पुरुषो यस्य तं भवं प्रधक्ष्यताव भस्मीकरिष्यतीव ऐक्षत दृष्टवती ॥ २ ॥ तत इति । ततः शोकेन पत्युराज्ञोल्लङ्घनजेन रोषेण गमननिषेधजेन च दूयता उपतप्तेन । शताऽऽर्षः । हृदा युक्ता स्त्रैणेन स्त्रीस्वभावेन विमूढा धीर्यस्याः सा सती विनिःश्वस्य यः सतां प्रियः शिवः प्रेम्णा आत्मनः अर्द्धमदात् तं शिवं विहाय पित्रोर्गृहानगात् ॥ ३ ॥ तामिति । आज्ञोल्लङ्घनभयात् द्रुतं शीघ्रं विक्रमः पद्भ्यामेव गमनं यस्याः तामेकां सतीं पार्षदैः सह वर्तमाना ये यक्षाः सपार्षदयक्षाः मणिमान् मदश्च आदिर्मुख्यो येषां ते पुरोऽग्रेसरो वृषेन्द्रो येषां ते गतव्यथा निर्भयाः आज्ञोल्लङ्घना-दागतव्यथा इति वा अस्माकमीश्वरी एकाकिन्येव यातीति खेदादागतव्यथा वा सहस्रशः त्रिनेत्रस्यानुचराः तरसा वेगेन अन्वगच्छन् । त्रिनेत्रानुचरा इत्यनेन शिवस्यैव नेत्रान्तसूचिता अन्वगच्छन्निति भावः ॥ ४ ॥ तामिति । तां सतीं वृषेन्द्रमारोप्य

तस्मिन्नारूढां कृत्वा सारिका पठनकुशला पक्षिणी उपलक्षणेन शुकादयोऽपि कन्दुकः दर्पणः अम्बुजं श्वेतातपत्रं व्यजनं स्रक् च इत्यादिभिः सारिकादिभिः क्रीडोपकरणैः श्वेतातपत्रादिभिः सह महाराजविभूतिभिः तथा गीतायनानि गीतसाधनानि वीणादीनि दुन्दुभिशङ्खवेणुभिश्च सह विटङ्किताः शोभिताः सन्तो ययुः ॥ ५ ॥ आब्रह्मेति । आ समन्तात् यो ब्रह्मघोषो वैदिक-मन्त्रध्वनिस्तेनोर्जितं शोभमानं यज्ञसम्बन्धि वैशसं पशुहिंसनं यज्ञे विदुषां शास्त्रविचारस्पर्द्धारूपं वैशसं वा यत्र तत् विप्रर्षिभिः भृग्वादिभिः जुष्टं सर्वशः सर्वैर्विबुधैर्देवैश्च जुष्टं सेवितं मृदादिभिर्निसृष्टानि निर्मितानि भण्डानि पात्राणि यत्र मृन्मयानि शरावादीनि पुरोडाशाद्यर्थानि दारुमयानि स्रुगादीनि होमाद्यर्थानि अयोमयानि स्वधित्यादीनि अवदानाद्यर्थानि काञ्चनान्याचमनीकलशादीनि दर्भमयानि वेदरशनादीनि चर्ममयानि घृतादिस्थापनार्थानि कुप्यादीनि एवंभूतं यजनं यज्ञस्थानं सती समाविशत् ॥ ६ ॥ तामिति । तत्र दक्षयज्ञे आगतां विमानिताम् अकृतादरां तां सतीं स्वसॄः भगिनीः जननीं च ऋते विना कश्च कोऽपि जनः यज्ञकृतो दक्षस्य भयात् न आद्रियत् । तद्भावः आर्षः । स्वसारः जननी चेत्येतास्तु अनादृतामपि तां सादराः प्रेमाश्रुरुद्धकण्ठ्यश्च सत्यः मुदा परिपस्वजुः आलिङ्गितवत्यः । तद्भाव आर्षः ॥ ७ ॥ सौदर्येति । पित्रा दक्षेण अप्रतिनन्दिता स्वागतादिना अकृतसत्कारा सा सती सौदर्येण समानोदरत्वेन भगिनीनां स्नेहाद्य सम्यक् कुशलप्रश्न तत्र समर्था योग्या या वार्ता तया सह मात्रा मातृस्वसृभिश्च सादरमादरपूर्वकं दत्तां सपर्यां पारितोषिकं देयविशेषं वरं श्रेष्ठमासनं च ताभिर्दत्तं नादत्त नाग्रहीत् । कुशलप्रश्नोत्तरं नाददासनं च न पस्पर्श ॥ ८ ॥ अरुद्रेति । रुद्राहुतिमन्त्राश्रवणेन नास्ति रुद्रस्य भागो यस्मिंस्तमध्वरमवेक्ष्य तथा देवे महादेवे विभौ सर्वं कर्तुं समर्थे पित्रा कृतं हेलनं निमन्त्रणाद्यभावेनावज्ञालक्षणं चावेद्य स्वयं च तेनानादृता इति दोषत्रयेण अधीश्वरी सती यज्ञस्य सदसि सभायां रुषा क्रोधेन लोकान् चतुर्दश भुवनानि धक्ष्यती भस्मीकरिष्यतीव भस्मीकर्तुमिवेति वा चुकोप ॥ ९ ॥

जगर्हेति । स्वकोपं दृष्ट्वोपद्रवार्थं समुत्थितान् भूतगणान् शिवगणान् स्वतेजसा गौरवेण सूचनामात्रेण निगृह्य निवार्य देवी दीप्यमाना सा सती जगतो जनसमूहस्य अभि शृण्वतः सतो येन दक्षस्यानौचित्यं सर्वजगति प्रसिद्धं स्यात् । अमर्षेण क्रोधेन विपन्नया अस्पष्टाक्षरया गिरा शिवद्विषं शिवद्वेषकर्तारं यतो धूमपथे कर्ममार्गे यः श्रमोऽभ्यासस्तेन स्मयो गर्वो यस्य तं सर्वथा निन्दायोग्यं जगर्ह निन्दितवती । तद्भाव आर्षः ॥ १० ॥ नेति । लोके देहभृतां प्रियो य आत्मा तस्यात्मस्वरूपस्य यस्य यदपेक्ष्या अतिशायनः ऐश्वर्यादिना उत्कृष्टो नास्ति तथा यस्य प्रियोऽपि नास्ति । समस्तपाठे अतिशायनश्च प्रियश्चेति द्वन्द्वैक्यम् । "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इतिवत् इतरेतरयोगेऽपि "सर्वो द्वन्द्वो विभाषयैकवद् भवति" इत्येकत्वम् । तथा यस्य अप्रियोऽपि च नास्ति । समस्तानामात्मनि कारणस्वरूपे वा मुक्तवैरके सर्वथा वैररहिते तस्मिन् शिवे भगवन्तमृते विना कतमः प्रतीपयेत् प्रतिकूल-माचरेत् । "तत्करोति" इति णिजन्ताल्लिङ् । यद्वा ऋते सत्यस्वरूपे तस्मिन् मुक्तवैरके सति भगवन्तं कः प्रतीपयेत् दण्डयेत् । अतः काले प्राप्ते रुद्रो वा तदीयो वा कश्चिद्दण्डयिष्यतीति । एते ऋत्विजस्तु त्वदपराधं जानन्तोऽपि न शक्ता दण्डने ॥ ११ ॥ शिवप्राति-कूल्यकरणं द्वेधा महत्तमद्रोहेण साक्षात्तद् द्रोहेण च । तत्राद्यमाह—दोषानिति । हे द्विजेत्यधिक्षेपः । भवादृशाः त्वद्विधाः असाधवः असूयकाः परेषां गुणेषु दोषानेव गृह्णन्ति । न तु गुणान् ते अधमा उच्यन्ते । केचिन्मध्यस्था गुणेषु दोषान्न गृह्णन्ति किन्तु यथास्थितान् गुणदोषान् विवेकेन गृह्णन्ति ते तु महान्त उच्यन्ते । साधवस्तु केवलं गुणानेव गृह्णन्ति न दोषांस्ते तु महत्तरा उच्यन्ते । महत्तमास्तु दोषान्न गृह्णन्त्येव प्रत्युत फल्गूंस्तुच्छानपि गुणान् बहुलीकुर्वन्तीति बहुलीकरिष्णवो भवन्ति । तेषु भवानघं द्रोहमविदद्लब्धवान् कल्पितवानित्यर्थः । तच्च ब्रह्मिष्ठानभिभूयेत्यनेन सूचितम् । यद्वा असाधोस्तव सभायामेते खल्वसाधव एवेति वक्तुं साधूनसाधूंश्च लक्षयति—दोषान् इति । अत्र व्याख्यायामसाधव इति पाठः । हे द्विज ! ये परेषां दोषानपि गुणेषु प्रकारविशेषेण गुणान्तःपातितयैव गृह्णन्ति यथा कठोरभाषित्वं यदप्यस्य दोषस्तदपि हितकारित्वादयं रोगनिवर्त्तको निम्बरस इव गुण एवेत्येवं ते साधवो महान्त एव ते केचिद् भवन्ति तत्र न भवादृशा इति । भवादृशास्तु गुणानपि दोषान्तःपातियैव गृह्णन्ति यथास्य यत् परोपकारित्वं तत् परद्रव्यजिघृक्षयैवेति दोष एवायमित्येवं ते खल्वसाधव एव । ये तु दोषान् अपश्यन्तो गुणानेव गृह्णन्ति । यथा वणिगयमातिथेयो विस्तीर्ण इत्येवं ते महत्तरास्तथैव ये दोषानेव गृह्णन्ति न तु गुणान् यथा भिक्षुरयमुदरपूरं स्निग्धान्नं यदत्ति तदयं कामी भ्रष्टो मन्तव्य इत्येवं ते असाधुतराः । ये तु फल्गून् तुच्छानपि गुणान् बहुलीकरिष्णवः बहुलीकरणशीलाः किमुत-फल्गून् दोषांस्तु नैव पश्यन्ति यथा शीतार्त्तत्वादेव मदीयवस्त्रमपहरन्नपि शस्त्रपाणित्वेऽपि दयालुत्वादेव न हिनस्ति तदयं धन्य इत्येवं ते महत्तमास्तथैव ये तुच्छानपि दोषान् बहूकरिष्णवो गुणान्नैव गृह्णन्ति यथा विरक्तोऽयं वनमपहाय यद्गृहस्थगृहेषु वसति तत्प्रचुरधनं चोरयितुकाम इत्येव तेऽसाधुतमाः । ये तु गुणाभावेऽपि परेषु गुणानेव पश्यन्ति यथा जगत्यस्मिन् केऽपि दुष्टा न सन्ति सर्व एव साधव इति ते अतिमहत्तमास्तथैव दोषाभावे परेषां दोषानेव पश्यन्ति यथा जगत्यस्मिन् केऽपि शिष्टा न सन्ति सर्व एव दुष्टा इति ते अत्यसाधुतमा इति । एवं सत्त्वतारतम्येन साधव इति महत्तमा इति साधूनां द्वैविध्येऽप्युक्ते तमप्प्रत्ययेन युक्तिसंभ-वेन च महतां चातुर्विध्यमायातम् । तथैव तमस्तारतम्येन भवादृशा इति अविदद्भवानघमित्याभ्याम् असाधूनामपि द्वैविध्येऽपि

युक्त्वा चातुर्विध्यं शुद्धसत्त्वस्वरूपकल्याणगुणमयभक्तियोगतारतम्येन पुनरप्येवं साधूनामपराधतारतम्येनासाधूनां च चातुर्विध्यं ज्ञेयम्। एवं च देहभृतां प्रियात्मनस्तस्मिन सम ात्मनि मुक्तवैरक इत्यादिना श्रीरुद्रस्य सर्वत्रापि प्रीतिमत्त्वेन सर्वत्र दोषादृष्ट्या च अतिमहत्तमत्वं तेष्वविद्वद्भवानघमित्यनेन तस्मिन् श्रीरुद्रे दोषमात्रदर्शनात् तस्य च सर्वात्मत्वात् सर्वजगत्येव दोषदृष्टिप्राप्त्या चोदिते परमेष्ठिनेत्यनेन ब्रह्मण्यपि दोषदृष्ट्या ब्रह्मिष्ठानभिभूय चेति महत्स्वप्यपराधेन च दक्षस्यात्यसत्तमत्वं ध्वनितम् ॥ १२ ॥

नाश्चर्यमिति। कुणपं शववत् कुत्सितं जडं शरीरं तदेवात्मेति वदन्ति तच्छीलाः तेषु असत्सु असाधुषु यत् सेर्ष्यम् ईर्ष्यासहितं यथा स्यात्तथा सर्वथा महतां विनिन्दा निन्दनं तत् आश्चर्यं नास्ति। ततश्च महापुरुषाणां श्रीशिवादीनां पादपांसुभिश्चरणरजोभिर्निरस्तं तेजो येष म्। यद्यपि महान्तः स्वनिन्दां सहन्ते तथापि तत्पादरेणव एव तेषां तेजो निरस्यन्ति। तेषु असत्सु तत् महतां निन्दनमेव शोभनम्। "दह्यमानाः सुतीव्रेण नीचाः परयशोग्निना। अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते॥" इति न्यायेन तन्निन्दनस्य महतां गुणप्रकाशकत्वात् असतां च असत्त्वद्योतकत्वात् महन्निन्दाभावे तेषां दण्डाभावेन कल्याणासंभवात् ॥ १३ ॥

महत्तमद्रोहमुक्त्वा तस्मिन्नेव कृतं द्रोहमाह—यदिति। यत् यस्य तत् प्रसिद्धं द्व्यक्षरं शिव इति नाम सकृत् एकवारमपि प्रसङ्गात् संकेताद्यनुषङ्गादपि गिरैव न तु बुद्धिपूर्वमीरितमुच्चारितं विस्पष्टमस्पष्टं वा नृणां प्राणिनां सर्वेषां पापिनाम् अघं सर्वं पापमाशु शीघ्रमेव हन्ति। पवित्रा सर्वपापनिवर्तिका कीर्तिर्यस्य तमलङ्घ्यं शासनमाज्ञा यस्य तं शिवं शिवेतरः पापरूपो भवानहो द्वेष्टि ॥ १४ ॥

यत्पादेति। यस्य शिवस्य पादपद्मं ब्रह्मैव रसः परमानन्दः स एवासवः सर्वविस्मृतिपूर्वकतृप्तिकरं मधु तदर्थिभिर्महतां सर्वपूज्यानां मनांस्येवालयस्तैर्नितरां सेवितं यश्च शिवोऽर्थिनो लोकस्याशिषस्तदर्थितास्तास्ता धर्मादिलक्षणा वर्षति अधिकार्यनधिकारिविचारं विनैवालं ददाति तस्मै विश्वबन्धवे जगतो हितकारिणे भवान् द्रुह्यति। अतो भवतो बुद्धिवैपरीत्यम् ॥ १५ ॥ शिवापदेशो ह्यशिवः "प्रेतावासेषु घोरेषु" इत्यादिदक्षोक्तमाक्षिपति—किं वेति। त्वत्तोऽन्ये ये ब्रह्मादयस्तच्चरणारविन्दावसृष्टं जलादिकं स्वतः पवित्रतया स्वशुद्ध्यर्थं मूर्द्धभिर्दधति धारयन्ति ते सर्वज्ञाः सर्वोपदेष्टारोऽपि किं श्मशाने जटा अवकीर्य प्रसार्य तस्य श्मशानस्य माल्यानि भस्मानि नृकपालानि च भूषणत्वेन सन्ति यस्य स तथाभूतः शिवः पिशाचैः सहावसत् निवासं कृतवान् अतः शिवाख्योऽप्यशिव एवेति तं न विदुः न जानन्ति किम्। किंशब्दोऽधिक्षेपे। तथा च यदि ते तदाचरणं निन्द्यमिति विदुस्तदा कश्चित्तथा वदेयुरेव न तु तथोक्तवन्तः प्रत्युत आदृतवन्तः। अतः "लुप्तक्रियायाशुचये" इत्यादि त्वयाऽनुचितमेवोक्तं तत्फलं भोक्ष्यस एव ॥ १६ ॥

कर्णाविति। सभायामीशे कर्तुमकर्तुमन्यथाकर्तुं समर्थे धर्मावितरि धर्मरक्षके असृणिभिर्निरङ्कुशैर्नृभिरस्यमानेऽधिक्षिप्यमाणे सति यत् यदि अकल्पस्तेषां निन्दकानां दण्डने स्वप्राणत्यागे वा असमर्थस्तदा स्वस्मिन् दोषसंस्पर्शाभावार्थं यथा महन्निन्दा स्वकर्णपथे न प्रविशेत्तथा कर्णौ पिधाय ततः सभातो निरियात् निर्गच्छेदित्यर्थः। यदि तद्दण्डने प्रभुः समर्थस्तदा तु रुशतीमकल्याणवादिनीमत एवासतीं दुष्टां तेषां जिह्वां प्रसह्य बलात्कारेण छिन्द्यात्। यदि समर्थोऽपि लोकापवादादिभयेन जिह्वाच्छेदे प्रवृत्तिर्न भवेत् तदा ततो महन्निन्दाश्रवणादसूनपि विसृजेत् त्यजेत्। स एवं व्यवस्थया त्रिविधो धर्मः ॥ १७ ॥ अहं तु ऐश्वर्यबलात्त्वां हन्तुं शक्तापि स्वभार्याद्वारा शिव एव दक्ष जवानेति शिवयशोहानिभीत्या त्वां न हन्मि स्वप्रायश्चित्तं तु करिष्यामीत्याह—अत इति। अतो हेतोः शितिकण्ठगर्हिणः परोपकाराय विषपानेन नीलकण्ठं शिवं गर्हते तच्छीलस्य तव देहादुत्पन्नम् इदं कलेवरमहं न धारयिष्ये। हिं यस्मात् मोहात् प्रमादात् जग्धस्य भक्षितस्य जुगुप्सितस्य निषिद्धस्य अन्धसः अन्नस्य उद्धरणमुद्वमनमेव शुद्धिं शुद्धिकारणं प्रचक्षते। अतः त्वत्सम्बन्धिदेहत्यागादेव मे शुद्धिर्नान्यथा ॥ १८ ॥ "लुप्तक्रियायाशुचय" इत्यारोपितं दूषणं समाधत्ते—न वेदेति। स्व एव लोके स्वात्मन्येव रमतः रममाणस्य। आर्षः शता। महामुनेः सम्यग्विरक्तस्य श्रीशिवादेः मतिः वेदवादान् विधिनिषेधरूपान् न अनुवर्त्तते नानुसरति निवृत्ताधिकारत्वात्। यथा देवमनुष्ययोर्गतिः पृथगेव देवानामाकाश एव मनुष्याणां भूमावेव अतः स्व एव धर्मे प्रवृत्तिलक्षणे निवृत्तिलक्षणे वा स्थितः सन् परमन्यं धर्मं पुरुषं वा न क्षिपेत् न निन्देत्। व्यवस्थिताधिकारत्वेनोभयोः सत्यत्वात् नैव क्षिपेदिति वान्वयः ॥ १९ ॥ तदेवोपपादयति—कर्मेति। उभयं रागवैराग्यलक्षणं लिङ्गं चिह्नमधिकारिविशेषणं यस्मिंस्तत् प्रवृत्तमग्निहोत्रादि स्वर्गसाधनं तथा निवृत्तं शमदमादि मोक्षसाधनमिति द्विधापि कर्म ऋतं सत्यमेव यतः विविच्य रागिविरागिव्यवस्थया विभज्य वेदे आश्रितं विहितं न त्वविशेषेण युगपद्भावो यौगपदं व्यक्ति कर्त्तव्येऽणार्षः। यौगपदेन एकस्मिन् कर्तरि यथा तत्कर्मद्वयं विरोधि भवति तथा ब्रह्मणि सदाशिवे किञ्चिदपि कर्म न ऋच्छति न प्राप्नोति। अतो यथा प्रवृत्तनिवृत्तयोरधिकारिणोः परस्परकर्माकरणेऽपि न दोषः। तथा ईश्वरे तदुभयधर्माकरणेऽपि न दोषः ॥ २० ॥ "चिताभस्मकृतस्नानः" इत्याद्याक्षेपं परिहरति—मा व इति। हे पितः! अस्मदास्थिताः अस्माभिराश्रिताः पदव्यः ब्रह्मानन्दामृतास्वादरूपा अणिमाद्यैश्वर्यसमृद्धयश्च वो युष्माकं कर्मठानां मा न सन्ति नापि भविष्यन्ति। यतस्ताः अस्मदास्थिताः पदव्यः यज्ञशालासु न सन्ति तथा तदन्नतृप्तैस्तस्य यज्ञस्य संबन्धिनान्नेन तृप्तैः काकतुल्यैरसुभृद्भिः केवलं प्राणपोषकैरेव धूमवर्त्मभिः धूमो वर्त्म मार्गो येषां तैर्धूमादिमार्गगन्तृभिः न ईडिताः न स्तुताः। अत्र नेति पूर्वस्यानुषङ्गः। किन्तु अव्यक्तं कर्मठैरगम्यं लिङ्गं साधनं यासां ताः अवधूतैः त्यक्तलोकैषणैः सनकादिभिः सेविताः। स्वामिपादास्तु यतो वः पदव्यो यज्ञशालास्वेव

सन्ति ताश्च तदन्नेन तृप्तैरसुभृद्भिः केवलमीडिताः धूमवर्त्मभिश्च भुज्यन्ते। अस्मत्पदव्यस्तु अव्यक्तलिङ्गाः अवधूतैः सेविताश्चेति व्याचक्षते ॥ २१ ॥

नेति। हरे कृतागसः कृतापराधस्य तव देहादुद्भवो यस्य तेन अत एव कुजन्मना कुत्सितजन्मना एतेन देहेन नालं न पूर्यते किम् अपि त्वलमेव। यद्वा अलमत्यर्थं कुजन्मना एतेन देहेन अलं न किञ्चित् प्रयोजनम्। यद्वा एतेन देहेन प्रयोजनं नास्ति अतः अलमलम्। कुजनस्य तव प्रसङ्गतः मम व्रीडा लज्जाऽभूत्। अतो यस्त्वं महतां शिवादीनामवद्यकृत् अपराधकर्त्ता तत् तस्माद्यन्मम जन्म तद्धिक् तस्य तव जन्म धिगिति वा। तथा चेमं देहं त्यक्ष्याम्येव ॥ २२ ॥ गोत्रमिति। यदा कदाचित् परिहासादिषु वृषध्वजो धर्मधुरीणो भगवान् मां दाक्षायणीति संबोधयंस्त्वदीयं गोत्रं त्वत्संबन्धवाचकं नाम आह स्म तदाऽहं व्यपेतनर्मस्मितं यथा भवति तथा सुदुर्मनाः सुदुःखितचित्ता भवामि। तस्मात्त्वदङ्गजं तव देहादुत्पन्नमत एव निन्दितत्वात् कुणपं जीवदपि मृततुल्यमेतत् स्वशरीरमहमाशु शीघ्रमेव व्युत्स्रक्ष्ये त्यक्ष्यामि ॥ २३ ॥ इत्यति। हे शत्रुहन्! इत्येवम् अध्वरे यज्ञशालामध्य एव दक्षमनूच्य दक्षं प्रत्यनुवादं कृत्वा जलं स्पृष्ट्वा शुद्ध्यर्थमाचमनादि कृत्वा पीतेन दुकूलेन वस्त्रेण सौभाग्यसम्पादकेन संवृता आच्छन्ना शान्तवाक् गृहीतमौना सती उदीचोमुदीच्यां दिशि उदीचीति प्रथमान्तपाठे उदङ्मुखी क्षितौ पवित्रभूमौ निषसाद उपविवेश। ततश्च दृग् दृशौ। विभक्तिलुगार्षः। निमील्य उपलक्षणतया इन्द्रियाणि प्रत्याहृत्य योगपथं समाविशत् ॥ २४ ॥ कृत्वेति। जितमासनं यया सा अनिन्दिता सर्वथा शुद्धा सा सती अनिलौ प्राणापानावूर्ध्वाधोवृत्तिकौ निरोधेन समानावेकरूपौ नाभ्यां मणिपूरकचक्रे कृत्वा ततश्च नाभिचक्रात् उदानमूर्ध्वमुत्थाप्य हृदि अनाहतचक्रे संस्थाप्य तत उरसि कण्ठादधोदेशे विशुद्धचक्रे स्थितं कृत्वा ततः कण्ठे तस्यैव चक्रस्याग्रदेशे संस्थाप्य ततो बहुधा गमनसंभवात् शनैर्बुद्ध्या विचार्य भ्रुवोर्मध्यमाज्ञाचक्रमानयत् ॥ २५ ॥ एवमिति। एवं महतां सनकादीनां महीयसा पूज्यतमेन शिवेनादरात् मुहुरङ्कं समारोपितमपि स्वदेहं दक्षरुषा निमित्तेन जिहासती त्यक्तुमिच्छती। नुमभाव आर्षः। मनस्विनी वशीकृतमना धीरा गात्रेषु अनिलाग्न्योर्द्धारणां दधार तेषु तयोश्चिन्तनं कृतवती ॥ २६ ॥ तत इति। ततो जगद्गुरोः स्वभर्तुः श्रीशिवस्य चरणाम्बुजासवं चरणयोर्ध्यानेनोत्पन्नमानन्दलक्षणमासवं सर्वविस्मारकत्वान्मधु चिन्तयती आस्वादयन्ती सती। नुमभाव आर्षः। अपरं तस्मादन्यं नैव ददर्श देहं च तत्याजेत्यर्थादुक्तम्। ततश्च तस्या देहो हतकल्मषः निवृत्तपितृनिन्दादिनिमित्तसर्वदोषः समाधिजनितेनाग्निना सद्यः प्रजज्वाल भस्मीभूतो जातः। यद्वा समाधिजाग्निना हृतं कल्मषं दक्षकन्यात्वाभिमानरूपं यत्र तथाभूतो देहः प्रजज्वाल दिदीपे विद्युदिव प्रदीप्यान्तरधात् ॥ २७ ॥

तदिति। तत्सतीदेहत्यागरूपं महदद्भुतमत्याश्चर्यं पश्यतां खे आकाशे भुवि च स्थितानां हा हेति क्रन्दनपूर्वकः सुमहान् वादः अजायत। तमेवाह—हन्त खेदे। दैवतमस्य सर्वदेवश्रेष्ठस्य शिवस्य प्रिया सती देवी सर्वपूज्या केन दक्षेण प्रकोपिता सती असून् प्राणान् जहाविति ॥ २८ ॥ अहो इति। अहो आश्चर्यं यस्य चराचरं सर्वमपि प्रजाः सन्तानवद्रक्षणीयं तस्य अस्य प्रजापतेर्दक्षस्य महत् अनात्म्यं दौष्ट्यं पश्यत। वृद्ध्यभावः संज्ञापूर्वकत्वेनानित्यत्वात् आर्षत्वाद्वा। या मनस्विनी प्रशस्तचित्ता आत्मजा पुत्री सती अभीक्ष्णं मानसत्कारमर्हति सापि यद्विमता येन दक्षेणावज्ञाता सती दुस्त्यजानप्यसून् प्राणान् जहौ ॥ २९ ॥ सोऽयमिति। दुर्मर्षं दुष्टविचारयुक्तं हृदयं यस्य ब्रह्मध्रुक् ब्रह्मज्ञानां द्रोहकर्त्ता पुरुषद्विट् शिवद्वेषी सोऽयं दक्षो लोके महतीमपकीर्तिं चशब्दात्प्राणहान्याद्यनिष्टं चावाप्स्यति। यत् यस्मात् स्वापराधतः स्वकृतापमानान्मृतये मरणायोद्यतां प्रयतमानां स्वाङ्गजां न प्रत्यषेधत् न वारितवान् ॥ ३० ॥ वदतीति। सत्या अद्भुतमद्भुतप्रकारकमसुत्यागं दृष्ट्वा जने एवं पूर्वोक्तप्रकारेण वदति सति तस्य रुद्रस्य पार्षदा उदायुधा उद्यतायुधाः सन्तो दक्षं हन्तुमुदतिष्ठन् उद्युक्ता जाताः ॥ ३१ ॥ तेषामिति। तेषां रुद्रपार्षदानां प्रमथयक्षभूतप्रेतादीनामापततां वेगं निशाम्य दृष्ट्वा भगवान् रक्षायां शक्तिमान् भृगुः यज्ञघ्नाः यज्ञविध्वंसका दैत्यादयस्तान् हन्तीति यज्ञघ्नघ्नं तेन यजुषा "अपहतं रक्षः" इत्यादिमन्त्रेण दक्षिणाग्नौ जुहाव आभिचारिकेण विधिनाऽऽहुतिं दत्तवान् ॥ ३२ ॥ अध्वर्युणेति। अध्वर्युणा आध्वर्यवं चरता भृगुणा हूयमाने सति ये पूर्वं तपसा सोमं चन्द्रं यज्ञे सोमभागं वा प्राप्तास्त ऋभवो नाम देवाः सहस्रशः ओजसा महता वेगेन उत्पेतुः आहुतिद्वाराविर्भूताः ॥ ३३ ॥ तैरिति। अलाता ज्वलन्ति काष्ठानि ते आयुधानि येषां तैः ब्रह्मणां भृगुकृतमन्त्राणां तेजसा प्रभावेण उशद्भिः दीप्यमानैः ऋभुभिः देवैर्हन्यमानाः गुह्यकसहिताः प्रमथाः सर्वतः पलायनपरा जाताः ॥ ३४ ॥

इति श्रीभागवते चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्थोऽध्यायः ॥ ४ ॥



## अथ पञ्चमोऽध्यायः

मैत्रेय उवाच

भवो भवान्या निधनं प्रजापतेरसत्कृताया अवगम्य नारदात् ।
स्वपार्षदसैन्यं च तदध्वरर्भुभिर्विद्रावितं क्रोधमपारमादधे ॥ १ ॥

पञ्चमे तु सतीमृत्युं श्रुत्वा यज्ञमनाशयत् । दक्षं चाघातयद्रुद्रस्तत्र श्लोकास्तु षड्दृशः ( २६ ) ॥
अनुष्टुभः साङ्घ्रिदन्ता ( ३२ । ) उवाचेत्येकमीर्यते ॥ ५ ॥

भव इति । भवः श्रीरुद्रः प्रजापतेर्दक्षाद्धेतोः असत्कृतायाः अनादृतताया भवान्या निधनं तथा तस्याध्वरे जाता ये ऋभवो नाम देवास्तैः स्वपार्षदसैन्यं च विद्रावितं नारदादवगम्य ज्ञात्वा अपारं दक्षनाशं विना अप्रशमं क्रोधमादधे स्वीचक्रे ॥ १ ॥ क्रुद्धः इति । क्रुद्धः अत एव रुद्रो भयंकरः सुदष्ट ओष्ठपुटो येन स स प्रसिद्धः प्रलयकर्त्ता धूर्जटिः शिवः हसन् सन् तडितां वह्नीनां च सटा ज्वाला तद्वदुग्रं रोचिर्यस्यास्तां जटामुत्कृत्योत्पाट्य सहसोत्थितो गम्भीरनादश्च संस्तां भुवि विससर्ज ॥ २ ॥ तत इति । ततः प्रक्षिप्तजटातोऽतिकायो बृहच्छरीरः तनुवा तन्वा तन्वादीनां "छन्दसि बहुलम्" इत्यवङ् । दिवं स्वर्गं स्पृशद् अत्युच्च इत्यर्थः । सहस्रबाहुः घनवत् रुक्कान्तिर्यस्य स श्यामवर्णः त्रयः सूर्या इव दृशो नेत्राणि यस्य करालास्तुङ्गा दंष्ट्रा यस्य सः ज्वलदग्निरिव मूर्द्धजाः केशा यस्य सः कपालानां मनुष्यशिरसां मालया युक्तः विविधानि उद्यतानि आयुधानि येन स वीरभद्राख्यो जातः ॥ ३ ॥ तमिति । तं वीरभद्रं बद्धाञ्जलिं किं करोमि तदाज्ञापयेति गृणन्तं वदन्तं भगवान् भूतनाथो रुद्र आह स्म । हे रुद्र ! हे भट ! यद्वा रुद्रस्य मम भट योद्धः ! यद्वा रुद्रा भयङ्करश्चासौ भटश्चेति संबुद्धिः । सयज्ञं दक्षं जहि नाशय । ब्रह्मतेजसोऽपि मा विभीहीत्याह—यतः त्वं मम भटानामग्रणीः श्रेष्ठः मे ममांशकश्च असि ॥ ४ ॥ आज्ञप्त इति । हे तात ! कुपितेन मन्युना रुद्रेण एवमाज्ञप्तः स वीरभद्रः देवदेवं विभुं शिवं परिचक्रमे प्रदक्षिणीचकार । तत्रार्षः । आत्मानम् असङ्गमप्रतिहतं केनापि सह गन्तुमशक्यं वा यत् रंहः वेगः तेन असङ्गस्य शिवस्य रंहसा वा महीयसां महाबलानामपि सहः सहिष्णुं वेगं सोढुं क्षमं मेने ॥५। अन्वीयमान इति । स वीरभद्रः घोषणानि शब्दशीलानि भूषणानि नूपुरादीनि ययोस्तावङ्घ्री यस्य स तथा भृशं नदद्भी रुद्रपार्षदै-रन्वीयमानः अनुगम्यमानः स्वयमपि सुभैरवमतिभयङ्करं यथा भवति तथा व्यनदत् नादं कृतवान् । ततश्च स जगदन्तको मृत्युस्तस्याप्यन्तकं मारकं शूलमुद्यम्य उत्थाप्य स प्राद्रवत् अतिवेगेन दक्षयज्ञवाटं जगाम ॥६॥ अथेति । अथ ऋत्विजो यज्ञप्रवर्त्तकाः यजमानो यज्ञे दीक्षितः सदस्याः सभास्थाने स्थित्वा युक्तायुक्तविवेचनपराः द्विजा अन्ये ब्राह्मणास्तत्पत्न्यश्च उदीच्यां ककुभि दिशि रुद्रभटानामागच्छतामुत्थितं रेणुं समीक्ष्य प्रथमं भीत्या तमः किमेदिति वदन्तः पश्चात्तमो न भवति किन्तु रज इति निश्चित्य रज एतत्कुतोऽभूदिति दध्युश्चिन्तयामासुः ॥ ७ ॥ वाता इति । रजःप्रवर्तकाः वाता न वान्ति दस्यवोऽपि नहि सन्ति । यतः इह देशे उग्रो दण्डो यस्य ईदृशः प्राचीनबर्हिः तन्नामा राजा जीवति । तद्राज्ये दस्यूनामसम्भवात् । जीवति इति ह्रस्वपाठे हेति स्फुटार्थः । गावोऽपि न काल्यन्ते बलान्न नीयन्ते । अतः इदं रजः कुत उद्भूतं किं लोकः अधुनैव प्रलयाय कल्पते ॥ ८ ॥ प्रसूतीति । उद्विग्नं चित्तं यासां ता प्रसूतिर्मिश्रा मुख्या यासां ताः स्त्रियः ऊचुः यत् प्रजेशो दक्षः दुहितॄणां पश्यन्तीनामपि इति दुःखाधिक्ये हेतुः । अनागां अनागसम् । अदन्तत्वमार्षम् । स्वसुतां सतीम् अवदध्यावज्ञातवान् तस्यैव वृजिनस्य पापस्य एष उपद्रवसूचको रजआदिर्विपाकः फलम् ॥ ९ ॥

यस्तु इति । शिवः अन्तकाले प्रलयकाले व्युप्तो विकीर्णो जटाकलापो यस्य स', किञ्च स्वशूलस्यासाधारणायुधस्य सूची अग्रभागस्तत्रार्पिताः स्वस्थानादुद्धृत्य प्रोता दिग्गजेन्द्रा येन सः उच्चः सर्वशब्दोपमर्दकः अट्टः कठोरो यो हासः स एव स्तनयित्नुर्वज्रनिर्घोषस्तेन भिन्ना विशीर्णा दिशो येन सः उदितानि ऊर्ध्वं धृतानि अस्त्राणि येषु तादृशा दोषो भुजास्त एव ध्वजास्तान् वितत्य विस्तृतान् कृत्वा नृत्यति ॥ १० ॥ अमर्षयित्वेति । असह्यतेजसं मन्युप्लुतं क्रोधव्याप्तं भ्रुकुट्या कुटिलभ्रुवा दुर्विषहं भयंकरं करालाभिर्भयङ्कराभिर्दंष्ट्राभिरुदस्तो निरस्तो भागणो ज्योतिःसमूहो येन तं शिवम् अमर्षयित्वा अमर्षयुक्तं कृत्वा

कोपयतो रोषमुत्पादयतो विधातुः प्रजापतेर्दक्षस्य किं स्वस्ति स्यादपि तु न स्यादेव। विधातुर्ब्रह्मणोऽपि किं स्वस्ति स्यादिति वा ॥ ११ ॥ वह्निति। भयेनोद्विग्ना इत ततः प्रचलिता दृक् यस्य तेन जनेनैवं पूर्वोक्तप्रकारेण वहु यथा स्यात्तथोच्यमाने सति महात्मनोऽतिधीरस्यापि विपरीतलक्षणया दुरात्मन इति वा। दक्षस्य भयावहा दिवि ग्रहयुद्धादयो भूमौ श्वरोदनादयः पर्यक सर्वतत्त्त्रापि मुहुर्वारं वारं सहस्रशः उत्पाततमाः महोत्पाता उत्पेतुः जाताः ॥ १२ ॥ तावदिति। हे विदुर! यावद्यजमानादयोऽपि सावधाना भवेयुः तावत् ततः पूर्वमेव कैश्चिद्वामनकैः ह्रस्वदेहैः कैश्चित् पिङ्गैः कपिलैः कैश्चित् पिशङ्गैः पीतवर्णैः कैश्चिन्मकरोदराननैः मकरस्येवोदरमाननं च येषां तैः नानाविधान्युद्यतान्यायुधानि येषां तैः परितः आद्रवद्भिराधावद्भिः रुद्रानुचरैः सोऽत्यूर्जितो महामखोऽन्वरुध्यत अवरुद्धो जातः ॥ १३ ॥ केचिदिति। केचित् प्राग्वंशं यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरर्पितं पूर्वपश्चिमायतं काष्ठं बभञ्जुः। तथाऽपरे पत्नीशालां यज्ञशालातः पश्चिमतः शालां यत्र यजमानादिस्त्रिय उपविशन्ति तां बभञ्जुः। अपरे च सदआदिकं बभञ्जुः। तत्र यज्ञशालायाः पुरतः सदोमण्डपं यत्र सभ्यास्तिष्ठन्ति ततः पुरतो हविर्धानं तस्योत्तर आग्नीध्र-शाला तां तद्विहारं तस्य यजमानस्य गृहं महानसं पाकभोजनस्थानं बभञ्जुः ॥ १४ ॥ रुरुजुरिति। केचिद्यज्ञपात्राणि चमसादीनि रुरुजुः बभञ्जुः। तथा एके अग्नीन् अनाशयन्। केचित् कुण्डेष्वमूत्रयन्। केचित् वेदिमेखला उत्तरवेद्याः सीमासूत्राणि विभिदुः विदारयामासुः ॥ १५ ॥ अबाधन्तेति। अन्ये मुनीन् अबाधन्त दुर्वचनादिभिः पीडितवन्तः एके पत्नीः अतर्जयन् भवतीर्विधवाः कुर्व इत्यादिवचनैः अभर्त्सयन्। अपरे तु प्रत्यासन्नान् समीपस्थानपि भयात् पलायितान् देवान् जगृहुः धृतवन्तः ॥ १६ ॥ भृगुमिति। मणिमान्नामगणः भृगुं बबन्ध। वीरभद्रः प्रजापतिं दक्षं बबन्ध। चण्डीशः पूषणं देवमग्रहीत्। नन्दीश्वरः भगमग्रहीत् ॥ १७ ॥ सर्वं इति। सर्व एव ऋत्विजः सदस्याः सदिवौकसः देवैः सहिताः भृगुबन्धनाद्युपद्रवं दृष्ट्वा स्वयं च ग्रावभिः पाषाणैर्भृशमर्द्यमानाः नैकधा अनेधा सर्वतोऽद्रवन् ॥ १८ ॥

जुह्वत इति। यो भृगुः सदसि विश्वसृक्सत्रे सभायां शापावसरे श्मश्रु दर्शयन्नहसत्तस्य जुह्वत एव स्रुवहस्तस्य भृगोः श्मश्रूणि भगवान् भवः वीरभद्रः लुलुञ्चे उत्पाटितवान्। तङर्षः। लुलुञ्च इति पाठो वा ॥ १९ ॥ भगस्येति। यो भगः सदस्थो विश्वसृक्सत्रसभायां स्थितो भवं शपन्तं दक्षमक्ष्णा अक्षिसंकोचेन असूसुचत। तस्य रुषा भुवि पातितस्य भगस्य नेत्रे भगवान् वीरभद्रः उज्जहार निःसारितवान् ॥ २० ॥ पूष्ण इति। गरिमणि गौरवमूर्त्तिभूते शिवे दक्षेण शप्यमाने सति यः पूषा दतः दन्तान् दर्शयन् अहसत् तस्य पूष्णः दन्तान् कालिङ्गस्य कलिङ्गदेशराजस्य दन्तान् अनिरुद्धोद्वाहे बलो बलभद्रो यथा अपातयत्तथा अपातयत्। पूष्णोरिति पाठे द्विवचनमैन्द्रापौष्णश्चरुर्भवतीत्यत्रान्यसहितस्यापि पूष्णो दन्तपातप्राप्त्यर्थम्। अत एव पूष्णोऽनुग्रहं द्वेधा वक्ष्यति। पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् केवलः पिष्टभुक् अन्यसहितश्चेद्यजमानस्य दद्भिर्जक्षतु इत्यर्थः ॥ २१ ॥ आक्रम्येति। दक्षस्योरसि आक्रम्य आरुह्य शितधारेणापि तीक्ष्णधारेणापि हेतिना खड्गेन तस्य शिरश्छिन्दन्नपि त्र्यम्बको वीरभद्रस्तच्छिरः उद्धर्तुं तदा नाशक्नोत् न समर्थोऽभूत् ॥ २२ ॥ शस्त्रैरिति। एवम् अस्त्रान्वितैर्मन्त्रयुक्तैः न निर्भिन्ना त्वगपि यस्य तथाभूतं दृष्ट्वेति शेषः। परं विस्मयमापन्नः पशूनां पतिर्हरो वीरभद्रश्चिरं दध्यौ तदुपायं चिन्तयामास ॥ २३ ॥ दृष्ट्वेति। ततश्च ध्यानात् स पशूनां पतिर्वीरभद्रो मखे संज्ञपनं योगं कण्ठनिष्पीडनेन त्रोटनं प्राणवियोजकोपायं दृष्ट्वा "यजमानः पशुः" इति श्रुतेरनेनैवोपायेनास्य प्राणवियोगो भविष्यतीति ज्ञात्वा तेनैवोपायेन यजमानरूपस्य पशोः कस्य दक्षस्य शिरः कायादहरत् पृथक् कृतवान् ॥ २४ ॥ साध्विति। तदा तस्य वीरभद्रस्य तत् दक्षशिरश्छेदनरूपं कर्म शंसतां स्तुवतां भूतप्रेत-पिशाचानां रुद्रानुचराणां तेषां साधुवादः अयं हत इति साधु सम्पन्नमिति वादः तदन्येषां दक्षपक्षीयाणां ब्राह्मणादीनां तु तद्विपर्ययः असाध्विदं जातमिति वादश्च जात इति शेषः ॥ २५ ॥ जुहावेति। अमर्षितो दक्षकृतं शिवापमानमसहमानो वीरभद्र एतच्छिरस्तस्मिन् दक्षिणाग्नौ जुहाव। तद्देवयजनं मण्डपादिकमपि दग्ध्वा गुह्यकालयं कैलासं प्रातिष्ठत् जगाम। तङभाव आर्षः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चमोऽध्यायः ॥ ५ ॥

—:※:—

## अथ षष्ठोऽध्यायः

मैत्रेय उवाच

अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः । शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः ॥ १ ॥

षष्ठे ब्रह्मा सुरैः सार्द्धं शिवं गत्वा प्रसाद्य च । अथाचद्दक्षादिजीवं तत्र श्लोक त्रिमार्गणाः ( ५३ ) ॥

उवाचेति द्वयं साङ्घ्रिर्नवबाणा ( ५९ । ) अनुष्टुभः ॥ ६ ॥

अथेति युग्मम् । रुद्रानीकैस्तदनुचरसैन्यैः पराजिताः शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः सञ्छिन्नानि त्रुटितानि भिन्नानि च सर्वाण्यङ्गानि येषां ते सह ऋत्विग्भिः सभ्यैश्च वर्तमाना भयेनाकुलाः सर्वे देवगणाः स्वयंभुवे स्वयंभुवमनुकूलयितुं नमस्कृत्य कात्स्न्येन साकल्येनैतत् रुद्रभागं निराकृत्य यागप्रवर्त्तनतन्नाशपर्यन्तं वृत्तं न्यवेदयन् विज्ञापितवन्तः ॥ १–२ ॥ उपलभ्येति । यागनाशात् पुरैव भगवान् अब्जसम्भवो ब्रह्मा विश्वात्मा नारायणश्च एतत् रुद्रभागं विना प्रवृत्तस्य यज्ञस्य तत्कर्तुश्च नाश तदनुमोदनपराणामुपद्रवं चोपलभ्य सर्वज्ञतया ज्ञात्वा कस्य दक्षस्याध्वरं नेयतुः नागतौ ॥ ३ ॥ तदिति । तत् देवादिभिर्निवेदितं वृत्तमाकर्ण्य श्रुत्वा विभुः ब्रह्मा आह स्म । तेजीयसि अतितेजस्विनि कृतागसि कृतापराधेऽपि पुंसि तत्र स्वापराधं कृत्वा बुभूषतां स्वोद्भवमिच्छतां स्वयंकृनागस्कीभवितुमिच्छतां पुंसां सा तादृक् बुभूषा प्रायेण क्षेमाय तेषां कल्याणाय न भूयात् न भवेदेवेत्यर्थः । यूयं तु अकृतापरावे तस्मिन् स्वयं कृतापराधा अतः कथं क्षेमं स्यात् । यद्वा तेजीयसि महात्मनि जने कृतागसि कृतम् आगो यस्य तादृशे सति क्षेमाय स्वकल्याणाय बुभूषतां जिजीविषतां तत्र क्षेमे विषये सा बुभूषा जिजीविषा मा भूयात् न भवतु । शिवापराधेऽपराधिनां दक्षादीनां स्वक्षेमाय जीवनेच्छा मा भवतु । जीवित्वा पुनरपराधं करिष्यतां तेषां मरणमेव वरमिति भावः । भवतेः सत्तार्थत्वात् सत्तायाश्च जिजीविषाबुभूषे तुल्यार्थे ज्ञेये ॥ ४ ॥ अथापीति । यद्यपि यूयं कृतकिल्बिषाः कृतापराधाः स्थ यतः ये यूयं बर्हिषो यज्ञस्य भागभाजं भवं पराद्गुः दूरादेव खण्डितवन्तः । तत्र दक्षपक्षपातित्वाद्यूयमप्यपराधिनः अथापि तथापि यूयं यदि बुभूषथ तदा क्षिप्रप्रसादं शिवं तत्प्रसादो दुष्करो नास्तीत्याशयः । प्रगृहीते अङ्घ्रिपद्मे यत्र कर्मणि पादौ प्रगृह्येत्यर्थः । शिवविशेषणं वा । जसन्तपाठे कर्तृविशेणम् । परिशुद्धचेतसा प्रसादयध्वम् ॥ ५ ॥ आशासाना इति । यस्मिन् शिवे कुपिते सति सपालः लोकः न भवेत् नश्येत् इत्यर्थः । तं प्रियया विहीनं दुरुक्तैर्दक्षस्य दुर्वचनैर्हृदि विद्धं देवं शिवम् अध्वरस्य यज्ञस्य जीवित पुनः सन्धानम् आशासानाः इच्छन्तो यूयम् आशु शीघ्रं क्षमापयध्वमिति क्षमामाप्नोति क्षमापः तादृशं कुरुत । "तत्करोति" इति णिच् ॥ ६ ॥ ननु त्वमेव कमप्युपायं विधत्स्वेति चेत्तत्राह—नाहमिति । आत्मतन्त्रस्य स्वाधीनस्य यस्य शिवस्य तत्त्वं यथार्थस्वरूपं ब्रह्मत्वं बलवीर्ययोरित्युपलक्षणम् । ज्ञानादिगुणानां प्रमाणं परिमाणमियत्तां चाहं ब्रह्मा न वेद्मि । यज्ञ इदानीन्तन इन्द्रो न वेत्ति । यूयं याज्ञिका वेदविदो देवादयश्च न वित्थ । येऽन्ये देहभाजो देहिनो मुनयश्च ते न विदुः । अतस्तस्मिन् क्रुद्धे सति कोऽस्मदादिसदृशोऽज्ञो जनः कमुपायं विधित्सेत् विधानं कर्तुमिच्छेत् । क उ पापमिति पाठे पापमपराधम् अत्र पूर्वं नाहमित्यादिभिः सह विदुरिति क्रियावयवभूतैर्वेदेत्यादिभिरन्वयस्ततः समुदितैस्तैर्विदुरित्यनेन । प्रथमपुरुषस्त्वार्ष एव । शेषं "नेमं विरिञ्च" इति दशमे द्रष्टव्यम् ॥ ७ ॥

स इति । सः अजः ब्रह्मा सुरानित्येवमादिश्योपदेशं कृत्वा सप्रजेशैः प्रजापतियुक्तैः पितृभिः समन्वितः सन् स्वधिष्ण्यात् स्वस्थानात् पुरद्विषः प्रभोः महादेवस्य प्रियं निलयं स्थानमद्रिप्रवरं पर्वतश्रेष्ठं कैलासं ययौ ॥ ८ ॥ कैलासं वर्णयति - जन्मेति । जन्मना सिद्धकुलोत्पत्त्या ओषधिभिः तपसा मन्त्रैर्योगैश्चेति पञ्चधा सिद्धास्तैः नरेतरैर्देवैः जुष्टं सेवितं तथा किन्नरैर्गन्धर्वैः अप्सरोभिः सदा वृतं रम्यत्वेन विहारार्थमागतैस्तैः संकुलं कैलासं ययाविति सर्वत्रानुषङ्गः ॥ ९ ॥ नानेति युग्मम् । नानाधातुभिर्विचित्रितैः नानाद्रुमलतागुल्माश्च येषु तैः नानामृगगणैरावृतैः नाना अमलानि प्रस्रवणानि येषु शृङ्गेषु तैः नाना कन्दराः सानवश्च येषु तैः नानामणिमयैः शृङ्गैर्हेतभि. कान्तैः सह विहरन्तीनां सिद्धयोषितां रमणं रतिप्रदम् ॥ १०–११ ॥ मयूरेत्यर्द्धम् । मयूराणां केकाभिः स्वनैः अभिरुतं नादितं मदान्धैरलिभिर्विमूर्छितं मूर्छना रागगतिविशेषः तद्वद्याप्तं कृतम् । यद्वा मयूरकेका एवाभिरुतानि गृहस्थसंलापा यत्र मदान्धानामलीनां गायकानामिव विमूर्छितानि रागस्वरालापमूर्छना यत्रेति । प्लावितैरिति । रक्तकण्ठानां

कोकिलानां प्लावितैः प्लुतत्वं नीतैः शब्दैः अन्येषां च पतत्रिणां पक्षिणां कूजितैश्च कामदुघैः कामान् मनोविषयान् प्रपूरयद्भिः द्रुमैरुद्धस्तैः उत्क्षिप्तहस्तस्थानीयैर्द्विजान् पक्षिणो ब्राह्मणानतिथीनिव आह्वयन्तमिव स्थितम्। लोके हि हस्तमुत्क्षिप्योच्चैः स्वरेणार्थिनामाह्वानं कुर्वन्ति। अद्रिः प्युत्क्षिप्तहस्तकारैर्द्रुमैस्तत्रत्यपक्षिस्वनैश्च तथा दृश्यत इत्यर्थः॥ १२॥ व्रजन्तमित्यर्द्धम्। व्रजद्भिर्मातङ्गैर्व्रजन्तमिव निर्झरध्वनिभिर्गृणन्तं भाषमाणमिव॥ १३॥ मन्दारैरिति पञ्चकम्। मन्दारपारिजातादिभिर्वृक्षैरुपशोभितं स्वर्णार्णैः सुवर्णवर्णैः शतपत्रैः पुष्पप्रधानगुल्मभेदैः वीरः करवीरः वेणुका एला जातिर्मालती। वरेणुकेति वा पाठः। अन्यैश्च द्रुमजातिभिः अवान्तरभेदसामान्यैः। अन्यैरिति पुंस्त्वमार्षम्। चूताम्रयोर्नीपकदम्बयोरवान्तरजातिभेदः। वेणुकीचकयोश्च सरन्ध्रनीरन्ध्रत्वाभ्यां स्फुटमन्यत्॥ १४–१८॥ कुमुदेति। कुमुदोत्पलादिसमृद्धिभिर्हेतुभिर्नलिनीषु सरःसु कलं मधुरं यथा भवति तथा कूजन्ति यानि खगानां पक्षिणां वृन्दानि समूहास्तैरुपशोभितम्॥ १९॥

मृगैरिति। मृगादिभिर्निर्जुष्टं सेवितं पूर्वं मृगगणाः शृङ्गविशेषणत्वेनोक्ताः, इदानीं स्वातन्त्र्येणेत्यपौनरुक्त्यम्॥ २०॥ कदलीति। कदलीनां खण्डैः समूहैः संरुद्धानि आवृतानि नलिनीनां पुलिनानि तैः श्रीः शोभा यस्मिंस्तम्। सत्याः भवान्याः स्नानेन पुण्यतरं सर्वपापनिवर्तकमतिसुगन्धं वा उदमुदकं यस्यास्तया नन्दया तन्नाम्न्या गङ्गया पर्यस्तं परिवृतम्॥ २१॥ विलोक्येत्यर्द्धम्। एवंभूतमतिशयशोभायुक्तं भूतानामीशस्य महादेवस्य गिरिं कैलासं विलोक्य दृष्ट्वा विबुधाः देवाः विस्मयं ययुः॥ २२॥ ददृशुरिति। तत्र कैलासे रम्यां मनोहरामलकां नाम प्रसिद्धां कुबेरस्य पुरीं सौगन्धिकं वनं च ते देवादयो ददृशुः। यत्र यस्मिन् वने तन्नाम सौगन्धिकं नाम पङ्कजं भवति। जातावेकत्वम्। तत तस्य वनस्यापि सौगन्धिकमिति नामेत्यर्थः॥ २३॥ नन्देति। तीर्थपादस्य भगवतः पदाम्भोजरजसाऽतीव पावने लोकान् पुनन्त्यौ नन्दा चालकनन्दा च सरितौ पुरः पुर्या बाह्यतः स्तः॥ २४॥ ययोरिति। हे क्षत्त! रतिकर्षिताः सम्भोगश्रान्ताः सुरस्त्रियो देवाङ्गनाः श्रमव्यपोहनार्थं स्वपतिभिः सह स्वधिष्ण्यतः स्वस्थानाद्देवलोकादवरुह्य ययोर्नन्दालकनन्दयोर्विगाह्य प्रविश्य पुंसः स्वपतीन् जलेन सिञ्चन्त्यः क्रीडन्ति॥ २५॥ ययोरिति। तासां सुरस्त्रीणां स्नानेन विभ्रष्टं निर्गलितं यन्नवं कुंकुमं तेन पिञ्जरे पीतवर्णे ययोर्नद्योरम्भो वितृषः तृड्विरहिता अपि गजाः गजीः हस्तिनीः पाययन्त स्वयं पिबन्ति॥ २६॥ तारेति। तारं रूप्यं मुक्ता वा हेम सुवर्णं महारत्नानि माणिक्यादीनि तन्मयानां विमानानां शतैः संकुलां व्याप्तां पुण्यजना यक्षास्तेषां स्त्रीभिर्जुष्टां निषेवितां यथा सतडिद्घनं तडिद्भिर्घनैश्च सहितं खं शोभते तथा शोभिताम्। तडिद्भिः स्त्रीणां घनैर्विमानानामाकाशेन पुर्याः सादृश्यं ज्ञेयम्॥ २७॥ हित्वेति चतुष्कम्। एवंभूतां यक्षेश्वरस्य कुबेरस्य पुरीं हित्वा अतिक्रम्य तदतिरम्यत्वेन प्रसिद्धं सौगन्धिकं वनं च दृष्ट्वा ते देवादय आरात् दूरात् वटं ददृशुरिति चतुर्थेनान्वयः। तद्वनं वर्णयति—चित्राणि माल्यानि पुष्पाणि फलानि च्छदाः पर्णानि च येषु तैरत एव कामदुघैर्द्रुमैः हृद्यं मनोहरम्॥ २८॥ रक्तकण्ठखगानां कोकिलानामनीकस्य समूहस्य स्वरैर्मण्डिताः षट्पदा यस्मिन् कलहंसानां कुलस्य समूहस्य प्रेष्ठानि खरदण्डानि पद्मानि येषु ते जलाशयाः कासारादयो यत्र॥ २९॥ वनकुञ्जरे स्वकण्डूनिरासार्थं संघृष्टानां हरिचन्दवृक्षाणां रजोगन्धविमिश्रेण वायुना अधि अधिकं यथा भवति तथा पुण्यजनस्त्रीणां मुहुर्वारं वारं मन उन्मथयत् क्षोभयत्॥ ३०॥ वैदूर्यैः वैदूर्यमणिभिः कृतानि रचितानि सोपानानि अवतरणसाधनानि यासु ताः उत्पलानां माला यासु विद्यन्ते ताः उत्पलमालिनीः वाप्यो वापीः दृष्ट्वा, "वा छन्दसि" इति पूर्वसवर्णदीर्घाभावपक्षे यण्। किंपुरुषैर्विलासार्थं प्राप्तं वनं च दृष्ट्वा प्राप्ता इति पाठे वापीविशेषणम् आरात् वटं ददृशुः॥ ३१॥

स इति। स वटो योजनशतमुत्सेध उन्नतिर्यस्य स तथा योजनशतापेक्षया पादश्चतुर्थांशः पञ्चविंशतियोजनानि तैरूनैः सर्वतः पञ्चसप्ततियोजनप्रमाणैर्विटपैः शाखाभिरायतो विस्तृतः अत एव पयकृता अचला छाया यस्य सूर्यादिचक्रे चलत्यपि तच्छाया न चलतीत्यलौकिकप्रभावः निर्गतानि नीडानि पक्षिस्थानानि यस्मात्स। तथा तेन निर्मलता निरुपद्रवता च दर्शिता। अचलच्छायत्वेनैव तापवर्जितः॥ ३२॥ तस्मिन्निति। सुराः महायोगमये अणिमादिसिद्धिप्रदे मुमुक्षूणां शरण आश्रयभूते तस्मिन् वटे। सामीप्ये सप्तमी। वटस्याधोदेशे आसीनं त्यक्तामर्षमन्तकमिव शिवं ददृशुः॥ ३३॥ शिवं विशिनष्टि—सनकाद्यैरिति पञ्चभिः। संशान्तः षडूर्मिरहितः पूर्णानन्द एव विग्रहः स्वरूपं यस्य तमत एव शान्तैः रागादिरहितैः महासिद्धैः सनन्दाद्यैस्तथा गुह्यकानां यक्षाणां रक्षसां च भर्त्रा पालकेन स्वस्य सख्या कुबेरेण चोपास्यमानं ददृशुरित्यस्यैव क्रियापदस्य पञ्चस्वपि द्वितीयान्तैः संबन्धः॥ ३४॥ विद्या उपासना तपश्चित्तैकाग्र्यं योगः अष्टाङ्गः तेषां पन्थानं मार्गमास्थितमनुतिष्ठन्तम्। तस्य लोकस्य अधीश्वरं तमिति वा पाठः। विश्वस्य सुहृदं वात्सल्यादिति कृपायुक्तस्नेहाल्लोकस्य मङ्गलभूतं विद्यादिकं चरन्तमनुतिष्ठन्तम्॥ ३५॥ स्वतः शुक्लवर्णत्वेऽपि भस्मधारणेन सन्ध्याभ्रवद्रुक् कान्तिर्यस्य तेनाङ्गेन तापसानामभीष्टं भस्मदण्डजटाजिनरूपं लिङ्गं चिह्नं चन्द्रलेखां च बिभ्रतम्॥ ३६॥ दर्भमय्यां बृस्यां व्रतियोग्ये आसन उपविष्टम् अन्येषां सतां सनन्दादीनां शृण्वतां मध्ये पृच्छते नारदाय सनातनं ब्रह्म वेदतत्त्वं प्रवोचन्तम् उपदिशन्तत्। उमार्षः। "किन्न वोचरयसद्वृत्ते" इतिवत् कल्पितो

बोधधातुः। एतेन परमगुरुत्वं श्रीरुद्रस्य दर्शितम्॥ ३७॥ दक्षिण ऊरौ सव्यं पादपद्मं कृत्वा विन्यस्य तथा सव्ये जानुनि च सव्यं बाहुं कृत्वा दक्षिणबाहुप्रकोष्ठे कराग्रे मणिबन्धस्थाने अक्षमालां कृत्वा दक्षिणहस्तस्थितया तर्कमुद्रया उपलक्षितमासीनमित्यन्वयः। अत्र वीरासनं प्रदर्शितम्। तदुक्तं योगशास्त्रे—"एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम्। इतरस्मिंस्तथा बाहुं वीरासनमिदं स्मृतम्॥" तर्कमुद्रा च प्रदर्शिता—"तर्जन्यङ्गुष्ठयोरग्रे मिथः संयोज्य चाङ्गुलीः। प्रसार्य बन्धनं प्राहुस्तर्कमुद्रेति मान्त्रिकाः॥" ॥ ३८॥ तमिति। ब्रह्मनिर्वाणं ब्रह्मानन्दस्तत्र समाधिश्चित्तैकाग्र्यं तमाश्रितं यथा योगपट्टिकां च जानुदृढीकरणार्थं विशेषेणोपाश्रितवन्तं मनूनां मननशीलानामाद्यं मुख्यं मनुं तं गिरिशं लोकपालैरिन्द्रादिभिः सहिताः मुनयः प्राञ्जलयः रचिताञ्जलिपुटाः सन्तः प्रणेमुः॥ ३९॥

स इति। सुरासुरेशैरभिवन्दितौ अङ्घ्री यस्य तादृशोऽपि स शिवः आत्मयोनिं ब्रह्माणमागतमुपलभ्य दृष्ट्वा यथार्हत्तमः पूज्यतमोऽपि विष्णुः श्रीवामनमूर्त्तिः कस्य प्रजापतेः कश्यपस्य अभिवन्दनं करोति तथा स्वासनादुत्थाय शिरसाऽभिवन्दनं चक्रे॥ ४०॥ तथेति। तथा अपरे ये महर्षिभिः सहिताः सिद्धगणाः नीललोहितं भवमनु अनुवर्त्तिनस्तत्र समन्तात् सर्वतो वर्त्तन्ते तेऽपि तस्मै प्रणामं कृतवन्त इति शेषः। एवं तैर्नमस्कृतः आत्मभूः ब्रह्मा देवादीनामपराधस्मरणेन तेषां लज्जोत्पादनार्थं प्रहसन्नुपहासमिव कुर्वन् देवैः कृतः प्रणामो यस्मै तं शशाङ्कशेखरं शिवं प्राह स्म॥ ४१ । तत्र शैवमतमाश्रित्याह—जाने इति। शैवाः खलु भगवत्प्रकृतिपुरुषान् सदाशिवशक्तिशिवरूपत्वेन मन्यन्ते। ततश्चायमर्थः—त्वां विश्वस्य प्राकृताप्राकृतस्य सर्वस्य जगतः ईशं सदाशिवरूपं जाने तथा शक्तेः शिवस्य चेत्यनयोः प्राकृतप्रपञ्चस्य योनिबीजभूतयोर्मातृपितृस्थानीययोः परं जाने। तथा यत्तत्प्रसिद्धं निरन्तरं निर्भेदं ब्रह्म तदपि त्वामेवाहं जाने॥ ४२॥ त्वमेवेति। हे भगवन्! स्वरूपयोः स्वांशभूतयोः सरूपयोरिति पाठे शिवस्य स्वांशत्वात् शक्तेस्त्वच्छायारूपत्वात् समानरूपयोः शिवशक्त्योरन्तः स्थितः क्रीडन् ऊर्णपटः ऊर्णनाभिः कोटो यथा सहायान्तरं विनैव ऊर्णां सृजति तत्र विहरति संहरति च तथा त्वमेवैतद्विश्वं सृजसि पासि अत्सि संहरसि॥ ४३॥ त्वमेवेति। धर्ममर्थं च दोग्ध्री या वेदत्रयी तस्या अभिपत्तये संरक्षणाय। यद्वा हे धर्मार्थदुघ! धर्माद्यभिपत्तये तत्प्राप्तये दक्षरूपेण सूत्रेण निमित्तभूतेन तन्तुवाय इव त्वमेवाध्वरं वस्त्रस्थानीयं ससर्जिथ प्रवर्तितवानसि। सर्वे सेतवो वर्णाश्रममर्यादाः त्वयैव लोकेऽवसिताः निबद्धाः यान् धृतव्रताः सन्तो ब्राह्मणाः श्रद्दधते श्रद्धयाऽनुतिष्ठन्ति। अतो दक्षवधे सति सम्प्रति धर्मप्रवर्तकस्यान्यस्याभावात् धर्मलोपे लोकस्य दुर्गतिः स्यात्॥ ४४॥ त्वमिति। हे मङ्गल! त्वमेव मङ्गलानां शुभानां कर्तुः कामिनः स्वः स्वर्गादिलोकं निष्कामस्य परं पदं सायुज्यादिमोक्षं वा तनुषे विस्तारयसि ददासीत्यर्थः। तथा अमङ्गलानां पापकर्मणां कर्तुश्चोल्वणं घोरं तमिस्रं नरकं तनुषे। केनचित् प्रबलेन निमित्तेन तदेव तस्मिन्नेव कर्मणि कस्यचित् फलविपर्ययोऽपि भवति। यथा दक्षस्य पुण्यकर्तुरपि तमिस्रम् अजामिलस्य पापकर्तुरपि अपवर्गः॥ ४५॥ न वा इति। सतां त्वच्चरणे अर्पितः स्थिरीकृत आत्मा मनो यैस्तेषां सर्वेषु भूतेषु स्थावरजङ्गमेषु तवात्मानमभितो व्यापकतया पश्यतां भूतानि चात्मनि त्वयि स्वस्मिन् वा अपृथग्दिदृक्षतां पश्यतां भेददर्शनरहितानामित्यर्थः। अत्रेच्छारूपः सन्प्रत्ययार्थो न विवक्षितः। यद्वा द्रष्टुमिच्छतामेव किं पुनः पश्यतां शता चार्षः। एवंभूतानां सतां द्वितीयार्थे षष्ठी। यथा पशुं रोषोऽभिभवति इति वैधर्म्ये दृष्टान्तः, तथा प्रायेण रोषो नैवाभिभवेत् स्वं वशीकृत्यानुचितं न कारयेत्॥ ४६॥

पृथगिति। पृथग्धियः भेददर्शिनः कर्मण्येव न तु भगवति दृक् बुद्धिर्येषां ते दुराशया मलिनचित्ताः परेषां समृद्धानाम् उदयेन समृद्धया अनिशं सततम् अर्पिता हृदि रुक् पीडा येषां ते अरुन्तुदाः मर्मताडिनः जनाः परान् अन्यान् दुरुक्तैः वितुदन्ति अतिव्यथयन्ति। अतो दैवेन स्वप्रारब्धकर्मणैव वधो येषां तान् भवद्विधो निरुपमः साधुः माऽवधीत् न हन्यात् समर्थोऽप्युपेक्षेत॥ ४७॥ यस्मिन्निति। दुरन्तया प्रबलया पुष्करनाभस्य भगवतो मायया स्पृष्टा व्याप्ता धीर्येषां ते जनाः यस्मिन् देशे यदा काले पृथग्दृशः भेददर्शिनो भवन्ति भेददृष्ट्या साधूनामपराधं कुर्वन्ति। तत्र देशे काले च दैवबलात् प्रारब्धवशात् कृतेऽपराधरूपेऽर्थे ममैव दैवमेवंभूतं कोऽत्रापराधस्तेषामिति मन्यमानाः साधवः अनुकम्पया दयया कृपां क्षमापूर्वकमुपकारमेव कुर्वन्ति न तु क्रमं तन्नाशार्थं पराक्रमं कुर्वन्ति॥ ४८॥ भवानिति। हे प्रभो! भवांस्तु परमस्य पुंसः भगवतो दुरन्तया अचिन्त्यप्रभावया मायया अस्पृष्टमतिः अमोहितचित्तः अत एव समस्तदृक् सर्वज्ञः अतः तया मायया हतात्मसु मोहितचित्तेषु अत एव अनुकर्मकर्मस्वेवासक्तं चेतो येषां तेषु दक्षादिषु इह अपराधेन विनाशे जातेऽप्यनुग्रहं कर्तुमर्हसि॥ ४९॥ कुर्विति। भो मनो! त्वया हतस्य वीरभद्रादिद्वारा विनाशितस्य अत एव मध्ये विनाशितत्वादसमाप्तस्य प्रजापतिदक्षस्याध्वरस्योद्धरणं सर्वाङ्गसम्पत्त्या प्रवर्तनेन समाप्तिं कुरु। यत्र यस्मिन् यज्ञे कुयज्वनः कुयज्वानः असूयादिदोषयुक्ता याज्ञिकाः दीर्घाभाव आर्षः। भागिनो भागार्हस्यापि तव भागं न ददुः। येन त्वया मखो निनीयते फलेन संयोज्यते तस्य फलदातुस्तव भागमिति संबन्धः॥ ५०॥ जीवतादिति। यज-

मानोऽयं दक्षो जीवतात् भग अक्षिणी नेत्रे प्रपद्येत प्राप्नोतु भृगोः श्मश्रूणि रोहन्तु पूष्णो दन्ताश्च पूर्ववत् भवन्तु ॥ ५१ ॥ देवानामिति। हे मन्यो! आयुधाश्मभिः आयुधैः खड्गादिभिः पाषाणैश्च भग्नानि गात्राणि येषां तेषां देवानाम् ऋत्विजां च भवताऽनुगृहीतानामाशु शीघ्रमेवानातुरं यथापूर्वमवयवसम्पत्त्या स्वास्थ्यमस्तु ॥ ५२ ॥ एष इति। हे रुद्र! यदिति यावदर्थे। अध्वरस्य यदुच्छिष्टः यज्ञे असमाप्ते यावानवशिष्टः पदार्थ तावान् सर्वोऽप्येष ते तव भागोऽस्तु। हे रुद्र! हे यज्ञहन्! ते तव भागेनाद्य शीघ्रमेव यज्ञः कल्पतां सम्पद्यताम् ॥ ५३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां षष्ठोऽध्यायः ॥ ६ ॥



## अथ सप्तमोऽध्यायः

मैत्रेय उवाच

**इत्यजेनानुनीतेन भवेन परितुष्यता। अभ्यधायि महाबाहो प्रहस्य श्रूयतामिति ॥ १ ॥**

सप्तमे हरिरुद्भूतः स्तुतः सर्वैः पुनर्मखम्। प्रावर्त्तयत्तत्र पद्यान्यर्द्धयुक्ता महीरसा ( ६१॥ )

गोऽद्रयोऽनुष्टुभः सार्द्धा ( ७१॥ ) उवाचेत्यद्रिबाहवः ॥ ७ ॥

इतीति। हे महाबाहो! इत्येवमजेन ब्रह्मणानुनीतेनात एव परितुष्यता भवेन प्रहस्यैवं चेत्तर्हि श्रूयतामिति तं प्रत्यभ्यधायि कथितम् ॥ १ ॥ नाघमिति। हे प्रजेश! अहं देवस्य भगवतो माययाऽभिभूतानां मोहितानामेषां दक्षादीनां बालानामज्ञानामघमपराधं न वर्णये नाप्यनुचिन्तये। तत्र मर्यादारक्षणार्थमेव मया दण्डो धृतः ॥ २ ॥ प्रजापतेरिति। दग्धं शिरो यस्य तस्य प्रजापतेः शिरः अजस्य छागस्य मुखं यस्मिंस्तथाभूतमस्तु। उद्धृतनेत्रो भगस्तु मित्रस्य मित्रनाम्नो देवस्य चक्षुषा बर्हिषो यज्ञस्य संबन्धिनं तं स्वं भागमीक्षेत ॥ ३ ॥ पूषेति। पूषा तु अन्यसहितश्चेत् यजमानस्य दद्भिर्दन्तैः जक्षतु। जक्षितु इटोऽकार आर्षः। केवलश्चेत् पिष्टभुक् भवतु। ये देवा मे मह्यम् उच्छेषणं यज्ञावशिष्टं भागत्वेन ददुः ब्रह्मणो वचनात्तदानमङ्गीचक्रुः ते देवाः प्रकृतानि यथापूर्वं स्थितानि सर्वाण्यङ्गानि येषां ते तथा भवन्त्विति शेषः ॥ ४ ॥ बाहुभ्यामिति। स्कन्धादङ्गुल्यन्तं यावद्बाहुः तस्यैकदेशो हस्तः ये चान्येऽध्वर्यव ऋत्विज तत्र ये केचन छिन्नबाहवस्तेऽश्विनोर्बाहुभ्यां कृतबाहवः कृतबाहुप्रयोजना भवन्तु। तथा ये केचन छिन्नहस्तास्ते पूष्णो हस्ताभ्यां कृतहस्ताः कृतहस्तप्रयोजना भवन्तु। तथा भृगुस्तु बस्तस्य छागस्य श्मश्रूण्येव श्मश्रूणि यस्य स तथाभूतो भवेत् ॥५॥ तदेति। हे तात! तदा प्रणतानामभीष्टं मेहन्ति सिञ्चन्ति वर्षन्ति। "मिह सेचने" ते मीढ्वांसः "दाश्वान् साह्वान् मीढ्वांश्च" इति निपातः कस्वन्तस्तेषां मध्येऽतिशयेन मीढ्वान् मीढुष्टमः शिवः। अयस्मयादित्वात् भत्वे संप्रसारणम्। तेनोदितमुक्तं श्रुत्वा अथानन्तरमेव परितुष्टात्मभिः संतुष्टैर्मनोभिर्युक्तानि सर्वाणि भूतानि कर्तॄणि भवदुक्तं साधु साध्वित्यब्रुवन् ॥ ६ ॥ तत इति। ततो मीढ्वांसं महादेवमपि समामन्त्र्य त्वया तत्र गत्वैव सर्वं कार्यमिति संप्रार्थ्य अतस्तेन मीढुषा वेधसा ब्रह्मणा च सह वर्तमानाः समीढ्वद्वेधसः ऋषिभिश्च सहिताः शुनासीराः देवाः भूयः पुनः तस्य दक्षस्य देवयजनं यज्ञवाटं ययुः ॥ ७ ॥ विधायेति। यत् भगवान् भव आह स्म। तत्सर्वं कार्त्स्न्येन विधाय सम्पाद्य भगादिभ्यश्चक्षुरादि दत्त्वा भवाज्ञया सवनीयपशोः शिरः कस्य दक्षस्य कायेन देहेन संदधुः योजितवन्तः ॥ ८ ॥ सन्धीयमान इति। एवं देवैर्दक्षकायेन पशुशिरसि सन्धीयमाने सति रुद्रेणामृताभिवर्षिण्या कृपादृष्ट्याऽभिवीक्षितो दृष्टो दक्षः सद्यः शीघ्रमेव सुप्त इव यथा सुप्तः पुरुषः केनचिदुत्थापितः उत्तिष्ठति तथा उत्तस्थौ। अग्रतश्च मृडं शिवं स्थितं ददृशे। तङार्षः ॥ ९ ॥ तदेति। वृषध्वजस्य द्वेषेण कलिलः मलिन आत्मा यस्य स तथाविधोऽपि

प्रजापतिर्दक्षः शिवस्य कृपया अवलोकात् तदा तत्क्षण एव शरत्कालिकह्रद इवामलो निर्मलान्तःकरणोऽभवत् ॥ १० ॥ भवेति। भवस्य स्तवाय कृता उद्युक्ता धीर्यस्य स तथाविधोऽपि सम्परेतां मृतां सुतामनुरागतः स्मरन् औत्कण्ठ्यात् जातया बाष्पकलया अश्रुधारया रुद्धकण्ठत्वात् स्तोतुं नाशक्नोत् ॥ ११ ॥

कृच्छ्रादिति। एवं प्रेम्णा विह्वलितः व्याकुलोऽपि प्रजापतिर्दक्षो शुद्धबुद्धिरतः कृच्छ्रात् बलात् मनः संस्तभ्य स्वस्थं कृत्वा निर्व्यलीकेन भावेन निष्कपटेनाभिप्रायेण ईशं महादेवं शशंस स्वापराधनिवेदनपूर्वकं स्तुत्या क्षमापितवान् ॥ १२ ॥ भूयानिति। अहो हे भगवन्! यदपि यद्यपि भवान् मया प्रलब्धः तिरस्कृतः। तथापि यः शिरश्छेदादिना मयि त्वया दण्डो धृतः स ममोपरि भवता भूयान् महान् अनुग्रहः कृतः। दण्डस्य त्वदपराधजन्यपापनिवर्तकत्वात् ब्रह्मबन्धुषु ब्राह्मणाभासेषु ब्राह्मणयोग्यगुणरहितेष्वपि तुभ्यं तव हरेश्चेति वां युवयोरवज्ञा। एते स्वापराधेन नरकादौ पतन्त्वित्युपेक्षा नास्ति। एवं धृतव्रतेषु दीक्षितेषु मादृशेषु कुत एव उपेक्षा स्यात् ॥ १३ ॥ विद्येति। हे परमश्रेष्ठ विभो! त्वं ब्रह्म वेदम् आत्मतत्त्वं स्वज्ञानमार्गं च अवितुं रक्षितुं विद्यातपोव्रतधरान् विप्रान् प्रथमं क्षत्रियादेः सृष्टेः पूर्वं मुखतः त्वमस्राक् अस्राक्षीः। सृजेः लुङि "अस्तिसिचोऽपृक्ते" इति प्राप्ते "बहुलं छन्दसि" इति ईडभावपक्षे "हल्ङ्याब्भ्य" इति सिपो लोपेऽम्वृद्धिसलोपकुत्वानि। तत्तस्मात् प्रगृहीतो दण्डो येन स पालः पशूनिव यथा गर्त्तादिपतनमार्गेण गच्छतः पशून् पालको दण्डेन कृत्वा ततो निवर्तयति तथा सर्वविपत्सु नरकादिपातहेतुषु पापेषु सत्सु तेभ्यो ब्राह्मणान् पासि दण्डप्रदानेन मूलदोषनिवृत्त्या रक्षसि ॥ १४ ॥ य इति। योऽसौ भगवान् न विदितं भवत तत्त्वं यया तादृशी दृक् ज्ञानं यस्य तेन मया सभायां विश्वसृक्सत्रसभायां दुरुक्तिविशिखैः कुवचोवाणैः क्षिप्तः तिरस्कृतोऽपि तन्मत्कृतं क्षेपणं विगणय्य। अगणय्येति त्वार्षः पाठः। अर्हत्तमस्य पूज्यतमस्य निन्दया अर्वाक् नरके पतन्तं माम् आर्द्रया कृपामृतपूर्णया दृशा अपात् रक्षितवान् स भगवान् स भवान् स्वकृतेनैवानुग्रहेण तुष्येत् तुष्टो भवतु। न तु मादृशैः प्रत्युपकर्तुं शक्यम् ॥ १५ ॥ क्षमाप्येति। स दक्षः एवं मीढ्वांसं शिवं क्षमाप्य क्षममामाप्नोति तादृशं कृत्वा। ल्यप् त्वार्षः। ब्रह्मणा चानुमन्त्रितोऽनुज्ञातः उपाध्यायसहितैः ऋत्विग्भिरग्निभिश्च कर्म यज्ञं संतानयामास प्रवर्तयामास ॥ १६ ॥ वैष्णवमिति। यज्ञस्य नष्टस्य सन्तत्यै साङ्गतासिद्ध्या प्रवृत्त्यर्थं वीराणां रुद्रगणेषु विद्यमानानां भूतप्रेतादीनां संसर्गेण जातस्य दोषस्य शुद्धये निवृत्त्यर्थं च द्विजोत्तमाः त्रिकपालं त्रिषु कपालेषु संस्कृतं वैष्णवं विष्णुदेवताकं पुरोडाशं तत्संज्ञकं हविर्विशेषं निरवपन् जुहुवुः ॥ १७ ॥ अध्वर्युणेति। हे विशांपते विदुर! आत्तं गृहीतं हविः येन तेनाध्वर्युणा सह यजमानो दक्षो विशुद्धया धिया यथा भगवन्त दध्यौ तथा तेनैव स्वरूपेण हरिः प्रादुरभूत् ॥ १८ ॥

तदेति। यजमानेन ध्यातस्तदा दश दिशो द्योतयन्त्या स्वप्रभया दीप्त्या तेषां ब्रह्मादीनां सर्वेषां तेजो मुष्णन् तिरस्कुर्वन् स्तोत्रे बृहद्रथन्तरे वाजौ पक्षौ यस्य तेन तार्क्ष्येण गरुडेन उपानीतः समीपं प्रापितः। "बृहद्रथन्तरे पक्षौ" इति श्रुतेः ॥ १९ ॥ श्याम इति द्वयम्। श्यामः हिरण्मयी रशना काञ्ची यस्य सः हिरण्यमिव रशना पीतं वस्त्रं यस्येति वा स हिरण्यरशनः अर्कवत् प्रकाशमानेन किरीटेन जुष्टः युक्तः नीलाश्च ते अलकाश्च नीलालकास्ते एव कुञ्चितत्वेन भ्रमरसदृशत्वात् भ्रमरास्ते च कुण्डले च नीलालकभ्रमरकुण्डलानि तैर्मण्डितमास्यं यस्य स तथा कम्बुः शङ्खः अब्जं चक्रं शराः चापं गदा असिश्चर्म च तद्युक्तैर्वर्यैः भृत्यरक्षार्थं प्रस्फुरद्भिरङ्गदादिभूषणविभूषितत्वाद्धिरण्मयैरष्टभिर्भुजैः पुष्पितः कर्णिकारवृक्ष इव शोभमानः वक्षस्यधिश्रिता वधूर्लक्ष्मीर्यस्य सः। कवभाव आर्षः। वनपुष्पाणां मालाऽस्यास्तीति वनमाली उदारो माधुर्यवर्षी यो हासः अवलोकश्च तयोः कलया चातुर्येण विश्वमेव रमयन् किं पुनर्भक्तान्। पार्श्वे उभयतो भ्रमन्ती व्यजनचामरे एव राजहंससमशुभ्रत्वाद्राजहंसौ यस्य सः श्वेतमातपत्रं छत्रमेव तापहारकत्वेन शशी तेनोपरि रज्यमानः शोभातिशयं प्राप्यमाणः एवंभूतो भगवां तार्क्ष्येणोपानीतः ॥२०-२१॥ तमिति। तं भगवन्तमुपागतमालक्ष्य ब्रह्मा इन्द्रः त्र्यक्षो रुद्रः एते त्रयो नायकाः मुख्या येषां ते सर्वे सुरगणादयः आदिशब्देन ऋषिगन्धर्वादीनां तत्र स्थितानां सर्वेषां ग्रहणं सहसा झटिति उत्थाय प्रणेमुः ॥ २२ ॥ तत्तेजसेति। तस्य प्रादुर्भूतस्य भगवतस्तेजसा हृता तिरस्कृता रुक् प्रभा येषां ते तथा अत एव ससाध्वसाः ससंभ्रमाः तत्प्रभावेण भ्रमच्चित्ताः अत एव स्तन्नजिह्वा स्तन्ना यथेष्टं वक्तुं न समर्था जिह्वा येषां ते मूर्ध्ना मूर्ध्नि धृतोऽञ्जलिपुटो यैस्ते अधोक्षजं भगवन्तमुपतस्थुः तुष्टुवुः। तङभाव आर्षः ॥ २३ ॥ अपीति। आत्मभूः ब्रह्मा आदिर्मुख्यो येषां तेऽपि यद्यपि तस्य महि महिमानं प्रति तु अर्वागेव चित्तवृत्तिर्येषां ते तथापि कृतः प्रकटीकृतोऽनुग्रहेण विग्रहो येन तं भगवन्तं यथामति गृणन्ति स्म तुष्टुवुः ॥ २४ ॥ दक्ष इति। दक्षः प्रयतः वशीकृतचित्तः कृताञ्जलिश्च सन् गृहीतानि पूज्यतमत्वादनेकत्र स्वीकृतानि अर्हणानि सादनोत्तमानि पात्रश्रेष्ठानि येन तं पूज्यतमे आगते पात्रसहितमेवार्हणं समर्प्यते। गृहीत्वा इति पाठस्तु सुगमः। विश्वसृजां ब्रह्मादीनामपि परं गुरुं पूज्यतमं यज्ञेश्वरं सुनन्दनन्दादिभिरनुगैः पार्षदैर्वृतं तं भगवन्तं मुदा गृणन् स्तुवन् मनसा प्रपेदे शरणं जगाम ॥ २५ ॥ शुद्धमिति। अत्र शुद्धमित्यादीनि क्लीबानि चिन्मात्रस्य विशेषणानि। पुँल्लिङ्गानि तु भवतः। शुद्धमुपरता निवृत्ता अखिला बुद्ध्यवस्था जाग्रत्स्वप्नसुषुप्ति-

रूपा यस्मात्तत् एकम् अभयं चिन्मात्रं ब्रह्म तद्रूपो भवान् स्वधाम्नि स्वस्वरूपे तिष्ठन्नेव मायां प्रतिपिध्य अभिभूय आत्मतन्त्र एव सन् तया मायया पुरुषत्वं मनुष्यनाट्यमुपेत्य तस्यां मायायां तिष्ठन् अपारशुद्ध इव रागादिमानिव आस्ते। रामकृष्णाद्यवतारेषु तथा प्रतीयते ॥ २६ ॥

तत्त्वमिति। हे अनञ्जन उपाधिमलशून्य भगवन्! रुद्रस्य नन्दीश्वरस्य शापात् कर्मण्येव अवग्रह आग्रहो यस्याः सा तथाभूता धीर्बुद्धिर्येषां ते तथाभूता वयमतस्तव तत्त्वं ब्रह्मादिसर्वात्मत्वं न विदामः न विद्म इत्यर्थः। आर्षः प्रयोगः। किं त्विदं धर्म उपलक्ष्यतेऽनेन धर्मस्य जनकं त्रिवृत् वेदत्रयीप्रतिपाद्यमध्वराख्यमस्माभिर्ज्ञातम्। यदर्थं यस्याध्वरस्य सिद्धये अदः इन्द्राद्य-धिदैवं रूपं व्यवस्थाः विशेषेणात्रैयमेव देवतेति व्यवस्थापूर्वकमवस्थाः आस्थितवानसीत्यर्थः। तिष्ठतेलुङ्। अडागमाद्यभाव आर्षः। यद्वा अदो व्यवस्थाः अमूर्व्यवस्था भवन्ति। समस्तं पदम्॥ २७॥ उत्पत्तीति। हे शरणद आश्रयप्रद! अशरणं रक्षकरहिते उरवः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा एव दुर्गाणि दुर्गमस्थानानि यस्मिंस्तस्मिन् अन्तकः काल एवोग्रो भक्षको व्यालस्तेनान्विष्टे लक्ष्यीकृते द्वन्द्वानि क्षुत्पिपासादीन्येव श्वभ्राणि गर्त्ताः यस्मिंस्तस्मिन् खला वञ्चका एव मृगा व्याघ्रादयस्तेभ्यो भयं यस्मिंस्तस्मिन् शोक एव तापकत्वाद्दावोऽग्निर्यस्मिंस्तस्मिन् उत्पत्त्यध्वनि जन्ममरणादिलक्षणसंसारमार्गे वर्त्तमानः विषया एव मृगतृष्णाजलं तदर्थमात्मा शरीरं गेहं गेहोपलक्षितं ममतास्पदं सर्वं च उरुर्भारो यस्य सः। कामेन उपसृष्टोऽभिभूतः अज्ञानां जनानां सार्थः समूहस्ते तव पादौ कः त्वच्चरणारविन्दरूपं निर्भयनिवासस्थानं त्वत्कृपां विना कदा याति न कदापि। मन्दाक्रान्ता छन्दः॥ २८॥ तवेति। हे वरद! इह संसारे आशिषा तत्तत्कामनया हेतुना अखिलार्थे सर्वाभिलषितदातरि इत्यङ्घ्रिविशेषणम्। विषयेष्वसक्तैर्निष्कामैः यद्वा आशिषाऽखिलार्थे अपि असक्तैरिति मुनिभिः जीवन्मुक्तैरपि स्वभावत एवादरेणार्हणीये पूजनयोग्ये तव वराङ्घ्रौ रचितधियं स्थिरीकृतचित्तमपि मां यद्यम् अविद्यः विद्याहीनः लोकोऽपविद्धं सदाचारभ्रष्टं जपति जल्पति तदा त्वत्परानुग्रहेण तव यः परो मयि अनुग्रहस्तेनाहं तज्जल्पनं न गणये। मालिनी छन्दः॥ २९॥ यदिति। गहनया दुस्तरया यन्मायया अपहृतः आच्छादितः आत्मबोधो येषां ते तमसि संसारान्धकारे स्वपन्तो ब्रह्मादयः तनुभृतः जीवाः आत्मन् आत्मनि स्वस्मिन्। ङ्लिुगार्षः। श्रितं स्थितमपि तव भगवतस्तत्त्वमधुनाऽपि अनन्तकोटिजन्मोपलक्षितकाले व्यतीतेऽपि न विदन्ति न जानन्ति। सोऽयं प्रणतानाम् आत्मा बन्धुः हितकृच्च भवान् ममापराधिनोऽपि प्रसीदतु॥ ३०॥ नैतदिति। असौ पुरुषः पदार्थानां भेदान् गृह्णन्ति यानि तैरिन्द्रियैः यावद्वस्तुजातम् ईक्षेत् प्रत्यक्षीकुर्यात्। तङभाव आर्षः। तदेतत् दृश्यजातं भवतः स्वरूपं नास्ति। यतो हेतोः त्वं ज्ञानस्य घटादिविषयकवृत्तेः अर्थस्य घटादेः गुणस्य तद्ग्राहकेन्द्रियस्य चेति त्रितयस्यापि आश्रयः अधिष्ठानम्। अतः मायामयाद्वस्तुनो व्यतिरिक्तः असि दृश्यादिप्रपञ्चाधिष्ठानभूतस्त्वं भिन्न एवासि। उपजातिश्छन्दोभङ्गः॥ ३१॥ इदमपि इति। हे अच्युत! विश्वस्य भावनं पालकं मनोदृशाम् आनन्दकरं सुरविद्विषां दैत्यानां च क्षपणैः उदायुधैः उद्यतशस्त्रैः अष्टभिर्भुजदण्डैः उपलक्षितम् इदमस्मद्दृग्गोचरं तव वपुरपि उपपन्नमेव न तु प्रपञ्चवदनिर्वचनीयतयाऽनुपपन्नम्। यद्वा भुजदण्डैरुपपन्नम् इदं वपुरपि मनोदृशामानन्दकरमिति। शेषं तुल्यम्। वैतालीयं छन्दः॥ ३२॥

यज्ञ इति। हे यज्ञस्तव यजनाय पूजनाय केन दक्षेण सृष्टः प्रवर्तितस्तत्र रुद्रभागनिरासेन सत्यमानेन च दक्षकोपात् पशुपतिना रुद्रेण सोऽद्य विध्वस्तो नष्टः। शवाः शेरतेऽस्मिन्निति शवशयनं श्मशानं तद्वदाभा प्रतीतिर्यस्य स चासौ शान्तमेधश्च शान्त उपरतो मेधः "मेधृ हिंसायाम्" पशुहिंसाद्युपलक्षितं कर्म यत्र तं नोऽस्माकं यज्ञं त्वं नलिनस्येव रुक् कान्तिर्यस्यास्तया स्वदृशा नेत्रेण पुनीहि पवित्रं कुरु। पूर्णं सफलं च कुर्विति यावत्। यद्वा शवं जलं तच्छयं कमलं नाभौ यस्य तत्संबुद्धिरिति। "शवः स्यात् कुणपे पुमान्। नपुंसकं तु पानीये" इति मेदिनी। प्रहर्षिणीछन्दः॥ ३३॥ अनन्वितमिति। हे भगवन्! ते तव विचेष्टितमाचरणमनन्वितमद्भुतं लोकविलक्षणं यत् यस्मात् आत्मना स्वशरीरेण नानाविधं कर्म आचरसि करोषि परन्तु नाज्यसे तज्जनितपुण्यपापसुखदुःखादिना न लिप्यसे। यतश्चान्ये विभूतये संपदे ईश्वरीं लक्ष्मीमुपसेदुः भेजुः। यद्वा यतः इति सार्ववि-भक्तिकस्तसिः। यतः यामीश्वरीं विभूतये लोका उपसेदुस्तां स्वयमनुवर्तंतीं सेवमानामपि। शता आर्षः। भगवान् न मन्यते नाद्रियते अतो निरपेक्षत्वान्निर्लेपः। प्रथमे पादे वंशस्थं पादत्रये प्रभावती॥ ३४॥ अयमिति। अयमस्माकं मनोवारणः मन एव दुर्दमत्वाद्वारणः क्लेश एव तापकत्वाद्दावाग्निस्तेन दग्धः अतस्तृषार्तः सुखतृष्णया पीडितः सन् त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी नदी तस्यामवगाढः प्रविष्टः परमानन्दमनुभवन् दावं दावाग्नितुल्यं संसारक्लेशं न सस्मार तथा ब्रह्मसम्पन्नवत् ब्रह्मैक्यं प्राप्तम् इव ततः न निष्क्रामति न निःसरति। भुजङ्गप्रयातं छन्दः॥ ३५॥ स्वागतमिति। हे ईश! हे अधीश! ते तव स्वागतं भद्रमागमनं त्वं प्रसीद तुभ्यं नमः। यथा शीर्षहीनः कवन्धः कायमात्रः पुरुषोऽङ्गैः करचरणाद्यवयवैः शोभनैरपि न शोभते तथा त्वामृते विना अङ्गैः प्रियानुजादिभिर्न शोभते। अतः हे श्रीनिवास! कान्तया स्वभार्यया श्रिया सह नोऽस्मान् त्राहि त्रायस्व। तङ् शब्लुक् चार्षः। स्रग्विणी छन्दः॥ ३६॥ दृष्ट इति। हे भूमन्! यः सर्वस्य प्रत्यगन्तःकरणैः स्थितः द्रष्टा अन्तर्बहिः

सर्वसाक्षी येनानुग्राहकेणानुगृहीतैश्चेतनतां प्राप्तैरिन्द्रियैर्दृश्यं विश्वं दृश्यते स त्वं नोऽस्माभिरसद्ग्रहैः प्राकृतपदार्थग्राहकैर्दृग्भिरिन्द्रियैः स्त्रीलिङ्गस्य विशेषणे पुंस्त्वमार्षम्। यद्वा असत्प्रकाशरूपाभिर्दृग्भिरित्यजहल्लिङ्गत्वान्न दोषः। यद्वा न इति तृतीयान्ताव्ययत्वात्तद्विशेषणम्। असन्ग्रहैरिति किं दृष्टः न दृष्ट इत्यर्थः। यस्त्वं पञ्चभूतव्यतिरिक्तः षष्ठोऽपि पञ्चभिर्भूतैर्विशिष्ट इव भासि सैषा भवदीया मायैव शुद्धचित्तानां शुद्धसत्त्वमूर्तिर्भासि अस्माकं बहिर्मुखेन्द्रियाणां जीव इव भासि अतस्त्वमिन्द्रियगोचरो नासि। शालिनी छन्दोभङ्गः॥ ३७॥

प्रेयानिति। हे प्रभो! यस्त्वयि विश्वात्मनि परब्रह्मणि आत्मनः स्वस्य पृथक् पृथक्त्वं नेच्चेत्। यद्वा आत्मनो जीवान् पृथक् नेच्चेत्। तङभाव आर्षः। अमुतः अमुष्मादभेदद्रष्टुरन्यस्ते तव प्रेयान् प्रेष्ठो नास्ति। यद्यप्येवमथापि तथापि हे ईश! हे वत्सल! तथा शास्त्रेषु सर्वपुरुषार्थहेतुत्वेन प्रतिपादितया अनन्यवृत्त्या अव्यभिचारिण्या भक्त्या उपधावतां भजतोऽस्माननुगृहाण। शेषे षष्ठी। उपधावतामस्माकमनन्यवृत्त्याऽनुगृहाणेति वाऽन्वयः॥ ८॥ जगदिति। जगत उद्भवस्थितिलयेषु निमित्तेषु दैवतः प्राण्यदृष्टात् बहुधा भिद्यमाना रजआदयो गुणाः यस्यास्तया आत्मनः स्वस्य मायया रचिता आत्मनि स्वस्मिन् ब्रह्मादिभेदमतिर्येन तस्मै नमः। स्वसंस्थया स्वरूपावस्थानेन विशेषतः सर्वथा निवर्त्तितः भ्रम द्धेतवो गुणाश्च आत्मनि येन तस्मै नमः। मञ्जुभाषिणी छन्द ॥ ३९॥ ब्रह्मोवाचेति। तत्रत्यो यज्ञप्रतिपादको वेदः शब्दब्रह्माख्यः वेदसमुदायो वा स्तौति—नम इति। श्रितं स्वीकृतं सत्त्वं सत्त्वगुणो येन तस्मै नमः। अत एव धर्मार्थादीनां सूतये प्रसवित्रे दात्रे च नमः। निर्गुणाय च नमः। यत् यस्य भगवतस्तव काष्ठां कथमेकस्य सगुणत्वं निर्गुणत्वं चेति तत्त्वमहं प्रमाणरूपो वेदोऽपि न वेद न वेद्मि। अपरे ब्रह्मादयोऽपि न विदुः॥ ४०॥ यज्ञकुण्डस्थोऽग्निराह—यत्तेजसेति। यस्य तव तेजसा सुष्ठु समिद्धं दीप्तं तेजो यस्य सोऽहं स्वध्वरे प्रशस्ते अध्वरे आज्यसिक्तं घृतप्लुतं हव्यं हविर्वहे विभज्य तांस्तान् देवान् प्रापयामि। तं यज्ञियं यज्ञोपहितं यज्ञपालकं यज्ञं यज्ञमूर्तिं विष्णुं "यज्ञो वै विष्णुः" इति श्रुतेः। पञ्चविधं "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः" इत्यैतरेयोक्तलक्षणं पञ्चभिर्यजुभिः यजुर्वेदगतमन्त्रैः स्विष्टं पूजितं त्वां प्रणतोऽस्मि। पञ्च मन्त्राश्च श्रुतौ प्रदर्शिताः। आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार इति तदनुसारिणी स्मृतिश्च—"चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च॥ हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु॥" इति॥ ४१॥ पुरेति। पूर्वं कल्पस्य प्रपञ्चस्यापाये नाशे प्रलये स्वकृतं स्वेनैवोत्पादितं विकृतं विकारजातं सर्वप्रपञ्चमुदरीकृत्य स्वोदरे निधाय लोकादिवासिसनकादिभिः हृदि विमृशिता चिन्तिता अध्यात्मपदवी ज्ञानमार्गो यस्य सः। कवभाव आर्षः। त्वमेवाद्यः पुमान् श्रीनारायणः तस्मिन् सर्वविप्लवकारके सलिले उरगेन्द्रः शेष एवाधिक उत्कृष्टं शयनं शय्या तस्मिन् शेषे शयनं करोषि। स एव त्वमद्य इदानीं सृष्टिसमयेऽस्माकमक्ष्णोः पथि चरसि दृष्टिगोचरो भवसि नोऽस्मान् भृत्यानवसि रक्षसि। शिखरिणीच्छन्दः॥ ४२॥

अंशांशा इति। हे विभूमन्! हे देव! ते मरीच्यादयः रुद्रः पुरोगः मुख्यत्वादग्रेसरो येषां ते ब्रह्मेन्द्राद्या देवगणास्ते तवांशानामप्यंशाः। इदं च विश्वं यस्य तव क्रीडायाः भाण्डमुपकरणम्। अतो हे नाथ सर्वस्वामिन्! तस्मै ते तुभ्यं नित्यं सर्वदा वयं नमः करवाम नमनं कुर्मः। मत्तमयूरं छन्दः॥ ४३॥ त्वन्माययेति। अर्थं पुरुषार्थसाधनं शरीरमभिपद्य प्राप्यापि दुर्मतिः जनः उत्पथैः अन्यायवर्त्तिभिः स्वैः स्वकीयैः पुत्रादिभिः इन्द्रियादिभिर्वा क्षिप्तोऽभिभूतः तिरस्कृतोऽपि त्वन्मायया अस्मिन् कलेवरे ममाहमित्यभिमानं कृत्वा असत्सु मलिनेषु दुःखप्रदेषु विषयेषु लालसा तृष्णा यस्य स तथाविधो भवति। युष्मत्कथामृतनिषेवकस्तु त्वद्भक्त एवंभूतमात्मनो मोहम् उत् उच्चैः दूरतो व्युदस्येत् त्यजेत् नान्यः॥ ४४॥ त्वमिति। त्वमेव क्रतुर्यज्ञस्वरूपः त्वं हविर्घृतादि त्वं हुताशः त्वं हि मन्त्रः समित्काष्ठं दर्भाः पात्राणि च त्वं सदस्याः सभ्या ऋत्विजश्च दम्पती यजमानस्तत्पत्नी च देवता इन्द्रादिः अग्निहोत्रमग्नौ हवनं स्वधा पितृदानं सोमः सोमलता आज्यं घृतं पशुश्च। स्रग्विणीद्वयम्॥ ४५॥ त्वं पुरेति। हे त्रयीगात्र वेदत्रयमूर्त्ते! यज्ञः सयूपः क्रतुर्वियूपो यागविशेषस्तद्रूपो यज्ञसंकल्परूपो वा यज्ञः कर्म यस्येति वा त्वमेव महासूकरः सन् योगिभिः सनकादिभिः स्तूयमानः स्वयं च नदन् लीलया अनायासेनैव पुरा सृष्टिप्रारम्भसमये प्रथमे मन्वन्तरे प्रजानां स्थित्यर्थं रसायाः रसातलात् गां पृथ्वीं दंष्ट्रया पद्मिनीं कमलिनीं वारणेन्द्रो यथा व्युज्जहर्थ विशेषेणोद्धृतवानसि॥ ४६॥ स इति। हे यज्ञेश! सदयमूर्त्तिस्त्वं परिभ्रष्टं सत्कर्म येषां तेषामपि ते तव दर्शनमाकाङ्क्षतां नोऽस्माकं प्रसीद। ते तव नाम्नि नृभिः कीर्त्यमाने सति यज्ञविघ्नाः सर्वसत्कर्मविघ्नाः क्षयं यान्ति नश्यन्ति तस्मै सर्वोपकारिणे तुभ्यं नमः॥ ४७॥ इतीति। इति पूर्वप्रकारेण यज्ञस्य भावने पालके हृषीकेशे कीर्त्यमाने स्तूयमाने सति कविर्निर्मलान्तःकरणो दक्षः भद्राख्यो रुद्रो वीरभद्रः तेनावमर्शितं नाशितं यज्ञं संनिन्ये प्रवर्तयामास। भद्रेति सम्बोधनं वा॥ ४८॥ भगवानिति। हे अनघ विदुर! सर्वात्मा अतः सर्वेषां देवानां भागभुगपि भगवान् स्वेन भागेन त्रिकपालेन पुरोडाशेन प्रीयमाण इव दक्षमाभाष्य सम्बोध्य बभाषे। निजानन्दतृप्तस्य पुरोडाशमात्रेण पूर्णप्रीते-

रभावात् इवशब्दः ॥ ४९ ॥ अहमिति । योऽहं जगतः परं कारणम् आत्मा ईश्वरः उपद्रष्टा साक्षी स्वयंदृक् स्वयंप्रकाशः अविशेषणः उपाधिरहितश्चास्मि स एव ब्रह्मा च शर्वश्चेति ॥ ५० ॥ आत्मेति । हे द्विज ! सः परमकारणभूतोऽहमेव रजआदिगुणमयीम् आत्ममायां समाविश्याधिष्ठाय विश्वं सृजन् रक्षन् हरंश्च क्रियोचितां सर्गादिकर्मयोग्यां संज्ञां स्रष्टा विश्वम्भरः हर इत्याख्यां दध्रे धारयामि ॥ ५१ ॥

तस्मिन्निति । तस्मिन् अद्वितीये भेदरहिते केवले निःसङ्गे परमात्मनि ब्रह्मणि मयि ब्रह्मरुद्रौ भूतानि च अज्ञ एव भेदेन अनुपश्यति ॥ ५२ ॥ यथेति । यथा कश्चिदपि पुमान् शिरःपाण्यादिषु स्वाङ्गेषु क्वचिदपि देशकालावस्थादौ पारक्यबुद्धिं स्वभेदबुद्धिं न कुरुते एवं मत्परः विद्वान् सर्वभूतेषु भेदबुद्धिं न कुरुते ॥ ५३ ॥ त्रयाणामिति । हे ब्रह्मन् ! एकभावानामेकस्वरूपाणां सर्वभूतान्यात्मा येषां तेषां त्रयाणां ब्रह्मविष्णुशिवानां यो भिदां भेदं न पश्यति सः शान्तिं मोक्षमधिगच्छति ॥ ५४ ॥ एवमिति सार्द्धम् । एवं भगवता आदिष्टः उपदिष्टः प्रजापतीनां पतिर्दक्षः त्रिकपालेष्ट्या हरिमर्चित्वा तेन संशुद्धेन स्वेन पूर्वप्रवर्त्तितेन क्रतुना उभयतः अङ्गैः प्रधानेन च देवान् अजयत् अपूजयत् । तथा समाहितः भगवतः सकाशाच्छिवे भेदबुद्धिरहितः स्वेन हि यज्ञावशिष्टेन भागेन रुद्रं च उपाधावत् अपूजयत् ॥ ५५ ॥ कर्मणेति । उदवस्यते समाप्यतेऽनेनेत्युदवसानं तेन कर्मणा समाप्तीष्ट्या इतरान् पूर्वं क्तदेवव्यतिरिक्तान् सोमपान् सोमभोगिनोऽपि उपाधावदित्यनुषङ्गः । ततश्च उदवस्य कर्म समाप्य । आलोप आर्षः । उदवसायेति भाव्यम् । ऋत्विग्भिः सह अवभृथरूपं यथा भवति तथा सस्नौ । यद्वा अवभृथो यज्ञान्तकर्म यज्ञान्तस्नानस्यावभृथे प्रविष्टत्वेन स्नाधातुः क्रियामात्रवाचकोऽतः अवभृथं कृतवानित्येवार्थः । अतः सकर्मकतापि ॥ ५६ ॥ तस्मा इति । स्वेनैवानुभावेन भगवदाराधनप्रभावेणावाप्तराधसे प्राप्तधर्मसिद्धयेऽपि तस्मै दक्षाय ते यज्ञे संपूजितः त्रिदशाः देवाः धर्म एव मतिं दत्त्वा धर्मे एव तव मतिर्भवत्विति वरं दत्त्वा दिवं स्वर्गं ययुः ॥ ५७ ॥ एवमिति । एवं दाक्षायणी दक्षकन्या सती पूर्वकलेवरं हित्वा पुनर्हिमवतः पर्वताभिमानिदेवस्य क्षेत्रे भार्यायां मेनायां जज्ञे जातेति वयं शुश्रुम ॥ ५८ ॥ तमेवेति । भूयः पुनश्च अम्बिका सती अनन्यभावानां स्वैकनिष्ठानाम् एको गतिः प्राप्यो यस्तं शिवमेव प्रियं पतिं प्रलयकाले सुप्ता शक्तिः पुनः सृष्टिप्रारम्भकाले पुरुषमीश्वरं यथा भजते तथा आवृङ्क्ते भजते स्म । वर्जनार्थो वृजिरदादिराङ्पूर्वो भजनार्थः आवर्जयतिरिव ॥ ५९ ॥ एतदिति । दक्षाध्वरद्रुहः दक्षयज्ञनाशकस्य भगवतः शम्भोरेतत् कर्म चरितं मे मया भागवताद् भगवद्भक्तात् बृहस्पतेः शिष्यात् उद्धवात् श्रुतम् ॥ ६० ॥ इदमिति । हे कौरव विदुर ! इदं परं पवित्रं यशस्यमायुष्यम् अघौघस्य मर्षणं नाशनम् ईशयोः विष्णुशिवयोः चेष्टितं यो नरो नित्यदा आकर्ण्यानुकीर्त्तयेत् शृणोति कीर्त्तयति वा स भक्तिभावतः अघं संसारदुःखं धुनोति नाशयति ॥ ६१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धेऽन्वितार्थे सप्तमोऽध्यायः ॥ ७ ॥



## अथाष्टमोऽध्यायः

मैत्रेय उवाच

सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः । नैते गृहान् ब्रह्मसुता ह्यावसन्नूर्ध्वरेतसः ॥ १ ॥

अष्टमे खिन्नो विमातुर्वाचा गत्वा ध्रुवो हरिम् । तपसाऽऽराधयत्तत्र श्लोका नयनहस्तिनः ( ८२ ) ॥

विश्वे तु वाचेति साङ्गाग्रगजनागा ( ८८ ) अनुष्टुभः ॥ ८ ॥

एवं तावन्मनुकन्यान्वयोक्त्यैव मरीच्यादीनां ब्रह्मपुत्राणां वंशा वर्णिताः । तत्रावशिष्टं किञ्चिदाह—सनकाद्या इति । सनकाद्याश्चत्वारः नारदश्च ऋभुः हंसः अरुणिर्यतिः एते ब्रह्मणः सुताः ऊर्ध्वरेतसः नैष्ठिकब्रह्मचारिणो जाताः । अतः गृहान् नावसन् गार्हस्थ्यं नाङ्गीचक्रुः । अत एव तेषां सर्गो न जातः ॥ १ ॥ अधर्मोऽपि ब्रह्मपुत्रस्तस्य वंशमाह—मृषेति । हे शत्रुहन् विदुर ! अधर्मस्य भार्या मृषा मिथ्याभाषणरूपाऽऽसीत् । सा दम्भं परप्रतारणात्मकं पुत्रं मायां च परप्रतारणोचितां चेष्टामित्येव मिथुनं युग्ममसूत । तत्तु मिथुनं निर्ऋतिः राक्षसो यतोऽप्रजः सन्ततिरहितः । असिजभाव आर्षः । अतो जगृहे स्वगृहं नीतवान् ॥ २ ॥ तयोरिति । हे महामते ! तयोर्दम्भमाययोः सोदरयोरप्यधर्मांशत्वाद्दाम्पत्यापन्नयोर्लोभः पुत्रः निकृतिः शठता कन्या च समभवत् । ताभ्यां क्रोधश्च हिंसा चाभवताम् । यत याभ्यां कलिः कलहः पुत्र तस्य स्वसा दुरुक्तिश्च समभवत् ॥ ३ ॥ दुरुक्ताविति । हे सत्तम ! दुरुक्तौ स्वभार्यायां कलिर्भियं कन्यां मृत्युं च पुत्रमाधत्त उत्पादितवान् । तथा तयोर्मृत्युभियोरपि यातना कन्या निरयश्च पुत्र एवं मिथुनं जज्ञे जातम् ॥ ४ ॥ संग्रहेणेति । हे अनघ निर्दोष विदुर ! तव मया प्रतिसर्गोऽनुसर्ग एव यद्वा प्रतिसर्गः प्रलयः अधर्मस्य प्रलयहेतुत्वात्तत्सर्गः प्रतिसर्गः अन्यसर्गहानिकरः अत एव बीभत्सत्वात् विस्तृतत्वेऽपि संग्रहेण संक्षेपेण आख्यातः कथितः । एतदधर्मवंशाख्यानं वर्जनद्वारा पुण्यहेतुत्वात् पुण्यं पुमान् प्राणी त्रिः श्रुत्वा आत्मनो मनसो मलं पापं मोहं वा विधुनोति नाशयति ॥ ५ ॥ अथेति । हे कुरूद्वह ! अथ अतः पुण्यकीर्त्तेः तथा हरेरंशो ब्रह्मा तदंशादेहाद्धोज्जन्म यस्य यद्वा हरेरंशानां कपिलदत्तयज्ञपृथुऋषभादीनां जन्म यतः तस्य स्वायम्भुवस्यापि मनोर्वंशं पुत्रपौत्रादिसन्ततिं कीर्तये ॥ ६ ॥ प्रियव्रतेति । शतरूपापतेः स्वायम्भुवस्य मनोः प्रियव्रतोत्तानपादौ सुतौ वासुदेवस्य कलयाऽवतीर्णाविति शेषः । जगतो रक्षायां पालने स्थितौ यद्यपि ज्येष्ठत्वात्प्रियव्रतस्य वंशः प्रथमं वक्तुमुचित तथापि स पूर्वं विरक्तस्त्यक्तव्यवहारोऽभूत् ततो ब्रह्माज्ञया राज्ये प्रवृत्तस्ततस्तद्वंशोऽपि पश्चाज्जातोऽतः प्रथमम् उत्तानपादवंशं वर्णयति—जाये इति । सुनीतिः सुरुचिश्च द्वे उत्तानपादस्य जाये अभवताम् तयोर्द्वयोर्मध्ये पत्युः सुरुचिः प्रेयसी तत इतरा सुनीतिर्यस्याः सुतो ध्रुवः सा पत्युर्न प्रेयसी ॥ ७–८ ॥ एकदेति । एकदा सुरुचेः पुत्रमुत्तमसंज्ञमङ्कमारोप्य लालयन् राजा ध्रुवमङ्कमारुरुक्षन्तमारोढुमिच्छन्तं नाभ्यनन्दत । तङार्षः । सुरुचिप्रेमभङ्गभियाऽङ्के नारोपितवान् ॥ ९ ॥ तथेति । तथा अङ्कारोहणं चिकीर्षन्तं सपत्न्यास्तनयं ध्रुवम् अतिगर्विता सुरुचिः राज्ञः शृण्वत एव । अनादरे षष्ठी । सेर्ष्यमीर्ष्यासहितं यथा स्यात्तथा आह स्म ॥ १० ॥

नेति । हे वत्स ! भवान्नृपात्मजः राजपुत्रोऽपि नृपतेर्धिष्ण्यमासनमङ्कं वाऽऽरोढुं नार्हति यत् यस्मात्त्वं मया स्वकुक्षौ न गृहीतो न धृतः ॥ ११ ॥ बाल इति । वत खेदे । त्वं बालः असि यस्य भवतो दुर्लभेऽर्थे राजोत्सङ्गारोहणे मनोरथोऽस्ति स भवान्नूनं निश्चितमेतत् मत्तोऽन्यस्त्रीगर्भे सम्भृतमात्मानं न वेद न जानाति । यद्येवं जानीयात्तदैवं मनोरथं न कुर्यादिति भावः ॥१२॥ तपसेति । यदि त्वं नृपासनमिच्छसि तदा तपसा पुरुषं भगवन्तमाराध्य तस्यानुग्रहेण वरदानेनात्मानं स्वदेहं मे मम गर्भे साधय । इयं भगवदाराधनं नोपदिशति, किन्तु मद्गर्भप्राप्तिसाधनं तपः कृत्वा म्रियस्व येन त्वन्मातरं रुदतीं पश्येयमित्याशयेनास्याः वचः ॥ १३ ॥ मातुरिति । दण्डेन हतः अहिः सर्पो यथा तथा मातुः सपत्न्याः सुदुरुक्तयः अत्यन्तासम्बद्धवाक्यानि ताभिर्हृदि विद्धो ध्रुवः अत एव रुषा श्वसन् ऊर्ध्वश्वासान् विमुञ्चन् प्ररुदन् मिषन्तं सुरुचिचरितं पश्यन्तमपि तत्संकोचात् सन्नवाचं कुण्ठितवाचं तूष्णीं स्थितं पितरं हित्वा मातुः सुनीतेः सकाशं समीपं जगाम ॥ १४ ॥ तमिति । निःश्वसन्तं स्फुरिताधरोष्ठं च तं बालं ध्रुवं सा सुनीतिरुत्सङ्ग उदुह्य आरोप्य सपत्न्या सुरुच्या यत् गदितं वचनं नितान्तं ध्रुवस्य रोदनादेः कारणं तत् पौरमुखात् अन्तःपुरजनमुखान्निशम्य श्रुत्वा विव्यथे व्यथां प्राप ॥ १५ ॥ सेति । सपत्न्याः वाक्यं स्मरती । नुमभाव आर्षः । शोक एव तापकत्वाद्दावाग्निस्तेन दावाग्नि-

मध्यगता लतेव मूर्च्छिता सा बाला धैर्यमुत्सृज्य त्यक्त्वा विललाप दुःखनिर्वचनपूर्वकं रोदनं चकार। सरोजश्रिया दृशा कमलवत्सुन्दरेण नेत्रेण बाष्पकलामश्रुधारामुवाह ॥ १६ ॥ दीर्घमिति। दीर्घं श्वसन्ती। तुमार्षः। राजकृतापमानस्यापरिहार्यत्वात्तद्धेतुवृजिनस्य दुःखस्य पारमन्तमपश्यती। तुमभाव आर्षः। बालकं ध्रुवमाह स्म—हे तात! परेषु सुरुच्यादिष्वमङ्गलं वक्रोक्त्याऽपराधं मा अमस्थाः। अडार्षः। यत् यस्मात् यो जनः परदुःखदः तत् स्वदत्तं दुःखमेव भुङ्क्ते अतोऽस्माकं प्रारब्धमेवेदक्। तस्याः कोऽपराध इति भावः ॥ १७ ॥ सत्यमिति। त्वं राजासनयोग्यो नेति सुरुच्या सत्यमभिहितमुक्तं यतो दुर्भगाया मम उदरे त्वं गृहीतः सम्भूत तस्या एव स्तन्येन वृद्धश्च यां मामिडस्पतिर्भूपतिर्भार्येति वोढुमङ्गीकर्तुं यद्वा भार्येति बुद्ध्या रक्षणभारं वोढुं विलज्जते वाशब्दादासीत्यपि वोढुं विलज्जते ॥ १८ ॥

आतिष्ठेति। हे तात! पितृभार्यात्वेन मात्रा समा समाना मम सपत्नी तया मम तव च शत्रुभूतयापि तदाराध्य पुरुषमित्यादि यत् अव्यलीकं सत्यं वचः उक्तं तत् विमत्सरः सुरुच्यां मात्सर्यरहितः सन् त्वम् आतिष्ठ। अतो यदि उत्तमो यथा तथा अध्यासनं राज्यमिच्छसे। तङार्षः। तदा अधोक्षजस्य हरेः पादपद्ममाराधय। यद्वा आराधयेत्यादिसुरुचिवचोऽनुवादः। तथा च आराधयेत्यादि यत् समात्रा उक्तं तदपि अव्यलीकं सत्यमेव अत तदेव त्वमातिष्ठेति ॥ १९ ॥ अधोक्षजं विशिनष्टि—यस्येति। विश्वस्य विभावनाय पालनाय आत्ता स्वीकृता गुणाभिव्यक्तिः सत्त्वगुणाधिष्ठातृत्वं येन तस्य यस्याधोक्षजस्य जितः वशीकृतः आत्मा मनः श्वसनः प्राणश्च यैस्तैरभिवन्द्यं सत्कृतम् अङ्घ्रिपद्मं चरणकमलं परिचर्य निषेव्य अजो ब्रह्मा पारमेष्ठ्यं सर्वोत्कृष्टं पदमध्यतिष्ठत् प्राप्तवान् ॥ २० ॥ तथेति। तथा ब्रह्मणा यथा भगवन्तमाराध्योत्कृष्टं पदं प्राप्तं तथा वो युष्माकं पितामहो भगवान् मनुर्यं हरिमेकमत्या एकाग्रबुद्ध्या सर्वान्तर्यामिदृष्ट्या पुरुदक्षिणैर्मखैरिष्ट्वा संपूज्य अन्यतो देवान्तरात् भगवदाराधनव्यतिरिक्तसाधनतो वा दुरवापं प्राप्तुमशक्यं भौमं मन्वन्तराधिपत्यजं दिव्यं स्वर्गसम्बन्धि च सुखम् अथ देहत्यागानन्तरमापवर्ग्यं मोक्षसुखं च अभिपेदे प्राप्तवान् ॥ २१ ॥ तमेवेति। हे वत्स! भृत्यवत्सलं मुमुक्षुभिरपि मोक्षप्राप्त्यर्थं मृग्या अन्वेषणीया पदाब्जयोः पद्धतिर्मार्गो यस्य तं पूरुषं भगवन्तमेव आश्रयं शरणं गच्छ। तथा अनन्यभावे नास्त्यन्यस्मिन् वस्तुमात्रे भावश्चिन्तनं यस्य तस्मिन् निजधर्मैः पाञ्चवार्षिकस्यानुपनीतस्य ते कर्मानधिकारात् भक्तिधर्मैर्भाविते शोधिते मनसि तमेव पूरुषमवस्थाप्य भजस्व ॥ २२ ॥ नान्यमिति। अङ्ग हे ध्रुव! पद्मपलाशवत् भक्तजनतापहारके शोभमाने लोचने यस्य तस्मात् अन्यं कञ्चनापि ते तव दुःखच्छिदं दुःखनिवर्त्तकं न मृगयामि विचारेण न पश्यामि। यः इतरैः ब्रह्मादिभिः प्रसादार्थं विमृग्यमाणया अन्विष्यमाणयाऽपि लीलया हस्ते गृहीतं दीपवत्पद्मं यया तया श्रिया स्वभिलषितप्रसादार्थं यो मृग्यतेऽपेक्ष्यते ॥ २३ ॥ एवमिति। एवमुक्तप्रकारकं मातुः संजल्पितं रोदनपूर्वकं कथितमर्थस्य स्वाभिलषितपदार्थस्यागमः प्राप्तिर्यस्मात्तथाभूतं वच आकर्ण्य श्रुत्वा आत्मना बुद्ध्या आत्मानं मनः संनियम्य धैर्ययुक्तं कृत्वा ध्रुवः पितुः पुरान्निश्चक्राम निर्जगाम ॥ २४ ॥ नारद इति। सर्वज्ञत्वात् स्वस्थाने स्थित एव तत् सुनीत्युपदेशवचनमाकर्ण्य श्रुत्वाऽस्य ध्रुवस्य चिकीर्षितं कर्तुमिष्टं भगवदाराधनं ज्ञात्वा विस्मितः संयत्रागत्याऽघघ्नेन पापनिवर्तकेन स्वपाणिना तस्य मूर्द्धनि स्पृष्ट्वा स्वचेतस्येवं प्राह स्म ॥ २५ ॥ अहो इति। मानभङ्गममृष्यतामसहमानानां क्षत्रियाणामहो तेजः आश्चर्यजनकः प्रभावः कुतः यत् यस्मादयं ध्रुवो बालोऽपि समातुः मातुः सपत्न्याः सुरुच्या असद्वचः तिरस्कारवचनं हृदा धत्ते धारयति ॥ २६ ॥

नाधुनेति। हे पुत्रक! अधुनापि आयुषः पञ्चवर्षातीतेऽपि क्रीडनादिषु सक्तस्य रतस्य कुमारस्य ते तव अवमानं संमानं वापि न लक्षयामः अवमानसंमानानुसन्धानं न पश्यामः ॥ २७ ॥ विकल्प इति। विकल्पे मानापमानानुसन्धाने विद्यमानेऽपि पुंसोऽसंतोषहेतवः अपमानादयस्तत्कर्त्तारः शत्रवो वा मोहमृते हि निश्चयेन भिन्ना न सन्ति। मोहकल्पिता एव ते। कुतः यत् यस्माल्लोके सुखदुःखादि सर्वम् अपमानादि वा निजकर्मभिर्भवति ॥ २८ ॥ परितुष्येदिति। यस्मात् स्वकर्मनिर्मितमेव लोको भुङ्क्ते। ततस्तस्मात् हे तात! स्वकर्मानुसारेण सुखदुःखादिकमीश्वरो ददात्येवातस्तामीश्वरगतिं वीक्ष्य ईश्वरानुकूल्यं विना नोद्यमाः फलदा इति ज्ञात्वा यावद्दैवेन स्वप्रारब्धेन तदनुसारेणेश्वरेण वोपसादितं प्रापितं तावन्मात्रेण बुधः पुरुषः परितुष्येत् सन्तोषमेव कुर्यात् ॥ २९ ॥ अथेति। अथ मदुक्तात् भिन्नप्रकारेण मात्रोपदिष्टेन योगेनोपायेन यस्य भगवतः प्रसादं त्वमवरुरुत्ससि अवरोद्धुं प्राप्तुमिच्छसि स देवो वै निश्चयेन मम पुंसां दुराराध्यो दुःखेनाराध्यो मतः ॥ ३० ॥ मुनय इति। निःसङ्गेन सर्वतः सङ्गत्यागेन तीव्रयोगेन निरन्तरप्राणायामादिना युक्तेनापि समाधिना तत्राप्यनेकजन्मभिर्यस्य पदवीं मार्गं मृगयन्तोऽपि मुनयो मननशीला मनस्विनोऽपि तां पदवीमपि न विदुः। स पुंसां दुराराध्य इति पूर्वेणैव संबन्धः ॥ ३१ ॥ अत इति। अतो हेतोः तवैषः तदाराधनाग्रहलक्षणो निष्फलो निर्बन्धो हठो निवर्त्ततामत्र त्वया हठो न कार्य इत्यर्थः। यतः श्रेयसां काले धर्मानुष्ठानोपयुक्ते काले वयसः प्रौढत्वे समुपस्थिते सति भवान् यतिष्यति यत्नं करिष्यति। तङभाव आर्षः ॥ ३२ ॥ यस्येति। सुखदुःखयोर्मध्ये यस्य पुरुषस्य यत् सुखं दुःखं वा दैवविहितं दैवेनेश्वरेण स्वप्रारब्धानुरूपं दत्तं स देही तेन सुखदुःखान्यतरेणात्मानं तोषयन् स्वप्रारब्धमेव मया

भुज्यतेऽत्रान्यस्य कोऽपराध इति सुखे सति पुण्यं क्षीयते दुःखे पापं क्षीयत इति वा मनःसंतोषं कुर्वन् तमसः संसारस्य पारमृच्छति प्राप्नोति ।। ३३ ।। गुणाधिकादिति । स्वापेक्षया विद्याधनाभिजनादिगुणैरधिकात् । ल्यब्लोपे पञ्चमी । सर्वत्र गुणाधिकं पुरुषं दृष्ट्वा मुदं लिप्सेत् । तस्मिन् प्रीतिं कुर्यात् नासूयाम् । तथा स्वापेक्षया गुणाधमं दृष्ट्वा अनुक्रोशं तत्र दयां कुर्यात् न तिरस्कारम् । तथा स्वसमानगुणं दृष्ट्वा तत्र मैत्रीम् अन्विच्छेत् कुर्यान्न स्पर्धाम् । एवं कुर्वन् तापैर्लौकापमानादिजनितान्तःकरणवृत्तिविशेषैर्नोभिभूयते न पीड्यते ।। ३४ ।। पूर्वजन्मनि कश्चित्तपस्वी राजकुमारं दृष्ट्वा तत्र स्पृहावानभूत् स एव ध्रुवो जात इति पुराणान्तरम् । ततश्च नारदेन प्रशमे दर्शितेऽपि ध्रुवस्येच्छा न निवृत्तेत्याह—सोऽयमिति । योऽस्मद्विधैर्द्रष्टुमप्यशक्यः सोऽयमात्मसंतोपलक्षणः शमः सुखदुःखाभ्यां हतः तिरस्कृतविवेकः आत्मा येषां तेषां मादृशानां पुंसामनुग्रहाय भवता कृपया दर्शितः ।। ३५ ।।

अथापीति । अथापि तथापि सः शमः क्षात्रं क्षत्रियस्वभावं घोरमसहनलक्षणमुपेयुषः प्राप्तवतोऽत एवाविनीतस्य भवता विनये शिक्षितेऽपि तेन रहितस्य मे मम सुरुच्या दुर्वचांस्येव पीडाकरत्वाद्बाणास्तैर्भिन्ने हृदि विदीर्णमृद्भाजन इव न श्रयते न तिष्ठति । एतेन शौर्यहीना ब्राह्मणादय एवोपशमयोग्या न त्वहमिति सूचितम् ।। ३६ ।। पदमिति । हे ब्रह्मन् ! अस्मत्पितृभिर्मन्वादिभिरन्यैरप्यनधिष्ठितमप्राप्तं त्रिभुवनेषु उत्कृष्टं पदं स्थानं जिगीषोः जेतुमिच्छोर्मे तस्य साधु सुकरं वर्त्म ब्रूहि ।। ३७ ।। नूनमिति । यो वीणां वितुदन् वादयन् जगतो हिताय अर्कवत् अटते भ्रमति । तत्रार्थः । स भवान् नूनं निश्चितं भगवतः परमेष्ठिनो ब्रह्मणः अङ्गजः पुत्रः नारद एवास्ति वीणादिलिङ्गात् । अङ्कज इति पाठे उत्सङ्गाज्जातः । यद्वा पूर्वश्लोकोक्तार्थे हेतुमाह—परमेष्ठिनः अङ्गजः यो भवान् ननु जगतो हितायाटति अतः त्रिभुवनोत्कृष्टपदप्राप्तिमार्गं ब्रूहीति संबन्धः । यद्वा परमेष्ठिनोऽङ्गजोऽपि भवान् यदटति तल्लोकहितायैव अतो ममापि हितं करिष्यत्येव ।। ३८ ।। इतीति । इत्येवं ध्रुवेणोदाहृतं कथितं वाक्यमाकर्ण्य प्रीतः भगवान् सर्वज्ञो भगवदिच्छैवैवमिति ज्ञात्वा नारदस्तदा तस्मिन्नेव समये तं बालं प्रति सद्वाक्यं तन्मनोरथसाधनपरं वाक्यम् अनुकम्पया प्राह स्म ।। ३९ ।। जनन्येति । यस्तव जनन्याऽभिहितः कथितः स एव भगवदाराधनलक्षणः ते तव निःश्रेयसस्य अभिप्रेतार्थस्य पन्थाः मार्गः वासुदेवः सर्वान्तर्यामी च तत्प्रवणात्मना तदेकाग्रचित्तेन तं भज ।। ४० ।। धर्मेति । यः पुरुषः धर्मार्थकाममोक्षाख्यं समुदितं प्रत्येकं वा आत्मनः श्रेय इच्छेत् तस्य तत्प्राप्तौ हरेः पादसेवनमेकमेव कारणं नान्यत् ।।४१।। तदिति । तत् तस्मात् हे तात ! ते तव भद्रं भवतु । त्वं भगवदाराधनार्थं मधुवनाख्यं शुचि पवित्रं पुण्यं पुण्यप्रदं यमुनायास्तटं गच्छ, तस्य सिद्धक्षेत्रेषु मुख्यत्वात् । यत्र मधुवने नित्यदा सर्वदा हरेः सान्निध्यमस्ति हरिरत्र नित्यं वसति ।। ४२ ।। स्नात्वेति द्वयम् । तस्मिन् मधुवने निवसन्ननुसवनं शिवे परमावने कालिन्द्याः सलिले स्नात्वा उचितानि अध्ययनाद्यभावेऽपि आत्मन उचितानि देवतानमस्कारादीनि कृत्वा इति यमनियमा उक्ताः । चैलाजिनकुशादिभिः स्वस्तिकादिभिश्च कल्पितमासनं येन तथा भूत्वा त्रिवृता पूरकरेचककुम्भकात्मकेन त्रिविधेन प्राणायामेन शनैः प्राणेन्द्रियमनोमलं प्राणमनसोर्मलं चाञ्चल्यम् इन्द्रियमलं विषयोन्मुखत्वं व्युदस्य निरस्य इति प्राणायामप्रत्याहारौ । धारणामाह—गुरुणा धीरेण मनसा गुरुं सर्वोत्तमं परमपूज्यं भगवन्तमभिध्यायेदिति प्रथमपुरुषप्रयोगेण न केवलं त्वदर्थेयं रीतिः किन्त्वन्योऽपि यः कश्चिच्छ्रेयोर्थी स एवं कुर्यादिति ।। ४३–४४ ।।

प्रसादेति । प्रसादाय वरदानाय अभिमुखमुद्युक्तं ध्यायेदित्यस्यैव क्रियापदस्य सर्वत्रान्वयः । शश्वत् सर्वदा प्रसन्नं वदनं मुखमीक्षणे च यस्य तं सुष्ठु नासा यस्य तं सुष्ठु भ्रुवौ यस्य तं चारुणी मनोहरे कपोले यस्य तं सुरेषु देवेषु सुरेभ्यो वा सुन्दरम् ।।४५।। तरुणमिति । तरुणं युवानं रमणीयानि मनोहराणि अङ्गानि करचरणादीनि यस्य तम् अरुणमोष्ठमीक्षणे च आधारयतीति तथा तम् । यद्वा अरुणानि औष्ठः ऊर्ध्वोष्ठः ईक्षणे अधरः अधरोष्ठश्च यस्य तम् । प्रणतानां शरणागतानामाश्रयणमाश्रयभूतं नृम्णं सुखकरं सर्वपुरुषार्थभूतधनं वा करुणायाः कृपाया अर्णवं समुद्रमत एव शरण्यं शरणयोग्यमाश्रयणीयम् ।। ४६ ।। श्रीवत्साङ्कमिति । श्रीवत्साङ्कं घनश्यामं पुरुषं पुरुषाकारं वनमालिनं शङ्खचक्रगदापद्मैः अभिव्यक्ताश्चत्वारो भुजा यस्य तम् ।। ४७ ।। किरीटिनमिति । किरीटिनं कुण्डलिनं केयूरवलयाभ्यामन्वितं युक्तं भूषितं कौस्तुभाभरणं यस्यां सा कौस्तुभस्यापि आभरणभूता वा ग्रीवा यस्य तं पीते कौशेये कोशजन्ये वाससी यस्य तम् ।। ४८ ।। काञ्चीति । काञ्चीकलापेन क्षुद्रघण्टिकासमूहेन पर्यस्तं परिवेष्टितं लसन्ती काञ्चनमये नूपुरे यस्य दर्शनीयतमं शान्तं मनोनयनयोर्वर्द्धनं हर्षकरम् ।। ४९ ।। पद्भ्यामिति । नखान्येव मणयस्तेषां श्रेणिः पङ्क्तिस्तया विलसद्भ्यां पद्भ्यां हृत्पद्मकर्णिकालक्षणं धिष्ण्यं मध्यस्थानमाक्रम्य समर्चतां भक्तिपूर्वकं पूजयतां निजभक्तानामात्मनि मनसि अवस्थितम् ।। ५० ।। ध्यानमाह—स्मयमानमिति । नियतेन पूर्वोक्तधारणया वशीकृतेन अत एवैकीभूतेन एकाग्रेण मनसा स्मयमानं हसन्तं सानुरागं भक्तविषयकानुरागसहितमवलोकनं यस्य तं वरदर्षभं वरदानां ब्रह्मादीनां मध्ये ऋषभं श्रेष्ठं यथेष्टदातारं भगवन्तमभिध्यायेत् धारणोक्तानि प्रसादाभिमुखत्वादीनि विशेषणानि ध्यानेऽपि द्रष्टव्यानि । यद्वा नान्यानि चिन्तयेत् भूयः सुस्मितं भावयेन्मुखमित्येकादशरीत्या यथोक्तमात्रमेव ।। ५१ ।। समाधिमाह—एवमिति । एवं सुभद्रं परममङ्गलं भगवतो रूपं ध्यायतः पुरुषस्य मनः तूर्णं शीघ्रमेव परया निर्वृत्त्या परमानन्देन भगवता सम्पन्नं मिलितं सत् ततो न निवर्त्तते पृथङ् न

भवति ध्येयं न त्यजति ॥ ५२ ॥ जप्यश्चेति । हे नृपात्मज ! परम उत्कृष्टः अत एव गुह्यः न सर्वतः प्रसिद्धः जप्यः मन्त्रश्च मे मत्तः श्रूयताम् । दक्षिणः कर्णे आधीयताम् उपदिशामीत्यर्थः । यं मन्त्रं सप्तरात्रं प्रपठन् वाचिकं जपन् पुमान् खेचरान् पार्षदान् आकाशगामिनो द्रष्टुमशक्यानपि पश्यति किं पुनरुपांशु मानसं वा ॥ ५३ ॥

मन्त्रमाह—ओमिति । अनुपनीताय सप्रणवोपदेशेन वैष्णवमन्त्रेषु द्विजत्वाद्यवस्थापेक्षा नास्तीत्युक्तम् । मन्त्रेणेति देशकालविभागवित् यस्मिन् देशे यस्मिन् काले यानि योग्यानि द्रव्याणि लभ्यन्ते तैः पूजा कार्येति विभागवित् बुधः अनेन मन्त्रेण देवस्य भगवतो वासुदेवस्य द्रव्यमयीं द्रव्यप्रधानां सपर्यां पूजां विविधैर्द्रव्यैः कुर्यात् ॥ ५४ ॥ द्रव्याण्याह—सलिलैरिति । शुचिभिः शुद्धैः सलिलैः माल्यैः पुष्पैः वन्यैः वनप्रभवैर्मूलफलादिभिः शस्तैः शास्त्रविहितैः अङ्कुरैः दूर्वादिभिः अंशुकैः वन्यैरेव भूर्जत्वगादिभिः भगवतः प्रियया तुलस्या च प्रभुमर्चयेत् ॥ ५५ ॥ लब्ध्वेति । द्रव्यमयीं शिलादिमयीमर्चां प्रतिमां लब्ध्वा सम्पाद्य क्षित्यादिषु वा प्रभुं भगवन्तमर्चयेदिति सम्बन्धः । आदिपदेनादिग्यमण्डलाग्निविप्रगुरुग्रहणम् । आभृतो वशीकृत आत्मा चित्तं येन स तथा अत एव शान्तो विक्षेपरहितः मुनिर्मननपरः सावधानः यतवाक् गृहीतमौनः मितं वन्यं मूलफलादि भुङ्क्ते तादृशः स्यात् । वन्यस्य वृषादिदुःखप्रदकृष्याद्यनुत्पन्नत्वेन शुद्धत्वात् ॥ ५६ ॥ स्वेच्छेति । अचिन्त्यया निजमायया शक्त्या स्वेच्छयाऽवताराणां चरितानि तैः उत्तमश्लोको भगवान् यद्यद्धृदयङ्गमं मनोहरं पराक्रमं करिष्यति तत् शास्त्रे प्रसिद्धं ध्यायेत् तदानीं प्रथमे स्वायम्भुवे मन्वन्तरेऽवतारप्राचुर्याभावात् करिष्यतीति भाविनिर्देशः ॥ ५७ ॥ परिचर्या इति । भगवतो यावत्यः पूर्वैः सेविताः सेवनं कारिताः कर्तव्यत्वेन प्रदर्शितास्ता गन्धचन्दनछत्रचामराद्या द्रव्यवतीः मन्त्रेणैव ध्याता मूर्तिर्यस्य तस्मै मन्त्रमूर्तये तं प्रसादयितुं मन्त्रहृदयेनैव द्वादशाक्षरोच्चारणेनैव मनसा प्रकल्प्यानीतैरेवोपचारैरित्यर्थः । विरक्तस्य वस्तुतस्तत्तद्वस्त्वभावात् प्रयुञ्ज्यात् कुर्यात् ।५८। एवमिति द्वयम् । एवमुक्तप्रकारेण मनोगतं दृढतरं यथा तथा कायेन सलिलादिभिः मनसा ध्यानादिभिः वचसा जपादिभिः भक्तिमत्या प्रेमपूर्वकया परिचर्यमाणः सेव्यमानो भगवान् भाववर्धनः भावान् भक्ताभिलषितान् वर्धयतीति सः । अमायिनां दम्भरहितानामत एव सम्यक् प्रेमपूर्वकं भजतां पुंसां देहिनां देहवतां धर्मार्थकामेषु त्रिविधपुरुषार्थेषु यदभिमतं वाञ्छितं तच्छ्रेयो दिशति ददाति ॥ ५९–६० ॥ विरक्तश्चेति । यस्तु इन्द्रियरतौ विषयभोगे विरक्तः सः निरन्तरभावेन अनवच्छिन्नप्रेमलक्षणेन भूयसा भक्तियोगेन अद्धा साक्षात् विमुक्तये तं हरिं भजेत । यद्वा यस्तु इन्द्रियरतौ त्रिवर्गे चकारान्मोक्षेऽपि विरक्तः सः प्रेमलक्षणभक्तियोगेन विशिष्टमुक्तये पार्षदत्वाय भजेतेत्याहुः ॥ ६१ ॥ इत्युक्त इति । नारदेनैवमुक्तो ध्रुवस्तं परिक्रम्य प्रणम्य च पुण्यं पुण्यजनकं प्रतिकल्पमाविर्भावात् हरेश्चरणाभ्यां चर्चितं मण्डितम् । अनेन तत्र भगवतो नित्यं विहारो दर्शितः । मधुवनं ययौ ॥ ६२ ॥ तपोवनमिति । एवं तस्मिन् ध्रुवे तपोवनं मधुवनं गते सति राज्ञः शोकनिवृत्तये मुनिः राज्ञोऽन्तःपुरं प्रविष्टः । तत्र च राज्ञा अर्हितं समर्पितमर्हणमर्घादि यस्मै सोऽर्हितार्हणकः सुखेनासीनस्तं राजानमुवाच । स्वयं जानन्नपि तन्मुखाच्छ्रोतुं पृष्टवान् ॥ ६३ ॥

राजन्निति । हे राजन् ! त्वं परिशुष्यता मुखेन युक्तः दीर्घं किं ध्यायसे चिन्तयसि । तङार्षः । अर्थेन सहितः कामो धर्मो वा किन्न रिष्यते न नश्यति इति सवितर्कः प्रश्नः । तङार्षः ॥ ६४ ॥ सुत इ त । हे ब्रह्मन् ! स्त्रैणेन स्त्रीवश्येन अकरुणात्मना निर्दयेन मे मया पञ्चवर्षः अत एव बालकः अपि गुणैर्महान् कविर्बुद्धिमांश्च सुतो ध्रुवः मात्रा सह निर्वासितः निर्वसन्नुपेक्षितः अतो निर्वासितः । मात्रा सहेति तु तस्या अप्युपेक्षणात् ॥६५॥ अपीति । हे ब्रह्मन् ! अर्भकं बालमत एव मार्गे चलनात् श्रान्तं क्षुधितं चात एव परिम्लानं शुष्कं मुखाम्बुजं यस्य तं शयानमनाथं रक्षकरहितं वृका मा स्मादन्ति किंस्विन्न खादन्ति अपीति सम्भावनायामेवं सम्भवतीत्यर्थः ॥ ६६ ॥ अहो इति । बत खेदे । अहो आश्चर्ये । स्त्रीजितस्य मम स्त्रीवश्यत्वेन जातं दौरात्म्यमनार्यत्वम् उपधारय पश्य । प्रेम्णा अङ्कमारुरुक्षन्तमारोढुमिच्छन्तं बालं योऽहमसत्तमः स्त्रिया जडीकृतो नाभ्यनन्दम् ॥ ६७ ॥ मा मेति । हे विशांपते राजन् ! देवेन श्रीहरिणा गुप्तमात्मसात्कृत्वा रक्षितं स्वतनयं तस्य स्वतनयस्य प्रभावमविज्ञाय वर्त्तमानस्त्वं मा शुचः तस्य शोकं मा कार्षीः । च्लेरङ् आर्षः । यद्वा "शुचिर् पूतीभावे" इत्यस्य इरित्वात् च्लेरङ्धातोरनेकार्थता । यस्य ध्रुवस्य यशः कर्तृ जगत् कर्म आवृङ्क्ते व्याप्नोति सामीप्याद्वर्तमानवन्निर्देशः ॥ ६८ ॥ सुदुष्करमिति । हे राजन् ! लोकपालैरिन्द्रादिभिरपि सुदुष्करमसाध्यं कर्म भगवदाराधनं कृत्वा प्रभुस्तत्करणे समर्थस्ततो वरान् प्राप्य तव यशो विपुलयन् विस्तारयन्नचिरत एष्यति प्राप्स्यति ॥ ६९ ॥ इतीति । पाठ एवान्वयः । विश्रुतयेत्यत्र विश्रम्भेति वा पाठः ॥ ७० ॥ अथ ध्रुववृत्तमाह—तत्रेति । तत्र मधुवने ध्रुवः प्रयतः पूतः समाहितः सावधानश्च सन् यस्यां तत्र प्राप्तस्तां विभावरीं रात्रिमुपोष्य ऋष्यादेशेन नारदोक्तप्रकारेण पूरुषं पुरुषोत्तमं भगवन्तं पर्यचरत् सेवितवान् ॥७१॥ त्रिरात्रान्त इति । त्रिरात्रान्ते त्रिरात्रान्ते कपित्थानि बदराणि चाशनं यस्य स तथा तदपि न यथेष्टं किन्तु आत्मनः शरीरस्य वृत्तिर्वर्तनं स्थितिस्तदनुसारेण यावता अशितेन शरीरनिर्वाहः स्यात्तावदश्नन् हरिं चार्चयन् मासं निन्ये ॥ ७२ ॥ द्वितीयमिति । अर्भको ध्रुवः षष्ठे षष्ठे दिने हिंसापरिहारार्थं स्वयं शीर्णैः पतितैः शुष्कैस्तृणपर्णादिभिः कृतान्नः कृताहारः सन् द्वितीयं च मासं नयन् विभुं व्यापकं भगवन्तं वासुदेवमभ्यर्चयत् । आडभावश्चार्षः ॥ ७३ ॥

तृतीयमिति । तृतीयं च मासमानयन् ईषद्विनायासेन नयन् नवमे नवमे अहनि दिवसे अब्भक्षः सन्नुत्तमश्लोकं भगवन्तं समाधिना तदेकप्रवणचित्तेन उपाधावत् अचिन्तयत् । यद्वा नवमे नवमेऽहनि अब्भक्ष उत्तमश्लोकमुपाधावत् । एवं तृतीयं मासं च अनयत् इत्यन्वयः । प्रतिमाससमाहारसंकोचं तपोऽतिरेकं च कृतवानित्यर्थः ॥ ७४ ॥ चतुर्थमिति । चतुर्थमपि मासमानयत् इत्यनुषङ्गः । द्वादशे द्वादशेऽहनि वायुभक्षः जितश्वासश्च सन् देवं भगवन्तं ध्यायन् देहमधारयत् । यद्वा अत्रापि भगवन्तं ध्यायन् देहमधारयत् । एवं चतुर्थमासमनयदिति ॥ ७५ ॥ पञ्चम इति । पञ्चमे मासि अनुप्राप्ते सति वायुभक्षणमपि त्यक्त्वा जितश्वासः कृतकुम्भको नृपात्मजो ध्रुवोऽक्षरं ब्रह्म ध्यायन् एकेन पदा स्थाणुरिवाचलस्तस्थौ ॥ ७६ ॥ सर्वत इति । ततश्च भूतानि भूतकार्याणि शब्दादीनि इन्द्रियाणि चाशेरते यत्र तत् मनः सर्वतो विषयत आकृष्य हृदि भगवतो रूपं ध्यायन्नतोऽपरं किञ्चनापि नाद्राक्षीत् । यद्वा भूतानां कार्येष्विन्द्रियेषु न शेते न विषयीभवति तथाभूतमति भगवद्रूपविशेषणम् । यद्वा भूतेन्द्रियाणि आशेरते न तु जाग्रति यत्र तेषामगम्यमित्यर्थः ॥ ७७ ॥ आधारमिति । प्रधानपुरुषयोरपीश्वरं कारणमत एव महदादीनामप्याधारमक्षरं ब्रह्म ध्यानेन प्रादुर्भूतं धारयमाणस्य सतो ध्रुवस्य त्रयो लोकास्तस्य तेजः सोढुमशक्नुवन्तश्चकम्पिरे कम्पिता जाताः ॥ ७८ ॥ यदेति । स पार्थिवाभिको राजपुत्रो ध्रुवो यदा एकपादेन तस्थौ तत्र तदा तस्याङ्गुष्ठेन निपीडिता आक्रान्ता सती मही इभेन्द्रेण धिष्ठिता आक्रान्ता । अलोप आर्षः । तरीर्नौर्यथा पदे पदे सव्यतो दक्षिणतश्च नमति तथा अर्द्धम् अर्द्धदेशं व्याप्य ननाम । "देशश्चाकर्मणां कर्मसंज्ञा" इति कर्मत्वम् इत्याहुः । स्वामिपादास्तु अंशांशिनोरभेदविवक्षया महीसामानाधिकरण्यं समांशवाच्यर्द्धशब्दस्य नियतक्लीवत्वात्तथा प्रयोग इति प्राहुः ॥ ७९ ॥ तस्मिन्निति । असुं प्राणं मुखनासिकादि तद्द्वारं च निरुध्य आत्मन्येकीकृत्य आत्मनः सकाशात् अनन्यया धिया अभेददृष्ट्या विश्वात्मकमक्षरं ब्रह्म तस्मिन् ध्रुवेऽभिध्यायति सति भृशमत्यन्तं निरुच्छ्वासनिपीडिताः श्वासनिरोधेन पीडिताः सन्तो लोकपालैः सहिता लोकाः त्रिलोकस्था जनाः अन्यच्छरणमपश्यन्तो हरिमेव शरणं ययुः । व्यष्टिसमष्ट्योरैक्यधिया विश्वात्मकस्वप्राणनिरोधे कृते मुख्यस्य प्राणस्य निरोधात् सर्वप्राणिप्राणनिरोधो जातः ॥ ८० ॥ नैवमिति । हे भगवन् ! चराचररूपस्याखिलसत्त्वधाम्नः सर्वप्राणिनां शरीरस्य एवमेकदा प्राणरोधं न विदामः न विद्मः । शपः अलुग्गुणाभावश्चार्षः । अतः वयं शरण्यं शरणागतरक्षकं त्वां शरणं प्राप्ताः । अतः तत् तस्मात् प्राणनिरोधजनितात् वृजिनात् क्लेशात् नोऽस्माकं विमोक्षं विधेहि कुरु ॥ ८१ ॥ मा भैष्टेति । मा भैष्ट यूयं भयं मा कुरुत । स्वकीयं धाम गृहं प्रति यात गच्छत । औत्तानपादिः उत्तानपादस्य पुत्रो मयि विश्वात्मके सङ्गतः ऐक्यं प्राप्तः आत्मा स्वरूपं यस्य तथाविधः सन् तपस्यति अतः यतो हि तपसो वो युष्माकं प्राणनिरोध आसीत् जातस्तस्माद् दुरत्ययात् मत्प्रसादं विना विघटयितुमशक्यात् तपसः सकाशात् बालमहं निवर्तयिष्ये । यद्वा मा भैष्ट स्वधाम प्रतियात बालं ध्रुवं तपसा निवर्तयिष्ये यतो ध्रुवाद्वः प्राणनिरोध आसीत् स औत्तानपादिर्मयि सङ्गतात्मा अतः स कमपि न जिघांसति ॥ ८२ ॥ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायश्चतुर्थस्याष्टमे निरमादिमाम् ॥

इति श्रीभागवते चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां अष्टमोऽध्यायः ॥ ८ ॥

—:❀:—

# अथ नवमोऽध्यायः

मैत्रेय उवाच

त एवमुच्छिन्नभया उरुक्रमे कृतावनामाः प्रययुस्त्रिविष्टपम् ।
सहस्रशीर्षाऽपि ततो गरुत्मता मधोर्वनं भृत्यदिदृक्षया गतः ॥ १ ॥

नवमे तु ध्रुवो लब्ध्वा वरं यातोऽन्तिकं पितुः । तेनाकारि नृपस्तत्र श्लोकाः षष्टिस्तथाष्ट ( ६८ ) च ॥
उवाचनवकं ( ९ ) चात्राशीतिः सैका ( ८१ ) अनुष्टुभः ॥ ९ ॥

त एवमिति । ते इन्द्रादयो लोकपाला एवं भगवद्वाक्यश्रवणेन उत्सन्नं गतं भयं येषां ते उरुक्रमे भगवति कृतावनामाः कृतप्रणामाः सन्तः त्रिविष्टपं स्वर्गं ययुः । ततस्तदनन्तरमेव सहस्रशीर्षा भगवानपि भृत्यस्य स्वसेवकस्य ध्रुवस्य दिदृक्षया गरुत्मता गरुडेन मधोर्वनमागतः सहस्रशीर्षेति गर्भोदशायिना सहाभेदात् तदानीन्तनोऽवतारः पृश्निगर्भो भागवतामृतादवगन्तव्यः ॥ १ ॥ स वा इति । स वै ध्रुवो योगविपाकेन प्राणायामादिदार्ढ्येन तीव्रया निश्चलया धिया हृदये भगवन्तं पश्यन् यदैनं बहिरागतमपि अन्तर्दृष्टित्वान्न ददर्श तदा तस्य सर्वकार्यं तु बहिष्ठेनैव रूपेण सेत्स्यतीत्यन्तःस्थितौ प्रयोजनाभावात् तडित्प्रभं हृत्पद्मकोशे स्फुरितमपि रूपं भगवान् झटिति तिरोहितवांस्तदा सहसैव तदपि रूपं तिरोहितमुपलक्ष्य व्युत्थितः सन् तदवस्थं यादृशमन्तःस्फुरितं तादृशं रूपं बहिः स्थितं ददर्श ॥ २ ॥ तद्दर्शनेनेति । यस्य भगवतो दर्शनेन आगतं प्राप्तं साध्वसं सम्भ्रमो यस्य सोऽर्भको बालो ध्रुवो अङ्गं शरीरं क्षितौ दण्डवद्विनमय्य आनतं कृत्वा अवन्दत । ततश्च दृग्भ्यां प्रपश्यन् प्रपिबन्निव लक्षितः आस्येन मुखेन चुम्बन्निव लक्षितः भुजैराश्लिषन्निव लक्षितः । आश्लिषन्निति तौदादिकत्वमार्षम् । प्रपिबन्निवावन्दत इत्याद्यनुषङ्गो वा ॥ ३ ॥ स इति । अस्य ध्रुवस्य सर्वस्य जगतश्च हृद्यवस्थितः स हरिः तं ध्रुवं कृताञ्जलिं विवक्षन्तं स्वगुणान् वक्तुमिच्छन्तं तथापि बालकत्वादतद्विदं तान् स्वगुणान् स्तुत्यादिकं वा अजानन्तं ज्ञात्वा तस्य सामर्थ्यसिद्धये ब्रह्ममयेन देवात्मकेन कम्बुना शङ्खेन कृपया कपोले पस्पर्श ॥ ४ ॥ स वा इति । तदैव शङ्खस्पर्शक्षण एव तां दैवीं देवो भगवान् तद्विषयां गिरं प्रतिपद्य प्रतिपादितां गिरमिति पाठे भगवता प्रतिपादितां गिरं प्रतिपद्येति शेषः । परितो ज्ञातः परात्मनोर्जीवेश्वरयोर्निर्णयो येन सः ध्रुवा क्षितिः स्थानं यस्येति भाविनिर्देशः स वै ध्रुवः भक्तियुक्तभावः सन् असत्वरं यथा स्यात्तथा परितः श्रुतं व्याप्तमुरु बृहत् श्रवः यशो यस्य तं भगवन्तमभ्यगृणात् तुष्टाव ॥ ५ ॥

य इति । अखिलशक्तिधरो यो भगवानन्तः प्रविश्य मम प्रसुप्तां निद्रितां लीनामिमां वैखरीं संज्ञां वाचमन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणानिन्द्रियाणि स्वधाम्ना स्वतेजसा चिच्छक्त्या सञ्जीवयति पूर्वसंस्कारोद्बोधनेन स्वस्य व्यापारे प्रवर्तयति । तस्मै भगवते पुरुषाय अन्तर्यामिणे तुभ्यं नमः ॥ ६ ॥ एक इति । हे भगवन् ! उरुगुणया सत्त्वादित्रिगुणात्मिकया मायाख्यया निजशक्त्या इदं महदाद्यशेषं जगत् सृष्ट्वा तदनु प्रविश्य पुरुषः अन्तर्यामी त्वमेक एव तस्या मायायाः असत्सु निद्रितविषयोन्मुखेषु गुणेषु देहेन्द्रियदेवतादिरूपेण परिणतेषु स्थितः सन् यथा विभावसुरग्निरेक एव दारुषु नानाकारवान्नानेव भाति न तु वस्तुतो नाना । तथा त्वं नानेव भासि न तु त्वद्व्यतिरेकेण ज्ञानक्रियाशक्तिधरः कश्चिदस्ति । अतः वागादिशक्तिधरा वह्न्यादयोऽपि त्वमेव ॥ ७ ॥ ब्रह्मणोऽपि ज्ञानं त्वदधीनं का वार्ता वह्न्यादीनामित्याह—त्वद्दत्तयेति । हे आर्तबन्धो ! पूर्वमविदन्नपि भवन्तं शरणं प्रपन्नो ब्रह्मा त्वद्दत्तया वयुना ज्ञानेन इदं विश्वं सुप्तः पुरुषः प्रबुद्धः सन् यथा पश्यति तद्वत् अचष्ट अपश्यत् । अत एव आपवर्ग्याणां मुक्तानामपि चरणमाश्रयं तव पादमूलं कृतविदा सर्वेन्द्रियजीवनेन त्वत्कृतमुपकारं जानता कथं विस्मर्येते न कथमपि अत एवं सर्वोपकारकर्त्तारं त्वां ये न भजन्ति ते मूर्खाः कृतघ्ना एवेति भावः । यद्वा हे आर्त्तबन्धो ! भवत्प्रपन्नो ज्ञानिजनः त्वद्दत्तया वयुनया विश्वमचष्ट । तस्य त आपवर्ग्यस्य मोक्षार्हस्य जिज्ञासुभक्तस्य शरणं तव पादमूलं कृतविदा ज्ञानलाभवता कृतज्ञेन कथं विस्मर्येते । ज्ञानिनोऽपि त्वामभजन्तः कृतघ्ना एवेति । अनेन आर्त्तो जिज्ञासुर्ज्ञानी चेति गीतोक्तास्त्रयो भक्ता उक्ताः ॥ ८ ॥ चतुर्थोऽर्थार्थी मादृशो भक्तस्तु मूढ इत्याह—नूनमिति । भवाप्ययौ जन्ममरणे ततो विमोक्षणं यस्मात् तं कल्पकतरुमिव

सर्वकामदं त्वां येऽन्यहेतोः अर्थकामादिप्राप्त्यर्थमर्चन्ति भजन्ति ते नूनं निश्चयेन तव मायया विमुष्टमतयः मोहितचित्ताः यतः यत्स्पर्शजं तत्तद्विषयसंबन्धजन्यं सुखं तन्नृणां प्राणिनां नरकेऽपि भवति। तत् कुणपोपभोग्यं कुणपेन मृततुल्येन शरीरेण उपभोग्यं सुखमिच्छन्ति। यद्वा कल्पतरुं त्वामर्चन्ति ततश्च कुणपोपभोग्यं सुखमिच्छन्ति॥ ९॥ या निर्वृतिरिति। हे नाथ सर्वस्वामिन्! तनुभृतां देहिनां तव पादपद्मस्य ध्यानात् भवज्जनैः सह भवद्भक्तजनैः सह भवत्कथाश्रवणेन वा या निर्वृतिः य आनन्दः स्यात् भवति सा निर्वृतिः स्वमहिमनि निजानन्दरूपे ब्रह्मण्यपि माभून्न भवति। यद्येवं तर्हि अन्तकस्यासिना कालेन लवनिमेषादिना लुलितात् खण्डितात् विमानात् पततां स्वर्गिणां तु सा निर्वृतिर्नास्तीति किमु वक्तव्यम्॥ १०॥

भक्तिमिति। हे अनन्त! त्वयि भगवति वासुदेवे मुहुः निरन्तरं भक्तिं प्रेमलक्षणां प्रवहतां सातत्येन कुर्वताम् अमलाशयानां शुद्धचित्तानां महतां मे मम प्रकृष्टः सङ्गो भूयात्। येनैवंभूतमहत्प्रसङ्गेन भवद्गुणकथैव अमृतं तस्य पानेन मत्तः परमानन्दे निमग्नः सन् उरूणि व्यसनानि दुःखानि यस्मिंस्तम् अत एवोल्बणं भयंकरं भवाब्धिं संसारविस्मारकत्वात् स्वादु विशेषत्वाच्चामृतं तस्य पानेन मत्तः परमानन्दे निमग्नः सन् भवाब्धिं संसारसमुद्रमञ्जसा अनायासेनैव नेष्ये तरिष्यामि॥ ११॥ कथामृतपानस्य मादकत्वमाह—ते इति। हे ईश! हे अब्जनाभ! ये तु भवदीयपदारविन्दयोः सौगन्ध्ये लुब्धं हृदयं येषां त्वद्भक्तानां तेषु कृतः प्रकृष्टः सङ्गो यैस्ते अतितरां प्रियं मर्त्यं देहं न स्मरन्ति। ये चादौ मर्त्यमनुसम्बद्धाः सुतादयस्तांश्च न स्मरन्ति। तुशब्देन केवलयोगादिनिष्ठानां देहाभिमानादिनिष्ठानां देहाभिमानादनिवृत्तिमाह॥ १२॥ ननु त्वं किमित्यभिमानं वहसीत्यत आह—तिर्यगिति। हे अज! हे परम! तिर्यञ्चो गोमृगादयः नगा वृक्षपर्वतादयः द्विजाः पक्षिणः सरीसृपाः सर्पादयः देवा इन्द्रादयः दैत्याः प्रह्लादादयः मर्त्याः मनुष्यास्तैस्तैस्तिर्यगादिभिः परिचितं व्याप्तं सदसद्विशेषं सन्ति स्थूलानि पृथ्व्यादीनि पञ्चमहाभूतानि असन्ति भूतसूक्ष्माणि शब्दादीनि विशेषा यस्य तत् महादादीन्यनेकानि कारणानि यस्य तत् एवंभूतं ते तव स्थविष्ठं विराड्रूपं केवलमहं वेद्मि अतः परमीश्वरस्वरूपं न वेद्मि। तथा यत्र वादो "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतेर्लौकिकशब्दव्यापारो नास्ति तत् ब्रह्मरूपं च न वेद्मि॥ १३॥ कल्पान्त इति। कल्पान्ते कल्पस्य सृष्टिसमयस्यान्ते प्रलयसमय एतत् त्रैलोक्यमखिलं सर्वं जठरेण गृह्णन् उदरे संनिवेश्य अनन्तसखः शेषसहायः तदङ्के शेषोत्सङ्गे यः पुमान् श्रीनारायणः शेते अत एव स्वदृक् प्रपञ्चक्रीडोपरतया योगनिद्रारूढत्वात् स्वस्मिन्नेव न बहिर्दृग्दृष्टिर्यस्य सः यस्य नाभिरेव गाम्भीर्यात् सिन्धुः समुद्रस्तस्मिन् रोहतीति तथा तदेव प्रकाशबाहुल्यात् काञ्चनं सुवर्णवर्णं त्रिलोकात्मकं पद्मं तस्य गर्भे कर्णिकायां द्युमान् अतिद्युतिमान् तेजस्वी ब्रह्मा जातः स भवानिति शेषः। तस्मै तुभ्यं भगवते अचिन्त्यमहिम्ने तं त्वां भगवन्तमचिन्त्यशक्तिमनुकूलयितुमहं प्रणतोऽस्मि॥ १४॥ ननु ममापि शयनाद्यवस्थावत्त्वे को जीवाद्विशेषस्तत्राह—त्वमिति। त्वं नित्यमुक्तो जीवस्तु त्वत्प्रसादान्मुच्यते। त्वं परिशुद्धः स तु मलिनः त्वं तु विबुद्धः सर्वज्ञः स त्वल्पज्ञः त्वमात्मा स तु देहाध्यासी जडः त्वं कूटस्थः निर्विकारः स तु विकारी त्वमादिपुरुषः सत्त्वादिमान् त्वं तु भगवान स भगहीनः त्वं त्रयाणां गुणानामधीशः स तु परतन्त्रः। कुत एतद्वैलक्षण्यं यद्यतो बुद्ध्यवस्थितिं बुद्धेस्तां तामवस्थामखण्डितया स्वदृष्ट्या चिच्छक्त्या द्रष्टा पश्यसि। द्रष्टेति तृन्प्रत्ययान्तः शब्दः। अतो बुद्ध्यवस्थितिमित्यत्र षष्ठ्यभावः। जीवस्तु बुद्ध्यवस्थाभिः खण्डितदृष्टिः तथाभूत एव त्वं स्थितो सर्वलोकपालनेऽधिमखो यज्ञाधिष्ठाता स तु मखादिकर्माधीनः अतः त्वं व्यतिरिक्तः जीवाद्विलक्षण एवास्से इति॥ १५॥

सविशेषं रूपमुक्त्वा निर्विशेषमाह—यस्मिन्निति। विरुद्धगतयः परस्परविरुद्धा गतिः स्वभावो येषां ते विद्याविद्यासर्गसंहारादया नियमेन भिन्नाश्रया विविधशक्तयः अनिशं निरन्तरम् आनुपूर्व्यात् पर्यायेण यस्मिन् पतन्ति वर्तन्ते तद् ब्रह्म व्यापकं विश्वस्य भवो जन्म यस्मात्तद्विश्वभवम् एकमद्वितीयम् अनन्तम् आद्यम् आनन्दमात्रम् अविकारमहं प्रपद्ये शरणं व्रजामि॥ १६॥ सत्येति। हे भगवन्! तथा तेन प्रकारेण त्वमेव पुरुषार्थ इत्येवमनुभजतः पुंसः पुरुषार्थः परमानन्दः स एव मूर्तिर्यस्य तस्य तव पादपद्ममेव हि निश्चितम् आशिषो राजादेः सकाशात् राज्याद्यपेक्षया सत्या आशीः परमार्थफलम् अस्ति। यद्यप्येवं तथापि हे आर्य स्वामिन्! अनुग्रहे हिताचरणे कातरः परवशः भगवान् भवान् यथा वाश्रा नवप्रसूता धेनुर्वत्सकं क्षीरं पाययति वृकादिभ्यो रक्षति चेति तद्वत् दीनान् सकामानप्यस्मान् परिपाति संसारभयाद्रक्षत्येव॥ १७॥ अथेति। एवंप्रकारेण सत्संकल्पेन धीमता ध्रुवेणाभिष्टुतो भृत्येष्वनुरक्तः भगवान् प्रार्थनां प्रतिनन्द्य इदं वक्ष्यमाणमब्रवीत्॥ १८॥ वेदेति। हे राजन्यबालक! हे सुव्रत! ते भद्रं कल्याण भवतु। यत्त हृदि व्यवसितं सर्वोत्कृष्टं स्थानमाकाङ्क्षितं तदहं सर्वज्ञो वेद जानामि। तदन्यैर्दुरापं दुर्लभमपि तुभ्यं प्रयच्छामि॥ १९॥ स्थानं विशिनष्टि—नेति। हे भद्र! यत् स्थानं त्वदन्यैर्मन्वादिभिर्महद्भिरप्यनधिष्ठितं न प्राप्तं भ्राजिष्णु प्रकाशमानं ध्रुवा क्षितिर्निवासो यत्र तत्। यत्रेति यत्र च मेढ्यां धान्यक्रमणाय भ्राम्यमाणानां पशूनां बन्धस्तम्भो मेढी तस्यां गोचक्रवत् बलीवर्दसमूहवत् ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितं निबद्धं परिक्रामति इति शेषः। यच्च अवान्तरकल्पवासिनां परस्तादपि स्थास्नु लोकत्रयनाशेऽपि स्थितिशीलम्॥ २०॥ धर्म इति। धर्मः अग्निः कश्यपः शुक्रः इत्यादयो नक्षत्ररूपाः नक्षत्रमण्डले

वर्तमानाः वनौकसो वानप्रस्थाः मुनयः सप्तर्षयः सतारका यत्स्थानं प्रदक्षिणीकृत्य भ्रमन्तश्चरन्ति तत्ते प्रयच्छामि इत्यनुषङ्गः ॥ २१ ॥ एतच्च राज्यानन्तरं भविष्यतीत्याह—प्रस्थित इति। गां पृथिवीं तुभ्यं दत्त्वा पित्रा वनं प्रति प्रस्थिते गमने कृते सति। भावे क्तः। भवान् न व्याहतानि श्रान्तानीन्द्रियाणि यस्य तथाभूतः तथा धर्मः संश्रयः आश्रयो यस्य स तथा धर्मानुसारेण षड्विंशद्वर्षसहस्र-पर्यन्तं साहस्रमिति स्वार्थेऽण्। पृथिवीं रक्षिता रक्षिष्यति ॥ २२ ॥ त्वया असकल्पितमपि मद्भक्तस्य तव द्रोहात् सुरुच्यामेवं भविष्यतीत्याह—त्वदिति। त्वद्भ्रातर्युत्तमे मृगयायां नष्टे सति तस्मिन्नेव मनो यस्याः सा तन्माता तु वनमन्वेषन्ती वने उत्तमान्वेषणं कुर्वती तत्रोत्थितं दावाग्निं प्रवेक्ष्यति ॥ २३ ॥ इष्ट्वेति। इह भूलोके पुष्कलदक्षिणैरुत्तमोपस्करैर्यज्ञैः यज्ञो हृदयं प्रिया मूर्तिर्यस्य तं मामिष्ट्वा सत्या आशिषः उत्तमान् भोगान् भुक्त्वा अन्ते भोगावसाने मां स्मरिष्यसि ॥ २४ ॥

तत इति। तत स्तदनन्तरमृषिभ्य उपरिष्टाद्वर्त्तमानं सर्वलोकनमस्कृतं मत्स्थानं त्वं गन्तासि गमिष्यसि। यतः स्थानात्तत्र गतो यतिर्नावर्त्तते प्रच्युतो न भवति। यतिरित्यत्र गत इति च पाठः ॥ २५ ॥ इतीति। इत्येवंप्रकारेणार्चितः स भगवान् गरुडध्वजः तस्मै ध्रुवाय आत्मनः पदं स्थानम् अतिदिश्य दत्त्वा तस्य बालस्य पश्यत एव सतो गरुडारूढः सन् स्वं धामायात् गतः। अगादिति वा पाठः ॥ २६ ॥ सोऽपीति। स ध्रुवोऽपि संकल्पजं मनोरथं तदपि न यथाकथञ्चित् किन्तु संकल्पनिर्वाणं संकल्पस्य निर्वाणं समाप्तिर्यस्मात् तं पूर्णं मनोरथं विष्णोः परिपूर्णस्य भगवतः पादसेवयोपसादितं प्राप्यापि नातिप्रीतः किञ्चित् प्रसन्नोऽपि सर्वथा प्रसन्नो न जात स्तथाभूतः सन् पुरमभ्यगात् आगतः ॥ २७ ॥ सुदुर्लभमिति। मायाविनः कपटवतः सकामस्य सुदुर्लभं यत्परम-मुत्कृष्टं हरेः पदं तत् तस्य हरेश्चरणार्चनेनार्जितं प्रापितमेकेनैव जन्मना स्वल्पकालेन लब्ध्वाऽपि अर्थवित् अर्थतत्त्वज्ञोऽपि ध्रुवः स्वमात्मानमसिद्धार्थमप्राप्तमनोरथमिव कथममन्यत ॥ २८ ॥ मातुरिति। मातुः सपत्न्या सुरुच्या वाच एव पीडाकरत्वाद्बाणास्तैर्विद्धो ध्रुवः तान् वाग्बाणान् स्मरन् मुक्तिपतेर्भगवतः सकाशात् मुक्तिं नैच्छत्। मातृसपत्नीवचःस्मरणदशायां मुक्तिकामस्तपो नाचरत्। ततश्च मुक्तिमननुसन्धाय सर्वोत्कृष्टस्थानं प्राप्तुं तपश्चचार। ततश्च भगवताऽपि तदनुरूपफले दत्ते स्वमौढ्यमनुस्मृत्य ताप-मुपेयिवान् ॥ २९ ॥ समाधिनेति। नैके अनेके भवा यस्मिंस्तेन बहुजन्मनाऽभ्यस्तेन समाधिना यत्पदं यस्य भगवतः स्वरूपं सनन्दादय ऊर्ध्वरेतसो जितेन्द्रिया विदुः। तस्यामुष्य भगवतः पादयोश्छायां तत्कृपया षड्भिरेव मासैरुपेत्यापि पृथङ्मतिर्भेददर्शी अहम् अपगत न्तो निवृत्तः पुनर्दुःखार्णवे संसारे पतितः। छायामिति स्तुत्यादिकाले गरुडाधिरूढस्य हरेश्छायायां स्थितमात्मानं स्मरता ध्रुवेणोक्तम् ॥ ३० ॥ अहो इति। बतेति हा कष्टं जातम्। अहो आश्चर्यमिदं मन्दभाग्यस्य ममानात्म्यं हृदयराहित्यं मूर्खतां पश्यत। भवच्छिदः संसारोच्छेदकस्य हरेः पादमूलं गत्वाऽपि यत् अन्तवत् राज्यं ध्रुवलोकादिचिरकालस्थाय्यपि अन्ततो विनाश्येव तद्याचे याचितवानस्मि ॥ ३१ ॥ मतिरिति। पतद्भ्यः मदपेक्षयाऽधःस्थानं प्राप्तवद्भिः असहिष्णुभिर्देवैः इन्द्रियाद्यधिष्ठातृभिः मम मतिर्विदूषिता। योऽहमसत्तमः तथ्यं सत्यमपि नारदस्य वचः नाधुनापीत्यादिपूर्वमुक्तं न अग्राहिषं न गृहीतवान्। आर्षः प्रयोगः। नाग्रहीषमिति शुद्धम् ॥ ३२ ॥ दैवीमिति। दैवीं देवानां शक्तिरूपां मायां जगन्मोहनीमुपाश्रित्य द्वितीये भगवद्व्यतिरिक्ते वस्तुन्यसत्यपि प्रसुप्त इव यथा सुप्तः स्वप्नार्थान् पश्यन् द्वितीये असत्यपि व्याघ्रसर्पादिभ्यः खिद्यते तद्वत् भिन्नदृक् भेददर्शी अहं भ्रातृभ्रातृव्यहृद्रुजा भ्रातैव दुःखदत्वात् भ्रातृव्यः। शत्रुरिति भेददृष्टया हृद्यरोगेणेव तापजनकशोकेन तप्ये तापमनु-भवामि ॥ ३३ ॥

मयेत्यर्द्धम्। गतायुषि आसन्नमरणे पुंसि चिकित्सा इव यथा व्यर्था तथा मया प्रार्थितमेतत् स्वार्थसाधकताभावा-द्व्यर्थम् ॥ ३४ ॥ प्रसाद्येति। भवच्छिदं जन्ममरणनिवर्तकं जगत आत्मानं दुष्प्रसादनमन्यैः प्रसादयितुमशक्यमपि तपसा प्रसाद्य भाग्यविवर्जितोऽहं भवं जन्ममरणमेव अयाचे याचितवान् ॥ ३५ ॥ स्वाराज्यमिति। ईश्वराद्राज्ञः सकाशादधनः फलीकारान् इव सतुषतण्डुलकणान् यथा याचते तद्वत् स्वाराज्यं निजानन्दं यच्छतो भगवतः सकाशान्मे मया क्षीणपुण्येन क्षीणेन पुण्येनेति वा। बत अहो कष्टं मौढ्यान्मनोऽभिमानहेतुः राज्यादिर्भिक्षितो याचितः ॥ ३६ ॥ न वै इति। हे तात! वै निश्चितं यदृच्छया याञ्चादिप्रयत्नं विनैव लब्ध्वैव मनसः समृद्धिर्मनोरथपूर्त्तिर्येषां ते मुकुन्दस्य पदारविन्दयो रजोजुषः चरणारविन्दसेवातत्पराः भवादृशा जनाः निष्कामभक्ताः तस्य दास्यमृते सेवां विना आत्मनः अन्यमर्थं नैव वाञ्छन्ति ॥ ३७ ॥ आकर्ण्येति। सम्परेत्य मृत्वाऽऽगतं श्रुत्वा यथा जनो न श्रद्धत्ते तद्वत् आत्मजं पुत्रमायान्तमाकर्ण्य श्रुत्वापि अभद्रस्य भाग्यहीनस्य मम भद्रं पुत्रागमन-कल्याणं कुत इति मत्वा राजोत्तानपादो न श्रद्दधे विश्वासं न चकार ॥ ३८ ॥ श्रद्धायेति। ततश्च एष्यत्यचिरत इत्यादि देवर्षेर्नारदस्य वाक्यं श्रद्धाय हर्षवेगेन धर्षितः तिरस्कृतो व्याकुलोऽतिप्रीतश्च सन् महाधनं हारं वार्त्ताहर्तुः प्रादात् ॥ ३९ ॥ सदश्वमिति द्वयम्। आत्मजस्य पुत्रस्याभीक्षणे दर्शने उत्सुकः उत्साहवान् स राजा सदश्वं कार्त्तस्वरपरिष्कृतं स्वर्णभूषितं रथमारुह्य अमात्यादिभिः पर्यस्तो वृतः तथा शङ्खदुन्दुभिनादेन ब्रह्मघोषेण वेदपाठेन वेणुभि स्तच्छब्दैश्च सह पुरात्तूर्णं निश्चक्राम ॥ ४०–४१ ॥ सुनीतिरिति। रुक्मैर्भूषिते सुनीतिः सुरुचिश्चास्य राज्ञो महिष्यौ उत्तमेन सहैकामेव शिबिकां नरयानमारुह्य अध्रुभि वाभिमुखं

जग्मतुः। ध्रुवनिष्क्रमणदिनानन्तरमेवानुतप्तो राजा सुनीतिं सादरमङ्गीचकार सुरुचिं चोपेक्षितवान्। तथापि दयानिधिः सुनीतिः सपत्नीं तत्पुत्रं च स्वशिविकायामारोपयामासेति प्राहुः ॥ ४२॥ तमिति द्वयम्। विष्वक्सेनस्य हरेरङ्घ्रिस्पर्शेन हतमशेषमघं बन्धनं रागद्वेषादि च यस्य तम् अङ्गजं पुत्रमायान्तमुपवनस्याभ्याशे समीपे दृष्ट्वा प्रेमविह्वलः दीर्घं बहुकालपर्यन्तमुत्कण्ठायुक्तं मनो यस्य स नृपः श्वसन् दीर्घश्वासान् मुञ्चन् तूर्णं शीघ्रमेव रथादवरुह्य तरसा वेगेन आसाद्य प्राप्य दोर्भ्यां भुजाभ्यां परिरेभे ॥ ४३–४४॥ अथेति। अथ जातः संसिद्धः उद्दामो महान् पुत्रप्राप्तिलक्षणो मनोरथो यस्य स मुहुस्तनयं मूर्ध्नि जिघ्रन् शान्तैः प्रेमोद्भवैर्नयनवारिभिः स्नापयामास ॥ ४५॥

अभिवन्द्येति। सज्जनानामग्रणीर्मुख्यो ध्रुवः पितुः पादावभिवन्द्य तेनाशीर्भिः सहाभिमन्त्रितः कुशलप्रश्नादिना कृतसम्भाषणः सत्कृतश्च मातरौ द्वे अपि शीर्ष्णा ननाम। "शीर्षंश्छन्दसि" इति शीर्षन्नादेशः॥ ४६॥ सुरुचिरिति। सुरुचिस्तं पादयोरवनतमर्भकं बालकं सम्यक् प्रीतिपूर्वकमुत्थाप्य परिष्वज्य बाष्पैर्गद्गदया स्खलिताक्षरया गिरा जीवेत्याशीर्वचनमाह स्म ॥ ४७॥ सुरुच्याः प्रीतौ हेतुः—यस्येति। यस्य कस्यापि जनस्य मैत्र्यादिभिः मैत्रीप्रीतिसन्तोषदयादिभिर्गुणैः भगवान् हरिः प्रसन्नो भवति यस्मै तं प्रति यथा निम्नं देशं प्रति स्वयमेवापो नमन्ति अवतरन्ति तथा सर्वाणि भूतानि नमन्ति अनुसरन्ति ॥ ४८॥ उत्तमश्चेति। अन्योन्यमङ्गसङ्गादुत्पुलकौ रोमाञ्चितौ प्रेम्णा विह्वलौ उत्तमश्च ध्रुवश्चेत्युभौ अस्रौघं बाष्पप्रवाहं मुहुः ऊहतुः दधतुः॥ ४९॥ सुनीतिस्तु ध्रुवदर्शनसमय एवानन्दमूर्च्छामाप तद्भङ्गे ध्रुवमेलनमाह—सुनीतिरिति। अस्य ध्रुवस्य जननी प्राणेभ्योऽपि प्रियं सुतं ध्रुवमुपगुह्य तस्याङ्गस्पर्शेन निर्वृता आनन्दिता सती आधिं तद्वियोगजां मनःपीडां जहौ॥ ५०॥ पय इति। हे वीर! तदा वीरसुवः ध्रुवमातुः। उवङार्षः। शिवैरानन्दोद्भवैर्नेत्रजैः सलिलैरश्रुभिरभिषिच्यमानाभ्यां स्तनाभ्यां पयो मुहुः सुस्राव ॥ ५१॥ तामिति। तां राज्ञीं सुनीतिं जनाः प्रशशंसुः। तथा हि चिरं नष्टः अदर्शनं गतस्ते तव पुत्र इदानीं सर्वेषां तवास्माकं चार्तिहा दुःखनाशकः सन्नुपलब्धो दर्शनं गत एतद्दिष्ट्या महत् भद्रं जातम्। एष च भुवो मण्डलं रक्षिता रक्षिष्यति ॥ ५२॥ अभ्यर्चित इति। नूनं निश्चितमेतत्। यस्य हरेः अनुध्यायिनः ध्यानपरायणाः धीरा योगिजनाः सुदुर्जयमपि मृत्युं जिग्युः जितवन्तः स प्रणतानामार्त्तिहा भगवान् त्वयाऽभ्यर्चितः पूजितः अत एव स्वपुत्रस्य मृत्युं त्वमजैषीरिति भावः॥ ५३॥ लाल्यमानमिति। एवमिति व्यवहितं पित्राद्युपलालनं परामृश्यते। जनैः सर्वैरेव लाल्यमानं ध्रुवं सभ्रातरं कवभाव आर्षः। करिणीमारोप्य जनैः दिष्ट्या ते इत्यादिश्लोकद्वयेन स्तूयमानो नृपो हृष्टः सन् पुरमविशत् ॥ ५४॥ पुरं वर्णयति—तत्रेति। तत्रोपसंक्लृप्तैः रचितैः तदानीमेवोद्यानादिभ्य आनीयारोपितैः लसन्तो मकराः धात्वादिरचिता येषु तैः तोरणैः तथा सवृन्दैः फलपुष्पमञ्जरीसहितैः। सवृन्तैरित्यपि पाठः। कदलीस्तम्भैः तथा तद्विधैः सवृन्दैः पूगानां पोतैर्बालवृक्षैः प्रतिद्वारमुपस्कृतमित्युत्तरेणान्वयः॥ ५५॥ चूतेति। चूता आम्रास्तेषां पल्लवाश्च वासांसि च स्रजश्च मुक्तादामानि च तेषां विशेषेण लम्बो लम्बनमस्ति येषु तैः दीपकैरपां कुम्भैश्च प्रतिद्वारमुपस्कृतमलङ्कृतम् ॥ ५६॥

प्राकारैरिति। शातकुम्भाः स्वर्णमयाः परिच्छदाः परिकरा येषु तैः श्रीमतां विमानानामिव शिखरैर्द्युतिर्येषां तैः प्राकारैः गोपुरैः पुरद्वारैः आगारैर्गृहैश्च सर्वतोऽलङ्कृतं श्रीमदिति पृथग्वा पुरविशेषणम् ॥ ५७॥ मृष्टेति। चत्वरमङ्गणं रथ्या रथयोग्यो राजमार्गः अट्ट उच्चगृहस्योपरि निर्मिता भूमिका मार्गोऽवान्तरः मृष्टाः संमार्जिताश्चत्वरादयो यस्मिन् चन्दनचर्चितं चन्दनमिश्रितजलैश्चत्वरादिषु सिक्तं लाजैर्भृष्टव्रीहिभिः अक्षतैर्यवैः पुष्पैः फलैः तण्डुलैः बलिभिर्मृष्टान्नैर्वस्त्रभूषादिभिश्च युतम् ॥ ५८॥ ध्रुवायेति द्वयम्। तत्र तत्र पथि मार्गे दृष्टाय ध्रुवाय पुरस्त्रियो वात्सल्यात् स्नेहात् सतीः श्रेष्ठाः आशिषः प्रयुञ्जानाः सत्यः सिद्धार्थाक्षतादीनि उपजह्रुः व्यकिरन्। सिद्धार्थः श्वेतसर्षपः ध्रुवश्च तासां वल्गूनि मनोहराणि गीतानि शृण्वन् पितुर्भवनं प्राविशत् ॥ ५९–६०॥ महामणीति। पित्रा नितरां लालितः सः ध्रुवः महामणीनां व्रातः समूहस्तन्मये तद्रचिते तस्मिन् भवनोत्तमे दिवि देववत् न्यवसत् ॥ ६१॥ पय इति। यत्र भवनोत्तमे शय्याः पयःफेननिभाः कोमलाः शुभ्राश्च दान्ताः हस्तिदन्तनिर्मिताः रुक्मनिर्मिताः परिच्छदाः परिकराः पात्रादयो यासु ताः शय्याः आभान्ति। महार्हाणि आसनानि आभान्ति। रौक्माः उपस्कराः पात्रादयश्चाभान्ति ॥ ६२॥ यत्रेति। यत्र भवनोत्तमे स्फटिककुड्येषु महामारकतेषु च कुड्येषु मणय एव प्रदीपा इव प्रकाशका आभान्ति। तथा रत्नसंयुताः नानारत्नाभरणैर्भूषिताः ललनाः श्रेष्ठाः स्त्रियः परिचारिका आभान्ति ॥ ६३॥ उद्यानानीति। कूजन्ति विहङ्गमिथुनानि येषु तैः गायन्तो मत्ता मधुव्रता भ्रमरा येषु तैः विचित्रैः नानावर्णैः अमरद्रुमैर्देववृक्षैः रम्याणि मनोहराण्युद्यानानि चाभान्ति ॥ ६४॥ वाप्य इति। यत्र वैदूर्यमणिरचितानि सोपानानि यासां ताः पद्ममुत्पलं कुमुत् कुमुदं तद्वतीः तद्युक्ताः। पूर्वसवर्णदीर्घ आर्षः। हंसकारण्डवानां कुलैः चक्राह्वैः सारसैश्च जुष्टाः सेविताः वाप्यश्च आभान्ति ॥६५॥ उत्तानपाद इति। उत्तानपादः राजर्षिः अद्भुततमं तनयस्य प्रभावं मन्वाद्यनधिष्ठितपदप्राप्तिलक्षणं श्रुत्वा प्रजानुरागादिकं दृष्ट्वा च परं विस्मयं प्रपेदे प्राप ॥६६॥

वीक्ष्येति। ऊढवयसं प्राप्तयौवनं राज्यनिर्वाहयोग्यं प्रकृतीनाममात्यादीनां प्रजापालनक्षमत्वेन संमतमनुरक्ताः प्रजा यस्मिंस्तं तमेवंगुणकं ध्रुवं वीक्ष्य राजोत्तानपादो भुवः पतिं चक्रे राज्येऽभिषिक्तवान्॥ ६७॥ आत्मानमिति। आत्मानं च प्रवयसं वृद्धमाकलय्य दृष्ट्वा विशांपतिः राजा विषयभोगाद्विरक्तः सन् आत्मनो गतिं तत्त्वं विमृशन् विचारयन् वनं प्रातिष्ठत्। तङ्भाव आर्षः॥ ६८॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां नवमोऽध्यायः॥ ९॥

—:❀:—

## अथ दशमोऽध्यायः

मैत्रेय उवाच

प्रजापतेर्दुहितरं शिशुमारस्य वै ध्रुवः। उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ॥ १॥

दशमे चालकां गत्वा यक्षाननुजवातकान्। बहून् ध्रुवोऽवधीत्तत्र श्लोकास्त्रिंशत् (३०) प्रकीर्तिताः॥
अनुष्टुभः साङ्घ्रिदन्ता (३२।) उवाचेति द्वयं तथा॥ १०॥

प्रजापतेरिति। प्रजापतेः शिशुमारस्य दुहितरं कन्यां भ्रमिं नाम प्रसिद्धां ध्रुव उपयेमे। तत्सुतौ तस्याः भ्रमेः सुतौ कल्पवत्सराख्यौ बभूवतुः॥ १॥ इलायामिति। वायोः पुत्र्यामिलायामपि भार्यायां महाबलो ध्रुव उत्कलनामानं पुत्रं योषिद्रत्नं मनोहरां कन्यां च अजीजनत्। योषितां रत्नमिवातिमनोहरामिति विशेषणं वा॥ २॥ उत्तम इति। उत्तमस्तु अकृतोद्वाह एव मृगयायां बलीयसा पुण्यजनेन यक्षेणाद्रौ हिमवति हतः। आजाविति पाठे युद्धे हतः। तन्माता तस्योत्तमस्य माता सुरुचिः अस्योत्तमस्य गतिं मरणं गता॥३॥ ध्रुवमिति। ध्रुवं भ्रातुर्वधं श्रुत्वा कोपामर्षाभ्यां युक्तया शुचा शोकेन द्वन्द्वैक्ये तु "द्वन्द्वाच्चुदष" इति अचि समस्तं पदम्। अर्पितो व्याप्तः सन् जैत्रं जयप्रदं स्यन्दनमास्थाय पुण्यजनानां यक्षाणामालयं स्थानमलकां पुरीं गतः॥ ४॥ गत्वेति। राजा ध्रुवः रुद्रानुचरैर्भूतादिभिः सेविताम् उदीचीं दिशं गत्वा हिमवतो हिमाचलस्य द्रोण्यां हिमवदवयवभूतपर्वतानन्तर्गते समे प्रदेशे गुह्यकैः यक्षैः संकुलां व्याप्तां पुरीम् अलकां ददर्श॥ ५॥ दध्माविति। हे क्षत्तः! बृहद्बाहुर्ध्रुवः खं दिशश्च अनुनादयन् शङ्खं दध्मौ। येन शब्देन उद्विग्नदृशः उपदेव्यः यक्षस्त्रियः भृशमत्रसन्॥ ६॥ तत इति। बलिनः उपदेवस्य कुवेरस्य महाभटाः योद्धारः तस्य शङ्खस्य निनादम् असहन्तः उदायुधाः सन्तः ततः पुरीतः निष्क्रम्य अभिपेतुः संमुखमाययुः॥७॥ स इति। वीरः उग्रधन्वा महारथः स ध्रुवः एकैकं त्रिभिस्त्रिभिर्बाणैः सर्वान् आपतत आगच्छतस्तान् त्रयोदशायुतानि यक्षान् युगपत् एकदैव हन् जघान प्रहृतवान्॥ ८॥ त इति। ते सर्व एव हि यक्षास्तैर्ललाटे लग्नैरिषुभिर्बाणैरात्मानं निरस्तं तिरस्कृतं मत्वा तस्य ध्रुवस्य तत् एवमेकदैव झटिति सर्वेषां हननक्षणं कर्म आशंसन् मनसा श्लाघितवन्तः॥ ९॥

तेऽपीति। ततस्ते यक्षा अपि यथा पादस्पर्शमुरगा न सहन्ते तद्वत् अमृष्यन्तः तत्कर्मासहमानाः प्रचिकीर्षवः प्रतिकर्तुमिच्छवः द्विगुणं यथा भवति तथा षड्भिः षड्भिः शरैर्युगपदमुं ध्रुवमविध्यन्॥ १०॥ तत इति द्वयम्। ततश्च तस्य कर्म प्रतिकर्तुमिच्छन्तः प्रकुपिता अयुतानां त्रयोदश त्रयोदशायुतानि प्रायः अयुतानीत्येव पाठः। परिघनिस्त्रिंशादिभिः चित्राः वाजाः पक्षा येषां तैः शरैरपि सरथं सहसारथिं ध्रुवमभ्यवर्षन् आच्छादयामासुः॥ ११-१२॥ औत्तानपादिरिति। स औत्तानपादिः ध्रुव तदा भूरिणा शस्त्रवर्षेण छन्नो यथा धारासम्पातेन छन्नो गिरिरदृश्यो भवति तथा नोपादृश्यत। ध्रुवस्य कापि क्षतिर्नाभूदिति दृष्टान्तेन सूच्यते॥ १३॥ हाहेति। तदा एव दिवि स्थित्वा पश्यतां सिद्धानां हाहाकार आसीत्। तद्वचनमाह—मानवः मनुपौत्रोऽयं सूर्यः

सूर्यतुल्यः पुण्यजना यत्ता एवार्णववद् दुस्तरत्वादर्णवस्तस्मिन् मग्नः प्रविष्टः सन् हतः ॥ १४ ॥ नदत्स्विति । मृधे रणभूमौ यातुधानेषु राक्षसेषु नदत्सु नादं कुर्वत्सु जयकाशिषु अस्माभिर्जितं जितमिति स्वजयप्रकाशकेषु सत्सु शस्त्रकूटात्तस्य ध्रुवस्य रथः यथा नीहाराद् भास्करः सूर्यं उत्तिष्ठति तद्वत् उदतिष्ठत् उद्भूतः ॥ १५ ॥ धनुरिति । उग्रं शत्रूणां भयदं धनुः विस्फूर्जयन् टङ्कारघोषयुक्तं कुर्वन् द्विषतां खेदमुद्वहन् प्रापयंस्तेषामस्त्रौघं घनानीकमनिल इव बाणैर्व्यधमत् चूर्णयामास ॥ १६ ॥ तस्येति । तस्य ध्रुवस्य चापाद्विनिर्मुक्ता ये द्विषतामस्त्रौघं व्यधमं त एवैकदा प्रयुक्ता वाणा रक्षसां वर्माणि भित्त्वा यथा इन्द्रप्रयुक्ता अशनयो वज्राणि गिरीन् प्रविशन्ति तद्वत् कायान् शरीराणि आविविशुः प्रविष्टाः ॥ १७ ॥ भल्लैरिति द्वयम् । भल्लैरर्द्धचन्द्राकारबाणविशेषैः संछिद्यमानानां यक्षाणां चारूणि कुण्डलानि येषु तैः शिरोभिः हेमतालाभैः सुवर्णतालसदृशैरुरुभिः वलयैर्वल्गुभिर्मनोहरैर्दोर्भिर्भुजैः हारकेयूरमुकुटैः महान्ति धनानि येषु तैरुष्णीषैश्चास्तृताः प्रकीर्णास्ता रणभुवो वीराणां मनोहराः सत्यो विरेजुः शोभितवत्यः ॥ १८–१९ ॥ हतेति । हतेभ्योऽवशिष्टाः उर्वरिताः अत एव क्षत्रियवर्यस्य ध्रुवस्य सायकैः प्रायो बाहुल्येन विवृक्णाः सञ्छिन्ना अवयवा हस्तादयो येषां ते इतरे रक्षोगणाः मृगेन्द्रेण सिंहेन विक्रीडिता विद्राविता यूथपाः गजा इव रणाजिरात् युद्धाङ्गणतो विदुद्रुवुः पलायिता जाताः ॥ २० ॥ अपश्यमान इति । मानवेषु मनुवंश्येषु उत्तमः स ध्रुवस्तदा तस्मिन् महामृधे युद्धभूमौ कञ्चनाप्याततायिनं शस्त्रपाणिमपश्यमानोऽपि । शानजार्षः । पुरीम् अलकां दिदृक्षन्नपि द्रष्टुमिच्छन्नपि । सन्नन्ताद् दृशेरात्मनेपदाभाव आर्षः । न आविशत् । यतः जनः मायिनां द्विषां चिकीर्षितं न वेद ॥ २१ ॥

इतीति । चित्रो रथो यस्य सः परेषां शत्रूणां प्रतियोगः पुनरुद्योगस्तस्माच्छङ्कितः अत एव यत्तः प्रयत्नवान् स ध्रुवः "न मायिनां वेद चिकीर्षितं जनः" इत्यादिवाक्यं स्वसारथिं प्रति ब्रुवन् सन् जलधेरिव ईरितमुत्पन्नं शब्दं शुश्राव । नभस्वतो वायोर्हेतोः सर्वदिक्षु रजोऽन्वदृश्यत ॥ २२ ॥ क्षणेनेति । विस्फुरन्त्यः प्रकाशमानास्तडितो यस्मिंस्तेन त्रासयन्तः स्तनयित्नवोऽशनयो यस्मिंस्तेन घनानीकेन मेघमण्डलेन सर्वतो दिक्षु क्षणेन व्योमाच्छादितं जातम् ॥ २३ ॥ ववृषुरिति । हे अनघ ! रुधिरौघादीन् ववृषुः मेघा इति शेषः । यद्वा रुधिरादयः ववृषुः निपेतुः । न सृजति शरीरमित्यसृक् श्लेष्मादरुधिरस्यासृक्शब्दवाच्यस्य पृथग्ग्रहणात् मेदांसीति वाच्ये मेदस इति पुंस्त्वमार्षम् । तथा गगनादस्य ध्रुवस्याग्रतः कवन्धानि शिरोरहितानि शरीराणि निपेतुः ॥ २४ ॥ तत इति । ततश्च खे गिरिरदृश्यत तथा साश्मवर्षिणः अश्मसहितं यद्वर्षं तद्वन्तः । अश्मवर्षिभिः पुरुषैः सह वर्त्तमाना इति वा । गदापरिघनिस्त्रिंशमुसलाः सर्वतो दिशं सर्वदिक्षु निपेतुः । सर्वत इत्यस्य योगे दिशमिति द्वितीया ॥ २५ ॥ अहय इति । अशनिर्मेघवह्निज्वाला तद्वन्निश्वासो येषां ते तथा रुषा क्रोधेनाक्षिभिरग्निं वमन्तोऽहयः मत्ता गजाः सिंहा व्याघ्राश्च यूथशः भूत्वा अभ्यधावन् वेगेन सम्मुखमाजग्मुः ॥ २६ ॥ समुद्र इति । ऊर्मिभिः सर्वतो भुवं प्लावयन् महाह्लादः प्रचण्डशब्दवान् अत एव भीमः भयङ्करः समुद्रः कल्पान्ते इव भीषणः आससाद समीपमाजगाम ॥ २७ ॥ एवमिति । तिग्मा क्रूरा गतिः प्रवृत्तिर्येषां ते तथाभूताः असुराः स्वसंबन्धिन्या आसुर्या मायया एवंविधान्यनेकान्यमनस्विनामधीराणामेव त्रासनानि भयङ्कराणि वस्तूनि ससृजुः । अत्रासुरराक्षसादिशब्दैः प्रकरणात् समशीलतया यक्षा एवोच्यन्ते । असुरतुल्या इति वार्थः ॥ २८ ॥ ध्रुव इति । असुरैः ध्रुवे प्रयुक्तामतिदुस्तरां भगवत्स्मरणं विनोपायान्तरेण निवर्त्तयितुमशक्यां तां मायां निशाम्य दृष्ट्वा मुनयस्तत्र समागताः सन्तस्तस्य ध्रुवस्य शं कल्याणमाशंसन् प्रार्थितवन्तः ॥ २९ ॥ औत्तानपादे इति । अङ्ग हे औत्तानपादे ! अवनतानामार्तिहरो देवः भगवान् शार्ङ्गधन्वा तव विपक्षान् शत्रून् क्षिणोतु नाशयतु । यन्नाम अभिधाय उच्चार्य निशम्य श्रुत्वा वा लोकः प्राणिमात्रमद्धा साक्षात् अञ्जसा सुखेनैव दुस्तरमपि मृत्युं तरति ॥ ३० ॥

इति श्रीमद्भागवते चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां दशमोऽध्यायः ॥ १० ॥



# अथैकादशोऽध्यायः

## मैत्रेय उवाच

**निशम्य गदतामेवमृषीणां धनुषि ध्रुवः । संदधेऽस्त्रमुपस्पृश्य यन्नारायणनिर्मितम् ॥ १ ॥**

एकादशे मनुर्यक्षवधात्तत्त्वोपदेशनैः । अवारयद् ध्रुवं तत्र श्लोकास्त्रिंशच्च ( ३५ ) पञ्च च ॥

उवाचेति द्वयं ( २ ) साङ्घ्रि चत्वारिंशदनुष्टुभः ( ४०। ) ॥ ११ ॥

निशम्येति । एवं गदतामृषीणां वचनमुपदेशमिव निशम्य प्रबुद्धो ध्रुव उपस्पृश्य हस्तपादप्रक्षालनमाचमनं च कृत्वा यन्नारायणनिर्मितं नारायणास्त्रं तद्धनुषि संदधे तन्मन्त्रं पठित्वा शरं धनुषि योजितवान् ॥ १ ॥ सन्धीयमान इति । हे विदुर ! एवमेतस्मिन्नस्त्रे सन्धीयमाने सति गुह्यकनिर्मिताः माया मेघादिरूपाः ज्ञानस्योदये सति यथा क्लेशाः अविद्याऽस्मितादयो नश्यन्ति तद्वत् क्षिप्रमेव विनेशुः ॥ २ ॥ तस्येति । ऋषेर्नारायणादुद्भूतमार्षमस्त्रं तस्य ध्रुवस्य धनुषि प्रयुञ्जतः सन्दधतः सतस्ततः सुवर्णमयाः पुङ्खाः मूलप्रान्ता ज्यानुसन्धानप्रवेशा येषां ते तथा कलहंसानामिव वासांसि पत्रा येषां ते । शरा इति शेषः । विनिःसृताः सन्तो भीमो भयङ्करो रवः शब्दो येषां ते शिखण्डिनो मयूरा यथा वनं प्रविशन्ति तद्वत् द्विषतां शत्रूणां बलं सेनां निर्विविशु ॥ ३ ॥ तैरिति । तैस्तिग्मधारैस्तीक्ष्णाग्रभागैः शिलीमुखैः शरैः प्रधने युद्धभूमौ इतस्ततः सर्वतः पुण्यजना यक्षा उपद्रुताः अत एव कुपिताः उदायुधाः उद्यतानि आयुधानि यैस्ते यथोन्नद्धा उच्छ्रिताः फणाः येषां ते अहयः सुपर्णं गरुडं हन्तुमायान्ति तद्वत् ते तं ध्रुवमभ्यधावन् । तं मारयितुमेकदैव हेलया संमुखमागताः ॥ ४ ॥ स इति । स ध्रुवस्तान् यक्षान् मृधे युद्धेऽभिधावतः पृषत्कैः शरैर्निकृत्तानि बाहवः ऊरवः शिरोधराः ग्रीवाः उदराणि च येषां तान् परं लोकं सत्यलोकं निनाय प्रापितवान् । अर्कमण्डलं निर्भिद्य यं लोकमूर्ध्वरेतसः संन्यासिनो व्रजन्ति । भगवद्भक्तस्य ध्रुवस्य हस्तेन सङ्ग्रामे मृतानामुत्तमलोकप्राप्तिर्विवक्षिता । ऊर्ध्वरेतःशब्दमात्रसाहचर्यान्मोक्षस्तु न व्याख्येयः ॥ ५ ॥ तानिति । भूयसा बलिना चित्ररथेन ध्रुवेण तान् गुह्यकान् यक्षान् अनागसः उत्तमहन्तुरन्यत्वेन निरपराधानपि हन्यमानानभिवीक्ष्य कृपया परिप्लुतः पितामहोऽतः शिक्षायां समर्थो मनुस्तथापि स्ववचनानुमोदनार्थं गुरुत्वार्थं च ऋषिभिः सह तत्रोपगतः आगतः सन् औत्तानपादिं ध्रुवं प्रति जगाद ॥ ६ ॥ अलमिति । हे वत्स ! येन त्वमनागसो निरपराधानप्येतान् पुण्यजनान् अवधीः हतवांस्तेन पाप्मना पापजनकेनात एव तमसो नरकस्य द्वारेणातिरोषेणालं पूर्यतामतोऽग्रे त्वया रोषो न कर्त्तव्यः ॥ ७ ॥ नेति । हे तात ! यत् ते त्वया अकृतैनसां न कृतम् एनः पापमपराधो यैस्तेषामुपदेवानां यक्षाणां वध आरब्धः । तदेतत् सद्भिर्विगर्हितं कर्म अस्माकं धर्मशास्त्रानुवर्तिनां कुल उचितं न भवति ॥ ८ ॥ नन्विति । अङ्ग हे भ्रातृवत्सल ध्रुव ! ननु भ्रातुर्वधेन अभितप्तेन त्वया एकस्य त्वद्भ्रातृहन्तुरपराधेन प्रसङ्गाद्बहवो हताः ॥ ९ ॥

सत्यप्यपराधे तवैतन्नोचितमित्याह—नायमिति । यत् पराक् बहिर्भूतं देहमात्मानं गृह्य मत्वा ल्यबार्षः । परागृह्येति पाठे परा इति निषेधे । आत्मानमज्ञात्वेत्यर्थः । पशुवत् पशवो यथा देहाभिमानादन्योन्यं घ्नन्ति तद्वत् भूतानां प्राणिनां वैशसं हिंसनं सोऽयं साधूनां हृषीकेशानुवर्त्तिनां मार्गो न भवति ॥ १० ॥ सर्वेति । भवान् सर्वभूतानामावासमाधारभूतं दुराराध्यमपि हरिं सर्वभूतेष्वात्मभावेन आराध्य ध्यात्वा यद्विष्णोस्तस्य परमं सर्वोत्कृष्टं पदं स्थानं तदाप प्राप्तवान् । सर्वभूतानामात्मत्वेन हेतुना भूतानामावासमिति वान्वयः ॥ ११ ॥ स इति । बाल्येऽपि साधुचरितेन त्वं हरेः हृदि अनुध्यातः स्थितो ज्ञातो वात्सल्यात् स्मर्यमाणः तत्पुंसां भागवतानामपि साधुत्वेन संमतः नारदात् सतां व्रतमनुशिक्षन्नपि शता आर्षः । कथं नु अवद्यं प्राणिहिंसनं कृतवान् ॥ १२ ॥ सतां व्रतमाह—तितिक्षयेति । महत्सु तितिक्षया नीचेषु करुणया समेषु मैत्र्या अखिलेषु जन्तुषु समत्वेन च सर्वात्मा भगवान् सम्यक् प्रसीदति ॥ १३ ॥ सम्प्रसन्न इति । भगवति सम्प्रसन्ने सति पुरुषः प्राणिमात्रं यः कश्चिदपि प्राकृतैर्गुणैः रजःसत्त्वतमोभिर्विशेषेण मुक्तोऽत एव तत्कार्येण जीवेन लिङ्गशरीरेण निर्मुक्तः सन् निर्वाणं सुखात्मकं ब्रह्म ऋच्छति प्राप्नोति ॥ १४ ॥ वस्तुतो भ्रातृपुत्रादिसम्बन्धः मिथो हन्तृत्वादिकं च नास्तीत्याह—भूतैरिति । पञ्चभिर्भूतैर्भूम्यादिभिरारब्धैः देहाद्याकारेण परिणतैरेव योषित् पुरुषश्च व्यवह्रियते तयोरेव स्त्रीपुंसयोर्व्यवायात् मैथुनादन्ययोर्योषित्पुरुषयोः इह संभूतिर्जन्म भवति हि ॥ १५ ॥ एवमिति । हे राजन् ! एवं मातृपित्राद्याकारेण परिणतैर्भूतैरेव सर्गः स्थितिः संयमश्च एतत्त्रयमपि परमात्मनो मायया यो गुणानां व्यतिकरो

वैषम्यं तत एव प्रवर्तते भवति न तु स्वतः ॥ १६ ॥ निमित्तेति । तत्र सर्गादौ निर्गुणः पुरुषर्षभः परमात्मा तु निमित्तमात्रमासीत् । यत्र यस्मिन्निमित्ते सति व्यक्ताव्यक्तं स्थूलसूक्ष्मात्मकं विश्वं लोहवत् यथायस्कान्तसन्निधानमात्रेणाचेतनमपि लोहं प्रवर्तते तद्वत् भ्रमति । जडमपि चेतनमिव भवेत् । सृष्ट्यादौ परिवर्तते ॥ १७ ॥ नन्वेवं युगपत्सृष्ट्यादित्रयं प्राप्तं तत्राह—स इति । सृष्ट्यादि-निमित्तभूतया कालाख्यया स्वशक्त्या क्रमेण यो गुणानां प्रवाहः क्षोभस्तेन विभक्तं वीर्यं रजआदि शक्तिर्यस्य स भगवानेवेदं विश्वमकर्तैव करोति अहन्तैव निहन्तीत्यन्वयः । अपालक एव पातीत्यनुक्तमपि ज्ञेयम् । विभूम्नो महत्तमस्य भगवतश्चेष्टा कालशक्तिः खलु निश्चयेन दुर्विभाव्या अचिन्त्या । विभूम्न इति हेतौ पञ्चमी वा विभुत्वादित्यर्थः ॥ १८ ॥

ननु पित्रादीनां स्रष्टृत्वादि प्रसिद्धं न त्वीश्वरस्येति तत्राह—स इति । स भगवान् कालोऽपि न ततः पृथक् । अत एव स्वयमनादिः जन्मरहितः अनन्तः अविनाशी अव्ययः स्वरूपतः शक्तितश्च क्षयरहितः जनेन पित्रादिना जनं पुत्रादिकं जनयन्नादि-कृत् सृष्टिकर्ता भवति । मृत्युना अन्तकं चोरव्याघ्रादिकमपि मारयन्नन्तकरः संहारकर्ता भवति । तथा पालककारेण जनेन पालयन् पालकश्च भवतीत्यपि ज्ञेयम् । यतः स्वयमुत्पत्तिमत्त्वात् पित्रादयोऽपि न स्वतन्त्राः ॥ १९ ॥ वैषम्यप्रसक्तिस्तु तस्य नास्ति इत्याह—न वा इति । समं यथा स्यात्तथा प्रजाः कर्मभूताः विशतः परस्य तत्रानासक्तस्यास्य मृत्योः मरणहेतोः कालरूपस्येश्वरस्य स्वपक्षः स्वीयो विपक्षः शत्रुर्वा नैवास्ति । यथा अनिलं धावन्तं रजांसि तमनुधावन्ति तत्र यथा रजसां तमःप्रकाशजलाग्न्यादि-प्रवेशेऽपि न वैषम्यं तथा तं कालरूपं भगवन्तं धावमानं सर्वसमतया निरन्तरं गच्छन्तं वेगवन्तं निमित्तं प्राप्यानीशाः कर्माधीनाः भूतसङ्घाः अनुधावन्ति जन्मादिषु प्रवर्तन्ते । न तत्रेश्वरस्य वैषम्यम् ॥ २० ॥ आयुष इति । विभुः समर्थः उभाभ्यामायुष उपचयाप-चयाभ्यां रहितोऽसौ परमेश्वर एव स्वयं स्वस्थः सन् दुःखस्य कर्मवशात् स्वर्गनरकादौ गच्छतो जन्तोर्जीवस्य तत्कर्मानुसारेण देवादियोनावायुष उपचयं वृद्धिं तथैव पिपीलिकामशकादियोनावायुषोऽपचयं ह्रासं च विदधाति ॥ २१ ॥ केचिदिति । हे नृप ! केचिन्मीमांसकाः एनमेव कर्मेति वदन्ति । अपरे चार्वाका एनमेव स्वभावं वदन्ति । एके व्यावहारिका एनमेव कालं वदन्ति । परे ज्योतिर्विद एनमेव दैवं ग्रहादिरूपं वदन्ति । उत तथा अपरे वात्स्यायनादयोऽप्येनमेव पुंसः कामं वदन्ति ॥ २२ ॥ अव्यक्तस्येति । हे तात ! अव्यक्तस्य अप्रमेयस्य नानाशक्तीनां महदादीनामुदयो यस्मात्तस्य परमेश्वरस्य चिकीर्षितं कर्तुमिष्टमेव तावत्कोऽपि न वेद । अथ ततः स्वस्य संभवः प्रादुर्भावो यस्मात्तं साक्षात् भगवन्तं तु को वेद न कोऽपीति । अथेत्यत्र अद्धेत्यपि पाठः ॥ २३ ॥ उक्तं प्रकृते योजयति—न चेति । हे पुत्रक ! एते धनदानुगाः कुबेरानुचरास्तव भ्रातुरुत्तमस्य हन्तारो न भवन्ति । चकारात् त्वमपि तेषां हन्ता न भवसीति ज्ञेयम् । हे तात ! यत्तद्धेतोः पुंसो विसर्गादानयोर्जन्ममरणयोर्दैवं परमेश्वर एव कारणम् ॥ २४ ॥ स एवेति । यद्यपि स भगवानेव विश्वं सृजति स एवावति हन्ति च अथापि हि अनहङ्कारात् अहं करोम्येतत्फलं भोक्ष्य इत्यहङ्काररहितत्वाद् गुणैः रजःप्रभृतिभिः कर्मभिस्तज्जनितैरदृष्टैः पुण्यपापादिभिश्च नाज्यते न सम्बद्धो भवति ॥ २५ ॥ एष इति । यस्मात् एष भगवान् भूतेशः सर्वनियन्ता भूतभावनः सर्वपालकः भूतात्मा सर्वात्मत्वेन भेददर्शनरहितः सन्नेव स्वशक्तिरूपया मायया युक्तो भूतानि स्थावरजङ्गमात्मकानि सर्वाणि सृजत्यत्ति संहरते च पाति च । तस्मादनहङ्काराद् गुणकर्मभिर्नाज्यत इति पूर्वस्यानुषङ्गः ॥ २६ ॥ तमेवेति । हे तात ! स्वविमुखानां मृत्युरूपं स्वभक्तानां चामृतं जन्ममरणादिनिवर्तकं विश्वस्य दैवं परमेश्वरं नियन्तारं जगतः परायणमुत्कृष्टमाश्रयं तं भगवन्तमेव सर्वात्मना तदेकाग्रचित्ततया उपैहि शरणं व्रज । वृद्धिरार्षी । वै निश्चये नसि नासिकायां दामनि यन्त्रिता बद्धा गावो बलीवर्दा यथा स्वामिकार्यं कुर्वन्ति तथा विश्वसृजो ब्रह्मादयोऽपि नामभिर्बद्धाः सन्तो यस्मै भगवते बलिं हरन्ति स्वस्वाधिकारे स्थिता यस्याज्ञां पालयन्तीत्यर्थः ॥ २७ ॥

य इति । अङ्ग हे ध्रुव ! यः पञ्चवर्षः त्वं मातुः सपत्न्याः सुरुच्या वचसा भिन्नं मर्म हृदयं यस्य स तथाभूतः स्वज-ननीं गृह एव विहाय वनं गतः स एव भवान् इति शेषः । अतः लेभे इति प्रथमः पुरुषः । यं प्रत्यगक्षं प्रत्यञ्चि अन्तर्मुखानि अक्षाणि यस्मिन् यद्विषयकाणि क्रियाविशेषणं वा । तपसा आराध्य त्रिलोक्याः मूर्ध्नि पदं स्थानं लेभे लब्धवान् ॥ २८ ॥ तमिति । अङ्ग हे ध्रुव ! स त्वम् आत्मदृक् प्रत्यग्दृष्टिः सन् मुक्तविग्रहे आत्मनि स्वान्तःकरणे व्यपाश्रितमवस्थितं निर्गुणम् एकम् अक्षरं विमुक्तम् एनम् आत्मानम् परमात्मानम् अन्विच्छ अवलोकय । यस्मिन् परमात्मनि अधिष्ठाने इदं भेदमिति सम नं पदम् अत एव क्लैब्यम् । अयं दृश्यमानो भेदो यस्मिंस्तद्विश्वमसदेव प्रतीयते ॥ २९ ॥ त्वमिति । तदा अन्वेषणकाल एव प्रत्यगात्मनि स्वरूपभूते अनन्ते आनन्द-मात्ररूपे उपपन्नाः सम्यक् सिद्धाः समस्ताः शक्तयो यस्य तस्मिन् भगवति परमां भक्तिं विधाय प्ररूढम् अतिदृढं मम अहमिति अहन्ताममतारूपम् अविद्याग्रन्थिमज्ञानकृतं बन्धनं त्वं शनकैः विभेत्स्यसि छेत्स्यसि ॥ ३० ॥ उपदेशसारमाह—संयच्छेति । हे राजन् ! श्रेयसां धर्मादीनां परमत्यन्तं प्रतीपं विघातकं रोषम् अगदेनौषधेन यथामयं रोगं जनो नियच्छति तथा श्रुतेन भूयसा बहुधा श्रुतशास्त्रबलेन संयच्छ उपसंहर । ततश्च ते भद्रं भविष्यति ॥ ३१ ॥ येनेति । येन रोषेण उपसृष्टात् व्याप्तात् पुरुषात् लोकः प्राणी भृशमुद्विजते भयेनात्यन्तमुद्वेगं प्राप्नोति । अतः आत्मनः अभयमिच्छन् बुधस्तस्य रोषस्य वशं न गच्छेत् ॥ ३२ ॥ हेलनमिति ।

गिरिशभ्रातुः गिरिशेन भ्रातृत्वेन स्वीकृतस्य धनदस्य हेलनमवज्ञानं त्वया कृतम् यत् यस्मात् भ्रातृघ्नान् इत्येवं मत्वाऽमर्षितः असहमानः त्वं पुण्यजनान् तदनुचरान् यक्षान् जघ्निवान् हतवान् ॥ ३३ ॥ तमिति। हे वत्स ! यावन्महतां लोकपालादीनां तेजः अपराधजन्मा क्रोधः नोऽस्माकं कुलं न अभिभविष्यति नाभिभवेत्। तावत् ततः प्रथममेव त्वं सन्नत्या नमस्कारेण प्रश्रयोक्तिभिः नम्रीभावपूर्वकस्तुतिभिश्च तं धनदमाशु शीघ्रमेव प्रसादय ॥ ३४ ॥ एवमिति। स्वायम्भुवो मनुः स्वपौत्रं ध्रुवमेवमनुशास्य शिक्षित्वा। इच्छार्थाच्छास्तेः क्त्वो ल्यप् शास्तेः अनुशिष्टयर्थाद्वा। तत्र इत्यभावः आर्षः। तेनाभिवन्दितः ऋषिभिः साकं स्वपुरं ययौ ॥ ३५ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायामेकादशोऽध्यायः ॥ ११ ॥

—:ॐ:—

## अथ द्वादशोऽध्यायः

मैत्रेय उवाच

ध्रुवं निवृत्तं प्रतिबुद्ध्य वैशसादपेतमन्युं भगवान् धनेश्वरः।
तत्रागतश्चारणयक्षकिन्नरैः संस्तूयमानोऽभ्यवदत् कृताञ्जलिम् ॥ १ ॥

द्वादशे तु ध्रुवः श्रीदस्तुत इष्ट्वा मखैर्हरिम्। जगाम तत्पदं तत्र श्लोका नयनमार्गणाः ( ५२ ) ॥
उवाचसप्तकं ( ७ ) पादोनैकषष्टिरनुष्टुभः ( ६०।।। ) ॥ १२ ॥

ध्रुवमिति। एवं मनूपदेशादपेतमन्युं शान्तक्रोधमत एव वैशसात् यक्षादीनां हिंसनान्निवृत्तं ध्रुवं प्रतिबुद्ध्य चारमुखाज्ज्ञात्वा भगवान् भगवत्कृपयैश्वर्यादिमान् अत एव चारणयक्षकिन्नरैः संस्तूयमानो धनेश्वरः यत्र ध्रुवोऽस्ति तत्रागतः संस्तं कृताञ्जलिं ध्रुवमभ्यवदत् प्रतीतिपूर्वकमुवाच ॥१॥ भो भो इति। भो भोः क्षत्रियदायाद ! हे अनघ ! अहं ते परितुष्टोऽस्मि। यत् यस्मात् हेतोः पितामहस्यादेशादुपदेशात् दुस्त्यजमपि वैरं त्वमत्यजः त्यक्तवानसि। यस्त्वमिति पाठान्तरम् ॥ २ ॥ नेति। यक्षान् भवान्नावधीत् न हतवान्। न च तव भ्रातरमुत्तमं यक्षा हतवन्त इति शेषः। यतो भूतानामप्ययभावयोः मृत्युजन्मनोः काल एव प्रभुः समर्थः ॥ ३ ॥ अहमिति। आत्मस्वरूपाज्ञानात् अतस्मिन् आत्मव्यतिरिक्ते देहे आत्मबुद्धिर्भवति। ततश्च अतद्ध्यानात् अतस्य देहस्य ध्यानात् आत्मत्वेनानुसन्धानात् स्वप्नदृष्टस्यार्थस्य बाध्यत्वात् यथा स्वाप्नी धीर्मृषा तथा स्वदेहेऽहमिति परदेहे त्वमिति धीः पुरुषस्य अज्ञस्य प्राणिजातस्यापार्थी मिथ्यैव आभाति जायते। यया धिया कर्मात्मको बन्धः विपर्ययो दुःखादिश्च भवतः ॥ ४ ॥ तद्गच्छेति द्वयम्। हे ध्रुव ! तत्तस्माद् गृहं गच्छ गत्वा च अधोक्षजं सर्वभूतात्मको विग्रहो यस्य तं भजनीयाङ्घ्री यस्य तं भवच्छिदं संसारनिवर्त्तकं गुणमय्या आत्मनः शक्त्या मायया सगुणनिर्गुणभेदेन युक्तं विरहितञ्च भगवन्तम् अभवाय संसारनिवृत्तये सर्वभूतेषु आत्मभावेन भजस्व तेन ते भद्रं भविष्यति ॥ ५–६ ॥ वृणीहीति। हे औत्तानपदे इति ह्रस्वं छन्दोऽनुरोधेनार्षम्। हे औत्तानपदे ! हे नृप ! मत्तः सकाशात् अविशङ्कितो मया यक्षादिवधेनापराधः कृत इति शङ्कारहितः सन् स्वमनोगतं स्वाभिलषितं वरं काममसंकोचेन वृणीहि। यतो हेतोः अङ्ग हे ध्रुव ! वयं त्वाम् अम्बुजनाभस्य हरेः पादयोः अनन्तरम् अतिनिकटवर्तिनं शुश्रुम श्रुतवन्तः। अतस्त्वं वरार्हः वरप्रदानपात्रभूतोऽसि ॥ ७ ॥ स इति। एवं महाभागवतः महामतिः स ध्रुवो राजराजेन धनदेन वराय वरं याचितुं चोदितः प्रेरितोऽभूदिति भिन्नं वाक्यम्। अतः स इत्यस्य न पौनरुक्त्यम्। परे तु राज्ञा

सह वर्तमानेषु लोकेषु वर्तमानः स राजराजः कुबेर इत्यर्थेन पौनरुक्त्यं परिहरन्ति। स ध्रुवो हरौ हरिविषयिकामचलितां विघ्नैश्चालयितुमशक्यां स्मृतिं वव्रे। यया स्मृतया जनो दुरत्ययम् उपायान्तरेणात्येतुं निवर्त्तयितुमशक्यं तम आत्मावरकमज्ञानमयत्नेनानायासेनैव तरति निवर्त्तयति॥ ८॥

तस्येति। इडविडायाः पुत्रो धनदः प्रीतेन प्रीतियुक्तेन मनसा तस्य ध्रुवस्य तामचलां भगवत्स्मृतिं दत्त्वा ततस्तदनन्तरं तस्य पश्यत एवान्तर्दधेऽन्तर्हितवान्। स ध्रुवोऽपि स्वपुरं प्रत्यपद्यत आजगाम॥ ९॥ अथेति। अथ गृहमागत्य द्रव्यक्रिया देवतानां यज्ञाङ्गभूतानां संबन्धि कर्मप्रदं कर्मफलप्रदं च स एव कर्म कारयति तत्फलं चेत्यर्थः। यज्ञेशं भगवन्तं भूरिदक्षिणैः क्रतुभिर्यज्ञैः अयजत इष्टवान्॥ १०॥ सर्वात्मनीति। सर्वेषामात्मनि असर्वे अविद्यमानसर्वोपाधौ गौणत्वान्न सर्वनामता। अच्युते तीव्रौघामखण्डितप्रवाहां भक्तिं चित्तवृत्तिमुद्वहन् स्वात्मनि सर्वभूतेषु च तमेव विभुं व्यापकमवस्थितं ददर्श॥ ११॥ तमिति। तमेवं पूर्वोक्तं शीलं भगवद्भक्तिलक्षणं तेन सम्पन्नं ब्रह्मण्यं ब्राह्मणभक्तं दीनेषु वत्सलं न्यायुक्तं धर्मसेतूनां वर्णाश्रमधर्ममर्यादानां गोप्तारं रक्षकं सर्वाः प्रजाः पितरं मेनिरे॥ १२॥ षडिति। भोगैः विषयाणां धर्माद्यविरोधेन भोगैः प्रारब्धपुण्यस्य क्षयं कुर्वन् तथा अभोगैः यज्ञाद्यनुष्ठानैः प्रारब्धस्याशुभस्य पापस्य क्षयं कुर्वन् षट्त्रिंशद्वर्षसाहस्रं कालं तावत्कालपर्यन्तं क्षितिमण्डलं शशास॥ १३॥ एवमिति द्वयम्। एवं भोगान् भुञ्जानोऽप्यविकलेन्द्रियः न विकलानि निषिद्धभोगोन्मुखानि भोगैः श्रान्तानि वा इन्द्रियाणि यस्य सः तथा महात्मा शुद्धचित्तः स तथा ध्रुवः इदं देहादि विश्वं भगवता मायया आत्मनि स्वस्मिन् रचितम् अविचारचितस्वप्नगन्धर्वनगरोपमं मन्यमानः सन् बह्वयः सवाः यागाः संवत्सरा वा यस्मिंस्तं त्रिवर्गस्य धर्मादेरौपयिकमुपभोगस्य साधनं कालं नीत्वा भोगाद्विरक्तः सन्नृपासनं पुत्राय वत्सरायादात्॥ १४–१५॥ आत्मेति। आत्मा देहः स्त्रियः अपत्यानि च सुहृदो मित्राणि बलं सेना ऋद्धः समृद्धः कोशः अन्तःपुरं रम्याः परितः विहारभुवः उद्यानानि च जलधिः समुद्रो मेखला परिखा यस्य तत् भूमण्डलम् आत्मादिकं सर्वं कालोपसृष्टं कालव्याप्तं नश्वरमित्याकल्प्य विचार्य तद्धित्वा भगवन्तमाराधयितुं विशालां बदरिकाश्रमं ययौ॥ १६॥ तस्यामिति। तस्यां विशालायां शिवं पवित्रं वार्जलं विगाह्य प्रविश्य जले स्नात्वेति स्नानादिनियमा उक्ताः। विशुद्धकरणः विशुद्धानि करणानि अन्तःकरणमिन्द्रियाणि च यस्य स तथेति शमदमादयो यमा उक्ताः। स्वस्तिकाद्यासनं बद्ध्वा जितो मरुत् प्राणवायुर्येन स तथेति प्राणायाम उक्तः। मनसा हृतानि स्वस्वविषयेभ्यः परावर्तितानि अक्षाणि इन्द्रियाणि येन स तथेति प्रत्याहारो दर्शितः। धारणामाह—स्थूल इति। भगवतः प्रतिनिधिभूते स्थूले विराड्रूपे एतन्मनो दधार। ध्यानं समाधिं चाह—तद्ध्यायन्नव्यवहितो ध्यातृध्येयध्यानभेदस्फुरणरहितः समाधौ स्थितः संस्तदपि स्थूलं रूपं व्यसृजत् विस्मृतवान्॥ १७॥

भक्तिमिति। हरौ भगवति अजस्रं भक्तिं प्रकर्षेण वहन् अतः आनन्देन जातया बाष्पकलया अश्रुबिन्दुप्रवाहेण मुहुरर्द्यमानः अभिभूयमानः विक्लिद्यमानं द्रवत् हृदयं यस्य स तथेति पुलकैः उत्थितरोमभिराचितानि व्याप्तान्यङ्गानि यस्य अतः मुक्तं लिङ्गं शरीराभिमानो येन स ध्रुवः असौ ध्रुवोऽहमित्यात्मानं नास्मरत्॥ १८॥ स इति। स ध्रुवः उदितं राकापतिं चन्द्रमिव दश दिशो विभ्राजयत् प्रकाशयत् नभसः सकाशादवतरद्विमानाग्र्यं श्रेष्ठं विमानं ददर्श॥ १९॥ तत्रेति। अनु विमानदर्शनानन्तरं तत्र विमाने चतुर्भुजौ श्यामौ किशोरौ अरुणे अम्बुजे इव ईक्षणे ययोर्गदामवष्टभ्य स्थितौ सुवाससौ किरीटहाराङ्गदसहिते चारुणी कुण्डले ययोस्तौ देवप्रवरौ भगवत्पार्षदौ सुनन्दनन्दौ ददर्श॥ २०॥ विज्ञायेति। तावुत्तमगायस्य पुण्ययशसो भगवतः किङ्करौ निदेशकारिणौ विज्ञायाभ्युत्थितः मधुद्विषो हरेः पार्षदप्रधानौ इमौ इति हेतोः साध्वसेन सम्भ्रमेण विस्मृतः पूजाक्रमो येन संहताञ्जलिः संयोजितहस्तः स ध्रुवः हरेः नामानि गृणन् तौ ननाम॥ २१॥ तमिति। कृष्णपादयोरभिनिविष्टं चेतश्चित्तं यस्य स तथा तं बद्धाञ्जलिं प्रश्रयेण विनयेन नम्रा आनता कन्धरा ग्रीवा यस्य तं पुष्करनाभस्य भगवतः पार्षदेषु श्रेष्ठत्वेन संमतौ सुनन्दनन्दावुपसृत्य तत्समीपं गत्वा सस्मितं यथा भवति तथा स्वप्रसन्नतां सूचयन्तौ तं प्रत्यूचतुः॥ २२॥ भो भो इति द्वयम्। भो भो राजन्! ते तव भद्रं भवतु। इति सशरीरस्य विष्णुपदारोहणाभिप्रायम्। अवहितः सावधानः सन्नोऽस्माकं वाचं त्वं शृणु। पञ्चवर्षो भवान् तपसा यं देवमतीतृपत् तृप्तमकार्षीत्तस्याखिलजगद्धातुः सर्वपालकस्य देवस्य शार्ङ्गिणः पार्षदौ आवां भगवत्पदं भगवद्दत्तस्थानं प्रति त्वां नेतुमिहास्मिन् स्थाने संप्राप्तौ विद्धि॥ २३–२४॥ सुदुर्जयमिति। सूरयः सप्तर्षयोऽपि यदप्राप्य तदधः स्थिता दूरतः परं केवलं विचक्षते पश्यन्ति। यच्च चन्द्रदिवाकरादयो ग्रहा ऋक्षाणि तारकाश्च दक्षिणं यथा स्यात्तथा परियन्ति परिक्रामन्ति। तत् सुदुर्जयमतिदुर्जयं विष्णुपदं त्वया जितं तत्प्रसादात् प्राप्तं तदातिष्ठ आधितिष्ठ॥ २५॥ अनास्थितमिति। अङ्ग हे ध्रुव! यत् ते पितृभिः अन्यैश्च तरस्विभिरपि कर्हिचिदपि अनास्थितम् अनधिष्ठितं जगतां वन्द्यं तद्विष्णोः परमं पदम् आतिष्ठ॥ २६॥ एतदिति। हे आयुष्मन्निति देहत्यागाभावं सूचयति। उत्तमश्लोकानां महायशस्कानां मौलिना मुख्येन हरिणा एतद्विमानप्रवरं श्रेष्ठं विमानमुपस्थापितं त्वत्समीपे प्रेषितं तदेतत् त्वमधिरोढुमर्हसि॥ २७॥

निशम्येति। वैकुण्ठस्य भगवतो नियोज्यानां पार्षदानां मुख्ययोस्तयोर्मधुच्युतं मधु च्यवते स्रवतीति मधुच्युत् ताम्। दीर्घपाठे मधु च्युतं यस्यांताममृतस्राविणीमिव वाचं निशम्य उरुक्रमस्य हरेः प्रियो ध्रुवः कृताभिषेकः कृतं नित्यकर्म सन्ध्यावन्द-

नादिकं मङ्गलम् अलङ्कारादिकं च येन स तथाभूतः सन् मुनीन् बदरिकाश्रमनिवासिनः प्रणम्य तेभ्य आशिषमभ्यवादयत् वाचयामास ॥ २८ ॥ परीत्येति । धिष्ण्याग्र्यं विमानश्रेष्ठमभ्यर्च्य भगवद्धमानाय नम इति गन्धादिभिः सम्पूज्य परीत्य प्रदक्षिणीकृत्य पार्षदौ चाभिवन्द्य तदेव स्वीयं रूपं हिरण्मयं प्रकाशबहुलं बिभ्रत्सन् तद्विमानमधिष्ठातुमारोढुम् इयेष ऐच्छत् ॥ २९ ॥ तदेति । तदा उत्तानपदः पुत्रो ध्रुव आगतम् अन्तकं मृत्यु ददर्श । स चोवाच—महाराज ! मामङ्गीकुरु । ततो ध्रुव उवाच तूर्णं तावदास्व । इत्युक्त्वा विष्णुं संस्मृत्य सोपाने इव मृत्योर्मूर्ध्नि पदं दत्त्वा अद्भुतं गृहं विमानम् आरुरोह ॥ ३० ॥ तदेति । देवैर्वादिताः दुन्दुभयः मृदङ्गपणवादयश्च नेदुः । गन्धर्वमुख्याः प्रजगुः कुसुमवृष्टयश्च पेतुः ॥३१॥ स चेति । स्वर्लोकमारोक्ष्यन् सः ध्रुवः स्वजननीं सुनीतिमस्मरत् । स्मरणाभिनयमाह—मद्वियोगेन दीनां दुःखितां जननीं हित्वा अगं दुर्गमस्थानं त्रिविष्टपं स्वर्गं कथं यास्य इति । तङार्षः ॥ ३२ ॥ इतीति । इत्येवं तस्य ध्रुवस्य व्यवसितमभिप्रायं व्यवसाय निश्चित्य । व्यवसीयेति स्वापः पाठः । सुरोत्तमौ भगवत्पार्षदौ देवीं सुनीतिं यानेन पुरः पुरतो गच्छन्तीं दर्शयामासतुः । णुमभाव आर्षः ॥ ३३ ॥ तत्र तत्रेति । पथि मार्गे तत्र तत्र प्रशंसद्भिः वैमानिकैर्विमानस्थैः सुरैः कर्तृभिः कुसुमैः पूजनसाधनैः अवकीर्यमाणः आच्छाद्यमानो ध्रुवः क्रमशः ग्रहान् आदित्यादीन् ददृशे ददर्श । तङार्षः ॥ ३४ ॥ त्रिलोकीमिति । ध्रुवा निश्चला गम्यत इति गतिः स्थानं यस्य सः ध्रुवगतिर्ध्रुवो देवयानेन देवमार्गेण भगवत्प्रस्थापितविमानेन वा त्रिलोकीं मनून् सप्तर्षीनप्यतिव्रज्य उल्लङ्घ्य ततः परस्तात् उपरिष्टाद्वर्तमानं यद्विष्णोः पदं तत् । अथ ग्रहदर्शनाद्यनन्तरमभ्यगात् सुखेन प्राप्तवान् ॥ ३५ ॥ तत्पदं विशिनष्टि—यदिति । यद्विष्णोः पदं स्वरुचैव स्वप्रकाशेनैव सर्वतो भ्राजमानम् एते त्रयो लोका हि निश्चितमनु तद्रुचैव विभ्राजन्ते । ये जन्तुषु प्राणिष्वननुग्रहाः कृपारहिताः क्रूरस्वभावास्ते यन्नात्रजन् कदापि न गतवन्तः । ये तु दयालवो जन्तुष्वनिशं निरन्तरं भद्राणि हितानि चरन्ति ते यद्व्रजन्ति गच्छन्ति तदभ्यगादित्यनुषङ्गः ॥ ३६ ॥

शान्ता इति । शान्ताः समदृशः शुद्धाः सर्वभूतानामनुरञ्जनाः अच्युतः प्रियो बान्धवो येषां ते अञ्जसा अच्युतस्य पदं यान्तीति ॥ ३७ ॥ इतीति । इत्येवं वर्णितेन प्रकारेण कृष्णपरायणः अमलश्च उत्तानपदः पुत्रो ध्रुवस्त्रयाणां लोकानां चूडामणिरिवाभूत् त्रिलोक्या मूर्ध्नि स्थानं प्रापेति ॥ ३८ ॥ गम्भीरेति । हे कौरव्य ! अनिमिषमनलसं निरन्तरं यथा भवति तथा । यद्वा अनिमिषं जाग्रदेव कालरूपं ज्योतिषामादित्यादीनां चक्रं यस्मिन् ध्रुवप्राप्ते स्थान आहितं समर्पितं सद्धान्यक्रमणाय भ्राम्यतां पशूनां बन्धनस्तम्भो मेढी तस्यामाहितो गम्भीरवेगोऽव्यवच्छिन्नवेगो गवां गणो यथा भ्रमति तथा भ्रमति । गम्भीरवेग इति लिङ्गपरिणामेन ज्योतिश्चक्रस्यापि विशेषणम् ॥ ३९ ॥ महिमानमिति । अस्य ध्रुवस्य महिमानं विलोक्य दृष्ट्वा भगवान्नारदऋषिः प्रचेतसां राज्ञां ध्रुववंशराज्ञां सत्रे यज्ञसभायां वक्ष्यमाणांस्त्रीन् श्लोकान् आतोद्यं वीणां वितुदन् वादयन्नगायत् ॥ ४० ॥ नूनमिति । नूनं पतिरेव देवता यस्यास्तस्याः सुनीतेः सुतस्य ध्रुवस्य यत्तपस्तत्प्रभावस्य तस्य माहात्म्यस्य तां सर्वोत्कृष्टां गतिं फलमधिगन्तुं प्राप्तुं वेदवादिनो ब्रह्मर्षयोऽपि अभ्युपायान् तत्प्राप्त्युपायान् ध्रुवेणानुष्ठितान् भगवद्धर्मान् दृष्ट्वापि प्राप्तुं नैव प्रभवन्ति तदा अन्ये नृपाः न प्राप्नुवन्तीत्यत्र किं पुनर्वक्तव्यम् । यद्वा सुनीतेः तपःप्रभावरूपस्य अस्य सुतस्य ध्रुवस्य तां गतिं इष्ट्वाभ्युपायान् अन्तरङ्गसाधनान्यप्यधिगन्तुं न प्रभवन्ति किमुत ताम् । यद्येवं तेऽपि न तर्हि किमुततरां नृपाः ॥ ४१ ॥ य इति । यो ध्रुवः पञ्चवर्षोऽतिबालोऽपि गुरुदाराः पितृपत्नी सुरुचिस्तस्या वाच एव शरास्तैर्निर्भिन्नेनात एव दूयता उपतप्यमानेन । शता आर्षः । हृदयेन युक्तो वनं यातस्तत्र मदादेशकरो मदुपदिष्टतपश्चर्यादि कुर्वन् अजितं दुराराध्यमपि तस्यैव ये भक्तास्तेषां ये गुणा मैत्रीकरुणादयस्तैः पराजितं वशीकृतं प्रभुं भगवन्तं जिगाय वशीकृतवान् ॥ ४२ ॥ य इति । यः कोऽपि महानपि भुवि क्षत्रबन्धुः क्षत्रियोत्तमोऽपि तदपेक्षया क्षत्रियाधम एव सन् सः तस्य ध्रुवस्याधिरूढं तेन प्राप्तं पदमनु तत्पश्चात् वर्षसमूहैरपि साधनकालैः शनैः शनैरारुरुक्षेदपि किमारोढुमपीच्छेत् दुःसाधतया तदिच्छाप्यसंभाविता तदारोहणं सुदूरत इति भावः । यद्वा यः तस्याधिरूढं पदम् अनु पश्चात् आरोढुम् इच्छेत् स किं वर्षपूगैरप्यारोहेदिति शेषः । ध्रुवस्तु षट्पञ्चवर्षाणि वयो यस्य सः वयःशब्दस्य वृत्तावन्तर्भावः । बालोऽप्यल्पैरेवाहोभिर्दिवसैः षण्मासपरिमितैर्वैकुण्ठं दुराराध्यमपि भगवन्तं प्रसाद्य प्रसन्नं कृत्वा यदन्येषां दुर्लभं तत्तस्य भगवतः पदमवाप प्राप्तवान ॥ ४३ ॥ एतदिति । यत्स्तां सम्मतम् उद्दाममुत्कृष्टं यशो यस्य तस्य ध्रुवस्य चरितं त्वयाहं पृष्टः विशेषतः प्रश्नाभावेऽपि "येन वा भगवांस्तुष्येद्धर्मयोनिर्जनार्दनः । संप्रसीदति वा येषामेतदाख्याहि चानघ ॥" इत्यादिसामान्यरीत्या त्वयाऽहं पृष्टस्तस्मादेतत् ध्रुवस्य चरितं ते तुभ्यं सर्वमिहाभिहितम् ॥ ४४ ॥ धन्यमिति । धन्यं यशस्यमायुष्यं धनयशआयुषां साधनं पुण्यं स्वस्त्ययनं मङ्गलकरं महत् महद्भिः श्लाघ्यं स्वर्ग्यं स्वर्गसाधनं ध्रौव्यं ध्रुवपदप्रापकं सौमनस्यं मनःशुद्धिकरं प्रशस्यं प्रशंसायोग्यम् अघमर्षणं पापनाशकम् ॥ ४५ ॥

श्रुत्वेति । एतत् अच्युतप्रियस्य ध्रुवस्य चेष्टितं श्रद्धयाऽभीक्ष्णं श्रुत्वा वर्तमानस्येति शेषः । अतः समानकर्तृकता जनस्य भगवति भक्तिर्भवेत् । यया भक्त्या क्लेशानामविद्यादीनां संक्षयः स्यात् ॥ ४६ ॥ महत्त्वमिति । महत्त्वमिच्छतां तीर्थं महत्त्वा-

वाप्तिसाधनं यत्र यस्मिन् ध्रुवचरिते श्रुते श्रोतुः शीलादयो गुणा भवन्ति । श्रोतुरिति वक्तुरप्युपलक्षणम् । तदिच्छूनां तेज आकाङ्क्षतां तेजो भवति । यत्र मनस्विनां मानः संमानः सर्वलोककृतः आदरो भवति ।। ४७ ।। प्रयत इति । प्रयतः एकाग्रमनाः सन् इदं पुण्यश्लोकस्य ध्रुवस्य महत् चरितं प्रातः कीर्त्तयेत् । द्विजन्मनां समवाये सभायां कीर्त्तयेत् । सायं च कीर्त्तयेत् ।। ४८ ।। पौर्णमास्यामिति । पौर्णमास्यां सिनीवाल्याममावस्यायां द्वादश्यां श्रवणेऽथवा दिनक्षये तिथिक्षयदिने व्यतीपाते संक्रमे संक्रान्तिदिने आदित्यवारेऽपि वा प्रयत कीर्तयेत् ।। ४९ ।। श्रावयेदिति । तीर्थपादपदाश्रयः भगवदेकशरणः सन् श्रद्दधानानां श्रवणे श्रद्धावताम् । द्वितीयार्थे षष्ठी । श्रावयेत् किञ्चिदपि फलं नेच्छन् तत्र चरिते कीर्तिते श्रुते वा आत्मना धैर्ययुक्तया बुद्ध्याऽऽत्मानं मनः प्रतिसंतुष्टो भवति । इति हेतोः सिद्ध्यति भगवत्प्रसादरूपां परमां सिद्धिं प्राप्नोति । यद्वा फलं नेच्छन् कथावेतनद्रव्यमगृह्णन् आत्मानं प्रत्यात्मनैव संतुष्टः यत्कथ्यमानां भगवत्कथां भक्ताः श्रद्धया शृण्वन्तीत्येतदेव मम वेतनम् इति मन्यमानः । अत एव सिद्धिं प्राप्नोति ।। ५० ।। ज्ञानमिति । सत्पथे भगवन्मार्गे अज्ञाततत्त्वाय दीनाय यो ज्ञानरूपममृतं संसारनिवर्त्तकं दद्यात्तस्य दीनानाथस्य दीनोद्धारकस्य कृपालोर्देवा इन्द्रियाधिष्ठातारोऽनुगृह्णते विघ्नं न कुर्वन्ति प्रत्युतानुग्रहमेव कुर्वन्ति ।। ५१ ।। इदमिति । हे कुरूद्वह ! विख्यातं विशुद्धं कर्म यस्य तस्य ध्रुवस्य इदं चरितं मया ते तुभ्यमभिहितम् । योऽर्भकः बाल इव क्रीडनकानि क्रीडासाधनानि मातुर्गृहं च हित्वा विष्णुं शरणं जगाम ।। ५२ ।।

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां द्वादशोऽध्यायः ।। १२ ।।

—:※:—

## अथ त्रयोदशोऽध्यायः

सूत उवाच

निशम्य कौषारविणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणम् ।
प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ।। १ ।।

त्रयोदशे दुष्टपुत्रवेनदुःखाद् ध्रुवान्वये । अङ्गो गृहाद् गतस्तत्र श्लोका नन्दपयोधयः ( ४९ ) ।।
अनुष्टुभश्चन्द्रबाणा ( ५१ ) उवाचेति च सप्तकम् ( ७ ) ।। १३ ।।

निशम्येति । कौषारविणा मैत्रेयेणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणं भगवत्स्थानप्राप्तिं निशम्य भगवत्यधोक्षजे प्ररूढो दृढतां गतो भावो भक्तिर्यस्य स तथाभूतो विदुरः पुनस्तं मैत्रेयं प्रष्टुं प्रचक्रमे प्रारब्धवान् ।। १ ।। सत्रेऽगायत् प्रचेतसामित्याकर्ण्य पृच्छति—के ते इति । हे सुव्रत ! नारदो ध्रुवमहत्त्वं येषां प्रचेतसां सत्रेऽगायत् ते प्रचेतसो नाम कस्यान्ववाये वंशे प्रख्याताः प्रसिद्धाः । कस्य चापत्यानि कुत्र वा सत्रसंज्ञकं यागमासत अकुर्वत ।। २ ।। मन्य इति । देवस्य हरेर्दर्शनं यस्य तं नारदं महाभागवतं मन्ये । येन नारदेन हरेः परिचर्याविधिः सेवाप्रकाररूपः क्रियायोगः पाञ्चरात्रादौ प्रोक्तः ।। ३ ।। स्वधर्मेति । किलेत्यवधारणे । तत्र सत्रे स्वधर्मशीलैः प्रचेतःप्रभृतिभिः पुरुषैरिज्यमानः पूज्यमानो यज्ञपुरुषो भगवानेव भक्तिमता नारदेन ईडितः स्तुतः । नान्यैः ईरित इति च पाठः ।। ४ ।। या इति । हे ब्रह्मन् ! तत्र प्रचेतसां सत्रे देवर्षिणा नारदेन या भगवत्कथा वर्णितास्ता मह्यं शुश्रूषवे कार्त्स्न्येन साकल्येनाचष्टुं कथयितुमर्हसि ।। ५ ।। ध्रुवस्य वंशे तज्जन्म वक्तुं ध्रुवस्य वंशमाह—ध्रुवस्येति । चस्त्वर्थे ।

ध्रुवस्य पुत्र उत्कलस्तु पितरि ध्रुवे वनं प्रस्थिते प्रव्रजितुमुद्यते सति ज्येष्ठत्वात्पित्रा दीयमानमपि पितुः सार्वभौमश्रियं पितृपालितभूसम्बन्धिनीं सम्पदमधिराजासनं च नैच्छत् ॥ ६ ॥ स इति । चोत्कलो जन्मना जन्मत एवोपशान्तात्मा भोगेच्छारहितमनाः निरसङ्गः सर्वत्र समदर्शनश्चासीत् । अतः आत्मानं लोके विततं व्याप्तं ददर्श । आत्मनि च लोकं ददर्श ॥ ७ ॥ आत्मानमिति द्वयम् । अव्यवच्छिन्नो निरन्तरमभ्यस्यमानो यो योगः सर्वत्र ब्रह्मानुसन्धानलक्षणः स एवाग्निस्तेन दग्धं कर्ममलं कर्मवासनात्मको दोषो यस्य तादृश आशयो यस्य सः उत्कलः निर्वाणं शान्तं प्रत्यक् तमितः सर्वतो निवृत्तो विग्रहो भेदो यस्मात् स अवबोधा ज्ञानं तदेकरसेनैकात्म्यं यस्य तत्तथा ज्ञानैकरसम् आनन्दम् अनु सन्ततं सर्वव्यापकम् आत्मानं स्वरूपभूतं ब्रह्म अवरुन्धानः जनान् आत्मनः सकाशादन्यं तदा ज्ञानदशायां नैक्षत नापश्यत् ॥ ८-९ ॥ जडेति । पथि मार्गे बालानामज्ञानां जडान्धबधिरोन्मत्तमूकानामिवाकृतिर्यस्य तथाभूतो लक्षितोऽपि अतन्मतिः न तेषां जडादीनामिव मतिर्यस्य सर्वज्ञत्वात् । अतः प्रशान्ताः अर्चिषो ज्वाला यस्य ईदृशः अनलः अग्निः इव स्थितः ॥ १० ॥ मत्वेति । अत उत्कलं जडमुन्मत्तमतोऽनधिकारिणं मत्वा मन्त्रिसहिताः कुलवृद्धाः यवीयांसमुत्कलात् कनिष्ठमपि भ्रमेः सुतं वत्सरसंज्ञकं भूपतिं चक्रुः ॥ ११ ॥ स्वर्वीथिरिति । वत्सरस्य इष्टा प्रिया भार्या स्वर्वीथिः पुष्पार्णं तिग्मकेतुं च इषम् ऊर्जं वसुं जयम् इति षडात्मजान् असूत ॥ १२ ॥

पुष्पार्णस्येति । पुष्पार्णस्य प्रभा नाम दोषा नाम चेति द्वे भार्ये बभूवतुः । प्रातः मध्यंदिनं सायमिति प्रभायाः सुता आसन् ॥१३॥ प्रदोष इति । प्रदोषः निशिथो निशीथः मध्यरात्रिः । ह्रस्वत्वमार्षम् । व्युष्टः प्रातःकाल इति त्रयः दोषासुता आसन् । व्युष्टश्च पुष्करिण्यां स्त्रियां सर्वतेजसं पुत्रमाद्यं उत्पादितवान् । अत्र कालचक्राधिष्ठातुर्ध्रुवस्य वत्सरात्मककालाधिष्ठाता सुतः तस्य भार्या स्वर्वीथिः काल्ज्योतिकाकाशपद्धतिः पुष्पार्णादयो वसन्ताद्यृतुभेदात् षट्प्रकाराहोरात्रात्मकाः कालाः अहोरात्रस्य प्रभा दिनव्यक्तिः दोषा रात्रिश्चेति द्वे भार्ये दिनव्यक्तेश्च प्रातरादयः कालाः रात्रेश्च प्रदोषादयः व्युष्टः प्रभातकालः स च पुष्करिण्यां कमलविकासलक्षितायां दिनप्रथमवेलायां सर्वतेजसं प्रकाशं पुत्रमुत्पादितवानिति इत्यादि बोध्यम् ॥ १४ ॥ स इति । स सर्वतेजाः एव चक्षुः आकूत्यां पत्न्यां चाक्षुषं नाम मनुं सुतमवापेति व्याख्येयम् । षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुरित्यष्टमात् । मनोर्महिषी नड्वला विरजान् रागादिदोषरहितान् पुरुप्रमुखानेकादश सुतानसूत ॥ १५ ॥ तानेव दर्शयति—पुरुमिति ॥ १६ ॥ उल्मुक इति । उल्मुकः पुष्करिण्यां भार्यायाम् उत्तमान् शीलादिशुभगुणसम्पन्नान् षट्पुत्रान् अजनयत् । तानाह—अङ्गमिति ॥ १७ ॥ सुनीथेति । अङ्गस्य पत्नी सुनीथा सा उल्वणं सर्वेषां भयङ्करं वेनसंज्ञं सुतं सुषुवे । यस्य वेनस्य दौःशील्याद् दुष्टस्वभावाद्धेतोः स राजर्षिर्धर्मात्माऽङ्गो निर्विण्णो विरक्तः सन् पुरात् निरगात् निर्जगाम ॥ १८ ॥ यमिति । अङ्ग हे विदुर ! यमतिक्रूरस्वभावं वेनं वागेव वज्रं येषां तेऽतिप्रभावाः मुनयः कुपिताः सन्तः शेपुः । भूयः पुनस्तस्य गतासोर्निर्गतप्राणस्य वेनस्य दक्षिणं करं ते मुनयो ममन्थुः ॥ १९ ॥ मथने हेतुः—अराजके इति । तदा अङ्गे वनं प्रति निर्गते वेने शापेन मृते च लोके अराजके सति प्रजाः दस्युभिः पीडिता जाताः । अतस्तद्रक्षार्थं राजोत्पादनार्थं मन्थने कृते नारायणांशेन आद्यः क्षितीश्वरः प्रथमो राजा पृथुर्वेनस्य मथ्यमानात् करात् जातः । तेनैव पुरग्रामादिरचनायाः कृतत्वादाद्यत्वम् ॥ २० ॥ तस्येति । शीलनिधेः सर्वदा सुस्वभावस्य साधोः ब्रह्मण्यस्य ब्राह्मणभक्तस्य महात्मनः तस्याङ्गस्य राज्ञो दुष्टा प्रजा दुष्टः पुत्रः कथमभूत् । यत् यस्याः प्रजायाः हेतोर्विमनाः सन् पुरात् ययौ ॥ २१ ॥ किञ्चेति । धर्मस्य कोविदाः अपि मुनयः दण्डः शासनमेव व्रतं तस्य धरे धारके राज्ञि वेने च किम् अंहः अपराधमुद्दिश्य ब्रह्मदण्डं शापम् अयूयुजन् योजितवन्तः । राज्ञो दण्डधर्मत्वात् तत्र शापोऽनुचित इति भावः । वेनमिति वा पाठः ॥ २२ ॥ नावध्येय इति । अघवान् क्रौर्यादिमानपि प्रजापालो राजा प्रजाभिर्नावध्येय अवज्ञेयोऽपि न भवति किं पुनर्वध्यः । यत् यस्मादसौ राजा स्वतेजसा स्वप्रभावेण लोकपालानामिन्द्रादीनामोजः सामर्थ्यं बिभर्ति । राज्ञो लोकपालांशत्वात्तदवज्ञानं न युक्तम् । किञ्च, राज्ञ एव दण्डेऽधिकारो न तु मुनीनामपि राजकर्मकदण्डनेऽधिकार इति ॥ २३ ॥

एतदिति । हे ब्रह्मन् ! एतन्मुनिकोपकारणं सुनीथात्मजस्य वेनस्य चेष्टितं श्रद्दधानाय भक्ताय च मे महामाख्याहि । यतः त्वं परावरवित्तमः भूतभविष्यज्ज्ञानां मध्येऽतिश्रेष्ठः असि ॥ २४ ॥ अभावी पुत्रः काम्यकर्मणा बलादापादितो न सुखायेति द्योतयन्नङ्गस्य पुत्रोत्पत्तिकथामाह—अङ्ग इति । राजर्षिरङ्गो महाक्रतुं क्रतुश्रेष्ठमश्वमेधमाजहार प्रवर्त्तयामास । तस्मिन्नश्वमेधे ब्रह्मवादिभिर्मन्त्रज्ञैरप्याहूता देवताः नाजग्मुः ॥ २५ ॥ तमिति । अथ तदा हे तात ! तत्र ऋत्विजो देवतानामनागमनेन विस्मिता आश्चर्यं गताः सन्तस्तं यजमानमूचुः । हे राजन् ! हूयमानानि ते हवींषि देवता न गृह्णन्ति ॥ २६ ॥ राजन्निति द्वयम् । हे राजन् ! श्रद्धया आसादितानि प्रापितानि ते हवींषि अपुष्टानि तथा धृतव्रतैः अस्माभिर्योजितानि प्रयुक्तानि छन्दांसि वेदमन्त्रा अपि अयातयामानि वर्णस्खलनादिदोषराहित्येनागतवीर्याण्येव सन्ति । अतः ये देवाः कर्मसाक्षिणः कर्माङ्गभूता मुख्यास्ते यत् येनापराधेन स्वान् भागान्न गृह्णन्ति तद्देवानां हेलनमपराधं वयमण्वपि स्वल्पमपि इहास्मिन् यज्ञे न विदाम न विद्मः । शब्लुगभाव आर्षः ॥२७-२८॥

अङ्ग इति। यजमानः अङ्गः द्विजानामृत्विजां वचः श्रुत्वा सुदुर्मना जातः। ततश्च यज्ञे गृहीतमौनोऽपि सदस्यान प्रति तत्प्रष्टुं देवानामनागमनकारणं स्वदोषं प्रष्टुं यज्ञे वाचंयमोऽपि तदनुज्ञया तेषामृत्विगादीनामाज्ञया वाचं व्यसृजत् प्रयुक्तवान्॥ २९॥ नेति। हे सदसस्पतयः! इह मम यज्ञ आहुताः आहूताः। ह्रस्वत्वमार्षम्। देवा नागच्छन्ति ग्रहान् सोमपात्राणि च न गृह्णन्ति। तत्र हेतुर्ममावद्यमेव यजमानत्वात् तथा च मया किमवद्यं कृतं तद्यूयं ब्रूत ॥३०॥ नरदेवेति। हे नरदेव! इहास्मिन् जन्मनि तावत् भवतोऽघं मनाक् ईषदपि न स्थितम्। कथञ्चिज्जातस्याघस्य प्रायश्चित्तेन सद्य एव शोधनात् परन्तु प्राक्तनं पूर्वजन्मनि भवम् एकमघमस्ति इति कल्प्यते। यद्यस्मादघात् त्वमिह जन्मनि ईदृक् धार्मिकोऽपि अप्रजः असि। असिजभाव आर्षः॥ ३१॥ तथेति। हे नृप! यथा देवाः स्वभागान् गृह्णीयुस्तथा आत्मानं सुप्रजं सुप्रजसं साधय। प्राग्वदसिजभावः। एवं ते भद्रं भविष्यति। ते तव पुत्रकामनावत-स्त्वयेष्टो यज्ञेन पूजितो यज्ञभुक् भगवान् पुत्रं दास्यति॥ ३२॥ तथेति। तथा सति दिवौकसो देवा अपि स्वभागधेयानि स्वभागान् यद्वा भागरूपाणि धेयानि पात्रेषु धार्याणि हवींषि इत्याहुः। ग्रहीष्यन्ति। यद्यस्मात् यज्ञपुरुषो हरिरेव साक्षात् त्वया अपत्याय वृतः स्यात्। अतस्तेन सह सर्वे देवा आगमिष्यन्ति॥ ३३॥

तांस्तानिति। आराधको जनो यान् यान् कामान् कामयत इच्छति तांस्तान् कामांस्तस्मै हरिर्दद्यात्। कुत एवं यतो यथा यस्य कामनया एष हरिराराधितो भवति पुंसां तथा तस्यैव फलस्योदयः प्राप्तिर्भवतीति॥ ३४॥ इतीति। इत्येवं सदसस्पतीनां वाक्यं श्रुत्वा विप्रा ऋत्विजो व्यवसिताः भगवद्यज्ञप्रवर्तने कृतनिश्चयाः सन्तस्तस्याङ्गस्य राज्ञः प्रजातये पुत्रोत्पत्तये शिपिविष्टाय "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञपशुषु प्रतितिष्ठति" इति श्रुतेः। यज्ञरूपेण शिपिषु प्रतिष्ठाय विष्णवे पुरोडाशं हविर्विशेषं निरवपन् विष्णूद्देशेन हविः सम्पाद्य होमं कृतवन्तः ॥३५॥ तस्मादिति। तदा च हिरण्मयेन पात्रेण सिद्धं पक्वं पायसमादाय हेममाली अमले शुद्धे अम्बरे यस्य स तथाभूतः पुरुषस्तस्मात् प्रकरणलब्धयोग्यतया होमाधारभूतादग्नेरुत्तस्थौ निःसृतः॥ ३६॥ स इति। उदारधीः स राजा विप्रानुमतः विप्रैरनुज्ञातः अञ्जलिना ओदनं पयसि पक्वं पायसं गृहीत्वा मुदा हर्षेण युक्तः अवघ्राय तत्पत्न्यै सुनीथायै प्रादात्॥ ३७॥ सेति। सा सुनीथा राज्ञी पूर्वमप्रजाः पुत्ररहिता सती। अविसर्गपाठे असिजभाव आर्षः। तत् पुंसवनं पुमांसं पुत्रं सूतेऽनेनेति तथा तत् पायसं प्राश्य अतिहर्षेण भुक्त्वा पत्युः सकाशाद्गर्भमादधे धृतवती। ततश्च प्रसूतिकाले उपावृत्ते प्राप्ते सति कुमारं सुषुवे जनयामास॥ ३८॥ स इति। स पुरुषः बाल एव अधर्मांशोद्भवं स्वमातामहं मृत्युमेवानुव्रतः अनुसृतः अभूत्। तेन हेतुनाऽधार्मिकः अभवत्। सुनीथा हि मृत्योः पुत्री। "मृत्युर्देवो यमभ्राता वेनमाता महोऽसुरः" इत्युक्तेः मातृदोषादधार्मिकोऽपि विष्णुयज्ञोद्भूतत्वात् पितुर्वैराग्यहेतुत्वेन पितुरुपकारकः पृथुजनकत्वेन तद्यशोवर्द्धनश्च बभूवेति ज्ञेयम्॥ ३९॥ स इति। असाधुर्दुष्टः स बालो वेनः वनगोचरः वनं गतः सन् मृगयुर्लुब्धकश्च सन् शरासनं धनुरुद्यम्य आकृष्य दीनान् मृगान् हन्ति स्म। अत एव तं दृष्ट्वा अस्मत्प्राणघाती वेनोऽसौ आयातीति सर्वोऽपि जनः अरौत् चुक्रोश॥ ४०॥ आक्रीड इति। अतिदारुणः कठिनचित्तः निरनुक्रोशः निर्दयः स आक्रीडे क्रीडास्थाने क्रीडतो वयस्यान् समानवयस्कान् बालान् पशुमारं शौनिका यथा पशून् मारयन्ति तथा प्रसह्य बलात्कारेण अमारयत्। "उपमाने कर्मणि च" इति णमुल्॥ ४१॥ तमिति। नृपोऽङ्गस्तं वेनं स्वपुत्रं खलं प्राणिपीडानिरतं विचक्ष्य दृष्ट्वा विविधैस्ताडनतर्जनादिभिः शासनैः शिक्षणैर्यदा शास्तुं शिक्षितुं शिक्षया सन्मार्गे नेतुं न कल्पः समर्थो न जातस्तदा भृशमत्यन्तं सुदुर्मनाः दुःखितचित्त आसीत्॥ ४२॥ एवं खिन्नः सन्नचिन्तयत्—प्रायेणेति। गृहमेधिनो गृहस्थाः सस्त्रीका अपि ये अप्रजाः पुत्रादिरहिताः। असिजभावः आर्षः। तैर्देवो भक्तदुःखनिवर्तको भगवान् अर्चितः ये कुत्सितैरपत्यैः भृतं स्वस्मिन् धृतं पूर्णीकृतं वा दुर्भरं धारयितुमशक्यं दुःखं न विन्दन्ति न लभन्ते॥ ४३॥

यत इति। यतः कदपत्यात् नृणां पित्रादीनां पापीयसी कीर्तिर्दुर्यशो भवति महान् अधर्मश्च भवति। यतश्च कदपत्याद्धेतु-भूतात् सर्वेषां सर्वैः प्राणिभिः सह विरोधो भवति। यतश्च अनन्तकः आधिर्मनःपीडा भवति॥ ४४॥ क इति। यदर्थाः यन्निमित्ताः गृहाः क्लेशदा भवन्ति। तं प्रजापदेशं प्रजेति कथनमात्रं यत्र वस्तुतस्त्वात्मनः स्वस्य मोहबन्धनमेव। अतः पण्डितश्चेत्तदा को बहु मन्येत आद्रियेत॥ ४५॥ कदपत्यमिति। शुचां पदात् विरहादौ शोकानां स्थानात् सदपत्यात् श्रेष्ठापत्यात् कदपत्यमेव वरं मन्ये। यतः कदपत्याद्धेतोः मर्त्यः गृहान्निर्विद्येत विरक्तो भवेत्। यत् यतो हेतोः गृहाः गृहसंबन्धिनः सर्वे पदार्थाः क्लेशनिवहाः दुःखप्रदाः प्रतिभान्ति॥ ४६॥ एवमिति। एवं महतामुदयानां विभूतीनामुदयो यस्मिन् तस्माद्गृहात् निर्विण्णं सर्वतो विरक्तं मनो यस्य न लब्धा निद्रा येन स नृपोऽङ्गः निशीथेऽर्द्धरात्रे उत्थाय नृभिः अनुपलक्षितः अज्ञात एव वेनं सूते वेनसूः सुनीथा ताम्। उपङ्कार्षः। प्रसुप्तामेव हित्वा गतः॥ ४७॥ विज्ञायेति। पतिं राजानं निर्विद्य वैराग्यं कृत्वा गतं विज्ञायातिशोकेन कातरा विह्वलाः प्रजाः पुरोहिता अमात्याः सुहृद्गणादयश्च उर्व्यां विचिक्युरन्वेषितवन्तः तथापि यथा निगूढं पुरुषम् अन्तर्यामिणं कुयोगिनः विचि-

न्वन्तोऽपि न पश्यन्ति तद्वत् तं नृपं नापश्यन्निति शेषः। निगूढमिति दृष्टान्तेन तत्र दिने तत्रैव पुरे राजा निगूढ आसीदिति सूचितम्॥ ४८॥ अलक्ष्यन्त इति। हे पौरव विदुर! ते प्रजाः पुरोहितादयः प्रजापतेरङ्गस्य पदवीं मार्गं स्थानमलक्ष्यन्तः अपश्यन्तः अत एव हतो निष्फलतां गतः उद्यमोऽन्वेषणलक्षणो येषां ते पुरीं प्रत्युपसृत्य आगत्य तत्र समेतान् एकत्र मिलित्वा स्थितान् ऋषीन् अभिवन्द्य साश्रवो रुदन्तः सन्तो भर्तृविप्लवं राज्ञो नाशं दर्शनाभावं न्यवेदयन् विज्ञापितवन्तः॥ ४९॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां त्रयोदशोऽध्यायः॥ १३॥

—:❀:—

## अथ चतुर्दशोऽध्यायः

### मैत्रेय उवाच

भृग्वादयस्ते मुनयो लोकानां क्षेमदर्शिनः। गोप्तर्यसति वै नृणां पश्यन्तः पशुसाम्यताम्॥ १॥

चतुर्दशे निगंतेऽङ्गेऽभिषिक्तोऽपि महाखलः। वेनो हतो द्विजैस्तत्र श्लोकाः सार्द्धा रसाब्धयः (४६॥)॥

चत्वार्युवाचेति सार्द्धाः सप्तवेदा (४७) अनुष्टुभः॥ १४॥

भृग्वादय इति द्वयम्। ते पूर्वोक्ताः लोकानां क्षेमदर्शिनः कल्याणचिन्तका ब्रह्मवादिनः भृग्वादयो मुनयः गोप्तरि रक्षके असति नृणां पशुसाम्यतां परस्परं परस्त्रीपरवित्तभोगोन्मुखतां पश्यन्तः। यद्वा पशून् मेषादीन् यथा शृगालादयो घ्नन्ति तथा लोकान् दस्यव इति पशुतुल्यतां पश्यन्तः। साम्यतामिति स्वार्थे ष्यञन्तात्तल्। वीरस्य वेनस्य मातरं सुनीथामाहूय तां पृष्ट्वा च प्रकृतीनां प्रजामात्यादिकानाम् असम्मतमपि वेनम्। प्रकृत्येति पाठे प्रकृत्या स्वभावेनासम्मतं राजपुत्रे विद्यमानेऽपराधातिशयं विनाऽन्यस्य राज्ये स्थापनमयुक्तमिति विचार्य भुवः पतिमभ्यषिञ्चन्॥ १–२॥ श्रुत्वेति। अत्युग्रं शासनं यस्य तं वेनं नृपासनगतं श्रुत्वा दस्यवस्तस्कराः सद्यः तच्छ्रवणकाल एव सर्पात् त्रस्ताः आखवो मूषका इव निलिल्युः निलीना बभूवुः॥ ३॥ स इति। आरूढमधिष्ठितं नृपस्थानं राजासनं येन अष्टविभूतिभिः अष्टलोकपालैश्वर्यैः संज्ञां विना। समास आर्षः। यद्वा अष्ट सङ्ख्या विभूतयो येषां तैः लोकपालांशैर्हेतुभिः उन्नद्धः विश्रृङ्खलः स्तब्धः अनम्रः स्वतः स्वेनैव संभावितः शूरोऽहमित्यादिकृतात्मश्लाघः स वेनः महाभागान् धार्मिकान् अवमेने तिरस्कृतवान्॥ ४॥ एवमिति द्वयम्। एवं प्राप्तराजासनत्वेन प्राप्तैरैश्वर्यैर्जातो यो मदो गर्वस्तेनान्धः अत एवोत्सिक्तस्त्यक्तलोकवेदाचारबन्धनः निरङ्कुशो द्विपो हस्ती यथा तद्वत् सन् रथमास्थाय क्रौर्येण रोदसी द्यावाभूमी कम्पयन्निव पर्यटन् भो द्विजाः कचित् क्वापि कदाचिदपि न यष्टव्यं न दातव्यं न होतव्यमित्येवं भेरीघोषेण सर्वतो धर्मं न्यवारयत्॥ ५–६॥ वेनस्येति। मुनयः दुर्वृत्तस्य दुराचारस्य वेनस्य विचेष्टितं सदाचारप्रतिबन्धलक्षणमवेक्ष्य दृष्ट्वा ते नरलोकस्य सज्जनस्य व्यसनं स्वधर्महान्या कष्टं विमृश्य विचार्य कृपया पीडिताः सत्त्रिणः परस्परं मिलिताः सन्त ऊचुर्विचारवाक्यान्युक्तवन्तः॥ ७॥ अहो इति। अहो आश्चर्ये दारुणि काष्ठे उभयतो मूलतोऽग्रतश्च दीप्ते प्रज्वलिते सति तन्मध्यवर्त्तिनां जन्तूनां यथोभयतो दुःखं भवति तथा लोकस्य धर्मनिष्ठस्य जनस्य तस्करपालयोरिति षष्ठी पञ्चम्यर्थो। तस्करेभ्यः पालकाच्चेत्युभयतः महत् व्यसनं प्राप्तम्॥ ८॥ अराजकेति। अराजकभयात् राजाभावे चोरादिकृतोपद्रवभयात् अतदर्हणः राज्यानर्होऽप्येष वेनः ततो रक्षार्थमस्माभी राजा कृतः। अथ इदानीं ततोऽपि वेनात् स्वधर्मत्यागलक्षणं भयं जातम्। अतो देहिनां कथं स्वस्ति स्यात्॥ ९॥ अहेरिवेति अर्द्धम्। अहेः सर्पस्य यथा पयसा पोषः पोषणं यदा क्रुद्धोऽहिः पोषकं दशति तदा तस्याप्यनर्थभूत

अनर्थपोषको भवति। अतोऽस्माकमपि धर्मलोपरूपोऽनर्थः प्राप्त एव। अनर्थप्रशमोपायं चिन्तयन्ति—वेन इति। सुनीथागर्भसंभवः मृत्योर्दौहित्रः वेनः प्रकृत्यैव स्वभावेनैव खलोऽपि अस्माभिः प्रजापालो निरूपितः राजा कृतः। स वै स एव प्रजाः धर्मलोपद्वारा जिघांसति नरकपातेन नाशयितुमिच्छति॥ १०॥ तथापीति। यद्यपि तद्विद्वद्भिः तत् वेनस्य दुष्टत्वं तत्पापं वा जानद्भिरप्यस्माभिरसावसद्वृत्तो दुराचारो वेनो नृपः कृतः। अतस्तत्पापमस्मानपि स्पृशेत्। तथापि अमुं वेनं सान्त्वयेम सद्युक्तिभिः प्रार्थयिष्यामः। ततश्च तत्कृतं पातकमस्मान्न स्पृशेत्। अन्यथा तत्कृतपातकभागित्वमस्माकमपि स्यात्॥ ११॥

सान्त्वित इति। सान्त्वितोऽनुनीतोऽप्यधर्मकृद्यदि नोऽस्माकं वाचं न ग्रहीष्यति तदा लोकधिक्कारेण संदग्धं मृतप्रायमेव एनं स्वतेजसा स्वकोपाग्निना दहिष्यामः धक्ष्यामः। इडार्षः॥ १२॥ एवमिति। गूढो बहिरलक्षितो मन्युः क्रोधो येषां ते मुनय एवं पूर्वोक्तप्रकारेणाध्यवसाय निश्चित्य एनं वेनमुपव्रज्य समीपं गत्वा सामभिः प्रियोक्तिभिः सान्त्वयित्वा अथानन्तरमत्रुवन्नुपदेशं कृतवन्तः॥ १३॥ नृपवर्येति। भो नृपवर्य! भोस्तात! वयं यत्तवायुःश्रीबलकीर्तीनां विवर्धनं साधनं ते तुभ्यं विज्ञापयाम तदेतत् त्वं सावधानतया निबोध अवधारय॥ १४॥ धर्म इति। पुंसामधिकारिणां विहितः वाङ्मनःकायबुद्धिभिराचरितोऽनुष्ठितो धर्मः विशोकान् स्वर्गादीन् लोकान् वितरति ददाति। अथ असङ्गिनां निष्कामानाम् आनन्त्यं मोक्षमपि ददाति॥ १५॥ स इति। हे वीर! ते तव प्रजानां क्षेममेव लक्षणं यस्य स पूर्वोक्तो धर्मः मा विनशेत् न विनश्यतु। श्यन्नभाव आर्षः। यस्मिन् धर्मे विनष्टे सति नृपतिरैश्वर्यात् राज्यात् अवरोहति भ्रष्टो भवति॥ १६॥ राजन्निति। हे राजन्! असाधुभ्यः उत्कोचग्राहकादिभ्यः अमात्येभ्यश्चौरादिभ्यश्च प्रजा रक्षन् यथा यथाशास्त्रं ताभ्यो बलिं करं गृह्णन् नृपः इहास्मिन् लोके प्रेत्य परलोके च मोदते॥ १७॥ यस्येति। यस्य राज्ञो राष्ट्रम् आज्ञानुवर्तिनि देशे पुरे च वर्णाश्रमान्वितैर्वर्णाश्रमवद्भिरधिकारिभिर्जनैः स्वेनाधिकारानुरूपेण धर्मेण भगवान् यज्ञपुरुषः यज्ञादितत्तत्कर्मफलदाता इज्यते आराध्यते॥ १८॥ तस्येति। हे महाराज! निजशासने प्रजापालनरूपे भगवच्छासने तिष्ठतः तस्य राज्ञः भूतभावनः प्राणिनां पालकः विश्वात्मा भगवान् परितुष्यति॥ १९॥ तस्मिन्निति। जगतामीश्वराणां ब्रह्मादीनामपीश्वरे तस्मिन् भगवति तुष्टे सति किं वस्तु अप्राप्यम्। हि यस्मात् एतस्मै भगवद्भक्ताय लोकपालैः सहिता सर्वेऽपि लोकाः प्राणिनः आदृताः सादरा बलिं हरन्ति भोगं सम्पादयन्ति। उत्तरार्द्धं भगवद्विशेषणं वा॥ २०॥ तमिति। हे राजन्! सर्वान् स्वर्गादिलोकान् तत्पालकानमरांश्च तत्प्रापकान् यज्ञांश्च संगृह्णाति नियच्छति स तथा तं त्रयीमयं द्रव्यमयं तपोमयं च तं भगवन्तं विचित्रैः स्वाध्यायद्रव्यादिमयैर्यज्ञैस्ते तव भवायोद्भवाय यजतः स्वदेशान् स्वदेशवासिनो जनान् अनुरोद्धुं तत्रैव यजने प्रवर्त्तयितुमर्हसि॥ २१॥ यज्ञेनेति। हे वीर! युष्मद्विषये युष्माकं देशे द्विजातिभिः त्रैवर्णिकैर्वितायमानेन प्रवर्त्यमानेन यज्ञेन हरेः कला अंशाः सुरा देवा इन्द्रादयः स्विष्टाः सम्यक् पूजिताः अत एव सुतुष्टाः सन्तो यज्ञकर्तॄणां देशाधिपतित्वेन तव च वाञ्छितमभिलषितं प्रदिशन्ति सर्वं सम्पादयन्ति। अतो हे वीर! तेषां देवानां तदंशिनो भगवतो वा हेलनं यज्ञादिप्रतिषेधेनावज्ञां चेष्टितुं कर्तुं नार्हसि॥ २२॥

बालिशा इति। यतो यूयमधर्मे मद्भजनत्यागपूर्वकविष्णुभजने धर्ममानिनोऽतो बालिशा वै भ्रान्ता एव। यतः ये भवन्तो वृत्तिदं स्वपतिं हित्वा स्वार्थपरमन्यं नरं स्वपतित्वेन कल्पितमुपासते। तथा ये भवन्तो वृत्तिदं जीविकाप्रदं राजानं पतिं पालकं मां हित्वा कुयोषितो जारमिव कल्पितं पतिं विष्णुमुपासते अतो बालिशा इत्यर्थः। वृत्तिदमित्यनेन अद्यैव मया फलादित्रोटने निषिद्धे सद्य एव मरिष्यथ न तदा विष्णू रक्षितुं प्रभविष्यतीति सूचितम्॥ २३॥ अवजानन्तीति। येऽमी मूढाः तं नृपरूपिणमीश्वरम् अवजानन्ति तं हित्वाऽन्यभजनेन तदपमानं कुर्वन्ति ते अमी इहास्मिँल्लोके परत्र परलोके चानु कदापि भद्रं कल्याणं न विन्दन्ति न लभन्ते॥ २४॥ क इति। भर्तृस्नेहो विदूरो यासां तासां कुयोषितां निन्दितस्त्रीणां जारे परपुरुषे यथा भक्तिर्भवति तथा यत्र यज्ञपुरुषे वो युष्माकमीदृशी अत्युत्कटा भक्तिरस्ति। स मद्भिन्नो यज्ञपुरुषो यज्ञाधिष्ठाता विष्णुर्नाम प्रसिद्धः कोऽस्ति न कोऽपीत्यर्थः॥ २५॥ विष्णुरिति द्वयम्। विष्णुः विरिञ्चिः इत्यादयः एते अन्येऽनुक्ताश्च विबुधा देवाः वरशापयोर्ये प्रभवः समर्थास्ते सर्वे यतो नृपतेर्देहे अवयवभूता भवन्ति ततः सर्वदेवमयो नृपः। न तदतिरिक्ताः केऽपि देवाः॥ २६-२७। तस्मादिति। हे विप्राः! तस्मात् यूयं गतमत्सराः मयि मनुष्यसंभावनाप्रयुक्तमात्सर्यरहिताः सन्तः कर्मभिः मदिच्छानुरूपैः मामेव यजध्वम्। तथा मह्यमेव बलिं करं च हरत समर्पयत। यतः मत्तोऽन्योऽग्रभुक् प्रथमभोक्ता आराध्यः पुमान् यज्ञपुरुषः कः न कोऽपीति॥ २८॥ इत्थमिति। विपर्ययो भ्रान्ता मतिर्यस्य सः पापीयान् उत्पथमसन्मार्गं गतः भ्रष्टमङ्गलः नष्टपुण्यः स वेन इत्थं नृपवर्य निबोधेत्यादिपूर्वोक्तप्रकारेण मुनिभिरनुनीयमानोऽपि तेषां मुनीनां याच्ञां सदाचारप्रवृत्तिविषयां नाङ्गीचक्रे॥ २९॥ इतीति। हे विदुर! इत्येवं पूर्ववर्णितप्रकारेण भव्या वेनस्यैवोद्भवहेतुभूता या याच्ञा भव्ययाच्ञा तस्यां भग्नायां सत्यां प्रत्युत पण्डितमानिना आत्मानं पण्डितं मन्यमानेन तेन वेनेन बालिशा वतेत्यादिदुर्वचोभिरसत्कृताः द्विजाः भृग्वादयो मुनयस्तस्मै वेनाय चुक्रुधुः॥ ३०॥ हन्यतामिति। पापः प्रकृत्या दारुणः भयङ्करः अयं हन्यतां हन्यताम्। यतः ध्रुवं निश्चितम् असौ वेनः जीवन् सर्वं जगदेव

स्वदुराचारेणाग्निना भस्मसात्कुरुते करिष्यति। अतोऽयमेव भस्मीकार्य इति भावः ॥ ३१ ॥ नायमिति। असद्वृत्तः दुराचारोऽयं वेनः नरदेवस्य राज्ञो वरमासनं नार्हति। नास्ति अपत्रपा अन्यतो लज्जा यस्य सः अनपत्रपः योऽयं वेनः अधियज्ञः यज्ञाधिष्ठाता चासौ पतिः स्वामी च तं विष्णुं विनिन्दति ॥ ३२ ॥

को वेति। यस्य भगवतोऽनुग्रहभाजनः अनुग्रहविषयः सन्नीदृशमत्युत्कृष्टमैश्वर्यं प्राप्तस्तमेनं भगवन्तमशुभं पापमयं वेनमेकमृते विना को वा परिचक्षीत निन्देत्। तस्मान्निरनुग्रहोऽयं वेनो हन्तव्य एवेति भावः॥ ३३ ॥ इत्थमिति। इत्थं हन्तुं व्यवसिताः कृतनिश्चयाः अतः पूर्वं गूढमन्यवोऽपीदानीं रूढमन्यवः प्रकटक्रोधाः ऋषयः अच्युतस्य निन्दया प्रथममेव हतं वेनं हुंकृतैः हुङ्कारैः एव निजघ्नुः॥ ३४ ॥ ऋषिभिरिति। एवं वेनं हत्वा ऋषिभिः स्वाश्रमपदं स्वस्थानं गते गमने कृते सति। भावे क्तः। भाव्यवतारभगवदिच्छावशात् सुनीथा पुत्रमरणाच्छोचती सती। नुमभाव आर्षः। मृतस्य पुत्रस्य कलेवरं शरीरं विद्या मन्त्र-विशेषस्तत्सहितेन योगेन तैलौषधादिप्रयोगरूपशरीररक्षोपायेन पालयामास॥ ३५ ॥ एकदेति। एकदा तु यैर्वेनो हतस्ते भृग्वादयो मुनयः सरस्वत्या नद्याः सलिले आप्लुताः कृतस्नानाः। पुंवद्भाव आर्षः। तस्या एव सरितस्तटे उपविष्टा अग्निं हुत्वा सत्कथा भगवत्कथाश्चक्रुः॥ ३६ ॥ वीक्ष्येति। तदा तु लोकस्य भयङ्करान् भयसूचकान् महोत्पातान् वामाङ्गस्फुरणहृदयकम्पश्वानरोदनादि-रूपान् उत्थितान् वीक्ष्येदानीमनाथाया भुवो दस्युभ्योऽभद्रमपि न भवेत् किम् इत्याहुः स्म॥ ३७ ॥ एवमिति। यावदृषय एवं मृशन्तो विचारयन्तः स्थितास्तावदेव धनमभिलुम्पतां राजभयाभावाद्बलात्कारेण गृह्णतां सर्वतोदिशं धावतां चोराणां भूरि पांसुः समुत्थितः॥ ३८ ॥ तदिति द्वयम्। तत् तदा च ते मुनयस्तस्मिन् वेने भर्त्तरि पालके उपरते मृते सति वसु धनं लुम्पतां चोराणां तथा-न्योन्यं च जिघांसतां दुर्जनानां कृतं लोकस्य साधुजनस्योपद्रवमालक्ष्य तथा अराजकं राजरहितमत एव चोरप्रायं चोरबाहुल्यमत एव हीनसत्त्वं त्यक्तधैर्यं जनपदमाज्ञाय लोकान् उपद्रवकर्तॄन् जनान् वारयितुं वेनवन्नाशयितुं च शक्ताः समर्था अपि तद्दोषदर्शिनः तस्मिन् निवारणे तेषां मरणप्राप्त्या तत्र दोषदर्शिनः सन्तः न अवारयन् न निवारितवन्तः। अन्ये तु उपद्रवादिक-माज्ञायापि शक्ता अपि अवारणे दोषदर्शिनोऽपि क्षत्रियाः आत्मानमेव रक्षन्तः किमस्माकमन्यैरित्युदासीनाः अन्यान् लुम्पतो लोकान्न अवारयन्निति व्याचक्षते॥ ३९-४० ॥ उपेक्षायामिति दोषमाह—ब्राह्मण इति। समदृगपि शान्तोऽपि ब्राह्मणो यदि दीनानां समुपेक्षको भवेत् तदा तस्यापि ब्रह्मतपःस्वाध्यायादि पुण्यं भिन्नभाण्डात् पयो यथा स्रवति तथा स्रवति तदा क्षत्रियादीनां किमु वक्तव्यम्॥ ४१ ॥ नाङ्गस्येति। राजर्षेरङ्गस्यैष वंशः संस्थातुं नाशं गन्तुं नार्हति। हि यस्मात् अस्मिन् मनुवंशे नृपाः अमोघवीर्या केशवाश्रयाश्च जाताः॥ ४२ ॥ विनिश्चित्येति। ऋषयः एवम् उपेक्षादोषपरिहाराय नाङ्गस्येत्यादि विनिश्चित्य विपन्नस्य मृतस्य सुनीथया रक्षितस्य महीपतेर्वेनस्य दोषांशस्य मातृसंबन्धजस्य दूरीकरणार्थं प्रथममधोभागमूरुं तरसा वेगेन ममन्थुः। तत्र ततो मथ्यमानादूरोर्वाहुको वामनको नरः पुरुषः आसीत् जातः। "ह्रस्ववामनबाहुकाः" इति कोशः॥ ४३ ॥ तं वर्णयति—काकेति। काक इव कृष्णवर्णः अतिह्रस्वमङ्गं शरीरं यस्य स तथा। तदेव प्रपञ्चयति—ह्रस्वौ बाहू यस्य सः महत्यौ हनू कपोलप्रान्तौ यस्य सः ह्रस्वौ पादौ यस्य सः निम्नं नासाया अग्रं यस्य सः रक्ते अक्षिणी यस्य सः ताम्रमिव रक्ता मूर्द्धजाः केशा यस्य सः॥ ४४ ॥ तमिति। हे तात! त्वं तु नरमवनतं नम्रशीर्षकं दीनं मनसापि नम्रीभूतं किं कार्यं भवत्सन्तोषकरमहङ्करोमीति वादिनं प्रार्थयमानं ते मुनयो निषीद स्थितो भवेत्यब्रुवन्। नासौ राज्ययोग्य इति निश्चित्येति भावः। स नरः ततो निषीदेति मुनिवचनात् निषादो निषाद-नाम्ना प्रख्यातो जातः। निषीदतीति निषादः ज्वलादित्वाण्णः॥ ४५ ॥ तस्येति। तु एवार्थे। तस्य निषादस्य वंश्या एवं नैषादाः ते च गिरिः काननं च गोचरः आश्रयो वासस्थानं येषां ते तथा अभूवन्। येन हेतुना जायमानोऽसौ पुरुष उल्बणमुग्रं भयङ्करं वेनस्य कल्मषं पापमहरत्। तद्धृत्वा जातस्तेन मुनिभिः स गिरिवनादिषु स्थापितोऽतस्तद्वंश्या अपि तत्रैव निवसन्ति न पुरादिषु॥ ४६ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो निरमाच्चतुर्थस्य चतुर्दशे॥

इति श्रीभागवते चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्दशोऽध्यायः॥ १४ ॥



# अथ पञ्चदशोऽध्यायः

## मैत्रेय उवाच

अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः । बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ १ ॥

विप्रैः पञ्चदशे वेनबाहुतो मथितादभूत् । पृथुस्तस्याभिषेकाद्य तत्र श्लोकास्तु षड्दृशः ( २६ ) ॥
उवाचेति चतुष्कं ( ४ ) च ऋक्षमानान्यनुष्टुभः ( २७ ) ॥ १५ ॥

अथेति । अथाऽधर्मांशदूरीकरणानन्तरमपुत्रस्य पुत्ररहितस्य महीपतेर्वेनस्य बाहुभ्यां विप्रैः पुनर्मथ्यमानाभ्यां मिथुनं समपद्यत जातम् । क्षात्रं तेजो भगवत्प्रभावश्च क्षत्रियाणां बाह्वोरेव तिष्ठतीत्याशयेन बाह्वोर्मथनम् ॥ १ ॥ तदेति । तज्जातं मिथुनं दृष्ट्वा भगवत्कलां विदित्वा परमसंतुष्टाः ब्रह्मवादिन ऋषयः ऊचुः ॥ २ ॥ एष इति । मिथुनमध्ये य एष पुरुषः स भगवतो विष्णोः भुवनपालिनी कलाऽस्ति । तथा येयं स्त्री सा तु पुरुषस्य भगवतोऽपायो वियोगस्तद्रहिता अनपायिनी भूतेः लक्ष्म्याः संभूतिः कला अस्ति ॥ ३ ॥ अयमिति । योऽयं पुमान् स तु पुरग्रामादिविशेषकल्पकत्वाद्राज्ञां प्रथमो भविष्यति तथा यशः कीर्तिं प्रथयिता विस्तारयिष्यति । ततश्च पृथुश्रवाः महायशा भविष्यति । अतः निरुक्त्या पृथुर्नाम प्रसिद्धो महाराजो भविष्यति ॥ ४ ॥

इयमिति । इयं च स्त्री देवी देदीप्यमाना सुदती शोभनदन्तवती गुणानां सौशील्यादीनां भूषणानां च भूषणभूता शोभाजननी वरारोहा वरः शोभनः आरोहः उत्सङ्गो यस्याः सा अर्चिर्नाम्ना प्रख्याता सती पृथुमेवावरुन्धती भक्त्या वशीकर्त्री भविष्यति ॥ ५ ॥ एष इति । हि यस्मात् एष साक्षाद्धरेरंश एव लोकस्य रिरक्षया रिरक्षिषया । इडभाव आर्षः । जातः । इयं च तत्परा भगवत एकान्तभक्ता अत एवानपायिनी तद्वियोगमसहमाना श्रीर्लक्ष्मीरनुजज्ञे तेन सह जाता । अतोऽनयोर्दम्पतिभावो न विरुद्धः ॥ ६ ॥ प्रशंसन्तीति । विप्राः तं प्रशंसन्ति स्म तुष्टुवुः । गन्धर्वप्रवरा विश्वावस्वादयस्तद्यशो जगुः । सिद्धाः सुमनसां धारा इव धाराः मुमुचुः । स्वःस्त्रियः अप्सरसो नृत्यन्ति स्म ॥ ७ ॥ शङ्खेति । देवैर्वादिताः शङ्खतूर्यमृदङ्गाद्या दुन्दुभयश्च दिवि स्वर्गे नेदुः । तत्रेति यत्र पृथ्ववतारो जात तस्मिन् स्थाने देवर्षिपितृणाम् । ह्रस्वत्वमार्षम् । सर्वे गणाः समूहा उपाजग्मुः ॥ ८ ॥ ब्रह्मेति द्वयम् । सुरेश्वरैः देवश्रेष्ठैरिन्द्रादिलोकपालैः सनकादिभिः सिद्धैर्मरीच्यादिप्रजेशैश्च सह जगद्गुरुर्देवो ब्रह्मा तत्रासृत्य आगत्य गदाभृतो भगवतोर्विष्णोश्चिह्नं वैन्यस्य पृथार्दक्षिणे हस्ते रेखात्मकं चक्रं पादयोररविन्दं रेखात्मकं कमलं च दृष्ट्वा यस्य दक्षिणे हस्ते पाणितले अप्रतिहतं रेखान्तरैरसंमिश्रितं रेखात्मकं चक्रं भवति स परमेष्ठिनः भगवतोंऽश इति सिद्धान्तात्तं पृथुं हरेः कलां वै अंशमेव मेने ॥ ९–१० ॥ तस्येति । ब्रह्मवादिभिः ब्राह्मणै तस्य पृथोः राज्याभिषेक आरब्धे सति जनाः अस्मै पृथवे सर्वतः सर्वदिग्भ्य आभिषेचनिकानि अभिषेकसाधनवस्तूनि आजह्रुः आनीय समर्पितवन्तः ॥ ११ ॥ सरिदिति । सरित्समुद्रादयः सर्वभूतानि च उपायनं समाजह्रुः निवेदितवन्तः ॥ १२ ॥ स इति । स महाराजो ब्राह्मणैरभिषिक्तः सुवासाः साधु यथा भवति तथा ब्रह्मादिभिर्निवेदितैश्चामरच्छत्रादिभिः किरीटकुण्डलादिभिश्चालङ्कृतः अलङ्कृतयाऽर्चिर्नाम्न्या पत्न्या सह हैमे राजसिंहासने स्थितोऽपरो द्वितीयोऽग्निरिव विरेजे ॥ १३ ॥ तस्मै इति । हे वीर विदुर ! तस्मै पृथवे धनदः कुवेरः हैमं हेमनिर्मितं वरासनमुत्तमासनं जहार प्रापयामास । वरुणः सलिलस्य स्रावो यस्मात्तत् शशिप्रभं शुभ्रमातपत्रं छत्रं जहार ॥ १४ ॥ वायुरिति । तस्मै वायुर्वालव्यजने द्वे चामरे धर्मः कीर्तिमयीं यस्या धारणे कीर्त्तिर्विंतता स्यात्तामम्लानपुष्पां स्रजम् । इन्द्रः उत्कृष्टमुत्तमं किरीटं यमः स्वदण्डादुत्पाद्य संयमनं शत्रुवशीकारकं दण्डं जहारेति सर्वत्रानुषङ्गः ॥ १५ ॥ ब्रह्मेति । तस्मै ब्रह्मा ब्रह्ममय वेदमयं वर्म कवचं भारतो सरस्वती उत्तमं हारं हरिर्विष्णुरपि लोकव्यवहारापन्नः स्वचक्रादुत्पाद्य सुदर्शनं चक्रं तस्य हरेः पत्नीः श्रीः अव्याहतां व्याहतिः क्षयस्तद्रहितामक्षयां श्रियं सम्पदं जहार ॥ १६ ॥

दशेति । तस्मै रुद्रः शिवः दश चन्द्राकाराणि विम्बानि कोशे यस्य तमसिम् अम्बिका पार्वती च शतं चन्द्राकाराणि बुद्बुदापरपर्यायाणि यस्मिंस्तत् चर्म सोमश्चन्द्रमाः अमृतमयान् मरणश्रान्तिखेदोद्गमादिधर्मरहितान् अश्वान् त्वष्टा विश्वकर्मा

रूपाश्रयमतिसौन्दर्ययुक्तं रथं जहार ॥ १७ ॥ अग्निरिति। तस्मै अग्निः अजस्य गोश्च शृङ्गाभ्यां निर्मितमाजगवम्। यद्वा अजगो ग्रन्थिरस्यास्तीत्यजगवम्। गाण्ड्यजगादिति वः। ततः स्वार्थेऽण्। सूर्यः रश्मिमयान् झटिति दूरदेशगामिनः इषून् बाणान् भूः भूमिर्योगमय्यौ पादधारणमात्रेणाभीष्टदेशप्रापिके पादुके द्यौः स्वर्गाभिमानिनी देवता अन्वहं प्रतिदिनं पुष्पावलिं पुष्पवृष्टिं जहार ॥ १८ ॥ नाट्यमिति। खेचराः आकाशगामिनो गन्धर्वविद्याधरादयः स्वस्वाधिकारानुरूपं नाट्यादिकौशलं वरत्वेन ददुः। समुद्रः क्षारोदः आत्मजं स्वप्रभवं शङ्खं जहार ॥ १९ ॥ सिन्धव इति। सिन्धवः समुद्राः पर्वताः नद्यश्च महात्मनो विष्णववतारस्य पृथोः रथवीथीः रथमार्गान् वरत्वेन ददुः। समुद्रादिष्वपि रथप्रतिघातराहित्यं ददुरित्यर्थः। अथ सर्वैरुपायननिवेदनानन्तरं सूतादय तं स्तोतुमुपतस्थिरे उपस्थिताः। तत्र "सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः। वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥" इति विवेकः ॥ २० ॥ स्तावकानिति। तान् स्तावकान् स्तोतुमुद्यतानभिप्रेत्य ज्ञात्वा वैन्यः प्रतापवांश्च पृथुः प्रहसन् मेघानामिव तत्रजनाश्वासनकरो निर्ह्रादो ध्वनिर्यस्यां तया वाचा इदं स्तुतिनिषेधपरं वक्ष्यमाणं वाक्यजातमब्रवीत् ॥ २१ ॥ भो इति। भोः सूत ! हे मागध ! हे सौम्य वन्दिन् ! लोके स्पष्टगुणस्य ततो मे स्तवः स्यात्। अधुना तु मम स्तवालम्बनस्पष्टगुणस्याभावान्मे स्तवः किमाश्रयः स्यात्। कान् गुणानाश्रित्य मां स्तुध्वे इत्यर्थः। अतः एव क्रियमाणः मम स्तवः किमाश्रयः योऽग्यताम्। अतो मयि मद्विषये वो युष्माकं गिरः मृषा मा भूवन्। अडार्षः। यद्वा स्तवो मे इत्यत्र अमे इति च्छेदः। मद्भिन्नस्य कस्यचित् स्तवः योऽग्रतां न तु मिथ्याभिमानापत्तेः। यद्वा असस्पष्टगुणस्य मे किमाश्रयः स्तवः स्यात्। अतः एष क्रियमाणः स्तवः मा योऽग्रतां यतः मयि विषये वः गिरः वितथा मिथ्या एव अभूवन् भवेयुः ॥ २२ ॥ तस्मादिति। हे अपीच्यवाचः मधुरगिरः ! तस्मात् मम अस्पष्टगुणत्वात् परोक्षे एव कालान्तरे गुणेषु सत्सु अस्माकमुपश्रुतानि यशांसि प्रति अलमत्यर्थं स्तोत्रं करिष्यथ। यतः उत्तमश्लोकस्य गुणानामनुवादे कर्त्तव्ये सत्यपि जुगुप्सितमर्वाचीनमप्रसिद्धगुणकं मद्विधं सभ्या न स्तवयन्ति न स्तावयन्ति। स्तावयितुं न योग्या भवन्तीत्यर्थः। ह्रस्वत्वमार्षम्। स्तवशब्दात् कर्मण्यप्रत्ययान्तात्तत्करोतीति णिजन्तस्य वा रूपम्। पृथोरंशावतारत्वेन पूर्णज्ञानाद्यप्राकट्यात् स्वतो भेदेन भगवतो निर्देश कृत इति ज्ञेयम् ॥ २३ ॥

महदिति। महतां गुणान् धार्मिकत्वादीन् आत्मनि कर्तुमीशः समर्थोऽपि असतः अविद्यमानान् संभावनामात्रेण स्तावकैः सूतादिभिः को वा सन्मतिः स्तावयते न कोऽपीति। यद्वा आदावेव सतोऽपि कः स्तावयते स्वत एव ख्यातिसिद्धेः। मन्दस्तु स्तावयत इत्यर्थः। स च कुमतिर्मन्दबुद्धिः यदयं शस्त्रशास्त्रकलाभ्यासादिकमकरिष्यत्तदाऽस्य ते प्रसिद्धाः शौर्यपाण्डित्यवैदग्ध्यादयो गुणाः अभविष्यन्निति क्रियातिपत्तिवचनैः स्तावकैर्जनैर्विप्रलब्धः उपहसितोऽपि तेषामवहासं न वेद ॥२४॥ प्रभव इति। परमोदाराः विशदचित्ताः ह्रीमन्तस्तु विश्रुताः प्रख्याता अपि प्रभवो विद्यमानगुणसम्पादने समर्था अप्यात्मनः स्तोत्रं जुगुप्सन्ति हि निवारयन्त्येव। तङभाव आर्षः। वाशब्दो दृष्टान्ते। यथा अतिस्तुतौ क्रियमाणायां विगर्हितं निन्दितं पौरुषं गोब्राह्मणवधादिकं प्रमादाज्जातं तथा जना जुगुप्सन्ते तथा उचितामपि स्तुतिं न सहन्त इति ॥ २५ ॥ वयमिति। हे सूत ! वयं तु लोके वराणां भावा वरिमाणः। पृथ्वादिदृढाद्यन्यतरकल्पनया इमनिच्। इकारदैर्घ्यमार्षम्। श्रेष्ठत्वैः भवितृप्रधाननिर्देशाद्वरिष्ठैः कर्मभिरिति वा अद्यापि अविदिता अप्रसिद्धाः अतः कर्मभिः गुणैः बालवत् अज्ञवत् कथमात्मानं गापयिष्याम गापयाम। लिङर्थे लृट् सलोपश्चार्षः ॥ २६ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायश्चतुर्थे व्याख्यां पञ्चदशे व्यधात् ॥

इति श्रीभागवते चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चदशोऽध्यायः ॥ १५ ॥

—:❁:—

# अथ षोडशोऽध्यायः

मैत्रेय उवाच

इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः । तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥ १ ॥

षोडशे सद्वृतं लोकैर्भाविगुक्तं पृथुं नृपम् । सूताद्यास्तुष्टुवुस्तत्र श्लोकानां सप्तविंशतिः ( २७ )॥
उवाचेत्येकं च सार्द्धा एकत्रिंशदनुष्टुभः ( ३१ ) ॥ १६ ॥

इतीति । इत्येवं ब्रुवाणं नृपतिं पृथुं तापहारकत्वेन तस्य वागेवामृतं तस्य सेवया श्रोत्रद्वारान्तःस्थापनेन तुष्टं मनो येषां ते गायकाः सूतादयो मुनिभिश्चोदिताः सन्तस्तुष्टुवुः ॥ १ ॥ नालमिति । यो देववर्यो विष्णुर्मायया शक्त्या भार्ययाऽर्चिषा सह वाऽवततार तस्य ते तव महिमाऽनुवर्णने वयं सूतादयो नालं न समर्थाः । यतः वेनस्याङ्गाज्जातस्य ते तव पौरुषाणि प्रति वाचस्पतीनां ब्रह्मादीनामपि धियो बभ्रमुः अचिन्त्यतया भ्रान्ता जातास्तत्रास्माकं का गणना ॥ २ ॥ अथापीति । यद्यपि साकल्येन वर्णने अशक्ताः अथापि तथापि कथामृते आदृताः सादराः मुनिभिः प्रचोदिताः प्रेरिताः सन्तो यथोपदेशं मुनिभिर्योगबलेनास्मन्मनसि प्रविश्य यथोपदिष्टं तदनतिक्रम्य उदारश्रवसः महायशस्करस्य हरेः कलावतारस्य पृथोः श्लाघ्यानि यानि तानि कर्माणि वयं वितन्महि विस्तरेण वर्णयामः । टितो लस्य टेरेत्वाभाव आर्षः ॥ ३ ॥ एष इति । अत्र भविष्यतोऽपि सामीप्यात् क्वचिद्वर्त्तमाननिर्देशः । कचिच्च सिद्धवत्कृत्वा भूतनिर्देशः । एष पृथुर्धर्मभृतां श्रेष्ठः तथा लोके जनसमूहं स्वस्वधर्मेऽनुवर्तयन् धर्मसेतूनां वर्णाश्रमधर्ममर्यादानां गोप्ता रक्षकस्तत्परिपन्थिनां धर्ममर्यादाविघटकानां दुराचाराणां शास्ता दण्डयिता च भविता ॥ ४ ॥ एष इति । वै निश्चितम् । एष एक एव यथाभागं यथायोग्यं पालनपोषणानुरञ्जनादिकार्यानुसारेण उभयोर्लोकयोः यज्ञादिप्रवर्तनेन देवलोकस्य वृष्ट्यादि-सम्पादनेन मनुष्यलोकस्य च हितमाचरन् हितमिति बिभर्तिक्रियाविशेषणं वा । स्वतनौ स्वशरीरे लोकपालानामादित्येन्द्रादीनां तनूः मूर्त्तीः काले काले तत्तदवसरे बिभर्ति धारयति । तत्तत्कार्यं स्वयमेव करिष्यति ॥ ५ ॥ सूर्यादितनुधारणमेवाहाष्टभिः—वस्विति । प्रभुः समर्थः अयं पृथुः सर्वेषु भूतेषु प्राणिमात्रेषु समः रागद्वेषादिशून्यः सन् प्रतपन् स्वप्रतापं प्रकटयन् सूर्यवत् यथा सूर्यः सर्वेषु समं प्रतपन्नष्टौ मासान् जलमादत्ते वर्षासु विमुञ्चति, तद्वत् करादानकाले वसु धनं प्रजाभ्य आदत्ते दुर्भिक्षादिकाले विमुञ्चति ददाति च ॥ ६ ॥ तितिक्षतीति । क्षितेर्वृत्तिः सर्वापराधसहनं सा यस्यास्ति तथा करुणः दयालुर्वैन्यः आर्त्तानां पीडिता-नामत एवोपरि मस्तके पादेनाक्रमतामपि । दीर्घाभाव आर्षः । क्वचिद्दीर्घः पाठः । आर्त्तानां भूतानामक्रममतिक्रमं शश्वत् तितिक्षति सहते । तङभाव आर्षः ॥ ७ ॥ देव इति । देवे इन्द्रे अवर्षति वर्षामकुर्वति सति कृच्छ्रं कष्टं गताः प्राणा यासां ताः प्रजाः नरदेववपुः राजशरीरो हरिरेव एष देवो राजा पृथुरञ्जसा अनायासेन इन्द्रवत् स्वयं वृष्टिं कृत्वा रक्षिष्यति ॥ ८ ॥ आप्याययतीति । सानुरागोऽवलोको यस्मिंस्तेन विशद स्वच्छं यत् स्मितं तेन चारुणा मनोहरेण वदनमेवामृतमूर्तिश्चन्द्रस्तेनासौ लोकं जनमाप्याययति तर्पयति । अनेन चन्द्रतनुधारणमुक्तम् ॥ ९ ॥ अव्यक्तेति । न व्यक्तं वर्त्म प्रवेशनिर्गममार्गो यस्य सोऽव्यक्त-वर्त्मा निगूढं निष्पत्तेः पूर्वमविज्ञातं कार्यं कर्त्तव्यं यस्य स निगूढकार्यः गम्भीरं किमर्थमेतद्विदधातीत्यविज्ञातफलकं कार्यं विधत्त इति गम्भीरवेधाः उपगुप्तं सुरक्षितं वित्तं धनं ज्ञानं च यस्य अनन्तमाहात्म्यश्चासौ गुणानामेकं मुख्यं धाम श्रीविष्णुर्यस्मिन् अनन्तस्य विष्णोः माहात्म्यं गुणाश्चैकं धाम प्रभावहेतुर्यस्येति वा अनन्तमाहात्म्या ये गुणाः त एवैकं धाम स्थानं यस्येति वा । संवृतः प्रकृत्यादिभिरावृतः सुरक्षितः आत्मा यस्य स संवृतात्मा एष पृथुः प्रचेता वरुण इव शोभते । समुद्रचरत्वेन वरुणस्याप्येते गुणा द्रष्टव्याः ॥ १० ॥ दुरासद इति । वेन एवारणिस्तस्मादुत्थित उत्पन्नोऽनलोऽसौ पृथुः दुरासदः दुष्टतमिस्रैः प्राप्तुमशक्यः दुर्विषहः शत्रुघूकैः सोढुमशक्यः आसन्नः समीपे वर्त्तमानोऽपि विदूरवत् शत्रुभिः पौरुषेणाभिभवितु नैव शक्यः ॥ ११ ॥ अन्तरिति । देहिनामात्माऽन्तर्यामीव वायुः सूत्रात्मेव चासौ भूतानां प्राणिनामन्तर्मनसि बहिश्च वर्त्तमानानि कर्माणि चारणैर्गुप्त-भृत्यैश्चेष्टितैश्च पश्यन्नपि स्वस्तुतिनिन्दादावध्यक्षः साक्षी वेदासीनो भृत्यामात्यादिष्वासक्तोऽपि उदासीन इव लक्ष्यमाणश्च वर्तिष्यते ॥ १२ ॥ नादण्ड्यमिति । धर्मस्य यमस्य पथे मार्गे स्थितः धर्मराज इव वर्त्तमान इत्यर्थः । एष पृथुरात्मनो द्विषां सुतमप्यदण्ड्यं दण्डानर्हं न दण्डयति । सुतग्रहणं स्वात्मजसाम्यार्थम् । दण्ड्यं तु आत्मजमपि दण्डयति । वसुकाल इत्याद्यष्टसु सूर्यादितनुधारणमुक्तम् ॥ १३ ॥ अस्येति । भगवान् अर्कः सूर्यो गोगणैः रश्मिसमूहैर्यावद्देशं तपति प्रकाशयति तावदामानसाचलात् मानसाचलपर्वतमन्तिमद्वीपवर्षमर्यादाभूतं परितो वर्त्तमानमभिव्याप्य तद्देशपर्यन्तमस्य पृथोश्चक्रमाज्ञा सेना वा रथस्य चक्रं वा अप्रतिहतं वर्त्तते ॥ १४ ॥

रञ्जयिष्यतीति। यत् यस्मात् अयं स्वयं राजमानतया पूर्वंमुकोऽपि जनोरञ्जनानि कानि सुखानि येभ्यस्तैरात्मविचेष्टितैः स्वपराक्रमैर्लोकं जनं रञ्जयिष्यति आनन्दयिष्यति। अथ तस्मात् प्रजाः अमुं राजानमाहुः राजेति कथयिष्यन्ति। अन्यो राजा राजतीति निरुक्त्या अयं तु राजति रञ्जयतीति निरुक्तिद्वयेन राजेति भावः॥ १५॥ दृढेति। किञ्च, अयं दृढव्रतः अखण्डितव्रतः सत्यसन्धः सत्यप्रतिज्ञः व्रतसन्धयोः शास्त्रीयलौकिकत्वाभ्यां भेदः कल्प्यः। ब्राह्मणभक्तः वेदे विश्वासवान् वृद्धानां सेवकः सर्वभूतानां प्राणिजातस्य ब्रह्मण्यो शरण्यः आश्रयार्हः यतस्तेषां मानदः संमानकर्त्ता दीनेषु वत्सलः अनुग्रहकर्ता भविष्यति॥ १६॥ मातृभक्तिरिति। परेषां स्त्रीषु मातरीव भक्तिर्दृष्टिर्यस्य सः स्वपत्न्यामात्मनो देहस्यार्द्धं इव प्रीतिमान्। यथा पुत्रेषु पिता स्नेहवान् भवति तथा प्रजासु स्नेहवान् ब्रह्मवादिनां किङ्करः आज्ञानुसारी॥१७॥ देहिनामिति। देहिनां प्राणिनामपि आत्मवत् स्वजीववत् प्रेष्ठः प्रीतिविषयः सुहृदां मित्रादीनां नन्दि सुखं वर्द्धयतीति तथा मुक्तसङ्गेषु साधुषु प्रकृष्टः सङ्गो यस्य सः असाधुषु परोद्वेजकेषु दुराचारेषु दण्डपाणिर्यमराज इवेत्यपराधानुपेक्षणेन यमसाम्यमुक्तम्। नादण्ड्यमित्यत्र तु पक्षपाताभावेन॥ १८॥ अयमिति। अयं तु पृथुः साक्षाद् भगवान् त्र्यधीशः कूटस्थः निर्विकारः आत्माऽन्तर्यामी एव कलयाऽवतीर्णः यस्मिन् प्रतीतमपि अविद्यया रचितं सर्वमपि नानात्वम्। विद्वांसः अनर्थकमर्थशून्यं पश्यन्ति॥ १९॥ अयमिति। अयं भगवदंशः पृथुः एकवीरः एको निरुपमः वीरः पराक्रमवान् अत एव नरदेवनाथः राजराजः आ उदयाद्रेः उदयाचलपर्यन्तं भुवो मण्डलं गोप्ता गोपायिष्यति। तदर्थं च जैत्रं जयप्रदं रथमास्थाय आरुह्य आत्तचापः धनुर्गृहीत्वा यथाऽर्कः अर्कवत्। दक्षिणतः पर्यस्यते प्रदक्षिणीकरिष्यति। तङार्षः॥ २०॥ अस्मा इति। अस्मै प्रदक्षिणीकुर्वते पृथवे सलोकपालः लोकपालैर्वरुणेन्द्रकुवेरादिभिः सहिता नृपालाः राजानस्तत्र तत्र तस्मिंस्तस्मिन् स्वस्वाधिष्ठिते देशे बलिं शुल्कं हरिष्यन्ति समर्पयिष्यन्ति। अत एव तस्य महाबलपराक्रमस्य यश उद्धरन्त्यः गायन्त्यः। "उदश्चरः सकर्मकात्" अपि शता आर्षः। एषां लोकपालादीनां स्त्रिय एनं चक्रायुधं विष्णोरवतारत्वाच्चक्रधरमादिराजं राज्ञां प्रथमं मुख्यं वा मंस्यन्ते ज्ञास्यन्ति॥२१॥ तासां किमाकारकमेतद्यशःकीर्त्तनमित्याकाङ्क्षायामाहुश्चतुर्भिः—अयमिति। अधिराजः चक्रवर्त्ती प्रजानां पतिः पालकः अतः प्रजानां वृत्तिकरः जीविकासम्पादकः अयं पृथुः गां गोरूपां महीं दुदुहे। यथा इन्द्रः वज्रेणाद्रीन् बिभेद तथा यः स्वशरासनकोट्या स्वधनुषोऽग्रभागेनैव तत्रापि लीलया अनायासेनैवाद्रीन् भिन्दन् गां पृथिवीं समामकरोत्॥ २२॥

विस्फूर्जयन्निति। यथा यदा मृगेन्द्रः सिंहः स्वलाङ्गूलं पुच्छमुद्यम्य वने चरति तदा क्षुद्रा मृगा भयेन सर्वतोदिशं लीना भवन्ति तथा यदायं स्वयमाजगवमजस्य गोश्च शृङ्गाभ्यां निर्मितमत एवं शत्रूणामसह्यं धनुर्विस्फूर्जयन् टङ्कारयन् आजौ युद्धे क्ष्मां भूमिमचरत्तदा असन्तो दुष्टाः शत्रवो दिशि दिशि निलिल्युः निलीना बभूवुः॥ २३॥ एष इति। यत्र सरस्वती नदी प्रादुरभावि प्रादुर्भूता तत्रैव एष पृथुः शतमश्वमेधान् आजहार कृतवान्। अत्र चरमे अन्तिमे अश्वमेधे प्रवर्तमाने सति पुरन्दरः पुरन्दरनामकः शतक्रतुः इन्द्रः शततमेऽश्वमेधे समाप्तेऽयं मम स्थानं ग्रहीष्यतीति भयात्तत्र विघ्नार्थं यस्य पृथोर्यज्ञियं हयमहारपीत् हृतवान्। अकाराधिक्यमार्षम्। अत्र प्रथमान्ते कर्त्तरि अभावीति कथमिति चेत् कर्मकर्त्तरि चिण् इत्याहुः। मम त्वार्षः प्रयोगो भाति। सरस्वतीति "सुपां सुलुक्" इति लुप्ततृतीयान्तं वा प्रादुर्भवतेरकर्मकस्य कर्मकर्त्तरि प्रयोगासम्भवात्। न चेदं ण्यन्यं ण्यन्तस्य कर्मकर्त्तरि चिण्निषेधात्। न च ण्यर्थान्तर्भावेन सकर्मकतया निर्वाह इति वाच्यम्। एवं करणे सर्वधातूनां कर्मवद्भावापत्तेः। यत्तु हरिदासपण्डिताः सत्ताद्यर्थस्योपलक्षणत्वेन शं भवतीति शम्भुरित्यत्रैव भवतेरुत्पादनार्थतया सकर्मकतामाहुः। तत्रापि भवतेर्ण्यर्थान्तर्भावकल्पनयैवोत्पादनमर्थः न तु स्वातन्त्र्येणेति। तथैव कौमुद्यादिषु लेखात्, स घटं भवतीत्यादिप्रयोगस्य कुत्राप्यदर्शनात्। अतिप्रसिद्धे शम्भुशब्दादावर्थसङ्गतिमात्रार्थं ण्यर्थान्तर्भावस्याश्रयणेऽपि आर्षग्रन्थादन्यत्र काप्यनुपलब्धस्य प्रयोगस्य साधनार्थं तादृशक्लेशस्यानौचित्यात्। "नमते दण्ड" इत्यादाविव सूत्रे ज्ञापके निर्बाधे प्रयोगे तदौचित्यात्। अन्यथा स भवतीत्याद्यर्थे स भूयते इत्यादिप्रयोगस्य व्यवहार्यतापत्तिः। एतेन "तथापि सूनृता सौम्य हृदि न स्थीयते चले" इत्यादयोऽप्यार्षा एव प्रयोगा इति युक्तायुक्तत्वे विद्वांसः प्रमाणम्॥ २४॥ एष इति। एष पृथुः स्वसद्मोपवने स्वगृहसमीपे वर्त्तमाने उपवने वाटिकायां भगवन्तं ज्ञानवैराग्यादियुक्तम् एकम् अनुपमं सनत्कुमारं समेत्य सङ्गत्य भक्त्या तमाराध्य यतः परं ब्रह्म विदन्ति जानन्ति प्रत्यक्षीकुर्वन्ति तदमलं शुद्धं ज्ञानमलभत॥ २५॥ तत्र तत्रेति। पृथुपराक्रमः महापराक्रमः अत एव विश्रुतविक्रमः ख्यातपराक्रमः एष पृथुः इत्येवंवर्णितप्रकाराः आत्माश्रिताः स्वसंबन्धिनीस्तास्ताः सर्वत्र प्रसिद्धाः गाथाः प्रबन्धरूपा वाचस्तत्र तत्र श्रोष्यति अत एव दुदुहे इत्यादिर्भूतप्रयोगः। तदुक्तकाले कर्मणामतीतत्वात् सिद्धवत्कृत्वा कथितत्वाद्वा तथा प्रयोगः॥ २६॥ दिश इति। सर्वा दिशो विजित्य स्थितत्वान्न प्रतिरुद्धं चक्रमाज्ञा यस्य स स्वतेजसा स्वप्रभावेण उत्पाटितानि निष्कासितानि लोकस्य शल्यानि शराग्रस्थलोहकण्टकतुल्या दुष्टा येन स अयं भुवः पतिः सुरासुरेन्द्रैरुपगीयमानो महान् अनुभावो यस्य तादृशो भविता भविष्यति॥ २७॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां षोडशोऽध्यायः॥ १६॥

—:❀:—

# अथ सप्तदशोऽध्यायः

मैत्रेय उवाच

एवं स भगवान् वैन्यः ख्यापितो गुणकर्मभिः। छन्दयामास तान् कामैः प्रतिपूज्याभिनन्द्य च ॥ १ ॥

पृथुः सप्तदशे लोकक्षुच्छान्त्यै धरणीं क्रुधा। निहन्तुमैच्छत्तत्रत्याः श्लोकाः षट्त्रिंशदीरिताः ( ३६ ) ॥
उवाचसप्तकं ( ७ ) सैकाश्चत्वारिंशदनुष्टुभः ( ४१ ) ॥ १७ ॥

एवमिति। स भगवान् वैन्यः पृथुः गुणकर्मभिः गुणकर्मवर्णनैः सूतादिभिः एवं ख्यापितः स्तुतः तान् सूतादीन् वचसाऽभिनन्द्य संश्लाघ्य कामैस्तदभिलषितैर्वस्त्रालङ्कारादिभिः प्रतिपूज्य च छन्दयामास सन्तोषितवान् ॥ १ ॥ ब्राह्मणेति। ब्राह्मणः प्रमुखः श्रेष्ठो येषां तांश्चतुरो वर्णान् भृत्यान् अमात्यान् पुरोधसः पुरोहितांश्च पौरान् पुरवासिनः जानपदान् बहिर्देशवासिनः श्रेणीः तैलिकताम्बूलिकादीन् पौरविशेषान् प्रकृतीः साधारणान्नियोगिनः तत्तत्कामैः समपूजयत् धन्याः स्थ यूयं यथाशक्ति युष्माकं पालनरूपं परिचरणं करिष्यामीति मधुरमभ्यभाषत ॥ २ ॥ कस्मादिति। यां गोरूपं धृतवतीं पृथुर्दुदोह सा धरित्री पृथिवी देवतात्वाद्बहुरूपिणी अनेकरूपधारणे समर्थापि गोरूपमेव कस्माद्धेतोर्दधार। तत्र दोहनकार्ये वत्सः को जातः दोहनं पात्रं च किमभूत् ॥ ३ ॥ प्रकृत्येति। देवी पृथिवी प्रकृत्या स्वभावतो विषमा कुत्रचिन्निम्ना कुत्रचिदुन्नता तेन पृथुना समा कथं कृता। तस्य पृथोर्मध्यं यज्ञार्हं हयमश्वं देव इन्द्रः कस्य हेतोः कस्मात् कारणात् अपाहरत् हृतवान् ॥ ४ ॥ सनत्कुमारादिति। हे ब्रह्मन्! ब्रह्मवित्सु उत्तमात् भगवतः सनत्कुमारात् सविज्ञानमपरोक्षज्ञानसहितं साक्षात्कारपर्यन्तं ब्रह्मज्ञानं लब्ध्वा प्राप्य राजर्षिः पृथुः कामलौकिकीं गतिं गतः ॥ ५ ॥ यच्चेति द्वयम्। यदेतन्मया पृष्टं यच्चान्यदपृष्टमपि सुष्ठु श्रवः यशो यस्य तस्य भगवतः प्रभोः कृष्णस्य पूर्वदेहः पृथ्ववतारस्तत्कथाश्रयं पुण्यं पवित्रं श्रवो यशो भवेत् तत् तव गुरोश्चाधोक्षजस्य भगवतश्च भक्ताय श्रवणानुरक्ताय च मे मह्यं भगवान् वक्तुमर्हति। यः कृष्णः वैन्यरूपेण इमां गां पृथ्वीम् अदुह्यत् अधुक्षत्। श्यन्नार्षः ॥ ६–७ ॥ चोदित इति। एवं विदुरेण वासुदेवकथां प्रति चोदितः प्रेरितो मैत्रेयः प्रीतमनाः सन् तं विदुरं प्रशस्य श्रीकृष्णकथानुरक्तस्त्वं धन्योऽसीत्यादिस्तुतिं कृत्वा प्रत्यभाषत ॥ ८ ॥ यदेति। अङ्ग हे विदुर! यदा पृथुर्विप्रैः राज्येऽभिषिक्तस्त्वं जनताया जनसमूहस्य पालः पालक इत्यामन्त्रितो नियुक्तश्च तदा क्षितिपृष्ठे भूतले निरन्ने अन्नरहिते सति क्षुधा क्षामाः क्षीणा देहा यासां ताः प्रजाः पतिं पृथुमेत्य आगत्याभ्यवोचन् ॥ ९ ॥

वयमिति। हे राजन्! यथा कोटरस्थेनाग्निना वृक्षास्तप्यन्ते तथा वयं जाठरेणाग्निनाभितप्तास्तच्छमकरस्यान्नादेरभावात्। अतो यस्त्वं नोऽस्माकं वृत्तिकरः जीविकाप्रदः पतिः सर्वतश्चोरादिभ्यः पालकश्च मुनिभिः साधितो वेनाङ्गमन्थनेन सम्पादितस्तं त्वां शरण्यं शरणार्हं शरणं याता आगताः स्मः ॥ १० ॥ तन्न इति। हे नरदेवानां राज्ञां देव पूज्य! तत्तस्माद्धेतोः उज्झितोर्जो त्यक्तान्नाः सत्यो वयं यावन्न नङ्क्ष्यामहे। तङार्षः। ततः पूर्वमेव क्षुधार्दितानां नोऽस्माकम् अन्नं रातवे रातुं दातुं "तुमर्थे सेसेन्" इति तवेप्रत्ययश्छान्दसः। भवानीहतु यत्नं विधत्ताम्। तङभाव आर्षः। यतः किल त्वमेव वार्त्तायाः जीविकायाः पतिः सम्पादकः लोकपालः सर्वतो रक्षकश्चासि ॥ ११ ॥ पृथुरिति। हे कुरुश्रेष्ठ! पृथुः प्रजानां करुणं दैन्यं निशम्य दृष्ट्वा परिदेवितं विलापं च श्रुत्वा कथमेवं भूतलं निरन्नमभूदिति दीर्घं चिरं दध्यौ चिन्तयामास। तदा च स पृथुर्निमित्तं भूतलनिरन्नत्वस्य कारणं पृथिवीकृतसर्वौषधिवीजग्रासलक्षणमन्वपद्यत ज्ञातवान् ॥ १२ ॥ इतीति। पृथिव्या ओषधिवीजानि ग्र्रस्तानि इति बुद्ध्या व्यवसितो निश्चितवान् सन् त्रिपुरहा रुद्रो यथा क्रुद्धस्त्रिपुरहननार्थं विशिखसन्धानं कृतवांस्तथा प्रगृहीतं शरासनं येन क्रुद्धः सन् भूमेः भूमिं प्रति धनुषि विशिखं बाणं सन्दधे योजितवान् ॥ १३ ॥ प्रवेपमानेति। उद्यतमायुधं येन स उदायुधस्तं तथाभूतं राजानं निशम्य दृष्ट्वा धरणी भीता अत एव प्रवेपमाना कम्पितगात्रा गौः सती मृगयुना लुब्धकेन द्रुता अनुगता मृगीव अपाद्रवत् अपलायत ॥ १४ ॥ तामिति। तत्तदा यत्र यत्र भयेन भूमिः पलायते तत्र तत्र कुपितः अति अरुणे इक्षणे यस्य सः वैन्यः पृथुरपि धनुषि शरं सन्धाय संयोज्य तामन्वधावत् ॥ १५ ॥ सेति। सा च देवी भूमिः पूर्वाद्या दिशो विदिशः आग्नेय्यादिचतस्रो

रोदसी द्यावापृथिव्यौ तयोरन्तरमन्तरिक्षं च धावन्ती तत्र तत्र अनुपृष्ठदेशे उद्यतमायुधं बाणयुक्तं धनुर्यन तमेनं पृथुं ददर्श ॥ १६ ॥ लोक इति । यथा मृत्योर्भीता प्रजाः कापि शर्म न लभन्ते एवं पलायमाना भूमिर्यदा वैन्यात् सकाशात् त्राणं रक्षकं लोके कुत्रापि नाविन्दत नालभत तदा विदूयता परितप्यमानेन । शता आर्षः । हृदयेनोपलक्षिता सती निववृते पलायनान्निवृत्ता पृथोरभिमुखी बभूव ॥ १७ ॥ उवाचेति । भूमिः महाभागं पृथुम् उवाच । रे धर्मज्ञ ! हे आपन्नेषु शरणागतेषु वत्सल दयायुक्त ! त्वं मामपि त्राहि त्रायस्व । तङभावादिरार्षः । यतः भवान् भूतानां पालनेऽवस्थितोऽसि ॥ १८ ॥ स त्वमिति । यो भूतानां पालनेऽवस्थितः स त्वं दीनामकृतकिल्बिषां निरपराधां कस्माद्धेतोर्जिघांससे हन्तुमिच्छसि । तङार्षः । यो भवान् धर्मज्ञ इति सर्वेषां सम्मतः स मां योषां स्त्रियं कथमहनिष्यत् हनिष्यति ॥ १९ ॥ प्रहरन्तीति । हे राजन् ! वै निश्चितम् । कृतागःस्वपि कृतापराधास्वपि स्त्रीषु जन्तवः साधारणा अपि प्राणिनो नैव प्रहरन्ति प्रहारं नैव कुर्वन्ति । त्वद्विधाः करुणाः कृपालवो दीनेषु वत्सलाः न प्रहरन्ति इत्यत्र किमुत वक्तव्यम् ॥ २० ॥

मामिति । यत्र मयि विश्वं प्रतिष्ठितं स्थितं तां मामजरां दृढां नावं विपाट्य विदार्य अम्भसि जले इमाः प्रजाः आत्मानं च कथं धास्यसि धारयिष्यसि । मयि मृतायां गर्भोदे एव कथं धास्यसि ? चकारात् कृष्याद्यभावे प्रजाः कथं पोषयिष्यसि ॥ २१ ॥ वसुधे इति । हे वसुधे ! मच्छासनपराङ्मुखीं त्वां वधिष्यामि । या भवतो बर्हिषि यज्ञे देवतारूपेण भागम् आवृङ्क्ते सभजते गृह्णाति नोऽस्माकं वसु अन्नादिकं न तनोषि न विस्तारयसि ॥ २२ ॥ यवसमिति । या गौरनुदिनं प्रतिदिनं यवसं तृणं जग्धि अत्ति ऊधसि भवमौधसं पयः दुग्धं नैव दोग्धि नैव मुञ्चति नैव ददाति । तस्यामेवमनेन प्रकारेण दुष्टायां गवि अत्रास्मिन्नपराधे दण्डो न शस्यते युक्तो न भवतीति न किन्तु युक्तो भवत्येव ॥ २३ ॥ त्वमिति । यतो यान्योषधिबीजानि अन्नादीनि प्राक् सृष्ट्यादौ स्वयंभुवा ब्रह्मणा लोकस्य जीवनहेतुत्वेन सृष्टानि तान्यात्मनि त्वद्देहे रुद्धानि मन्दधीस्त्वं मामीश्वरमवज्ञाय न विमुञ्चसि ॥ २४ ॥ अमूषामिति । मद्बाणैर्भिन्नाया मृतायास्तव मेदसा मांसेनामूषां प्रजानां क्षुत्परीतानां क्षुधाव्याप्तानामत एवार्त्तानां परिदेवितं विलापं शमयिष्यामि ॥ २५ ॥ पुमानिति । पुमान् वा योषिद्वा क्लीबो वा य आत्मसंभावनः आत्मानं बहु मन्यते भूतेषु प्राणिषु निरनुक्रोशः दयारहितः दुःखोत्पादकः अत एवाधमस्तस्य वधो नृपाणामवध एव न दोषावहः ॥ २६ ॥ त्वामिति । त्वां मायागां मायया कपटेन गोरूपां न तु वस्तुतः । टजभाव आर्षः । दुर्मदां दुष्टः परपीडाकरो मदो यस्यास्तामत एव स्तब्धामस्मदादिष्वप्यनम्रां शरैस्तिलशस्तिलप्रमाणानि खण्डानि तथावस्थां नीत्वा आत्मनः स्वस्य मम योगः प्रभाव एव बलं तेनाहं प्रजाः अम्भसि धारयिष्यामि ॥ २ ॥ एवमिति । एवं निष्ठुरं वदन्तं मन्युमयीं क्रोधप्रचुरां मूर्तिं बिभ्रतं धारयन्तमत एव कृतान्तमिव मृत्युमिव भयङ्करमत एव भयेन सञ्जातो वेपथुः शरीरे कम्पो यस्याः सा तथा अत एव प्रगता प्रथमं कृतदण्डवत्प्रणामा ततश्च प्राञ्जलिः संहताञ्जलिः सती प्राह स्म तुष्टाव ॥ २८ ॥ नम इति । मायया विन्यस्ता धृता नाना घोरादितनवो येन गुणात्मने गुणमयत्वेन प्रतीयमानाय परस्मै पुरुषाय नमः । वस्तुतः स्वरूपस्य अनुभवेन निर्धूताः निरस्ताः द्रव्यक्रियाकारकाः शरीरेन्द्रियदेवताः तत्र यो विभ्रमस्तत्सङ्घाते मोहोऽहंप्रत्ययः तन्निमित्ता ऊर्मया रागद्वेषकामक्रोधादयः क्षुत्पिपासादयो वा यस्मिंस्तस्मै नमः ॥ २९ ॥

येनेति । येन धात्रा जगन्नाथेन अहं भूमिरात्मनां सर्वप्राणिनामायतनं स्थानं विनिर्मिता स्थानत्वेन सृष्टा अत एव यतो यस्यां मय्ययं गुणसर्गस्य जरायुजाण्डजस्वेदजोद्भिज्जभेदेन चतुर्विधशरीरसमूहस्य सङ्ग्रहः स्थितिस्तां मां सर्वाधारभूतां मां स एव स्वराट् स्वतन्त्रः उद्यतायुधः सन् हन्तुमुपस्थितस्ततोऽन्यं शरणं रक्षकं कमहमाश्रये ॥ ३० ॥ य इति । य एव भगवान् आत्माश्रयया जीवविषयिण्या अवितर्क्यया अचिन्त्यया स्वमायया एतच्चराचरात्मकं विश्वमादावसृजत् सृष्टवान् । किल निश्चये । स एव तया निजशक्त्या माययैवायं पृथुस्वरूपः सन् स्वनिर्मितं विश्वं गोप्तुं रक्षितुमुद्यतः धर्मपरोऽपि विश्वाधारभूतां तत्रापि गोरूपां मां कथन्नु जिघांसति हन्तुमिच्छति ॥ ३१ ॥ नूनमिति । नूनं निश्चये बताश्चर्ये । दुर्जयया तन्मायया अकृतात्मभिः विक्षिप्तचित्तैर्जनैः ईशस्य समीहितं चेष्टितं न लक्ष्यते । यः ईश्वरः स्वतन्त्रः प्रथमं ब्रह्माणमकरोत् ततश्च तद्द्वारा विश्वमकारयत् । यः स्वतः एकः परतः मायातः अनेकश्च ॥ ३२ ॥ सर्गादीति । द्रव्याणि महाभूतानि क्रिया इन्द्रियाणि कारकाः देवाः चेतना बुद्धिः आत्माहङ्कारस्तैर्द्रव्यादिभिः स्वशक्तिभिर्योऽस्य विश्वस्य सर्गादि सृष्टिस्थितिभङ्गमनुरुणद्धि करोति । तस्मै यथाकालं सन्नद्धाः समुत्कटा निरुद्धाश्च बन्धमोक्षहेतुभूताः विद्याऽविद्या धर्माधर्मादिरूपाः शक्तयो यस्य तस्मै वेधसेऽन्तर्यामिणे परस्मै पुरुषाय नमः । यद्वा द्रव्यक्रियेत्यादिभिः समुन्नद्धा इत्यादि ॥ ३३ ॥ स वा इति । हे विभो ! हे अज ! यः पूर्वं सृष्टवान् स एव भवान् आत्मना स्वेन विनिर्मितं भूतेन्द्रियान्तःकरणात्मकं जगत् संस्थापयिष्यन् सम्यक् स्थापयितुमादिसूकरः मत्स्वामी आदिवाराहमूर्तिः सन् मां रसातलादम्भसश्चाभ्युज्जहार उन्नीतवान् ॥ ३४ ॥ अपामिति । स एव धराधरो मत्स्वामी वराहमूर्तिर्भवान् अपामुपस्थे जलस्योपरि मयि नावि आधारभूतायामवस्थिताः प्रजा रिरक्षिषुः रक्षितुमिच्छुः सन्नय वीरमूर्तिः पृथुरूपः समभूत प्रादुर्भूतः । यः सर्वरक्षार्थमवतीर्णः

स एवोग्रशरः सन् मां स्वभार्यां सर्वाधारभूतां स्वस्थापितां पयसि जलरूपे अल्पे निमित्ते जिघांसति तदाश्चर्यम्। अयमर्थः— इमाः प्रजाः मदपत्यान्येव तानि नित्यमहं पयः पाययाम्येव। साम्प्रतं दुर्वृत्तानेतान् शीलशिक्षणाय माताऽप्यहं क्रुद्धा पयो न पाययामि अतस्त्वं गृहपतिर्मां ताडयसीति ॥ ३५ ॥ नूनमिति। तस्येश्वरस्य गुणसर्गरूपया मायया मोहितं चित्तमेव वर्त्म येषां तैः अस्मद्विधैरल्पज्ञैर्जनैः ईश्वराणां हरिभक्तानामेव ईहितं न ज्ञायते किं पुनस्तस्य परमेश्वरस्य। अतः वीराणां जितेन्द्रियाणां दयावीराणामित्यन्ये। यशः कुर्वन्ति तेभ्यः ईश्वरेभ्यो नमोऽस्तु। यथा वीराणां यशो वर्द्धेत तथा भवान् चेष्टताम्। न तु यथेष्टमिति भावः ॥ ३६ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तदशोऽध्यायः ॥ १७ ॥

—:❀:—

# अथाष्टादशोऽध्यायः

मैत्रेय उवाच

इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम्। पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना ॥ १ ॥

अष्टादशे मही दुग्धा वत्सैः पृथ्वादिभिः क्रमात्। स्वे स्वे पात्रे स्वस्वदुग्धं तत्र श्लोका भुजाग्नयः (३२) ॥
अनुष्टुभोऽपि तावन्त (३२) उवाचेत्येकसंख्यकम् ॥ १८ ॥

इत्थमिति। रुषा क्रोधेन प्रस्फुरितोऽधरो यस्य तं पृथुमित्थं वर्णितप्रकारेणाभिष्टूय स्तुत्वाऽपि। दैर्घ्यमार्षं ततस्तुगभावः। तस्य क्रोधशान्तिमदृष्ट्वा भीतावनिरात्मानं मनः आत्मना बुद्ध्या संस्तभ्य धैर्ययुक्तं कृत्वा पुनराह स्म ॥१॥ सन्नियच्छेति। हे अभि। भो प्रभो! यद्वा भो देव अभि अभयं यथा स्यात्तथा मन्युं क्रोधं संनियच्छ संहर। मे मया श्रावितं विज्ञापितं च निबोध अवधारयन मधुकरो भ्रमरो यथा पुष्पेभ्यः सारं मधु गृह्णाति तथा लोके बुधो हि सर्वतः सतोऽसतो वा सारं स्वकार्यानुकूलमादत्ते गृह्णाति। तद्दोषान् पश्यति। अतो मद्वाचि सारश्चेद् गृहाण नान्यथा ॥ २ ॥ गवां दुग्धपूर्णोदप्यापीनाद्दोहनरूपोपायेनैव दुग्धं लभ्यते न तु विदारणादत उपायेनैवान्नानि गृहाणेति वक्तुमुपायस्य प्रामाण्यं दर्शयति—अस्मिन्निति। पुंसां श्रेयसः फलस्य प्रसिद्धये प्राप्तये अस्मिन् लोके कृष्यादयः अथवा अमुष्मिन् परलोके यज्ञादयः तत्त्वदर्शिभिर्मुनिभिः योगा उपायाः दृष्टाः शास्त्रतो निश्चिताः लोके प्रचारार्थं प्रयुक्ताः अनुष्ठिताश्च ॥ ३ ॥ तानिति। अवरः इदानीन्तनोऽपि यः श्रद्धयोपेतः श्रद्धावांस्तान् पूर्वमुनिभिः प्रदर्शितानुपायान् सम्यगातिष्ठेत सोऽञ्जसा अनायासेनोपेयान् फलानि विन्दति ॥ ४ ॥ तानिति। यः अविद्वान् यद्वा यो विद्वान् जानन्नपि तानुपायाननादृत्य स्वयं स्वेच्छया कल्पितान् अर्थान् उपायान् आरभते अनुतिष्ठति तस्य तेऽर्थाः पुनः पुनरारब्धा अपि व्यभिचरन्ति फलं न साधयन्ति ॥ ५ ॥ पुरेति। हे विशांपते राजन! लोकयात्रार्थं यज्ञाद्यर्थं च या हि पुरा सृष्ट्यादौ ओषधयो व्रीहियवादयो ब्रह्मणा सृष्टा उत्पादितास्ता असद्भिर्दुराचारैः अधृतव्रतैः शास्त्राचारापेतैर्भुज्यमाना मया दृष्टाः ॥ ६ ॥ वेनं मनसि कृत्य तत्पुत्रे पृथौ उपालम्भः—अपालिता इति। भवद्भिर्लोकपालकैरिति सामान्यराजाभिप्रायेण बहुत्वम्। चोराद्यनिवारणेन कृष्याद्यप्रवर्तनेन चापालिता यज्ञाद्यप्रवर्त्तनेनानादृता चाहमथात एव लोके चौरीभूते सति यज्ञार्थे यदि कश्चिद् धर्मात्मा त्वादृशो राजाऽभविष्यत्तदा पुनर्यज्ञप्रवृत्तिरभविष्यदित्याशयेनाहमौषधीरग्रसं गिलितवती। तङभावः आर्षः। अन्यथा अधृतव्रतैर्भुक्ता न प्ररोक्ष्यन्ति ततश्च यज्ञादयो न प्रवर्त्तेरन्नित्याशयः ॥ ७ ॥ नूनमिति। ता वीरुधः ओषधयो भूयसा महता कालेन मयि नूनं क्षीणाः लीनाः जीर्णाश्च सूक्ष्मतया स्थिता वा तत्र तत्प्राप्तौ दृष्टेन प्रसिद्धेन योगेन उपायेन भवांस्ताः मत्त आदातुं स्वीकर्तुमर्हति ॥ ८ ॥

वत्समिति द्वयम्। हे वीर ! हे महाबाहो ! हे भूतानां भावन पालक ! यदि भगवान् भवान् भूतानामीप्सितमूर्जस्वत् वलसम्पादकमन्नं वाञ्छते। इच्छति। तङार्षः। तदा मे गोरूपाया वत्सं कल्पय सम्पादय तथा दोग्धारं च कल्पय। येन हेतुना वत्सला वत्सवती अहं क्षीरमयान् क्षीरस्थानापन्नांस्तव कामानन्नादीन् पदार्थान् धोक्ष्ये प्रपूरयिष्यामि ॥ ९–१० ॥ समामिति। हे राजन् ! हे विभो ! देवेन इन्द्रेण वृष्टं पयो जलमपर्त्तावपि वर्षर्तावपगतेऽपि यथा मे ममोपरि उपावर्त्तेत सर्वत्र वर्तेत तथा मां समां च कुरु। तेन सर्वत्र कृष्यादिसम्पत्तिः स्यात्। तेन ते भद्रं भविष्यति ॥ ११ ॥ इतीति। इत्येवं प्रियं हितं च भुवो वाक्यमादाय अङ्गीकृत्य भूपतिः पृथुः स्वगणमुख्यं मनुं वत्सं कृत्वा पाणौ पात्रे सकलौषधीः व्रीहियवादीन्यन्नान्यदुहत अधुक्षत्। च्लेरङ् आर्षः ॥ १२ ॥ तथेति। यथा सारत्वेन भूमिवाक्यं पृथुना गृहीतं तथा अपरेऽपि ये बुधास्ते सर्वत्र सारमेव दोषमुपेक्ष्य गुणमेवाददते स्वीकुर्वन्ति। वेनराज्ये अराजके च धर्मलोपात् सर्वेषामपि नष्टं वस्तु सर्वं एव पुनः प्रापुरित्याशयः। ततः पृथुदोहनानन्तरं पृथुना भावितां सर्वेषां सर्वमहं दास्यामीति स्वीकारकरणेन वशीकृतां भूमिमन्येऽपि ऋष्यादयः पञ्चदश यथाकामं यथेष्टं दुदुहुः ॥ १० ॥ ऋषय इति। हे सत्तम ! अथ बृहस्पतिं वत्सं कृत्वा वाङ्मनःश्रोत्रेन्द्रियैर्वेदग्रहणात्तेष्विन्द्रियेषु पात्रेषु शुचि पवित्रं छन्दोमयं वेदरूपं पयो देवीं भूमिमृषयो दुदुहुः। दुहिर्द्विकर्मकः ॥ १४ ॥ कृत्वेति। सुरगणा देवगणाः स्वगणमुख्यमिन्द्रं वत्सं कृत्वा हिरण्मयेन पात्रेण वीर्यम् ओजो वलं मन इन्द्रियदेहशक्तिकारणभूतं सोमममृतमेव पयः अदुदुहन् दुदुहुः ॥ १५ ॥ दैतेया इति। दैतेयाः दितिवंश्याः दानवा दनुवंशजाः असुरर्षं मसुरश्रेष्ठं स्वगणमुख्यं प्रह्लादं वत्सं विधाय कृत्वा अयःपात्रे लोहपात्रे सुरां मदिरामासवं तालादिमद्यं च सुरैव आसवो मादकद्रव्यं तम् इति वा क्षीरमदुदुहन् ॥ १६ ॥ गन्धर्वेति। गन्धर्वा अप्सरसश्च स्वगणमुख्यं विश्वावसुं वत्सं कृत्वा पद्ममये पात्रे गान्धर्वं गन्धर्वाणां सत्कारणकारणं मधु वाङ्माधुर्यं तथा सौभगं सौन्दर्यं च पयोऽधुक्षन् ॥ १७ ॥ वत्सेनेति। महाभागाः श्राद्धदेवताः पितरोऽपि स्वगणमुख्येनार्यम्णा वत्सेन आमपात्रे अपक्वे मृन्मये पात्रे श्रद्धया कव्यं पितॄणामन्नलक्षणं क्षीरमधुक्षत ॥ १८ ॥ प्रकल्प्येति। सिद्धाः कपिलं वत्सं प्रकल्प्य संकल्पनामयीं संकल्पनमात्रेण प्रभवामणिमादिलक्षणां सिद्धिं नभसि आकाशलक्षणे पात्रे दुदुहुरिति शेषः। तथा ये च विद्याधरादयस्तेऽपि तं कपिलमेव वत्सं प्रकल्प्य नभस्येव पात्रे विद्यामन्तर्द्धान-खेचरत्वादिरूपां दुदुहुः ॥ १९ ॥

अन्ये चेति। ये चान्ये मायिनः किंपुरुषादयस्तेऽपि मयं वत्सं प्रकल्प्य नभस्येव पात्रे अन्तर्द्धानेनाद्भुत आत्मा येषां तेषां संवन्धिनीं धारणामयीं धारणाप्रभवामन्तर्द्धानशक्तिं मायां दुदुहुः ॥ २० ॥ यक्षेति। भूतेशो रुद्रो वत्सो येषां ते पिशिताशनाः मांसाहाराः यक्षांसि भूतानि पिशाचाश्च मनुष्यकपाले पात्रे क्षतज रुधिरमेवासवं मादकं दुदुहुः ॥ २१ ॥ तथेति। तथा अहयो निष्फणाः दन्दशूकाः वृश्चिकादयः सर्पाः सफणाः त एव कद्रूसन्ततिजा नागाः तक्षकं स्वगणमुख्यं वत्सं विधाय बिलं मुखमेव पात्रं यस्मिन् विषं पयो दुदुहुः ॥२२॥ पशव इति सार्द्धम्। पशवो गवाश्वादयो गोवृषं रुद्रवाहं वृषभं वत्सं कृत्वा अरण्ये पात्रे यवसं तृणं क्षीरमधुरक्षन् दुदुहुः। दंष्ट्रिणः उन्नतदंष्ट्रावन्तः क्रव्यादाः मांसभक्षिणः प्राणिनो व्याघ्रादयो मृगेन्द्रेण सिंहेन वत्सेन स्वकलेवरे पात्रे क्रव्यं मांसमेव क्षीरं दुदुहुः ॥ २३ ॥ सुपर्णेति अर्द्धम्। विहगाः पक्षिणः सुपर्णवत्साः सुपर्णं गरुडं वत्सं कृत्वा स्वकलेवरे एव पात्रे चरं कीटादि अचरं फलादि च तदेव स्वभोज्यं क्षीरं दुदुहुः ॥ २४ ॥ वटेति। वनस्पतयो वटाद्या वटो वत्सो येषां तादृशाः सन्तः अत्राक्षराधिक्यम्। वनस्पत्य इति पाठे यणार्षः। पृथुं नानारसमयं पयः दुदुहुः। गिरयः हिमवद्वत्सा हिमवन्तं वत्सं कृत्वा स्वसानुषु पात्रेषु नानाधातून् स्वर्णमण्यादिलक्षणान् गैरिकादिरूपांश्च दुदुहुः ॥ २५ ॥ अनुक्तसंग्रहायाह—सर्वे इति। अन्येऽपि सर्वे स्वगणे यो मुख्यस्तेन वत्सेन स्वे स्वे पात्रे पृथक् पृथक् पयः पृथुना भावितां वशीकृतां सर्वकामदुघां पृथ्वीं दुदुहुः ॥ २६ ॥ एवमिति। हे कुरूद्वह ! एवमन्नादाः अद्यत इत्यन्नमिति व्युत्पत्त्या स्वस्वभोज्यानां तत्तदन्नत्वादत्तारः पृथ्वादयः दोहवत्सदोग्धृभेदेन आत्मनः सुष्ठु अभीष्टमन्नमदनक्रियासाधनं छन्दोविद्यादीनामपि तत्साधनत्वादन्नत्वं तदेव क्षीरभेदं क्षीरविशेषं दुदुहुः ॥ २७ ॥ तत इति। ततः प्रजाकामपूरणात् प्रीतः दुहितृवत्सलः महीपतिः पृथुः सर्वकामदुघाम् इमां पृथ्वीं प्रेम्णा दुहितृत्वे चकार। स्वहस्तेनैवान्नमयदुग्धग्रहणात् स्त्रीभावो नोचितः। शरहस्तेन दण्डोद्यमनान्मातृभावोऽप्यनुचितः। परिशेषात्तस्या वात्सल्योदयाच्च दुहितृभाव एव रसावह इति ॥ २८ ॥ चूर्णयन्निति। राजराट् राज्ञामपि राजा विभुः समर्थः वैन्यः पृथुः स्वधनुषः कोट्या अग्रेण गिरीणां कूटानि शृङ्गाणि चूर्णयन्निदं भूमण्डलं प्रायः समं चक्रे। अधुनाप्युच्चनीचत्वस्य क्वचिद्दर्शनात् प्राय इति ॥ २९ ॥ अथेति। अथ प्रजानां वृत्तिदः जीविकाप्रदः पिता च भगवान् वैन्यः अस्मिन् भूमण्डले यथार्हतः यथायोग्यं तत्र तत्र निवासान् कल्पयांचक्रे ॥ ३० ॥ तानाह—ग्रामानिति। ग्रामान् हट्टादिशून्यान् पुरो हट्टादिमतीः पत्तनानि महतीः पुरः विविधानि औदकपार्वतादिभेदभिन्नानि दुर्गाणि प्रवेशप्रतिबन्धकस्थानानि घोषान् आभीराणां निवासान् व्रजान् गवां निवासान् शिबिरं सेनानिवासस्थानं तत्सहितान् आकरान् स्वर्णादिस्थानानि खेटाः कर्षकग्रामाः खर्वटाः पर्वतप्रान्तग्रामास्तांश्च ॥ ३१ ॥ प्रागिति। पृथोः प्राक् पूर्वमेषां पुरग्रामादीनां कल्पना रचना नैवासीत्। यतस्तदा प्रजाः तत्र तत्र अभीष्टस्थाने अकुतोभया निर्भयाः सत्यो यथासुखं वसन्ति स्म। यद्वा पृथुसमये ग्रामादिकल्पनया तत्र तत्र ग्रामादिषु यथासुखं वसन्ति स्म ॥ २२ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायाम् अष्टादशोऽध्यायः ॥ १८ ॥

# अथैकोनविंशोऽध्यायः

## मैत्रेय उवाच

अथादीक्षत राजा तु हयमेधशतेन सः । ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती ॥ १ ॥

ऊनविंशेऽश्वमेधाश्वहरं घ्नन् वज्रिणं पृथुः । अवारि वेधसा तत्र श्लोका नयनवार्द्धयः ( ४२ ) ॥

उवाचेति द्वयं साङ्घ्रिकृतवेदा ( ४४। ) अनुष्टुभः ॥ १६ ।।

अथेति । तुरप्यर्थे । अथ राजा पृथुरपि यत्र सरस्वती नदी प्राची प्राग्वाहिनी अस्ति तस्मिन् मनोः क्षेत्रे मनोर्यज्ञानुष्ठानदेशे ब्रह्मावर्ते तन्नाम्नि हयमेधशतेन निमित्तेन अदीक्षत शताश्वमेधसङ्कल्पमकरोत् । "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥" ॥ १ ॥ तदिति । भगवान् शतक्रतुरिदानीन्तन इन्द्रो यज्ञाख्यः आत्मनः कर्मातिशेत इत्यतिशयम् अभिप्रेत्य ज्ञात्वा तत् तं पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे ॥ २ ॥ यत्रेति द्वयम् । यत्र पृथुयज्ञे यज्ञपतिः ईश्वरः सर्वस्यात्मा सर्वलोकगुरुः प्रभुः ब्रह्मशर्वाभ्यामन्वितः सहितः तथा सहानुगैः अनुगच्छन्तीत्यनुगा गन्धर्वादयस्तत्सहितैर्लोकपालैर्वह्नीन्द्रोपेन्द्र-वरुणादिभिरन्वितः गन्धर्वैर्मुनिभिश्चाप्सरसां गणैश्चोपगीयमानो भगवान् हरिः साक्षादन्वभूयत प्रत्यक्षतोऽदृश्यत ॥ ३–४ ॥ सिद्धेति द्वयम् । तथा सिद्धाः विद्याधराः दैत्या दितिकुलोद्भवाः दानवाः दनुकुलप्रसूताः गुह्यका यक्षाः । आदिपदेन किन्नर-किंपुरुषादीनां ग्रहणम् । तथा सुनन्दनन्दौ प्रमुखौ मुख्यौ येषां ते हरेः पार्षदप्रवराश्च कपिलो नारदो दत्तः सनकादयो योगेशाः ये च तस्य सेवने उत्सुका उत्साहवन्तो भागवता भक्तास्ते सर्वे तं भगवन्तमन्वीयुः अनुजग्मुः ॥ ५–६ ॥ यत्रेति । हे भारत ! यत्र यज्ञे भूमिः सर्वकामदुघा अतः धर्मदुघा धर्मसाधनानां पदार्थानां दोग्ध्री सती धेनुः सतीति स्वामिपादाः । यजमानस्य पृथोरभीप्सिता-नर्थान् दोग्धि स्म पूरयामास ॥ ७ ॥

ऊहुरिति । नद्यः सर्वरसान् इक्षुद्राक्षादिरसान् क्षीरं दधि अन्नं गोरसः घृतं तक्रं च ऊहुः वहन्ति स्म । तथा तरवः भूरिवर्ष्माणः विस्तृतशरीराः सन्तः मधूनां च्युत् क्षरणं येषां ते मधुच्युतः सन्तः प्रासूयन्त फलन्ति स्म ॥ ८ ॥ सिन्धव इति । सिन्धवो रत्ननिकारान् प्रासूयन्त । अपि च गिरयः चतुर्विधं भक्ष्यं लेह्यं चूष्यं च अन्नं प्रासूयन्त । तथा सर्वे सपालका लोका उपायनं स्वस्वसाधनानुरूपं देयं वस्तु उपाजह्रुः निवेदितवन्तः ॥ ९ ॥ इतीति । इति वर्णितप्रकारकं परम उदयोऽभिवृद्धिर्यस्मिंस्तत् अधोक्षज ईशो नाथो यस्य तस्य पृथोः कर्म पृथोस्तदिति च पाठः । भगवान् इन्द्रः असूयन् असहमानस्तस्य प्रतिघातं विघ्नमचीकरत् चकार ॥ १० ॥ चरमेणेति । चरमेणान्तिमेनाश्वमेधेन यजुष्पतिं भगवन्तं वैन्ये यजमाने पूजयति सति स्पर्द्धन् स्पर्द्धमानः । आर्षः शता । इन्द्रस्तिरोहितः सन् यज्ञपशुं यज्ञियमश्वमपोवाह अपहृतवान् ॥ ११ ॥ तमिति । यः अधर्मे धर्मोऽयम् इति विभ्रमो जनानां भ्रान्तिकरः । यद्वा धर्म इति विशिष्टो भ्रमो यतः स एव यः तं पाखण्डं पाखण्डवेषं कवचमिव आमुक्तं गृहीतवन्तम् "आमुक्तः प्रतिमुक्तश्च" इति कवचितनामस्वमरः । विहायसा आकाशमार्गेण त्वरमाणम् ईक्षणभीत्या त्वरया गच्छन्तं तम् इन्द्रं भगवान् अत्रिः ऐक्षत् ऐक्षत । तङभाव आर्षः ॥ १२ ॥ अत्रिणेति । तदा अत्रिणा तमिन्द्रं हन्तुं चोदितो महारथः पृथुपुत्रः संक्रुद्धः संस्तं धावन्तमन्वधावत । तिष्ठ तिष्ठेति चाब्रवीत् तमाकारितवांश्च ॥ १३ ॥ तमिति । जटिलं मस्तके जटावन्तं भस्मना छन्नमवगुण्ठितं तादृशाकृतिं तमिन्द्रं वीक्ष्य पृथुपुत्रः शरीरिणं मूर्तिमन्तं धर्ममेव मेने । श्रीशिवादिषु तथा दर्शनादयमपि कश्चिद्धर्मप्रकारो भवेदिति सम्भावनया तस्मै वाणं न मुञ्चति स्म ॥ १४ ॥ वधादिति । धर्मात्मत्वबुद्ध्या तद्वधान्निवृत्तं तं पृथुपुत्रं हन्तवे तं हन्तुम् "तुमर्थे सेसेत्" इति तवे छान्दसः । भूयः पुनरत्रिरचोदयत् । हे तात ! अश्वहरणेन यज्ञहनं यज्ञं हतवन्तं विबुधाधमं महेन्द्रमेव जहि मारय ॥ १५ ॥ एवमिति । एवमत्रिणा प्रोक्तः पुनः प्रेरितो वैन्यस्य पृथोः पुत्रः अभिक्रुद्धः संस्तं विहायसा त्वरमाणं रावणं गृध्रराड् जटायुरिव अन्वद्रवत् ॥ १६ ॥ स इति । स स्वराड् इन्द्रः तद्रूपं पाखण्डवेषं हित्वा तस्मै तदर्थं पृथुपुत्रार्थम् । यद्वा तस्मै तं पृथुपुत्रमन्तर्द्धानविद्यां शिक्षयितुमित्यग्रिमग्रन्थदृष्ट्या व्याख्येयम् । अश्वं च हित्वा त्यक्त्वा अन्तर्हितः तिरोहितो जातः वीरः पृथुपुत्रः स्वपशुमादाय अश्वं गृहीत्वा पितुर्यज्ञमुपेयिवान् आगतः ॥ १७ ॥ तदिति । हे प्रभो ! तस्य पृथुपुत्रस्य तत् इन्द्रमभिभूयाश्वानयनरूपमद्भुतं कर्म विचक्ष्य दृष्ट्वा परमर्षयः प्रसन्नाः सन्तस्तस्मै पृथुपुत्राय विजिताश्व इति नामधेयं ददुः ॥ १८ ॥

उपसृज्येति। विभुः हरिरिन्द्रस्तीव्रं घनं तमः उपसृज्य सृष्ट्वा तेन छन्नः सन् हिरण्यरचिता रशना यस्य तमश्वं चषालो नाम यूपाग्रे निक्षिप्तः काष्ठकटक इत्युक्तो यूपश्चषालयूपस्तस्मात्पुनर्जहार हृतवान्। रशनाया दृढत्वेन तच्छेदाशक्त्या रशनासहितमेव नीतवानित्याहुः ॥१९॥ अत्रिरिति। पुनश्चाश्वं हृत्वा विहायसाऽऽकाशमार्गेण त्वरमाण त्वरया गच्छन्तमिन्द्रमत्रिः पृथुपुत्राय संदर्शयामास। तदा च कपालखट्वाङ्गधरं दृष्ट्वा धर्मात्मानं मत्वा वीरः पृथुपुत्र एनमिन्द्रं न अवाधत न पीडितवान्। अधावतेत्यपि पाठः ॥२०॥ अत्रिणेति। ततः नायं धर्मात्मा किन्त्विन्द्र एवात एनं जहीत्यत्रिणा चोदितस्तस्मै तमिन्द्रं हन्तुं रुषा क्रोधेन विशिखं बाण धनुषि सन्दधे योजितवान्। स इन्द्रो यतः स्वराड् यथेष्टरूपग्रहणान्तर्धानादौ समर्थस्ततोऽश्वं तद्रूपं पाखण्डवेषं च हित्वाऽन्ताहितः संस्तस्थौ स्थितः ॥ २१ ॥ वीर इति। अथ वीरः पृथुपुत्रोऽश्वमुपादाय गृहीत्वा पितृयज्ञमात्रजत् आगतः। तदवद्य निन्दित हरेः इन्द्रस्य गृहीतं विसृष्टं च रूपं ज्ञानदुर्बलाः ज्ञानसाधने असमर्थाः मन्दमतयो जगृहुः। पृथुपुत्रेण अवधात् स्वेषामवध्यत्वमभिमन्यमानाः यज्ञादिविरुद्धधमतप्रवर्तकं स्वसम्प्रदायं रचयित्वा क्षुद्रसिद्धीरन्तर्धानादिकाः साध्यत्वेन निरचैषुरित्यर्थः ॥२२॥ यानीति। यानि रूपाणि हयजिहीर्षया हयस्य हरणेच्छया इन्द्रो जगृहे गृहीतवान् तानि पापस्य खण्डानि ज्ञेयानि। इह शास्त्रे खण्डशब्दवाच्यं लिङ्गं चिह्नमुच्यते। तथा च पापस्य खण्डं पाखण्डमिति व्युत्पत्तिर्दर्शिता ॥ २३ ॥ तत्प्रभृति पाखण्डमार्गाः प्रवृत्ता इत्याह—एवमिति द्वयम्। वैन्ययज्ञस्य जिघांसया हननेच्छया इन्द्रे एवं वारं वारमश्वं हरति सति तद्गृहीतविसृष्टेषु तेनेन्द्रेण गृहीतेषु पुनर्विसृष्टेषु त्यक्तेषु उपधर्मेषु पाखण्डवेषेषु पेशलेषु चतुरेषु वाग्मिषु तर्ककुशलेषु च नग्नरक्तपटादिषु जैनबौद्धादिषु आदिना कापालिकादिषु प्रायेण भ्रान्त्या धर्मोऽयमिति नृणां मतिः सज्जते ॥ २४–२५ ॥ तदिति। तदिन्द्रस्य कर्म अभिज्ञाय ज्ञात्वा कुपितः पृथुपराक्रमो भगवान् पृथुः उद्यतकार्मुकः सन्निन्द्राय इन्द्रं हन्तुं बाणमादत्त जगृहे ॥ २६ ॥ तमिति। तं पृथुं शक्रवधेऽभिसन्धिरभिप्रायोऽस्य सञ्जातस्तम्। इतजन्तः। अत एव क्रोधेन दुष्प्रेक्ष्यं रक्तनेत्रभुजस्फुरणादिविकारेण द्रष्टुमप्यशक्यमसह्यरंहसं शत्रुभिर्दुःसहवेगं विचक्ष्य दृष्ट्वा ऋत्विजः यज्ञानुष्ठानेऽधिकृता ब्राह्मणाः शक्रवधान्निवारयामासुः। अहो हे महामते! प्रचोदितात् यज्ञाङ्गत्वेन विहितादश्ववधादन्यस्य वधोऽत्र यज्ञानुष्ठानकाले तव न युज्यते योग्यो न भवति ॥ २७ ॥ वयमिति। हे राजन्! अनन्तरमविलम्बितमद्यैव वयमयातयामैरगतवीर्यैरुपहवैराह्वानमन्त्रैस्तं तवाहितं शत्रुम् अर्थनाशकं यज्ञे विघ्नकर्तारं त्वच्छ्रवसा त्वद्यशसा एव हतत्विषं नष्टतेजसं तं मरुत्वन्तमिन्द्रमिह यज्ञशालायामेव ह्वयामहे। ततश्च प्रसह्य बलात्कारेण तमग्नये जुहवाम अग्नौ होष्यामः। अत्र कर्ममार्गस्य स्वभाव एवायं यत्र प्रवृत्ता विवेकिनोऽपि अनुचितं कुर्वन्तीति द्योतितम्। यथा ब्रह्मा दुहितृभिलाष रुद्रः कोपं विष्णववतारोऽपीन्द्रः कौटिल्यमिति ॥ २८ ॥ इतीति। हे विदुर! इत्येवं क्रतुपतिं यजमानमामन्त्र्य प्रतिबोध्य रुषा क्रोधेन जुह्वतः इन्द्राह्वानार्थं होमं कुर्वतः अत एव स्रुक् हस्ते येषां तान् स्रुग्घस्तान् अस्य पृथोः ऋत्विजोऽभ्येत्य उपगम्य स्वयंभूर्ब्रह्मा प्रत्यषेधत हवनप्रतिषेधवाक्यान्याह स्म। तद्वार्षः ॥ २९ ॥

न इति। यज्ञरक्षार्थं यं जिघांसथ हन्तुमिच्छथ स इन्द्रो भवतां भवद्भिर्वध्यो वधार्हो न भवति। यज्ञेनेष्टाः पूजिताः सर्वे सुरा यस्येन्द्रस्य तनवः करचरणाद्यवयवस्थानापन्ना तदंशा एव। यत् यस्मात् यज्ञो नामायमिन्द्रो भगवतस्तनुः अवतार एव "ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत" इत्युक्तत्वात्। तथा च भगवदवतारत्वात् यज्ञस्वरूपस्य तस्य यज्ञेन हन्तुमशक्यत्वात् तत्तनुभूतानां देवानामिष्टत्वाच्च यज्ञाख्य इन्द्रो न वध्य इति ॥ ३० ॥ तदिति। हे द्विजाः! तत्तस्मात् स्वस्यानुमतत्वात् राज्ञ एतत्कर्म जिघांसता तद्विघ्नमिच्छता इन्द्रेणानुष्ठितं प्रवर्तितं महद्धर्मव्यतिकरं महतां वेदवादिनां धर्मस्य नाशकमिदं पाखण्डं यूयं पश्यत। अतो बलीयसाऽनेन सख्यमेव कार्यमन्यथा भूयः पाखण्डं स्रक्ष्यतीति ॥ ३१ ॥ पृथुकीर्तेरिति। यर्हि पुनर्यज्ञप्रवर्तनेऽनर्थान्तरोत्पत्तिभयं तर्हि पृथुकीर्तेः ख्यातयशसः पृथोः एकेनोनं शतं क्रतवो यस्य तादृश एव प्रयोगो भूयात्। पृथुरिति पाठे एकोनं शतं क्रतवो यस्य तादृशोऽपि महेन्द्रात् पृथुकीर्तिर्भूयात् क्रतुशतसङ्कल्पस्य अपूर्णत्वेऽपि मदाशीर्वादात्तस्यैकोनत्वेऽपि पूर्तिर्भवतु। राजानमाह—ते तव स्विष्टैः सम्यगनुष्ठितैः क्रतुभिरलं न किञ्चित्प्रयोजनम्। यद्यस्माद् भवान मोक्षधर्मवित् अतो मोक्षधर्मा अनुष्ठेयाः किं स्वल्पफलैर्यज्ञैरिति ॥ ३२ ॥ नैवेति। आत्मने स्वरूपाय महेन्द्राय रोषमाहर्तुं कर्तुं त्वं नैवार्हसि। हि यतः उभावपि युवाम् उत्तमश्लोकस्य भगवतो विग्रहौ मूर्ती अवतारावित्यर्थः। अतस्ते भद्रं भविता ॥ ३३ ॥ माऽस्मिन्निति। हे महाराज! अस्मिन् यज्ञे विघ्ने सत्यपि त्वं चिन्तां मा स्म कृथाः। आदृतात्मान एते महान्तो यत्कथयन्ति तद्युक्तमेवेत्यास्वादरयुक्तचित्तः सन्नस्मद्वचो निशामय शृणु। यत् यस्मात् दैवहतं दैवेन प्रारब्धकर्मणा तत्फलदात्रा परमेश्वरेण वा हतं विघ्नितं कार्यं कर्तुं ध्यायतस्तु मनो नु निश्चितमतिरुष्टं रोषयुक्तं सत् अन्धमतिगाढं तमो मोहं विशति न तु शान्तिं लभते ॥ ३४ ॥ क्रतुरिति। एष क्रतुः विरमताम्। तद्वार्षः। यतोऽत्र देवेषु दुष्टोऽवग्रह आग्रहो भवति। यत्र यस्मिन् दुराग्रहे सतीन्द्रनिर्मितैः पाखण्डैर्धर्मस्य व्यतिकरो विनाशोऽभूत् ॥ ३५ ॥ इन्द्रदुराग्रहकृतमनर्थं पश्येत्याह—एभिरिति। य इन्द्रः ते यज्ञध्रुक् अश्वमुट् अश्वापहारकश्च तेनेन्द्रेणोपसृष्टैः प्रवर्तितैर्हारिभिश्चित्ताकर्षकैरेभिः पाखण्डैरेनं जनं ह्रियमाणमाकृष्यमाणं विचक्ष्व पश्य ॥ ३६ ॥ भवानिति। हे वैन्य! समयानुरूपं शास्त्रानुरूपं जनानां धर्मं वेनस्यापचारात् अवलुप्तं विनष्टं परित्रातुं रक्षितुं तस्य वेनस्य देहतो भवान् अद्येदानीमिह भूतलेऽवतीर्णोऽसि। अतः त्वं विष्णोः

कलाऽसि। यद्वा भवान् इति त्वमित्यस्य विशेषणं प्रशस्त इत्यर्थः। विष्णोः कलैव त्वमवतीर्णोऽसीत्येकवाक्यतयाऽन्वयः॥ ३७॥ स त्वमिति। हे प्रजापते! हे प्रभो! स भगवदवतारस्त्वमस्य विश्वस्य भवमुद्भवं विमृश्य विचार्य यैर्वेनाङ्गमन्थनात् त्वमुत्पादितोऽसि तेषां विश्वसृजां भृग्वादीनां संकल्पनं मनोरथं प्रजापालनादिना पिपीपृहि पूरय। आर्षः प्रयोगः। पिपृहि इति पिपूर्हि इति वा योग्यम्। आदौ तु भागुरिमतेऽपरेल्लोपः। ततः प्रचण्डपाखण्डपथरूपामुपधर्मस्य अधर्मस्य मातरं जननीम् ऐन्द्रीं मायां च जनेषु प्रवृत्तां जहि निवारय। पाखण्डपथमिति मायाविशेषणत्वेऽपि अजहल्लिङ्गत्वात् पुंस्त्वम्॥ ३८॥ इत्थमिति। इत्थं लोकगुरुणा ब्रह्मणा समादिष्टः प्रतिबोधितः स विशांपतिः राजा यथा ब्रह्मणा प्रोक्तं तथा यज्ञाग्रहं हित्वा वात्सल्यं स्नेहं च कृत्वा मघोनाऽपि संदधे इन्द्रेण सह सन्धानं च कृतवान्। वात्सल्यशब्देन पृथोः सद्गुणाधिकतया वयोज्येष्ठादपीन्द्रात् वृद्धत्वं सूच्यते॥ ३९॥ कृतेति। वरान्ददति ते वरदा देवा ये तस्य बर्हिषि तर्पिताः भागदानेन तोषितास्ते कृतमवभृथसम्बन्धि स्नानं येन तस्मै भूरीणि कर्माणि यस्य तस्मै पृथवे वरान् ददुः॥ ४०॥ विप्रा इति। हे क्षत्तः! सत्या आशिषो येषां ते श्रद्धया लब्धा दक्षिणा यैस्ते सत्कृताः विप्रास्तुष्टाः सन्तस्तस्मै आदिराजाय पृथवे आशिषो युयुजुर्ददुः॥ ४१॥ तुष्टानां वाक्यम्—त्वयेति। हे महाबाहो! पितरो देवा ऋषयो मानवाश्च येऽत्र समागतास्ते सर्व एव त्वयाऽऽहूता दानमानाभ्यां यथायोग्यं पूजिताश्च॥ ४२॥

इति श्रीमद्भागवते चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायाम् एकोनविंशोऽध्यायः॥ १९॥

—:❀:—

## अथ विंशोऽध्यायः

### मैत्रेय उवाच

**भगवानपि वैकुण्ठः साकं मघवता विभुः। यज्ञैर्यज्ञपतिस्तुष्टो यज्ञभुक् तमभाषत॥ १॥**

विंशे यज्ञेऽन्वशात् साक्षाद्धरिः प्रीतः पृथुं नृपम्। वरदानप्रसङ्गोऽस्य श्लोकास्तत्राष्टवह्नयः (३८)॥

उवाचषट्कं संपूर्णा रसतर्का (५६) अनुष्टुभः॥ २०॥

भगवानिति। विभुर्यज्ञपतिर्यज्ञभुक् च यज्ञैः स्विष्टः सम्यक् पूजितः अतस्तुष्टः वैकुण्ठो भगवानपि मघवता इन्द्रेण सह प्रसन्नतया वरदानादीच्छया तं राजानमभाषत॥ १॥ एष इति। एष इन्द्रः ते तव हयमेधेषु शतस्य शततमस्यान्तिमस्य यज्ञस्य भङ्गं ह स्फुटमकारपीत् अकार्षीत्। अकाराधिक्यमार्षम्। ततो लज्जितः अतः आत्मानमुभयोर्ममावतारत्वादात्मनः स्वरूपभूतं त्वां क्षमापयतः क्षमां कारयतः। आपुगार्षः। यद्वा क्षमामाप्नोति क्षमापः। कर्मण्यण्। तादृशं कुर्वतः "तत्करोति" इति णिच्। अमुष्य त्वं क्षन्तुमर्हसि॥ २॥ सुधिय इति। हे नरदेव! यर्हि यस्माद्धेतोः कलेवरम् आत्मा न भवति। अतो लोके सुधियः नरेषूत्तमाः साधवः सज्जना भूतेभ्यो भूतानि पीडयितुम्। "क्रियार्थ" इत्यादि चतुर्थी। अत उपसृष्टद्रुहो योगेऽपि न द्वितीया। न अभिद्रुह्यन्ति॥ ३॥

पुरुषा इति। त्वादृशा विवेकिनोऽपि पुरुषाः देवस्य मम मायया यदि मुह्यन्ति द्रोहादिषु प्रवर्तन्ते। तदा तेषां दीर्घया बहुकालाभ्यस्तयाऽपि वृद्धानां ज्ञानिनां सेवया परं केवलं श्रम एव जातो न कश्चित्पुरुषार्थः॥ ४॥ अत इति। अविद्यास्वरूपाज्ञानं ततः कामस्ततः कर्माणि तैरारब्धो रचित इत्येवमिमं कायं विद्वान् प्रतिबुद्धः पुरुषोऽस्मिन् देहे नैवानुषज्जते अहमित्यात्मबुद्धिं नैव करोति॥ ५॥ असंसक्त इति। बुधः आत्मज्ञानी अत एवास्मिन् शरीरेऽपि असंसक्तश्चेत्तदा अमुना शरीरेणोत्पादिते गृहे अपत्ये

द्रविणे धने वापि ममतां कः कुर्यात् ॥ ६ ॥ एक इति । असो आत्मा एकः शुद्धः स्वयंज्योतिः निर्गुणः गुणानामाश्रयः सर्वगः अनावृतः साक्षाद्द्रष्टा निरात्मा स्वान्यिन्नात्मान्तररहितः अतः आत्मनः देहात्परो भिन्नो देहस्तु अनेकः मलिनः जडः सगुणश्च स्वकारणभूतः गुणाश्रितः परिच्छिन्नः अता वस्त्रादिना आवृतः दृश्यः आत्मन आयतनत्वात् सात्मा च इति नवधापि विलक्षणः ॥७॥ य इति । यः पुरुष एवं वर्णितं सन्तं विद्यमानं तत्रापि न दूरं किं त्वात्मस्थम् आत्मन्येव स्थितमात्मानं वेद जानाति । स मयि परमेश्वरे एव स्थितः । अतः प्रकृतिकार्यभूतदेहस्थोऽपि सः तद्गुणैः सुखदुःखपुण्यपापादिभिर्नाज्यते न लिप्यते ॥ ८ ॥ य इति । हे राजन् ! यः निराशीः निष्कामः श्रद्धयाऽन्वितश्च स्वधर्मेण मां नित्यं भजते तस्य मनः शनकैः प्रसीदति शुद्ध्यति ॥ ९ ॥ परित्यक्तेति । यदा विशदाशयः शुद्धमना भवति तदा परित्यक्तगुणः सन् सम्यग्दर्शनो भूत्वा मम सम्यगौदासीन्येनावस्थानमेव ब्रह्म तदेव कैवल्यं तद्रूपां शान्तिम् अश्नुते । यद्वा । समं निर्भेदं स्थानम् । भागुरिमतेऽकारलोपः ॥ १० ॥ उदासीनमिति । द्रव्यं देहः ज्ञानानि ज्ञानेन्द्रियाणि क्रियाः कर्मेन्द्रियाणि आत्मा मनः तेषामध्यक्षं द्रष्टारमपि इमम् आत्मानं यस्तूदासीनमिव साक्षिमात्रं कूटस्थं निर्विकारं वेद स शोभनं शुद्धमक्षरं ब्रह्माप्नोति ॥ ११ ॥ भिन्नस्येति । द्रव्याणि महाभूतानि क्रिया इन्द्रियाणि कारकाः इन्द्रियाधिष्ठातृदेवाः चेतना चिदाभासयुक्तमन्तःकरणं तदात्मनस्तत्सङ्घातात्मकस्य अतः आत्मनः सकाशाद्भिन्नस्य लङ्गस्य देहस्यैव गुणप्रवाहो जन्ममरणसुखदुःखादिविकारो नात्मन इति पश्यन्तः मयि बद्धसौहृदाः सूरयो विवेकिनो दृष्टासु प्राप्तासु संपत्सु विपत्सु च न विक्रियन्ते हर्षशोकादि न कुर्वन्ति ॥ १२ ॥

सम इति । हे वीर ! त्वं सुखे च दुःखे च समः तथा समाना उत्तममध्यमाधमा यस्य स तथाभूतश्च जितानीन्द्रियाण्या-शयोऽन्तःकरणं च येन स तथा सन् मया परमेश्वरेणोपक्लृप्ताः सम्पादिता येऽखिला लोका अमात्यादयस्तैः संयुतः सन् अखिललोकरक्षणं विधत्स्व कुरु ॥ १३ ॥ श्रेय इति । प्रजापालनमेव राज्ञः श्रेयः श्रेयस्करम् । यत् यस्मात् सम्पराये परलोके प्रजा-पालकः प्रजाभिः कृतात् सुकृतात् षष्ठमंशं हर्ता हरति तत्फलं भुङ्क्ते । अन्यथा करहारः सन् अरक्षिता चेत् प्रजाभिर्हृतं पुण्यं यस्य सः राजा प्रजानामघमत्ति पापफलं भुङ्क्ते ॥ १४ ॥ एवमिति । एवं सति प्रजापालनस्य तवावश्यकत्वे सति द्विजाग्रयाणां वेदवादिना-मनुमतः संमतश्चासावनुवृत्तः परम्पराप्राप्तश्च यो धर्मः स प्रधानो मुख्योऽर्थकामौ तु प्रासङ्गिकौ यस्य सः तथा अन्यतमः अतिशये-नान्यः धर्मादिष्वनासक्त इत्यर्थः । एकपद्यपाठे प्रागुक्तधर्मप्रधानावन्यतमावर्थकामौ यस्य स तथा । अत एव अनुरक्तो लोको यस्मिन् सः अस्याः पृथिव्याः अविता रक्षकश्च सन् ह्रस्वेनाल्पेन कालेन स्वगृहोपयातान् स्वगृहे प्राप्तान् सिद्धान् सनत्कुमारादीन् द्रष्टा त्वं द्रक्ष्यसीति ॥ १५ ॥ वरमिति । हे मानवेन्द्र ! अहं ते गुणैः शीलेन च यन्त्रितः वशीकृतोऽस्मि । अतः मत् मत्तस्त्वं कञ्चन यथेष्टं वरं वृणीष्व । यत् यस्मात् समं स्वीयपरकीयादिषु वैषम्यरहितं चित्तं येषां तेष्वेव वर्त्तितुं शीलं यस्य स तथाभूतोऽहम् अतः गुणशीलरहितजनैस्तु मखैर्यज्ञैः तपोभिः तथा योगेन वा अहं न सुलभः प्रसन्नो न भवामि ॥ १६ ॥ स इति । विश्वजित् पृथुः लोकगुरुणा विष्वक्सेनेन भगवता अनुशासितः । स्वार्थे णिच् । अनुशिक्षितः संस्तस्य हरेरादेशमाज्ञां शिरसा जगृहे बहुमाने-नाङ्गीचकार ॥ १७ ॥ स्पृशन्तमिति । क्षमयितुं पादयोः स्पृशन्तं यतः स्वेन कर्मणा अश्वापहरणलक्षणेन व्रीडितं लज्जितं शतक्रतुमिन्द्रं प्रेम्णा परिष्वज्य विद्वेषं विससर्ज त्यक्तवान् ॥ १८ ॥ भगवानिति द्वयम् । विश्वस्यात्मा समुज्जिहानया प्रतिक्षणं वर्द्धमानया भक्त्या पृथुनोपहृतं समर्पितमर्हणं पूजासाधनमर्घ्यपाद्यादि यस्मै सः तथाभूतया भक्त्यैव तेन गृहीते चरणाम्बुजे यस्य पद्मपलाशाक्षः सतां सुहृन्मित्रं भगवान् प्रस्थानाभिमुखो गमनायोद्यतोऽप्यनुग्रहेण विलम्बितः कृतविलम्ब एनं पृथुं पश्यन्न प्रतस्थे प्रयाणं न कृतवान् ॥ १९-२० ॥ स इति । अश्रुपूर्णलोचनः स आदिराजः पृथुः हरिं विलोकितुं न अशकत् तथा बाष्पेण कण्ठरोधकजलेन विक्लवो व्याकुलः सन् स पृथुः किञ्चन किञ्चिदपि न उवाच । किन्तु रचितोऽञ्जलिर्येन स तथाऽवस्थितः सन्नमुं हरिं हृदोपगुह्य संश्लिष्य तत्राधात् धृतवान् ॥ २१ ॥

अथेति । अथ अश्रुकलाः अश्रुबिन्दुन् अवमृज्य विशोध्य अतृप्तयोर्दृशोर्गोचरं विषयभूतं पदा क्षितिं स्पृशन्तम् उरङ्गविद्विषः गरुडस्योन्नते अंसे स्कन्धे विन्यस्त हस्ताग्रं येन तं पुरुषं भगवन्तं विलोकयन्नाह । यद्यपि देवाः क्षितिं न स्पृशन्ति तथापि कृपापरवशो हरिरात्मानं विस्मृतवानिवेति । अत एव स्खलनपरिहाराय गरुडस्यांसे हस्ताग्रन्यासः ॥ २२ ॥ वरानिति । हे विभो ! हे ईश ! हे कैवल्यपते ! बुधः वरदानामीश्वरात् त्वत् त्वत्तः गुणैर्गुणकार्यैर्विषयैर्विक्रियते इति गुणविक्रियस्तथाभूतः आत्मा चित्तं येषां तेषां विषयिणां योग्यान् वरान् विषयान् कथं वृणीते । नैव वृणीत इत्यर्थः । नारकाणां श्वशूकरादिनारकीं योनिमितामपि देहिनां ये विषयाः सन्ति अतोऽहमपि तान् वरान्न वृणे । कैवल्यपतेरिति पञ्चम्यन्तः पाठो वा ॥ २३ ॥ कैवल्यपतेः कैवल्यं वरणीयमित्यपि नेत्याह—नेति । हे नाथ ! महत्तमानां युष्मद्भक्तानामन्तर्हृदयान्मुखद्वारा च्युतो निर्गतो युष्मच्चरणाम्बुजासवः परमानन्दजनकयुष्मत्कथारूपो रसो यत्र कैवल्ये नास्ति तस्मात् तत् कैवल्यमप्यहं क्वचित्कदाचिदपि न कामये किन्तु भगवत्कथा-श्रवणाय कर्णानामयुतं दशसहस्राणि विधत्स्व । तावतां कर्णानां सामर्थ्यं मम द्वयोः कर्णयोर्देहीति एष एव मे महां वरो देयः । यत्र

यत्र यैर्यैर्या या गुणकथाः कीर्त्येरन् ताः सर्वाः कथाः मत्कर्णे प्रविशेयुरिति बहुकर्णापेक्षा। यानीन्द्रियाणि ज्ञानिनो निन्दन्ति तेष्वेवैकस्य बाहुल्यमहं प्रार्थये इति वैलक्षण्यं द्योतितम् ॥ २४ ॥ स इति। हे उत्तमश्लोक! महतां मुखाच्च्युतो यो भगवत्पदाम्भोजसुधायाः कणो लेशस्तत्संबन्धी योऽनिलः दूरादपि कथमपि किञ्चिदपि भगवद्यशःश्रवणमात्रं स एव यस्मात् विस्मृतः। तत्त्वस्य वर्त्म मार्गो यैस्तेषां कुयोगिनां चलचित्तानां नोऽस्माकं पुनः स्मृतिमात्मज्ञानं वितरति सम्पादयति। तस्मात् कथाश्रवणादन्यैर्वरैरलं न किञ्चित्प्रयोजनम् ॥ २५ ॥ यश इति। हे सुश्रवः सत्कीर्त्ते! यः कश्चिदपि आर्याणां महतां सङ्गमे सति शिवं कल्याणं ते यशः सकृत् अपि यदृच्छया अन्यप्रसङ्गादपि उपशृणोति स पशुस्वभावादितरः गुणज्ञः सारग्राही चेत्तदा पशुं विना यशःश्रवणात् कथं विरमेत् विरक्तो भवेत्। अत एव गुणज्ञा श्रीर्लक्ष्मीरपि गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन् समाहारस्तदिच्छया यत् यशःश्रवणमेव प्रकर्षेण वव्रे वृतवती त्वत्त इति शेषः। यद्वाऽङ्गीकृतवतीत्यर्थः ॥ २६ ॥ अथो इति। अथो ततो हेतोः अहमपि पद्मकरा लक्ष्मीरिव लालसः भजने उत्सुकः सन् अखिलपुरुषोत्तमं गुणानामालयं त्वामेव भजे। एकस्मिन् पत्यौ स्वामिनि त्वयि स्पृधोः स्पर्द्धमानयोः स्पर्द्धधातो स्पृधादेश आर्षः। कृतस्त्वच्चरणयोरेकोऽव्यवच्छिन्नस्तानो मनोविस्तारो याभ्यां तयोः आवयोः मम लक्ष्म्याश्च कलिः कलहोऽपि न स्यात् मा भवतु ॥ २७ ॥ भवतु वा कलिरित्याह—जगदिति। हे जगदीश! अतो यत् यस्याः लक्ष्म्याः कर्मणि भवत्सेवायां नोऽस्माकं ममानुयायिनां च समीहितमिच्छा भवति। तस्यां जगज्जनन्यां लक्ष्म्यां वैशसं विरोधः स्यादेव संभवत्येव। तत्रापि भवान् ममैव पक्षपाती भविता इत्याह। यतो दीनवत्सलः त्वं भक्तैः कृतं फल्गु तुच्छमपि उरु बहु करोषि मन्यसे। स्वे एव धिष्ण्ये परमानन्दस्वरूपेऽभिरतस्य तव तया लक्ष्म्या किं न किमपि प्रयोजनं येन तत्पक्षपातित्वं स्यात् ॥ २८ ॥

भजन्तीति। हे भगवन्! अथ अत एव पूर्वोक्ताद्धेतोः साधवो ज्ञानिनो व्युदस्तो निरस्तो मायागुणानां विभ्रमस्य विलासस्योदयो येन तं त्वामेव भजन्ति। न च ते सकामा इत्याह—भवत्पदानुस्मरणादृते तद्भिन्नाऽन्यत्तेषां सतां निमित्तं प्रयोजनं न विद्महे न विद्मः। तङ् आर्षः। यद्वा हे इति संबोधने विद्म इति "विदो लटो वा" इति मसो मादेशः ॥ २९ ॥ मन्य इति। ते तव गिरं वाचं जगतां विमोहिनीं मन्ये। यत् यस्माद् भजन्तं मामपि त्वं वरं वृणीष्वेत्यात्थ कथयसि। ते तव वाचा वेदलक्षणया तन्त्या रज्ज्वा यदि जनः असितः न बद्धः तर्हि मोहितः सन् पुनर्दुःखालयसंसारपातहेतुं कर्म कथं नु करोति। अतस्तव वाचो मोहकत्वम् ॥ ३० ॥ त्वदिति। हे ईश! अद्धा निश्चितम्। अयमबुधः अज्ञो जनस्त्वन्मायया ऋतात्मनः परमार्थसत्यस्वरूपात्त्वत्तः खण्डितः पृथक्कृतः पराङ्मुखीकृतः यत् यस्मात्त्वत्तोऽन्यत् पुत्रवित्तादिकमाशास्ते किन्तु यथा पिता बालानामप्रार्थितमपि हितं स्वयमेवाचरेत्तथा त्वमपि नोऽस्माकमज्ञानां हितमेवाप्रार्थितमपि स्वयं समीहितुं कर्तुमर्हसि ॥ ३१ ॥ इतीति। आदिराजेन पृथुना इत्येवं नुतः स्तुतः स विश्वदृक् भगवान् तं पृथुमाह स्म। हे राजन्! मयि ते भक्तिरस्तु। ईदृशी अलौकिकी प्रेमवती धीस्ते त्वया मयि कृतेत्येतद्दिष्ट्या भद्रं जातम्। कुतो यतो यया धिया दुस्त्यजां दुस्तरामपि मदीयां मायां जनस्तरति। स्मेति पूर्त्तौ ॥ ३२ ॥ तदिति। हे प्रजापते! तत् तस्मात् त्वमप्रमत्तः विषयेष्वनासक्तः सन्मया यत् प्रजापालनाद्यादिष्टं तत्कुरु। यस्मात् साक्षाद्वेदद्वारा वा मदादेशकरो मदाज्ञापालको लोकः प्राणी सर्वत्र इहामुष्मिंश्च शोभनं सुखं प्राप्नोति ॥ ३३ ॥ इतीति। इत्येवं पृथुना पूजितः अच्युतः भगवान् राजर्षेः वैन्यस्य पृथोरर्थवत् पुरुषार्थहेतुं वचः प्रतिनन्द्य एनं पृथुम् अनुगृहीत्वा अभीष्टदानेन अनुगृह्य। ल्यबभाव आर्षः। गन्तुं मतिं चक्रे ॥ ३४ ॥ देवेति द्वयम्। ततश्च देवर्षिपितृगन्धर्वादयः अनेकानि भूतानि वैकुण्ठानुगताः भगवत्पार्षदा भगवद्भक्ताश्च यज्ञेश्वरो भगवान् विष्णुस्तद्विभूतिरूपत्वात्तद्बुद्ध्या वाचा स्तुत्यादिना वित्तेन वस्त्रादिप्रदानेन अञ्जलिभिर्नमस्कारैश्च भक्तिपूर्वकं राज्ञा सभाजिताः संपूजिताः सन्तस्ततः स्थानात् सर्वे ययुः ॥ ३५–३६ ॥ भगवानिति। सोपाध्यायः उपाध्यायैः ऋत्विग्भिश्च सहितस्यामुष्य राजर्षेः पृथोर्मनो हरन्निवेति लोकोक्तिः। वस्तुतः पृथोर्मनो हरेरधीनमेव सदाऽभूत्। अच्युतः प्रभुर्भगवानपि स्वधाम वैकुण्ठं राज्ञो हृदयं वा प्रत्यपद्यत अगात् ॥ ३७ ॥ अदृष्टायेति। नृपः पृथुः अव्यक्तयापि सन्दर्शित आत्मा येन तस्मै अदृष्टाय दृक्पथमतिक्रान्ताय देवानां देवाय वासुदेवाय तमनुकूलयितुं नमस्कृत्य यज्ञस्थानात् स्वपुरं ययौ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां विंशोऽध्यायः ॥ २० ॥

—:※:—

# अथैकविंशोऽध्यायः

## मैत्रेय उवाच

**मौक्तिकैः कुसुमस्रग्भिर्दुकूलैः स्वर्णतोरणैः । महासुरभिभिर्धूपैर्मण्डितं तत्र तत्र वै ॥ १ ॥**

एकविंशे महासत्रे देवादिसदसि प्रजाः । अशिक्षयत् पृथुस्तत्र श्लोका नयनमार्गणाः ( ५२ )॥
अनुष्टुभः ( ६०॥ ) सार्द्धषष्टिरुवाचेति वचांसि षट् ॥ २१ ॥

स्वपुरं ययावित्युक्तं तत्र पुरं वर्णयति—मौक्तिकैरिति त्रिभिः । मौक्तिकैः कुसुमानां स्रग्भिः दुकूलैः स्वर्णतोरणैः महासुरभिभिर्धूपैः तत्र तत्र स्थाने मण्डितम् ॥ १ ॥ चन्दनागुरुयुक्तैस्तोयैरार्द्रा रथ्याः चत्वराणि चतुष्पथाः अङ्गणानि वा मार्गाश्च तद्युक्तम् । पुष्पाक्षतफलैः तोक्मैरङ्कुरैः लाजैर्भ्रष्टधान्यैः अर्चिर्भिर्दीपैश्चार्चितम् ॥ २ ॥ सवृन्दैः फलपुष्पादिवृन्दसहितैः कदलीस्तम्भैः तथा पूगानां पोतैर्बालवृन्तैः परिष्कृतं शृङ्गारितं तथा आम्रादितरूणां पल्लवाः कोमलपत्राणि तै रचिताभिर्मालाभिः सर्वतः सम्यगलङ्कृतम् ॥ ३ ॥ प्रजा इति । दीपानां वलिभिस्तथा संभृतानि सम्पादितानि यान्यशेषाणि सर्वाणि मङ्गलानि दध्यक्षतफलादीनि तैश्च सह प्रजाः । स्त्रिय इत्यपि पाठः । तथा मृष्टाभ्यामुज्ज्वलाभ्यां कुण्डलाभ्यां मण्डिताः मृष्टाः स्नानादिना शुद्धाः कन्याश्च पं पृथुमभीयुः संमुखं जग्मुः ॥ ४ ॥ शंखेति । शङ्खदुन्दुभिघोषेण तथा ऋत्विजां ब्राह्मणानां ब्रह्मघोषेण वेदपाठेन च सह सूतादिभिश्च स्तूयमानो वीरो महाप्रतापी तथापि गतस्मयो गर्वरहितः पृथुः भवनं स्वगृहं विवेश ॥ ५ ॥ पूजित इति । महायशाः पृथुः गृहप्रवेशात्प्रागेव तत्र तत्र स्थाने पौरादिभिः पूजितः अत एव तेषु प्रीतः सन् प्रियान् मनोऽभीष्टान् वरान् प्रकर्षेणासंकोचेन ददातीति तथाभूतस्तां स्तान्पौरादींस्तत्तदभीष्टदानेन पूजयामास ॥ ६ ॥ स इति । अनवद्यानि निर्दोषाणि चेष्टितानि यस्य सः गुणैर्महान् अत एव महत्तमः पूज्यः स पृथुः एवमादीनि यज्ञादीनि भूयांसि बहूनि कर्माणि स्वयं कुर्वन् अवनिमण्डलं शशास । ततश्च स्फीतं प्रवृद्धं यशः निधाय हरेः पदमारुरुहे । तङार्षः ॥ ७ ॥ तदिति । हे सदस्पते शौनक ! अशेषैः सर्वैः गुणैर्विजृम्भितं प्रवृद्धं गुणवद्भिः सभाजितमादृतं तदपूर्वं पृथ्वीदोहनादि आदिराजस्य पृथोर्यशो गृणन्तं वर्णयन्तं कौषारविं मैत्रेयमर्चयन् सत्कुर्वन् महाभागवतः क्षत्ता विदुरः प्राह स्म पप्रच्छ ॥ ८ ॥

स इति । विप्रैरभिषिक्तस्तश्च लब्धान्यशेषेभ्यः सुरेभ्यो ब्रह्मादिभ्योऽर्हणानि छत्रासनादीनि येन सः पृथुः याभ्यां वाहुभ्यां गां पृथ्वीं दुदोह तयोर्वाह्वोर्वैष्णवं सन् अग्रे किमकरोदिति शेषः ॥ ९ ॥ को न्विति । यस्य पृथोर्विक्रमस्य पृथ्वीदोहनसमीकरणलक्षणस्योच्छिष्टं शेषं कामं भोग्यमद्याप्यशेषाः सर्वे भूपाः राजानस्तथा लोकपालैरिन्द्रादिभिः सहिता लोकाः सर्वे प्राणिनश्चोपजीवन्ति भुञ्जते तस्यास्य कीर्तिं को नु को वाऽभिज्ञो गुणग्राही न शृणोति तत्तस्य शुद्धं कर्म मे मह्यं वद ॥ १० ॥ गङ्गेति । गङ्गायमुनयोर्नद्योरन्तरा मध्ये क्षेत्रं पुण्यदेशमावसन् स पृथुः पुण्यानां पूर्वकृतानां बन्धकरूपाणां जिहासया भोगेन क्षपणार्थं प्राचीनकर्मभिरारब्धानेव भोगान् बुभुजे । न तु तदासक्त्या भोगान्तरार्थं यत्नं चकार । अत्र पृथुशरीरे भगवदंशो जीवश्चेत्यंशद्वयमभूत् । तत्र जीवमेवोद्दिश्य कर्म प्रारब्धभोगादिवर्णनम् ॥ ११ ॥ सर्वत्रेति । सर्वत्र अस्खलितः अप्रतिहतः आदेशः आज्ञा यस्य सः ब्राह्मणकुलादन्यत्र तत् विना तथा अच्युतो भगवानेव गोत्रं प्रवर्तकतुल्यो येषां वैष्णवानां तेभ्यश्चान्यत्र तांश्च विना सप्तद्वीपेषु एको दण्डधृक् । धृजेः क्विप् । अत्र तेन ब्राह्मणानां तत्तद्वेदाचार्याः वैष्णवानां तु तत्तन्मंत्रगुरव एव शासितृत्वे स्थापिता इति सूचितम् ॥१२॥ एकदेति । हे सत्तम ! एकदा तस्य महासत्रदीक्षा आसीत् । तत्र सत्रे दिवौकसां देवगन्धर्वादीनां स्वर्गवासिनां तथा ब्रह्मर्षीणां राजर्षीणां च समाजो मेलनमासीत् ॥ १३ ॥ तस्मिन्निति । तस्मिन् सत्रे अर्हत्सु पूज्येषु सर्वेषु यथार्हतः यथायोग्यं सुष्ठु अर्चितेषु सत्सु सदसः सभाया मध्ये ताराणां मध्ये उडुराट् चन्द्र इव पृथुः विज्ञापनार्थम् उत्थितः ॥ १४ ॥ तं वर्णयति—प्रांशुरुन्नतः पीनायतौ च भुजौ यस्य स गौरः कञ्जे इवारुणे ईक्षणे यस्य सः सुनासः सुमुखः सौम्यः प्रियदर्शनः पीनौ अंसौ स्कन्धौ यस्य शोभना द्विजाः दन्ताः स्मितं च यस्य सः ॥ १५ ॥ व्यूढेति । व्यूढं विस्तीर्णं वक्षो यस्य बृहत्यौ श्रोणी यस्य वलिभिर्वल्गु सुन्दरं दलवत् अश्वत्थपत्रवदुपरि विस्तृतमधस्तात्सङ्कुचितं चिक्कणं चोदरं यस्य आवर्त्त इव निम्ना नाभिर्यस्य सः ओजस्वी शक्तः काञ्चनवदुज्ज्वलावूरू यस्य उदग्रौ उन्नताग्रौ पादौ यस्य सः ॥ १६ ॥ सूक्ष्मेति । सूक्ष्माश्च ते वक्राश्चासिताः कृष्णाश्च स्निग्धाश्चिक्कणाश्च मूर्द्धजाः केशा यस्य कम्बुवत् त्रिरेखाङ्किता कन्धरा यस्य महाधने ये दुकूलाग्र्ये वस्त्रश्रेष्ठे तयोरेकं परिधाय वसित्वा एकमुपवीय उत्तरीयं च कृत्वा वर्त्तमानः ॥ १७ ॥

व्यञ्जितेति। नियमे निमित्ते सत्रनियमवशादित्यर्थः। न्यस्तानि त्यक्तानि भूषणानि येन अत एव तैरनावृतत्वात् व्यञ्जिता प्रकटिता अशेषगात्रेषु श्रीः स्वाभाविकी शोभा येन कृष्णाजिनधरः श्रीमान् कान्तिमान् कुशपाणिः कृतानि उचितानि कर्माणि येन ॥ १८॥ शिशिरेति द्वयम्। शिशिरे सन्तापहरे स्निग्धे च तारे ययोस्ते अक्षिणी यस्य सः उर्वीशः पृथुः तदा समन्ततः समैक्षत। ततश्च सभ्यान् स्वाभिमुखान् दृष्ट्वा सदः सभां संहर्षयन्निव इव एवार्थे। सर्वेषामुपकारार्थं स्वयमनुभूतमनुवदन्निव इदं वक्ष्यमाणं चारु श्रोत्रप्रियं चित्राणि पदानि यस्मिन् श्लक्ष्णं प्रशान्तं मृष्टं शुद्धं रागद्वेषादिना पक्षपातशून्यं गूढं गम्भीरार्थम् अविक्लवं व्याकुलतारहितं वचः ऊचिवान् ॥ १९-२० ॥ सभ्या इति। हे सभ्याः! हे साधवः! ये इह सत्रे आगता ते सर्वे यूयं मे वाक्यं शृणुत। वो युष्माकं भद्रं भविष्यति। यतो जिज्ञासुभिः स्वमनीषितं विचारितं धर्मं युक्तायुक्तपरीक्षार्थं सत्स्वावेद्यं वक्तव्यमेव अतो युक्तायुक्तनिर्णयार्थं मया स्वविचारितं युष्मासु निवेद्यते न युष्मदुपदेशार्थम् ॥ २१ ॥ अहमिति। यतोऽहमिह अस्मिन्नवसरे प्रजानां राजा योजितः मुनिभिः स्थापितः। अतः दुष्टानां दण्डधरः धर्मस्थानां रक्षिता वृत्तिदः जीविकाप्रदश्च। मुग्धानां स्वेषु सेतुषु धर्ममर्यादासु पृथक् यथाधिकारं स्थापिता। णिलोप आर्षः ॥ २२ ॥ तस्येति। यस्य स्वधर्मानुष्ठानात् राज्ञो दिष्टदृक् कर्मसाक्षी भगवांस्तुष्यति तस्य यत् यान् लोकान् फलत्वेन ब्रह्मवादिन आहुस्ते कामसन्दोहाः कामानां सन्दोहः पूरणं येषु ते लोकास्तदनुष्ठानात्तस्य प्रजारक्षणादिस्वधर्मस्यानुष्ठानान्मे ममापि स्युः ॥ २३ ॥ य इति। यो राजा सन् धर्मेषु प्रजा अशिक्षयन् अप्रवर्त्तयन् ताभ्यः करमुद्धरेत् गृह्णीयात् स प्रजानां शमलं पापफलं भुङ्क्ते स्वं भगं ज्ञानैश्वर्यादिकं जहाति च ॥ २४ ॥ तदिति। हे प्रजाः! तत्तस्मात् अनसूयवः अयमस्मान् दुःखे कर्मानुष्ठाने प्रवर्तयतीति मयि दोषारोपमकुर्वन्तः अधोक्षजे भगवति धीर्येषां तादृश्यः सत्यः भर्तुर्मम पिण्डार्थं परलोकहितार्थं स्वार्थं चैव स्वधर्ममेव कुरुत अनुतिष्ठत। यैस्त्वेवं कृतं यर्हि तर्हि मेऽनुग्रहः कृतो भवेत् ॥ २५ ॥ यूयमिति। हे पितृदेवर्षयः! यदि मया साधूक्तं तदा अमलाः विवेकिनो यूयं तत् मद्वाक्यम् अनुमोदध्वं साधूक्तमिति वदत। अनुमोदने युष्माकमपि तत्फलं स्यादित्याह। कर्तुरिति। यत् यस्मात् कर्तुः शास्तुः शिक्षयितुः अनुज्ञातुरनुमोदितुश्च प्रेत्य परलोके तत्तस्य धर्माधर्मानुष्ठानस्य फलं तुल्यमिति। प्रेत्येत्यव्ययम् ॥ २६ ॥ अस्तीति। हे अर्हसत्तमाः! कैश्चिन्मीमांसकादिभिराग्रहेणानङ्गीकारेऽपि केषांचिन्महतां मते यज्ञपतिर्नाम प्रमाणसिद्धो भगवान् अस्त्येव। यतः इहामुत्र देशान्तरे च ज्योत्स्नावत्यः चन्द्रप्रभाशालिन्यो भुवः क्वचिदेव लक्ष्यन्ते न सर्वत्र। अतः भगवदङ्गीकारिणो धन्याः सर्वत्र न सन्तीति। यद्वा केषांचिन्मते सत्त्वेऽपि विप्रतिपत्तिबाहुल्यान्न तत्सिद्धिरित्याशङ्क्य जगद्वैचित्र्यान्यथानुपपत्तिं प्रमाणयति। इहामुत्र च ज्योत्स्नावत्यः कान्तिमत्यः सुखजनिकाः भुवः भोगभूमयः शरीराणि च लक्ष्यन्ते इति विचित्रकर्मानुसारिफलदाता मङ्गीकर्त्तव्यः। कर्मणस्तु जडत्वात् देवतानां चान्तर्याम्यधीनत्वान्न स्वातन्त्र्येण फलदातृत्वं सम्भवति ॥ २७ ॥

विद्वदनुभवमप्याह—मनोरिति त्रयम्। शोच्यान् शोकार्हान् धर्मे विषये विमोहितान् भ्रान्तान् मृत्योर्दौहित्रादीन् ऋते विना महीपतेर्मनोः उत्तानपादस्य ध्रुवस्यापि राजर्षेः प्रियव्रतस्य अस्मत्पितुरपि पितुः अङ्गस्य च अजस्य ब्रह्मणो भवस्य शिवस्य प्रह्लादस्य बलेश्चापि ईदृशामन्येषां च वर्गः धर्मार्थकामाख्यस्त्रिवर्गः स्वर्गो धर्मफलम् अपवर्गो मोक्षः तेषां प्रायेणैकान्त्येन एकरूपेण हेतुना गदाभृता भगवता कृत्यं प्रयोजनमस्ति। ते श्रीभगवन्तं सम्यगङ्गीकुर्वन्तीति ॥ २८-३० ॥ यदिति। यस्य पादसेवायामभिरुचिरन्वहं प्रतिदिनमेधती वर्द्धमाना सती। शता आर्षः। तपस्विनां संसारतापतप्तानां तपोभिरपि सुखमलभमानानां वा जनानामशेषैर्जन्मभिरुपचितं वृद्धं धियो मलं कामादिवासनालक्षणं सद्यः क्षिणोति क्षपयति। यथा तस्य पदाङ्गुष्ठविनिःसृता सरित् गङ्गा मलं पापं क्षिणोति ॥ ३१ ॥ विनिर्धुतेति। विनिर्धुता अशेषा मनोमला यस्य सः पुमान् असङ्गो वैराग्यं तेन विज्ञानस्य विशेषसाक्षात्कारस्तदेव वीर्यं बलं यस्यास्ति स तथाभूतः सन् यस्य भगवतोऽङ्घ्रिमूले कृतकेतनः कृतनिवासो भवति पुनः क्लेशवहां क्लेशप्रापिकां तां संसृतिं न प्रपद्यते। मुक्तो भवतीत्यर्थः ॥ ३२ ॥ तमेवेति। अमायिनः निष्कपटाः यथाधिकारं वर्णधर्माद्यनतिक्रमपूर्वकमेव अवसिता निश्चिता समाप्ता वा अर्थसिद्धिर्येषां ते तथाभूताः यूयम् आत्मवृत्तिभिर्यथावर्णमध्यापनरक्षणकृषिसेवनादिभिर्मनोवचःकायानां गुणैर्ध्यानस्तुतिसपर्याभिः स्वकर्मभिरध्ययनरक्षणदानादिभिश्च कामदुघम् अङ्घ्रिपङ्कजं यस्य तं भगवन्तमेव भजत ॥ ३३ ॥ यागादिषु भगवद्दृष्टये तेषां भगवद्रूपतामाह—असाविति। असौ भगवानेव स्वरूपतो विशुद्धविज्ञानघनोऽप्यगुणो निर्विशेषणोऽपि सन्निह कर्ममार्गे पृथग्विधा या द्रव्यादयः तत्र द्रव्याणि व्रीह्यादीनि गुणाः शुक्लादयः क्रिया अवघातादयः उक्तयो मन्त्रास्ताभिः अर्थोऽङ्गसाध्य उपकारः आशयः सङ्कल्पः लिङ्गं पदार्थानां शक्तिः नाम ज्योतिष्टोमादीनि तैश्चानेकगुणो नानाविशेषणवान् अध्वरो यज्ञः सम्पद्यते। "यज्ञो वै विष्णुः" इति श्रुतेः। यद्वा। असावध्वरो द्रव्यादिभिः अर्थादिभिश्चानेकगुणोऽपि "ब्रह्मार्पणं ब्रह्म हविः" इत्यादिब्रह्मदृष्ट्या क्रियमाणो विशुद्धविज्ञानघनः सम्पद्यते ॥ ३४ ॥ यागफलस्यापि भगवद्रूपतामाह—प्रधानेति। एष विभुर्भगवानेव परमानन्दस्वरूपोऽपि प्रधानमव्यक्तं कालस्तत्क्षोभकः आशयो वासना धर्मोऽदृष्टं तैः संगृह्यते जन्यत इति तथा तस्मिन् शरीरे चेतनां विषयाकारां बुद्धिं प्रतिलभ्य प्राप्य तदभिव्यङ्ग्यानन्दरूपः सन् क्रियाफलत्वेन विभाव्यते प्रतीयते। कर्मकर्तरि प्रयोगः। यथाऽनलः दारुषु स्थितः तद्गुणात्मको दारुधर्मैर्दैर्घ्यवक्रत्वादिमान् भवति तथा। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः ॥ ३५ ॥

अहो इति । ये मामकाः मम प्रजाः भूताः क्षोणितले भूतले ये दृढव्रताः दृढसङ्कल्पाः सन्तः गुरुं पूज्यं यज्ञभुजां देवानामधीश्वरं हरिं स्वधर्मयोगेश्वरं हरिं स्वधर्मयोगेन निरन्तरं यजन्ति तेऽमी ममाहो अत्यनुग्रहं वितरन्ति कुर्वन्ति ॥ ३६ । मा जात्विति । महत्यश्च ताः ऋद्धयश्च तासिर्हेतुभिर्यद्राजकुलात्प्रकटं तेजस्तत्कर्तृसमृद्धिभिर्विनापि तितिक्षया तपसा विद्यया च स्वयमेव देदीप्यमाने द्विजानां कुले तथा अजितो विष्णुर्देवता येषां तेषां वैष्णवानां च कुले मा जातु प्रभवेत् कदाचिदपि प्रभाव मा करोतु ॥ ३७ ॥ ब्रह्मण्यदेव इति । ब्रह्मण्यानां ब्राह्मणभक्तानां देवः पुरातनः पुरुषः महत्तमानामग्रणीश्च हरिः नित्यं यस्य ब्रह्मकुलस्य चरणाभिवन्दनात् अनपायिनीं वियोगरहितां लक्ष्मीमवाप । जगत्पवित्रं सर्वलोकशोधनं यशश्च अवाप ॥ ३८ ॥ यदिति । तथा यस्य ब्रह्मकुलस्य सेवया अशेषगुहाशयः सर्वान्तर्यामी स्वराट स्वप्रकाशः विप्राणां प्रियः ईश्वरः काम निकाममतिशयेन तुष्यति । अतः तद्धर्मः भगवद्धर्म एव परो मुख्यो येषां तथाभूतैः विनितैर्भवद्भिस्तद् भगवता सेवितं ब्रह्मकुलमेव निरन्तरं सर्वात्मना सर्वप्रकारेण सेव्यताम् ॥ ३९ ॥ पुमानिति । यस्य ब्राह्मणकुलस्य नित्यं सम्बन्धेन निष्कपटत्वेन सम्यक् सेवया स्वत एव यज्ञाद्यनुष्ठानं विनैव प्रसीदतः शुध्यतः आत्मनश्चित्तात् हेतोः अनतिवेलं शीघ्रमेवात्यन्तसतं मोक्षं यद्वा आत्मन इति षष्ठी । शुध्यतश्चित्तस्य अत्यन्तशमं मोक्षम् अत्र स्वयमनायासेनैव पुमान् लभेत तत्तस्माद्ब्रह्मकुलात्परं श्रेष्ठमत्र लोके हविर्भुजां देवानां मुखं किमस्ति न किमपि । ब्राह्मणा एव देवानां मुखं नान्यदिति ॥ ४० ॥ हरेरपि ब्राह्मणा एव मुखमित्याह—अश्नातीति । पारमहंस्यपराः ज्ञानिनः तानर्हन्ति अधिकुर्वन्ति इति पारमहंस्य पर्यस्ताः गावो वाचो यत्र उपनिषद्भिर्ज्ञानघनत्वेनोक्तः । यद्वा परमहंसानां गम्यः पारमहंस्यः ज्ञानरूपः परितो न गच्छन्ति गावो वाचः इन्द्रियाणि च यस्मिन्स पर्यगुः इन्द्रियनियन्ता स चासौ पारमहंस्य पर्यगुः अनन्तः यथा तथा तत्त्वकोविदैरग्नेः सकाशाद्ब्राह्मणमुखं श्रेष्ठमिति तत्त्वं जानद्भिरज्यानां देवानां नामभिः इन्द्राय स्वाहेत्यादिमन्त्रैर्यस्य ब्रह्मकुलस्य मुखे श्रद्धया हुतमिष्टान्नादिकम् अश्नाति तथा चेतनया बहिष्कृते अचेतने हुताशने इज्यनामभिरपि हुतं न अश्नाति ॥ ४१ ॥

यदिति द्वयम् । हे आर्याः पूज्याः यत्रेदं कर्मज्ञानोपासनादिश्रेयःसाधनमादर्शे दर्पणे मुखमिवावभासते । तत् विरजं शुद्धं सनातनमनादि ब्रह्म वेदमर्थदृष्टये तदर्थज्ञानाय यत् ये ब्राह्मणाः श्रद्धा वेदवाक्ये विश्वासः तपो ब्रह्मचर्यादिमङ्गलमप्रशस्तवर्णनपूर्वकं प्रशस्ताचरणं मौनमध्ययनविरोधिवागनुच्चारणं संयमः इन्द्रियाणां विषयेभ्यः नियमनं तैः समाधिः चित्तैकाग्रता तेन च नित्यं बिभ्रति तेषां पादसरोजरेणुम् अहम् आ आयुर्यावज्जीवम् । आङव्ययीभावः । अधिकिरीटं किरीटस्योपरि वहेय । प्रार्थने लिङ् । यं पादरेणुं नित्यदा शिरसि बिभ्रतः पुंसः पापमाशु नश्यति । यथाऽमु पुरुषं श्रद्धामैत्रीदयातितिक्षादयः सर्वे गुणा भजन्ति ॥ ४२–४३ ॥ गुणायनमिति । गुणानामयनं शीलं सुस्वभाव एव धनवद्रक्षणीयं यस्य तं कृतज्ञं परकृतोपकारं जानन्तं वृद्धा ज्ञानवृद्धा गुर्वादयो वयोवृद्धाः पित्रादयश्चाश्रया यस्य तं नरम् अनु आनुपूर्व्येण यथाधिकारं सम्पदो धर्मार्थकाममोक्षाख्याः संवृणुते सम्यग्भजन्ति । "वृङ् संभक्तौ" यस्मादेवं तस्मात् ब्रह्मकुल गवां च कुलमनुचरैः स्वभक्तैः सहितो जनार्दनश्च मह्यं प्रसीदतां प्रसीदतु । तङार्षः ॥ ४४ ॥ इतीति । इत्येवं ब्रुवाणं नृपतिं पृथुं साधुवादेन तस्य सुष्ठु वचनेन हृष्टमनसः साधवः पितृदेवद्विजातयः तुष्टुवुः ॥ ४५ ॥ पुत्रेणेति । सुकृतिना पुत्रेण पिता उत्तमान् लोकान् जयते प्राप्नोतीति वादिनी श्रुतिः सत्यवती यथार्था । तङार्षः । यत् यस्मात् ब्रह्मदण्डहतः ब्राह्मणशापदग्धः पापः वेनोऽपि तमः नरकमत्यतरत् अतितरत् ॥ ४६ ॥ हिरण्यकशिपुरिति । हिरण्यकशिपुश्चापि भगवन्निन्दया तमो विविक्षुः स्वसूनः प्रह्लादस्य प्रभावतः तमः अत्यगात् ॥ ४७ ॥ वीरवर्य इति । हे वीरवर्य ! हे पृथ्व्याः पितः ! यस्य तव सर्वलोकानामेकभर्तरि मुख्ये स्वामिनि अच्युते भक्तिरति स त्वं शाश्वतीः समाः अनन्तान्संवत्सरान सञ्जीव सुखं जीव ॥ ४८ ॥ अहो इति हे पवित्रकीर्ते ! अहो त्वयैव नाथेन स्वामिनाऽद्य वयं मुकुन्दो नाथो येषां ते तथा जाताः । हि यस्मात् यो भवान् उत्तमश्लोकतमस्य अतिप्रशस्तयशसः ब्रह्मण्यदेवस्य विष्णोः कथां व्यक्ति ॥ ४९ ॥ नेति । हे नाथ स्वामिन् ! इदमाजीविनां सेवकानामासमन्तादनुशासनं शिक्षणं तवात्यद्भुतमत्याश्चर्यं न भवति हे आजीव्य ! इति सम्बोधनं वा । यतः करुणात्मनां दयालूनां महतां यः प्रजास्वनुरागः स प्रकृतिः स्वभाव एव ॥ ५० ॥ अद्येति । हे प्रभो ! नष्टदृष्टीनाम् अज्ञानेनावृतविवेकज्ञानानामत एव दैवसंज्ञितैः प्रारब्धनामकैः कर्मभिः संसारे देवतिर्यगादियोनिषु भ्राम्यतां नाऽस्माकमद्य त्वया तमसः अज्ञानस्य पारः उपासादितः प्रापितः । भगवत्तत्त्वोपदेशेनाज्ञानं निवर्तितमित्यर्थः ॥५१॥ ईश्वरदृष्ट्या विप्रादयोऽपि प्रणमन्ति—नम इति । यो ब्रह्म ब्राह्मणं क्षत्रं क्षत्रियं चाविश्य स्वतेजसा इदं विश्वं बिभर्ति पालयति । ब्रह्माविश्य क्षत्रं विद्यादिना बिभर्ति । क्षत्रं चाविश्य जीविकादिना ब्रह्म बिभर्ति । तदुभयमाविश्य रक्षणादिना विश्वं बिभर्ति । तस्मै विवृद्धसत्त्वाय सत्त्वप्रधानाय महीयसे पुरुषाय पुरुषोत्तमाय नमः ॥ ५२ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायामेकविंशोऽध्यायः ॥ २१ ॥

—:❀:—

# अथ द्वाविंशोऽध्यायः

मैत्रेय उवाच

जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम्। तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः ॥ १ ॥

द्वाविंशे परमं ज्ञानं पृथवे समुपादिशत्। सनत्कुमारैस्तत्र स्युः श्लोकाः सार्द्धा गुणारयः ( ६६ ) ॥

उवाचसप्तकं ( ७ ) सैका स्यात्सप्ततिरनुष्टुभः ( ७१ ) ॥ २२ ॥

जनेष्विति। जनेष्वेवं पृथुलविक्रमं पृथुं प्रगृणत्सु स्तुवत्सु सत्सु सूर्यस्येव वर्चो दीप्तिर्येषां ते चत्वारो मुनयः सनत्कुमारादयस्तत्रोपजग्मुः ॥ १ ॥ तांस्तु इति। लोकान् अपापान् कुर्वत्या अर्चिषा प्रकाशेन लक्षितान् सनत्कुमारादय इति ज्ञापितान् सिद्धानामीश्वरान् तान् व्योम्नः सकाशात् अवतरतः सानुगो राजा अचष्ट अपश्यत् ॥ २ ॥ तद्दर्शनेति। तेषां सनत्कुमारादीनां दर्शनेनोद्गतान् निर्गतान् प्राणान् प्रत्यादित्सुरिव प्रत्यादातुमिच्छुरिव स सदस्यानुगः सदस्यैः अनुगैश्चामात्यादिभिः सह वैन्यः पृथुः इन्द्रियेशो मनो जीवो वा गुणान् गन्धादीन् आदित्सुरिव उत्थितः अयं भावः। "ऊर्ध्वं प्राणा ह्युत्क्रमन्ति यूनः स्थविर आगते। प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते"। इति स्मृतेर्महतामागमने तत्तेजसा क्षिप्ताः प्राणास्तावता प्रत्युद्गच्छन्तीव। अतः स्वयमनुद्गच्छत प्राणहानिः स्यादिति तान्प्रत्यादातुमिव विद्वांसः प्रत्युत्थानाभिवादादि कुर्वन्तीति पृथुरपि तथा चकार ॥ ३ ॥ गौरवादिति। तेषां गौरवाद्यन्त्रितो वशीभूतः सङ्कुचितकायिकवाचिकवृत्तिः सभ्यः सज्जनः अत एव प्रश्रयेण आनता कन्धरा यस्य तथाभूतः सन् राजा गृहीतमध्यर्हणमर्घ्यमासनं च यैस्तान्सनत्कुमारादीन् विधिवत् यथाविधि पूजयांचकार ॥ ४ ॥ तदिति। तेषां सनत्कुमारादीनां पादशौचसलिलैश्चरणक्षालनजलैर्मार्जितं क्षालितमलकबन्धनं यस्य तथाभूतः संस्तत्र सभायां शीलवतां सुस्वभावानां सदाचाराणां वृत्तमाचारमेव बहु मानयन्स्वयं तत् आसमन्तात् अचरत्। इवशब्द एवार्थः ॥ ५ ॥ हाटकेति। श्रद्धा तेषु महत्त्वबुद्धिः संयमो मनसो वृत्त्यन्तरान्नियमनं ताभ्यां युक्तः तेषां दर्शनात् प्रीतश्च स पृथुः स्वधिष्ण्येषु वेदिष्वासीनान् पावकानिव हाटकस्यासनेषु आसीनान् भवस्यापि अग्रजत्वेन मान्यान् तान् आह स्म ॥ ६ ॥ अहो इति। मङ्गलकरमयनमागमनं येषां ते हे मङ्गलायनाः! अहो मे मया किं मङ्गलं पुण्यमाचरितम्। हि यतः यस्य मम योगिभिरपि दुर्दर्शानां वो युष्माकं दर्शनमासीत्। चोऽप्यर्थे ॥ ७ ॥ किमिति। यस्य पुरुषस्य विप्राः प्रसीदन्ति तथा सानुगः अनुगैः सहितः शिवो विष्णुर्वा प्रसीदति। तस्य ह्यस्मिन् भूलोके परत्र स्वर्गादौ च किं दुर्लभतरमत्यलभ्यम् ॥ ८ ॥ नैवेति। यथा सर्वदृशं सर्वसाक्षिणमपि आत्मानं सर्वे दृश्याः न लक्षयन्ते। यथा च अस्य जगतो हेतवः महदादयो मन्वादयो वा न लक्षयन्ते तथा सर्वोपकाराय अर्कवत् लोकान् पर्यटतोऽपि यान् युष्मान् लोकः जनसमूहो नैव लक्षयते एते एवं एवंप्रभावा इति नैव जानाति। यद्वा ये सनकादयः अस्य सर्वदृगात्मदर्शनस्य हेतवस्तान् ॥ ९ ॥

अधना इति। येषां गृहाः अर्हाणां पूज्यानां भवादृशां वर्याः वरणयोग्याः स्वीकार्याः। अम्बु च तृणं च भूमिश्च ईश्वरः स्वामी च अवराः भृत्यादयश्च येषु तादृशाः सन्ति ते साधवः गृहमेधिनः अधना अपि धन्याः कृतार्था एव ॥ १० ॥ व्यालालयेति। तीर्थानि पादयोर्यस्य भगवतः स तीर्थपात् तदीया भगवद्भक्तास्तेषां पादतीर्थेन चरणोदकेन विवर्जिताः येषु गृहेषु कदापि भगवद्भक्तानां पादप्रक्षालनमात्रमपि सत्कारो न जातः। एवंभूता यद्गृहाः ये गृहास्ते अरिक्ताः परिपूर्णा अखिलाः सम्पदो येषु तादृशा अपि व्यालानामालया येषु द्रुमेषु तादृशाः सर्पादिनिवासभूतवृक्षतुल्या एव। यद्वा यच्छब्देन गृहस्थानां ग्रहणम्। येषां गृहस्थानां गृहाः हरिभक्ताङ्घ्रिजलहीनास्ते गृहस्थाः व्यालतुल्यवाग्विषवर्षिपुत्रादीनामालया येषु तथाभूता द्रुमा एव येषां छायाऽपि कैरपि भीया न स्पृश्यते ॥ ११ ॥ स्वागतमिति। हे द्विजश्रेष्ठाः! वो युष्माकं स्वागतमागमनं सुष्ठु जातम्। यत् यस्मात् बाला एव भवन्तो धीराः वशीकृतचित्ताः मुमुक्षवश्च सन्तो बृहन्ति नैष्ठिकब्रह्मचर्यादीन्येव व्रतानि चरन्ति। यद्वा यद्यस्माद्बृहन्ति व्रतानि ब्रह्मचर्याणि मुमुक्षवश्चरन्ति। भवन्तस्तु बाला एव मुक्ता एवेति ब्रह्मचर्यकष्टं मुमुक्षाकष्टं च न जानन्तीति ॥ १२ ॥ कच्चिदिति। हे नाथाः स्वामिनः! इन्द्रियाणामर्था विषयाः रूपादय एवार्थाः पुरुषार्था इति ये विदन्ति ते तथा तेषामत एव व्यसनानि दुःखान्येवोद्यन्ते उद्भवन्ति यस्मिंस्तस्मिन्नेतस्मिन् संसारे स्वकर्मभिः पापाद्यदृष्टैः पतितानां नोऽस्माकं कच्चित्कुशलमस्ति ॥ १३ ॥

ननु अतिथीनां कुशलं प्रष्टव्यं न त्वात्मन इत्याशंक्याह—भवत्स्विति। आत्मारामेषु भवत्सु कुशलप्रश्नो नेष्यते। येषु भवत्सु कुशलाकुशलाकाराः मतिवृत्तयो न सन्ति॥ १४॥ तदिति। तत्त मादहं कृतविश्रम्भः कृतविश्वासः सन् तपस्विनां दुःखतप्तानां सुहृदो हितकारिणो वो युष्मान् तेषां दुःखितानां क्षेमः कल्याणं मोक्षः एतस्मिन्भवे संसारे अञ्जसा अनायासेन केन साधनेन भवेदिति संपृच्छे। तद्भावः॥ १५॥ व्यक्तमिति। व्यक्तं निश्चितम् आत्मवतां धीराणामात्मा तेषु आत्मत्वेन प्रकाशमानः अतस्तान्प्रत्यात्मानं भावयति प्रकाशयति इत्यात्मभावनः अजः श्रीनारायणः भगवान् एव सिद्धरूपी भवत्स्वरूपधरः सन् स्वानां भक्तानामनुग्रहायेमां पृथ्वीं चरति॥ १६॥ पृथोरिति। पृथोस्तत् पूर्वोक्तप्रकारं सारं न्याय्यं सुष्ठु गम्भीरार्थं मितमल्पाक्षरं मधु श्रोत्रप्रियं सूक्तं शोभनं वचनमाकर्ण्य स्मयमान इव प्रतीयमानः सनत्कुमारः प्रीत्या तं प्रत्युवाच ह॥ १७॥ साध्विति। हे महाराज! विदुषा जानतापि सर्वभूतानां हिते आत्मा यस्य तादृशेन भूतहिताय प्रश्नकर्त्रा इति भावः। भवता साधु पृष्टं यतः साधूनां भवादृशां मतिरीदृशी परहितपरैव भवति॥ १८॥

सङ्गम इति। साधूनां सदाचाराणां सङ्गमः उभयेषां पृच्छकानां तदुत्तरदातॄणां च सम्मत एव येषां संभाषणपूर्वकः संप्रश्नः सर्वेषां शं सुखं वितनोति॥ १९॥ अस्तीति। हे राजन! मधुद्विषो भगवतः पादारविन्दस्य ये गुणाः पराक्रमास्तेषामनुवादने प्रश्नद्वारेणानुवादप्रवर्त्तने श्रवणे हरिविमुखैर्दुरापा भवतो नैष्ठिकी निश्चला रतिरस्त्येव। या रतिर्जायमाना पुरुषस्यात्मनो मनसः अन्तः कामात्मकं मलं कषायं धातुरागवदुपायान्तरैरनिवर्त्यं विधुनोति नाशयति। यद्वा कामं यथेष्टम्॥ २०॥ शास्त्रेष्विति। आत्मव्यतिरिक्ते सर्वप्रपञ्चमात्रे असङ्गो वैराग्यं तथा आत्मनि सर्वात्मभूते निर्गुणे ब्रह्मणि दृढा रतिश्चेति सध्यक् विमृशेषु सम्यग्विचारितेषु शास्त्रेषु नृणां क्षेमस्य मोक्षस्य हेतुः साधनमियानेव एतावानेव सुनिश्चितोऽस्ति॥ २१॥ सा इति। नित्यमिति सर्वं तृतीयान्तैः संबध्यते। सा ब्रह्मणि रतिसङ्गश्च नित्यं श्रद्धया भगवत्प्रीतिहेतुधर्माणां चर्यया आचरणेन जिज्ञासया तद्विशेषबुभुत्सया आध्यात्मिके योगे यमनियमादौ निष्ठया योगेश्वराणामुपासनया सेवया पुण्यया पुण्यश्रवसो हरेः कथया तच्छ्रवणेन च स्यात्॥ २२॥ अर्थेति। अर्थेषु द्रव्येषु इन्द्रियेषु चारमन्ति ते धनलुब्धा भोगासक्ताश्च तैः सह या गोष्ठी तस्यामतृष्णाया तेषां सम्मता ये अर्थाः कामाश्च तेषामपरिग्रहेण अनासक्त्या हरेर्गुणपीयूषपानाद्विना आत्मन्येव परितोषे सति विविक्ते विजने रुच्या भगवद्गुणामृतपाने सति तु विविक्तरुचिर्न कार्या। न चात्मपरितोषः कार्य इत्याशयः॥ २३॥ अहिंसयेति। अहिंसया परपीडावर्जनेन पारमहंस्यधर्मस्य चर्यया यदृच्छालाभसन्तोषादिना स्मृत्या आत्महितानुसन्धानेन मुकुन्दस्याचरितमेव अग्र्यं श्रेष्ठं सीधु अमृतं तेन तच्चरितश्रवणसुखेनेत्यर्थः। तेन कथाश्रवणेन न पौनरुक्त्यम्। अकामैः कामत्यागैः कामरहितैरिति यमनियमविशेषणं वा। यमैः सत्यादिभिः नियमैः स्नानाद्यैः मतान्तरस्य अनिन्दया निरीहया योगक्षेमार्थक्रियाराहित्येन द्वन्द्वानां शीतोष्णादीनां तितिक्षया॥ २४॥ हरेरिति। तत्परा हरिभक्तास्तेषां कर्णपूराः कर्णालङ्कारभूताः ये भगवतो गुणास्तेषामभिधानेन कीर्तनेन तथा विजृम्भमाणया वर्द्धमानया हरेर्भक्त्या एतैः साधनैः सदसति कार्यकारणरूपे अनात्मनि प्रपञ्चे असङ्ग आसक्त्यभावः स्यात्। तथा निर्गुणे ब्रह्मणि अञ्जसा दृढा रतिश्च स्यात्॥ २५॥

यदेति। यदा ब्रह्मणि रतिः नैष्ठिकी निष्ठां प्राप्ता भवति। तदा पुमान् आचार्यवान् सन् ज्ञानविरागयोः रंहसा वेगेन अवीर्यं निर्वासनं पञ्चात्मकं पञ्चभूतप्रधानम् अविद्यादिपञ्चक्लेशात्मकं वा जीवस्य कोशमावरकं हृदयं लिङ्गशरीरम् उत्थितः प्रज्वलितोऽग्निर्योनिमरणिमिव दहति। यद्वा यदा ब्रह्मणि रतिः पुमान् आचार्यवांश्च भवति तदा ज्ञानविरागरंहसा उत्थितः साक्षात्कारोऽवीर्यं पुनः प्ररोहाक्षमं हृदयं दहति॥ २६॥ दग्धाशय इति। परोऽदृश्य आत्मा द्रष्टा तयोर्यत् व्यवधानं भेदकमाशयरूपं पूर्वमासीत्तस्य विनाशे दग्ध आशयो हृदयमुपाधिर्यस्य अत एव मुक्ताः समस्ता गुणाः कर्तृत्वादयो येन स पुमान् यथा स्वप्ने राजाऽहमित्यारोपितं सैन्यादिद्रष्टारं दृश्यं सैन्यं च स्वप्नावस्थानाशेन पश्यति तद्वत् आत्मनः सकाशात् बहिर्घटाद्यन्तःसुखदुःखादि नैव विचष्टे न पश्यत्येव। यद्वा दग्धाशयो मुक्ताशयगुणश्च पुमान् आत्मनो बहिरन्तश्च भेदं न विचष्टे तथा परात्मनोः परमात्मजीवयोर्यत्पुरस्तात् व्यवधानं भेद आसीत्तदपि न पश्यति। यद्वा बहिरन्तर्दर्शनाभावे हेतुः यत् परात्मनोः दृश्यद्रष्ट्रोः पुरस्तादन्तःकरणमेव व्यवधानं भेदकतया आसीत् तन्नाशेऽन्तर्बहिः पृथग्दर्शनं नश्येदेवेति भावः॥ २७॥ दृश्यद्रष्टृभेदप्रतीतिरन्तःकरणसत्त्व एवेत्यन्वयव्यतिरेकाभ्यां दर्शयति—आत्मानमिति। उपाधिभूत आशयेऽन्तःकरणे सत्येव जाग्रत्स्वप्नयोरात्मानं द्रष्टारमिन्द्रियाणामर्थं विषयं दृश्यमुभयोस्तयोः परं यत् दर्शनहेतुमहङ्कारं चापि पुमान् पश्यति। अन्यदा सुषुप्तिसमाध्याद्यवस्थायामन्तःकरणस्य लीनत्वात् न तथा पश्यति। उक्तं च। "दृश्यानुरञ्जितं द्रष्टृ दृश्यं द्रष्टुरुज्जितम्। अहंकृत्योभयं रक्तं तन्नाशे द्वैतताऽऽत्मनः।" इति॥ २८॥ निमित्त इति। लोकेऽपि सर्वत्र भेदनिमित्ते जलदर्पणादौ सत्येवात्मनो बिम्बभूतस्य परस्य चापि भिदां पुरुषः पश्यति। नान्यदा जलाद्यभावावस्थायामपीति यथा तथेत्यर्थः॥ २९॥ इन्द्रियैरिति। श्रुताननुभूतान्वा विषयान् ध्यायतां गुणारोपेण चिन्तयतां पुंसामिन्द्रियाणि ध्यातैर्विषयैराकृष्यन्ते तैश्च विषयाकृष्टैरिन्द्रियैर्मन आक्षिप्तमाकृष्टं सद्बुद्धेः सकाशाच्चेतनां युक्तायुक्त-

विवेकसामर्थ्यं हरति। तत्र दृष्टान्तः। स्तम्ब इति। यथा ह्रदतीरस्थः कुशमुंजादिस्तम्बो मूलैर्ह्रदात्तोयं हरति कैरप्यविवेकिभिर्न ज्ञायते तथा मनोऽपि बुद्धेश्चेतनां हरत्येतदविवेकिभिर्न ज्ञायते ॥ ३० ॥ भ्रश्यतीति। चित्तं चेतनामनु तस्यामपहृतायां स्मृतिः पूर्वापरानुसन्धानलक्षणा भ्रश्यति। स्मृतिक्षये सति स्वरूपज्ञानस्य भ्रंशो भवति। तत्तस्य स्वरूपज्ञानस्य रोधं भ्रंशमात्मनः स्वस्मा-देवात्मनः स्वस्य अपह्नवं नाशं कवयः प्राहुः ॥ २१ ॥ नात इति। लोके यदधि यमात्मानमधिकृत्यान्यस्य स्त्रीपुत्रगृहादेः सर्वे-विषयजातस्य प्रेयस्त्वं प्रियतमत्वम्। "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेः। तस्यात्मनः स्वेनैव यो व्यतिक्रमः अप-लापस्तस्माद्यः स्वार्थस्य व्यतिक्रमो विनाशोऽतः परतरः उत्कृष्टोऽन्यः पुंसः स्वार्थनाशो नास्ति ॥ ३२ ॥

अर्थेति। अर्थस्य धनादेः इन्द्रियार्थस्य रूपरसादेः कामस्य चाभिध्यानमेव नृणां सर्वार्थानामपह्नवः विनाशः येनार्थकामादिध्यानेन ज्ञानं शास्त्रोत्थं विज्ञानं चात्मसाक्षात्कारं तदुभयात् भ्रंशितः सन्पुमान् मुख्यतां स्थावरतामाविशति वृक्षादियोनिषु जायते ॥ ३३ ॥ नेति। अतःतीव्रं तमः संसारमूलमज्ञानं तितीरिषुः तर्तुमिच्छुः पुरुषः। इडार्षः। यद्वस्तु धर्मार्थकाममोक्षाणामत्यन्तविघातकं तस्मिन् कर्हिचिदपि सङ्गमासक्तिं न कुर्यात् ॥ ३४ ॥ तत्रापीति। तत्र धर्मादि-चतुष्वेष्वात्यन्तिकतया सर्वोत्कृष्टतया मोक्ष एव पुरुषार्थ इष्यते इष्टो भवति। धर्मार्थकामलक्षणस्त्रिवर्गोऽर्थः स्वार्थे ष्यञ्। यतो नित्यं सर्वदा कृतान्तात् भयेन संयुक्तो भयव्याप्त एवेत्यर्थः मोक्षस्तु न तथेति ॥ ३५ ॥ भयसंयुतत्वमाह परे इति। परे ब्रह्मादयः अवरे अस्मदादयश्च ये भावाः प्राणिनः गुणव्यतिकरात् सत्त्वादिगुणपरिणामादनु पश्चाज्जाताः ईशेन कालेन विध्वंसिता आशिषो धर्मादयो येषां तेषां क्षेमं यथा सुखस्थितिर्न विद्यते ॥ ३६ ॥ तदिति। तत्तस्मात् हे नरेन्द्र! देहः इन्द्रियाणि असवः प्राणाश्च धिषणा बुद्धिश्च आत्मा अहङ्कारश्च तैरावृतानां जगतां जङ्गमानां तस्थुषां स्थावराणां हृदि यो भगवान् क्षेत्रविदं जीवं तपति नियमयति स क्षेत्रवित्तरः तस्य भावस्तत्ता तया अन्तर्यामिरूपेण आविः प्रत्यक्षः प्रत्यक् साक्षिरूपेण विष्वक् व्याप्तत्वेन चकास्ति प्रकाशते तं भगवन्तं सोऽहमस्मीति अभेदप्रकारेण अवेहि। सोऽस्मीति पाठे स एवैषोऽस्ति ततोऽन्यदसत् इत्यर्थः ॥ ३७ ॥ यस्मिन्निति। विवेकेन विधुतिर्निराकृतिर्यस्य तत् इदं विश्वं सदसदात्मतया कार्यकारणभावेन स्रजि मालायामहिबुद्धिरिव। वशब्दो वाशब्दो वा इवार्थे। यस्मिन् परमात्मनि मायैव भाति नित्यमुक्तं परितः शुद्धं विशुद्धं ज्ञानरूपं तत्त्वं सत्यं च अत एव प्रत्यूढा अभिभूता कर्मभिः कलिला मलिना प्रकृतिर्येन तं प्रपद्ये शरणं गताऽस्मि इति भक्त्या प्रणमति ॥ ३८ ॥ तमवेहीति ज्ञानमुपदिष्ट तद्दुष्करं मत्वा भक्तिमाह—यदिति। यस्य वासुदेवस्य पादपङ्कजयोः पलाशानि अङ्गुलयस्तेषां विलासः कान्तिस्तस्य भक्त्या स्मरणेन सन्तो भक्ताः कर्मभिर्ग्रथितं कर्माशयमहङ्कारं यथा सुखेन उद्ग्रथयन्ति कर्मवासनाभिर्विनिर्मुक्तं कुर्वन्ति। नलोपः पृषोदरादित्वादार्षत्वाद्वा। रिक्ता भगवदालम्ब-नरहिता मतिर्येषां ते यतयो ज्ञानमार्गीया अत एव रुद्धः स्रोतसामिन्द्रियाणां गणो वर्गो यैस्ते तथाभूता अपि तद्वत् तथा सुखेन कर्माशयं न उद्ग्रथयन्ति तं वासुदेवम् अरणं शरणं भज ॥ ३९ ॥ ज्ञानमार्गिणां दुःखेन प्राप्तिरित्याह—कृच्छ्र इति। षड्वर्गः इन्द्रियसमूहः नक्रो मकरो यत्र तादृशं भवार्णवम् असुखेन दुःखरूपेण योगादिना ये तितारिषन्ति तितीर्षन्ति। इट् आर्षः। अप्लवेशां न प्लवस्तरणे हेतुरीट् ईश्वरो येषां तेषाम् इह तरणे महान् कृच्छ्रः क्लेशो भवति। तत्तस्मात् त्वं भजनीयं भगवतो हरेरङ्घ्रिम् उडुपं तरणसाधनं प्लवं कृत्वा दुस्तरार्णं दुस्तरोदकतुल्यं वकारलोपेन दुस्तरार्णवतुल्यं वा व्यसनं संसारदुःखम् उत्तर ॥ ४० ॥ स इति। आत्मनि मेधा यस्य तेन। असिजार्षः। ब्रह्मणः पुत्रेण कुमारेण एवं सम्यक् दर्शिता आत्मनो गतिस्तत्त्वं यस्मै स नृपः तं कुमारं प्रशस्य स्तुत्वा उवाच ॥ ४१ ॥

कृत इति। हे ब्रह्मन्! हे भगवन्! "द्रष्टाऽसि सिद्धाननुरक्तलोकः" इति उक्तवता आर्तेषु अनुकम्पिना दयावता हरिणा पूर्वमेव मम अनुग्रहः कृतः हरेरनुग्रहमापादयितुं सम्पादयितुं यूयमागताः। ब्रह्मन्निति प्रधानं कुमारं प्रति सम्बुद्धिः। यूयमागता इति सर्वान्प्रत्युक्तिः ॥ ४२ ॥ निष्पादित इति। भगवत्कृतोऽनुग्रहश्च घृणालुभिर्दयालुभिर्भगवद्भिर्भवद्भिः कार्त्स्न्येन साकल्येन निष्पादितः निष्पादितमित्यपि पाठः तत्र च यद्यपि गुरुदक्षिणार्थं किंचिद्देयं तथापि हि यस्मात् मे ममात्मनो देहेन सह सर्वं राज्यादिकं साधूच्छिष्टं साधूनां भवतामेवोच्छिष्टं भवद्भिरेव भृग्वादिभिर्दत्तं मया प्रसादरूपं प्राप्तं भुक्तं च। ननु मदीयं स्वत्वमतो भवद्भ्योऽहं किं ददे किं दद्याम्। नहि पित्रा दत्तं मोदकादि भुक्त्वा उच्छिष्टं तस्मै दानरूपेण प्रत्यर्प्यते ॥ ४३ ॥ प्राणा इति। हे ब्रह्मन्! मम स्वत्वाभावेऽपि भगवत्तोषार्थं प्राणाः दाराः सुताः इत्यादि सर्वं भवदीयमेव भवद्भ्यो निवेदितम्। यथा राज्ञ एव ताम्बूलादि भृत्यो राज्ञे निवेदयति। यद्वा अश्वमेधयागान्ते प्राणादिकं सर्वं मया निवेदितं पुनश्च तैर्निजोच्छिष्टं मह्यमेव समर्पितमिति ॥ ४४ ॥ आत्मनः स्वत्वाभावं प्रपञ्चयति। सैनापत्यमिति। सेनापतित्वं राज्यं दण्डनेतृत्वं प्राड्विवाकतां च सर्वलोकानामाधिपत्यं स्वामित्वं च सर्वं वेदशास्त्रविद्ब्राह्मण एवार्हति ॥ ४५ ॥ स्वमिति। अतो ब्राह्मणः स्वमेव धनादिकं भुङ्क्ते स्वमेव वस्त्रं वस्ते परिधत्ते स्वमेव ददाति च। क्षत्रियादयस्तु तस्य ब्राह्मणस्यानुग्रहेणैवान्नं भुञ्जते ननु तेषां कुत्रापि स्वत्वम्। येन दाने स्वातन्त्र्यं स्यादिति भावः ॥ ४६ ॥ यैरिति। निगमिभिर्वेदविद्भिर्यैर्भवद्भिः आत्मवादे अध्यात्मविचारे

एकान्ततो निश्चयेन ईदृशी अदृष्टपूर्वा भगवतो वासुदेवस्य सर्वात्मकस्य गतिस्त्वं नोऽस्मान् प्रति प्रतिपादिता निरूपिता। अदभ्रकरुणाः अतिदयालवस्ते भवन्तः स्वकृतेनास्मदाद्युपकारेणैव तुष्यन्तु। यतः उदपात्रम् अञ्जलिं हस्तसंयोजनं विना अन्यत् को नाम तत्प्रतिकरोति प्रत्युपकारं कः कर्तुं शक्नोति। न कोऽपीत्यर्थः। मया तेभ्योऽञ्जलिरेव बद्ध इत्यर्थः। यद्वा विनोदपात्रमुपहासास्पदं प्रत्युपकारे प्रवृत्तो जनानामुपहासास्पद भवेदिति ॥ ४७ ॥ त इति। ते सनत्कुमारादयः आत्मयोगपतयः आत्मज्ञानदानसमर्था गुरवः। मतय इत्यपि पाठः। आदिराजेन पृथुना पूजिता तदीयं शीलं सुस्वभावं शंसन्तः स्तुवन्तः सन्तो नृणां तत्रत्यानां सर्वेषां मिषतां पश्यतां सतां खेऽभूवन् आकाशमार्गेण सत्यलोकं गताः ॥४८॥ वैन्य इति। वैन्यः पृथुस्तु महतां धुर्यो मुख्यः सनत्कुमारादिकृतया अध्यात्मशिक्षया आत्मतत्त्वोपदेशेन या संस्थितिः मनसो निश्चलता तया आत्मन्यवस्थितः ब्रह्मात्मैक्यानुसन्धानपरः सन्नात्मानमाप्तकामं पूर्णकाममेव मेने। इवेत्यवधारणे ॥ ४९ ॥

कर्माणीति। यथाकालं यत्र काले यद्विहितं तदनतिक्रमेण एवमग्रेऽपि। यथादेशं यथाबलं यथोचितं यथावित्तं च ब्रह्मसात्कृतं ब्रह्मार्पणं यथा भवति तथा कर्माणि च अकरोत् ॥ ५० ॥ फलमिति। कर्मणां फलं ब्रह्मणि विन्यस्य निर्विषङ्गः कर्मस्वनासक्तः समाहितः सावधानः आत्मानं च प्रकृतेः परं कर्मणाम् अध्यक्षं साक्षिणं मन्वानः कर्माण्यकरोदित्यनुषङ्गः ॥ ५१ ॥ गृहेष्विति। निरहंमतिः निरहङ्कारः अत एव गृहेषु वर्तमानोऽपि साम्राज्यश्रिया चक्रवर्तिसम्पदा अन्वितो युक्तोऽपि च अर्कवत् यथा सूर्यः सर्वत्र पर्यटन्नपि नासक्तो भवति तथा इन्द्रियार्थेषु विषयेषु नासज्जत ॥ ५२ ॥ एवमिति सार्द्धम्। एवम् अध्यात्मयोगेन आत्मज्ञानपूर्वकं भगवति समर्पणेन कर्माण्यनु निरन्तरं सम्यक् देशकालाद्यनुसारेण आचरन् अर्चिषि स्वभार्यायामात्मसंमतान् गुणपराक्रमादिना योग्यान् विजिताश्वं धूम्रकेशं चेत्यादि पञ्च पुत्रान् उत्पादयामासेति पूर्वजातनामत्रानुवादः। यद्वा कर्माण्यनुसमाचरन् सः अध्यात्मयोगेन अध्यात्मेति सप्तम्यर्थेऽव्ययीभावः। आत्मनि स्वतः सिद्धो योगः आसक्तिरहितविषयभोगलक्षणः सिद्धिविशेषस्तेनैव पुत्रानुत्पादयामास। न तु पुत्रोत्पादने हेतुः कोऽपि कामविकारस्तस्याभूदिति पूर्वप्रजातानामुत्पादनकथनम् ॥ ५३ ॥ सर्वेषामिति। अच्युते आत्मा मनो यस्य सः अच्युतावतारभूतो वा पृथुः जगत्सृष्टेः गोपीथाय रक्षणाय स्वे स्वे काले तत्तद्धर्षादियोग्ये समये ये सर्वेषां लोकपालानां पृथक् पृथक् वर्षादयो गुणास्तान् सर्वानेक एव एषः स्वयं दधार ॥ ५४ ॥ लोकपालगुणानाह—मन इति। मनोवृत्तयो हितचिन्तनानि वाग्वृत्तयो हितमितसत्यप्रियभाषणानि ताभिः सौम्यैर्मनोहरैर्गुणैः सुस्वभावादिभिश्च प्रजाः संरञ्जयन् राजेति स्वस्य नामधेयमधात् दधार। यद्यपि राजतेः कनिन्प्रत्यये राजन्निति सिद्ध्यति। तथापि बाहुलकात् राजेरेव रञ्जनार्थाङ्गीकाराद्वा साध्यम्। अतोऽपरः द्वितीयः सोमश्चासौ राजा च सोमराजश्चन्द्र इव जात इत्यर्थः ॥ ५५ ॥ सूर्यवदिति। सूर्यो यथा समं सर्वं प्रतपन् भुवो वसु जलमष्टौ मासान् गृह्णाति विसृजति च वर्षाकाले तथा सर्वत्र सममाज्ञाप्रवर्तनेन प्रतपन् करादि काले धनादि गृह्णन् दुर्भिक्षादिकाले च विसृजन्नसौ सूर्यवत् अभूत्। तेजसा अग्निरिव दुर्धर्षः धर्षयितुमभिभवितुमशक्यः महेन्द्र इव दुर्जयश्च ॥५६॥ तितिक्षयेति। तितिक्षयाऽपराधसहनेन धरित्रीव नृणामभीष्टदो द्यौः स्वर्ग इव पर्जन्यो मेघो यथा प्रजास्तर्पयन् वर्षासु जलं वर्षति तथा कदाचिद्वृष्ट्यभावे प्रजास्तर्पयन् यथाकामं यथाऽपेक्षितं जलमप्यसौ वर्षति स्मातोऽद्वितीयः पर्जन्य इव जातः ॥५७॥ समुद्र इति। समुद्रो यथा गाम्भीर्येणैतावानिति न बुध्यते तथाऽसावप्यभिप्रायतो दुर्बोध इत्यर्थः। सत्त्वेन स्थैर्येण अचलराट् सुमेरुरिव शिक्षायां दण्डने पक्षपातराहित्येनानुल्लङ्घितशासनत्वेन च धर्मराट् यमराज इव आश्चर्ये हिमवान् हिमाचल इव ॥ ५८ ॥ कुवेर इति। कुवेर इव कोशाढ्योऽभूत् गुप्तोऽज्ञातः सुरक्षितश्च धनादिपदार्थो यस्य स तथा एवंभूतो वरुणो यथा तथा पृथुरपि मातरिश्वा पवन इव बलेन सहसा ओजसा च शरीरमनइन्द्रियबलेन च सर्वेषां प्राणिनामात्मा नियन्ता ॥ ५९ ॥ अविषह्यतयेति। अविषह्यतया भगवान् देवो भूतराट् श्रीरुद्र इव सौन्दर्ये काम इव मृगराट् सिंह इव मनस्वी धीरः निर्भयश्च ॥ ६० ॥ वात्सल्ये इति। वात्सल्ये सस्नेहदयायां मनुवत् नृणां प्रभुत्वे स्वामित्वे महत्त्वे वा भगवानजो ब्रह्मेव ब्रह्मवादे ब्रह्मविचारे देवगुरुः बृहस्पतिरिव आत्मवत्त्वे जितेन्द्रियत्वे स्वयं हरिरिव ॥ ६१ ॥ भक्त्येति। गोषु गुरुषु विप्रेषु तथा विष्वक्सेनानुवर्तिषु भगवद्भक्तेषु भक्त्या ह्रिया लज्जया च प्रश्रयेण नम्रीभावेन शीलेन सुस्वभावेन च परार्थोद्यमेन आत्मतुल्यो निरुपम एव ॥ ६२ ॥ कीर्त्येति। त्रैलोक्ये तत्र तत्र पुम्भिः पुरुषैरूर्ध्वमुच्चैर्गीततया कीर्त्या द्वारभूतया स्त्रीणां कर्णरन्ध्रेषु प्रविष्टः यथा श्रीरामो दाशरथिः स्वकीर्तिद्वार सतां सत्पुरुषाणां कर्णरन्ध्रेषु प्रविष्टः ॥ ६३ ॥

इति श्रीभागवते चतुर्थस्कन्धे अन्वितार्थप्रकाशिकायां द्वाविंशोऽध्यायः ॥ २२ ॥

—:❀:—

# अथ त्रयोविंशोऽध्यायः

मैत्रेय उवाच

दृष्ट्वाऽऽत्मानं प्रवयसमेकदा वैन्य आत्मवान् । आत्मना वर्धिताशेषस्वानुसर्गः प्रजापतिः ॥ १ ॥

त्रयोविंशे सभार्यस्य वने नित्यसमाधितः । पृथोर्वैकुण्ठगमनं तत्र श्लोकाः खवार्द्धयः ( ४० ) ।।

उवाचेति त्रयं ( ३ ) सार्धा वह्निवेदा ( ४३। ) अनुष्टुभः ॥ २३ ॥

दृष्ट्वेति त्रयम् । आत्मवान् जितचित्तः आत्मना स्वेन वर्द्धितः अशेषः स्वानुसर्गः स्वकृतोऽन्नादिसर्गः पुरग्रामादिसर्गश्च येन सः प्रजापतिः जगतो जङ्गमस्य तस्थुषः स्थावरस्य च अपिशब्देन देवादीनामपि वृत्तिदो जीविकासम्पादकः सतां धर्मभृत् धर्मरक्षकः यदर्थमिह भूतले जज्ञिवान् अवतीर्णः स सर्वोऽपि निष्पादित ईश्वरस्यादेशः प्रजापालनादिरूपो येन सः वैन्यः पृथुः एकदा आत्मानं प्रवयसं वृद्धं दृष्ट्वा आत्मजां दुहितृत्वेन स्वीकृतां पृथ्वीं स्वविरहाद्रुदतीमिव आत्मजेषु स्वपुत्रेषु न्यस्य अवस्थाप्य प्रजासु विमनःसु चिन्तातुरासु सतीषु एको भृत्यादिरहितः सदारः सभार्यस्तपोवनमगात् ॥ १–३ ॥ तत्रेति । तत्रापि तपोवनेऽपि अदाभ्या विघ्नैरखण्डिता नियमाः यस्य सः पृथुः "लपिदभिभ्यां च" इति ण्यत् । दभिधातुरपठितोऽप्यत एव वार्तिकात् स्वीकार्यः । पुरा स्वस्य विजये महता यत्नेन प्रवृत्तस्तथा वैखानसानां वानप्रस्थविशेषाणां सुसंमते न तु स्वोत्प्रेक्षिते उग्रे देहेन्द्रियादिशोषकरे तपसि आरब्धः प्रवृत्तः । आदिकर्मणि कर्त्तरि क्तः ॥ ४ ॥

कन्देति । कचित् काले कन्दमूलफलानि आहारो यस्य सः कदाचित् हिंसापरिहारार्थं शुष्काणां पर्णानामशनं यस्य सः कतिचित्पक्षान् अपो भक्षयतीत्यब्भक्षः ततः परमनन्तरं वायुभक्षो जातः ॥ ५ ॥ ग्रीष्मे इति । मुनोर्वानप्रस्थः वीरः पृथुः ग्रीष्मे ऋतौ चतसृषु दिक्षु चत्वारोऽग्नयः उपरि सूर्य इति पञ्चानां तपः संतापो यस्य सः । वर्षासु आसारं धारासम्पातं सहत इत्यासारषाड् जातः । "छन्दसि सहः" इति ण्विः । शिशिरे ऋतौ आकण्ठमुदके जले निमग्नो जातः । स्थण्डिलेशयः भूमिशयानश्च सर्वदा जातः ॥ ६ ॥ तितिक्षुरिति । तितिक्षुः सहिष्णुः यतवाक् मौनी दान्तः निर्जितसर्वेन्द्रियः अत एव ऊर्ध्वरेताः पत्नीसाहित्येऽपि मैथुनवर्जितः जितानिलः वशीकृतप्राणः कृष्णमारिराधयिषुरेवैवमुत्तमं तपः अचरत् कृतवान् ॥ ७ ॥ तेनेति द्वयम् । क्रमानुविद्धेन शनैः परिपाकं प्राप्तेन तेन तपसा ध्वस्तानि नष्टानि कर्माणि अनारब्धफलानि यस्य सः । अमलाशयः निर्मलचित्तः प्राणायामैः सम्यक् यथा पुनः स्वच्छन्दप्रवृत्तिर्न स्यात्तथा निरन्तरं रुद्धः षड्वर्गः पञ्च ज्ञानेन्द्रियाणि मनश्च येन अत एव छिन्नानि बन्धनानि वासना यस्य सः पुरुषर्षभः पृथुः भगवान् सनत्कुमारः परं श्रेष्ठम् आध्यात्मिकम् अध्यात्मं भवम् । अध्यात्मादित्वाट्ठञ् । आत्मन्यधिकृतं विनयादित्वास्वार्थे ठक् इत्येके । यत् यं योगं आह स्म तेनैव पुरुषं पुरुषोत्तमं भगवन्तमभजत् ॥ ८–९ ॥ भगवदिति । भगवद्धर्मिणः भगवत आराधकस्य साधोः श्रद्धया सदा यततः सेवमानस्य । शता आर्षः । पृथोः भगवति ब्रह्मणि व्यापके अनन्यविषया अव्यभिचारिणी भक्तिरभवत् ॥ १० ॥ तस्येति । भगवतः परिकर्म सेवा तेन शुद्धसत्त्व आत्मा मनो यस्य तस्य पृथोः तस्य भगवतोऽनु संस्मरणेन अनुपूर्तिर्वृद्धिर्यस्यास्तया अनया भक्त्या निशितेन येन ज्ञानेन संशयानामसंभावनादीनां पदमाश्रयं निजमुपाधिं जीवस्य कोशमावरकमहङ्कारं चिच्छेद तत् विरक्तिमत् वैराग्यसहितं ज्ञानमभूत् ॥ ११ ॥ छिन्नेति । छिन्ना अन्यधीर्भेदबुद्धिर्देहात्मबुद्धिर्वा यस्य अतः अधिगता ज्ञाता आत्मनो गतिस्तत्त्वं येन निरीहः शरीरयात्रायां योगसिद्धिषु वा निस्पृहः सन् येन वयुनेन ज्ञानेनेदं स्वावरकं हृदयमच्छिनत्तदपि तत्यजे तत्प्रयत्नमपि त्यक्तवान् । तङार्षः । यतिर्मुमुक्षुः यावत् गदाग्रजस्य हरेः कथासु रतिं न कुर्यात् तावद्यो गतिभिरणिमादिसिद्धिभिः अप्रमत्तोऽनासक्तो न भवति अपि त्वासक्तो भवति । अतः श्रीकृष्णकथारतत्वात्पृथोस्तासु लोभो न जातः ॥ १२ ॥ एवमिति । एवं वीरेषु प्रवरः सः पृथुः दृढं ब्रह्मभूतः ब्रह्मात्मैक्यानुसन्धानपरः काले देहत्यागकाले प्राप्ते आत्मानं मनः आत्मनि परमात्मनि संयोज्य तं कलेवरं देहं तत्याज ॥ १३ ॥

संपीड्येति द्वयम् । पार्ष्णिभ्यां पायुं गुदं सम्पीड्य तद्द्वारा वायुर्मा निःसरत्विति तस्य मुद्रणं कृत्वा इति मुक्तासनं सूचितम् । "संपीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु मध्यतः । सव्यदक्षिणमध्येन मुक्तासनमितीरितम् ।" वायुं प्राणं मूलाधाराच्छ-

च्छनैरुत्सारयन् ऊर्ध्वं नयन् ताभ्यां मणिपूरके चक्रेऽवस्थाप्य ततो हृदि अनाहतचक्रे तत उरसि कण्ठस्याधोदेशे विशुद्धचक्रे ततः कण्ठे तस्यैव चक्रस्याग्रदेशे ततश्च शीर्षाणि भ्रुवोर्मध्ये आज्ञाचक्रेऽवस्थाप्य शीर्षन्नार्षः। एवं कोष्ठेषु प्राणस्थानेष्ववस्थाप्य तं प्राणम् असूनिति पाठे प्राणानेवमुत्सर्पयन्नूर्ध्वं नयन् क्रमेण मूर्ध्नि ब्रह्मरन्ध्रे आवेश्य निस्पृहस्तं वायुं प्राणं वायौ महाभूतसमष्ट्यात्मके अयूयुजत् तयोरभेदं भावयामास। एवं कायं पार्थिवं कठिनं भागं क्षितौ पृथिव्यां शरीरगतं तेजस्तेजसि अयूयुजत्। एवं देहारम्भकपञ्चमहाभूतानि समष्टिभूतेषु अयूयुजत् व्यष्टीनां समष्टीनां चाभेदं भावयामास ॥ १४–१५ ॥ खानीति। खानीन्द्रियच्छिद्रावच्छिन्नाकाशप्रदेशान् आकाशे द्रवं शरीरगतं जलांशं तोये एवं यथास्थानं यथायोग्यं विभागशः पृथक् पृथक् अयूयुजदिति पूर्वस्यैवानुषङ्गः। अथाद्वितीयात्मप्रतिपत्तये महाभूतानां विलयमाह। क्षितिमम्भसि जले तत् अम्भः तेजसि अद तेजो वायौ अमुं वायुं नभसि अयूयुजदिति सर्वत्रानुषङ्गः ॥ १६ ॥ तामसाहङ्कारकार्यस्याकाशपर्यन्तस्य लयमुक्त्वा सात्त्विकराजसाहङ्कारकार्याणां लयमाह—इन्द्रियेष्विति। मन इन्द्रियेष्वयूयुजत्। मन इति देवानामप्युपलक्षणम्। तानीन्द्रियाणि यथोद्भवम् उद्भवमनतिक्रम्य तन्मात्रेषु शब्दादिविषयेष्वयूयुजत्। सविकल्पकज्ञाने मनस इन्द्रियाधीनतया इन्द्रियैराकर्षणात्तेषु विलयभावनं न तु कार्यत्वात्। एवमिन्द्रियाणां विषयाधीनत्वाद्विषयेषु लयः सङ्गत एव। तदधीनतया आकर्षण तूक्तम्। इन्द्रियैर्विषयाकृष्टैराक्षिप्त ध्यायतां मन इत इन्द्रियेषु नभ इति पाठेऽप्ययमेवार्थः। भट्टादीनां मते नभश्चाक्षुषं केषांचिन्मानसम् आनुमानिकत्वमतेऽपीन्द्रियव्यापारोऽस्त्येव। नभोगुणश्च शब्दः श्रोत्रग्राह्योऽतः इन्द्रियग्राह्यत्वादिन्द्रियेषु नभो विलापितं तानीन्द्रियाणि यथोद्भवं उद्भवोऽत्र वृत्तिलाभः स च विषयाधीन इति श्रोत्रादीनां विषयेषु शब्दादिषु लयः। यद्वा यथोद्भवमिति परत्रैवान्वेति न पूर्वत्र। यद्वा तन्मात्रकार्याण्येवेन्द्रियाणि मनोऽप्यपञ्चीकृततन्मात्रकार्यम् अहङ्कारिकता तु तदधीनविवक्षया। यद्वा इन्द्रियेषु नभ इति पाठे यथास्थानमित्यनुवृत्तेः सर्वत्राधाराधेयभावेनैव लयो ज्ञेयः। तथाहि क्षित्यादयोऽम्भआदिषु तिष्ठन्तीति पूर्वपूर्वाधेयानां परपरत्राधारे लयः नभश्चेन्द्रियेषु तिष्ठतीति तस्य तेषु लयः मनसोऽपीन्द्रियत्वादिन्द्रियाणि विषयोन्मुखानि विषयेषु तिष्ठन्तीतीन्द्रियाणां तन्मात्रेषु लयः ततश्च तन्मात्राणां यथोद्भवमित्यनेन पूर्वानुवृत्तेन यथास्थानमित्यनेनाप्यन्वयः संभवति। अमून्यवशिष्टानि नभआदीनि यथोद्भवं यथास्थानं च भूतादिना अहङ्कारेणोत्क्षिप्य संयोज्य तं चाहङ्कारं महत्यात्मनि महत्तत्त्वे सन्दधे योजितवानित्यन्वयः। तत्रावशिष्टं नभोमात्राणि च तामसाहङ्कारे मनइन्द्रियदेवताश्च सात्त्विकाहङ्कारे इन्द्रियाणि च राजसाहहङ्कार इत्येवं यथोद्भवं लयविभावना ज्ञेया ॥ १७ ॥ तमिति सार्द्धम्। सर्वेषां गुणानां गुणकार्याणां विन्यासः स्थितिर्यस्मिन्वृक्षस्य इव तं सर्वसंसारबीजभूतं महान्तं मायामये मायोपाधिप्रधाने जीवे जीवोपाधौ लिङ्गशरीरे न्यधात्। सर्वं दुःखसुखादिकार्यजातं लिङ्गशरीर एव पर्यवस्यति नात्मनीति चिन्तयामासेत्यर्थः। स जीवो यत्पुनर्भव इत्यादि लिङ्गशरीरेऽपि जीवशब्दप्रयोगदर्शनात् योऽसावनुशायी पूर्वं लिङ्गशरीराभिमानी प्रभुः पृथुः स इदानीं ज्ञानवैराग्ययोर्वीर्येण प्रभावेण स्वरूपस्थः संस्तं चात्मस्थं स्वसम्बन्धितया स्थितमनुशयं लिङ्गशरीरमजहात्। पूर्वं चिच्छेद संशयपदं बीजजीवकोशमिति लिङ्गशरीरनाश उक्तः। स एवेदानीं स्थूलशरीरत्यागकालेऽनूद्यते ॥ १८ ॥

वनप्रवेशमारभ्य राज्ञ्याः कथामाह—अर्चिरिति। यत्पद्भ्यां भुवः स्पर्शनं तन्नार्हतीत्यतदर्हा सुकुमारी अर्चिर्नाम महती चासौ राज्ञी च तस्य पृथोः पत्नी अपि पृथुना सह वनम् अनुगता अनुजगाम ॥ १९ ॥ अतीवेति। भर्तुर्व्रतं भूमिशयनादि स चासौ धर्मस्तत्र या निष्ठा स्थितिस्तया भर्तुः शुश्रूषया सेवया च ऋषीणामियमार्षी देहयात्रा कन्दमूलादिभिर्देहनिर्वाहस्तया च अतीव परिकर्शिता कृशीकृताऽपि सा अर्चिः प्रेयसः पत्युः करेण यत् स्पर्शनं मानश्च सत्कारस्ताभ्यां निर्वृतिः परमानन्दो यस्याः तथाभूता सती आर्चिं पीडां न अविन्दत न प्राप ॥ २० ॥ देहमिति। विपन्नं विनष्टम् अखिलं चेतनादिकं यस्मिंस्तथाभूतं पृथिव्याः पत्युः पालकस्य आत्मनः स्वस्य च दयितस्य प्रियस्य देहमालक्ष्य दृष्ट्वा तद्वियोगाधिना किंचिद्विलप्य रोदनं च कृत्वा तदनुगमनार्थमद्रिसानुनि पर्वतप्रदेशविशेषे काष्ठैश्चितां विधाय तस्यां तद्देहमारोपयत्। अत्र पृथिव्याः पत्युरिति देशरूपपृथिव्यभिप्रायेणोक्तम्। दुहितृत्वे चकारेमामिति तु देवतारूपपृथिव्यभिप्रायेण। परे तु आत्मनः पत्युः पृथिव्याः दयितस्य दयावतः। तारकादित्वादितच् इत्याहुः। किञ्चिन्मात्रविलापोक्तिस्तु तत्कालोचितक्रियाव्यग्रत्वात् ॥ २१ ॥ विधायेति। अन्यच्च तत्कालोचितं कृत्यं विधाय कृत्वा ह्रदिन्या जले आप्लुता स्नाता सती उदारं सर्वोपकारकरं पृथिवीदोहनादि कर्म यस्य तस्य स्वभर्तुरुदकं दत्त्वा दिवि अन्तरिक्षे स्थितांस्त्रिदशान्देवान् पृथुदर्शनायागतान् दृग्गोचरांश्च नत्वा स्वभर्तृपादौ ध्यायती। नुमभाव आर्षः। चितां त्रिः परीत्य प्रदक्षिणीकृत्य तस्यां वह्निं विसृज्य स्वयं च विवेश ॥ २२ ॥ विलोक्येति। वीरवरं पृथुं स्वपतिमनुगतां साध्वीं विलोक्य देवैः स्वपतिभिः सह वर्तमानाः वरदा वरदानसमर्थाः सहस्रशो देवपत्न्यस्तुष्टुवुः ॥ २३ ॥ कुर्वत्य इति। मङ्गलार्थममरतूर्येषु नदत्सु सत्सु तस्मिन्मन्दरसानुनि कुसुमासारं पुष्पवृष्टिं कुर्वत्यः परस्परं गृणन्ति स्म अभाषन्त ॥ २४ ॥ अहो इति। इयं वधूरर्चिरहो अतिशयेन धन्या कृतार्था। या चैवं यज्ञेशं हरिं श्रीर्लक्ष्मीर्वधूरिव भूभुजां राज्ञां पतिं पालकं पतिं पृथुं सर्वात्मना भेजे ॥ २५ ॥ सेति। सा एषा सती पतिव्रताऽर्चिर्दुर्विभाव्येन अचिन्त्येन असतीनां कर्तुमशक्येन वा राज्यत्यागपतिसेवादिना स्वकर्मणा वैन्यं पतिमनु तेन सहास्मान् देवानप्यतीत्योर्ध्वंव्यापि वैकुण्ठं नूनं निश्चयेन व्रजति तत्पश्यत। यद्वा अनुवैन्यमित्यग्रे विमानस्थं वैन्यं तत्पश्चादर्चिषमपि विमाने पश्यतेत्यर्थः ॥ २६ ॥

तेषामिति। भुवि ये मनुष्याः लोलं तुच्छमायुर्येषां ते तथाभूता अपि भगवान् पद्यते गम्यतेऽनेन तत् नैष्कर्म्यं ज्ञानं साधयन्ति। तेषां मर्त्यानामन्यद्देवादिपदं किं नु दुरापं दुर्लभं नैव किञ्चित्॥ २७॥ स इति। यो जन्मान्तरे महता कृच्छ्रेण तपश्चर्यादिकष्टेनास्मिन् जन्मन्यापवर्ग्यं विमुक्तिसाधनं भुवि मानुष्यं लब्ध्वाऽपि विषयेषु विषज्जते सः यतः आत्मने एव द्रुह्यति अतः वञ्चितः॥ २८॥ स्तुवन्तीषु। अमरस्त्रीष्वेवं स्तुवन्तीषु सतीषु। नुमार्षः। अनुमपि पाठः। यं वै लोकमात्मविदां ज्ञानिनां धुर्यो मुख्योऽच्युताश्रयः भगवद्भक्तः वैन्यः प्राप तमेव स्वपतिलोक वधूरर्चिरपि गता॥ २९॥ इत्थमिति। सोऽसौ भगवत्तमः अतिशयैश्वर्यवान् पृथुः इत्थंभूतः अलौकिकः अनुभावो यस्य तादृशोऽभूत्। उद्दामं श्रेष्ठं चरितं यस्य तस्य चरितं ते तुभ्यं कीर्तितम्॥ ३०॥ य इति। यः प्राणी अवहितः सन् इदं सुमहत् पुण्यं च पृथ्वाख्यानं श्रद्धया पठेदन्यान् श्रावयेत् स्वयं वा शृणुयात् सोऽपि पृथोः पदवीं स्थानमियात् प्राप्नुयात्॥ ३१॥ ब्राह्मण इति। ब्राह्मण एतत् पठन् ब्रह्मणा अध्ययनादिना वर्चस्वी तेजस्वी स्यात्। राजन्यः क्षत्रियः जगतीपतिः राजा स्यात्। वैश्यः पठन् विशां पश्वादीनां वैश्यानां वा पतिः स्यात्। शूद्रः सत्तमतामियात् शृण्वन्निति शेषः। पाठानधिकारात्॥ ३२॥ त्रिरिति। नरोऽथवा नारी वा आदृतः श्रद्धावान् सन्निदमाख्यानं त्रिःकृत्वः त्रीन् वारान् आकर्ण्य अप्रजः पुत्रादिरहितः। असिजभाव आर्षः। सुप्रजतमो भवति। निर्धनो धनवत्तमो भवति। न स्पृष्टा न प्रसृता कीर्तिर्यशो यस्य स सुयशाः प्रख्यातयशाः भवति। मूर्खः पण्डितो भवति॥ ३३॥ इदमिति। इदमाख्यानं पुंसां स्वस्त्ययनम्। अमङ्गल्यस्य दुःखादेर्वारणं धन्यं धनप्रापकम् एवं यशस्यम् आयुष्यम् स्वर्ग्यं कलेर्मलानपहन्ति तादृशं चास्ति। धन्यमित्यादौ पुनरुक्तिराधिक्यार्था॥ ३४॥ धर्मेति। तस्माद्धर्मादीनां सम्यक् सिद्धिमभीप्सुभिः अनु अनुदिनम् अन्यात् प्रतिश्राव्यमित्युपलक्षणं श्रोतव्यं पठितव्यं च तयोर्धर्मादीनां चतुर्णां परमव्यभिचारि कारणमेतत्॥ ३५॥ विजयेति। विजयाभिमुखो राजा एतदाख्यानं श्रुत्वा यान् देशाननुयाति तद्देशीया राजानः पूर्वं पृथवे यथा बलिं निवेदितवन्तस्तथा तस्मै अग्रे बलिं हरन्ति निवेदयन्ति॥ ३६॥ मुक्तेति। मुक्तान्यसङ्गस्त्यक्तफलाभिसन्धिः सन् भगवत्यमलां भक्तिमुद्वहन् वैन्यस्य पुण्यं चरितं शृणुयात् श्रावयेत् पठेच्च॥ ३७॥ वैचित्रेति। हे वैचित्रवीर्य विदुर! महतो हरेर्महतां सतां वा माहात्म्यसूचकम् इदं पृथुचरितं मया अभिहितं कीर्तितम्। अस्मिन् कृतमतिर्मर्त्यः पार्थवीं पृथुसम्बन्धिनीं गतिमाप्नुयात्। पार्थिवीमित्यपि पाठः॥ ३८॥ अनुदिनमिति। यो मनुष्यो विमुक्तफलाप्तिसङ्गः सन् अनुदिन नित्यमादरेणेदं पृथुचरितं शृण्वन् प्रथयन् श्रावणेन विस्तारयंश्च भवति स भवसिन्धौ संसारसागरोत्तरणार्थं पोतो नौः पादो यस्य तस्मिन् भगवति निपुणां संसारनिवर्तने दक्षां रतिं प्रीतिं लभते। पुष्पिताग्राच्छन्दः॥ ३९॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां त्रयोविंशोऽध्यायः॥ २३॥



# अथ चतुर्विंशोऽध्यायः

मैत्रेय उवाच

विजिताश्वोऽधिराजाऽसीत्पृथुपुत्रः पृथुश्रवाः । यवीयोभ्योऽददात्काष्ठा भ्रातृभ्यो भ्रातृवत्सलः ॥ १ ॥

चतुर्विंशे पृथोर्वंश्यान् सुतान् प्राचीनबर्हिषः । रुद्र ऊचे हरेः स्तोत्रं तत्र श्लोकाः स्वहस्तिनः ( ८० )॥

उवाच षट्कं पादोना षडशीतिरनुष्टुभः ८५॥। ) ॥ २४ ॥

विजिताश्व इति । पृथुश्रवा महायशाः पृथुपुत्रः विजिताश्वः अधिराजा आसीत् । सन्धिरार्षः । भ्रातृवत्सलः स च यवीयोभ्यः कनिष्ठेभ्यो भ्रातृभ्यः काष्ठा दिशो ददौ ॥ १ ॥ हर्यक्षायेति । विभुः स हर्यक्षाय प्राचीं पूर्वां दिशमदिशत् । धूम्रकेशाय दक्षिणां वृकसंज्ञाय प्रतीचीं प्रविणसे तुर्यामुत्तरां दिशमदिशत् ॥ २ ॥ अन्तर्द्धानेति । विजिताश्व एव अश्वविजयसमये धर्मवेपस्य शक्रस्य वधाकरणज्ञाप्यधार्मिकत्वप्रसन्नाच्छक्रात् वरत्वेन अन्तर्द्धानगतिं तिरोधानसामर्थ्यं लब्ध्वा अन्तर्द्धानसंज्ञितो जातः । स च शिखण्डिन्यां तन्नाम्न्यां भार्यायां सुसंमतं सर्वैरादृतम् अपत्यत्रयमाधत्त ॥ ३ ॥ अपत्यत्रयमाह—पावक इति । पावकः पवमानश्च शुचिश्चेति येऽग्नयस्त एव वसिष्ठस्य शापाद्विजिताश्वपुत्रत्वेन उत्पन्नाः पुनश्च शापचारिताः पुनर्योगगतिं योगमार्गेण मुक्तिम् अग्नित्वं वा गताः ॥ ४ ॥ अन्तर्द्धान इति । य इन्द्रमश्वहर्त्तारं विद्वानपि जानन्नपि न जघ्निवान्न हतवान् सः अन्तर्धानो विजिताश्वः नभस्वत्यां नाम अन्यस्यां भार्यायां हविर्द्धानं नाम पुत्रम् अविन्दत लब्धवान् ॥ ५ ॥ राज्ञामिति । स चान्तर्द्धानः राज्ञां वृत्तिं जीविकां करस्यादानं दण्डः शुल्कग्रहणं चेत्यादिभिर्दारुणां प्राणिपीडाकरीं मन्यमानो दीर्घसत्रव्याजेन तां विससर्ज ॥ ६ ॥ तत्रेति । तत्र सत्रेऽपि आत्मदृक् हंसं संशुद्धम् । यद्वा भक्तक्लेशं हन्ति तं पुरुषं परमात्मानं यजन् कुशलेन निपुणेन कुशलं पुण्यं तद्रूपेण वा समाधिना तल्लोकतां तस्य लोक एव लोको यस्य तद्भावं भगवल्लोकम् आप ॥ ७ ॥ हविर्द्धानादिति । हे विदुर ! हविर्द्धानात्स्वपत्युर्हविर्द्धानी तत्पत्नी बर्हिषदादीन् षट् सुतान् असूत ॥ ८ ॥ बर्हिषदिति । हे कुरूद्वह ! हाविर्द्धानिर्हविर्द्धानस्य पुत्रः महाभागः प्रजापतिश्च बर्हिषत् क्रियाकाण्डे यज्ञादिषु निष्णातः कुशलोऽभूत् । तथा योगेषु अष्टाङ्गेषु च निष्णातः अभूत् ॥ ९ ॥ यस्येति । देवयजनं यज्ञस्थानमनु समीप एवापरं यज्ञं वितन्वतः यत्रैको यज्ञः कृतस्तदनन्तरं तत्समीप एव यज्ञान्तरं मुख्यकल्पेनैव विस्तारयतो यस्य बर्हिषदः इदं वसुधातलं प्राचीनाग्रैः कुशैरास्तृतमाच्छादितमासीत् । अत एव प्राचीनबर्हिरित्यसावुच्यते ॥ १० ॥ सामुद्रीमिति । अर्द्धम् । स बर्हिषत् सामुद्रीं समुद्रकन्यां देवदेवेन ब्रह्मणोपदिष्टां शतद्रुतिं नामोपयेमे ॥ ११ ॥ यामिति । चारूणि मनोहराणि सर्वाण्यङ्गानि यस्यास्तां तत्रापि किशोरीं बालां तत्रापि सुष्ठ्वलंकृतां तत्रापि परिक्रमन्तीमग्निप्रदक्षिणां कुर्वन्तीम् । दीर्घाभाव आर्षः । यां शतद्रुतिं वीक्ष्य उद्वाहे अग्निरपि पुरा शुकीमिव चकमे कामितवान् । एवं ह्याख्यायते—"सप्तर्षीणां सत्रे तद्भार्यादर्शनेनाग्निः कामसन्तप्तो जातस्तं चाग्निभार्या स्वाहा नाम सप्तर्षिभार्यारूपेण रमयामास । रमयित्वा च तद्रेतः शुकीरूपेण शरस्तम्बे निधायागच्छत् । तां यथा सप्तर्षिभार्यां भ्रान्त्याऽग्निः कामितवां स्तथेति ।" स्तुकीमिवेति पाठे स्तोकघृतधारामिवेति अग्निः शुकीमिव यां सर्वोऽपि जनः कामितवान् इत्यपि कश्चित् ॥ १२ ॥ विबुधेति । सूर्यया नवोढया नूपुरैः पादौ कणयन्त्यैव ध्वनिमात्रेणैव सर्वदिक्षु तया विबुधाः सुरादयः विजिताः ॥ १३ ॥ प्राचीनेति । प्राचीनबर्हिषः बर्हिषदः शतद्रुत्यां तुल्यं नाम व्रतं च येषां ते धर्मे स्नाताः । कुशलाः सर्व प्रचेतोनामानो दश पुत्रा अभवन् ॥ १४ ॥ पित्रेति अर्द्धम् । ते प्रजासर्गे पित्रा आदिष्टाः तपसे तपः कर्त्तुम् अर्णवमाविशन् ॥ १५ ॥ दश वर्षेति सार्द्धम् । पथि मार्गे दृष्टेन प्रसीदता गिरिशेन यत् वक्ष्यमाणं रुद्रगीतमुक्तं संयताः जितेन्द्रियाः भूत्वा तत् जपन्तः हरिं ध्यायन्तः पूजयन्तश्च ते तपसां पतिं भगवन्तं तपसा दश वर्षसहस्राणि आर्चन् आराधयामासुः ॥ १६ ॥ प्रचेतसामिति । प्रचेतसां गिरित्रेण सह पथि यथा सङ्गमः आसीत् । यद्वा पिप्रीतः प्रसन्नः सन् हरस्तेभ्यः आह स्म । अर्थवत्प्रयोजनवत् तत् नोऽस्मभ्यं वद । हर इत्यत्र रह इति यद्वापीत्यत्र यदुतेत्यपि च पाठः ॥ १८ ॥ सङ्गम इति । हे विप्रर्षे ! शिवेन सह सङ्गमः शरीरिणां दुर्लभः खलु दुर्लभ एव । मुनयोऽपि असङ्गात् असङ्गं विधाय यं श्रीशिवं दध्युरेव न तु झटिति प्रापुः ॥ १८ ॥

आत्मेति। घोरया प्रलयहेतुभूतया शक्त्या युक्तोऽपि आत्मारामोऽपि च यो भगवान् भवः अस्य लोककल्पस्य लोकसर्गस्य राधसे पालनायैव विचरति। घोरा शक्तिः ईश्वरत्वादवश्यकर्त्तव्यप्रलयार्थं स्वीकृताऽपि न कल्याणकरणं विहन्तुं शक्ता ॥ १९ ॥ प्रचेतस इति। साधवः प्रचेतसः प्रजासर्गविषयं पितुर्वाक्यं शिरसा आदाय तपसि आदृतं चेतो येषां तादृशाः सन्तः प्रतीचीं दिशं प्रययुः ॥ २० ॥ समुद्रमिति। तत्र च प्रतीच्यां सुमहत् सरः अपश्यन्। तद्वर्णयति। समुद्रम् उपसमुद्रात् किंचिन्न्यूनम् "उपोधिके च" इति कर्मप्रवचनीयता। तथाभूतं विस्तीर्णं विस्तृतं महतां मन इव स्वच्छं निर्मलजलं प्रसन्नाः सलिलाशयाः मत्स्यादयो यस्मिंस्तत् ॥ २१ ॥ नीलेति। नीलानि रक्तानि च यानि उत्पलाम्भोजकह्लाराणि रात्रिदिनसंध्याविकासीनि इन्दीवराणि नीलोत्पल-भेदाः तेषामाकरं जन्मस्थानं हंससारसादिभिः नितरां कूजितं शब्दितम् ॥ २२ ॥ मत्तेति। मत्तानां भ्रमराणां सौस्वर्येण हृष्टरोमाण इव मुकुलयुक्ताः लताङ्घ्रिपा यस्मिंस्तत् पद्मकोशरजो दिक्षु विक्षिपता पवनेनोत्सवो यस्मिन् ॥ २३ ॥ तत्रेति। तत्र स्थाने मृदङ्गपणव-वादिवाद्यमनु पश्चाद्दिव्यैर्मार्गभेदैर्मनोहरं गान्धर्वं गन्धर्वाणां कर्म गानमाकर्ण्य ते राजपुत्राः प्रचेतसो विसिस्म्यु. विस्मयं जग्मुः। यण् तङभावश्चार्षः। मृदङ्गपणवाद्यवदिति पाठे मतुबन्तं गान्धर्वविशेषणत्वेन योज्यम्। यद्वा मृदङ्गपणवादि अवदिति च्छेदः। मृदङ्गादीनां ध्वनिमवत् रक्षत् अतिरस्कुर्वत् गान्धर्वमाकर्ण्येति योज्यम् ॥ २४ ॥ तर्हीति द्वयम्। तर्ह्येव तस्मात्सरसः सकाशान्निष्क्रा-मन्तं सहानुगम् अनुगैर्भृत्यैः सहितम् अमरेषु प्रवरं विबुधानुगैर्गन्धर्वादिभिः उपगीयमानम् ॥ २५ ॥ तप्तहेमनिकायाभं तप्तसुवर्ण-राशिसदृशकान्तिमन्तमतितेजस्विनं शितिकण्ठं नीलकण्ठं त्रिलोचनं प्रसादे सुमुखं स्वेषु प्रसादं कर्तुमुद्युक्तम् एवंभूतं श्रीमहादेवं वीक्ष्य जातकौतुकाः उत्पन्नोत्साहा जाताश्चर्या वा प्रचेतसः प्रणेमुः ॥ २६ ॥ स इति। प्रपन्नानामार्त्तिहरः भगवान् धर्मवत्सलः प्रीतः स श्रीरुद्रः धर्मज्ञान् शीलसम्पन्नान् प्रीतान् तान् प्रचेतस उवाच ॥ २७ ॥ यूयमिति। यूयं वेदिषदः बर्हिषदः पुत्रा इति मम विदितम्। तथा चिकीर्षितं कर्तुमिष्टं च विदितम्। वो युष्माकं भद्रं भवत्विति कृत्वा अनुग्रहाय अनुग्रहणेन भगवदाराधनप्रकार-दर्शनाय मे मयैवं स्वदर्शनं कृतं दत्तम् ॥ २८ ॥ य इति। यः प्राणी रंहसः सूक्ष्मात् त्रिगुणात् प्रधानात् जीवसंज्ञितात् पुरुषाच्च परं प्रकृतिपुरुषयोर्नियन्तारं भगवन्तं वासुदेवं साक्षात् फलेच्छाद्यव्यवधानरहितः प्रपन्नः स मे प्रियः ॥ २९ ॥

स्वधर्मेति। स्वधर्मनिष्ठः पुमान् शतजन्मभिः विरचितं ब्रह्मपदं प्राप्नोति। ततः परं चापि पुण्यातिशये मामेति। यथाऽहं रुद्रो विबुधाः देवाश्चाधिकारिकाः कलात्यये अधिकारसमाप्तौ कलाया लिङ्गशरीरस्यात्यये भङ्गे च तथा अथ देहान्ते अव्याकृतं प्रपञ्चातीतं वैष्णवं पदमेति ॥ ३० ॥ अथेति। यस्माद्भगवद्भक्तो मम प्रियः अथ तस्मात् भागवताः यूयमपि यथा भगवान् प्रियोऽसि तथा मम प्रियाः स्थः। भागवतानामपि मे मत्तोऽन्यः कर्हिचित् कदाचिदपि प्रेयानतिप्रियो न भवति। अतो भवद्भिरपि मयि प्रीतिः कार्येत्यर्थः ॥ ३१ ॥ इदमिति। पवित्रं परं मङ्गलं निःश्रेयसकरमपि च इदं वक्ष्यमाणं गीतं युष्मान् अहं वदामि। तद्युष्माभिः श्रूयतां श्रुत्वा च विविक्तमसंकीर्णं यथा भवति तथा युष्माभिर्जप्यम्। इडभाव आर्षः। व्याकरणान्तरे कचिज्जप्तमित्यपि साधु ॥ ३२ ॥ इतीति। अनुक्रोशः कृपा हृदये यस्य स नारायणः परो ध्येयो यस्य भगवान् शिवः बद्धाञ्जलीन् तान् राजपुत्रान् वचः वचनमाह स्म ॥ ३३ ॥ जितमिति। आत्मविदां ये धुर्याः श्रेष्ठाः तेषां स्वस्तये शोभनसत्तायै आनन्दलाभाय। "इक्श्तिपौ धातुनिर्देशे" इति श्तिप्। ते त्वया जितम् उत्कर्ष आविष्कृतः। भावे क्तः। अतो भवत्प्रसादान्ममापि स्वस्तिः स्वानन्दलाभः अस्तु। भवता राधसा स्वानन्दरूपेण राद्धं सिद्धमेव। भावे क्तः। अतः सर्वस्मै सर्वरूपाय आत्मने च तुभ्यं नमः ॥ ३४ ॥ नम इति। पङ्कजं लोकात्मकं पद्मं नाभौ यस्य तस्मै कारणात्मने नमः। अत एव सूक्ष्मप्राण्युपाधयः भूतानि सूक्ष्माणि तन्मात्राणीन्द्रियाणि च तेषामात्मने नियन्त्रे नमः। अन्तःकरणचतुष्टयाधिष्ठातृत्वेन प्रणमति। शान्ताय कूटस्थाय निर्विकाराय स्वरोचिषे स्वप्रकाशाय वासुदेवाय चित्ताधिष्ठात्रे नमः ॥ ३५ ॥ सङ्कर्षणायेति। सूक्ष्मायाव्यक्ताय दुरन्तायानन्ताय अन्तकाय मुखाग्निना लोकदाहकाय सङ्कर्षणाय अहङ्काराधिष्ठात्रे नमः। विश्वस्य प्रकृष्टो बोधो यस्मात् तस्मै अन्तरात्मने बुद्ध्यधिष्ठात्रे प्रद्युम्नाय नमः ॥ ३६ ॥ नम इति। हृषीकाणां चक्षुरादीनामीशं यदिन्द्रियं मनस्तदात्मने अनिरुद्धाय नमो नमः। सूर्यादितेजस्त्वमाह। परमः श्रेष्ठो यो हंसः सूर्यस्तस्मै पूर्णाय तेजसा विश्वव्यापकाय निभृतात्मने वृद्धिक्षयशून्याय नमः ॥ ३७ ॥ स्वर्गेति। कर्मज्ञानफलभूतयोः स्वर्गापवर्गयोर्द्वारभूताय त्रयीमयत्वादित्यर्थः। नित्यं शुचिन्यन्तःकरणे निषीदतीति शुचिषत्तस्मै "हंसः शुचिषत्"। इति श्रुतेः। हिरण्यं वीर्यं यस्य तस्मै अग्निरूपाय चातुर्होत्रं कर्म तस्मै तत्साधनायेत्यर्थः। कुतस्तन्तवे तद्विस्तारकाय नमः ॥ ३८ ॥ नम इति। ऊर्जे पितॄणामन्नाय इषे देवानामन्नाय यज्ञरेतसे सोमाय स हि पितॄणां देवानां चान्नम् एवं त्रय्याः पतये नमः। जलत्वमाह जीवानां तृप्तिदाय सर्वरसात्मने जलरूपाय नमः ॥ ३९ ॥

पृथिवीत्वमाह—सर्वेति। सर्वेषां सत्त्वानां प्राणिनां ये आत्मानः स्वरूपाणि तेषां देहाय व्यष्टिदेहाय स्थवीयसेऽतिस्थूलाय विराड्देहाय च विशेषाय पृथिवीरूपाय नमः। वायुत्वमाह—प्राणरूपेण त्रैलोक्यं पालयति तस्मै सह ओजोबलात्मने इन्द्रियदेहसामर्थ्य-हेतुभूताय वायुभूताय नमः ॥४०॥ नभस्त्वमाह—अर्थेति। अर्थलिङ्गाय स्वगुणशब्दद्वारा पदार्थज्ञापकाय अवकाशदातृत्वेन अन्तर्बहिर्व-स्तुनोरात्मने व्यवहारकारणाय नभसे नम इति पञ्चभूतरूपता। नम इति। पुण्याय पुण्यलभ्याय भूरिवर्चसे प्रकाशबहुलाय अमुष्मै

लोकाय स्वर्गादिरूपाय नमः ॥ ४१ ॥ प्रवृत्तायेति। पितृदेवाय क्रमेण पितृदेवप्राप्तिसाधनाय प्रवृत्ताय निवृत्ताय च कर्मणे नमः। अधर्मस्य विपाकाय फलरूपाय दुःखाय दुःखदाय मृत्यवे च नमः ॥ ४२ ॥ नम इति सार्द्धम्। हे ईश! आशिषां कामनानां कारणात्मने मनवे ज्ञानिने मन्त्ररूपाय वा नमः। विष्ण्वादिदेवत्वेन प्रणमति। बृहते धर्माय परमधर्माय अकुण्ठमेधसे अलुप्तज्ञानशक्तये पुराणाय पुरुषाय साङ्ख्ययोगयोरीश्वराय प्रवर्त्तकाय कृष्णाय नमः ॥ ४३ ॥ शक्तित्रयेति। अहङ्कृतमहङ्कारस्तदात्मने कर्तृकरणकर्मरूपशक्तित्रयेण समेताय मीढुषे श्रीरुद्राय नमः। "दाश्वान्साह्वान मीढ्वांश्च" इति क्वसन्तो निपातः। चेतो ज्ञानमाकूतिः क्रिया तद्रूपाय वाचो विविधा भूतिः सृष्टिर्यस्मात्तस्मै द्रुहिणरूपाय नमः ॥ ४४ ॥ दर्शनमिति। दिदृक्षूणां दर्शनेच्छूनां नोऽस्माकं भागवतैरर्चितम् आदृतं दर्शनं देहि। तदेव विवृणोति। स्वानां भक्तानां प्रियतमं रूपं वर्णयति। सर्वेषामिन्द्रियाणां ये गुणा विषयास्तेषामञ्जनं व्यञ्जकं सर्वेन्द्रियविषयिरूपमित्यर्थः। सर्वेन्द्रियाणि स्वगुणैरनक्ति रञ्जयतीति वा ॥४५॥ स्निग्धेति। स्निग्धः प्रावृषि यो घन मिव श्यामं सर्वेषां सौन्दर्याणां संग्रहो यस्मिन् चारव आयताश्चत्वारो बाहवो यस्मिन् सुजातं यथोचितं सर्वावयवरुचिरमाननं यस्मिन् ॥ ४६ ॥ पद्मेति। पद्मस्य कोषे मध्ये यानि पलाशानि पत्राणि तद्वद्रक्तरेखायुक्ते अक्षिणी यस्मिंस्तत् सुन्दर्यौ भ्रुवौ यस्मिंस्तत् शोभना नासिका यस्मिंस्तत् शोभना द्विजा दन्ता यस्मिंस्तत् सुकपोलमास्यं यस्मिंस्तत् समावन्यूनाधिकौ कर्णौ विभूषणं यस्य तत् प्रीत्या प्रहसिताविवापाङ्गौ यत्रेति वा। अलकैः केशैः कुञ्चितैर्भ्रमराकारैरुपशोभितं लसन्तः शोभमाना ये पङ्कजस्य किञ्जल्काः केशरास्तत्सदृशे पीते दुकूले वस्त्रे यस्मिंस्तत् मृष्टे उज्ज्वले कुण्डले यस्मिंस्तत् ॥ ४८ ॥ स्फुरदिति। स्फुरन्त्यः दीप्यमानाः किरीटवलयादयो यस्मिंस्तत् शङ्खचक्रगदापद्मानि माला वनमाला मणयश्चाभरणस्थाः एतैरुत्तमा ऋद्धिः शोभा तद्युक्तम् ॥ ४९ ॥ सिंहेति। सिंहस्कन्धसदृशौ स्थूलावप्रकटास्थिकौ यौ स्कन्धौ तयोस्त्विषः कुण्डलहारादिदीप्तीर्बिभ्रत् सौभगयुक्ता ग्रीवा येन सः कौस्तुभो यस्मिंस्तत् अनपायिन्या श्रिया लक्ष्मीरेखया हेतुभूतया क्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णरेखाङ्कितो निकषणपाषाणो येन तादृशेनोरसा उल्लसत् शोभमानम् ॥ ५० ॥

पूरेति। पूररेचकाभ्यां श्वासोच्छ्वासाभ्यां संविग्नाश्चञ्चला वलयो रेखास्ताभिर्वल्गु मनोहरं दलवत् अश्वत्थपत्रसदृशमुदरं यस्मिंस्तत् आवर्त्तयुक्तया गम्भीरया नाभ्या द्वारभूतया बहिर्निर्गतं विश्वं तयैव पुनः प्रतिसंक्रामयत् प्रवेशयदिव स्थितम्। "मितां ह्रस्वः" इत्यत्र "वा चित्तविरागे" इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषया मित्त्वाभावः ॥ ५१ ॥ श्यामेति। श्यामश्रोण्या श्यामनितम्बेनाधिकं रोचिष्णु यद्दुकूलं पीताम्बरं तस्मिन् स्वर्णमयी मेखला यस्मिंस्तत् समा अन्यूनाधिकाश्चारवः अङ्घ्रिर्जंघा यस्मिंस्तत् निम्ने जानुनी यस्तिस्तत् शोभनं दर्शनं यस्य तत् ॥ ५२ ॥ पदेति। हे गुरो! तमोजुषामज्ञानां मार्गस्य गुरुः प्रदर्शकस्त्वं शरदि यत्पद्मं तस्य यत्पलाशं तद्वद्रोचिः शोभा यस्य तेन नखद्युभिर्नखदीप्तिभिर्नोस्माकम् अन्तरघम् अन्तकरणस्थितमावरकमघं तमःस्थानीयं विधुन्वता दूरीकुर्वता पदा स्वचरणेन दीपस्थानीयेन अपास्तं दूरीकृतं साध्वसं संसारभयं येन तत् स्वीयं पदं स्वरूपं प्रदर्शय ॥ ५३ ॥ अतिदुर्लभं मया प्रार्थितमिति स्तोतैवाह—एतदिति। आत्मनः शुद्धिमभीप्सता भक्तेन एतत्पूर्वोक्तं तव रूपमनुध्येयमेव न तु प्रयत्नतः प्राप्यम्। यस्मात् यस्य तव भक्तियोग एव स्वधर्ममनुतिष्ठताम् भक्तानाम् अभयदो मोक्षदः ॥ ५४ ॥ भवानिति। स्वः स्वर्गादिर्वापि राज्यं राजत्वं यस्य स स्वाराज्यो ब्रह्मा तस्याप्यभिमतः सेव्यतया प्राप्यत्वेन संमतः एकान्तेन स्वर्गादितोऽपि विरक्तत्वेन यः केवलमात्मवित्तस्यापि गतिर्गम्यः भवान् सर्वदेहिनां दुर्लभोऽपि भक्तिमतामेव लभ्यो लब्धुं योग्यो भवति ॥ ५५ ॥ तमिति। दुराराध्यं दुःखेन आराधयितुं योग्यं तं भगवन्तं सतामपि दुरापया दुर्लभया एकान्तया निरन्तरया भक्त्या आराध्य प्रसाद्य तत्पादमूलं विना ततोऽन्यद्बहिर्विषयसुखं कः पण्डितो वाञ्छेत् ॥ ५६ ॥ यत्रेति। वीर्यं प्रभावः शौर्यमुत्साहस्ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवैव सर्वं विश्वं ब्रह्मादिस्थावरान्तं विध्वंसयन्नपि कृतान्तः कालो यत्र भगवत्पादमूले अरणं निर्विष्टं शरणं प्रविष्टं जनं नाभिमन्यते। अयं मम वश्य इत्यभिमानं न करोति ॥ ५७ ॥ क्षणेति। भगवतो ये सङ्गिनो भक्तास्तेषां सङ्गस्य क्षणार्द्धेनापि स्वर्गमपुनर्भवं कैवल्यं मोक्षं च न तुलये तुल्यं न गणयामि। तर्हि मर्त्यानां मनुष्याणामाशिषो राज्याद्यास्तत्तुल्या न गणयामीति किमुत वक्तव्यम् ॥ ५८ ॥

अथेति। अथ तस्मात् अनघौ पापनिवर्त्तकावङ्घ्री यस्य तव कीर्तिर्यशः तीर्थं गङ्गा तयोर्यथाक्रमेणान्तर्बहिःस्नानाभ्यां तव कीर्त्तौ मनःस्नानं गङ्गायां शरीरस्नानं ताभ्यां विधूतो निरस्तः पाप्मा येषां तेषाम् अतः भूतेषु सर्वप्राणिषु अनुक्रोशः कृपा सुसत्त्वं कामक्रोधादिरहितं चित्तं शीलं चार्जवादि विद्यते येषां तेषां सङ्गमो नोऽस्माकं स्यादेष एव तवानुग्रहः ॥ ५९ ॥ न यस्येति। यद्यदा तव भक्तियोगेनानुगृहीतम् अतो विशुद्धं सत् यस्य चित्तं बहिरर्थषु बाह्यविषयेषु विभ्रम आसक्तिर्यस्य तादृशं न भवति तथा तमोरूपायां गुहायां च आविशत् लयं प्राप्तं न भवति। क्रमेण विक्षेपलयाभावदर्शनार्थं विशेषणे ननु निश्चितं तत्र तदैवाञ्जसा अनायासेनैव स मुनिर्मननशीलः सन् ते तव गतिं तत्त्वं विचष्टे पश्यति नान्यथा ॥ ६० ॥ तत्त्वमेवाह यत्रेति। यत्रेदं विश्वं व्यज्यते प्रकाशते तन्तुषु पट इव विश्वस्मिंश्च यत् सच्चिदानन्दरूपेणावभाति कारणतया पटे तन्तुवत् तत् परं ज्योतिः आकाशमिव विस्तृतं ब्रह्म त्वमसि ॥६१॥ य इति। हे भगवन्! अविक्रियः यो भवान् पुरुरूपया बहुरूपया बहुरूपकरणसमर्थया आत्मनि त्वयि दुस्थया स्थाणु-

मशक्तया स्वकार्यं मोहादि कर्तुमशक्तया मायया सदिव प्रतीयमानं न तु सत् इदं विश्वमसृजत्। भूयः पुनः विभर्त्ति पालयति क्षपयति च। यत् यतो मायात एव अन्येषां भेदबुद्धिर्भवति तम् आत्मतन्त्रं स्वतन्त्रं त्वां वयं प्रतीमहि जानीमः। तद्भावः। यद्वा सदिवेति भेदबुद्धेर्विशेषणम्। सामान्ये नपुंसकम्॥ ६२॥ क्रियेति। यद्यपि त्वमेव निर्भेदं ब्रह्म तथापि ये श्रद्धान्विताः कर्मयोगिनः क्रियाकलापैः पूजाप्रकारैः अष्टाङ्गयोगैर्वा भूतेन्द्रियान्तःकरणैरस्वतन्त्रैर्नियम्यैरुपलक्षितं नियन्तृरूपमिदमेव साधु सम्यक् साकारं तत्त्वं सिद्धये यजन्ति पूजयन्ति। त एव वेदे च तन्त्रे च कोविदाः कुशलाः न त्वेतदनादृत्य केवलं ज्ञाने प्रवृत्ताः॥ ६३॥ त्वमिति। आद्यस्त्वमेक एव पुरुषः यतो बहुभवनहेतुभूता सुप्ता मायाख्या शक्तिर्यस्य सः पश्चादुत्थितया तया मूलशक्त्या रजःसत्त्वतमोरूपं शक्तित्रयं विभिते पृथग्भवति। यतो रजआदेर्महान् महत्तत्त्वमहमहङ्कारः खम् आकाशः मरुत् पवनः अग्निः वाः जलं धरा पृथ्वी सुरा देवानां देहा ऋषयः ऋषीणां देहाः भूतगणाः अन्येषां सर्वप्राणिनां देहाश्च भवन्ति। एवमिदं सर्वं जगत्त्वं सृजसीत्यर्थः॥ ६४॥ सृष्टमिति। एवं स्वशक्त्या माययेदं जरायुजाण्डजस्वेदजोद्भिज्जभेदेन चतुर्विधं सृष्टं पुरं शरीरमात्मांशकेन जीवात्मना प्रविष्टः अथो तस्मात् पुरि शयनाद्धेतोः पुरस्यान्तः सन्ततं चिदाभासं पुरुषं विदुः। यः सरघाभिर्मधुमक्षिकाभिः सृष्टं सारघं मधु तदिव तुच्छं विषयसुखं हृषीकैरिन्द्रियैरविद्यया वृतः सन् भुङ्क्ते॥ ६५॥

स इति। खलु निश्चितं यो विश्वं सृष्ट्वा तदन्तःप्रविष्टः स एष अनुमेयमेव तत्त्वं यस्य न तु प्रत्यक्ष इति अतिचण्डवेगस्त्वम् अविसह्यः वायुर्घनावलीर्मेघपङ्क्तीः इव लोकान् कालयानः इतस्ततश्चालयमानः नाशयन्। मुगभाव आर्षः। भूतैरेव भूतानि तत्रत्यानि स्थावरजङ्गमात्मकानि विकर्षसि उपसंहरसि॥ ६६॥ प्रमत्तमिति। इतिकृत्यम् एवमेवेदं कर्तव्यमिति चिन्तयोच्चैरतिशयेन प्रमत्तमसावधानं प्रवृद्धो लोभो यस्य तं विषयेषु लालसम् अतिप्रसक्तं जनम् अप्रमत्तः सावधानस्तत्तत्प्राणिकर्मानुसन्दधानः अन्तकः कालरूपस्त्वम् आखुं मूषकं क्षुधा लेलिहानो द्विशिखजिह्वयौष्ठप्रान्तौ स्पृशन्नहिः सर्प इव सहसा अकस्मादेवाभिपद्यसे आक्रामसि॥ ६७॥ क इति यस्ते तव योऽवमानः अनादरस्तेन व्ययमानं भयात्कम्पमानं नाशं प्राप्तमिव वा केतनं शरीरं यस्य स पण्डितः कस्त्वत्पदाब्जं विजह्याति त्यजति। न कोऽपीत्यर्थः। अत एव कालाद्विनाशशङ्कयाऽस्माकं सर्वेषां रुद्रादीनां गुरुः पितामहत्वेन पूज्यो ब्रह्माऽपि यच्चरणारविन्दमर्चति स्म तथोपपत्तिं युक्त्या दृढनिश्चयं विनाऽपि पितामहवचनाचारविश्वासेनैव चतुर्दश मनवोऽपि यदर्चन्ति स्म॥ ६८॥ अथेति। हे ब्रह्मन्! हे परमात्मन्! विश्वं रुद्रादिभयेन ध्वस्तं ग्रस्तप्रायम् इति विपश्चितां जानतां

त्वमेव अकुतश्चिद्भया न कुतश्चिद्भयं यत्र तादृशी गतिरसि॥ ६९॥ इदमिति। हे नृपनन्दनाः! यूयं विशुद्धा रागादिरहिताः स्वधर्ममनुतिष्ठन्तः भगवति अर्पित आशयो मनो यैस्तादृशाः सन्तः इदं मयोपदिष्टं स्तोत्रं जपत तेन वो भद्रं भविष्यति॥ ७०॥ तमेवेति। तमेव पूर्वोक्तमात्मानमन्तर्यामिणमात्मस्थं स्वस्मिन् स्थितं तथा सर्वभूतेषु स्थावरजङ्गमात्मकेषु चावस्थितं हरिमसकृत् निरन्तरं ध्यायन्तः तमेव च गृणन्तः स्तुवन्तः पूजयध्वम्॥ ७१॥ योगादेशमिति। योगादेशं नामेदं स्तोत्रमुपासाद्य पठतो मत्तः प्राप्य मनसा धारयन्तो मुनिव्रताः मुनीनां व्रतान्याहारनियमादीनि येषां ते तथा समाहितधियः आदृताः सादराश्च सन्तो भवन्तः सर्वं एतदभ्यसत अभ्यासेन जपत॥ ७२॥ इदमिति। सिसृक्षुः प्रजासर्गमिच्छुः भगवान् विश्वसृजां पतिः ब्रह्मा इदं स्तोत्रं पुरा सृष्ट्यादौ संसिसृक्षतां प्रजासर्गमिच्छतां भृग्वादीनामात्मजानां पुत्राणां नोऽस्माकमाह स्म॥ ७३॥ त इति। ते सर्वे प्रजेश्वराः वयं ब्रह्मणा प्रजासर्गे नोदिताः अनेन स्तोत्राभ्यासेन ध्वस्ततमसो निरस्तसर्वदोषप्रतिबन्धाः सन्तो विविधा नानाप्रकाराः प्रजाः सिसृक्ष्मः सृष्टवन्तः आर्षः॥ ७४॥ अथेति अथ तस्मादिदानीमपि यः पुमान् युक्तः प्रयत्नवान् अवहितः सावधानो विषयानासक्तो वासुदेव एव परं केवलमयनमाश्रयो यस्य तथाभूतः सन् नित्यदा निरन्तरमिदं स्तोत्रं जपन् भवति। सोऽचिरादल्पेनैव कालेन श्रेयः कल्याणं प्राप्नोति॥ ७५॥

श्रेयसामिति। इह लोके सर्वेषां श्रेयसां मध्ये ज्ञानमेव परमुत्कृष्टं निःश्रेयसं फलम्। यतः ज्ञानमेव नौस्तरणसाधनं यस्य सः जनः दुष्पारं दुस्तरं व्यसनार्णवं दुःखसागरं संसारं सुखमनायासेन तरति॥ ७६॥ य इति। यः पुमान् श्रद्धया युक्तो मद्गीतमिमं भगवतः स्तवमधीयानो भवत्यसौ प्रकारान्तरेण दुराराध्यमपि हरिं सुखेनैवाराधयति प्रसादयति॥ ७७॥ विन्दत इति। मया योऽयं भवद्भयो गीत उपदिष्टः स्तवस्तेन गीतात् स्तुतात् अत एव सुप्रीतात् श्रेयसां धर्मादीनामेकश्चासौ वल्लभ आश्रयस्तस्मात् अमुष्मात् हरेः सकाशात् असत्वरन् असत्वर इवाचरन् स्थिर इत्यर्थः। आचारकिवन्तम्। असौ स्तोता पुरुषो यद्यत्फलमिच्छति तत्तद्विन्दते प्राप्नोति॥ ७८॥ य इदमिति। यो मर्त्यो मनुष्यः कल्पे उपसि उत्थाय श्रद्धयान्वितः प्राञ्जलिः संयोजिताञ्जलिः सन् इदं स्तोत्रं शृणुयाच्छ्रावयेद्वा सोऽपि कर्मलक्षणैर्बन्धनैः संसारहेतुभिर्विमुच्यते॥ ७९॥ गीतमिति। हे नरदेवनन्दनाः! यदिदं मया परमात्मनः परस्य पुंसो हरेः स्तवं गीतं भवद्भयः उपदिष्टं तत् एकाग्रधियः सन्तो यूयं जपन्तो महत्तपश्चरध्वम्। तद्भावः। अन्ते तपःपरिपाकदशायां ततो भगवत ईप्सितं मनोवाञ्छितं फलमाप्स्यथ॥ ८०॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्विंशोऽध्यायः॥ २४॥

—:❀:—

# अथ पञ्चविंशोऽध्यायः

### मैत्रेय उवाच

इति संदिश्य भगवान्बार्हिषदैरभिपूजितः । पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः ॥ १ ॥

पञ्चविंशे तु देवर्षिः पुरञ्जनकथामिषात् । बुद्धियोगात्तृतिं प्राह तत्र श्लोका भुजद्विषः ( ६२ ) ॥

उवाचपञ्चकं सार्द्धश्चतुःषष्टिरनुष्टुभः ( ६४॥ ) ॥ २५ ॥

इतीति । इति प्रचेतोभ्यो भगवत्स्तोत्रे सन्दिश्य सम्यगुपदिश्य तैर्बार्हिषदैर्बर्हिषदः पुत्रैः अभिपूजितः भगवान् हरस्तेषां राजपुत्राणां प्रचेतसां पश्यतामेवान्तर्दधे ॥ १ ॥ रुद्रेति । रुद्रेण गीतमुपदिष्टं भगवतः स्तोत्रं जपन्तस्ते सर्वे प्रचेतसो जले स्थिताः वर्षाणामयुतं दशसहस्रवर्षपर्यन्तं तपस्तेपुः कृतवन्तः ॥ २ ॥ प्रचेतःसु तपस्यत्सु नारदः प्राचीनबर्हिषं बोधितवान् अतः प्रचेतः-कथामसमाप्यैव तत्पितुर्वृत्तमाह—प्राचीनेति । हे क्षत्तः । प्राचीनबर्हिषं कर्मस्वासक्तमानसमपि अध्यात्मतत्त्वज्ञः कृपालुर्नारदः प्रत्यबोधयत् उपदिदेश ॥ ३ ॥ श्रेय इति । हे राजन् ! कर्मणा काम्यकर्मानुष्ठानेन त्वमात्मने स्वार्थं कतमच्छ्रेय ईहसे किं फलमिच्छसि । दुःखस्य हानिः सुखस्य अवाप्तिश्चेति द्विविधं श्रेयः लोके प्रसिद्धम् । तच्च इह कर्ममार्गं विचारकैः उभयमपि नेष्यते नाङ्गीक्रियते । कर्मफलस्य नश्वरत्वान्नात्यन्तिकी दुःखहानिः सुखावाप्तिश्चेति ॥ ४ ॥ नेति । हे महाभाग ! कर्मभिरपविद्धा विक्षिप्ता धीर्यस्य सोऽहं परं श्रेयो मोक्षाख्यं न जानामि । अतो येनाहं कर्मभिः कर्मजनितपुण्यपापादिभिर्मुच्येय तद्विमलं मोक्षसाधनं ज्ञानं मे ब्रूहीति ॥ ५ ॥ गृहेष्विति । गृहेषु स्थितः पुत्रदारधनेष्वर्थधीः परमार्थ इति धीर्यस्य स मूढो जनः संसारवर्त्मसु जन्ममरणादि-संसारहेतुभूतेषु कूटधर्मेषु काम्यकर्माद्यनुष्ठानेषु तत्तत्फललोभेन भ्राम्यन् परं मोक्षं न विन्दते ॥ ६ ॥ कर्मफलेषु वैराग्यमुत्पादयितुं योगबलेन यज्ञहतान् पशून् प्रदर्शयन्नाह—भो इति । भो भोः प्रजापते ! भो राजन् ! निर्घृणेन निर्दयेन त्वयाऽध्वरे यज्ञे ये संज्ञापिता मारितास्तान् पशून् गवाश्वादीन् अन्यांश्च जीवसंघान् पक्ष्यादिप्राणिसमूहान्सहस्रशः असङ्ख्यातांस्त्वं पश्य ॥ ७ ॥ एत इति । एते पश्वादयस्तव वैशसं त्वत्कृतां पीडां स्मरन्तोऽत एवोत्थितमन्यवः प्रज्वलितक्रोधास्त्वां सम्परेतं मृतं कदाऽयं मृतः सन्नस्मद्वशवर्ती स्यादिति सम्प्रतीक्षन्ते । ततश्च अयःकूटैः लोहयन्त्रमयैः शृङ्गैस्त्वां छिन्दन्ति । लट्निर्देशात् अविलम्बेन छेत्स्यन्ति ॥ ८ ॥ अत्रेति । अत्र ज्ञानप्रश्नविषये एतस्मिन्संकटे वा निस्तारकं पुरातनं पुरञ्जनस्य चरितलक्षणमितिहासं कथां ते तुभ्यमहं कथयिष्ये । तममुं मम गदतः सतस्त्वं निबोध सम्यगवधारय ॥ ९ ॥ तत्र जीवस्य विषयासक्त्या संसारः स चेश्वरानुग्रहेण निवर्तत इति वक्तुं विपर्ययगृहीतस्य साक्षादवबोधयितुमशक्ये राजवृत्तान्तमिवाह । यद्वा । वैषयिककथाप्रियं राजानं तादृशकथयैव प्रबोधयन् प्राचीन-बर्हिष एव कथां कथान्तरकल्पनयाऽप्रस्तुतप्रशंसालङ्कारेणाह—आसीदिति । हे राजन् ! बृहच्छ्रवाः महायशाः पुरञ्जनो नाम राजा आसीत् । न विज्ञातं चेष्टितं यस्य स तथाभूतः अविज्ञातनामा तस्य पुरञ्जनस्य सखा आसीत् । यद्यपि पुरञ्जनादीन्स्वयमेवाग्रे व्याख्यास्यति तथापि सुखेन ग्रहणायात्रापि किञ्चिद्व्याख्यायते । तत्र पुरञ्जनो जीवः अविज्ञातनामा ईश्वरः ॥ १० ॥ स इति । स पुरञ्जनः शरणं वासस्थानमन्वेषमाणः सर्वां पृथिवीं बभ्राम । स प्रभुः समर्थोऽपि यदाऽनुरूपं स्वाभिलाषानुरूपं शरणं नाविंदत्तदा विमना इवाभूत् । इव एवार्थे पक्षे स जीवः भोगायतनं देहमन्वेषमाणः पृथिवीं त्रिलोकीं बभ्राम सर्वत्र जन्म प्राप । यदाऽनुरूपं भोगभोग्यं शरीरं नाविन्दत्तदा विमना इवाभूत् ॥ ११ ॥ न साधु इति । कामान् विषयभोगान् कामयमानोऽसौ पुरञ्जनस्तस्य तस्य कामभोगस्योपपत्तये सिद्धये भूतले यावतीः पुरः स्थानानि अपश्यत् । ताः सर्वाः साधु योग्या न मेने । पक्षे असौ जीवो भूतले त्रिलोक्यां यावतीः पुरः शरीराणि प्राप्तोऽपि कामान् कामयमानः ताः सर्वास्तस्य तस्य कामभोगस्योपपत्तये प्राप्त्यै साधु न मेने । गवादिदेहानामैहिकामुष्मिकभोगयोग्यत्वाभावात् । "ताभ्यो गामानयत्ता अब्रुवन्न वैनो यमलम्" इत्यादिश्रुतेः ॥ १२ ॥ स इति । अथ एकदा कदाचिद्धिमवतः हिमाचलस्य दक्षिणेषु सानुषु नवभिः द्वार्भिर्युक्तामत एव लक्षितानि लक्षणानि रम्यपुरचिह्नानि यस्यां तथाभूतां पुरं ददर्श । पक्षे हिमवतो दक्षिणदेशेषु कर्मक्षेत्रेषु भारतवर्षेषु तत्रत्यमनुष्यदेहस्यैव फलसाधनत्वात् नवभिर्द्वार्भिर्युक्तां चक्षुरादिसप्तच्छिद्राणि मुखे द्वे चाधो देश इत्येवं नवद्वारयुक्ताम् लक्षितानि लक्षणानि भोगसाधनानि यस्यां तां पङ्गुत्वादिम्लेच्छा-न्त्यतादिदोषरहितां पुरं ब्राह्मणादिशरीरं ददर्श साधुतया मेने ॥ १४ ॥

पुरीं वर्णयति—प्राकारेति। प्राकारोपवनाट्टालपरिखैः। पुंस्त्वमार्षम्। अक्षतोरणैः गवाक्षैस्तोरणैश्च स्वर्णरौप्यायसैः शृङ्गैः शिखरैः युक्तैः गृहैश्च सर्वतः सङ्कुलां व्याप्ताम्। पक्षे त्वगादयः शरीरावरकाः प्राकाराः बहिर्विषया उपवनानि मुखम् अट्टालः पतनहेतुर्निषिद्धाचारः रक्षाहेतवो गुणा वा परिखा रोमरन्ध्राणि गवाक्षाः नेत्रादीनि द्वाराणि तोरणानि तैः स्वर्णादिशृङ्गैः पित्त-कफवातैर्धातुभिः राजसादिस्वभावैर्वा गृहैराधारचक्रकक्ष्याद्यैः सङ्कुलाम्॥ १४॥ नीलेति। नीलस्फटिकादयः अरुणं माणिक्यं च तैः क्लृप्ता हर्म्यस्थल्यो यस्यां ताम्। क्वभाव आर्षः। श्रिया भोगवतीं नागपुरीमिव दीप्ताम्। पक्षे नीलादिवर्णा नाड्यः तत्तद्विषय-वासनाहर्म्यस्थल्यो हृत्कण्ठभ्रूमध्यस्थानानि भोगवतीमिव वस्तुतस्तत्र भोगा अपि न सन्ति॥ १५॥ सभेति कथार्थः स्पष्टः। सभा समाजस्थानं राजोपवेशस्थानं वा अन्तःकरणं च चत्वरं चतुष्पथं ताल्वधःस्थानं च तत्रैव नासिकामुखनेत्रकर्णानां चतुर्णां मार्गमेलः रथ्या राजमार्गाः इडापिङ्गलासुषुम्णाः आक्रीडायतनानि द्यूतादिस्थानानि इन्द्रियगोलकाः आपणो मनोगोलकः तैः चैत्यं विश्राम-स्थानं चित्तं ध्वजो भगवद्वैमुख्यं तत्राविद्यादयः क्लेशाः पताकाभिः विद्रुमवेदयः आधारादिचक्रगतस्थानानि तैर्युक्ताम्॥ १६॥ विषयनिष्ठबुद्धियोगेन जीवस्य देहयोग इति वक्तुं विषयवर्गं बाह्योपवनत्वेन निरूपयति—पुर्या इति चतुष्कम्। पुर्यास्तु बाह्योपवने यदृच्छया तत्रागतां प्रमदोत्तमां ददर्शेति चतुर्थेनान्वयः। दिव्यैर्मनोहरैः द्रुमैर्लताभिश्चाकुले व्याप्ते नदतां विहङ्गालिकुलानां कोलाहलो येषु ते जलाशया यस्मिंस्तस्मिन् पक्षे स्रक्चन्दनादीनां द्रुमलताजलाशयादिभावः स्त्रीपुत्रादीनामेव विहङ्गालिकुलत्वं च कोलाहलश्च तेषां विहारादिकं शेषः कथालंकारः॥ १७॥ हिमनिर्झराणां विप्रुषो बिन्दवस्तद्वता कुसुमाकरसम्बन्धिवायुना चलन्तः प्रवाला विटपाः शाखाश्च येषां तैर्विटपैर्वृक्षैर्नलिनीनां सरसीनां तटेषु सम्पत् समृद्धिर्यस्मिंस्तस्मिन्। पक्षे निर्झरैः कुसुमैः वायुचलत्प्रवालैः नलिनोभिश्च क्रमेण रसगन्धस्पर्शरूपसम्पत्तिर्दर्शिता॥ १८॥ मुनिव्रतैरहिंस्रैर्नानारण्यमृगव्रातैरनाबाधे तत्कृतबाधारहिते यत्रोपवने कोकिल-कूजितैः पान्थो मार्गगामी पुरुष आत्मानमाहूतं मन्यते। पक्षे मुनिव्रतैः पराधीनत्वेन भोगरहितैर्नानारण्यमृगव्रातैर्भृत्यादिभिरनाबाधे यत्र कोकिलकूजितैर्दारापत्यादिप्रियवचनैः पान्थः संसारमार्गपथिकोऽन्योऽपि जीव आत्मानमाहूतं मन्यते तद्गृहे भोक्तुमायाति॥१९॥ यदृच्छयेति। एकैकशतनाथकैः प्रत्येकं शतानामनन्तानां नायकैः स्वामिभिर्दशभिर्भृत्यैः सहायान्तीं यदृच्छया तत्रोपवन आगतां प्रमदोत्तमां ददर्श। पक्षे विषयविवेकवती बुद्धिः प्रमदोत्तमा यदृच्छयेति तयोः सम्बन्धस्य दुर्निरूपत्वं दर्शयति। मनोयुक्तानि दशेन्द्रियाणि भृत्याः अनन्तवृत्तयः क्षुद्रभृत्याः॥ २०॥

तां वर्णयति—पञ्चेति। पञ्चशीर्ष्णा अहिना सर्पेण प्रतिहारेण पालकेन सर्वतो गुप्तां रक्षितामृषभं पतिमन्वेषमाणाम् अप्रौढां षोडशवर्षां कामरूपिणीं नानाशृङ्गारधारिणीं च। पक्षे पञ्चशीर्षाणि वृत्तयो यस्य तेनाहिना प्राणेन प्रतिहारेण गुप्तामृषभं जीवं चेतनं भोक्तारमन्वेषमाणाम् अप्रौढां विचाररहितत्वेनाविरक्ताम् अत एव कामरूपिणीं नानाविधकामभोगवासनावतीम्॥ २१॥ सुनासामित्यर्द्धं स्पष्टम्। समं विन्यस्तौ रचितौ कर्णौ ताभ्यां कुण्डलश्रीयं बिभ्रतीं दधतीम्। पक्षे गन्धज्ञानादिभिर्बुद्ध्यवयवैः सुनासत्वादिकं निरूप्यते। रसास्वादचर्वणशक्तयो दन्ताः सुकपोलत्वं बुद्धेः स्वच्छता आननमग्रभागः कुण्डलश्रीश्च प्रवृत्ति-निवृत्तिशास्त्रार्थः॥ २२॥ पिशङ्गनीवीम् पीताम्बरां ह्रस्वान्तो नीविशब्दः दीर्घान्तो वा। कवभाव आर्षः। एवं सुश्रोणिशब्देऽपि। सुश्रोणीं शोभननितम्बवतीम् श्यामां किशोरावस्थापन्नां कनकस्य मेखला कटिभूषणं यस्यास्तां नूपुरैः तद्वत्क्षुद्रघण्टिकाभिप्रायं पादाङ्गुलीयकोपलक्षणं वा बहुत्वम्। क्वणद्भ्यां पद्भ्यां चलतीम्। तुमभाव आर्षः। देवतामिव शोभमानां पक्षे पिशङ्गनीवीं रजोगुणप्रत्युक्तकर्मानुष्ठानवासनावृतम्। श्यामामिति "अन्नमयं हि सोम्यं मनः इति" यत्कृष्णं तदन्नस्य इत्यादिश्रुत्यनुसारेण बुद्धेरन्नमयत्वात् जीवान् प्रति सूर्यस्थानीयेश्वराच्छादकमेघस्थानीयत्वाद्वा श्यामत्वमुक्तम्। तत्र सत्त्वांशस्यापि विद्यमानत्वात्कनक-मेखलात्वम्। श्रोण्यादिभावेन बुद्ध्यवयवविशेषा ज्ञेयाः। बुद्धेश्चञ्चलत्वं प्रसिद्धमेवेति चलतीमित्युक्तम्॥ २३॥ व्यञ्जितं कैशोरं यौवनोपक्रमो याभ्यां तौ समौ तुल्यौ न्यूनाधिक्यवर्जितौ वृत्तौ वर्तुलौ निरन्तरौ मध्यव्यवधानरहितौ एवंभूतौ स्तनौ व्रीडया लज्जया वस्त्रान्तेन निगूहन्तीमाच्छादयन्तीं गजगामिनीं पक्षे स्तनौ रागद्वेषौ तौ च वृद्धस्यापि नित्यतरुणाविति व्यञ्जितकैशोरौ समं तुल्यं मोहकं वृत्तं चरितं ययोः निरन्तरौ "काम एष क्रोध एषः" इत्युक्तेरभिन्नावेव तयोर्निगूहनं च ह्रीविनयाभ्यां लोकैः क्रियते शेषं कथालङ्कारः॥ २४॥ तामिति। प्रेम्णा उच्चैर्भ्रमन्ती भ्रूर्धनुःस्थानीया यस्मिंस्तेन स्निग्धेन स्नेहयुक्तेन तस्या अपाङ्ग एव पुङ्खो मूलप्रान्तो यस्य कटाक्षलक्षणस्य बाणस्य तेन विद्धो वीरः पुरञ्जनः सव्रीडेन स्मितेन शोभनां तां प्रमदां ललितं मनोहरं यथा भवति तथा आह स्म पप्रच्छ। पक्षे वीरः भोगेषूत्साहवान् तयोः संवादोक्तिः परस्पराध्यासदार्ढ्याय। अपाङ्गस्पर्शेन बुद्धेर्भौतिकत्वमुक्तम्। मनुष्यशरीरे बुद्ध्यादयस्ततो विलक्षणा इत्यभिप्रायेण नूतनया सम्बन्धप्रदर्शनम्॥ २५॥ का त्वमिति। हे कञ्जपलाशाक्षि! हे सति! हे भीरु! त्वं का कस्य कन्या पत्नी वा त्वमसि। इह स्थाने कुतः स्थानादागताऽसि पुर्याः समीपस्था उपपुरी भूस्तामिमामाक्लय्य किं चिकीर्षसि कर्तुमिच्छसि एतत्सर्वं मे मह्यं पृच्छते शंस कथय पक्षे कथालङ्कार-मात्रम्॥ २६॥ क इति। हे सुभ्रु! ह्रस्वत्वमपाणिनीयमपि बहुप्रयुक्तम्। एकादशो महाभटो बृहद्बलत्वेन वक्ष्यमाणः येषु दशसु

ते तथाभूता ये ते तवानुपथाः अनुवर्तिनस्त एते के एता ललनाः स्त्रियो वा का ते तव पुरःसरः अग्रचरः अहिरयं कः। पक्षे महाभटो मनः अनुपथाः इन्द्रियाणि ललना इन्द्रियवृत्तयः अहिः पञ्चवृत्तिकः प्राणः मनसः पृथगुपादानं बुद्धिपरिचारकेन्द्रिय-सहायतया तत्परिचारकत्वविवक्षया ॥ २७ ॥

त्वमिति। त्वं रहः एकान्ते वने मुनिवत्संयता सती त्वदङ्घ्रिकामेनैव त्वच्चरणभजनादेव प्राप्ताः समस्ताः कामा येन तं स्वपतिं धर्मं विचिन्वती किं ह्रीरसि अथवा स्वपतिं शिवं विचिन्वती भवान्यसि किंवा स्वपतिं ब्राह्मणं विचिन्वती वाक् सरस्वत्यसि अथवा स्वपतिं विष्णुं विचिन्वती रमा लक्ष्मीरसि यदि रमाऽसि तर्हि तव कराग्रात् पद्मकोशो लीलाकमलमसाधारणं चिह्नं क्व पतितः। पक्षे बुद्ध्यादिविशिष्टलिङ्गदेहाध्यास एव तात्पर्यम्। लीलाकमलं च जीवस्य विवेक एव स च तया तदलक्षित एव दूरतः क्षिप्तः इति संवादस्तु कथालङ्कारमात्रम्। एवमग्रेऽपि ॥ २८ ॥ नाऽऽसामिति। हे वरोरु! यतस्त्वं भुविस्पृक् अतः आसां ह्र्यादीनां मध्येऽन्यतमाऽपि त्वं न भवसि न हि देवता भुवं स्पृशन्ति। अतो यज्ञपुंसा विष्णुना सह श्रीः लक्ष्मीर्यथा परं लोकं वैकुण्ठमलङ्करोति तथा वीरवरेण अदभ्रकर्मणा इहामुष्मिकभोगसाधनदक्षेण मया सहेमां पुरीं त्वमलङ्कर्तुं शोभयितुमर्हसि। पक्षे स्वतोऽकर्मकोऽपि जीवो बुद्धिसङ्गात् सकर्मको भवति ॥ २९ ॥ यदिति। हे शोभने! यत् यस्मात् तवापाङ्गेनापाङ्गवीक्षितेन कटाक्षेण विखण्डितं मोहितमिन्द्रियं मनो यस्य तं मा मां सव्रीडं यद्भावेन प्रेम्णास्मितं तेन विभ्रमन्ती या भ्रूस्तया करणभूतया त्वया कर्तृभूतयोपसृष्टः प्रेरितः एष भगवान् मनोभवः कामः प्रबाधते प्रपीडयति। अथ तस्मात्त्वमनुगृहाण मय्यनुग्रहं कृत्वा तद्बाधानिवृत्तये मया सह पुरीं प्रविश्य रमस्व। पक्षे विखण्डितज्ञाननेत्रं मनोभवः विषयवासना अनुगृहाण शब्दस्पर्शादीन् भोजय। तेन राजसबुद्धिसन्निधाने पुरुषः क्षणमपि स्वस्थः स्थातुं न शक्नोतीति दर्शितम् ॥ ३० ॥ तदिति। हे शुचिस्मिते! शोभने भ्रुवौ यस्मिंस्तत् सुतारे शोभनकनीनिके लोचने यस्मिंस्तत् व्यालम्बिनो दीर्घा ये नीलाः अलकास्तेषां वृन्देन संवृतं वल्गूनि वाचकानि वाक्यानि यस्मिंस्तत् यद्व्रीडया लज्जया अभिमुखं न भवति तत्स्वाननमुन्नीय मे प्रदर्शय। पक्षे एकान्तस्थितयोः स्त्रीपुरुषयोर्विकारस्यावश्यंभावित्वाच्छ्रेयोऽर्थिभिरेवमेकान्ते न स्थेयमिति दर्शितम् ॥ ३१ ॥ इत्थमिति। हे वीर! इत्थमधीरवद्याचमानं प्रार्थयमानं तं वीरं पुरञ्जनं तेन मोहिता सा नारी हसन्ती सती अभ्यनन्दत अभिनन्दनपूर्वकमुत्तरं ददौ। तद्भावः ॥ ३२ ॥ नेति। हे पुरुषर्षभ! आत्मनो मम परस्यान्यस्य सह-चरादेरपि च कर्त्तारं सम्यग्वयं न विदाम न विद्मः आर्षः। तथा गोत्रं नाम चोभयोर्यत्कृतं येन कृतं भवति तमपि न विद्मः। बहु-वचनेन ममानुवर्तिनोऽपि न जानन्ति सम्यगिति आपाततः किञ्चिज्ज्ञानं तु न कार्यकरम्। पक्षे बुद्धेरविद्यापरिणामरूपत्वेन सम्य-ग्ज्ञानाभावः ॥ ३३ ॥ इहेति। इह पुर्यां सन्तमात्मानमेव केवलं विदाम विद्मः आर्षः ततः परं येनात्मनो मम शरणं स्थानमियं पुरी निर्मिता तं तु न विद्मः। पक्षे अहमस्मीति ज्ञानं शरीरे निरन्तरं निष्प्रत्यूहरमणाभिमानं च प्रसिद्धमेव ॥ ३४ ॥ एत इति। हे मानद! एते नराः मे सखायः एता नार्यश्च मे सख्यः मम भोगसम्पादने निरतत्वात्। अयं च नागो मयि सुप्तायां ममेमां पुरीं पालयन् जागर्ति। पक्षे सखायः इन्द्रियाणि सख्यस्तद्वृत्तयः सुषुप्तौ बुद्धौ लीनायामपि पञ्चवृत्तिकस्य प्राणस्य जाग्रदवस्था-वच्छरीरपालकत्वमपि सुप्रसिद्धम् ॥ ३५ ॥

दिष्ट्येति। हे अरिन्दम! दिष्ट्या मम भाग्येनैव भवानत्रागतोऽस्ति। त्वमपि ग्राम्यान् कामान् विषयभोगानभीप्ससे इच्छसि। तद्भावः। तान्भोगान् ते तुभ्यमहं स्वबन्धुभिः सखिभिः सखीभिश्च सहोढ्हिष्यामि प्रापयिष्यामि। इङ्गार्षः। एवं ते तवापि भद्रं भविष्यति। पक्षे राजसबुद्धिसन्निधाने जीवस्य विषयभोगाभिलाषित्वं बुद्धीन्द्रियादेर्भोगसम्पादकत्वं प्रसिद्धमेव ॥ ३६ ॥ इमामिति। हे विभो! मयोपनीतान् प्रापितान् कामभोगान् विषयान् गृह्णानः उपभुञ्जानः संस्त्वं शतं समाः संवत्सरशतपर्यन्तं कालम् एतत्र मनुष्यशरीरप्रवेशादुक्तम्। इमां नवमुखीं पुरीमधितिष्ठस्व ॥ ३७ ॥ कमिति। अरतिज्ञं नैष्ठिकम् अकोविदम् अनिषिद्धसुखत्यागिनम् सम्परायो मृत्युस्तदनभिमुखं परलोकचिन्ताशून्यम् अश्वस्तनविदं श्वः किं भविष्यतीति चिन्ताशून्यम् अदीर्घदर्शिनमित्यर्थः। अत एव पशुतुल्यं त्वत् त्वत्तोऽन्यं कं नु रमये। पक्षे प्रवृत्तिस्वभावत्वान्निवृत्तिनिन्दा ॥ ३८ ॥ धर्म इति। अत्र गार्हस्थ्ये अर्थकामौ प्रजाऽऽनन्दः पुत्रसुखम् अमृतं मोक्षः यशश्च विशोकाः विरजाः शुद्धा लोकाः स्वर्गादयश्चेति सर्वे सिद्ध्यन्ति यान् धर्मादीन् केवलिनो नैष्ठिकादयो न विदुः ॥ ३९ ॥ पितृिति। गृहाश्रम इति यत् तदेवास्मिन् भवे संसारे पितृदेवर्षिमर्त्यानां भूतानां प्राणि-नामात्मनश्चेति सर्वेषामपि क्षेमं निर्वाहकं शरणमाश्रयं शास्त्रज्ञा वदन्ति ॥ ४० ॥ का नामेति। हे वीर! लोके विख्यातं प्रसिद्धं वदान्यमुदारचित्तं प्रियदर्शनमतिसुन्दरं पूर्वोक्तरतिज्ञत्वादिविशिष्टं च त्वादृशं गुणालयं पतिं स्वयं प्राप्तं मां वृणीष्वेति प्रार्थयमानं मादृशी गुणज्ञा या न वृणीत सा का नाम प्रसिद्धा लोके न काऽपीत्यर्थः। पक्षे कामिनी कामिनमेव बहु मन्यते न विरक्तमिति दर्शितम् ॥ ४१ ॥ कस्या इति। हे महाभुज महापराक्रम! युक्तभोगी सर्पस्तस्य भोगो देहस्तत्सदृशयोस्ते तव भुजयोर्भुवि पृथिव्या कस्याः स्त्रिया मनो न सज्जेत् अपि तु सर्वस्या एव। यो भवान् घृणया कृपयोद्धतः प्रवृत्तो यः स्मितपूर्वको ऽवलोकस्तेन अनाथ-

वर्गाणां रक्षकरहितानामस्माकमाधिं मनःपीडामलमत्यर्थं निर्मूलमपोहितुं निवर्त्तयितुं विचरति ।।४२।। इति तावितिं । इत्येवं तौ दम्पती स्त्रीपुरुषौ तत्रोपवने समयं सङ्केतं मिथः परस्परं समुद्य समुदीर्य । वदेः क्त्वोल्यप् । तां नवमुखीं पुरीं प्रविश्य शतं समाः मुमुदाते । पक्षे बुद्ध्यादिलिङ्गशरीरस्य परस्पराध्यासे जातेऽपि स्थूलशरीराध्यासं विना भोगासम्भवात्तद्ध्यासो दर्शितः ।। ४३ ।।

उपगीयमान इति । प्रविशन्नेव तत्र तत्र स्थाने गायकैः सूतमागधादिभिर्ललितं मनोहरं यथा भवति तथोपगीयमानः स्तूयमानः स्त्रीभिश्च परिवृतः क्रीडन् बभूव । ततश्च शुचौ निदाघकाले तापापनोदार्थं ह्रदिनीं सरसीमविशत् । पक्षे उपगीयमान इत्यादि जाग्रदवस्था शुचिः सुषुप्तिः ह्रदिनी हृदयाकाशं स्वापस्थानम् ।। ४४ ।। जाग्रदवस्थां प्रपञ्चयति सप्तेति । तस्यां पुरि यः कश्चन ईश्वरः स्वामी कश्चनेति आत्मनः सम्यगविज्ञानात् तस्य पृथग्विषये देशे गत्यर्थं तस्याः पुरः उपरि सप्त द्वारः कृताः । द्वे तु तस्या अधः कृते पक्षे जीवस्य पृथग्विषयभोगार्थं नेत्रे नासिके श्रोत्रे मुखं चेत्युपरि लिङ्गगुदे अधः ।। ४५ ।। पञ्चेति । हे नृप ! तासु सप्तसु पञ्च द्वारस्तु पौरस्त्याः पूर्वदिग्भवाः एका दक्षिणा दक्षिणस्यां दिशि वर्त्तमाना तथैकोत्तरा उत्तरदिग्भवाः । ये द्वे अधस्ते तु पश्चिमे पश्चिमदिग्भवे अमूषां द्वारां नामानि ते तुभ्यमहं वर्णये । पक्षे नेत्रे नासिके मुखं चेति पौरस्त्याः दक्षिणैका दक्षिणा वाम उत्तरा तथा द्वे गुदलिङ्गे पश्चिमे पश्चाद्भागे तत्र लिङ्गस्य पुरोभागभवत्वेऽपि गुदसहचरतया कथालङ्कारार्थं पृष्ठभवत्वनिर्देशः ।। ४६ ।। खद्योतेति । खद्योता आविर्मुखी च द्वे द्वारावेकत्र संलग्ने प्राक् पूर्वस्यां दिशि निर्मिते ताभ्यां द्युमत नाम्नो देशाभिज्ञस्य सखा स पुरञ्जनो विभ्राजितं नाम जनपदं देशविशेष याति । पक्षे खद्योतवदल्पप्रकाशत्वात्खद्योता वामनेत्रम् । आविर्मुखी प्रकाशबहुलत्वाद्दक्षिणनेत्रम् । तत्र प्रकाशाधिक्यं च "दक्षिणोद्धर्षं आत्मनो वीर्यवत्तर" इति श्रुतेः । स्वानुभवाच्च सिद्धं द्युमांश्चक्षुरिन्द्रियं तेन जीवस्ताभ्यां विभ्राजितं रूपं याति पश्यति ।। ४७ ।। नलिनीति । नलिनी नालिनी चेति द्वे द्वारौ प्राक् पूर्वदिशि एकत्र निर्मिते ताभ्यामवधूतसंज्ञेन सख्या सह पुरञ्जनः सौरभं विषयं देशं याति । पक्षे नलनालशब्दौ छिद्रवचनौ तद्वत्यौ नलिनी नालिनी च वामदक्षिणनासिके तयोरपि संज्ञाभेदात्कार्यन्यूनाधिक्यं ज्ञेयम् । अवधूतो घ्राणेन्द्रियं तेन जीवः सौरभं विषयं गन्धं याति ।। ४८ ।। मुख्येति । पुरस्तात्पूर्वत एका मुख्या नाम द्वास्तया पुरराट् पुरञ्जनो राजा रसज्ञविपणान्वितः सन्नापणबहूदनौ विषयौ याति । तत्र यदा रसज्ञेन समन्वितस्तदा तया बहूदनसंज्ञकं देशं याति । यदा तु विपणेन समन्वितो भवति तदा आपणसंज्ञकं देशं तयैव यातीति विभागः । अनाभ्यां द्वाभ्यामेकं याति अनया त्वेकयैव द्वौ देशौ यातीत्यस्याः मुख्यत्वं सूचितम् । पक्षे मुख्या आस्यं तस्यैव संभाषणभोजनद्वारा सर्वशरीरनिर्वाहकत्वान्मुख्यत्वं तेनैव जीवो रसनेन्द्रियेण युक्तो बहूदनं चित्रमन्नं विषयं याति आस्वाद्यं भक्षयति । बह्वोदन इति वक्तव्ये बहूदन इत्युक्तिरार्षतया परोक्षवादरूचाय । एवमन्यत्राप्यूह्यम् । तथा विपणो वागिन्द्रियं तेन युक्तः आपणं भाषणं विषयं याति करोतीत्यर्थः ।। ४९ ।। पितृहूरिति । हे नृप ! पुर्याः दक्षिणेन दक्षिणस्यां दिशि एनप्प्रत्ययान्तमव्ययम् । या पितृहूर्नाम द्वास्तया पुरञ्जनः श्रुतधरसंज्ञकेन देशाभिज्ञेन सहितो दक्षिणपाञ्चालं राष्ट्रं देशं याति । पक्षे पञ्चालं पञ्चानां विषयाणां प्रमाणान्तरेणानवगतानां बोधनायालमिति पृषोदरादिकत्वात् पञ्चालं शास्त्रं श्रवणकाले च बलाधिक्यात्प्रथमं दक्षिणकर्ण एव प्रवर्त्तते । शास्त्रे च प्रथमं श्रोतव्यं कर्मकाण्डमित्येतावता साम्येन प्रवृत्तसंज्ञस्य कर्मकाण्डस्य दक्षिणेन कर्णेन श्रवणमिष्यते । अतः कर्मकाण्डशास्त्रं दक्षिणपाञ्चालशब्दितं ज्ञेयम् । तदुक्तं "कर्मानुष्ठाय पितृभिराहूतः पितृलोकप्रापकं पितृयानं प्रपद्यते" इति । तथा च पितृणामाह्वानमनेनेति पितृहूर्दक्षिणः कर्णः श्रुतधरः श्रोत्रेन्द्रियम् । तथा च श्रोत्रेन्द्रियेण जीवो दक्षिणकर्णेन कर्मकाण्डं शृणोति ।। ५० ।। देवहूरिति । पुर्या उत्तरेण उत्तरस्यां दिशि पूर्ववदेनबन्तमव्ययम् । देवहूर्नाम द्वास्तया पुरञ्जनः श्रुतधरेणैव देशाभिज्ञेनान्वित उत्तरपाञ्चालं राष्ट्रं देशं याति । पक्षे निवृत्तं शास्त्रमुत्तरपाञ्चालसंज्ञकं ज्ञेयम् । देवयानप्रापकत्वाद्देवहूरिति नाम शेषं प्राग्वत् ।। ५१ ।। आसुरीति । आसुरी नाम पश्चात् पश्चिमदिग्भवा द्वास्तया दुर्मदेन देशाभिज्ञेन समन्वितः पुरञ्जनो ग्रामकं नाम विषयं देशं याति । पक्षे असुराणामिन्द्रियारामाणामियमासुरी द्वाः शिश्नं पश्चात् पृष्ठतः उक्ताभिप्रायमेतत् । ग्रामस्थानां गृहस्थानां कं सुखं यस्मात्तद्ग्रामकं व्यवायं दुर्मदो गुह्येन्द्रियं तथा च गुह्येन्द्रियेण युक्तो जीवः शिश्नेन स्त्रीसम्भोगं करोति ।। ५२ ।। निर्ऋतिरिति । निर्ऋतिर्नाम पश्चात् पश्चिमदिग्भवा द्वास्तया लुब्धकेन मार्गाभिज्ञेन समन्वितः पुरञ्जनो वैशसं नाम विषयं देशं याति । पक्षे निर्ऋतिर्गुदः मृत्युद्वारत्वात्तस्य राक्षसनाम्ना निर्देशः । वैशसं मलविसर्गः पीडाहेतुत्वान्नारकं चाग्रे तथा व्याख्यानात् । लुब्धकः पायुरिन्द्रियं तेनाक्रान्तस्य नरकादिदुःखप्राप्तेस्तस्य लुब्धकत्वम् । तथा च पाय्विन्द्रियेण समन्वितो जीवो गुदेन मलत्यागं करोति । मरणसमये कदाचित्तेन मार्गेण निःसृतश्चेत्तदा नरकं यातीत्यर्थः ।। ५३ ।। अन्धाविति । अमीषां पौराणां पुरद्वाराणां मध्ये निर्वाक्पेशस्कृतावुभौ द्वारभूतावन्धौ बहिर्निर्गमच्छिद्ररहितौ ताभ्यामक्षण्वतां द्वारपानामधिपतिः पुरञ्जनो याति करोतीति । पक्षे निर्वाक्पादः पेशस्कृत् हस्तः यतोऽक्षिद्राभावादन्धत्वम् । स्वतो ज्ञानक्रियाशक्त्यभावाच्च अक्षण्वतां छिद्रवतामिन्द्रियाणाम् इन्द्रियवतां देहानां वाऽधिपतिर्जीवः पादेन गच्छति हस्तेन करोति । अक्षण्वतामित्यक्षिशब्दान्मतुपि "छन्दस्यपि दृश्यते" इति अनङ् अनो नुट् नलोपः । त्वगिन्द्रियस्यानुक्तिः सर्वेष्वन्तर्भावात् ।। ५४ ।। स इति । स पुरञ्जनो विषूचीनेन सर्वाभिज्ञेन सर्वनायकेन स्त्रिया अन्तरङ्गेण नपुंसकेन समन्वितो यर्ह्यन्तःपुरं गतस्तदा तत्र जायात्मजोद्भवं जायादिनिमित्तं मोहं प्रसादं हर्षं वा याति स्म । पक्षे

अन्तःपुरं हृदयं विपूचीनं सर्वतोमुखमुभयेन्द्रियनायकं मनः जाया बुद्धिः आत्मजा इन्द्रियपरिणामाः बुद्धिपरिणामाः संशयनिश्चयभ्रमाद्यात्मका वा तदुद्भवं तेभ्य उद्भूतं तत्र तमस उद्रेके मोहं सत्त्वोद्रेके प्रसादं रजस उद्रेके हर्षं मनःसंयुक्तो जीवो बुद्ध्यादिगुणैः प्राप्नोति। विपूचीनेति विपु सर्वतोऽञ्चतीति विष्वक्शब्दात् "विभाषाञ्चेः" इति खः। "अचः चौ" इत्यल्लोपदीर्घौ॥ ५५॥ एवमिति। एवं जायाद्यर्थं कर्मसु संसक्तस्तद्भोगसाधनेष्वत्याग्रहेण प्रवृत्तः कामात्मा अबुधः वञ्चितः मोहितः पुरञ्जनो महिषी यद्यदीहेत करोति स्म तत्तदेव स्वयमप्यन्ववर्त्तत अनुकरोति स्म। पक्षे आत्माज्ञानाद्बुद्ध्याद्यध्यासाधीनमेव जीवस्य विषयभोगादिकमिति॥ ५६॥ एतदेव प्रपञ्चयति—क्वचिदिति। क्वचित्तस्यां मदिरां पिबन्त्यां स्वयमपि पुरञ्जनो मदिरां पिबति। ततश्च मदेन मदिरापानजनितेन विह्वलः सर्वानुसन्धानशून्यो भवति। अश्नन्त्याम् ओदनादि भुञ्जानायां तुमार्षः। एवमग्रेऽपि क्वचित्। जक्षत्याम् चणकादि चर्वन्त्यां इत्यादि स्फुटम्॥ ५७–५८॥ आसतीम् आसीनां शता आर्षः॥ ५९–६१॥ विप्रलब्ध इति। एवं महिष्या विप्रलब्धो जडीकृतः अत एव सर्वा प्रकृतिरसङ्गत्वादिलक्षणा वञ्चिता यस्य सर्वप्रकृतिं त्याजितो वा विचारपूर्वप्रवृत्तिस्वभावभ्रष्टो वा अज्ञः सः क्रीडामृगो गृहवानरो यथा क्लैब्यात् कामपारवश्यादनिच्छन्नपि स्त्रियमनुकरोति स्म॥ ६२॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चविंशोऽध्यायः॥ २५॥

—:❀:—

# अथ षड्विंशोऽध्यायः

## नारद उवाच

**स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम्। द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम्॥ १॥**

षड्विंशे मृगयाव्याजात्स्वप्नजागरणोक्तितः। प्रपञ्च संसृतेस्तत्र श्लोकाः सार्द्धाश्च षड्भुजाः (२६॥)
चत्वार्युवाचेति (४) सार्द्धा नन्दनेत्रा (२९॥) अनुष्टुभः॥ २६॥

जाग्रत्सुषुप्ती उक्त्वा स्वप्नावस्थामाह—स इति त्रयम्। एकदा महेष्वासः स्वर्णमयं वर्म कवचं यस्य सः अक्षयः सदा बाणपूर्णः इषुधिर्निषङ्गो यस्य सः एकादशसंख्याश्चमूनाथा यस्य सः पुरञ्जनः पञ्चाश्वा यस्य तत् आशुगं शीघ्रगामिनं द्वे ईषे दण्डिके यस्य तं द्विचक्रम् एकाक्षं त्रयो वेणवो ध्वजा यस्य तं पञ्च बन्धुराणि बन्धनानि यस्य तम् एको रश्मिः प्रग्रहो यस्य एको दमनः सूतो यस्य तं च तं च एकं नीडं रथिन उपवेशस्थानं यस्मिंस्तं द्वौ कूबरौ युगबन्धनस्थाने यस्य तं पञ्चानां वस्तूनां प्रहरणं प्रक्षेपो यस्मिंस्तम्। यद्वा पञ्च प्रहरणानि आयुधानि यस्मिंस्तं सप्त वरूथा रक्षार्थमावरणानि यस्य तं पञ्च विक्रमाः गतिप्रकारा यस्य तं हैमा उपस्करा आभरणानि यस्य तं रथम् आरुह्य पञ्चप्रस्थसंज्ञकं वनमगात्। पक्षे महान् कर्तृत्वाद्यभिनिवेशो धनुर्यस्य स स्वर्णशब्दोपलक्षितरजोगुणो वर्म आवरकं यस्य अनन्ता भोगवासनाबाणास्तद्वानहङ्कारः इषुधिः एकादशः सङ्कल्पविकल्पात्मको मन एव ज्ञानकर्मभेदेन दशेन्द्रियलक्षणा या चमूस्तस्या नाथः वासनामयस्य मनसः प्रग्रहत्वं सङ्कल्पविकल्पात्मकत्वस्य बृहद्बलत्वेन वक्ष्यमाणस्य चमूनाथत्वमिति विभागः। सः पञ्चेन्द्रियाणि पञ्चाश्वाः संवत्सरवेगो गतिः द्वे अहंताममते ईषे द्वे पुण्यपापे चक्रे एकं प्रधानमक्षः त्रयः सत्त्वादयो गुणा ध्वजाः पञ्च प्राणा बन्धनानि एकं सवासनं मनो रश्मिः एका बुद्धिः सूतः एकं हृदयं नीडं द्वौ शोकमोहौ कूबरौ पञ्च शब्दादीनि प्रहरणं यत्र। यद्वा पञ्चेन्द्रियव्यापाराः श्रवणादय आयुधानि सप्त धातवस्त्वमादयो वरूथाः पञ्चकर्मेन्द्रियव्यापाराः गमनादयो विक्रमाः हैमो रजोगुणः उपस्करः स्वप्नदेहो रथः तमारुह्य पञ्च पृथिव्यादयः प्रस्थाः सानवो यत्र तद्वनं स्वप्नदर्शनस्थानं नाडीविशेषमगात्॥ १–२–३॥ चचारेति॥

व्यसनः मृगे मृगयायां मृगमांसादने वा व्यसनं तत्र लालसा अतिस्पृहा यस्य सः आत्ता गृहीता इषवः कार्मुकं च येन स पुरञ्जनः अतदर्हां तस्य त्यागस्यायोग्यां जायां विहायैव तत्र वने मृगयां चचार। पक्षे इषवो रागादयो दोषाः अहं कर्ता भोक्ता चेत्यभिनिवेशः कार्मुकं मृगाः शब्दादयो विषयाः तत्र व्यसनं तद्भोक्तृ स्वभावस्तेन लालसाऽतिस्पृहा यस्य सः। जाया विवेकवती जाग्रद्बुद्धिः सा च त्यागानर्हैव मृगयाचरणं च विषयान्वेषणं परदाराभिलाषादिपापं च ॥ ४ ॥

आसुरीमिति। यतो निरनुग्रहः कृपारहितः अतः आसुरीं क्रूरां वृत्तिमाश्रित्य घोरात्मा भयङ्करस्वरूपः सन् वनेषु वनगोचरान् मृगान् निशितैस्तीक्ष्णैर्बाणैर्न्यहनत् शब्लुगभाव आर्षः। पक्षे जाग्रति निरनुग्रहः अन्तःसंस्कारवशात्स्वनेऽपि घोरात्मा सन् स्वप्नस्थानेषु वनगोचरान् तत्र कल्पितान् शब्दादिविषयान् बाणैः रागादिकल्पिततत्तदिन्द्रियवृत्तिभिर्न्यहनत् भुक्तवान् ॥ ५ ॥ ननु मृगयायां हिंसासत्त्वेऽपि यज्ञाद्यर्थत्वान्न दोषः। परोक्षकथापक्षेऽपि जीवस्य विषयभोगो विहित इति चेन्न। तावत् हिंसा विषयभोगो वा शास्त्रेण विधीयते रागप्राप्तत्वात्। किंतु यथेष्टप्रवृत्तरागिवारणार्थं नियम्यते इत्याह—तीर्थेष्विति। स यद्यलमत्यर्थं लुब्धो मांसासक्तः सन् पशून् हन्यात्तदा तीर्थेषु श्राद्धादिष्वेव हन्यात्। तत्रापि प्रतिदिष्टेषु शास्त्रेणोपदिष्टेषु हननं शास्त्रेण विहितं तेष्वेव। न नित्यश्राद्धादिष्वित्यर्थः। तत्रापि राजैव नान्यः तत्रापि मेध्यान् विहितानेव नान्यान्। तत्रापि वन एव नान्यत्र। तत्रापि यावदर्थं यावदुपयोगमेव नाधिकमिति नियम्यते। पक्षे विषयभोगोऽपि नियम्यते। यद्यलं लुब्धो विषयासक्तः पशून् हन्यात् विषयान् भुञ्जीत तर्हि तीर्थेषु उचितकालदेशादिष्वेव। तत्रापि शास्त्रेण प्रतिदिष्टेष्वेव ऋतुकालादिष्वेव। तत्रापि राजा गृहस्थ एव न ब्रह्मचर्यादिः तत्रापि मेध्यान् विहितस्वदारानेव न तु निषिद्धान्। तत्रापि वने विहितदेशकालादौ विजनरात्र्यादावेव न तु देवालयदिनादौ। तत्रापि यावदर्थम् उत्कण्ठाभिलापप्रशमनपर्यन्तमेवेति यथेष्टभोगप्रवृत्तिः शास्त्रेण सङ्कोच्यते ॥ ६ ॥ य इति। हे राजेन्द्र! यो मानवः एवं पूर्वश्लोक्तं विद्वान् जानन् नियतः शास्त्रेण नियमितमेव परलोकार्थं लोकनिर्वाहार्थं च कर्म कुर्वीत। स तेन नियमेनानुष्ठितेन कर्मणा जातेन ज्ञानेन हेतुना संसारबन्धनैर्धर्माधर्मलक्षणैर्न लिप्यतेव निबध्यते। अध्यात्मपक्षेऽप्येवम्। एवमग्रेऽपि ॥७॥ अन्यथेति। अन्यथा शास्त्रनियमोल्लङ्घनेन यो मानारूढो मानोऽभिमानस्तेन कर्म कुर्वाणो भवति स तु तैः कर्मभिर्निबध्यते। ततश्च गुणप्रवाहे संसारे पतितः पुनरपि पूर्वसंस्कारेणाग्रे निषिद्धानुष्ठानान्नष्टप्रज्ञस्ततोऽप्यधो नरकं व्रजति ॥ ८ ॥ प्रकृतमनुसरति तत्रेति। तत्र वने पुरञ्जनस्य चित्राः वाजाः पक्षा येषां तैः शिलीमुखैर्बाणैर्भिन्नानि गात्राणि येषां तेषां दुःखितानां मृगाणां विप्लवो नाशोऽभूत्। स च करुणात्मनां कृपालूनां दुःसहः इति पक्षे विविधदोषयुक्तैरिन्द्रियैः हिंसादि पापमभूत् ॥ ९ ॥ शशानिति। तत्र शशान् वराहादीन् अन्यांश्च विविधान् मेध्यान् यज्ञाद्यर्हान् पशून् विनिघ्नन् श्रममध्यगात्। पक्षे स्वप्ने नानाविषयान् सम्पादयन् श्रान्तो जातः। यद्वा धार्मिको जीवः पापं कृत्वा नु ततापः ॥ १० ॥

तत इति। ततः क्षुत्तृड्भ्यां परिश्रान्तः निवृत्तः सन् गृहमेयिवान् आगतः। ततश्च कृतं स्नानमुचित आहारश्च येन सः संविवेश आसने उपविवेश। ततश्च गतक्लमो जातः। पक्षे एवं स्वप्नपदार्थाननुभवंस्तत्र क्षुत्तृट्परिश्रान्तस्ततः स्वप्नस्थानतो गृहं जाग्रदवस्थास्थानं हृदयं पुनरागतः। स्वप्नदर्शनहेतुनिन्द्रादोषदूरीकरणमेव स्नानं स्वप्नदर्शनक्षुत्तृड्निवर्तको जाग्रदवस्थादर्शनजन्यसन्ताप एवाहारः तत्परिश्रमनिवृत्तिरेव गतक्लमत्वम्। हृदये स्थितिः संवेशनम्। यद्वा क्षुत्तृट्परिश्रान्तः कृतपापानुतापः पापेभ्यो निवृत्तः गृहमेयिवान् अधर्मं त्यक्त्वा धर्मे स्थातुमियेष। उचिताहारः उचिताचारः सन् स्थिरोऽभूत् ॥ ११ ॥ आत्मानमिति। धूपः आलेपश्चन्दनं तदादिभिश्च आत्मानमर्हयांचक्रे अलंकृतवान्। यदा साधु सम्यगलंकृतसर्वाङ्गो जातस्तदा महिष्यां मन आदधे। पक्षे स्वप्नसंस्कारनिवृत्त्या जाग्रद्वस्त्वनुसन्धानमेवालंकरणम्। यद्वा प्रायश्चित्तसत्सङ्गाद्यैश्चित्तशोधनमेवालंकरणम्। विवेकवती बुद्धिर्महिषी तामन्वेषितवान् ॥ १२ ॥ तृप्त इति। भोजनेन तृप्तः अत एव हृष्टो दृप्तो गर्वितः कन्दर्पेण कामेनाकृष्टं मानसं यस्य स अन्वेषमाणोऽपि गृहमेधिनीं गृहनिर्वाहिकां वरारोहां गृहिणीं भार्यां न व्यचष्ट नापश्यत्। पक्षे जागरणं प्राप्तोऽपि स्वप्नसंस्कारभ्रमचित्तो राजस्यां बुद्ध्यां वर्तमानो व्यवहारनिर्वाहिकां सात्विकीं बुद्धिं स्वस्मिन्नापश्यत् ॥ १३ ॥ अन्तःपुरेत्यर्द्धम्। हे वेदिषत्! हे प्राचीनबर्हिः! यदा भार्यां नापश्यत्तदा विमना इवान्तःपुरस्त्रियोऽपृच्छत्। इव एवार्थे। पक्षे अन्तःपुरस्त्रियः इन्द्रियवृत्तयः प्रश्नस्तदालोचनम् ॥ १४ ॥ अपीति। हे रामाः! वा युष्माकं सेश्वरीणां स्वामिनीसहितानाम्। कबभाव आर्षः। अपि किं कुशलमति। यतः यथा पुरा मृगयार्थं गमनात्पूर्वं गृहसम्पदोऽरोचन्त तथैतर्हि गृहेषु गृहसम्पदो न रोचन्ते न शोभन्ते। पक्षे स्वप्नादुत्थितस्यालस्यनिवृत्त्या बुद्धिस्वास्थ्यपर्यन्तं देहादिसम्पन्न रोचते ॥ १५ ॥ यदीति। यदि माता पतिदेवता पतिव्रता पत्नी वा गृहे न स्यात्तदा को नाम प्राज्ञः व्यङ्गे चक्राद्यङ्गरहिते रथे इव तत्र गृहे दीनवदासीत। पक्षे यदि मातृवत्सात्त्विकी बुद्धिः पत्नीवद्राजसी बुद्धिर्वा न स्यात्तदा तामस्या बुद्ध्या पशुत्वाद्यापत्त्या किं शरीरेण ॥ १६ ॥ क्वेति। अतो मम प्रज्ञां दीपयन्ती उद्धारोपायं प्रतिबोधयन्ती या व्यसनार्णवे दुःखसागरे मज्जन्तं मां पदे पदे क्षणे क्षणे उद्धरते सा ललना क्व वर्त्तते। पक्षे स्पष्टम् ॥ १७ ॥ नरनाथेति। हे नरनाथ राजन्! त्वत्प्रिया यद्व्यवस्यति निश्चिनोति तद्वयं न जानीमः। हे शत्रुहन्! निरवस्तारे

आस्तरणरहिते भूतले शयानां तां पश्य ॥ १८ ॥ पुरञ्जन इति। तदा स्वमहिषीं भुवि अवधुतां पतितां त्यक्तदेहादरां निरीक्ष्य तत्सङ्गेनोन्मथितं शिथिलीकृतं ज्ञानं यस्य स पुरञ्जनः परमवैक्लव्यं व्याकुलत्वं ययौ। पक्षे राजसबुद्धेरत्यौदासीन्ये व्यवहारेणापि रहितो जातः ॥ १९ ॥

सान्त्वयन्निति। हृदयेन विदूयता कम्पमानेन। आर्त्तः शता। उपलक्षितः श्लक्ष्णया मधुरया वाचा तां सान्त्वयन् प्रेयस्यास्तस्याः स्नेहसंरम्भस्य प्रणयकोपस्य लिङ्गं कारणं कुटिलदृष्ट्यादिकमात्मनि स्वस्मिन्नाभ्यगात् न ज्ञातवान्। पक्षे राजसबुद्धेः शैथिल्यस्य हेतुं न ज्ञातवान् ॥ २० ॥ अनुनिन्य इति। अथ अनुनये कोविदः पण्डितः वीरः पुरञ्जनस्तां शनकैः अनुनिन्ये। तत्र प्रथमं तस्याः पादयुगलं पस्पर्श शिरसा नमश्चकार। ततश्चोत्सङ्गमारोप्य लालितां तामाह स। पक्षे बुद्धिं स्वस्थां कृतवान् शेषं कथालङ्कारः ॥ २१ ॥ नूनमिति। हे शुभे! कृतागःसु कृतापराधेष्वपि भृत्येषु ईश्वराः स्वामिनः आत्मसात्कृत्वा अस्मदीयोऽयमिति मत्वा शिक्षार्थं दण्डं न युञ्जते न कुर्वन्ति। ते भृत्याः सेवका नूनं निश्चितमकृतपुण्याः सुकृतरहिता इति। हे तन्वि! भृत्येषु कृतागःसुः यः प्रभुणा स्वामिनाऽर्पितः कृतो दण्डः स तु पुनरपराधान्तरप्रतिबन्धकत्वात् परमोऽनुग्रह एव। यत्र यस्तु दण्डितः सन् अमर्षणः असहमानो भवति स तु बालः अज्ञ इव। यतो बन्धुकृत्य स्वामिहिताचरणं न वेद न जानाति ॥ २३ ॥ सेति। हे सुदति! हे मनस्विनि! सा त्वमस्माकं स्वामिनी स्वानां स्वकीयानां नोऽस्माकं सुभ्रु! अनुरागभारेण व्रीडया च यो विलम्बो मन्थरता तेन विलसन् हसितावलोको यस्मिंस्तत् नीला अलका एवालयो भ्रमरास्तैरुपस्कृतं भूषितम् उन्नसमुच्चनासिकं वल्गु वाक्यं यस्मिं त् स्वमुखं प्रदर्शय ॥ २४ ॥ तस्मिन्निति। हे वीरपत्नि वीरस्य मम भार्ये! यस्ते कृतकिल्बिषः कृतापराधो भवेत् तस्मिन् अहं ब्राह्मणकुलादन्यत्रान्यस्मिन्प्राणिनि तथा मुररिपोर्दासाद्वैष्णवादितरत्र च दमं दण्डं दधे करोमि। किन्तु तं वीतभयं निर्भयम् उत् उच्चैर्मुदितं त्रिलोक्याम् अन्यत्र वै लोकत्रयाद्बहिरपि न पश्ये न पश्यामि। तत्त्वार्थः। यस्तेऽपराधी स यत्र कुत्रापि गतो मद्भयादेव मरिष्यतीति ॥ २५ ॥ वक्त्रमिति। इतः पूर्वं कदापि ते तव वक्त्रं वितिलकं मलिनं विहर्षं हर्षरहितं संरम्भेण कोपावेशेन भीमं भयङ्करविमृष्टमनुज्ज्वलमपेतरागं स्नेहशून्यं न पश्ये नापश्यम्। तथा सुजातौ शोभनौ ते स्तनावपि शुचा शोकाश्रुणा उपहतावभिषिक्तावितः पूर्वं नापश्यम्। तथा विम्बफलसदृशमतिरिक्तं तवाधरमपीत पूर्वं विगतः कुङ्कुमपङ्कतुल्यस्ताम्बूलरागो रक्तता यस्मात्तादृशं नापश्यमिति इदानीमेव सर्वं विपरीतं जातम्। बिम्बाधरमित्यत्र विन्दामि शमिति पाठे ईदृङ् मुखं स्तनौ च पश्यन् शं विन्दामि। विगतकुङ्कुमपङ्करागाविति स्तनयोर्विशेषणम् ॥ २६ ॥ तदिति। तत् तस्मात् स्वैरं स्वेच्छया त्वामपृष्ट्वा मृगयां गतस्य व्यसनातुरस्य मृगयानुरक्तस्य अतः कृतकिल्बिषस्य कृतापराधस्यापि सुहृदः कपटरहितस्य मे त्वं प्रसीद अपराधक्षमा कृत्वा प्रसादं कुरु। देवो देवनं क्रीडारतिस्तां राति ददातीति देवरः कान्तः तं कुसुमास्त्रस्य वेगेन विस्रस्तमपगतं पौंस्नं पौरुषं धैर्यं यस्य तम्। अत एव स्ववशागतमुशती कामयमाना त्वादृशी चतुरशिरोमणिः कृत्ये भजनं कर्तुं योग्ये देशे काले च न भजेत् नाङ्गीकुर्यात् अङ्गीकृत्य भोगं न प्रदद्यात्। एवंभूता का न काऽपीत्यर्थः ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां षड्विंशोऽध्यायः ॥ २६ ॥



# अथ सप्तविंशोऽध्यायः

नारद उवाच

इत्थं पुरञ्जनं सम्यग् वशमानीय विभ्रमैः। पुरञ्जनी महाराज रेमे रमयती प.तिम् ॥ १ ॥

सप्तविंशे कालकन्याद्यपाख्यानमिषादिह। जरारोगादि कथितं श्लोकास्तत्र खवह्नयः (३०)।

उवाचेत्येकमेवास्मिन्नेकविंशदनुष्टुभः (३१) ॥ २७ ॥

एवं जीवस्यात्यन्तमुपाधिवश्यत्वमुक्त्वा तन्निमित्तां संसृतिं निरूपयितुमाह—इत्थमिति। अत्र जीवस्य स्त्रीपुरुषवासना दार्ढ्येन विचित्रा संसृतिर्भवतीति दर्शितम्। क्वचित्पुमान् क्वचिच्च स्त्रीत्यायुक्तेः पुंस्त्वेन संसृतिरध्यायत्रयेण स्त्रीत्वेन चैकेनाध्यायेन ततः ईश्वरप्रसादलब्धज्ञानेन मोक्ष इत्युक्तम्। प्रतिपदमध्यात्मयोजना तु सारल्येन दुर्घटा निष्प्रयोजना चेति यथोपयोगमेव व्याख्यायते। हे महाराज! पुरञ्जनी इत्थं स्वविभ्रमैर्विलासैः पुरञ्जनं सम्यक् स्ववशमानीय तं पतिं रमयती स्वयं रेमे। नुमभाव आर्षः। पक्षे भोगे जीवस्य बुद्धिपारतन्त्र्यं दर्शितम् ॥ १ ॥ स इति। हे राजन्! स राजा पुरञ्जनोऽपि सुस्नातां रुचिराननां कृतं स्वस्त्ययनं मङ्गलं कुंकुमसिन्दूरादिभिरलङ्कारो यया ताम् अन्नादिभोजनेन तृप्ताम् उपागतां स्वसमीप आगतां स्वमहिषीं दृष्ट्वा अभ्यनन्दत् भोगार्थमङ्गीकृतवान् ॥ २ ॥ तयेति। तया स्त्रिया उपगूढः परिरब्धः परिरब्धा गृहीता तस्याः कन्धरा येन सः रहः एकान्ते तस्या अनुमन्त्रैरनुकूलैर्गुह्यभाषणैरपकृष्टा चेतना विवेको यस्य सः। अतः सा प्रमदैव परिग्रहो न ज्ञानभक्त्यादिसाधनं यस्य सः दुरत्ययमत्येतुमशक्यं दिवा निशेत्येवंलक्षणं कालस्य रंहो वेगं न बुबुधे। पक्षे विषयासक्तस्यायुर्व्ययबोधो न भवतीति ॥ ३ ॥ शयान इति। अतः मरणादिभयाभावात् उन्नद्धोऽतिवृद्धो मदो यस्य सः अत एव महामनाः नानाप्रकारसङ्कल्प-विकल्पवान् महार्हे तल्पे शयानः महिष्या भुज एव उपधिः उपधानमुच्छीर्षकं यस्य सः। अविसर्गपाठे शयनक्रियाविशेषणम्। तमसा अज्ञानेन अभिभूतः अन्धीकृतः वीरः प्रौढः पुरञ्जनः तां स्त्रियमेव परं पुरुषार्थं मनुतेऽमन्यत। न तु निजं स्वरूपं न च परं परमेश्वरं पुरुषार्थममन्यत ॥ ४ ॥ तयेति। हे राजेन्द्र! कामकश्मलचेतसः काममोहितचित्तस्य तया स्त्रिया सहैवं रममाणस्य तस्य नवं वयः युवावस्थोपलक्षितः कालः क्षणार्द्धमिव व्यतिक्रान्तमज्ञातमेव गतम् ॥ ५ ॥ तस्यामिति। तस्यां पुरञ्जन्यां भार्यायां पुरञ्जनः एकादशशतानि पुत्रान् अजनयत्। अथ तावता च आयुषोऽर्द्धं संवत्सरपञ्चाशदब्दात्मकं कालं स विराट् राजा अत्यगात् अतिक्रान्तवान्। पक्षे पुत्रान् इन्द्रियपरिणामान् पुत्रसङ्ख्याबाहुल्यमात्रविवक्षया ॥ ६ ॥ दुहितॄरिति। हे प्रजापते! स पुरञ्जनः तस्यां पितृमातृयशस्करीः शीलौदार्यगुणोपेताः दशोत्तरशतं दुहितॄः अजनयत्। ताश्च पुरञ्जनकन्यात्वात्पौरञ्जन्यो ज्ञेयाः। पक्षे दुहितॄर्बुद्धिवृत्तीः कन्यायां पुत्रापेक्षया न्यूनत्वं गार्हस्थ्यकथासौन्दर्याय ॥ ७ ॥ स इति। स पाञ्चालपतिः पुरञ्जनः स्ववंश-विवर्द्धनान् पुत्रान्दारैः संयोजयामास तान् विवाहितवान्। तथा दुहितॄः कन्याश्च सदृशैः शीलादिगुणयुक्तैर्वरैः संयोजयामास। पक्षे दारैः परिणामानन्तरं हिताहितचिन्ताभिः वरैः उचितविषयभोगैः ॥ ८ ॥

पुत्राणामिति। पुत्राणां च एकैकस्य प्रत्येकं शतं शतं पुत्रा अभवन्। यवैं यैरेव पुत्रपौत्रादिभिः पौरञ्जनो वंशः पञ्चालेषु पञ्चालसंज्ञकदेशेषु समेधितः वर्धितो जातः। पक्षे पुत्राणां च पुत्राः कर्माणि पञ्चालेषु विषयेषु ॥ ९ ॥ तेष्विति। तेषु पुत्रेषु तथा तद्रिक्थहारेषु तेषां पुत्रेषु च तथा गृहेषु कोशेषु अनुजीविषु भृत्यादिषु च निरूढेनातिदृढेन ममत्वेन हेतुना तेषां स्वस्य च भोगसम्पादनार्थं विषयेषु शब्दादिषु अन्ववध्यत नितरामत्यासक्तो जातः। पक्षे पुत्राः पौत्राश्चोक्ताः गृहाः आधारादि-चक्राणि कोशाः उदरकुक्ष्यादयः अनुजीविनः इन्द्रियप्राणादयः ॥ १० ॥ ईजे चेति। नानाकामः बहुकामनावान् दीक्षितः कृतसङ्कल्पः सन् भवान् त्वं प्राचीनबर्हिः यथा घोरैः शास्त्राननुमतैः पशुमारकैः पशुहिंसाप्रधानैः क्रतुभिर्देवान् पि.तॄन् भूतपतीन् भैरवादान् च ईजे पूजयामास ॥ ११ ॥ युक्तेष्विति। एवं कुटुम्बेषु आसक्तं चेतो यस्य सत एव युक्तेषु कर्तुं योग्येषु भगवदाराधनेषु प्रमत्तस्य अनवहितस्य पुरञ्जनस्य प्रिया योषितो येषां ते प्रिययोषितस्तेषां यः अप्रियः अनभिप्रेतः स वै स एव कालः आससाद ॥ १२ ॥ चण्डेति। हे नृप! गन्धर्वाणामधिपतिः राजा चण्डवेग इति नाम्ना विख्यातः कश्चिदस्ति। तस्य बलिनः महाबलवन्तः षष्ट्युत्तर-शतत्रयसङ्ख्याकाः गन्धर्वाः सन्ति। पक्षे चण्डवेगः संवत्सरलक्षणः कालः गन्धर्वाः सावनवर्षदिवसाः ॥ १३ ॥ गन्धर्व्य इति।

अस्य चण्डवेगस्य गन्धर्व्यस्तादृशीः तादृश्यः। "वा छन्दसि" इति पूर्वसवर्णदीर्घः। बलवत्यः षष्ट्यधिकशतत्रयसंख्यान्विताश्च सितासिताः श्वेतकृष्णवर्णवत्यस्ताश्च मैथुन्यो गन्धर्वैः सह मिलिताः सत्यः सर्वैः कामैर्भोगविषयैः सह विनिर्मितां पुरञ्जनपुरीं परिवृत्त्या परिभ्रमणेन पर्यायेण वा विलुम्पन्ति। पक्षे गन्धर्व्यः रात्रयः सिताः शुक्ले असिताः कृष्णे आयुर्नाशं कुर्वन्ति॥ १४॥ ते इति। पूर्वोक्ताश्चण्डवेगस्यानुचरा योद्धारो गन्धर्वा गन्धर्व्यश्च यदाप्रभृतितः पुरञ्जनपुरं हर्तुमारेभिरे। तत्र तदाप्रभृतित एव तान् प्रजागरः पुरपालकत्वेन स्थितः पञ्चशिरा नागः प्रत्यषेधत् पुरविनाशनान्निवारितवान्। पक्षे प्रजागरः प्राणस्तत्स्थित्या मरणं निरुध्यते॥ १५॥

स इति। बली बलवान्स पुरञ्जनपुरस्याध्यक्षः पालकः एक एव सप्तभिः शतैर्विंशत्या च गन्धर्वैः सह शतं समाः संवत्सरशतपर्यन्तं युयुधे। पक्षे प्राणस्थितिरेव युद्धम्॥ १६॥ क्षीयमाण इति। बहुभिर्विंशत्यधिकैः सप्तभिः सह युधा युद्धेन बहुकालपर्यन्तेन एकस्मिंस्तस्मिंस्तस्मिन् स्वसम्बन्धे स्वसम्बन्धिनि पुररक्षके क्षीयमाणे सति राष्ट्रस्य पुरस्य च बान्धवः स्वामी स पुरञ्जनः आर्तः सन् परां महतीं चिन्तां जगाम। पक्षे देहाद्यसामर्थ्येन प्राणासामर्थ्यमनुमाय चिन्ताकुलोऽभूत्॥ १७॥ स एवेति। यतः स पुरञ्जन एव तस्यां पुर्यां तथा पञ्चालेषु बहिर्देशेषु च मधुभुक् मधुतुल्यविषयसुखभोक्ता अतः स्वपार्षदैः उपनीतं प्रापितं बलिं गृह्णन् भुञ्जानः तथा स्त्रिया जितश्चातो भयं नाविदत् न आप्तवान्। विदल्ृ लुङ् अङ्। पक्षे पार्षदैरिन्द्रियैर्विषयासक्त आयुःक्षयं न ज्ञातवान्॥ १८॥ कालस्येति। हे बर्हिष्मन् प्राचीनबर्हिः! काचित्कालस्य दुहिता कन्याऽस्ति तां वरमिच्छतीमत एव तदन्वेषणार्थं त्रिलोकीं पर्यटन्तीमपि कश्चन कोऽपि न प्रत्यनन्दत असाध्वीं मत्वा नाङ्गीकृतवान्। तदर्थः। पक्षे कालकन्या जरा तां कोऽपि नाङ्गीकरोतीति स्पष्टमेव॥ १९॥ दौर्भाग्येनेति। आत्मनः स्वस्य दौर्भाग्येन पापिष्ठत्वेन सा लोके सर्वत्र दुर्भगेति नाम्ना विश्रुता प्रसिद्धा। या पूर्वं पूरुणा वृताऽङ्गीकृता स्वभोगावसाने तुष्टा तस्मै राज्यमदात्। इयं कथा नवमस्कन्धे स्फुटा। राज्यप्राप्तेर्जराग्रहणहेतुकत्वात् ययातिना दत्तत्वेऽपि जरा अदादित्युक्तम्। जराग्रस्तस्य स्नानादावप्यसामर्थ्याद्दुर्भगत्वम्॥ २०॥ कदाचिदिति। सैवं काममोहिता वरान्वेषणाय सर्वत्राटमाना। आर्षः शानच्। कदाचित् ब्रह्मलोकान्महीं गतं प्राप्तं मां बृहद्व्रतं नैष्ठिकब्रह्मचारिणं जानत्यपि वव्रे। त्वं मम भर्त्ता भव मामङ्गीकुर्वित्युक्तवतीति। पक्षे ब्रह्मचर्यादिकमपि न त्यजतीति॥ २१॥ मयीति। बृहद्व्रतत्वात्प्रत्याख्यातवति मयि संरभ्य क्रोधं कृत्वा हे मुने! यतस्त्वं मद्याच्ञाविमुखो मां नाङ्गीकरोष्यत एकत्र स्थाने स्थातुं नार्हसीति विपुलं महान्तमन्यैः सुदुःसहं शापमदात्। पक्षे श्रीनारदस्य प्रद्युम्नमाने मयि तां शुद्धां भागवतीं तनुमित्युक्ताऽप्राकृतदेहत्वाज्जराप्रवेशासम्भवात् लोकोपकाराय पर्यटनमेव शापफलत्वेनोत्प्रेक्षितम्॥ २२॥ तत इति। ततो मत्प्रत्याख्यानानन्तरं विहतो मद्विषयकः सङ्कल्पो यस्याः सा कालकन्या मयोपदिष्टं ज्ञापितं नाम्ना भयं भयनामानं यवनानामीश्वरमासाद्य गत्वा पतिं वव्रे। पक्षे यवना आधयो व्याधयश्च तेषामीश्वरो मृत्युस्तस्य सर्वभयङ्करत्वात्स एव भयनामा तस्य जराज्वरादिद्वारामरणहेतुत्वात् मयोपदिष्टमिति तु कथालङ्कारः॥ २३॥ ऋषभमिति। हे वीर! यवनानाम् ऋषभं त्वाम् ईप्सितं पतिं वृणे। यतः त्वयि कृतो भूतानां सङ्कल्पो नैव रिष्यति न नश्यति। "रिष् हिंसायाम्"। विफलो न भवति॥ २४॥

द्वाविति। लोकव्यवहारतः शास्त्रतो वा ग्राह्यत्वेनोपनतं प्राप्तं तद्याच्यमानं देयं यो न राति न ददाति यश्च तद्दीयमानं ग्राह्यं नेच्छति न गृह्णाति तौ बालौ यज्ञौ असन्नवग्रहः हठः ययोस्तौ इमौ द्वौ पुरुषौ कर्मभूतौ सज्जना अनुशोचन्ति॥ २५॥ अथो इति। अथो तस्मात् हे भद्र! भजन्तीं त्वामनुवर्तमानां मां त्वं भजस्व ममोपरि दयां कुरु। यत् आर्तान् दुःखितान् अनुकम्पते पौरुषः पुरुषैरनुष्ठेयः एतावानेव धर्मः॥ २६॥ कालेति। यवनेश्वरः भयनामा कालकन्ययोदितम् उक्तं वचो निशम्य श्रुत्वा देवानां गुह्यं गुप्तं किंचित्कार्यं चिकीर्षुः सस्मितं तामभाषत। पक्षे देवगुह्यं संसारचक्रप्रवर्त्तनं स्मरणं वा तद्धि प्राणिनां वैराग्यानुदयाय देवैर्गोप्यते। मरणे ज्ञाते वैराग्योदयात्प्राणिनो मुच्येरन्। तद्धि देवतानां न रोचते तदाराधनोच्छेदात्॥ २७॥ मयेति द्वयम्। तुभ्यं त्वां भोजयितुं पतिर्मया आत्मसमाधिना चित्तैकाग्र्येण निरूपितो विचारितः। यतः अयं लोको याच्यमानः अभद्रां दुःखप्रदाम् असम्मतां च त्वां नाभिनन्दति नाङ्गीकरोति अतः कुतः कथमागतेत्यव्यक्ता गतिर्यस्यास्तथाभूता सती त्वं कर्मभिर्विनिर्मितं लोकं प्राणिशरीरं बलाद्भुङ्क्ष्व। एवं सति सर्वोऽपि लोकस्तव पतिः स्यात् नापि किंचित्त्वया भेतव्यम्। तथा च मे मम पृतनया युक्ता त्वं लोकं याहि भुक्त्वा प्रजानां नाशं प्रणेष्यसि करिष्यसि। पक्षे मृत्युसेना रोगादिसमूहस्तद्युक्तया जरया प्रजानाशः स्फुटः॥ २८–२९॥ प्रज्वार इति। अयं प्रज्वारसंज्ञको मम भ्राताऽस्ति त्वं च मम भगिनी भवेतीत्थमुभाभ्यां युवाभ्यां द्वारभूताभ्यां भीमाः सैनिकाः यवना यस्य सः तैश्चास्मिन् लोके प्रजानाशं कुर्वन्नव्यक्तः अलक्षित एव चरामि। पक्षे प्रज्वारः वैष्णवोऽन्तको ज्वरः माहेश्वरस्य व्याध्यन्तःपातित्वात् जरा ज्वरादिद्वारैव मरणं स्फुटम्॥ ३०॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तविंशोऽध्यायः॥ २७॥

—:❀:—

## अथाष्टाविंशोऽध्यायः

### नारद उवाच

**सैनिका भयनाम्नो ये बर्हिष्मन् दिष्टकारिणः । प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम् ॥ १ ॥**

अष्टाविंशे तु वैदर्भ्या जनने स्त्रीत्वमीयुषः । जीवस्य क्वापि मुक्तत्वं तत्र श्लोका मरुद्रसाः ( ६५ ) ॥

अनुष्टुभोऽपि तावन्त्य ( ६५ ) उवाचेति द्वयं परम् ॥ २८ ॥

सैनिका इति । हे बर्हिष्मन् ! ये भयनाम्नो दिष्टकारिणः आज्ञाकारिणः दुरदृष्टफलोत्पादका वा सैनिका योद्धारस्ते प्रज्वारकालकन्याभ्यां सह लोकविनाशार्थमिमामवनीं विचेरुः सर्वत्र पर्यटन्ति स्म ॥ १ ॥ त इति । एकदा तु ते भौमभोगेन आढ्यां सम्पूर्णां जरता क्षीणबलेन पन्नगेन सर्पेण पालितां पुरञ्जनस्य पुरीं तरसा वेगेन रुरुधुः । पक्षे जरादयो दुर्बलप्राणं शरीरं ग्रस्तवन्तः ॥२॥ कालेति । कालकन्याऽपि बलात् पुरञ्जनपुरं बुभुजे स्वाधीनीकृतवती । यथाऽभिभूतः पुरप्रवेशभोगादिना तिरस्कृतः पुरुषः सर्वो यः कोऽपि सद्यो निःसारतामसमर्थतामियात् ॥ ३ ॥ तयेति । तया कालकन्ययोपभुज्यमानां सकलां पुरीं सर्वतो दिशं द्वार्भिर्यवनाः प्रविश्य सुभृशं प्रार्दयन् बभञ्जुः । पक्षे जरया ग्रस्ते देहे चक्षुरादिभिर्द्वार्भिः रोगादयः प्रविश्यान्धत्वादि सम्पादितवन्तः ॥ ४ ॥ तस्यामिति । तस्यां पुर्यां प्रपीड्यमानायां तदभिमानी पुरञ्जनो यतः कुटुम्बी पुत्रादिमान् तेषु ममतया आकुलो विवशश्चात उरुविधान् बहुप्रकारांस्तापानवाप । पक्षे जीवो देहे पीडिते तदध्यासात् दुःखी बभूव ॥ ५ ॥

कन्येति त्रयम् । कन्यया कालकन्यया उपगूढः आश्लिष्टः नष्टश्रीः कृपणः दीनः विषयेषु आत्मा मनो यस्य नष्टप्रज्ञश्च बलात् हृतमैश्वर्यं यस्य स पुरञ्जनः स्वपुरीं विशीर्णां वीक्ष्य पुत्रान् पौत्रान् अनुगान् अमात्यांश्च प्रतिकूलान् अभीष्टाप्रापकान् अनादृतान् आदररहितांश्च वीक्ष्य जायां च गतसौहृदां स्नेहरहितां वीक्ष्य आत्मानं च कालकन्यया ग्रस्तं वीक्ष्य पञ्चालान् देशान् अरिभिः दूषितान् वीक्ष्य दुरन्तां चिन्तामापन्नः सन् तस्य पूर्वोक्तदुःखस्य प्रतिक्रियाम् उपायं न लेभे । पक्षे अनुगा इन्द्रियाणि अमात्या इन्द्रियदेवाः गतसौहृदां गताध्यवसायां जरया ग्रस्तः रोगादिभिर्हृतसामर्थ्यः शरीरं शिथिलं पुत्रादीन् इन्द्रियपरिणामादीन् स्वस्वभोगासम्पादकान् वीक्ष्य विषयान् सुखाजनकान् वीक्ष्य तदुपायं न लेभे ॥ ६–८ ॥ कामानिति द्वयम् । कालकन्यया हेतुभूतया यातयामान् गतसारान् अपि कामान् विषयान् अभिलषन् तथा विगता असिद्धा साधनानुष्ठानाभावादात्मनो गतिः पारलौकिकी तथैहिकः पुत्रादिस्नेहश्च यस्य स तथाभूतोऽपि पुत्रदारांश्च लालयन् राजा पुरञ्जनस्तां गन्धर्वयवनादिभिराक्रान्तां वशीकृतां कालकन्यया चोपमर्दितां भग्नामपि पुरीमनिकामतोऽनिच्छयाऽपि हातुं त्यक्तुं प्रचक्रमे उपक्रान्तवान् । पक्षे जरया विषयाणां सुखाजनत्वम् इन्द्रियादीनां विकलतायां शरीरत्यागेच्छा चेत्यादि स्फुटम् ॥ ९–१० ॥ भयेति । भयनाम्नोऽग्रजो ज्येष्ठो भ्राता प्रज्वारसंज्ञकः प्रत्युपस्थितः पुरीं प्रत्यागतः सन् भ्रातुर्भयनाम्नः प्रियस्य पुरीनाशस्य चिकीर्षया सकलां तां पुरीं ददाह । पक्षे देहनाशं चिकीर्षुः प्रज्वारो ज्वरो देहे दाहमुत्पादितवान् ॥ ११ ॥ तस्यामिति । तस्यां पुर्यां दह्यमानायां सपौरः पुरप्राकारादिसहितः सपरिच्छदः भृत्यवर्गसहितः कुटुम्बेन दीव्यतीति कौटुम्बिकः कुटुम्बिन्या भार्यया च सहित । अत्र सन्ध्यभावः अविवक्षया । सान्वयः पुत्रादिसहितश्च पुरञ्जनः उपातप्यत । पक्षे सपौरः सप्तधातुसहितः सपरिच्छदः इन्द्रियादिभिः सह जीवः अतप्यत ॥ १२ ॥ यवनेति । कालकन्यया पुर्यां ग्रस्तायां यवनैरुपरुद्धं बलाद्गृहीतमायतनं वासस्थानं यस्य सः प्रज्वारेण ससृष्टः पीडितः सुरपालः पञ्चशिरा नागोऽप्यनुक्षणमतप्यत । पक्षे देहस्यान्तकाले रोगादिभिः स्थाने रुद्धे शीतज्वरपीडितः प्राणोऽतप्यत ॥ १३ ॥ नेति । पुरुकृच्छ्रेण बहुकष्टेन उरुर्वेपथुः कम्पो यस्य सः अत एव तत्र स्थितोऽपि तामवितुं रक्षितुं स पुरपालो न शेके समर्थो न जातः । अतः यथा सानलात् अग्निना दह्यमानाद्वृक्षकोटरात्स निर्गन्तुमिच्छति तथा ततो बहिर्गन्तुमैच्छत् । पक्षे जरादिभिरुपद्रुतः प्राणो बहिर्गन्तुमैच्छत् ॥ १४ ॥

शिथिलेति । हे राजन् ! शिथिला अवयवाः करचरणादयो यस्य सः तत्र हेतुः गन्धर्वैर्हृतं पौरुषं यस्य सः यवनैररिभिरुपरुद्धश्चातो झटिति बहिरपि निर्गन्तुमशक्तः सं[illegible]दा पूरपालको नागो रुरोदैव न तत्र किंचित्पराक्रमं कर्तुं शशाक । पक्षे जीर्णत्वेन

मन्दक्रियः कफादिरुद्धो गन्तुमप्यशक्तः प्राणः कण्ठे घुर्घुरध्वनिमकरोत् ॥ १५ ॥ दुहितॄरिति द्वयम् । प्रमदादिभिः सर्वैर्विप्रयोग उपस्थिते सति कुमतिः रजःक्रान्तमतिः गृही दीनश्च पुरञ्जनः गृहेषु गृहादिष्वहंममेति स्वोकृत्य दुहितॄः पुत्रपौत्रान् च जामीः स्नुषाः जामातॄन् पार्षदान् अन्यच्च यत् किंचित् स्वत्वे लुप्तनादवशिष्टं भोगस्य तु प्रागेव प्रक्षीणप्रतिरुद्धत्वात् कोशा धनसञ्चयाः परिच्छदाः गृहोपकरणानि च तानि दध्यौ । पक्षे मरणसमये ममतास्पदानां चिन्ता प्रसिद्धैव । प्रमदा चात्र ममतास्पदं व्यावहारिक्येव भार्या न पुरञ्जनी । जीवस्य स्थूलशरीरवियोगे बुद्धिवियोगाभावात् । एवं दुहित्रादयोऽपि व्यावहारिका एव मरणकाले बुद्धिविवेकादीनां स्मृत्यभावात् ॥ १६–१७ ॥ लोकान्तरमिति । मयि स्वामिनि लोकान्तरं गतवत्येषा मम भार्या अनाथा मया नाथेन विरहिता कुटुम्बिनी पुत्रादिकुटुम्बवती बालकाननुशोचती सती । नुमभाव आर्षः । कथं नु वर्त्तिष्यते ॥ १८ ॥ नेति । मत्परा मदेकाश्रया सा मयि अनशिते अभोजिते स्वयं न भुङ्क्ते तथा मयि अस्नाते स्वयं न स्नाति मयि रुष्टे सति स्वयं सुसन्त्रस्ता भवति भर्त्सिते भर्त्सनं कृतवति मया भर्त्सिते भर्त्सने कृते सतीति वा । भयात् यतवाक् गृहीतमौना भवति ॥ १६ ॥ प्रबोधयतीति । मामविज्ञं कदाचिद्धि- स्मृतव्यवहारं प्रबोधयति मयि व्युषिते देशान्तरगते मद्वियोगशोकेन कर्शिता भवति । सैवंभूता मत्परायणा एतद्गृहमेधीयं वर्त्म गृहस्थमार्गं वीरसूः पुत्रवत्यपि किं नेष्यति अनुवर्तयिष्यते अपि तु न नेश्यति । पक्षे देहनाशे मतेरपि मोहः स्यात् ॥ २० ॥ कथ- मिति । दारकाः पुत्राः दारकोः दारक्यः कन्याः वा । "छन्दसि" इति पूर्वसवर्णदीर्घः । ङीप् चार्षः । मयि गते सति न परमयन- माश्रयो येषां पुत्रः कन्याश्च । यद्वा परायणाः पराश्रयाः कन्याः अत एव दीनाः उदधौ समुद्रे भिन्ना नौर्येषां तादृशा जना इव कथं तु वर्त्तिष्यन्ते ॥ २१ ॥ एवमिति । एवं कृपणया मोहितया बुद्ध्या शोचन्तमतदर्हणं राजत्वाच्छोकानर्हमेनं पुरञ्जनं ग्रहीतुं कृता धीर्येन स भयमाना अभ्यपद्यत आजगाम । पक्षे चिद्रूपत्वेन शोकानर्हत्वेऽपि राजसाध्यासेन शोचन्तं गृहीतुं मृत्युराजगाम ॥ २२ ॥

पशुवदिति । यदा यवनैः पशुवत्पाशैर्बद्ध्वा एष पुरञ्जनः स्वकं क्षयं स्थानं प्रति नीयमानो जातस्तदा येऽस्यानुपथाः अनुसारिणोऽनुजीविनो भृत्या नागादयस्तेऽपि भृशमातुराः अत्यन्तव्याकुलाः सन्तः शोचन्तं समन्वद्रवन् अन्वगच्छन् । पक्षे यदा यवनैर्यमदूतैरयं नरकाननीयत तदा प्राणादयोऽपि तमन्वगच्छन् ॥ २३ ॥ पुरोमिति । प्रथमं यवनैरुपरुद्धो भुजङ्गमः पुरीपालको यदैव पुरीं विहायोपगतो बहिर्निर्गतस्तदा तमेवानु तत्पश्चादेव सा पुरी विशीर्णा विशकलिता सती प्रकृतिं स्वकारणं पृथिव्यादिकं गता लीना जाता । पक्षे प्राणादिनिर्गमानन्तरं शीर्णो देहो भूम्यादौ लीनः ॥ २४ ॥ विकृष्यमाण इति । बलीयसा प्रबलेन यवनेन प्रसभं बलात्कारेण विकृष्यमाणोऽपि पुरञ्जनः तमसा अज्ञानेन आविष्टो व्याप्तः सन् पुरः पूर्वं सुहृदं हितकर्त्तारं सखायमलक्षिततया सह वर्तमानमपि नाविन्दत् न सस्मार ॥ २५ ॥ तमिति । अनेन अदयालुना दयारहितेन ये यज्ञे पशवः संज्ञप्ताः काम्यकर्मसु खड्गैश्छिन्नास्तेऽस्य तदमीवं तस्य पापं क्रौर्यं वा तेनोत्पादितां स्वपीडां वा स्मरन्तः क्रुद्धाः नानाभयङ्करवेष- धारिणः सन्तो लोहमयैः कुठारैस्तं मार्गे चिच्छिदुः ॥ २६ ॥ अनन्तेति द्वयम् । प्रमदासङ्गेन दूषितः अनन्तपारे अतिमहति तमसि निमग्नः नष्टा पूर्वस्मृतिर्यस्य स शाश्वतीः समाः अनन्तान् वर्षान् आर्ति पीडामनुभूय तामेव प्रमदां पुरञ्जनीं मनसा गृह्णन् स्मरन् अनन्तरं पीडाभोगानन्तरं विदर्भदेशाधिपतेः राजसिंहस्य वेश्मनि गृहे प्रमदोत्तमा बभूव । पक्षे बहुकालं नरकदुःखमनुभूय तद्भोगनिवृत्तापापः स्वकृतपुण्यैः स्वर्गमप्यनुभूय तदनुक्तिरत्र प्राचीनबर्हिषो वैराग्याय । अतः परमस्मिन् प्रकरणे एतावदेव प्रकृतोपयोगि विवक्षितम् । स्त्रीत्वप्राप्तावपि पतिव्रताध्यानेन पूर्वादृष्टेन च धार्मिकाद्विदर्भाज्जन्माभूत् । धार्मिकसङ्गेन च विशुद्धस्य भागवतेन मलयध्वजेन सङ्गोऽभूत् । ततो विष्णुभक्तिस्ततो वैराग्यं ततस्तमेव भर्तृरूपं गुरुं पातिव्रत्यधर्मेण भजतो भगवत्प्रसाद- लब्धज्ञानेन मोक्ष इति । अन्यत्तु कथालङ्कारमात्रं तथापि किंचिद्वृत्तिसामान्येनेह योजयिष्यामः । विदर्भस्य विशिष्टधर्मोपलक्षितस्य कर्मठस्य राजसिंहस्य धर्मेण हि प्रजापालनेन यज्ञादिना च क्षत्रिया राजन्ते । तेषु श्रेष्ठस्य वेश्मनि जाता अत्र मरणकाले दुःखातिशयजनितमूर्च्छया क्षणमात्रं सद्बुद्धित्यागः । ततः स्वकर्मभोगान्ते पुण्यशेषेण धार्मिकगृहे जन्मेत्येतावद्विवक्षितं स्त्रीत्वपुंस्त्वादिकं त्वविवक्षितमेव ॥ २७–२८ ॥ उपयेमे इति । तां वैदर्भीं विदर्भराजपुत्रीं वीर्यं प्रभाव एव पणो वैवाहिकं देयं यस्यास्तां पाण्ड्यः पाण्डुदेशाधिपतिः परपुरञ्जयः महापराक्रमो मलयध्वजो युधि राजन्यान् निर्जित्योपयेमे विवाहितवान् । पक्षे मलयोपलक्षिते भगवद्भक्तिप्रधाने दक्षिणदेशे परमभागवतत्वेन ध्वज इव प्रसिद्धो मलयध्वजः पण्डा भगवद्भजनादेव पुरुषार्थसिद्धिरिति शास्त्रार्थनिर्णयेन निश्चयात्मिका बुद्धिस्तामर्हतीति पण्ड्यः पण्ड्य एव पाण्ड्यः । स्वार्थेऽण् । अत एव परपुरञ्जयः अन्यमतजनितसंशयखण्डनदक्षः अत एव राजन्यान् अन्यमतपरान्वादिनः युधि शास्त्रार्थसभायां निर्जित्य उपयेमे तं शिष्यत्वेनाङ्गी- कृतवान् ॥ २९ ॥

तस्यामिति । तस्यां वैदर्भ्यां स मलयध्वजः असितेक्षणां नीलकटाक्षामात्मजां कन्यां जनयांचक्रे । तथा ततो यवीयसः कनिष्ठान् सप्त सुतान् जनयांचक्र इति सम्बन्धः । ते च सप्त द्रविडदेशे भूभृतो राजानो जाताः । पक्षे तस्मिन् शिष्ये स गुरुः असितस्य श्रीकृष्णस्येक्षणं यया तां भगवत्कथाश्रवणसेवादिरुचिं तदनन्तरभाविनः श्रवणकीर्त्तनस्मरणपादसेवनार्चनवन्दनदास्य-

लक्षणसप्तभक्तिप्रकारांश्चोत्पादयामास। सख्यात्मनिवेदनयोस्तु जानासि किं सखायं मामित्यादिना भगवतैवाग्र उपदेक्ष्यमाणत्वादि-दानीमनुत्पन्नत्वेन सप्तेत्युक्तम्। द्रविडदेशस्य श्रवणादिसप्तभक्तिप्रधानत्वात्तत्पालकत्वं ज्ञेयम् ॥ ३० ॥ एकैकस्येति। हे राजन्! तेषां पुत्राणामेकैकस्य पुत्रस्य पुत्राणामर्बुदमर्बुदमभवन्। यद्वंशधरैः येषां पुत्राणां वंशप्रभवैस्ततः परं मन्वन्तरपर्यन्तं मही भोद्यते। पक्षे निरन्तरमभ्यस्यमानानां श्रवणादीनां प्रत्येकमनन्तप्रकारा जाताः। येषां वंशधरैः प्रकारभेदैः मही भोद्यते महीवर्त्तिनः प्राणिनोऽविद्याकामकर्मभ्यो रक्षिष्यन्ते ॥ ३१ ॥ अगस्त्य इति। मलयध्वजस्य प्राक् प्रथमा तां दुहितरं धृतव्रतामगस्त्य उपयेमे। यस्याम् इध्मवाह आत्मजो यस्य तादृशो दृढच्युतो नाम मुनिर्जातः। अगस्त्यस्य तस्यां दृढच्युत तस्मादिध्मवाह इत्यर्थः। पक्षे अगानि निष्क्रियाणि गात्राणि स्त्यायति सङ्घातयतीत्यगस्त्यो मनः। धृतानि व्रतानि शमदमादीनि यया तां प्राग्दुहितरं कृष्णसेवारुचिम् उपयेमे मनः कृष्णे दृढां रतिं बबन्ध। यस्यां दृढेभ्यः सत्यलोकादिभ्योऽपि च्युतः निस्पृहः मुनिः भोगाद्विरागो जातः स च इध्मवाहः आत्मजो यस्य सः तादृशोऽभूत्। "विरागात् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुत्युक्तसमिद्वहनोप-लक्षितो गुरूपगमोऽभूत्। न ह्यविरक्तस्य गुरूपगमो भवति ॥ ३२ ॥ विभज्येति। ततश्च कृष्णमारिराधयिषुः सन् राजर्षिर्मलयध्व-जस्तनयेभ्यः स्वपुत्रेभ्यः क्ष्मां पृथ्वीं विभज्य विभागेन दत्त्वा स्वयं कुलाचलं पर्वतं जगाम। पक्षे तनयेभ्यः क्ष्मां विभज्य पृथिव्यां श्रवणादिभक्तिभेदानवस्थाप्य मलयध्वजः गुरुः कुलाचलं पुण्यक्षेत्रम् एकान्तदेशं जगाम ॥ ३३ ॥ हित्वेति। मदयतीति मदिरमीक्षणं यस्याः सा युवतिरपि वैदर्भी गृहान् सुतान् भोगान् हित्वा ज्योत्स्ना चन्द्रिका रजनीकरमिव पाण्ड्येशं मलयध्वजं स्वपतिमन्वधावत अनुजगाम। पक्षे वैदर्भी पूर्वं पुरञ्जनत्वेनोक्ता इदानीं विदर्भगृहे स्त्रीरूपेण जाता शिष्यतां प्राप्ता जीवव्यक्तिः पाण्ड्येशं गुरुमन्वधावत। पतिरेव गुरुः स्त्रीणामिति पतिर्गुरुवदुक्तः ॥ ३४ ॥ तत्रेति द्वयम्। तत्र देशे चन्द्रवसा नाम ताम्रपर्णी वटोदका चेति नद्यस्तासां पुण्यैः सलिलैर्नित्यमुभयत्र अन्तर्बहिश्चात्मनो मलं मृजन् शोधयन् कन्दैः अस्थिभिः बीजैः मूलैः फलैः पुष्पैः पर्णैः तृणैः उदकैश्च वर्तमानो देहादिस्थितिं सम्पादयन् शनैर्गात्रकर्शनं शरीरशोषकं तप आस्थितः कृतवान्। पक्षे गुरुस्तपसि स्थितः ॥ ३५–३६ ॥ शीतेति। समदर्शनः स शीतोष्णे वातवर्षे क्षुत्पिपासे प्रियाप्रिये सुखदुःखे इति द्वन्द्वानि अजयत् ॥ ३७ ॥

तपसेति। तपसा विद्यया उपासनया नियमैर्यमैश्च पक्वाः निर्दग्धाः कषायाः गैरिकादिकषायरूपवद्दुर्निवाराः कामक्रोधादयो मलानि यस्य सः अत एव विजिता अक्षादयो येन सः अक्षाणीन्द्रियाणि अनिलः प्राणः आशयः अन्तःकरणं ब्रह्मण्यात्मान-मयुयुजे ॥ ३८ ॥ आस्ते इति। एवं स्थिरः अनुद्विग्नचित्तः सन् दिव्यं वर्षशतं स्थाणुरिव एकत्र स्थान आस्ते स्म। ततश्च वासुदेवे भगवति रतिं प्रीतिमुद्वहन् अन्यत् देहादिप्रपञ्चं न वेद। पक्षे वर्षशतमिति ज्ञानस्य दुःसाध्यतां दर्शयति ॥ ३९ ॥ स इति। स एवं वर्त्तमानः आत्मनि कार्यकारणसंघाते वर्त्तमानमेव आमर्शस्य अन्तःकरणवृत्तेः साक्षिणम् आत्मानं यथा स्वप्ने ममेदं शिरश्छिन्नमित्यादिप्रतीतौ तद्व्यतिरिक्तमात्मानं छिन्नशिरस्कस्य प्रकाशकं वेत्ति तद्वत् व्यापकतया देहादिप्रकाशकत्वेन व्यतिरिक्ततया देहादिव्यतिरिक्तत्वे च विद्वान् अन्यस्मात् विरराम ॥ ४० ॥ साक्षादिति द्वयम्। नृप! साक्षाद्गुरुणा हरिणा भगवतोक्तेनान्तःकरणे प्रकाशितेन अत एव विश्वतः सर्वतोमुखं यथा भवति तथा स्फुरता प्रकाशमानेन विशुद्धज्ञानदीपेन हेतुना परे ब्रह्मणि "ब्रह्मैवाहं न संसारी" इति आत्मानमीक्षमाणस्तथा अहमेव ब्रह्म इत्यात्मनि परब्रह्म ईक्षमाणः ततः ईक्षाम् ईक्षणं वृत्तिमपि विहाय अस्मात्संसारादुपरराम मरणं प्राप्तः। आद्येन शोकादिनिवृत्तिः द्वितीयेन ब्रह्मपारोक्ष्यनिवृत्तिः अतो व्यतिहारेणे-क्षणम्। ईक्षायाश्च दग्धेन्धनाग्निवत्स्वयमुपशान्तिः ॥ ४१–४२ ॥ पतिमिति। भोगान् हित्वा पत्या सहागता पतिदेवता पतिव्रता सा वैदर्भी मलयध्वजं परमधर्मज्ञं स्वपतिं प्रेम्णा पर्यचरत् सेवितवती। पक्षे शिष्यः पतिव्रतावद्भक्त्या गुरुं सेवितवान् ॥ ४३ ॥ चीरेति। चीरं जीर्णं वासो यस्याः सा व्रतेन क्षामा दुर्बला वेणीभूताः प्रसाधनाभावादेकीभूताः शिरोरुहाः केशाः यस्याः सा उपपतिं पत्युः समीपे। यद्वा पत्युः किंचिन्न्यूना तत्समा सतीत्यर्थः। "उपोधिके च" इति चाद्धीने कर्मप्रवचनीयः तद्योगे द्वितीया। शान्तज्वालाधःस्थमङ्गारावस्थमनलमुपशान्ता शुद्धा धूमरहिता शिखा ज्वाला इव बभौ। पक्षे गुरुणा सह शिष्योऽपि तद्वज्जातः ॥ ४४ ॥ अजानतीति। तस्मिन् यदा साऽङ्गना वैदर्भी देहं त्यक्तवन्तमपि सुस्थिरासनमुपविष्टं तं प्रियतमं पतिमुपरतं देहं त्यक्तवन्तमजानती तदा आसाद्य समीपं गत्वा यथापूर्वमाचरत् असेवत ॥ ४५ ॥ यदेति। पत्युरङ्घ्रिमर्चती नुमभाव आर्षः। यदा तस्मिन्नङ्घ्रावूष्माण नोपालभत नापश्यत्तदा यूथभ्रष्टमृगीवत्संविग्नहृदया व्याकुलचित्ता आसीत् पक्षे शिष्यो गुरोः शरीरत्यागं दृष्ट्वा व्याकुलो जातः ॥ ४६ ॥ आत्मानमिति। तदा सा विपिने अबन्धुं पत्यादिरहितमत एव दीनमात्मानं शोचती। नुमभाव आर्षः। विक्लवाश्रुभिः स्वस्तनावासिच्य सुस्वरं प्ररुरोद। पक्षे गुरुवियोगे शिष्यो रुरोद ॥ ४७ ॥ उत्तिष्ठेति। हे राजर्षे! त्वमुत्तिष्ठोत्तिष्ठ दस्युभ्यश्चोरेभ्यस्तथा क्षत्रबन्धुभ्यः अधार्मिकेभ्यः क्षत्रियेभ्यश्च बिभ्यतीमुदधिपर्यन्तमिमां पृथ्वीं पातुं रक्षितुमर्हसि। पक्षे विरुद्ध-मतावलम्बिभ्यः स्वमतपद्धतिं रक्षितुमर्हसि ॥ ४८ ॥ एवमिति। पतिमनुगता बाला विपिने वन एवं विलपती। नुमभाव आर्षः। भर्तुः पादयोः पतिता रुदन्ती च सती नुमार्षः अश्रूण्यवर्तयत् मुमोच पक्षे शिष्योऽश्रूणि मुमोच ॥ ४९ ॥

चितिमिति। तदा दारुमयीं चितिं चित्वा कृत्वा तस्यां पत्युः कलेवरं निधाय अग्निना तामादीप्य च विपलन्ती स्वयमप्य-नुमरणे चितिप्रवेशेन मरणे मनो दधे। पक्षे शिष्यो गुरुदेहक्रियां कृत्वा जीवने आसक्तिं त्यक्तवान् ॥५०॥ तत्रेति। हे प्रभो! तस्मिन्

देशे काले च आत्मवान् आत्मज्ञानवान् कश्चित्पूर्वतरः सखा ब्राह्मणस्वरूपधरस्तां रुदतीं वल्गुना मनोहरेण साम्ना प्रियवाक्येन सान्त्वयन् संबोधयन्नाह। पक्षे पूर्वतरः अनादिः सखा अन्तर्यामी आत्मवान् स्वतन्त्रः सर्वज्ञश्च तुल्यमन्यत् ॥५१॥ का त्वमिति। त्वं काऽसि किन्नामासि कस्य कन्यासि यस्य यम्। शेषे षष्ठी। शोचसि सोऽयं शयानस्तव को वा। येन सहाग्रे पूर्वं विचचर्थ। इडभाव आर्षः। तत एत्वाभ्यासलोपयोरप्यभावः। तं मां सखायं किं जानासि। पक्षे केति स्त्रीत्वनिर्देशः पारोक्ष्यार्थः। गुरुभक्तं संसाराद्विरक्तं विशुद्धान्तःकरणमन्तर्यामी भगवान् कृपयाऽविर्भूय प्रतिबोधयति ॥ ५२ ॥ अपीति। हे सखे ! यद्यपि मां न जानासि तथाप्यात्मानं त्वामपि अविज्ञातस्य कस्यचित्सखासीत्येवं किं स्मरसि ? सख इति पुंस्त्वं जीवाभिप्रायेण। सख्यं स्मारयन्स्ववियोगजमनर्थमाह। यतस्त्वं भौमभोगे रतः आसक्तः पदं भोगस्थानमन्विच्छन् अन्वेषयन् मां हित्वा गतोऽभू ॥ ५३ ॥ हंसाविति। हे आर्य ! हे श्रेष्ठ ! अहं च त्वं च द्वावपि हंसौ पक्षिणौ सखायौ मानसायनौ मानससरसि कृतनिवासौ यतस्ततः पूर्वं सहस्रपरिवत्सरान् तावत्कालपर्यन्तमोको गृहमन्तरा विनैवाभूतां वा एवार्थे। पक्षे हंसौ शुद्धौ मानसं हृदयमयनं ययोस्तो पूर्वं यावन्महाप्रलयस्तावत्सहस्रपरिवत्सरान् ओको विनैवाभूताम्। देहादिसङ्घातस्य स्थानस्य तदानीं ब्रह्मणि विलयात् ॥ ५४ ॥ स इति। हे बन्धो ! स हंस एव त्वं ग्राम्ये विषयसुखे मतिर्यस्य स तथाभूतः सन्मां परहितकारिणं विहाय महीं गतस्तत्र विचरन् कयाचित् स्त्रिया निर्मितं पदं पुरमद्राक्षीर्दृष्टवान्। पक्षे ग्राम्यमतिर्विषयसुखाभिलाषी मां विहाय विस्मृत्य महीं त्रिलोकीं गतो देवतिर्यगादियोनिषु विचरन् कयाचित् स्त्रिया अनिर्वाच्यया मायया निर्मितं पुरं मनुष्यशरीरं त्वमद्राक्षीः ॥ ५५ ॥

पञ्चाराममिति। पञ्च आरामा उपवनानि यस्मिंस्तत् नव द्वाराणि यस्मिं त् एकः पालो यस्मिंस्तत् त्रीणि कोष्ठानि प्राकारा यस्मिंस्तत् षट् कुलानि अभीष्टविषयप्रापका वणिजो यस्मिं नत् पञ्चविपणा हट्टा यस्मिंस्तत् पञ्चसंख्या प्रकृतिः उपादानकारणं यस्मिंस्तत् स्त्री धवः पतिः स्वामिनी यस्मिन् ॥ ५६ ॥ भगवान् स्ववचः स्वयमेव च व्याचष्टे—पञ्चेति। पञ्चेन्द्रियाणामर्था विषयाः रूपरसादयः आरामा ज्ञेयाः। नव प्राणा इन्द्रियद्वारो ज्ञेयाः। एकः प्राणः पाल इति ज्ञेयः। एतत् स्पष्टत्वान्न व्याख्यातम्। तेजोऽबन्नानि पृथिव्यप्तेजांसि कोष्ठानि ज्ञेयानि। इन्द्रियाणां संग्रहः। पञ्च ज्ञानेन्द्रियाण्येकं मन इति षट्कुलं ज्ञेयम् ॥ ५७ ॥ विपण इति। क्रियासु शक्तिर्यस्य सः कर्मेन्द्रियवर्गो विपणो ज्ञेयः। पञ्च महाभूतान्येव प्रकृतिरुपादानकारणं ज्ञेयम्। तस्य शरीरनाशेऽप्याप्रलयं नाशाभावादव्यया शक्तिः मायाकार्यभूता बुद्धिरेवाधीशा यस्येति स्त्रीधवमित्यस्य व्याख्या। स पुमानत्र शरीरलक्षणे पुरे प्रविष्टो बुद्धीन्द्रियादावहन्ताममताध्यासेनात्मानं नावबुद्ध्यते न जानाति ॥ ५८ ॥ तस्मिन्निति। हे प्रभो ! तस्मिन् शरीरलक्षणे पुरे त्वं प्रविष्टः रामया बुद्धिलक्षणया स्त्रिया स्पृष्टो मोहितस्तया रममाणस्तस्यां कृतात्माध्यासः अत एव न विद्यते श्रुते स्वरूपभूते ब्रह्मत्वे श्रुतस्य ममेश्वरस्य वा स्मृतिर्यस्य सः तत्सङ्गात् राजसबुद्धिसङ्गादीदृशीं तवायोग्यां पापीयसीं दुःखबहुलां दशां प्राप्तोऽसि ॥ ५९ ॥ नेति। त्वं विदर्भदुहिता नासि अयं वीरः मलयध्वजस्तव सुहृत् पतिर्न। यया नवद्वारे पुरे त्वं रुद्धस्तस्याः पुरञ्जन्याः पतिरपि त्वं न भवसि ॥ ६० ॥ मायेति। यत्पूर्वजन्मनि त्वमात्मानं पुमांसममन्यथास्तथेदानीं सतीं श्रेष्ठां स्त्रियं यन्मन्यसे सैषा माया मया सृष्टा यत उभयमपि वस्तुतो नास्ति। स्त्रीपुरुषशरीराध्यासेनैव जीवे तथा व्यवहारात्। यत् यस्मात् वै निश्चयेन आवां हंसौ शुद्धौ अतः आवयोर्वक्ष्यमाणां गतिं स्वरूपं पश्य ॥ ६१ ॥ अहमिति। भोः सखे ! अहमेव भवान् न चान्यः इति विचक्ष्व त्वमेवाहमिति विचक्ष्व। व्यतिहारोपदेशः प्राग्वच्छोकादिनिवृत्तिपारोक्ष्यनिवृत्त्यभिप्रायः। यतो वस्तुभेदो नास्त्यतः कवयो विवेकिनो नौ आवयोर्मनाक् ईषदपि छिद्रमन्तरं भेदं जातु कदाचिदपि न पश्यन्ति ॥ ६२ ॥ यथेति। यथा पुरुषः एकमेवात्मानं स्वदेहमादर्शचक्षुषोः आदर्शे निर्मले निर्मलं महान्तं स्थिरं तेजस्विनं परस्य चक्षुषि च ततो विपरीतं समलं तुच्छं निस्तेजसमेवं द्विधाभूतं द्विप्रकारकमवेक्षते पश्यति। तथैवावयोरपि विद्याकृतं सर्वज्ञत्वादि अविद्याकृतं चाज्ञत्वादि अनन्तरं भेदः न स्वरूपेण। वस्तुतोऽभेदोऽस्ति ॥ ६३ ॥ अथ नारदवाक्यम्—एवमिति। एवमुक्तप्रकारेण यः पूर्वं पुरञ्जनत्वेनेदानीं वैदर्भीत्वेन चोक्तः सः मानसो मानससरोनिवासी हंसो हंसेनाविज्ञातनाम्ना सख्या प्रतिबोधितः अतः स्वस्थः पतिवियोगजनितं शोकं विहाय सावधानचित्तः संस्तद्व्यभिचारेण तेन सख्या सह विभागेन नष्टमात्मनः स्मृतिं स्वरूपज्ञानं पुनरपि आप प्राप्तवान्। पक्षे स मानसो हंसः क्षेत्रज्ञः हंसेन परमात्मना प्रतिबोधितः सन् स्वस्थः आत्मनि स्थितः संश्चिरं ध्यात्वा तद्व्यभिचारेणेश्वरवियोगेन विषयाभिलाषबुद्ध्या नष्टां स्मृतिं ब्रह्माहमिति ज्ञानं पुनः आप ॥ ६४ ॥ बर्हिष्मन्निति। हे बर्हिष्मन् ! पारोक्ष्येण राजकथामिषेण एतत् अध्यात्मम् आत्मतत्वं प्रदर्शितम्। अतः कथामात्रमेतदिति धियं मा कृथाः। यत् यतः देवो विश्वभावनः भगवान् परोक्षकथनं प्रियं यस्य तादृशोऽस्ति। साक्षादात्मज्ञानकथाकथने तव चेतसि कथा नायातीति भावः ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायामष्टाविंशोऽध्यायः ॥ २८ ॥



# अथैकोनत्रिंशोऽध्यायः

## प्राचीनबर्हिरुवाच

भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते । कवयस्तद्विजानन्ति न वयं कर्ममोहिताः ॥ १ ॥

उनत्रिंशे परोक्षार्थस्योक्तस्य विवृतिः क्रमात् । ईशसङ्गान्मुक्तिरत्र श्लोकाः सार्द्धा रसाद्रयः ( ७६ ) ॥
षडुवाचेत्यथो सार्द्धाश्चतुर्नन्दा ( ६४॥ ) अनुष्टुभः ॥ २९ ॥

भगवन्निति । हे भगवन् ! ते तव वचोऽस्माभिः सम्यग् नावगम्यते । यतः कवयो विवेकिनः तद्विजानन्ति । वयं तु कर्मणा मोहिता आत्मविद्यायामकृताभ्यासाः अतः न विजानीमः ॥ १ ॥ पुरुषमिति । पुरुषं जीवं पुरञ्जनं विद्यात् जानीयात् । यद्यतः स आत्मनः स्वस्य एकद्वित्रिचतुष्पादं बहुपादम् अपादकं च पुरं शरीरं व्यनक्ति स्वकर्मणा प्रकटयति जनयति तथा च मूलानुसारेण पुरम् अनक्ति इति विग्रहे रान्तपुरशब्दे दीर्घाभाव आर्षः । अदन्तपुरशब्दो शकन्ध्वादिः । पुरं जनयतीति विग्रहे मुमार्षः ॥ २ ॥ य इति । यश्चाविज्ञातशब्देनाह्वतः व्याहृतः कथितस्तस्य पुरञ्जनस्य सखा स ईश्वर इति विद्यात् । यत् यस्मात् पुंभिः कर्तृभिर्नामभिः क्रियाभिर्गुणैश्च न ज्ञायते ॥ ३ ॥ यदेति । यदा पुरुषो जीवः कात्स्न्र्येन साकल्येन प्रकृतेर्गुणान् जिघृक्षन् ग्रहीतुमिच्छन् जातस्तदा तत्र तेषु एकद्विपादादिषु शरीरेषु मध्ये नवेन्द्रियच्छिद्राणि द्वाराणि यस्मिंस्तत् द्वौ हस्तौ अङ्घ्री च यस्मिंस्तन्मनुष्यशरीरं साधु सर्वविषयभोगौपयिकमित्यमनुत ॥ ४ ॥ बुद्धिमिति । प्रमदां तु बुद्धिमविद्यां विद्यात् । देहेन्द्रियादिषु यत्कृतं यया बुद्ध्या कृतं ममाहमिति मतिर्भवति । यां बुद्धिमधिष्ठाय आश्रित्य पुरस्कृत्यास्मिन्देहे पुमान् जीवोऽक्षभिरिन्द्रियैर्गुणान् रूपरसादीन् विषयान् भुङ्क्ते । अक्षभिरित्यत्र "छन्दस्यपि दृश्यते" इत्यजादावप्यनङ् ॥ ५ ॥ सखाय इति । इन्द्रियगणा दश सखायो ज्ञेयाः । यत्कृतं यैरिन्द्रियैर्जनितं कर्म ज्ञानं च भवति । सख्यस्तद्वृत्तयस्तेषामुभयविधेन्द्रियाणां वृत्तयो ज्ञेयाः । प्राणापानादिभेदेन पञ्च वृत्तयो यस्य स प्राणः पञ्चशिरा उरग इव भवतीति स एव पुरपालकः पञ्चशिरा नागो ज्ञेयः ॥ ६ ॥ बृहदिति । एकादश महाभटा इत्यनेनैकादशो महाभटो येष्वित्यत्रोभयेन्द्रियनायकत्वेन बृहद्बलं महाबलं मनो विद्यात् । पञ्चालशब्देन कथिता देशविशेषाः । रूपरसादयः पञ्च ज्ञानेन्द्रियविषया ज्ञेयाः । यत् येषामिन्द्रियाणां मध्ये नव खानि द्वाराणि यस्मिंस्तथाविधं पुरं शरीरं भवति ॥ ७ ॥

अक्षिणी इति । अक्षिणी नासिके कर्णाविति द्वे द्वे द्वारावेकत्र निर्मिते मुखं शिश्नं गुदश्च पृथगिति तत्र यस्तत्तदिन्द्रियसंयुतो जीवः स तैरक्ष्यादिच्छिद्रैर्बहिर्विषये देशे याति ॥ ८ ॥ अक्षिणी इति । अक्षिणी नासिके आस्यम् इति पञ्च पुरः प्राङ्मुखस्य पुरञ्जनपुरस्य पूर्वभागे शरीरस्याग्रभागे कृताः दक्षिणः कर्णो दक्षिणा द्वाः स्मृता तथा उत्तरः कर्णः उत्तरा द्वाः स्मृता ॥ ९ ॥ पश्चिम इति अदूर्धम् । ये द्वारौ पश्चिमे इत्युक्ते ते इहाधो गुदं शिश्नं चोच्यते ॥ १० ॥ खद्योतेति । ये च खद्योताविर्मुखी प्रागेकत्र निर्मिते द्वारावुक्ते ते अत्र शरीरे नेत्रे ज्ञेये । यत्तु विभ्राजितं जनपदमुक्तं तद्रूपं ज्ञेयम् । यो द्युमान्नाम सखा उक्तस्तच्चक्षुरिन्द्रियम् । तत्सखः पुरञ्जनस्तदीश्वरः जीवो ज्ञेयः । ताभ्यां विभ्राजितं यातीत्युक्तम् । तत्ताभ्यां नेत्राभ्यां रूपं विचष्टे पश्यति ॥ ११ ॥ नलिनीति । यौ नलिनीनालिनीति द्वे द्वारावेकत्रोक्ते ते नासे नासिकाच्छिद्रे ज्ञेये । यः सौरभदेश उक्तः स गन्ध उच्यते । अवधूतः प्रोक्तो यः सः घ्राण इन्द्रियं ज्ञेयम् । अवधूनोत्यवधूतो वायुस्तदात्मकेनोच्छ्वासेन सहैकस्थानत्वात् मुख्य द्वाः आस्यं मुखं ज्ञेयम् । रसज्ञ विपणान्वित इत्यत्र विपणो वागिन्द्रियमिति ज्ञेयम् । रसविच्छब्दोक्तरसज्ञशब्देन रसः रसनेन्द्रियं ज्ञेयम् । अत्र रसज्ञ इति पूर्वत्रोक्तस्य रसविदित्यस्यानुवादः । रस इति तु व्याख्या । एवमग्रेप्यनुवादव्याख्ये ज्ञेये । नवाक्षरैकपादोऽयमनुष्टुब्भेदः इति केऽप्याहुः ॥ १२ ॥ आपण इति आपणो देशोऽत्र व्यवहारो वाग्व्यापारो भाषणं ज्ञेयम् । बहूदनदेशोऽत्र चित्रं नानाविधमन्धः अन्नं ज्ञेयम् । पितृहूर्नाम दक्षिणस्यां द्वाः इति दक्षिणः कर्णो ज्ञेयः । उत्तरदिशि देवहूर्द्वा इत्येतेनोत्तरः कर्णः स्मृतः कथितः ॥ १३ ॥ प्रवृत्तमिति । दक्षिणपञ्चालं यातीत्यत्र पञ्चालसंज्ञितं प्रवृत्तं शास्त्रं कर्मकाण्डात्मकं ज्ञेयम् । उत्तरपञ्चालं यातीत्यत्रापि च पञ्चालसंज्ञितं निवृत्तं शास्त्रमुत्तरकाण्डात्मकं ज्ञेयम् । याति श्रुतधरान्वित इत्यत्र श्रुतधरशब्दितं श्रोत्रेन्द्रियं ज्ञेयम् । यतः प्रवृत्तं शास्त्रं श्रुत्वा तदुक्तं कर्मानुष्ठाय पितृभिराहूतः पितृयानं व्रजति निवृत्तं च शास्त्रं श्रुत्वा तदुक्तोपासनाद्यनुष्ठाय

देवैराहूतो देवयानं च व्रजतीति परम्परया श्रुतधराख्यात् श्रोत्रादेव निर्मितात्पुमान् व्रजेत् व्रजतीत्यर्थः ॥ १४ ॥ आसुरीति। अर्वाक् नीचैः आसुरी द्वाः इति मेढ्रं ज्ञेयम्। दुर्मदेन ग्रामकं नाम विषयं यातात्यत्र ग्रमकशब्दोक्तो ग्रामिणां रतिर्व्यवायः स्त्रीसङ्गो ज्ञेयः। दुर्मदेन समन्वित इति दुर्मदशब्देन उपस्थः प्रोक्तः। निर्ऋतिशब्देन गुद उच्यते ॥ १५ ॥ वैशसमिति। वैशसं यातीति नरकं यातीति ज्ञेयम्। लुब्धकेन समन्वित इति लुब्धकः पायुर्ज्ञेयः। अन्धौ द्वारावुक्तौ तौ हस्तपादावन्धौ ज्ञेयौ। ताभ्यां युक्तः याति करोति च। तत्र पादेन युक्तः पुमान् याति चलति, हस्तेन युक्तश्च कर्म करोति ॥ १६ ॥

अन्तःपुरमिति। स यर्ह्यन्तःपुरगत इत्यत्रान्तःपुरं च हृदयं ज्ञेयम्। विषूचीनसमन्वित इति विषूचीनपदस्यानुवादो विषूचिरिति आर्षः। तदर्थः मन उच्यत इति तत्र तद्गुणैर्मनोगुणैः मोहादिकं प्राप्नोति। तमसा मोहं सत्त्वेन प्रसादं रजसा च हर्षमिति विभागः ॥ १७॥ महिषी यद्यदीहेतेत्यादेरध्यायसमाप्तिपर्यन्तस्यार्थं संगृह्याह—यथायथेति। यथा यथा बुद्धिः स्वप्ने विक्रियते जाग्रति विकरोति वा इन्द्रियाणि परिणमयति तदा तस्या गुणैरक्तो लिप्तः आत्मा तथा तथा वृत्तीर्दर्शनस्पर्शनाद्याः केवलमुपद्रष्टैव स बलात् तया बुद्ध्यैव हेतुकर्त्र्या अनुकार्यते। न हि बुद्ध्यादिव्यतिरेकेण केवल आत्मनि तन्निकश्चित् विकारोऽस्ति ॥ १८ ॥ देह इति। रथं पञ्चाश्वमित्येतद्व्याचष्टे रथ इति। स्वप्ने देहो रथो ज्ञेयः। पञ्च ज्ञानेन्द्रियाण्यश्वा यन्ति इति। आशुगमित्येतद्व्याचष्टे संवत्सरस्येवाप्रतिहतो रयो वेगः एव गतिः यद्वा तादृशो वेगः प्रतीतितो यस्य स तथा वस्तुतस्त्वगतिः स्वप्नशरीरादेर्बुद्धावेव विवर्त्तत्वेन देशान्तरे गत्यभावात्। वयोगतिरिति पाठे संवत्सरश्च तत्कृतं वयश्च गतिर्यस्य द्वीपमित्यस्य व्याख्या नारदेन न कृता। द्वे पुण्यपापात्मके कर्मणी चक्रे यस्य सः। त्रिवेणुमिति व्याचष्टे। त्रयो गुणा एव ध्वजा यस्य सः पञ्च असवः प्राणा बन्धुराणि बन्धनानि यस्य सः ॥ १९ ॥ मनोरश्मिरिति। मनो रश्मिः प्रग्रहो यस्य सः बुद्धिरेव सूतो यस्य सः हृत् हृदयमेव नीडं रथिन उपवेशस्थानं यस्मिन् सः। द्वन्द्वौ शोकमोहौ कूबरौ युगबन्धनस्थाने यस्य सः। पञ्चप्रहरणमिति व्याचष्टे पञ्चेन्द्रियार्थाः विषया शब्दादयः प्रक्षिप्यन्तेऽस्मिन्निति तथा सः सप्त धातवस्त्वगादयो वरूथा रक्षार्थमावरणानि यस्य सः ॥ २० ॥ पञ्चविक्रममिति व्याचष्टे—आकूतिरिति। आकूतिः कर्मेन्द्रियपञ्चकं बाह्यो विक्रमो ज्ञेयः। चचार मृगयामिति व्याचष्टे। तत्र एकादशेन्द्रियाण्येव चमूर्यस्य सः। कत्रभाव आर्षः। पञ्चभिरिन्द्रियैः सूनाविनोदमिवान्यायेन विषयभोगं करोतीति पञ्चसूनाविनोदकृत् स जीवः मृगतृष्णावत्स्वप्ने मिथ्याभूतानेव विषयान्प्रधावति। मृगायां चचारेत्यस्येयं व्याख्या ॥ २१ ॥ संवत्सर इति सार्द्धम्। येन काल उपलक्षितो भवति स संवत्सरश्चण्डवेग इत्युक्तो ज्ञेयः। तस्य संवत्सरस्याहानि इह कथापक्षे गन्धर्वा इति रात्रयश्च गन्धर्व्य इति स्मृताः कथिताः। ते च सर्वे समुदिताः षष्ट्युत्तरशतत्रयं परिक्रान्त्या परिभ्रमणेन पुरुषस्यायुर्हरन्ति ॥ २२ ॥ कालेति। कालकन्या योक्ता सा जरा ज्ञेया। लोकः प्राणिवर्गस्तां साक्षान्नाभिनन्दति नाङ्गीकरोत्यतः यो यवनेश्वर इत्युक्तः स मृत्युर्लोकस्य क्षयाय नाशाय तां स्वसारं स्वसृत्वेन जगृहे ॥ २३ ॥ आधय इति। ये च तस्य यवनेश्वरस्य चराः संचारिणः आज्ञाकारिणः सैनिकाः यवनाः प्रोक्तास्त आधयो मनोव्यथाः व्याधयो देहव्यथाश्च ज्ञेयाः। भूतकृताः उपसर्गकृताश्च अरयो ज्ञेयाः। अनेन चारिभिरुपरुद्ध इत्यरिपदं व्याख्यातम्। पाठान्तरे भूतानामुपसर्गे पीडायामाशु शीघ्रो मृत्युहेतुः रयो वेगो यस्य सः भूतसम्बन्ध्युपसर्गाः पवनजलकुपथ्यादिकृताः श्वासतन्द्रादयः आशुरयस्येति वा शीतोष्णरूपभेदेन द्विविधो ज्वरः प्रज्वार इत्युक्तो ज्ञेयः ॥ २४ ॥

कथेयं वैराग्यार्थेत्याह—एवमिति द्वयम्। एवं कृपणया बुद्ध्येत्यन्तेनोक्तप्रकारेण बहुविधैरनन्तप्रकारैः देवभूतात्मसंभवैः आधिदैविकाधिभौतिकाध्यात्मिकभेदभिन्नैर्दुःखैः क्लिश्यमानः तमसा अज्ञानेनावृतः तृतीयालुगार्षः। देही जीवः प्राणधर्मान् अशनपिपासादीन् इन्द्रियधर्मान् अन्धत्वादीन् मनोधर्मान् कामादीन् स्वयं निर्गुणोऽप्यात्मन्यध्यस्यारोप्य देहादौ ममाहमिति कृत्वा कामलवान् विषयसुखलेशान्ध्यायन्मम स्युरिति चिन्तयन् तद्धेतुकर्मकृत् तदर्थं कर्माणि कुर्वन् देहे शतं वर्षाणि शेते ॥ २५–२६ ॥ यदेति। पुरुषो जीवो वस्तुतः स्वदृक् स्वप्रकाशस्वभावोऽपि यदा त्वात्मानमविज्ञाय तथा परमुत्कृष्टं गुरुं ज्ञानप्रकाशकं भगवन्तं चाविज्ञाय प्रकृतेर्गुणेषु गुणकार्यभूतेषु विषयेषु विषज्जेत आसक्तो भवति ॥ २७ ॥ गुणेति। तदा स एवावशः देहादिपरतन्त्रः सन् शुक्लं सात्त्विकं पुण्यजनकं कृष्णं तामसं पापजनकं लोहितं राजसं मिश्रमुभयजनकमेवं त्रिविधानि कर्माणि कुरुते। ततश्च यथाकर्म तत्तत्कर्मानुसारेण अभिजायते जन्म प्राप्नोति ॥२८॥ शुक्लादिति। शुक्लात्कर्मणः प्रकाशो भूयिष्ठो येषु तान्देवादिलोकान्कर्हिंचिदाप्नोति तथा लोहितात्कर्मणः दुःखमुदर्कमुत्तरफलं येषु तान् क्रियया आयासो येषु तान् मनुष्यादिलोकान्कर्हिचिदाप्नोति तथा कृष्णात्कर्मणः तमोऽज्ञानं शोकश्चोत्कटो येषु तान् तिर्यगादिलोकान् कर्हिचिदाप्नोति ॥ २९ ॥ क्वचिदिति। एक एव अन्धा अज्ञानावृता धीर्यस्य स जीवः क्वचित्पुमान् भवति क्वचिच्च स्त्री भवति। क्वचिन्नोभयं नपुंसको भवति। क्वचिद्देवो भवति। क्वचिन्मनुष्यो भवति क्वचिद्वा तिर्यग्भवति। एवं यथाकर्मगुणं कर्मगुणावनतिक्रम्यैव भवो जन्म भवति ॥ ३० ॥ क्षुदिति द्वयम्। क्षुत्परीतः क्षुधाव्याप्तः अत एव दीनः सारमेयः श्वा यथा गृहं गृहं चरन् दण्डं दण्डेन ताडनमोदनमन्नं वा यद्दिष्टं स्वप्रारब्धानुसारेणेश्वरेण निर्मितं तदेव

विन्दति लभते न तु स्वाभिलषितम् ॥ ३१ ॥ तथेति । तथा काम आशयेऽन्तःकरणे यस्य स जीवोऽपि उच्चावचपथा विहितप्रतिषेधलक्षणेनोच्चनीचमार्गेण । समासान्तभाव आर्षः । उपरिदेवलोके अधो नरकादिलोके मध्ये मनुष्यादिलोके वा भ्रमन् गच्छन् प्रियाप्रियं सुखमप्रियं दुःखं वा यद्दिष्टं भाग्यं तदेव याति प्राप्नोति ॥ ३२ ॥ दुःखेष्विति । यद्यपि तस्य दुःखस्य प्रतिक्रिया निवारणापायः शास्त्रादौ प्रदर्शितोऽस्ति तथापि दैवभूतात्महेतुषु आधिदैविकादिषु दुःखेषु मध्य एकतरेणापि दुःखेन जीवस्य न व्यवच्छेदः वियोगो नास्ति । दुःखप्राप्ते पूर्वं दुःखस्य विज्ञातत्वेन तदुपायसंभवः । प्राप्तिकाले च तन्निवृत्त्युपायस्य अपि दु खरूपत्वात् । यद्वा त्रिविधेष्वपि दुःखेषु मध्ये एकतरेणापि न व्यवच्छेदः । तत्तद्दुःखस्य प्रतिक्रियापि स्याच्चेत्तदपि न तासामपि दुःखरूपत्वात् ॥ ३३ ॥

यथेति । हि प्रसिद्धमेतत् । यथा पुरुषो गुरुं भारं शिरसा उद्वहन् यदा श्रान्तो भवति शिरःपीडया तदा स तं भारं स्कन्धेन आधत्ते तथापि भारस्यानपगतत्वाच्छ्राम्यत्येव । तथा सर्वाः प्रतिक्रियाः सर्व दुःखनिवृत्त्युपायाः एकान्ततो दुःखनिवर्त्तका न भवन्ति ॥ ३४ ॥ नेति । हे अनघ ! केवलं ज्ञानरहितं कर्म कर्मणां दुःखहेतु सर्वदुरितानामेकान्ततः अत्यन्तं सवासनस्य प्रतीकारो निवर्तकं न भवति । हि यतः दुरितलक्षणं तन्निवर्तकं चोभयमपि कर्म अविद्यया उपसृतं व्याप्तं यथा स्वप्ने दृष्टः स्वप्न इति तथा हि यथास्वप्ने पुत्रो मृत इति दुःखप्राप्तिः तत्स्वप्नमध्य एव पुनः स्वप्ने पुत्रो जीवतीति दुःखशमः तदेव पुनस्तं पुत्रं सर्पो दशतीति दुःखप्राप्तिरिति प्रबोधं विना स्वाप्निकं दुःखं न निवर्त्तते तथा अविद्यया देहान्तःकरणाद्यध्यासलक्षणयोपसृतम् अतोऽविद्यादशायां मोहेन कर्मणि विघ्नस्य पुनर्दुराचारस्य च संभवान्न सर्वथा दुःखनिवृत्तिः ॥ ३५ ॥ ननु तर्ह्यविद्याविलसितत्वेन संसृतिहेतोर्देहादेरप्यसत्त्वात्किं तन्निवर्त्तनप्रयासेन तत्राह –अर्थ इति । मनसा लिङ्गरूपेणात्मत्वेनाध्यस्तेन दुःखहेतुना सह स्वप्ने विचरतः पुरुषस्य यथा तदा दृष्टव्याघ्रसर्पचौरादिपदार्थे अविद्यमानेऽपि जागरेण निद्रादोषापगममन्तरेणोपायान्तरेण व्याघ्रादिदर्शनजं दुःखं न निवर्त्तते तथा जागरणेऽपि दुःखप्रदविषयस्य अविद्याकार्यत्वादविद्यानिवृत्तिं विना संसृतिः न निवर्त्तते ॥ ३६ ॥ अथेति । अथ तस्मात् अर्थभूतस्य सर्वपुरुषार्थस्वरूपस्याध्यात्मनो जीवस्य यतोऽज्ञानादनर्थपरम्पराजन्ममरणादिदुःखसन्ततिलक्षणा संसृतिर्भवति । तत्तस्याज्ञानस्य व्यवच्छेदो विनाशो गुरौ परमया भक्त्यैव भवति नान्यथा ॥ ३७ ॥ वासुदेव इति । भगवति वासुदेवे समाहितः सम्यक्कृतः भक्तियोगः सध्रीचीनेन प्रकारेण अनायासेन वैराग्यं ज्ञानं च जनयिष्यति ॥ ३८ ॥ स इति । हे राजर्षे ! नित्यदा निरन्तरं श्रद्दधानस्य श्रद्धावतः भगवत्कथाः शृण्वतः अधीयतः भगवन्नामादिकं स्मरतः "इक् स्मरणे" । यद्वा सानन्दं पठतः "इङ् धार्योः" इति शता । जनस्य अच्युतकथाश्रयः भगवत्कथादिभिः सम्पादितो भक्तियोगः अचिरात् शीघ्रमेव स्यात् । पुनरुक्तिः स्यादेवेति पुनरवधारणदार्ढ्याय ॥ ३९ ॥ यत्रेति । हे राजन् ! यत्र समाजे साधवः सदाचाराः शुद्धचेतसः भगवद्गुणानामनुकथनं भूयः भूयः कथनं श्रवणं च तत्र व्यग्रं सत्वरं चेतो येषां ते भागवताः स्युः ॥ ४० ॥ तस्मिन्निति । हे नृप ! तस्मिन्समाजे महद्भिर्भागवतैर्मुखरिताः मुखं रान्ति गृह्णन्ति मुखराः कृता इति मुखरिताः कीर्तिताः । मुखराशब्दात्तत्करोतीति णिजन्तात् क्तः । मधुभिदो भगवतश्चरितमेव पीयूषममृतं तदेव शिष्यत इति शेषो यासु ताः कथालक्षणाः सरितो नद्यः परितः वक्तृबहुत्वात्सर्वतः स्रवन्ति वहन्ति । ताः सरितो ये अवितृपः अलंबुद्धिरहिताः सन्तो गाढैः सावधानैः कर्णैः पिबन्ति शृण्वन्ति तान् वा अशनतृड्भयशोकमोहाः न स्पृशन्ति न बाधन्ते । अशनशब्देन क्षुल्लक्ष्यते । अनशनतृड्भोजनेच्छा इति वा ॥ ४१ ॥

एतैरिति । स्वभावजैः एतैः क्षुत्तृड्भयशोकमोहादिभिः नित्यमुपद्रुतोऽभिभूतो जीवलोकः नूनं निश्चितं हरेः कथारूपे अमृतसमुद्रे रतिं प्रीतिं न करोति ॥ ४२ ॥ भगवदनुग्रहं विना कथमपि इत्याह—प्रजापतीति त्रयम् । साक्षात् भगवान् प्रजापतीनां पतिर्ब्रह्मा तादृशो गिरिशश्च मनुः प्रजाध्यक्षः दक्षादयः नैष्ठिकाः ऊर्ध्वरेतसः सनकादयः ॥ ४३ ॥ मरीचिप्रभृतयः वसिष्ठान्ताः इति मदन्ता अहं नारदोऽन्ते येषां त एते ब्रह्मवादिनः ॥ ४४ ॥ अन्ये च वाचस्पतयः अन्योपदेशाय वाचोयुक्तिकुशलाः तपोविद्यासमाधिभि साधनैः पश्यन्तः दर्शनार्थं यतमाना अपि अद्यापि सृष्ट्यारम्भादद्यपर्यन्तमपि परमेश्वरं न पश्यन्ति न विदुः ॥ ४५ ॥ शब्देति । दुष्पारे अर्थतः पारशून्ये उरुविस्तरे ग्रन्थतोऽप्यतिवितते शब्दब्रह्मणि वेदाख्ये चरन्तोऽपि श्रमेण तदर्थं विचारयन्तोऽपि मन्त्रलिङ्गैर्मन्त्रप्रतिपादितैर्वज्रहस्तत्वादिरूपैः व्यवच्छिन्नं परिच्छिन्नमिन्द्रादिकमाग्रहेण भजन्तोऽपि तं परं परमेश्वरं तत्त्वतो न विदुः ॥ ४६ ॥ यदेति । यदा यं पुरुषम् आत्मभावितः मनसि चिन्तितः भगवान् अनुगृह्णाति तदा स भगवत्तत्त्वं ज्ञात्वा लोके व्यवहारे वेदे च कर्मणि परिनिष्ठिताम् आसक्तां मतिं जहाति ॥ ४७ ॥ तस्मादिति । हे बर्हिष्मन् ! तस्मात् अज्ञानात् अर्थकाशिषु परफलहेतुत्वेन प्रकाशमानेषु स्वर्गादिसुखसाधनत्वश्रवणेन श्रोत्रस्पर्शिषु कर्मप्रियेषु वस्तुतस्तु न स्पृष्टं वस्तु परमतत्त्वं यैस्तेषु कर्मसु अर्थदृष्टिं परमार्थसाधनबुद्धिं मा कृथाः ॥ ४८ ॥ स्वमिति । ये तु धूम्रा रागाद्याच्छन्ना धीर्येषां ते ये वेदं सकर्मकं स्वर्गादिसाधनकर्मबोधकमाहुस्ते अतद्विदः वेदार्थज्ञा न भवन्ति । यतः ते वै यत्र जनार्दनो देवोऽस्ति तं स्वलोकं स्वरूपभूतमात्मतत्त्वं न विदुः ॥ ४९ ॥ आस्तीर्येति । प्रागग्रैर्दर्भैः कुशैः कार्त्स्न्येन साकल्येन क्षितिमण्डलमास्तीर्य आच्छाद्य बृहद्वधात् बहुपशुवधात् मानी

महायज्वाऽहमित्यभिमानी अत एव स्तब्धः अविनीतस्त्वं यत् कर्म यच्च परं तत्फलं विद्यालक्षणं तदुभयमपि नावैषि न वेत्सि ॥ ५० ॥ तदित्यर्द्धम्। यतः हरिं तोषयतीति हरितोषं यत्तदेव कर्म यया तत् तस्मिन् हरौ मतिर्भवति सैव विद्या ॥ ५१ ॥ हरिरिति। हरिदेहभृतां प्राणिनामात्मा स्वरूपं स्वयमेव सर्वेषां प्रकृतिः कारणम् ईश्वरः नियन्ता च अतः तस्य पादमूलमेवेह संसारे नृणां शरणमाश्रयः यतः पादाश्रयणात् क्षेमः कालादिभयनिवृत्तिर्भवति ॥ ५२ ॥ स वा इति। यतो यत्र भगवति अण्वपि भयं न भवति। यतः स वै स एव प्रियतमः इति हरिरित्यादिसार्द्धश्लोकोक्तमर्थं यो वेद स एव विद्वान्। य एवं विद्वान् स एव गुरुरुपदेशेन परोद्धारे समर्थः स्वयं तु स हरिरेव ॥ ५३ ॥

प्रश्न इति हे पुरुषर्षभ ! एवं हि भवतः प्रश्नः संच्छिन्नः दत्तोत्तरः अत्र तवोद्धारार्थं कर्त्तव्यनिर्द्धारणे सुनिश्चितं महद्भिर्निर्द्धारितं गुह्यं देवैर्गोपितमतो लोके अप्रसिद्धमुपाय वदतो मे वचनं निशामय शृणु ॥ ५४ ॥ एतया कथयापि नातिनिर्विण्णं पुत्रागमनं प्रतीक्षमाणं नृपं दृष्ट्वा गृहान्निष्कासयितुं मृगरूपकेण महाभयं दर्शयति—क्षुद्रमिति। क्षुद्रमल्पं यवसादि चरतीति क्षुद्रचरं मुमार्षः। सुमनसां पुष्पाणां शरणे आश्रमे वाटिकायां मिथित्वा मिथो रहः कृत्वा "मिथोऽन्योन्यं रहस्यपि" इत्यमरः स्त्रिया सह मिलित्वेत्यर्थः। मिथःशब्दात्तत्करोतीति णिजन्तात् क्त्वा मिथधातोर्वा। रक्तं तत्रैवासक्तं षडङ्घ्रयो भ्रमरास्तेषां गणस्य सामसु गीतेषु लुब्धः कर्णो तस्य तं परेषां मांसादिभिः स्वकीयानसून् पयन्ति ते असुतृपस्तान्वृकानग्रे गच्छतो ज्ञानादविगणय्य अगणयित्वा यान्तं विचरन्तं पृष्ठे पृष्ठतो लुब्धकबाणेन भिन्नं भिन्नप्रायं मृगं मृगय अन्वेषय ॥ ५५ ॥ मृगरूपकोक्तमर्थं स्वयं व्याचष्टे सुमन इति। सुमनोभिः समानो धर्मः परिणामविरसत्वादिरूपो यासां तासां स्त्रीणां शरणे आश्रमे गृहे पुष्पमधुगन्धवत् क्षुद्रतममतितुच्छं काम्यकर्मणां विपाकजं फलरूपं जैह्वयोपस्थादिकामसुखलवं विचिन्वन्तमन्वेषयन्तं स्त्रीभिः सह मिथुनीभूय तदभिनिवेशितमनसं तासु स्त्रीष्वेवाभिनिवेशितं मनो येन तं षडङ्घ्रिगणसामगीतवदतिमनोहरेषु वनितापुत्रादिजनालापेष्वतितरामतिप्रलोभितः कर्णो यस्य तम् अग्रे वृकयूथवत् असुतृप आत्मनः आयुर्हरतः अहोरात्रान्तान् काललवविशेषान् अविगणय्य यान्तं गृहेषु विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तो मृत्युर्यमन्तः अन्तःकरणे हृदये शरेण पराविध्यति दूरादेव वेद्धुमिच्छति। यद्वा अन्तःशरेण अन्तर्नलिकायां गूढेन अलक्षितमारणव्यापारेणेत्यर्थः। तामिमात्मानं स्वमिह मृगकथायामहो राजन् ! भिन्नहृदयं मृतप्रायं द्रष्टुमर्हसीति अत्र मिथित्वेत्यस्य मिथुनीभूयेति रक्तमित्यस्याभिनिवेशितमिति असुतृप इत्यस्यायुर्हरत इति यान्तमित्यस्य विहरन्तमित्यर्थः॥ ५६ ॥ स त्वमिति। स त्वं मृगचेष्टितं विचक्ष्य कथितमृगवृत्तान्तेनात्मानं मृतप्रायं दृष्ट्वा आत्मनोऽन्तर्हृदि चित्तं नियच्छ, कर्णस्य श्रोत्रेन्द्रियस्य दूराच्छ्रवणमात्रादपि चित्तक्षोभकस्य धुनीं नदीमिव बहिर्वृत्तिं चित्ते नियच्छ। इन्द्रियान्तरनिरोधस्यापीदमुपलक्षणम्। असत्तमानां विषयासक्तानां यानि यूथानि तेषां गाथा वार्ता यस्मिंस्तदङ्गनाश्रमं स्त्रीप्रधानं गृहं जहि। परित्यज्य हंसानां शुद्धानां जीवानां शरणमाश्रयं भगवन्तं प्रीणीहि प्रसादयैवं क्रमेण संसारदुःखाद्विरम निवृत्तो भव ॥ ५७ ॥ श्रुतमिति। हे ब्रह्मन् ! भगवान् भवान् यदात्मतत्त्वमभाषत तन्मया श्रुतमन्वीक्षितं विचारितं च। एतत् त्वदुक्तमात्मतत्त्वम् उपाध्यायाः ये मम कर्मोपदेष्टारः आचार्यास्ते न जानन्ति। यदि विदुः जानन्ति तर्हि किन्न ब्रूयुः ॥ ५८ ॥

संशय इति। अत्रात्मतत्त्वे तु तत्कृतः उपाध्यायकृतस्तद्वाक्यविरोधेनासम्भावनादिरूपो महान् संशयो मे ममासीत्स त्वया संछिन्नः निरस्तः। यत्रात्मतत्त्वे इन्द्रियवृत्तयो न प्रभवन्ति। यत्र च ऋषयोऽपि मुह्यन्त्येव ॥ ५९ ॥ संशयमाह—कर्माणीति। येन देहेन इहास्मिँल्लोके पुमान् कर्माणि आरभते करोति तमत्रैव विहाय अमुत्र स्वर्गनरकादौ लोकान्तरे अन्येन कर्मोपस्थापितेन देहेन जुष्टानि कर्मफलानि सुखदुःखादीनि स जीवोऽश्नुते प्राप्नोतीति यद्वेदविदां वादस्तत्र तत्र शास्त्रे ह प्रसिद्धः श्रूयते स कथं सङ्गच्छते। कृतनाशाकृताभ्यागमप्रसङ्गात् स्थूलदेहस्यैव कर्तृत्वदर्शनात् तस्य चात्रैव नष्टत्वात्। संशयान्तरमाह। प्रोक्तं वेदोक्तं कर्म यज्ञादि यजनैः क्रियते तदनन्तरमेव परोक्षमदृश्यं सन्न प्रकाशते। अतो यागाधिकरणस्य स्थूलदेहस्य तत्कारणस्य च यज्ञादेर्नष्टत्वात् परलोके तत्फलभोगोऽपि दुर्घटः ॥ ६०–६१ ॥ प्रथमस्योत्तरमाह—येनेति। हि यस्मात् पुमान् जीवः इह येनैव मनःप्रधानेन लिङ्गेन लिङ्गदेहेन करणभूतेन कर्म आरभते करोति। तेनैव लिङ्गदेहेनाव्यवधानेन कर्तृभोक्तृदेहविच्छेदशून्येन स्वयं कर्त्तामुत्र परलोके स्वर्गनरकादौ तत्कर्मफलं सुखदुःखादि भुङ्क्ते। ततः स्थूलदेहनाशेऽपि लिङ्गदेहस्य अनाशान्न पूर्वोक्तशङ्कावकाशः ॥ ६२ ॥ लिङ्गदेहस्य भोक्तृत्वं स्वप्नदृष्टान्तेन स्पष्टयति—शयानमिति। यथा पुरुषः प्राणी इमं शयानं जाग्रद्देहं श्वसन्तं जीवं तमेव उत्सृज्य तदनुसन्धानं त्यक्त्वा तादृशेन जाग्रद्देहसदृशेन इतरेण अन्यप्रकारकर्मोपस्थापितेन पश्वादिदेहेन वा आत्मनि मनसि संस्काररूपेण आहितं कर्म कर्मफलं सुखदुःखादिकं भुङ्क्ते। तत्र स्वप्ने जाग्रद्देहाभावेऽपि देहान्तरेण भोगे न काऽप्यनुपपत्तिस्तथा लोकान्तरेऽपि भोगे न काऽप्यनुपपत्तिः ॥ ६३ ॥ ननु लिङ्गदेहविशिष्टस्य भोक्तृत्वमस्तु नाम। कर्तृत्वं तु दानप्रतिग्रहादिषु स्थूलविशिष्टस्यैवेत्याशङ्क्य लिङ्गविशिष्टस्यैव कर्तृत्वं स्थूलदेहस्य द्वारमात्रत्वमिति स्पष्टयति–ममेति। ममैते पुत्रदारगृहादयः असावहममुकनामा एतज्जातीय इति च ब्रुवन्मनसा यद्यद्देहमात्मत्वेन गृह्णीयात् गृह्णाति। ततो देहात् राद्धं सिद्धं कर्मापि

पुण्यपापात्मकं पुमान् गृह्णाति मयैतत्कर्म स्वसुखार्थमनुष्ठितमिति स्वीकरोति। येनैवमहङ्कारगृहीतेन कर्मणाऽस्य पुनर्भवो जन्म देहान्तरसम्बन्धो भवति। अन्यथा जन्मानुपपत्तेः। अतोऽभिमन्तुर्मनोविशिष्टस्यैव कर्तृत्वमभिमानविषयस्य तु देहस्य पुत्रादिदेहवद्द्वारमात्रत्वम्।। ६४।। कर्मणो नष्टत्वान्नामुत्र भोग इति द्वितीयसंशयोत्तरमाह—यथेति। यथोभयैरिन्द्रियाणामीहितैः ज्ञानकर्मलक्षणैर्युगपदप्रवृत्तैश्चित्तमनुमीयते। तदुक्तमक्षपादेनापि। युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति। ज्ञानकर्मेन्द्रियवृत्तयः कारणान्तरजन्यास्तदितरकारणसद्भावेऽपि युगपदनुत्पद्यमानत्वात् कारणान्तरं विना युगपदनुत्पद्यमानघटादिवदित्यनुमाने यथा कारणान्तररूपेण मनसः सिद्धिः एवं विचित्रचित्तवृत्तिभिः प्राग्देहजं कर्म पुण्यपापात्मकं लक्ष्यते अनुमीयत इत्यर्थः। चित्तवृत्तयो विचित्रकारणजन्याः विचित्रकार्यत्वात् चित्रपटवदित्यनुमानेन विचित्रकारणान्तरासम्भवे न तथाभूता प्राग्जन्मकर्मसिद्धिः।। ६५।।

ननु स्थूलदेहनाशे लिङ्गदेहस्यानाशं कथं प्रतीम इत्याशङ्क्याह—नानुभूतमिति। अनेन वर्तमानेन देहेन क्व च कुत्रचिदपि यन्नानुभूतम् अननुभूतमनुपभुक्तमदृष्टं चाश्रुतं च यद्रूपं यदात्मकं यादृक् यत्प्रकारं च तत्कदाचित् स्वप्नमनोरथादौ आत्मनि मनसि उपलभ्येत स्फुरति।। ६६।। तेनेति। हे राजन्! तेनोपलम्भेन हेतुना अस्य लिङ्गिनः लिङ्गविशिष्टस्य पूर्वसंस्काराश्रयस्य तादृशस्फुरणजनकमनुभवादिकं पूर्वदेहसम्भवं श्रद्धत्स्व निश्चयेन मन्यस्व। यतः अननुभूतोऽर्थो मनः स्प्रष्टुं मनसि स्फुरितुं नार्हति। तथा च पूर्वानुभवसंस्कारं विना वस्तुस्फुरणानुपपत्त्या तत्संस्कारसिद्धिस्तस्याश्रयं विनाऽनुपपत्त्या तदाश्रयत्वेन लिङ्गविशिष्टस्यात्मनः सिद्धिः कारणान्तरसद्भावेऽपि स्फुरणस्य कादाचित्कत्वेन तज्जनितसुखदुःखादिहेतुतज्ज्ञापककर्मसिद्धिः।। ६७।। मन इति। मनुष्यस्य मन एव उग्रत्वशान्त्यादिभिः औदार्यकार्पण्यादिभिश्च वृत्तिभिः लिङ्गैरयं पूर्वमपीदृश आसीदिति पूर्वरूपाणि शंसति ज्ञापयति तथा भविष्यतः पुनरुत्पत्स्यमानस्याप्येवंरूपो भविष्यतीति भावीनि रूपाणि शंसति। तथा न भविष्यतो नीचत्वं मोचं वा प्राप्स्यतो रूपं शंसति। अत एव मनोमयं लिङ्गशरीरं न पुनः पुनर्जायते। एवं निश्चये तव भद्रं भविष्यतीत्याशिषाऽभिनन्दति विश्वासार्थम्।। ६८।। ननु कदाचिद्दर्शनानर्हमपि स्वप्ने दृश्यते तत्राह—अदृष्टमिति। अत्र लोके क्वचित्स्वप्नाद्यवस्थाविशेषे अदृष्टं दर्शनानर्हमश्रुतं श्रवणानर्हं च मनसि स्फुरितं यथा येन प्रकारेण दृश्यं तथैव देशकालक्रियाश्रयं तत्तदनुमन्तव्यम्। यथा अन्यदेशाश्रयं समुद्रादिकं पर्वताग्रे निशाश्रयं नक्षत्रादिकं दिवसे अभ्यङ्गादिक्रियाश्रयं शिरोभेदनादिक्रियायां तदपि निद्रादिदोषेणैवानुमन्तव्यम्। परस्यापि तदनुपपत्तेस्तुल्यत्वादिति भावः।। ६९।। ननु क्वापि दरिद्रः आत्मानमिन्द्रं पश्यति तत्कथं सङ्गच्छेत तत्राह—सर्व इति। यतः सर्वे जनाः समनसः अनेकजन्मसंचितादृष्टसंस्कृतमनोयुक्ताः अतः शुभाशुभादृष्टवशादिन्द्रियगोचराः इन्द्रियविषयाः क्रियानुरोधेन सुखदुःखप्रदपुण्यपापानुसारेण क्रमेण वर्गशो यूथशश्च सर्व एव मनसि आयान्ति स्फुरन्ति यान्ति विस्मृताश्च भवन्ति। अतो नात्यन्तादृष्टचरः कश्चित्पदार्थोऽस्ति।। ७०।। तदेवं सर्वैरपि सर्वेऽर्थाः क्रमेण दृश्यन्त इत्युक्तमिदानीं युगपदपि सर्वदर्शनं कदाचिद्भवतीत्याह—सत्त्वेति। सत्त्वैकनिष्ठे सत्त्वे एवैका निष्ठा यस्य तस्मिन् भगवत्पार्श्ववर्तिनि भगवद्ध्यानपरे मनसीदं विश्वमुपरज्य संयोगमिव प्राप्यावभासते। प्रतीत्यनर्हस्यापि कदाचित्प्रतीतौ दृष्टान्तः। चन्द्रमस्युपरज्य तमो राहुरिव तदिदं शुद्धे मनसि सर्वविषयस्फुरणं योगप्रत्यक्षमिति प्रसिद्धम्।। ७१।। तदेवं स्थूलदेहनाशेऽपि लिङ्गदेहस्यानाशादन्यः कर्ताऽन्यो भोक्तेति दोषो नास्तीत्युक्तम्। तत्रैवं शङ्कते। ननु लिङ्गदेहस्य स्थूलदेहद्वारेणैव कर्तृत्वभोक्तृत्वे न तु केवलस्य तत्र कदाचित्स्थूलदेहाभावे जीवस्य कर्तृत्वभोक्तृत्वाभावान्मुक्तिः प्रसज्येत तत्राह—नाहमिति। बुद्धिश्च मनश्च अक्षाः इन्द्रियाणि च अर्थाः पञ्चतन्मात्राणि इत्येवंभूतो गुणव्यूहो गुणकार्यरूपोऽनादिमान् अनादिः लिङ्गदेहो यावद्वर्तते तावत् हि निश्चितमेतत् देहेन्द्रियपुत्रकलत्रादिविषयकोऽहंममेति भावोऽयमध्यासलक्षणः पुरुषे आत्मनि न व्यवधीयते विच्छिन्नो न भवति।। ७२।।

सुप्त्यादौ अहम्ममेति भावाप्रतीतौ हेतुमाह—सुप्तीति। सुषुप्तौ मुच्छायामुपतापे इष्टवियोगादिजनितेऽत्यन्तदुःखे मृत्यौ मरणसमये प्रज्वारे अत्यन्तज्वरावेशदशायां च प्राणायतनानामिन्द्रियाणां विघाततः व्याकुलत्वादहं ममेति ज्ञानं नेहते न प्रकाशते। इन्द्रियैरहङ्कारास्पदवस्तुग्रहणे ह्यहङ्कारः स्फुरति नान्यथा। अध्यासस्तु तदाऽप्यस्तीति भावः।। ७३।। गर्भे इति। यथा यूनस्तरुणस्य तत्तदिन्द्रियाध्यासादहं पश्याम्यहं शृणोमीत्येवमादि यदेकादशविधं लिङ्गमहंकरणं दृश्यते तत् गर्भे बाल्ये चेन्द्रियाणामसपौष्कल्यात् सूक्ष्मत्वादेव न दृश्यते न प्रकाशते तदाऽप्यध्यासस्त्वस्त्येव। कुह्वाममावास्यायां सतोऽपि चन्द्रमसो लिङ्गं रूपं यथा न दृश्यते तथा।। ७४।। अध्यासस्तु स्वयमेव न निवर्तते इत्याह—अर्थे हीति। यथा स्वप्ने स्वशिरश्छेदादिलक्षणे अर्थेऽविद्यमानेऽपि स्वशिरश्छेदाद्यनर्थागमो भवति स च तद्धेतुनिद्रादिदोषनिवर्तकजागरणं विना न निवर्तते तथारूपरसादिविषयान्ध्यायतोऽस्य पुरुषस्य वस्तुतः सुखदुःखादिलक्षणेऽर्थे अविद्यमानेऽपि तद्धेत्वन्तःकरणाध्यासनिवर्तकात्मज्ञानादिसाधनं विना संसृतिर्धर्माधर्मसुखदुःखादिसन्ततिर्न निवर्तते।। ७५।। यावल्लिङ्गं संसारस्यानिवृत्तिं प्रपञ्चयन् लिङ्गदेहं विवृणोति—एवमिति। एवं पञ्चविधं पञ्चतन्मात्रात्मकम् एकादशेन्द्रियैः सह षोडशात्मना विस्तृतं त्रिवृत् त्रिगुणकार्यभूतं यल्लिङ्गं लिङ्गदेहः स एष चेतनया युक्तो जीव इत्यभिधीयते।।७६।। अनेनेति। अनेन लिंगदेहेन युक्त एव पुरुषो देही देहान् उच्चावचान् देवतिर्यगादीन् उपादत्ते विमुञ्चति च। अनेनैव

च हर्षादिकं विन्दति प्राप्नोति ॥ ७७ ॥ नन्वेकं देहं विसृज्य देहान्तरप्रवेशात्पूर्वं विदेहता स्यात्तत्राह—यथेति सार्द्धम्। यथेयं प्रसिद्धा तृणजलूका कीटविशेषः पूर्वंवृततृणस्यात्यागात् नापयाति तृणं त्यक्त्वा न गच्छति। तृणान्तरस्य धारणात् अपयाति तृणान्तरं गच्छति चेति प्रसिद्धम्। तथाऽयं जनः जीवोऽपि यावदेव तद्देहप्रारम्भकारकाणां कर्मणां व्यवधानेन विशेषतो धारणेन भोगेन समाप्त्या वाऽन्यं देहं सम्यक् न विन्देत लभते तावत् म्रियमाणोऽपि मरणावस्थायां लोकान्तरगमनयोग्यदेहान्तरं प्रविशन्नपि प्राग्देहे अभिमतिमहंममेत्यभिमानं न त्यजेत् न त्यजति ॥ ७८ ॥ मन इति अर्द्धम्। हे मनुष्येन्द्र ! मन एव भूतानां भवभावनं जन्ममरणादिसंसारदुःखस्य कारणम् ॥ ७९ ॥ यदेति। यदा अविद्यायां सत्यामनात्मनः आत्मानुसन्धानशून्यस्य शुभाशुभं कर्म भवति। तस्मिन्कर्मणि सति तन्निमित्तको भोगो भवति ततश्च अक्षैरिन्द्रियैश्चरितान् उपभुक्तान् विषयान् मनसा ध्यायन् पुनः विषयप्राप्तिहेतुभूतानि कर्माणि आचिनुते करोति तदा तस्मिन् कर्मणि सति असकृत्पुनरस्य संसारबन्धो भवति ॥ ८० ॥

अत इति। यतो हरेर्विश्वस्य स्थित्युत्पत्त्यप्यया भवन्ति तदात्मकं विश्वं पश्यन् अतो हेतोः तस्याविद्याध्यासस्यापवादार्थं सर्वात्मना हरिं भज ॥ ८१ ॥ भागवतेति। एवं भागवतेषु मुख्यो भगवान्नारदः प्राचीनबर्हिषे हंसयोर्जीवेश्वरयोर्गतिं तत्त्वं प्रदर्श्य निरूप्य अमुं राजानमामन्त्र्य पृष्ट्वा ततः स्थानात् सिद्धलोकमगमत्। प्रथमपादे अक्षराधिक्यम् ॥ ८२ ॥ प्राचीनेति। प्राचीनबर्हिरपि राजर्षिः प्रजासर्गस्याभिरक्षणे पुत्रानादिश्य पुत्राः प्रचेतसो यदि गृहमागच्छेयुः तर्हि ते राज्ये स्थाप्या इति मन्त्रिणः कथयित्वा साक्षात्पुत्रादेशस्तु न व्याख्येयः। तत्र पुत्रानागमात् स्वयं तपसे कपिलाश्रमं गङ्गासागरसङ्गममगमत् ॥ ८३ ॥ तत्रेति। तत्र कपिलाश्रमे वीरोऽतिप्रयत्नवान् विमुक्तसङ्गः विषयेभ्यः प्रत्याहृतेन्द्रियवर्गः अत एवैकाग्रमनाः भक्त्या गोविन्दचरणाम्बुजमनुक्षणं भजन् ध्यायन् तत्साम्यतां समतां अगात्। स्वार्थे ष्यञन्तात्तल् ॥ ८४ ॥ एतदिति। हे अनघ ! एतत् देवर्षिणा गीतम् आत्मपारोक्ष्यं परोक्षेण तत्त्वमार्गं यः श्रावयेद्यश्च शृणुयात् स लिङ्गेन लिङ्गदेहेन संसारहेतुना विमुच्यते ॥८५॥ एतदिति। देवर्षिवर्यस्य नारदस्य मुखान्निःसृतमेतदाख्यानं मुकुन्दस्य यशसा माहात्म्येन युक्तमत एव भुवनं पुनानं पवित्रयत् आत्मनः शौचं शोधनं यस्मात् तत् पारमेष्ठ्यं परमात्मपदप्रापकम् अतो महद्भिः कीर्त्यमानं यः प्राणी अधिगच्छति सम्यगवधारयति। सोऽपि मुक्तसमस्तबन्धः सन् अस्मिन्भवे संसारे न भ्रमति मुक्तो भवति ॥ ८६ ॥ अध्यात्मेति। इदमत्यद्भुतमध्यात्मपारोक्ष्यं मयाऽपि गुरोः कृपयाऽधिगतं निःसन्दिग्धं श्रुतं तत्तुभ्यं कथितमिति शेषः। एवमुक्तप्रकारेण स्त्रिया बुद्ध्या सहितस्य पुंसः श्रमोऽहङ्कारश्छिन्नो भवति। आश्रमोऽहङ्कार इति वा गार्हस्थ्याश्रम इति च तथाऽमुत्र कर्मफलभोगः कथमिति संशयश्च छिन्नो निरस्तः ॥ ८७ ॥

इति श्रीभागवते चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥



# अथ त्रिंशोऽध्यायः

## विदुर उवाच

**ये त्वयाऽभिहिता ब्रह्मन्सुताः प्राचीनबर्हिषः । ते रुद्रगीतेन हरिं सिद्धिमापुः प्रतोष्य काम् ॥ १ ॥**

त्रिंशे लब्धवरा ईशाद्वार्क्षीं कन्यां विवाह्य च । राज्यं प्रचेतसश्चक्रुस्तत्र श्लोकाः कुमार्गणाः ( ५१ ) ॥

उवाचषट्कं ( ६ ) पादाव्याषट् पञ्चाशदनुष्टुभः ( ५६। ) ॥ ३० ॥

य इति । हे ब्रह्मन् ! ये प्राचीनबर्हिषः सुताः प्रचेतसस्त्वयाऽभिहिताः पूर्वं कथितास्ते रुद्रगीतनामकेन स्तोत्रेण हरिं प्रतोष्य कां सिद्धिं फलमापुः ॥ १ ॥ किमिति । हे बार्हस्पत्य बृहस्पतेः शिष्य ! कस्यांचिद्विद्यायामुद्धवमैत्रेयौ बृहस्पतेः शिष्याविति प्रसिद्धेः ते प्रचेतसो यदृच्छया देवं गिरिशं श्रीरुद्रं प्राप्य तस्यैव कैवल्यनाथप्रियस्य गिरिशस्य पार्श्ववर्तिनोऽनुग्रहविषया जाताः । अथ तस्मात् नूनं निश्चितं परं मोक्षं प्रापुर्नात्र संशयः । परंतु ततः पूर्वमिह अस्मिन् लोके अथवा परत्र लोकान्तरे किं फलं प्रापुरिति । यद्वा कैवल्यनाथस्य हरेः प्रियाः पार्श्ववर्तिनश्च प्रचेतसः यदृच्छया गिरिशं प्राप्य इह लोके परत्र च किं वरं वस्तु प्रापुः ॥ २ ॥ प्रचेतस इति । पितुरादेशकारिणः पितुराज्ञया प्रजासृष्टिकामाः सन्तः प्रचेतसोऽन्तरुदधौ समुद्रमध्ये स्थिता रुद्रगीतस्य जप एव यज्ञस्तेन तपसा आहारादिनियमेन च पुरञ्जनं भगवन्तमतोषयन् ॥ ३ ॥ दशेति । स्वरुचा कान्त्या तेषां कृच्छ्रं तपः क्लेशं शमयन् शान्तेन सत्त्वात्मकेन वपुषा सनातनः पुरुषो भगवान् दशवर्षसहस्रान्ते आविरभूत् ॥ ४ ॥

सुपर्णेति । मेरुशृङ्गमारूढोऽम्बुदो मेघ इव सुपर्णस्य गरुडस्य स्कन्धमारूढः पीते वाससी यस्य सः मणिः कौस्तुभो ग्रीवायां यस्य सः स्वप्रकाशेन दिशो वितिमिरा अन्धकाररहिताः कुर्वन् ॥ ५ ॥ काशिष्णुनेति । काशिष्णुना प्रकाशमानेन कनकमयेन वर्णवता नानारत्नखचितत्वेन नानावर्णवता विभूषणेन कुण्डलादिना भ्राजत् कपोलं वदनं च यस्य सः विलसच्छोभमानं किरीटं यस्य सः अष्टसु भुजेषु अष्टभिरायुधैर्युक्तः अनुचरैः पार्षदैः मुनिभिः सुरेन्द्रैः इन्द्रादिभिर्लोकपालैः सर्वतः सेवितः गरुड एव किन्नरस्तेन स्वपक्षस्वनैर्गीता कीर्तिर्यस्य ॥ ६ ॥ पीनेति । पीनाश्च ते आयताश्च येऽष्टौ भुजास्तेषां मण्डलं समूहस्तन्मध्ये स्थितया लक्ष्म्या सह स्पर्द्धन्ती शतार्षः । श्रीः शोभा यस्यास्तया वनमालया परिवृतः सघृणो दयायुक्तोऽवलोको यस्य सः एवंभूतः आद्यः पुरुषः प्रपन्नान् बर्हिष्मतः सुतान् प्रति पर्जन्यस्य मेघस्य नाद इव सन्तापनिवर्तकं रुतं नादो यस्यास्तया वाचा आह स्म ॥७॥ वरमिति । हे नृपनन्दनाः ! यूयं यतः परस्परं सौहार्देन हेतुना अपृथक् धर्मो येषां तादृशाः स्थ सम्बोधनं वा । अतो वो युस्माकं सौहृदेनाहं तुष्टो युष्मभ्यं वरं ददामि । वो युष्माकं भद्रं भवतु । यूयं मे मत्तो वरं वृणीध्वम् ॥ ८ ॥ य इति । अनुदिनं प्रतिदिनं सन्ध्यायां यो नरो युष्मान् स्मरति स्मरिष्यति । तस्य भ्रातृषु तथाभूतेषु सर्वेषु प्राणिषु आत्मसाम्यं भवत्सदृशं सौहृदं मैत्र्यं भविष्यति ॥९॥ य इति । ये तु समाहिताः सावधानाः सन्तः सायंप्रातरनेन रुद्रगीतेन मां स्तुवन्ति स्तोष्यन्ति तेभ्योऽप्यहं तुष्टः सन् कामभोगान् अभिलषितान् भोगान् शोभनामुद्धारोपयोगिनीं प्रज्ञां बुद्धिं च दास्ये किं पुनर्युष्मभ्यम् ॥ १० ॥ यदिति । यत् यस्मात् यूयं पितुरादेशं प्रजावृद्ध्यादिविषयकं मुदाऽन्विता हर्षयुक्ताः सन्तः अग्रहीपुर्गृहीतवन्तः । प्रथमपुरुष आर्षः । अग्रहीष्टेत्यपि पाठः । अथो तस्मात् वो युष्माकमुशती कमनीया कीर्तिर्लोकान् अनुलक्षीकृत्य भविष्यति व्याप्स्यतीत्यर्थः ॥ ११ ॥ भवितेति । युष्माकं पुत्रश्च गुणैः प्रजाविसर्गसत्कीर्त्यादिभिः ब्रह्मणोऽपि सकाशादनवमः अन्यूनः अत एव लोके विश्रुतः प्रख्यातश्च भविता भविष्यति । य एतां त्रिलोकीमात्मवीर्येण स्वसन्तानेन पूरयिष्यति ॥ १२ ॥ कण्डोरिति । हे नृपनन्दनाः ! प्रम्लोचया अप्सरसा कण्डोर्मुनेः सकाशात् कमललोचना कन्या लब्धा । तां कन्यां च अपविद्धां वृक्षेषु त्यक्तां भूरुहाः वृक्षा जगृहुः । कण्डुमुनेः तपोनाशार्थमिन्द्रेण प्रम्लोचा प्रेषिता । तया सह कण्डुः रेमे । तस्मात्प्रम्लोचा कन्यां लब्ध्वा स्वर्गं गच्छन्ती वृक्षेषु तत्याजेति कथाऽनुसन्धेया ॥ १३ ॥

क्षुदिति । तस्याः क्षुत्क्षामायाः क्षुधया पीडितायाः अतो रोदमानायाः रुदत्याः । शब्लुगभावशानचावार्षौ । स्वार्थे-णिजन्ताद्वा । मुखे स प्रसिद्धो वनस्पतीनां राजा सोमो दयान्वितः पीयूषवर्षिणीममृतस्राविणीं देशिनीं स्वतर्जनीं निदधे अमृत-

पानार्थं धारितवान्। एतेनाप्सरोजन्यत्वेन अमृताहारेण च लावण्यादि सूचितम्॥ १४॥ प्रजेति। यूयं च मामनुवर्तता मदाज्ञामनुसरता। आर्षः शाता। पित्रा प्राचीनबर्हिषा प्रजाविसर्गे आदिष्टाः। अतः तत्र प्रजाविसर्गे निमित्ते तामेव प्राम्लोचापुत्रीं वरारोहां कन्यां मा चिरम् अविलम्बेन उद्वहत॥ १५॥ बहूनामेकभार्यात्वे विरोधमाशङ्क्याह—अपृथगिति। अपृथग्धर्मः प्रजापालनादिरूपः शीलं च सुस्वभावादि येषां तेषां युष्माकं सर्वेषामेव इयं भवत्स्वेवार्पितः आशयो यया सा अत एवापृथग्धर्मशीला सुमध्यमा पत्नी भूयात्। अतो धर्मशीलैक्यात् आशीर्युक्तान् मद्वाक्यान्न दृष्टादृष्टदोषः॥ १६॥ दिव्येति। यूयं च ममानुग्रहाद्दिव्यवर्षसहस्राणां कपिञ्जलालम्भन्यायेन त्रयाणामित्यर्थः। सहस्रं अव्यभिचारिण्या भक्त्या पर्यन्तं कालमहतौजसः अप्रतिहतबलाः सन्तो भौमान् भुवि भवान् दिव्यान् दिवि भवांश्च भोगान् भोक्ष्यथ। तद्भाव आर्षः॥ १७॥ अथेति। अथ तावत्कालभोगानन्तरं मय्यनपायिन्या पक्वगुणो दग्धकामादिमल आशयोऽन्तःकरणं येषां तथाभूताः सन्तः। इदं च सम्बोधनम्। अपक्वकषायाणां भगवद्दर्शनासम्भवादित्याहुः। यूयमतो लोकद्वयभोगान्निरयात् नरकतुल्यात् निर्विद्य मद्धाम मत्स्वरूपमुपयास्यथ प्राप्स्यथ॥ १८॥ गृहेष्विति। कुशलं मयि समर्पितं कर्म येषां तेषां मद्वार्तयैव यातो यामः कालो येषां तेषां पुंसां गृहेष्वाविशतां प्रविष्टानां चापि गृहा बन्धाय न मता न भवन्ति॥ १९॥ तत्र हेतुः—नव्यवदिति। यत् यस्मात् मत्कथाश्रवणात् ज्ञः सर्वज्ञः अहं श्रोतॄणां हृत् हृदयं नव्यवत् प्रतिपदं नूतनवत् अये प्राप्नोमि तत्र आविर्भवामि। एतत् हृदये ममाविर्भाव एव ब्रह्मवादिभिर्ब्रह्म ब्रह्मसाक्षात्कार इति व्यपदिश्यते। यतो गताः यं मां प्राप्ताः सन्तो जनाः पुनर्न मुह्यन्ति न शोचन्ति न हृष्यन्ति। यद्वा कथाश्रवणादहं ब्रह्मवादिभिः प्रवक्तृभिः निमित्तभूतैः श्रोतॄणां हृदयं प्राप्नोमि यतः योऽहमेतदेव ब्रह्म। शेषं प्राग्वत्। अथवा एतन्मत्स्वरूपं ब्रह्मवादिभिः ब्रह्म उच्यते। यतो यत्र ब्रह्मणि गताः मोहादिकान्न प्राप्नुवन्ति सोऽहं ज्ञो यद्यस्मात्तेषां कुशलकर्मणां हृदयं नव्यवत् अये प्राप्नोमि जानामि इति वा। यद्वा यज्ज्ञः यन्मत्स्वरूपं जानाति तादृशो जनः हृदये नव्यवत् प्रतिक्षणं नूतनवत्परमानन्दभाग्भवति एतत्परमानन्दरूपं यच्छब्दोद्दिष्टं मत्स्वरूपमेव ब्रह्मवादिभिर्ब्रह्मोच्यते। अत्र हेतुः न हृष्यन्तीत्यादि॥ २०॥

एवमिति। एवं ब्रुवाणः पुरुषार्थं भाजयति प्रापयतीति तथा तम्। अत एव सुहृत्तमं परमहितकर्तारं जनार्दनं तस्य दर्शनेन ध्वस्तं निरस्तं तमो रजोमलं येषां ते प्रचेतसः प्राञ्जलयः सन्तो गद्गदया स्खलिताक्षरया गिरा अगृणन् अस्तुवन्॥ २१॥ नमो नम इति। भक्तानां क्लेशविनाशनाय निरूपिताः वेदैः श्रेयःसाधनत्वेन कथिताः उदाराः गुणा आह्वया नामानि च यस्य तस्मै नमोवचसोर्वेगादपि पुरोऽग्रतो जवो वेगो यस्य तस्मै वाङ्मनसागोचराय सर्वेषामक्षाणामिन्द्रियाणां मार्गैरगतः अनवगतः अध्वा मार्गोऽपि यस्य तस्मै नमो नमः॥ २२॥ शुद्धायेति। स्वनिष्ठया स्वरूपस्थित्या शुद्धाय अत एव शान्ताय च नमः। मनसि निमित्ते सत्येवापार्थं वृथैव विलसत् स्फुरितं द्वयं द्वैतं यत्र तस्मै वस्तुत एकत्वेऽपि लीलार्थं जगत. स्थानं पालनं लयः प्रलयः उदयः उत्पत्तिः तेषु निमित्तेषु गृहीताः मायागुणैः सत्त्वादिभिर्विग्रहा ब्रह्मविष्णुरुद्रमूर्तयो येन तस्मै नमो नमः॥ २३॥ नम इति। विशुद्धसत्त्वाय नमः। हरये च हरति संसारं मेधाज्ञानं यस्य तस्मै हरिमेधसे वासुदेवाय कृष्णाय सर्वेषां सात्वतां यादवानां भक्तानां वा प्रभवे पालकाय नमः॥ २४॥ नम इति। ब्रह्माण्डात्मकं कमलं नाभौ यस्य तस्मै नमः। कमलानां माला विद्यतेऽस्य तस्मै नमः। कमले इव कोमलौ पादौ यस्य तस्मै नमः। हे कमलेक्षण! ते तुभ्यं नमः॥ २५॥ नम इति। कमलस्य किञ्जल्काः केसरास्त इव अमले पिशङ्गे पीते वाससी यस्य तस्मै सर्वेषां भूतानां निवासाय आधाराय सर्वसाक्षिणे च नमः नमस्कारम् अयुंक्ष्महि कृतवन्तो वयम्॥ २६॥ रूपमिति। क्लिष्टानामविद्यास्मितादिक्लेशैर्व्याप्तानां नोऽस्माकम् अशेषाणां समन्तानां क्लेशानां संक्षयो यस्मात्तथाभूतमेतत् दृश्यमानं रूपं भगवता त्वयाऽऽविष्कृतं प्रकटितमतोऽन्यत्किमनुकम्पितमनुकम्पा इयमेवानुकम्पेत्यर्थः॥ २७॥ एतावत्त्वमिति। हे अभद्ररन्धन अमङ्गलनाशन! यत् एतेऽस्मदाया इति स्वबुद्ध्या काले सेवादिकालेऽनुस्मर्यते दीनेषु वत्सलैः कृपालुभिः विभुभिः स्वामिभिरेतावत्त्वम् एतावदेव। त्वप्रत्ययोऽत्र स्वार्थे। भाव्यं कार्यम्। त्वया तु रूपमपि दर्शितम्॥ २८॥ येनेति। येनानुस्मरणेन भूतानां स्मृनामुपशान्तिः सर्वक्लेशनिवृत्तिर्भवति क्षुल्लकानामतितुच्छानामपि प्राणिनामीहतामिच्छतां शतार्षः। अन्तर्हृदयेऽन्तर्हितः साक्षितया स्थितो भवांस्तेषां मनोरथान् जानाति तर्हि नोऽस्माकं स्वभक्तानामाशिषो मनोरथान् कस्मान्न वेद वेदैवेति॥ २९॥ असाविति। हे जगतः पतेः! अपवर्गस्य गुरुमार्गप्रदर्शकः गतिः पुरुषार्थरूपश्च भगवान् भवान् येषां प्रसन्नो जातस्तेषामस्माकमीप्सितो वरः असौ भवत्प्रसाद एव नान्यः॥ ३०॥ वरमिति। अथापि तथापि परतः ब्रह्मादिभ्योऽपि परात् कारणादपि त्वत् त्वत्तः एकं वरं वृणीमहे। हि यस्मात् देवानां त्वद्विभूतीनामैश्वर्यादीनामन्तो नास्त्यन्तो यस्त्वमनन्त इति गीयसे अतः स वक्ष्यमाणो वरो देय एवेति॥ ३१॥

पारिजात इति! यथा पारिजाते वृक्षे अञ्जसा अनायासेन लब्धे सति तद्रसस्यात्युत्कृष्टत्वात्तं विहाय सारङ्गो भ्रमरोऽन्यत्सुलभमपि वृक्षान्तरं न सेवते तथा साक्षात्त्वदङ्घ्रिमूलमासाद्य प्राप्य वयमपि किं किं त्वत्परिचरणादन्यत् वरान्तरं वृणीमहि न किञ्चित्। यद्वा अन्यत्तुच्छं गृहीमहि। यद्वा मनोरथानामनन्तत्वात् किं किं वृणीमहि अतो भवत्परिचरणमेव वरणीयम्॥ ३२॥ अत तादृशमेव वरं याचन्ते—यावदिति। ते तव मायया सृष्टा मोहिताः सन्तः स्वकर्मभिरिह संसारे यावद्वयं भ्रमामस्तावन्नोऽस्माकं

भवे भवे जन्मनि जन्मनि भवति प्रकृष्टः सङ्गो येषां तेषां भवद्भक्तानां सङ्गः स्यात् ।। ३३ ।। तुलयामेति । भगवतस्तव सङ्गिनो ये भक्तास्तेषां सङ्गस्य लवेनापि कालेन स्वर्गं न तुलयाम तुल्यतया न गणयाम तथा अपुनर्भवं मोक्षमपि न तुलयाम । तर्हि मर्त्यानामाशिषो राज्यभोगान् न तुलयामेति किमुत वक्तव्यम् ।। ३४ ।। यत्रेति । यत्र भगवद्भक्तसमाजे मृष्टाः शुद्धाः परमानन्दजनकाः भवत्कथा ईड्यन्ते भक्तैः स्तूयन्ते । यतो याभ्यः कथाभ्यस्तृष्णायास्तत्तद्विषयभोगविषयिण्याः प्रशमः शान्तिर्भवति । यत्र सर्वेषु भूतेषु निर्वैरं वैरहेतुतृष्णाया निवृत्तत्वाद्वैराभावो भवति अतः कश्चनापि चित्तोद्वेगो न भवतीति ।। ३५ ।। यत्रेति । यत्र च सत्कथासु मुक्तसङ्गैर्निरपेक्षैर्भगवद्भक्तैः न्यासिनां त्यक्तसर्वफलानामपि स एव गतिः फलं भगवान्नारायणः साक्षात् पुनः पुनः स्तूयते ।। ३६ ।। तेषामिति । तेषां तावकानां त्वद्भक्तानां तीर्थानामपि दुष्टसम्बन्धेन दुष्टानां पावनेच्छया पद्भ्यां विचरतां समागमः संसारात् भीतस्य किं न रोचेत कथं न स्वस्मिन् रुचिमुत्पादयेत् ।। ३७ ।। वयं त्विति । हे भगवन् ! तव प्रियस्य सख्युर्भवस्य श्रीरुद्रस्य क्षणमात्रभवेन सङ्गमेन हेतुना सुदुश्चिकित्स्यस्य अतिप्रयत्नेनापि चिकित्सतुं निवर्तयितुमशक्यस्य भवस्य जन्मनो मृत्योः मरणस्य चेति रोगद्वयस्यासाध्यस्यापि भिषक्तमं सद्वैद्यनिवर्तकं त्वा त्वामद्य साक्षाद्वयं गतिं गताः शरणं प्राप्ताः स्म ।। ३८ ।। यन्न इति । यत् नोऽस्माभिः सुष्ठु सम्यगधीतं वेदाध्ययनं कृतं तथा गुरवः उपदेष्टारः अन्ये च विप्राः वृद्धाः पित्रादयः आर्याः अन्येऽपि सदाचारपराः शिष्टाः सुहृदो मित्राणि भ्रातरः अन्यानि च सर्वाणि भूतानि प्राणिनः अनसूययैव शुद्धभावेनैव न तु लोकप्रदर्शनार्थं नताः नमस्कृताः । सदानुवृत्त्या सदाचारेणास्माभिः प्रसादिताश्च ।। ३९ ।।

यदिति । हे ईश ! एतावन्तं कालमप्सु जले स्थितानां निरन्धसां निरन्नानां नोऽस्माकं यदेतत् सुतप्तं सम्यगनुष्ठितमत एवादभ्रमत्युग्रं तपस्तदेतत्सर्वमध्ययनाद्यनुष्ठानं भूम्नो व्यापकस्य अत एव पुरुषस्य सर्वान्तर्यामिणस्ते एव परितोषणाय भवत्विति वयं वृणीमहे ।। ४० ।। मनुरिति । तपोज्ञानाभ्यां विशुद्धं सत्त्वं येषां तादृशा अपि मनुः स्वयंभूर्भगवान् भवश्च येऽन्येऽपि तथाभूताः यस्य तव महिम्नः न दृष्टः पारः अन्तः यैस्ते तथाभूता अपि यथा त्वामात्मसमं स्वज्ञानशक्त्यनुरूपमेव स्तुवन्ति । अथो तथा वयमपि त्वा त्वामात्मसमं गृणीमः स्तुमः ।। ४१ ।। नम इति । सर्वत्र समाय शुद्धाय पराय श्रेष्ठाय पुरुषाय सत्त्वाय शुद्धसत्त्वमूर्तये वासुदेवाय ते तुभ्यं नमः ।। ४२ ।। इतीति । शरण्येषु शरणागतेषु वत्सलः हरिः इत्येवं प्रचेतोभिरभिष्टुतः स्तुतः प्रीतः सन् तथेत्याह । भवत्प्रार्थितं तथाऽस्तु इत्याह स्म । ततश्च अनपवर्गवीर्यः अकुण्ठितशक्तिर्भगवान् स्वदर्शनेन न तृप्तानि चक्षूंषि येषाम् अत एव तस्य यानं प्रयाणमनिच्छतां सतां स्वधाम ययौ । भक्तहृदयं विवेशेतिभावः ।। ४३ ।। अथेति । अथ प्रचेतस उदन्वतः समुद्रस्य सलिलान्निर्याय निर्गत्य तदा प्राचीनबर्हिषः प्रव्रजितत्वादराजके कर्षणाद्यभावात् गां स्वर्गं रोद्धुमिवोच्छ्रितैर्द्रुमैर्गां मही छन्नां वीक्ष्यैवं सति पित्रा भगवता चादिष्टः प्रजाविसर्गः कथं सिद्धयेदिति व्याकुलचित्ताः द्रुमेभ्योऽकुप्यन् ।। ४४ ।। तत इति । हे राजन् ! यतः रुषा क्रोधेन महीं निर्गताः वीरुधोऽपि यस्यास्तथाभूतां कर्तुं मुखतोऽग्निमारुतौ व्यमुञ्चन् । यथा अत्यये प्रलयकाले संवर्तकः कालाग्निरुद्रः सङ्कर्षणो वा मुखादग्निं विमुञ्चति तथा ।। ४५ ।। भस्मसादिति । तान् द्रुमान् भस्मसात् क्रियमाणान् वीक्ष्य पितामहो ब्रह्मा तत्रागतः सन् नयैर्युक्तिभिर्बर्हिष्मतः पुत्रान् प्रचेतसः शमयामास सान्त्वितवान् ।। ४६ ।। तत्रेति । तत्र भूमौ येऽवशिष्टा दाहादुर्वरिता वृक्षास्ते तदा भीताः सन्तः स्वयंभुवा ब्रह्मणा उपदिष्टाः प्रचेतोभ्यः स्वदुहितरं कन्यां समर्पयामासुः ।। ४७ ।। ते चेति । ते च प्रचेतसो ब्रह्मण आदेशात् आज्ञातः मारिषानाम्नीं कन्यां वृक्षैर्दत्तामुपयेमिरे विवाहितवन्तः । अजनो नारायणो योनिः कारणं यस्य स अजनयोनिर्ब्रह्मा तस्मात् पूर्वं जातोऽपि दक्षो महतो महादेवस्यावज्ञानात् अपराधात् यस्यां क्षत्रियजातौ मारिषायामजनि जातः गर्भवासदुःखं प्राप । पूर्वं वीरभद्रहस्तात्कालतश्चेति मरणद्वयं प्रापेत्यपि ज्ञेयम् ।। ४८ ।। पुनश्चाशुतोषस्य श्रीरुद्रस्यैव स्तुत्युत्थात् प्रसादात् स्वीयमैश्वर्यं प्रापेत्याह—चाक्षुष इति । चाक्षुषे तु अन्तरे मन्वन्तरे प्राप्ते प्राक्सर्गे पूर्वदेहे कालेन विद्रुते विनष्टे सति यो दैवेनेश्वरेण चोदितः सन् नष्टाः प्रजाः ससर्ज स प्रसिद्धो दक्षः अजनीत्यनुषङ्गः । अत्राहुः । अस्य जन्म स्वायंभुवमन्वन्तर एव ततः स्वैश्वर्यप्राप्तये पञ्चममन्वन्तरपर्यन्तं तपश्चरणं चाक्षुषे मन्वन्तरे तपःफलप्राप्तिरिति ।। ४९ ।। य इति । यो दक्षः जायमान एव । यद्वा अजो ब्रह्मा इवाचरन् अजायमानो यो दक्षः स्वया रुचा प्रभया सर्वेषां तेजस्विनां तेज उपादत्त तिरस्कृतवान् । यं च कर्मणां दाक्ष्यात् चातुर्यात् सर्वे दक्षमब्रुवन् ।। ५० ।। तमिति । तं च अनादिः ब्रह्माऽभिषिच्य प्रजासर्गरक्षायां युयोज नियुक्तवान् । स एव दक्षोऽन्यान्सर्वान् प्रजापतीन्मरीच्यादींश्च युयुजे तद्व्यापारेषु वियुक्तवान् ।। ५१ ।।

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां त्रिंशोऽध्यायः ।। ३० ।।

—:❀:—

## अथैकत्रिंशोऽध्यायः

### मैत्रेय उवाच

तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम् । स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन्गृहात् ॥ १ ॥

एकत्रिंशे त्यक्तराज्या वने नारदसङ्गतः । प्रचेतसो ययुर्मुक्तिं तत्र श्लोकाः कुवह्नयः ( ३१ ) ॥

अष्टोवाचेति षट्त्रिंशत्पादहीना ( ३५॥ ) अनुष्टुभः ॥ ३१ ॥

तत इति । ततो भगवदुक्तदिव्यवर्षसहस्राणां सहस्रानन्तरमुत्पन्नं विज्ञानं विवेको येषां ते प्रचेतसः उपयास्यथ मद्धाम निर्विद्य निरयादतः" इत्यधोक्षजस्य भगवतो भाषितं स्मरन्तः आत्मजे पुत्रे दक्षे भार्यां विसृज्य समर्प्य आशु शीघ्रमेव गृहात् प्राव्रजन् ॥ १ ॥ दीक्षिता इति । सर्वभूतेष्वात्मेति मेधा ज्ञानं यस्मिंस्तेन ब्रह्मसत्रेण ब्रह्मविचारेण निमित्तेन दीक्षिताः कृतसंकल्पाः प्रतीच्यां दिशि वेलायां समुद्रतटे यत्र जाजलिर्नाम ऋषिः सिद्धोऽभूत् मुक्तिमवाप तत्र ययुः ॥ २ ॥ तानिति । निर्जिताः प्राणमनोवचोदृशो यैस्तान् जितमासनं यैस्तान् शान्ताः उपरताः समाना मूलाधारादारभ्य ऋजवो विग्रहा येषां तान् परे सर्वोत्तमेऽत एवामले शुद्धे प्रपञ्चातीतत्वेन सर्वविकारशून्ये ब्रह्मणि व्यापके भगवति योजित आत्मा मनो यैस्तान् सुरासुरैरीड्यः नारदो ददृशे स्म । तद्दर्पः ॥ ३ ॥ तमिति । ते प्रचेतसस्तमागतमालोक्योत्थाय अभिनन्द्य पूजयित्वा अथ यथादेशं योग्यदेशे सुखेनासीनमब्रुवन् ॥ ४ ॥ स्वागतमिति । हे सुरर्षे ! हे ब्रह्मन् ! ते तव स्वागतम् सुष्ठु आगमनं जातम् । अतो नोऽस्माकं दिष्टया भाग्येन त्वं दर्शनं गतोऽसि । यतः रवेर्यथा पर्यटनं चौरादिभयनिवृत्तये भवति तथा तव चङ्क्रमणं पर्यटनं लोकस्याभयाय ज्ञानभक्त्याद्युपदेशेन संसारभयनिवर्तनाय भवति ॥ ५ ॥ यदिति । हे प्रभो ! यत्तत्त्वं भगवता सर्वज्ञेन शिवेनाधोक्षजेन विष्णुना चादिष्टमुद्दिष्टं तद् गृहेषु प्रसक्तानामस्माकं प्रायशः व्यपितं विस्मृतम् ॥ ६ ॥ तदिति । तत् अध्यात्ममात्मतत्त्वप्रकाशं तत्त्वार्थदर्शनं भगवत्तत्वप्रकाशं ज्ञानं नोऽस्माकं त्वं द्योतय पुनः प्रकाशय । येन ज्ञानेन दुस्तरं भवसागरमञ्जसाऽनायासेनैव वयं तरिष्यामः ॥ ७ ॥

इतीति । इत्येवं प्रचेतसां प्रचेतोभिः । शेषे षष्ठी । पृष्टः भगवति उत्तमश्लोक आविष्ट आत्मा यस्य सः मुनिः भगवन्नारदः तान् नृपान् अब्रवीत् ॥८॥ तदिति । येन जन्मादिना विश्वस्यात्मा हरिः सेव्यते इह संसारे नृणां तदेव जन्म तान्येव कर्माणि तदेवायुः तदेव मनो वचश्चेति सफलत्वात् अन्यत्तु व्यर्थत्वादसत्कल्पं मनो वच इत्युपलक्षणं बुद्धीन्द्रियादिस्वाध्यायान्तानामित्युत्तरश्लोकार्थदृष्ट्या ज्ञेयम् ॥ ९ ॥ अन्वयं विवृत्य व्यतिरेकं विवृणोति—किमिति । यत्र येषु जन्मादिषु सत्स्वपि हरिरात्मप्रदो न भवति तैः पुंसः जन्मादिभिः किं फलमित्यन्वयः । तत्र शौक्लं शुद्धमातृपितृभ्यामुत्पत्तिः सावित्रमुपनयनेन याज्ञिकं यज्ञदीक्षयेति त्रिभिर्जन्मभिः किं त्रयीप्रोक्तैः कर्मभिर्वा किं विबुधानामिव दीर्घेणायुषाऽपि किम् ॥ १० ॥ श्रुतेनेति । श्रुतेन वेदान्तादिश्रवणेन तपसा वचोभिः शास्त्रव्याख्यानैः वाग्विलासैर्वा चित्तवृत्तिभिः नानार्थकल्पनावधानसामर्थ्यैः किं निपुणया बुद्ध्या बलेन इन्द्रियाणां राधसा पाटवेन च किम् ॥ ११ ॥ किमिति । योगेन प्राणायामादिना साङ्ख्येन देहादिभिन्नात्मज्ञानमात्रेण न्यासस्वाध्याययोः संन्यासवेदाध्ययनाभ्याम् । अपि तृतीयार्थे षष्ठी । अन्यैश्च दानतीर्थपर्यटनादिभिः श्रेयःसाधनैरपि किम् ॥ १२ ॥ श्रेयसामिति । सर्वेषामपि श्रेयसां फलानामवधिः परा काष्ठा अर्थतः विचारतः आत्मैव आत्मार्थत्वेनैवान्येषां प्रियत्वात् । हीति निश्चितमेतत् सर्वेषामपि भूतानां प्राणिनामात्मा हरिरेव आत्मा आत्मदश्च अविद्यानिरासेन स्वरूपाभिव्यञ्जकः ऐश्वरेणापि रूपेण बलिप्रभृतिभ्य इवात्मप्रदः प्रियश्च परमानन्दरूपत्वात् । अतो हरिसेवन एवात्मानं युञ्ज्यात् ॥ १३ ॥ यथेति । यथा तरोर्वृक्षस्य मूलनिषेचनेनैव तस्य स्कन्धाः मूलात्प्रथमं विभक्ताः भुजाः शाखा उपशाखाः शाखावयवाः पत्रपुष्पादयोऽपि च तृप्यन्ति फलन्ति च नतु मूलं विना स्वस्वमात्रसेचनेन प्राणस्योपहारो भोजनं तस्मादेव यथा सर्वेन्द्रियाणां तृप्तिर्न तु तत्तदिन्द्रियेषु पृथक् पृथगन्नलेपनेन । तथैव अच्युतस्य इज्या पूजनमेव सर्वेषां देवपित्रादीनामर्हणं पूजनं न तु तेषां पृथक् पूजनमपेक्षितम् ॥ १४ ॥ हरिः सर्वेषां मूलमिति प्रतिपादयति—यथेति । यथैव वारः जलानि वर्षाकाले सूर्यात् प्रभवन्ति पुनश्च ग्रीष्मे तस्मिन्सूर्य एव प्रविशन्ति । यथा च स्थिरजङ्गमानि भूतानि देहा भूमेः प्रभवन्ति भूमौ च तथातस्मिन्नेव लीयते च भूमिदृष्टान्तेन हरावेव तिष्ठति चेत्यपि गुणप्रवाहश्चेतनात्मकः प्रपञ्चः सृष्टिसमये हरेः सकाशादेव प्रभवति प्रलयकाले ज्ञेयम् ॥ १५ ॥ नन्वेवं हरेः सोपाधिकत्वं स्यात्तत्राह—एतदिति ।

एतद्विश्वं सवितुः प्रभा इव जगदात्मनो भगवतः तच्छास्त्रप्रसिद्धं परं निरुपाधिकम् पदं स्वरूपमेव तदुत्पन्नत्वात् न तु ततः पृथक् तत्र सकृत्कदाचित् गन्धर्वनगरवत् पृथक् विभातं स्फुरितं ननु वस्तुतः। यथा सवितुः प्रभा ततो न भिन्ना यथा च जाग्रदवस्थायाम् असव इन्द्रियाणि जाग्रति स्फुरन्ति सुषुप्तौ सुप्तशक्तयो भवन्ति। यद्वा अजाग्रति सुषुप्तौ सुप्ताः शक्तयो येषां ते भवन्ति सवितुः प्रभेत्युद्गतौ दृष्टान्तः इति। तथा द्रव्याणि महाभूतानि। क्रिया इन्द्रियाणि अज्ञानानि इन्द्रियाधिष्ठातारः एषां भिदा भ्रमस्य भेदभ्रान्तेरत्ययश्च भवति अथवा द्रव्यक्रियाज्ञानानां तन्निमित्तभेदभ्रमस्य चात्ययो यस्मादिति हरिविशेषणम्॥ १६॥

यथेति। हे भूपाः! यथा नभसि आकाशे अभ्रतमःप्रकाशा रजस्तमःसत्त्वस्थानीयाः अनुक्रमात् कदाचिद्भवन्ति उपलभ्यन्ते न भवन्ति नोपलभ्यन्ते लीयन्ते च। न हि तैराकाशस्य संश्लेषोऽस्ति येन तद्धर्मभागित्वम्। एवं परे ब्रह्मणि रजस्तमः-सत्त्वमित्यमूः शक्तयोऽपि तुरप्यर्थे। कदाचिद्भवन्ति कदाचिन्न भवन्ति इत्येवमयं जगत्प्रवाहो भवति। नहि भगवतस्तेन संश्लेषोऽस्ति अतो न तद्धर्मभागित्वम्॥ १७॥ तेनेति। तेन सर्वमूलत्वेन हेतुना एकम् अशेषदेहिनामात्मानं स्वरूपभूतं कालं निमित्तं प्रधानमुपादानं पुरुषं कर्तारम् एतत्त्रयात्मकत्वात्सर्वकारणं परेषां ब्रह्मादीनामपीशं स्वतेजसा चिच्छक्त्या ध्वस्तो गुणप्रवाहः संसारो यस्मात्तं भगवन्तम् आत्मैकभावेन आत्मनः अभेदेन अद्धा साक्षात् फलव्यवधानमन्तरेण भजध्वम्॥ १८॥ दययेति। सर्वभूतेषु दयया येन केनचित् प्रारब्धलब्धेनैव सन्तुष्ट्या वा एवार्थे। सर्वेषामिन्द्रियाणामुपशान्त्या विषयेभ्यो निग्रहेण चकाराच्छ्रवणादिना च जनार्दनो भगवान् आशु शीघ्रमेव तुष्यति॥ १९॥ अपहतेति। सतां संबन्धि अपहता निरस्ताः सकलाः पुत्रवित्तलोकादिविषया एषणाः कामा यस्मात्स चासावत एवामलश्चात्मान्तःकरणं तस्मिन् अविरतं निरन्तरमेधितया भावनया भक्त्या उपहूतः सन्निधापितः सन्नक्षरोऽअच्युतभगो भगवानात्मनो निजजनवशगत्वं स्वभक्ताधीनत्वमयन् अवगच्छन् छिद्रवत् हृदयाकाशवत् ततो न सरति नापयाति। पुष्पिताग्रात्रयम्॥ २०॥ न भजतीति। अधनाश्च भगवद्धनास्ते प्रिया यस्य स तथा रसज्ञः तेषां भक्तिरसं स्वप्रेमलक्षणं जानातीति तथा स पूर्वोक्तो भगवान् ये श्रुतधनकुलकर्मणां मदैः अकिञ्चनेषु श्रुतधनाद्य-भिमानरहितेषु सत्सु स्वभक्तेषु पापं विदधति तिरस्कारं कुर्वन्ति। तेषां कुमनीषिणां कुत्सितबुद्धीनां तु प्राणिनामिज्यां पूजामपि न भजति नाङ्गीकरोति॥ २१॥ श्रियमिति। यत् यतः स्वेनैव परमानन्देन पूर्णोऽपि निजभृत्यवर्गतन्त्रस्वभक्ताधीनो यः अनुचरतीं निरन्तरं सेवमानाम्। नुमभाव आर्षः। श्रियं लक्ष्मीं तदर्थिनः श्रीकामान् द्विपदपतीन्नरेन्द्रान् विबुधांश्च यो न भजति नानुवर्तते तममुं भगवन्तं कृतज्ञः पुमान् कथमुत् ईषदपि विसृजेत्॥ २२॥ इतीति। हे राजन्! इत्येवंभूताः अन्याश्च भगवत्कथाः प्रचेतसः श्रावयित्वा स्वायंभुवः ब्रह्मणः पुत्रो मुनिर्नारदो ब्रह्मलोकं ययौ॥ २३॥

तेऽपीति। ते प्रचेतसोऽपि तस्य नारदस्य मुखान्निर्यातं लोकमलापहं हरेर्यशो निशम्य तस्य हरेः पादं ध्यायन्तस्तस्य हरेर्गतिं ययुः॥ २४॥ एतदिति। हे क्षत्तः! यत् त्वं मां परिपृष्टवान् तदेवं हरेः कीर्तनं यत्र तत् प्रचेतसां नारदस्य च संवादलक्षण-मेतदाख्यानं ते तुभ्यं मया अभिहितं वर्णितम्॥ २५॥ य इति। हे नृपसत्तम! मानवस्य स्वायंभुवमनोः पुत्रस्योत्तानपदः य एष वंशः सोऽनुवर्णितः। इदानीं प्रियव्रतस्य तद्द्वितीयपुत्रस्य वंशं वर्णयामि तन्निबोध॥ २६॥ य इति। यः प्रियव्रतः प्रथमं नारदादात्मविद्यामधिगम्य प्राप्य पुनस्तदनन्तरं महीं भुक्त्वा राज्यं कृत्वा ततः पुत्रेभ्यो विभज्य विभागेन महीं दत्त्वा ऐश्वरं पदं स्वरूपं सम्यगनायासेन अगात् प्राप्तवान्॥ २७॥ इमां त्विति। इमामजितस्य भगवतो वादो माहात्म्यवर्णनं तस्यामत एव सतीं श्रोतॄणां रागादिदोषनिवारणीं कथां कौषारविणा मैत्रेयेण उपवर्णितां श्रुत्वा विदुरो निशम्य प्रवृद्धो भावो भगवति भक्तिर्यस्य स तथा अत एवाश्रूणां कलाभिराकुलो व्याकुलः हृदा मनसा हरेश्चरणं दधार तथा मुनेर्मैत्रेयस्य गुरोश्चरणं मूर्ध्ना दधार दण्डवत् प्रणनाम॥ २८॥ सोऽयमिति। हे महायोगिन्! यत्र यस्मिन् सति अकिञ्चनगः अनन्यभक्तप्राप्यो हरिः प्राप्यते सोऽयं भगवद्भक्ति-ज्ञानात्मकः तमसः अज्ञानस्य परो निवर्तकः करुणात्मना दयार्द्रचित्तेन भवता मह्यं दर्शितः॥ २९॥ इतीति। इत्युक्त्वा आनम्य ततो गमनार्थं पुनः प्रणामं कृत्वा तं मुनिमामन्त्र्य गमनप्रार्थनां कृत्वा तदनुज्ञातः निर्वृताशय आनन्दपूर्णचित्तः विदुरः स्वानां ज्ञातीनां स्वान् ज्ञातीन् धृतराष्ट्रादीन्। शेषे षष्ठी। दिदृक्षुः गजसाह्वयं हास्तिनपुरं प्रययौ। निर्वृताशय इत्यनेन "यावतः कृतवान् प्रश्नान् क्षत्ता कौषारवाग्रतः। जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह"। इति प्रथमस्कन्धोक्तान्यप्रश्नोत्तरश्रवणविरक्तिहेतुर्भक्तियोगः सूचितः॥ ३०॥ एतदिति। हरौ अर्पितः आत्मा मनो यैस्तेषां राज्ञां प्रचेतसाम् एतत् चरितं यः शृणुयात् सः आयुः धनं यशः स्वस्ति कल्याणम् ऐश्वर्यं गतिं वैकुण्ठादिकां चाप्नुयात्॥ ३१॥

ब्रह्मादिसंसदि विपक्षसदक्षदक्षरुक्षाक्षरेपुभिरनुक्षणमर्द्यमानः। कृत्तोऽपि तत्प्रतिविधौ न दधौ स्वचेतः श्रीशङ्करोऽतुलमतिर्मम शं करोतु॥ १॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धेऽन्वितार्थप्रकाशिकायां प्राचेतसोपाख्यानं नामैकत्रिंशोऽध्यायः॥ ३१॥

॥ समाप्तोऽयं चतुर्थः स्कन्धः॥

—:꧁:—

श्रीगणेशाय नमः

अथ पञ्चमः स्कन्धः

# अथ प्रथमोऽध्यायः

राजोवाच

**प्रियव्रतो भागवत आत्मारामः कथं मुने। गृहेऽरमत यन्मूलः कर्मबन्धः पराभवः॥ १॥**

आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन् पदेऽस्तु मम चित्तमगोचरेऽपि।
यत्स्वद्रुव्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति॥ १॥

यावन्निरञ्जनमजं पुरुषं जरन्तं सञ्चिन्तयामि निखिले जगति स्फुरन्तम्।
तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः॥ २॥

प्रेम्णा मुकुन्दपदकञ्जयुगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या।
गङ्गासहायजरठो हरितोषहेतोः स्कन्धेऽन्वयं लिखति सम्प्रति पञ्चमेऽस्मिन्॥ ३॥

आद्ये प्रियव्रतस्त्यक्तं राज्यं प्राप्याणंवान् व्यधात्। द्वीपांश्च तत्रहौ गद्यपद्यसङ्ख्या खवार्द्धयः (४०)॥
चत्वार्युवाचेति सार्द्धा ऊनाशीतिरनुष्टुभः (७९॥)॥ १॥

अत्र पञ्चमस्कन्धगद्यानां प्रायोऽन्विततयाऽनन्वितपदानामन्वयाय लेखः अवश्यं व्याख्येयानां व्याख्यार्थं लेखः तदन्येषां विस्तरभयात्त्यागोऽपि। पूर्वस्कन्धान्ते प्रियव्रतस्य पूर्वमात्मारामत्वं ततो विषयभोगं श्रुत्वा विस्मितः परीक्षित् पृच्छति—प्रियव्रत इति। हे मुने! प्रियव्रतो भागवतः आत्मारामश्च अतः गृहे कथमरमत। यद्गृहरमणं मूलं कारणं यस्य तादृशः कर्मणा बन्धः पराभवः स्वस्वरूपतिरस्कारश्च भवति॥ १॥ गृहे तु रतिरपि तत्राभिनिवेशात्स्यात् स तु भागवतानां न संभवतीत्याह—नेति। हे द्विजर्षभ! नूनं सर्वतो मुक्तसङ्गानां तादृशानां प्रियव्रतसदृशानां पुंसामयमज्ञजनप्रसिद्धो गृहेष्वभिनिवेश आसक्तिर्न भवितुमर्हति॥ २॥ कुटुम्बे स्पृहया गृहाभिरतिः स्यात्साऽपि तेषां नास्तीत्याह—महतामिति। हे विप्रर्षे! उत्तमश्लोकस्य हरेः पादयोर्या छाया कामादिसन्तापहारिणी तया निर्वृतमानन्दितं चित्तं येषां तेषां महतां खलु निश्चयेन कुटुम्बे स्पृहावती मतिर्न भवति। स्पृहायुक्ता स्पृहारूपा वा अमतिरज्ञानमिति वा॥ ३॥ संशय इति। हे ब्रह्मन्! दारागारसुतादिषु प्रसक्तस्य प्रियव्रतस्य पुनः कृष्णे अच्युता अस्खलिता मतिर्भक्तिः सिद्धिर्मोक्षसिद्धिश्चाभूदित्ययमपि महान् संशयोऽस्ति॥ ४॥ बाढमिति। बाढं भवता सत्यमुक्तं तथापि भगवत उत्तमश्लोकस्य श्रीमतोः श्रिया सेव्यमानयोश्चरणारविन्दयोः यः मकरन्दरूपो रसः परमानन्ददायि लावण्यं तस्मिन्नावेशितं चेतो यैस्ते जनाः भागवता एव सत्यासत्यविवेकित्वात्परमहंसास्तेषां दयितस्य भगवतः कथामेव शिवतमां कल्याणात्मिकां स्वां स्वकीयां पदवीं मोक्षमार्गभूतां विघ्नबहुलत्वात्प्रायेण किंचिदन्तरायेण विहताः विघ्निता अपि न हिन्वन्ति न त्यजन्ति। विहतामिति पाठे कथाविशेषणम्। किंतु पूर्ववासनया तामेव सेवन्ते। हिन्वन्तीति "हिवि प्रीणने" इत्यस्य "हि गतिवृद्ध्योः" इति स्वादेर्वा रूपम्। धातूनामनेकार्थत्वात्त्यागे वृत्तिः॥ ५॥

प्रियव्रतस्य ब्रह्मन् आज्ञैव अन्तरायोऽभवदिति सप्रलङ्गमाह—यर्हीति। हे राजन्! यर्हि यदा वाव एव ह प्रसिद्धमेतत्। तदैव स राजपुत्रः प्रियव्रतः परमभागवतः नारदस्य चरणोपसेवया शरणागमनेन अञ्जसा अनायासेनैव तत्कृपयाऽवगतं ज्ञातं परमार्थस्यात्मनः सतत्त्वं स्वभावो याथार्थ्यं येन सः। "शीलं सतत्त्वं संसिद्धिः" इति हैमः। तथा ब्रह्मसत्रेण आत्मध्यानेन कार्येण दीक्षिष्यमाणः नियमं ग्रहीष्यन् एवं नियमकरणात्प्रागपि भगवति वासुदेव एवाव्यवधानं निरन्तरं समाधियोगेन चित्तैकाग्र्येण समावेशितः

समर्पितः सकलकारकाणां सर्वेन्द्रियाणां क्रियाकलापः श्रवणकीर्तनदर्शनस्मरणादिक्रियासमूहो येन स राजपुत्रः प्रियव्रतः आम्नाता राज्ञां शास्त्रेणोक्ताः ये प्रवराः श्रेष्ठा गुणास्तेषां गणस्य समूहस्यैकान्तभाजनतया नित्याश्रयतया स्वपित्रा मनुना अवनितलपरिपालनाय आमन्त्रितो नियुक्तोऽपि नैवाभ्यनन्दत् नैवैच्छत्। तदा ब्रह्मा स्वभवनादवततारेत्यग्रेतनेनान्वयः। यद्यपि तत्पितृवाक्यमप्रत्याम्नातव्यं न प्रत्याख्येयं तथापि तदधिकरणे राज्याधिकारेऽसतो मिथ्याभूतादपि राज्यप्रपञ्चात् पुरुषार्थभूतस्याध्यात्मनः पराभवं तिरस्कारमन्वीक्षमाण आलोचयन्नाभ्यनन्दत् ॥ ६॥ अथेति। अथ ह भगवानादिदेवः गुणविसर्गस्य त्रिगुणकार्यस्यैतस्य प्रपञ्चस्य परिबृंहणं समृद्धिस्तदनुध्यानेन निरन्तरं तच्चिन्तनेन व्यवसितो निश्चितः सकलजगतां प्राणिनामभिप्राय इष्टानिष्टप्राप्तिरूपो येन सः। यथा राज्ञा चारैर्मण्डलेश्वराणामभिप्रायो निश्चीयते। तद्वत् आत्मयोनिर्ब्रह्मा अखिलैर्निगमैर्वेदैर्मूर्तिमद्भिर्निजगणैः मरीच्यादिभिश्च परिवेष्टितः परिवृतः स्वभवनात्सत्यलोकादवततार अवतीर्णः। अत्र प्रियव्रतं बाल्य एव विरक्तं वनं गतं ज्ञात्वा तदाज्ञया कनिष्ठोऽप्युत्तानपादो राज्यं चकार। तद्वंश्याश्च प्रचेतःपर्यन्ता यथासमयं राज्यं चक्रुरेवं च स्वायम्भुवमनोरर्द्धाद्प्यधिकः कालो जगाम। प्राचेतसो दक्षस्तु स्वायम्भुवमन्वन्तरे जातः। पूर्वजन्मैश्वर्यकामस्तपश्चचार। ततश्चाराजकं वीक्ष्य मनुमनोरथपूर्तये ब्रह्मा आगत्य प्रियव्रतं राज्ये प्रवर्तयामास। ततः पञ्चमन्वन्तरपर्यन्तं प्रियव्रतस्य तद्वंश्यानां राज्ञां चाधिकारः तृतीयचतुर्थपञ्चमानामुत्तमादीनां प्रियव्रतपुत्रत्वात् द्वितीयमनोः स्वारोचिषस्यापि तदन्तःपातात् तत्तन्मनुपुत्रपौत्राद्यास्तु प्रैयव्रत एव राज्ये खण्डमण्डलेश्वररूपा राजानो बभूवुः। ततः षष्ठचाक्षुषमन्वन्तरारम्भे तपसो निवृत्तेन दक्षेण प्रजासृष्टिस्तत्रैव तस्य साम्राज्यं च चाक्षुषस्योत्तानपादवंश्यत्वात्तदवधि स्वायंभुवाधिकारः ॥ ७॥ स इति। स ब्रह्मा तत्र तत्र गगनतले आकाशमार्गे उडुपतिश्चन्द्र इव दिशोऽवभासयन् विमानानामावलयो येषां तैरमरपरिवृढैः देवश्रेष्ठैरिन्द्रादिभिस्तारादिस्थानीयैरनुपथमभिपूज्यमानस्तथा पथि पथि च वरूथशः सङ्घीभूतैः सिद्धगन्धर्वादिगणैरुपगीयमानः स्तूयमानो गन्धमादनपर्वतस्य द्रोणीं पर्वतद्वयान्तःप्रियव्रतस्थितिस्थानमुससर्प आजगाम ॥ ८॥ तत्रेति। तत्र ह वा तस्मिन्नेव स्थाने हंसयानेन उपलक्षणेन एनं भगवन्तं हिरण्यगर्भं ब्रह्माणं पितरमुपलभमानः मत्पिताऽयमिति लक्ष्यन् देवर्षिः पितापुत्राभ्यां मनुप्रियव्रताभ्यां सहावहिताञ्जलिः सन् सहसैवाभ्युत्थायार्हणेन पूजया सहोपतस्थे तुष्टाव। नारद उपदेशाय मनुश्च तन्नयनायागतोऽभूदिति ॥ ९॥ भगवानिति। हे भारत! भगवानादिपुरुषो ब्रह्मापि तत्तेन नारदेनोपनीतं समर्पितमर्हणं पूजा यस्य सः तथा सूक्तवाक्येन यथोचितमधुरवाक्येन यकारसहितो रहितश्च पाठः। अतितरामुदिता वर्णिता गुणगणा अवताराः सुजयाः सर्वोत्कर्षाश्च यस्य सः अत एव सदयहासपूर्वकोऽवलोको यस्य स तं प्रियव्रतमिति वक्ष्यमाणमुवाच ॥ १०॥ प्रियव्रतो मद्वाक्येऽपि न श्रद्धास्यतीति शङ्कमानो ब्रह्मा हरिरेव मन्मुखेन त्वामुपदिशतीति वदन् प्रवृत्तिनिवृत्तिरहस्यमाह—निबोधेति। हे तात! इदं वक्ष्यमाणमृतं सत्यं ब्रवीमि। अप्रमेयं देवं परमेश्वरम् असूयितुं नार्हसि दोषारोपेण द्रष्टुं नार्हसि। अहं तत्प्रेरणयैव त्वां प्रजापालने नियुनज्मि मद्वाक्यानादरात्तस्य वानादरः। अहं ब्रह्मा भवो रुद्रः ते तव ततः तातः मनुरेष महर्षिर्नारदस्तव गुरुरन्ये च सर्वे वयं विवशाः यदधीनाः सन्तो यस्य दिष्टमादिष्टमाज्ञां वहाम पालयाम ॥ ११॥

नेति। तस्य कृतं तेन निर्मितं तनुभृद्देहधृग् जीवः कोऽपि तपसा विहन्तुं न विभूयात् एवं प्रत्येकं न विभूयादित्यस्यान्वयः। विद्यया योगवीर्येण मनीषया बुद्धिधनैपुण्येण अर्थेन धनादिना धर्मैर्यज्ञानुष्ठानादिभिः परतः बलवता सहायेन स्वतः स्वतःसिद्धप्रभावेण अतस्त्वं राज्यमनिच्छन्नपि तदिच्छातिक्रमे समर्थो नासीति भावः ॥ १२॥ देहधारणेऽपि लोकाः परतन्त्रा इत्याह—भवायेति। अङ्ग हे प्रियव्रत! जनता जीवसमूहः भवाय जन्मने नाशाय मरणाय कर्म कर्तुं शोकाय मोहाय भ्रमाय भयाय सुखाय दुःखाय च अव्यक्तेनेश्वरेण दिष्टं निर्मितं देवमनुष्यादिदेहयोगं सदा धत्ते न त्वन्यथा कर्तुं शक्नाति ॥ १३॥ कर्मकरणेऽपि लोकाः परतन्त्रा इत्याह—यदिति। हे वत्स! यस्य भगवतो वाचि वेदलक्षणायां तन्त्यां दामन्यां गुणकर्मदामभिः गुणाः सत्त्वादयः कर्माणि च तत्पूर्वकाणि तन्निबन्धनैर्दामभिर्ब्राह्मणादिनामभिः प्रग्रहस्थानीयैः सुदुस्तरैः सुदृढैर्वयं सर्वे सुयोजिता निबद्धाः सन्तस्मै ईश्वराय बलिं वहामः तदाज्ञया स्वाधिकारप्राप्तं कर्म कुर्मः। अन्यथा दण्डभागित्वं स्यात्। यथा नसि नासिकायां रज्जुप्रोता बद्धाः सन्तश्चतुष्पदो बलीवर्दा द्विपदे पुरुषाय यदि बलिं भारं वहन्ति तदैव खादनपानादिना सुखिनो भवन्त्यन्यथा तु दण्डभागिन एव भवन्ति तथेत्यर्थः ॥ १४॥ कर्मफलभोगेऽपि पारतन्त्र्यमाह—ईशेति। गुणाः सत्त्वादयस्तदनुरूपाणि यान्यस्मत्कर्माणि तत्सङ्गात् तत्संबन्धात्तदनुरूपं यत् यत् देवतिर्यगादिलक्षणं देहं नाथः स्वामी अयुङ्क्त योजितवांस्तत्तदास्थाय स्वीकृत्य तेनैवेशा ईश्वरेण अभिसृष्टं दत्तं दुःखं सुखं वा वयमवरुन्ध्महे। हि निश्चयेन स्वीकुर्म एव न तु यथेष्टम्। यथा स्वामिना दत्तमेव कणिशादि बलीवर्दा भक्षयन्ति तद्वत् गुणकर्मसङ्गादितीश्वरे वैषम्यं वारयति। यथा चक्षुष्मता अन्धाः पुरुषाः छायामातपं वा नीयमाना यत्र नीयन्ते तत्र गच्छन्ति न स्वातन्त्र्येण तथेत्यर्थः ॥ १५॥

नन्वेतत्सर्वमविदुष एव नात्मविद इत्यत आह—मुक्तोऽपीति। यावत्प्रारब्धं सुखदुःखादिप्रदं पुण्यपापरूपं कर्मास्ति तावत्तदश्नन् मुक्तो जीवन्मुक्तोऽपि अभिमानशून्यः सन् स्वदेहं बिभृयात् बिभर्त्येव। यथा स्वप्ने अनुभूतं वस्तु प्रतियातनिद्रो गत-

निद्रः पुरुषोऽभिमानशून्य एवानुस्मरति तद्वत्। ननु तर्हि भोगवासनया पुनर्जन्म स्यात्तत्राह किंतु ज्ञानेन अविद्यानिवृत्त्या अन्यदेहाय देहान्तरारम्भकान् गुणान् वासनाः कर्माणि च न वृङ्क्ते न सम्भजते ॥ १६ ॥ भयमिति। प्रमत्तस्य स्वकर्त्तव्यविमुखस्य विषयासक्तस्य वनेषु सङ्गभयेन वनाद्वनान्तरं गच्छतोऽपि भयं संसारादिप्राप्तिलक्षणं स्यादेव। कुतः यतः स वनवासी सहैव षट् सपत्नाः शत्रवो मनःपञ्चज्ञानेन्द्रियलक्षणा यस्य स तथाभूत एव तत्रास्ते। बुधस्य विवेकिनस्तु जितेन्द्रियस्य अत एवात्मरतेरात्मारामस्य गृहाश्रमोऽवद्यं रागादिदोषं किं नु करोति नैव करोतीत्यर्थः ॥ १७ ॥ अजितेन्द्रियजितेन्द्रिययोर्गृहाश्रमे न दोष इत्युक्तम्। इन्द्रियजयेच्छोस्तु प्रत्युत गुण इत्याह—य इति। अतो यः षट् सपत्नान् इन्द्रियाणि विजिगीषमाणः विजेतुमिच्छन् ज्ञाननिष्ठाविरोधित्वेन पूर्वं गृहेषु निर्विश्य स्थित्वा शनैस्तेषां निरोधं कुर्वन् जेतुं यतेत। तेष्वरिपु क्षीणेषु वशीकृतेषु सत्सु पश्चात् विपश्चिदात्मारामः सन् कामं यथेष्टं गृहे वने वा विचरेत्। यथा लोकेऽपि राजा दुर्गाश्रित एव ऊर्जितान् अरीन् अत्येति जयति। युध्येतेति पाठे प्रहरेदित्यर्थः। पश्चात् दुर्गे वान्यत्र वा वर्त्तते। प्रथमतो दुर्गान्निःसरणे शत्रुभयं स्यात्तथेत्यर्थः। गृहे कथंचिद्विषयभोगेऽपि दोषाभावात् शनैर्निरोद्धुं शक्यत्वाच्च तस्य दुर्गत्वं बोध्यम् ॥ १८ ॥ त्वमिति। इदं गृहदुर्गाश्रयणं प्राकृतानामेव त्वं तु अब्जनाभस्याङ्घ्रिसरोजकोश एव दुर्गं तदाश्रितोऽत एव तत्प्रसादेन निर्जितषट्सपत्नोऽतो यद्यपि गृहे वने वा तव भयं नास्ति। तथापि पुरुषेण भगवता आदिष्टान् अधिकारप्रापितान् भोगान् इह राज्याधिकारे स्थितो भुङ्क्ष्व। अधिकारसमाप्त्यनन्तरं तत्त्यक्त्वा विमुक्तसङ्गः सन् प्रकृतिं स्वरूपं भजस्व आत्मनिष्ठो भव ॥ १९ ॥ इतीति। इत्येवं समभिहितः सम्यक् ब्रह्मणा आज्ञापितो महाभागवतः प्रियव्रत आत्मनः स्वस्य ततो लघुतया अल्पतया पौत्रत्वेन हेतुना त्रिभुवनगुरोः सर्वपूज्यस्य भगवतो ब्रह्मणोऽनुशासनमाज्ञामवनतशिरो नमत्कन्धर एव बाढं तथा करिष्यामीत्येवं सबहुमानं यथा भवति तथा उवाह अङ्गीकृतवान्। यद्वा आत्मनो यदनुशासनं तत् अलघुतया गौरवेण अङ्गीचकार ॥ २० ॥ भगवानिति। भगवान् ब्रह्मापि मनुना संतुष्टेन यथावत् सम्यक् उपकल्पिता समर्पिता अपचितिः पूजा यस्य स तथा प्रियव्रतनारदयोरविषमं यथा भवति तथाऽभिसमीक्षमाणयोः सतोः प्रियव्रतस्य योगभ्रंशान्नारदस्य शिष्यनाशात्कुटिलमीक्षणं नाभूदित्यर्थः। आत्मनः स्वस्य समवस्थानं सम्यगाश्रयभूतमवाङ्मनसं वाङ्मनसयोरविषयमव्यवहृतं स्वरूपं प्रवर्त्तयन् चिन्तयन् स्वक्षयं स्वनिवासं सत्यलोकमगमत्। अवाङ्मनस इति पाठे अवाक् वाचामगोचरं कथंचिन्मनसः क्षयं विषयम् ॥ २१ ॥

मनुरिति। मनुरपि परेण ब्रह्मणैव हेतुना प्रतिसन्धाऽस्य सञ्जाता स प्रतिसन्धितः सम्पन्नः मनोरथः प्रियव्रतराज्याभिषेकरूपो यस्य सः सुरर्षिवरो नारदस्तदनुमतेनात्मजं प्रियव्रतमखिलधरामण्डलस्य स्थितिगुप्तये मर्यादापालनाय राज्ये आस्थाप्य स्वयमतिविषमोऽतिदुस्तरो यो विषय एव विषजलानि तेषामाशयः स्थानं गृहं तस्य आशा भोगेच्छा तस्या उपरराम उपरतोऽभूत् ॥ २२ ॥ इतीति। इति ह वाव एवमेव हि ईश्वरस्येच्छया अधिनिवेशितः प्रापितः कर्माधिकारो यस्य महतां ब्रह्मादीनां मानवर्द्धनः सम्मानकर्त्ता ब्रह्मवाक्याद्राज्ये प्रवृत्तः अखिलस्य जगतो बन्धध्वंसने परोऽनुभावः प्रभावो लीला यस्य तस्य भगवत आदिपुरुषस्य यदङ्घ्रियुगलं तस्यानवरतं निरन्तरं ध्यानं तस्यानुभावेन परिरन्धितकषायो दग्धरागादिमल आशयोऽन्तःकरणं यस्य स तथा। अत एवावदातः शुद्धोऽपि स जगतीपतिः महीतलमनुशशास पालयामास ॥ २३ ॥ अथेति। राज्याङ्गीकारानन्तरं प्रजापतेर्विश्वकर्मणो बर्हिष्मतीं नाम दुहितरं कन्यामुपयेमे व्यूढवान्। उ विस्मये ह स्फुटं वाव निश्चये। तस्यात्मना समानैः शीलादिभिरुदारान् महतो दशात्मजान् पुत्रान् भावयांबभूव उत्पादयामास। तत्र शीलं स्वभावः गुणाः शौर्यादयः रूपं सौन्दर्यं वीर्यं पराभिभवसामर्थ्यं शौर्यं रणमध्ये स्वगृह इव प्रवेशः औदार्यं वदान्यता यवीयसीं कनिष्ठामूर्जस्वतीं नाम कन्यां च भावयांबभूव ॥ २४ ॥ आग्नीध्रेति। अग्नीनामेव नामानि येषां स्फुटं शेषम् ॥ २५ ॥ एतेषामिति। एतेषां पुत्राणां मध्ये कविर्महावीरः सवन इति त्रयः पुत्रा ऊर्ध्वरेतसोऽकृतविवाहाः स्त्रीसंबन्धरहिता जितेन्द्रिया आसन्। यतस्ते अर्भभावात् बाल्यादारभ्यात्मविद्यायामेव कृतपरिचयाः कृताभ्यासाः अतः पारमहंस्यमाश्रममेवाभजन् स्वीकृतवन्तः ॥ २६ ॥ तस्मिन्निति। तस्मिन् पारहंस्याश्रमेऽपि उ ह वै उपशमशीलाः परमर्षयश्च कव्यादयः सकलजीवनिकायाः आवसन्त्यत्र तस्य भीतानां शरणभूतस्य रक्षकस्य वासुदेवस्य भगवतः श्रीमच्चरणारविन्दयोरविरतं निरन्तरं स्मरणेनाविगलितोऽखण्डितो यः परमो भक्तियोगस्तस्यानुभावेन परिभाविते संशोधितेऽन्तर्हृदये हृदयमध्येऽधिगतः प्रतीतो यो भगवान् तस्मिन् सवषां भूतानामात्मभूतेऽत एव प्रत्यगात्मनि स्वरूपभूते आत्मनः स्वस्य त्वंपदार्थस्य तादात्म्यमैक्यमेवाविशेषेण देहाद्यहन्ताममतानिरासेन समीयुः प्रापुः ॥ २७ ॥

अन्यस्यामिति। प्रियव्रतस्यान्यस्यापि भार्यायामुत्तमादयस्त्रयः पुत्रा आसन् जातास्ते च क्रमेण मन्वन्तराधिपतयो मनवो बभूवुरिति ॥ २८ ॥ एवमिति। एवमुक्तप्रकारेण स्वतनयेषु कव्यादिषु त्रिषु उपशमायनेषु संन्यासाश्रमगतेषु अव्याहता अखिलाः पुरुषकाराः पौरुषाणि यस्मात्तेन सारेण बलेन संभृतौ दोर्दण्डौ तयोर्यत् युगलं तेनापीडित आकृष्टो यो मौर्वीगुणः धनुषः प्रत्यञ्चा तस्य स्तनितेन युद्धं विनैव टङ्कारमात्रेण विरमिता निरस्ताः धर्मप्रतिपक्षाः येन सः। भोगातिशयं वर्णयति। बर्हिष्मत्याः स्वभार्या-

याश्चानुदिनमेधमानैः प्रमोदादिभिः पराभूयमानविवेक इव अत एव विषयासक्त्या आत्मानमवबुध्यमान इव इवशब्दाभ्यां वस्तुतस्तु भगवदनुकम्पयाऽन्यवत्तस्य विवेकराहित्यमात्माज्ञानं च नाभूदिति सूचितम्। तत्र प्रमोदः पतिं दृष्ट्वा हर्षः प्रसरणमभिगमनं यौषिण्यं यौपित्स्वभावकृतं शृङ्गारनुभावप्रकाशनं ततो व्रीडया प्रमुषिताः सङ्कोचिता हासावलोकाः रुचिराः क्ष्वेल्यादयः परिहासवाच्यादीनि सः जगतीपतिः पृथ्वीपतिः परिवत्सराणां वर्षाणामेकादशार्बुदानि तावत्कालपर्यन्तं पृथिवीं बुभुजे। अत्र "अर्बुदं कोटिरित्याहुः" इति निबन्धोक्तेः। अबुदं कोठिपर्यायमिति सन्दर्भोक्तेः। वेदेऽपि "नियुतं च प्रयुतं चार्बुदं च" इति प्रयुतानन्तरनिर्देशाच्च। एकादशार्बुदानीत्येकादश कोटय इत्यर्थो ग्राह्यः। एवं च ध्रुवादारभ्य शतजित्पर्यन्ते मनुवंशे तत्र तत्रोक्ता राज्यसंबन्धिन्यः संवत्सरसङ्ख्याः स्वायम्भुवे मन्वन्तर एवावकाशं लभन्ते। अर्बुदं दश कोटय इत्यङ्गीकारे तु तासामन्वन्तरान्तरसाङ्कर्येण। "स्वं स्वं कालं मनुर्भुङ्क्ते साधिकां ह्येकसप्ततिम्। स एवं स्वान्तरं निन्ये युगानामेकसप्ततिम्।" इति तृतीयस्कन्धविरोधापत्तिः ॥ २९ ॥ प्रभावातिशयमाह—यावदिति। सुरगिरिं मेरुमनुपरिक्रामन् प्रदक्षिणीकुर्वन्भगवानादित्यः सूर्यो यावल्लोकालोकाचलपर्यन्तं वसुधातलमवभासयति तस्मिन्नर्द्धेनावर्त्तेन दिवसनाम्ना प्रतपति प्रकाशयति अर्द्धेन अपरार्द्धावर्त्तेन रात्रिनाम्ना चावच्छादयति तमसावृतं करोति। तदा तत् अन्धकारावरणमनभिनन्दन् अरोचयन् भगवत उपासनेनोपचितोऽतिपुरुषः पुरुषानतिक्रान्तः प्रभावो यस्य स प्रियव्रतः रजनीमपि दिनं करिष्यामीत्यभिप्रायवान् सूर्यरथसमानवेगवता ज्योतिर्मयेनात्युत्तुङ्गेन रथेन द्वितीयः सूर्य इव सप्तकृत्वः सप्तवारान् तरणिमनु सूर्यस्य पृष्ठतः पर्यक्रामत् मेरुं प्रदक्षिणीकृतवान्। तरणेर[illegible]चलारोहणे स्वयमुदयाचलमारोहदिति। एतच्च प्रजानां सुखाय नतु सूर्यस्पर्द्धया। तेनर्तुजमुष्णत्वं योगबलात् प्रजानुकूलमेव चकार ॥ ३० ॥ ये इति। ये वा उ ह तस्य प्रियव्रतस्य रथचरणनेमिकृताः परिखाताः परितो गर्त्ताः सप्त ते एव प्रसिद्धा अत्याश्चर्यभूताः सप्त सिन्धवः आसन्। यतो यैरेव सिन्धुभिः सप्तभिः परिखाभूतैः भुवः सप्त द्वीपा आसन्। अत्र समुद्राणां सप्तत्वाद्रथानां सप्तत्वमनुमेयम्। ते चैकचक्राः सूर्यरथादप्युच्चाः मण्डलावृत्तिरीत्या बभ्रमुः। अतो बहिर्वहिरधिकप्रमाणाः उत्तरोत्तरमुच्चाश्च तत्र दक्षिणायने पंचविंशत्या दिनैः सार्धपंचचत्वारिंशद्घटिकाभिरेकैकरथारोहणम्। उत्तरतो दक्षिणदेशगमनं पौषान्तम्। तत उत्तरायणे प्रोक्तकालेनैकैकरथारोहणं दक्षिणत उत्तरदेशगमनं च। आषाढपर्यन्तं यथेच्छगत्या। एवं रथानां सप्तत्वात् तैरेव भुवो मानस्य समाप्तत्वात्सप्तकृत्वात्सकृत्त्व इत्युक्तं नतु सप्त दिनान्येवायं व्यापारः किन्तु तद्राज्यकालपर्यन्तमभूदेव ॥ ३१ ॥ जम्बू इति। जम्बूः प्लक्षः शाल्मलिः कुशः क्रौञ्चः शाकः पुष्करः इति संज्ञा येषां तेषां द्वीपानां परिमाणं शृण्विति शेषः। पूर्वस्य यन्मानं विस्तारस्ततस्तत उत्तरो यथासङ्ख्यं द्विगुणेन मानेन युक्त इत्येवं समुद्रेभ्यो बहिः समन्तत उपक्लृप्ताः प्रियव्रतेन रचिताः ॥ ३२ ॥

क्षारोदेति। क्षारमुदकं यस्मिन् स क्षारोदः एवमिक्षुरसोदादयः। दधिमण्डो मथितं दधिसप्तजलधयः सप्तद्वीपानां परिखा इव यथानुपूर्वं सप्तस्वपि द्वीपेष्वेकैकश्येन एकैकशः अभ्यन्तरे तैः संवेष्टिता ये द्वीपास्तैर्विस्तारतः समानाः पृथक् पृथगसंकीर्णाः बहिर्वहिः परित उपकल्पिताः रचिताः तेषु जम्ब्वादिषु द्वीपेषु बर्हिष्मतीपतिः प्रियव्रतोऽनुव्रतान् स्वाज्ञानुसारिणः आत्मजान् पुत्रान् आग्नीध्रादिसंज्ञान् सप्त यथासंख्येन यथोक्तक्रमेण एकैकस्मिन् द्वीप एकैकमेवाविवादाय पतिं विदध इत्यन्वयः। ऊर्जस्वतीं नाम दुहितरं कन्यां च उशनसे शुक्राय प्रायच्छत् ददौ। यस्यामूर्जस्वत्यां देवयानी नाम काव्यस्य शुक्रस्य सुताऽऽसीज्जाता ॥ ३३ ॥ नैवमिति। उरुक्रमस्य स्थानादिलीलया बहुधा क्रीडतो भगवतः पुंसां भक्तानामत एव तस्याङ्घ्रिरजसा जिताः षड्गुणाः पञ्च ज्ञानेन्द्रियाणि एकं मनश्च षडूर्मयो वा यैस्तेषामेवंविधः वर्णितप्रकारकः पुरुषकारः द्वीपसमुद्रादिरचनसामर्थ्यं चित्रमाश्चर्यमसम्भावितं न भवति यस्माद्धिदूरं विगतोऽन्त्यजादिनीचयोनिं प्राप्तोऽपि सकृदेकदापि विवशावस्थायामपि यस्य भगवतो नाम आददीत गृह्णीयात् उच्चारयेत्। यदि तदा सोऽपि अधुना तत्क्षणमेव बन्धमनादिपरम्परागतसंसारहेतुमविद्यां जहाति त्यजति। तन्वमिति पाठेऽपि स एवार्थः। यणार्षः। तत्त्वमिति पाठे चाण्डालत्वं जहाति शुद्धो भवतीत्यर्थः ॥ ३४ ॥ स एवमिति। स प्रियव्रत एवमपरिमितबलपराक्रमोऽपि देवर्षिचरणयोरनुशयनमुपसत्तिः शरणगमनेन विद्याग्रहणं तदनुपतितो यो गुणविसर्गो राज्यादिप्रपञ्चस्तस्य संसर्गेणात्मानमनिर्वृतमनानन्दितमिव मन्यमानः यत आत्मनि मनसि निर्वेदो यस्य सः एकदा त्विदं वक्ष्यमाणमात्मनिन्दापरं वचनमाह स्म ॥ ३५ ॥ अहो इति। अहो आश्चर्यम्। विवेकिनापि मया असाध्वनुष्ठितं यद्यस्मादविद्ययाहंममात्मिकया रचिताः शोभनतया प्रकाशिताः विषमा दुःखदा विषया यस्मिंस्तस्मिन्नन्धकूपे अन्धकूपवन्निष्फले दुर्निष्क्रमणे गृहे इन्द्रियैरभिनिवेशितस्तत्तस्मादलमलं विषयभोगैरमुष्या वनिताया विनोदमृगं वानरतुल्यं मां धिग्धिगित्यात्मानं गर्हयाञ्चकार निन्दितवान् ॥ ३६ ॥

परेति। परदेवता भगवान् तस्याः प्रसादेनाधिगतः प्राप्तो य आत्मप्रत्यवमर्श आत्मसाक्षात्कारस्तेन हृदि निहितः स्थितो निर्वेदो विषयवैतृष्ण्यं यस्य सः हृदीत्यस्योत्तरत्राप्यन्वयः। हृदि गृहीतो निश्चितो भगवल्लीलानुस्मरणेनैव परमपुरुषार्थसिद्धिर्नान्यथेत्येवं हरिविहारानुभावो येन स प्रियव्रतः एवमात्मानं निन्दित्वा च अनुप्रवृत्तेभ्यः स्वपुत्रेभ्य इमां पृथ्वीं यथादायं यथायोग्यं विभज्य विभागेन दत्त्वा तथा सहमहाविभूतिं महाविभूतिः साम्राज्यलक्ष्मीस्तत्सहितां भुक्तो भोगो यस्यास्तां महिषीं भार्यां च

मृतकशरीरमिवापहाय परित्यज्य स्वयं भगवतः परमभागवतस्य नारदस्य पदवीं तदुपदिष्टमार्गमेव पुनरनुससार ॥ ३७ ॥ तस्येति । तस्य प्रियव्रतस्य महिमोपनिबन्धनाः पूर्वसिद्धाः एते त्रयः श्लोकाः सन्ति । यथा वेदे तदप्येष श्लोको भवतीति प्रियव्रतेति प्रियव्रतेन कृतं कर्मेश्वरं विना को नु कुर्यात् । यश्छायां घ्नन् तमो निरस्यन् रजनीं विलोपयन् इत्यर्थः । रथचक्रनेमिनिम्नैः तद्गर्तैः सप्त वारिधीन् समुद्रान् अकरोत् ॥ ३८ ॥ भूसंस्थानमिति । येन प्रियव्रतेन भूतनिवृत्त्यै प्राणिनां निर्विवादेन सुखलाभाय तैः सिन्धुभिर्भूसंस्थानं द्वीपरचनात्मकं कृतं तथा द्वीपे द्वीपे विभागशः सरिद्गिरिवनादिभिः सीमामर्यादा च कृता ॥ ३९ ॥ भौममिति । पुरुषानुजना भगवद्भक्ता नारदादयस्तेषां प्रियः यः भौमं पातालभवं दिव्यं स्वर्गभवं मानुषं मनुष्यलोकभवं च कर्मयोगजं कर्मानुष्ठानजं महित्वमैश्वर्यं तत्त्वेन नश्वरत्वाद्बन्धहेतुत्वाच्च निरयौपम्यं नरकतुल्यं चक्रे मेने ॥ ४० ॥

इति श्रीभागवते महापुराणेपञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां प्रथमोऽध्यायः ॥ १ ॥

—:❀:—

# अथ द्वितीयोऽध्यायः

श्रीशुक उवाच

**एवं पितरि संप्रवृत्ते तदनुशासने वर्तमान आग्नीध्रो जम्बूद्वीपौकसः प्रजा औरसवद्धर्मावेक्षमाणः पर्यगोपायत् ॥ १ ॥**

द्वितीये तु पूर्वचित्त्यां नाभिमुख्यानजीजनत् । आग्नीध्रस्तनयांस्तत्र गद्याद्या वह्निदृङ्मिताः ( २३ ) ॥

उवाचद्वितयं ( २ ) वेदवार्द्धयः ( ४४ ) स्युरनुष्टुभः ॥ २ ॥

एवमिति । एवं पूर्वोक्तप्रकारेण पितरि प्रियव्रते भगवद्भजने संप्रवृत्ते सति तस्यानुशासन आज्ञायां वर्त्तमानोऽत एव धर्मावेक्षमाणः धर्ममेवावेक्षमाणः नतु धनादि । समास आर्षः । प्रतिभाति । यद्वा । धर्म एवावेक्षमाणोऽयमिति । जम्बूद्वीपमोको यासां ताः प्रजा औरसवत् पुत्रवत् पर्यगोपायत् पालयामास ॥ १ ॥ स चेति । स आग्नीध्रः पितृलोककामः पुत्रकामः पत्नीलाभकामो वा आभृतानि सम्पादितानि परिचर्योपकरणानि पुष्पादीनि येन सः तथा तपस्वी सन् सुरवनितानां क्रीडाचलस्य मन्दरस्य द्रोण्यां स्थित आत्मैकाग्र्येण ध्यानेन भगवन्तं विश्वसृजां पतिं ब्रह्माणमाराधयांबभूव ॥ २ ॥ तदिति । तदुत्कटकामेन स्वत्रर्थं स्वाराधनमुपलभ्य ज्ञात्वा भगवान् सर्वज्ञ आदिपुरुषः सृष्टिकर्त्ता ब्रह्मा सृष्टिवृद्ध्यर्थम् आग्नीध्रकामपूर्त्यर्थं च स्वसदसि गायन्तीं पूर्वचित्तिं नामाप्सरसमभियापयामास संभोगार्थं प्रस्थापयामास ॥ ३ ॥ सा चेति । सा च तत आगत्य तस्याग्नीध्रस्यातिरमणीयं विविधाश्च निविडाश्च ये विटपिनस्तेषां विटपाः शाखास्तेषां निकरास्तैः संश्लिष्टाः पुरटलताः स्वर्णवल्ल्यः तास्वारूढाः ये स्थलविहङ्गा मयूरादयस्तेषां मिथुनैः स्त्रीपुरुषद्वन्द्वैः प्रोच्यमानाभिः श्रुतिभिः उच्चार्यमाणैः षड्जादिस्वरैः प्रतिबोध्यमाना ये सलिलकुक्कुटादयस्तैर्विचित्रं यथा भवति तथोपकूजिता नादिता ये अमला जलाशयास्तेषु यानि कमलानि तेषामाकरम् आश्रमोपवनम् उपवभ्राम । स्वराश्च "षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा । धैवतश्च निषादश्च सर्वे स्युः श्रुतिसंभवाः । मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः । पतङ्गश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान्" ॥ ४ ॥ तस्या इति । सुललिते गमने ये पदविन्यासास्तैर्गतौ विलासो यस्याः । यद्वा । पदविन्यासैरेव गतिश्रेष्ठा विलासश्च सर्वाङ्गगतो यस्या तस्याश्चानुपदं खणखणेति ध्वनिं कुर्वतोः रुचिरयोश्चरणाभरणयोर्नूपुरयोः स्वनं शब्दमाकर्ण्य नरदेवकुमार आग्नीध्रः समाधियोगेनामीलिते नयने एव नलिनमुकुले तयोर्युगलमीषद्विकचय्य किंचिदुन्मील्य व्यचष्ट ददर्श ॥ ५ ॥ तामिति । तां पूर्वचित्तिमविदूरे स्वसमीपे एव मधुकरीं भ्रमरीमिव सुमनसः पुष्पाणि उपजिघ्रन्तीं दिविजानां देवानां मनुजानां च यानि मनांसि नयनानि च तेषामाह्लाददुघैरानन्दजनकैः गतिर्गमनं च विहारः क्रीडा च विनयपूर्वकोऽवलोकश्च

सुस्वराक्षराणि मधुरभाषणानि च अवयवाः मुखकर्णनेत्रादयश्च तैर्नॄणां पुरुषाणां मनसि कुसुमायुधस्य कामस्य विवरं प्रवेशद्वारं विदधतीं निजमुखाद्विगलितं यदमृतमिव स्वादु आसव इव च मादकं सहासं भाषणं तस्मिन् य आमोदो निःश्वासगन्धस्तेन मदान्धा ये मधुकरनिकरास्तैर्य उपरोध आवरणं तेन भयाद्यो द्रुतः शीघ्रः पदविन्यासस्तेन वल्गु मनोहरं स्पन्दनं किंचिच्चलनं स्तनकलशयोः कवरभारे रशनायां वस्त्रे च यस्यास्तां देवीं देदीप्यमानामवलोक्य तदवलोकनेन विवृतावसरस्य लब्धप्रवेशावकाशस्य भगवतो जगद्विमोहकस्य मकरध्वजस्य कामस्य वशमुपनीतः सन् जडवदिति वक्ष्यमाणान् दश श्लोकान् ह स्फुटमुवाच। स्त्रीरञ्जनार्थमेव जाड्यानुकरणं ननु वस्तुत इति वतिप्रयोगः ॥ ६ ॥ का त्वमिति। का त्वमित्युक्त्वा ससंभ्रमं पुंस्त्रीज्ञानाभावमाह। हे मुनिवर्येत्यादि-जाड्यानुकरणार्थम्। त्वं का किंनामाऽसि शैलेऽस्मिन् गिरिवरे च किं चिकीर्षसि कर्तुमिच्छसि। भगवतः परदेवतायाः परमेश्वरस्य कापि मायाऽसि किम्। भ्रुवावालक्ष्याह विज्ये इति। हे सुहृत् सखे! विज्ये ज्यारहिते द्वे धनुषी बिभर्षि तत्किमात्मनोऽर्थे तवैव ताभ्यां किंचित्कार्यमस्ति किंवा विपिने संसाराटव्यां प्रमत्तान् मृगान् पशुतुल्यानस्मदादीन् मृगयसे अन्वेषयसि तान् वशीकर्तुं धनुषी बिभर्षि ॥ ७ ॥

कटाक्षावालक्ष्याह—बाणाविति। वने विचरन् त्वं शतपत्रे नेत्रकमले ते एव पत्राणि पिच्छानि ययोस्तौ शान्तौ विभ्रमेण मन्थरौ अपुङ्खरुचिरौ पुङ्खाभ्यां विनापि रुचिरौ पत्रतया कल्पिताभ्यां पूर्वभागस्य पुङ्खस्थानीयस्याभावादपुङ्खत्वम्। अतितिग्मौ तीक्ष्णौ दन्तौ अग्रभागौ ययोस्तौ भगवतस्तवेमौ बाणौ कस्मै युयुङ्क्षसि योक्तुमिच्छसि। युमार्षः। इति न विद्मः। अतो भयादेतावदेव प्रार्थयामाहे। तवायं विक्रमो नोऽस्माकं जडबुद्धीनां क्षेमायास्तु ॥ ८ ॥ तदङ्गपरिमललोभेनानुगच्छतो भ्रमरानालक्ष्याह—शिष्या इति। भगवतः सर्वज्ञस्य तवेमे शिष्या ईशं गुरुं त्वां परितः अजस्रं पठन्ति तथा सरहस्यं मन्त्रादियुक्तं साम अजस्रं गायन्ति। ईशेति पाठे सम्बोधनम्। युष्मच्छिखातो विलुलिता विगलिताः सुमनसां पुष्पाणामभितो वृष्टीः सर्वे भजन्ति गृह्णन्ति। यथा ऋषिगणा वेदशाखा गृह्णन्ति तथेत्यर्थः ॥ ९ ॥ नूपुरशब्दमाकर्ण्याह—वाचमिति। हे ब्रह्मन्! अरूपा अदृष्टवक्त्रका मुखरा अतिप्रकटा तां च तां चेति तथा तां तुभ्यं त्वामानन्दयितुं तव चरणगतपञ्जरयोस्तित्तिरीणां परं केवलं वाचं शृण्वाम शृणुमः। पञ्जरशब्देन नूपुरयोर्ग्रहणं तित्तिरिशब्देन तदन्तर्मणीनां ग्रहणम्। शब्देन च पञ्जरगतास्तित्तिरिपक्षिणोऽनुमीयन्ते। पीतं परिधान-वस्त्रं नितम्बकान्तित्वेन प्रकल्प्याह। लब्धेति। अङ्कस्य नितम्बस्य विटङ्कबिम्बे मनोहरमण्डले। अङ्गेति पाठे सम्बोधनम्। य रुचिर्दीप्तिः क लब्धेत्यन्वयः। मेखलामालक्ष्याह। यस्यां रुच्यामलातपरिधिः मण्डलाकारोल्मुकवह्निर्वर्तत इति। शेषः। वस्त्रस्य नितम्बरुचित्वेन कल्पितत्वाद्वस्त्रमदृष्ट्वेव पृच्छति ते तव वल्कलं क गतमिति शेषः ॥ १० ॥ स्तनावालक्ष्याह—किमिति। हे द्विज! ते तव रुचिरयोर्मनोहरयोः शृङ्गतोः किं संभृतं पूर्णमस्ति मनोहरं किञ्चिदस्तीत्येतावत्तु जानामि मद्दृष्टिपात-समय एव मुहुराच्छादनात् यतस्त्वं मध्ये कृशोऽपि कष्टेन वहसीति। यत्र च शृङ्गयोर्मे मम दृशिः दृष्टिः श्रिता संलग्ना प्रचलति अन्यथेदं द्वयं न स्यादिति भावः। स्तनगतं कुङ्कुममालक्ष्याह। पङ्क इति। आत्मनस्तव विषाणे शृङ्गे अरुणः पङ्कः ईदृगत्यपूर्वोऽस्ति। हे सुभग! येन पङ्केन ममाश्रमं सुरभीकरोषि ॥ ११ ॥ लोकमिति। हे सुहृत्तम! तावकं लोकं स्थानं मे मह्यं प्रदर्शय। यत्रत्यः यन्निवासी जनः अस्मद्विधस्य कामिपुरुषस्य मनस उन्नयनौ क्षोभकावपूर्वावयवावित्थमुरसा बिभर्त्ति। उन्नयनैरिति पाठे उत्कर्षेण ग्रहणैः तथा वक्त्रे रसो मधुरालापः रासो विलासस्ताभ्यां सहिता सुधा अधरामृतमादिपदेन स्मितादि बहु अद्भुतं बिभर्त्ति ॥ १२ ॥ ताम्बूलादिसुगन्धमालक्ष्याह—का वेति। अङ्ग हे मित्र! तवात्मनो देहस्य वृत्तिः आहारः का वेत्यन्वयः। यस्यादनाद् भक्षणात् हेतोः हविर्वाति तत्संबन्धी गन्ध आगच्छति। अदनाद्बहिरङ्ग भातीति पाठे तु मम तावद्भक्षणाद्बहिः भोजनं विनैव तव देहेऽस्य वृत्तिः स्थितिर्भाति त्वं विष्णोः कलासि विष्णुश्च नाश्नाति। "अनश्नन्नन्योऽभिचाकशीति" इति श्रुतेः। किं च यतः ते कर्णौ विष्णोरिवानिमिषोन्मकरौ रत्नमयत्वेन निमिषरहिते उत्कृष्टमकराकारे कुण्डले ययोस्तथाभूतावित्यर्थः। किञ्च उद्विग्नं भीत्या चञ्चलं मीनयुगलं नेत्रद्वयरूपं यस्मिन् द्विजाः पक्षिणो हंसाद्याः दन्ताश्च तेषां पङ्क्त्या शोचिः शोभा यस्मिंस्तत् आसन्नो भृङ्गनिकरः इव केशस्तोमः परिमललुब्धभृङ्गस्तोम एव वा यस्मिंस्तत् ते तव मुखं सर इव भाति। इत् इति इवार्थेऽव्ययम् ॥ १२ ॥ य इति। योऽसौ त्वया करसरोजेन हतः पतङ्गः कन्दुकः स दिक्षु भ्रमन् सन् भ्रमतो भ्रमचित्तस्य मे अक्षिणी एजयते चालयति। अहं त्वेवं त्वय्यासक्तमनास्त्वं क्रीडासक्ता सती ते तव वक्रजटावरूथं वक्रकेशसमूहमपि मुक्तं मुक्तबन्धनं न स्मरसि न संभालयसि। तथा लम्पटस्त्वय्यासक्तः एष कष्टो धूर्त्तोऽनिलस्ते नीवीं वस्त्रं हरति तथापि न स्मरसि ॥ १४ ॥

रूपमिति। हे तपोधन तपस्विन्! तपश्चरतां मादृशां तपोघ्नमेतद्रूपं तु भवता केन तपसा उप आधिक्येन लब्धं प्राप्तं तद्ब्रवीत्विति शेषः। अतो हे मित्र! मह्यं मां सुखयितुं मया सह त्वं तपश्चर्तुमर्हसि। इडभाव आर्षः। येन त्वत्सदृशात-पश्चरणेनाहमपि त्वत्सदृशरूपवान् स्यामिति भावः। वा अथवा किं स प्रसिद्धो भवभावनः सृष्टिकर्त्ता ब्रह्मा मे मां लब्धार्थं कर्तुं प्रसीदति त्वां भार्यां सम्पादयतीत्यर्थः ॥ १५ ॥ नेति। दयितं प्रियं द्विजदेवेन ब्रह्मणा दत्तं त्वां न त्यजामि। यस्मिंस्त्वयि मनो दृक् नेत्रं च लग्नं संसक्तं सन् न वियाति वियुक्तं न भवति। त्वमप्येवमनुव्रतं स्वानुसारिणं मामुपेक्षितुं नार्हसि। किन्तु

यतो यत्र ते चित्तं तत्र नेतुमर्हसि। हे चारुशृङ्गि! मनोहरस्तनि! सचिव्यस्तव सख्योऽपि गौरादिकल्पनया कथंचित्। लोप्। शिवा मदनुकूलाः सत्यः मां प्रतिसन्तु अनुवर्त्तन्ताम्। यद्वा एतावत्पर्यन्तं मे याः सचिव्यः सख्यः शिवाः फेरवः शृगाल्यस्ताः प्रतिसरन्तु गच्छन्तु। यद्वा वनवासे मे सचिव्यः सहचारिण्यो हरिण्यः शिवा अनुकूलाः सत्यः प्रतिसरन्तु शुभसूचकशकुनार्थं प्रदक्षिणं गच्छन्तु॥ १६॥ इतीति। विबुधानां देवानामिव निपुणा मतिर्यस्य सः अत एव ललनानामनुनये वशीकरणे अतिविशारदोऽतिचतुर आग्नीध्र इत्येवं पूर्वोक्तया ग्राम्येषु विषयभोगेषु वैदग्ध्यं नैपुण्यं यस्यास्तया परिभाषया विबुधवधूमप्सरसं तां पूर्वचित्तिमधिसभाजयामास सत्कारपूर्वकं स्ववशीकृतवान्॥ १७॥ सा चेति। सा च पूर्वचित्तिरपि तस्य वीरयूथपतेर्बुद्ध्यादिभिः पराक्षिप्तमनाः मोहितचित्ता सती ततः प्रभृति तेन जम्बूद्वीपपतिना सहायुतानामयुतपरिवत्सरोपलक्षणं न्यर्बुदमितं कालं भौमस्वर्गभोगान् बुभुज इत्यन्वयः। बुद्ध्यादीनां द्वन्द्वैक्यम्॥ १८॥ तस्यामिति। स च राजवर आग्नीध्रस्तस्यां नाभिरित्यादिः संज्ञा येषां तान् आत्मजान् स्ववीर्यजान् नव पुत्रानजनयत्॥ १९॥

सेति। सा च पूर्वचित्तिः अनुवत्सरं नव पुत्रान् सूत्वा प्रसूय तान् गृह एवापहाय स्वयं भूयोऽजं देवं ब्रह्माणमेवोपतस्थेऽभजत्॥ २०॥ आग्नीध्रेति। मातुरनुग्रहात् तदीयस्तनपानात् औत्पत्तिकेन स्वभावेनैव संहननं दृढाङ्गत्वं बलं च ताभ्यामुपेता युक्ताः पित्रा विभक्ताः पृथक् पृथक् भूमिविभागेन राज्ये स्थापिता आत्मना स्वेन स्वेन तुल्यानि सदृशानि नामानि येषां तानि जम्बूद्वीपस्य वर्षाणि खण्डानि यथाभागं निर्विवादं बुभुजुः अपालयन्॥ २१॥ आग्नीध्र इति। आग्नीध्रो राजा कामानां विषयाणां भोगैरतृप्तोऽतोऽनुदिनं निरन्तरं तामप्सरसमेवाधि अधिकं पुरुषार्थं मन्यमानः श्रुतिभिः श्रुत्युक्तकर्मभिस्तस्याः सलोकतामवारुन्ध प्राप। तल्लोकमेव निर्दिशति। यत्र लोके पितरो मादयन्ते मोदन्त इत्यर्थः। यद्वा यत्र लोके प्राप्तं पुरुषं पितरो हर्षयन्तीत्यर्थः॥ २२॥ सम्परेत इति। एवं पितरि सम्परेते सम्यक् पितृलोकं गते सति नाभ्यादयो नव भ्रातर इत्येवंभूता मेरुदेव्यादयः संज्ञा यासां ता नव मेरुदुहितॄरुदवहन् यथाक्रमं विवाहितवन्तः॥ २३॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां द्वितीयोऽध्यायः॥ २॥

—:꙰:—

## अथ तृतीयोऽध्यायः

श्रीशुक उवाच

**नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्माऽयजत॥१॥**

तृतीये तु क्रतौ नाभेः प्रीतोऽभूत्प्रकटो हरिः। पुत्रश्चर्षभनाम्नाऽसौ तत्र गद्यानि भूदृशः (२१)॥
उवाचपञ्चकं सार्द्धा अष्टत्रिंशदनुष्टुभः (३८॥)॥ ३॥

नाभिरिति। नाभिरपत्यकामः अप्रजया अपत्यरहितया। असिजभाव आर्षः। मेरुदेव्या स्वभार्यया सहावहितात्मा सावधानचित्तो भगवन्तं यज्ञपुरुषं यज्ञाधिष्ठातारमयजत्॥ १॥ तस्येति। तस्य वाव नाभेः श्रद्धया विश्वासेन विशुद्धभावेन यजतो यागं कुर्वतः प्रवर्ग्येषु प्रचरत्सु प्रवर्ग्यसंज्ञेषु कर्मसु क्रियमाणेषु द्रव्यादयो ये सप्त योगा अङ्गानि उपाया वा तेषामुपपत्त्या संपत्त्या निजजनानां भक्तानामभिप्रेता अर्थाः फलानि तेषां विधित्सया सम्पादनेच्छया गृहीतं वशीकृतं हृदयं चित्तं यस्य सः भगवान् दुष्प्रापोऽपि भागवतेषु वात्सल्यतया कृपालुतया। स्वार्थेऽष्यञन्तात्तल्। सुप्रतीकः शोभनावयवः सन् मनोनयनानि चानन्दयन्ति येऽवयवाः तैरभिराममतिसुन्दरम् अपराजितमपरतन्त्रम् अपि हृदयङ्गमं परमानन्दजनकत्वेन मनोहरमात्मानमाविश्चकार॥ २॥ अथेति। अथ

अवनतानि शीर्षाणि येषां त ऋत्विक्सदस्या गृहपतिर्यजमानो नाभिः एते आविष्कृतं भुजानां युगलद्वयं चतुष्टयं येन तं हिरण्मयं तेजोमयत्वे प्रकाशमानं पुरुषेषु विशिष्यत इति पुरुषविशेषं पुरुषोत्तमम्। कपिशे पीते कौशेये कोटकोशजनितसूत्रनिर्मिते अम्बरे धारयतीति तथा तम्। उरसि विलसन् श्रीवत्सः रोमावर्तविशेष एव ललामं चिह्नं यस्य तं दरवरः शङ्खश्रेष्ठः वनरुह कमलं वनमाला विचित्रपुष्पग्रथिता माला अच्छूरिचक्रममृतमणिः सर्वजीवतत्त्वत्वात्कौस्तुभः गदा कौमोदकीशङ्खादिभिरुपलक्षितं युक्तं तथा स्फुटकिरणा ये प्रवराः श्रेष्ठा मणयः तन्मयानि यानि मुकुटादीन्यङ्गानां भूषणानि तैर्विभूषितं तं भगवन्तं बहुमानं यथा भवति तथाऽर्हणेनार्घ्येण सह तमुपतस्थुः तुष्टुवुः। तङ्भाव आर्षः। यथा अधनाः निर्धनाः पुरुषाः उत्तमधनं निधिं प्राप्य तस्य बहुमानं कुर्वन्ति॥ ३॥ अर्हसीति। हे अर्हत्तम! परिपूर्णोऽपि त्वम् अनुपथानां भृत्यानामस्माकम् अर्हणं पूजां मुहुः स्वीकर्त्तुमर्हसि। न वयं स्तोतुं शक्ता इत्याहुः। नमो नम इत्येतावदेव भगवते कर्त्तव्यं नाधिकमित्यस्माकं सद्भिरुपशिक्षितं त्वद्रूपस्य दुर्ज्ञानत्वात्॥ ४॥

क इति। प्रकृतिपुरुषयोरपि परस्य अत एवेश्वरस्य तव ये सकलजननिकायस्य वृजिनानि पापानि निरस्यन्तीति तथाभूताः शिवतमा मङ्गलकारिणोऽत एव प्रवराः सकलसाधनश्रेष्ठा गुणगणास्तेषामेकदेशस्तस्य कथनादृते ततो विनाधिकं नार्हति इत्यर्थः। अर्वाक्तनाभिस्तव स्वरूपमस्पृशन्तीभिः नाम च रूपं चाकृतिराकारश्च ताभिस्तव रूपनिरूपणं कर्त्तुं प्रकृतिगुणैः रजस्तमआदिभिः व्यतिकरा विक्षिप्ता गुणानां व्यतिकरे प्रपञ्च एव या मतिर्यस्यात एवानीशः गुणाधीनत्वेनासमर्थः कः पुमान् अर्हति न कोऽपीत्यर्थः॥ ५॥ वाङ्मनसा गोचरोऽपि त्वं भक्तानां सुखाराध्य इत्याहुः—परीति। हे परमपूर्ण! त्वं परिजनैः सेवकजनैरनुरागेण विरचिता ये शबलसंशब्दाः प्रेम्णास्खलिताक्षरस्तुतयः सलिलं सितकिसलयाः शुद्धपल्लवाश्च तुलसिश्च दूर्वा च अङ्कुरा यवाङ्कुराश्च शिलेति पाठे शिलं कुशादिमञ्जरी तैः संभृतया सम्पादितया सपर्यया पूजया परितुष्यसि॥ ६॥ अथेति। अथान्यथा आत्मनः स्वत एवानुसवनं निरन्तरमञ्जसा साक्षात् वोभूयमाना अतिशयेन भवन्तो ये अशेषाः सर्वे पुरुषार्थास्ते स्वरूपं यस्य रूपस्य तस्य भवतः अनया अस्मत्सम्पादितयोरुभारभरया अनेकसाधनसम्पन्नयाऽपीज्या यागेन भवतः समुचितमप्रयोजनमिह यागेनोपलभामहे नैव पश्यामः॥ ७॥ किं त्विति। यद्यपि पूजादिना भगवत उपकाराभावात्तदपेक्षा नास्ति तथापि हे नाथ स्वामिन्! आशिषो भोगान् आशासानानां कामयमानानामस्माकमेतत्पूजादिकं मदभिसंराधनमात्रं भवितुमर्हति भवत्सन्तोषद्वाराऽस्मन्मनोरथपूर्त्तये भवत्येवातो न व्यर्थमित्यर्थः॥ ८॥ तद्यथेति। तत्तस्मात्पूर्वोक्तहेतोरेव स्वयमात्मनः स्वस्य परं श्रेयो मोक्षाख्यमविदुषामजानतामचिन्तयतामपि परमेभ्य उत्कृष्टेभ्यो ब्रह्मादिभ्योऽपि परमः पुरुषः पुरुषोत्तमो भवान् प्रकर्षयुक्तया करुणया अपवर्गाख्यं स्वमहिमानं निजानन्दमुपकल्पयिष्यन् सम्पादयिष्यन् चकारात् कामितं च सम्पादयिष्यन् स्वयं नापचितः अपूजित एव पूजापेक्षारहितत्वात् इतरवत् सापेक्षादिह यज्ञे स्वयम् उपलक्षितः दृष्टो जातः। तत्र दृष्टान्तमाह। यथेति। यथा बालिशानां बालकानामात्मनः श्रेयोऽनभिज्ञानामपि पिता स्वयमेव तच्छ्रेयः सम्पादयति तथेत्यर्थः॥ ९॥

अथेति। हि यस्माद् भवान् वरदर्षभः वरदानां ब्रह्मादीनां मध्ये श्रेष्ठोऽतो नूनं यद्यपि वरान् दातुमेवाविर्भूतः। अथ तथापि हे अर्हत्तम पूज्यतम! यर्हि राजर्षेर्नाभेर्बर्हिषि यज्ञे निजपुरुषाणां स्वसेवकानामस्माकमीक्षणविषयो भवानासीत्तदाऽयमेव भवद्दर्शनलाभ एवास्माकं वरः सञ्जातः॥ १०॥ असङ्गेति। अनवरतं निरन्तरं परिगुणिता अभ्यासेन वर्णिता गुणगणा यस्येति तस्य सम्बोधनम्। असङ्गेन सर्वतो वैराग्येण निशितं तीक्ष्णीकृतं यज्ज्ञानं स एवानलस्तेन विधूता अशेषाः सर्वे मला रागलोभादयो येषामत एव भवत इव शान्तः स्वभावो येषामत एवात्मनि रमणं येषामेवंभूतानां मुनीनामपि परममङ्गलायनं परमानन्दजनकं गुणगणकथनमेव यस्य तथाभूतोऽसि दर्शनं तु तेषामपि दुर्लभमेवेति भावः॥११॥ अथेति। यद्यपि भगवद्दर्शनेनैव वयं कृतार्था अथ तथापि स्खलनादिस्थानेषु ज्वरमरणदशायां च स्मारणाय त्वां स्मर्त्तुं विवशानामशक्तानामपि नोऽस्माकं सकलानि कश्मलानि पापानि निरस्यन्तीति तथा तानि तव गुणकृतनामधेयानि भक्तवत्सल इत्यादीनि उपलक्षणतया जन्मकर्मकृतानि मत्स्यादीनि गोवर्द्धनोद्धरणादीनि च कथंचित् वचनगोचराणि उच्चारणविषयाः भवन्तु॥ १२॥ किं चेति। प्रजायामेवार्थप्रत्ययः पुरुषार्थबुद्धिर्यस्य स अयं राजर्षिरपत्यकामो भवादृशीं प्रजां भवत्सदृशं पुत्रमाशासान आकाङ्क्षन् आशिषामैहिकभोगानां वर्गयोरपीश्वरं भगवन्तं त्वामुपधावत्याराधयति यथा अधनः फलीकरणं तुषकणादिकमाशासानो धनदं धनाढ्यं कुबेरं वा उपधावति तथा बहुप्रदं धनिनं प्रसाद्यापि यथा मूर्खस्तुच्छमेव याचते तथा सर्वपुरुषार्थदं त्वां पुत्रमेव याचते॥ १३॥ क इति। न उपासितौ महतां चरणौ येन तादृशः को नाम पुरुषः इह संसारे नावसिता न लक्षिता पदवी कुत आगतेति मार्गो यस्यास्तयेत्यर्थः। कवभाव आर्षः। अपराजितया ते तव मायया अनावृतमतिरमोहितचित्तोऽत एवापराजित इन्द्रियादिपरवश्यमनापादितोऽत एव विषय एव विषं तस्य रयो वेगस्तेनानावृता प्रकृतिः स्वभावो यस्य तादृशोऽस्ति न कोऽपीत्यर्थः॥ १४॥ यदु हेति। हे अदभ्रकर्तः बहुकार्यकारिन्! हे देवदेव!

यदु ह वाव पुनरप्यर्थे। एवंभूतोऽपि त्वं यत् इह यज्ञेऽल्पीयसे पुत्रप्राप्तिकार्यायैवास्माभिः समाहूतोऽसीति तत्तत्रापत्य एव परमार्थ-धीयषां तेषां मन्दानां मन्दमतीनाम् अविदुषां स्वार्थमजानतां नोऽस्माकं तु यत् देवस्य तव हेलनमवज्ञानं जातं तत्प्रतिवोढुं सोढुमर्हसि ॥ १५ ॥

इतीति। इत्येवं निगदेन गद्यात्मकेन स्तोत्रेणाभिष्टूयमानः वर्षधरो भारतवर्षपतिर्नाभिस्तेनाभिवादिता ये ब्राह्मणास्तैर-भिवन्दितौ चरणौ यस्य सः भगवान् अत एवानिमिषाणां देवानामप्यृषभः पालकः सदयं यथा भवति तथेदं वक्ष्यमाणमाह स्म ॥ १६ ॥ अहो इति। हे ऋषयः! अमुष्य नाभेर्मया सदृश आत्मजः पुत्रो भूयादिति यत् तत् अवितथगीर्भिः सत्यवाग्भिर्भ-वद्भिरसुलभं दुर्लभमेव वरमभियाचितः ॥ १७ ॥ ममेति। कैवल्यात् मम सदृशस्याभावात् ममाभिरूपः सदृशोऽहमेव अथापि वरस्य दुर्लभत्वेऽपि ब्रह्मवादो ब्राह्मणानां युष्माकं वचनं मृषा भवितुं नार्हति। यस्मात् द्विजेषु ब्राह्मणक्षत्रियवैश्येषु देवा इव प्रकाशमानाः मान्याः ये ब्राह्मणास्तेषां कुलं ममैव मुखम् ॥ १८ ॥ तत इति। ततस्तस्माद्ब्राह्मणवचनस्य वितथत्वस्यायुक्तत्वादात्म-तुल्यमैश्वर्यादिभिः स्वसदृशमन्यमनुपलभमानोऽपश्यन्नहमेवांशकलया स्वांशेन आग्नीध्रपुत्रे नाभाववतरिष्याम्येतत्पुत्रो भविष्यामि ॥१९॥ इतीति। मेरुदेव्या नाभेर्भार्याया निशामयन्त्याः सत्या तस्याः पतिं नाभिमित्येवमभिधाय उक्त्वा भगवानन्तर्दधे ॥२०॥ बर्हिषीति। हे विष्णुदत्त परीक्षित्! तस्मिन् बर्हिषि नाभेर्यज्ञे एवमुक्तेन प्रकारेण परमर्षिभिः प्रसादितः ऊर्ध्वमन्थिनां वातरशनानां दिग्वाससां श्रमणानां तपआदिषु कृतश्रमणां ऋषीणां विवेकिनां सर्वतो विरक्तानां धर्मान् दर्शयितुकामः स्वाचारेण लोके प्रचार-यितुकामः भगवान् नाभेः प्रियचिकीर्षया तस्यावरोधायनेऽन्तःपुरे मेरुदेव्यां शुद्धया शुद्धसत्त्वात्मिकया तनुवा मूर्त्या। अवजगर्पः। अवततार ॥ २१ ॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां तृतीयोऽध्यायः ॥ ३ ॥

—:❀:—

## अथ चतुर्थोऽध्यायः

### श्रीशुक उवाच

**अथ ह तमुत्पत्त्यवाभिव्यज्यमानभगवल्लक्षणं साम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणा देवताश्चावनितलसमवनायातितरां जगृधुः ॥ १ ॥**

तुर्येऽध्याये तु ऋषभचरित्रे दर्शयन्मुनिः। सत्कर्मनैष्कर्म्यमपि गद्यान्यत्रोनविंशतिः (१९।) ॥
उवाचेत्येकं सपादाश्चतुस्त्रिंशदनुष्टुभः (३४।) ॥ ४ ॥

अथेति। अथ प्रकृतयोऽमात्यादयः उत्पत्त्या स्वत एवाभिव्यज्यमानानि भगवतो लक्षणानि पादतलादिषु वज्राङ्कुशादीनि चिह्नानि यस्य तं साम्यं स्वपरपक्षपातराहित्यमुपशमः शान्तता वैराग्यं विषयतृष्ण्यम् ऐश्वर्यमलौकिकसामर्थ्यं महाविभूतिः सर्वसम्पत्तिरनुभावस्तेजोऽतिशयः तैः सहानुदिनमेधमानोऽनुभावो यस्य तं भगवन्तमवनितलस्य समवनाय परिपालनाय अतितरां जगृधुः। अयमेव भूतलराज्यं करोत्वित्यभिकाङ्क्षन्ति स्म ॥ १ ॥ तस्येति। तस्य ह वरीयसा श्रेष्ठतमेन बृहन्तः श्लोकाः पद्यानि कवीनां यस्मिंस्तेनेत्यर्थः। वर्ष्मणा ओजसा इन्द्रियसामर्थ्येन श्रिया शोभातिशयेन यशसा कीर्त्यतिशयेन वीर्येण प्रभावातिशयेन शौर्येण मनसः सामर्थ्येन चकारावनुक्तसर्वशुभगुणसमुच्चयार्थौ। एतैर्गुणैरतिश्रेष्ठत्वनिश्चयात्तस्य पिता ऋषभ इति इदं नाम चकार ॥ २ ॥

तस्य हीति। स्पर्द्धमानो भगवानिन्द्रः यदा तस्य वर्षे अजनाभखण्डे न ववर्ष। तदा तदवधार्य इन्द्रकृतमवर्षणं ज्ञात्वा योगेश्वरो भगवान् ऋषभदेवः प्रहस्यात्मयोगमायया स्वशक्त्या अजनाभं नाम अजः ऋषभदेवः नाभिस्तस्य पिता ताभ्यां रक्षितत्वादजनाभ्योरिदमित्यणि संज्ञापूर्वकत्वाद्वृद्ध्यभावेऽजनाभसंज्ञं स्ववर्षमभ्यवर्षत्॥ ३॥ नाभिस्त्विति। मायया विलसिता मम पुत्रोऽयमिति विमोहिता मतिर्यस्य स नाभिस्तु यथाऽभिलषितं स्वाभिलाषानुरूपं सुप्रजस्त्वं भगवदवताररूपसत्पुत्रत्वमवरुध्य प्राप्य प्रमोदभरविह्वलः प्रहर्षातिशयेनानवस्थितचित्तो हे वत्स! हे तातेत्येवं गद्गदाक्षरया स्खलितवर्णया गिरा स्वैरं स्वेच्छया गृहीतो नरलोकसमानधर्मो मनुष्यव्यवहारो येन तं पुराणपुरुषं भगवन्तमुपलालयत् परां निर्वृतिमानन्दम् उपगतः प्राप्तः॥ ४॥ विदितेति। जनाः पौरादयः पदं प्रमाणमात्मजाभिषेके यस्य सः पौरादिमतमनुसरन्नित्यर्थः। राजा नाभिः आपौरप्रकृति पौरान् प्रकृतीश्चाभिव्याप्य विदितोऽनुरागो यस्मिंस्तम् आत्मजमृषभं समयानां सदाचाराणां ये सेतवः मर्यादास्तेषां रक्षायां राज्येऽभिषिच्य तं ब्राह्मणेषूपनिधाय नीतिधर्मशिक्षाविषये ब्राह्मणवशवर्तिनं कृत्वा स्वयं मेरुदेव्या स्वभार्यया सह विशालायां बदरिकाश्रमे प्रसन्नं प्रसादयुक्तमनुद्वेजकं सर्वसुखदं च निपुणमव्यवच्छिन्नं फलसाधनसमर्थं वा तेन तपसा मनसः समाधियोगेन च नारायणाख्यं भगवन्तमुपासीनः सेवमानः कालेन बहुकालाभ्यासेन तन्महिमानं जीवन्मुक्तिमवाप॥ ५॥ यत्रेति। हे पाण्डवेय! यत्र नाभियशोवर्णनसङ्गे पुराविदो द्वौ श्लोकावुदाहरन्ति पठन्ति इत्यर्थः। कोऽन्विति। तत् तस्य राजर्षेर्नाभेः कर्म अनु तदनन्तरं को नु पुमानाचरेत् कर्तुं शक्नुयात् न कोऽपीत्यर्थः। यस्य शुद्धेन कर्मणा भक्त्या यज्ञानुष्ठानेन हरिः स्वयमेवापत्यतामगात्॥ ६॥ ब्रह्मण्य इति। नाभेरन्यस्तत्सदृशो ब्रह्मण्यो ब्राह्मणभक्तः। कुत्रास्ति यस्य बर्हिषि यज्ञे मङ्गलैर्दक्षिणादिभिः पूजिताः सन्तः मङ्गलरूपेण राज्ञा पूजिताः इति वा विप्रा ओजसा मन्त्रबलेन यज्ञेशं भगवन्तं दर्शयामासुः॥ ७॥ अथेति। अथ पितरि प्रस्थिते सति भगवानृषभदेवः स्ववर्षमजनाभखण्डं कर्मक्षेत्रं स्वर्गापवर्गसाधनकर्मानुष्ठानभूमिमनुमन्यमानो जानन् गृहमेधिनां गृहस्थानां धर्माननुशिक्षमाणोऽनुशिक्षयन्नत एवान्यसङ्ग्रहाय प्रदर्शितो गुरुकुले वासो येन सः लब्धवरैः प्राप्तदक्षिणैः गुरुभिर्गार्हस्थ्यार्थमनुज्ञातः समाम्नायाम्नातं शास्त्रविहितं ब्राह्मणोपदेशेनाभ्यस्तं वा उभयलक्षणं श्रौतं स्मार्तं च उभयविधमिति वा पाठः। कर्माभियुञ्जन् अनुतिष्ठन् इन्द्रेण दत्तायां जयन्त्यां स्वभार्यायामात्मसमानानां स्वयोग्यानामात्मजानां शतं जनयामास॥ ८॥

येषामिति। येषां पुत्राणां मध्ये श्रेष्ठाः प्रजानुरञ्जका गुणा यस्य सः तथा महायोगी आत्मज्ञानित्वेन प्रसिद्धः भरतो ज्येष्ठ आसीत्। येन गुणश्रेष्ठत्वेन पूर्वमजनाभनाम्ना प्रसिद्धमपीदं वर्षमिदानीं जना भारतमिति व्यपदिशन्ति॥ ९॥ तमिति। तं भरतमनु भरतस्य कनिष्ठाः इत्यर्थः। कुशावर्तादयो नव पुत्राः नवतेर्नवतिसङ्ख्याकेभ्यः पुत्रेभ्यः प्रधाना ज्येष्ठा इत्यर्थः। प्रधानस्य पुंस्त्वमार्षम्॥ १०॥ कविरिति। कीकटान्तेभ्यो दशभ्योऽनन्तरं कव्यादयो नव पुत्रा जाताः। तेषां वंशश्च न जातो यतस्ते जन्मत एव महाभागवताः भागवतधर्मस्य दर्शकाः तेषां सुष्ठु चरितं भागवतधर्मप्रदर्शनलक्षणमत एव भगवन्महिम्नोपबृंहितं शोभमानमत एवोपशमायनं श्रोतृचित्तशान्तिकरं वासुदेवनारदयोः संवादो यस्मिंस्तदुपरिष्टादेकादशस्कन्धे वर्णयिष्यामः॥ ११॥ यवीयांस इति। ततो यवीयांसः कनिष्ठा एकाशीतिसङ्ख्याका जायन्तेयाः जयन्तीपुत्राः पितुरादेशकारिणं आज्ञानुसारिणो महाशालीना अतिविनीताः महाश्रोत्रियाः अध्ययनतोऽर्थतश्च वेदे निपुणाः यज्ञे शीलं स्वभावो येषां ते तथा अत एव यज्ञादिकर्मानुष्ठानेन विशुद्धान्तःकरणा ब्राह्मणा बभूवुः॥ १२॥ भगवानिति। एवकारोऽप्यर्थः। ऋषभसंज्ञो भगवान् स्वयमात्मतन्त्रः कर्मानधीनो यत ईश्वरः सकलनियन्ता केवलानन्दानुभवः सच्चिदानन्दरूपोऽत एव नित्यं निवृत्ता जन्ममरणाद्यनर्थपरम्परा यस्मात्स तथा अत एव उपशान्तः रागलोभादिदोषरहितोऽत एव समः सर्वप्राणिपक्षपातरहितः कारुणिकः सर्वेषु करुणावान् मैत्रः सर्वेषां हिताचरणे प्रयत्नवान् एवंभूतोऽपि विपरीतवत् अनीश्वरवत् कर्माण्यारभमाणः कुर्वन् कालेनानुगतमुच्छिन्नं धर्मं स्वयमाचरणेन अतद्विदां षष्ठी द्वितीयार्थे। धर्माचारमजानत उपशिक्षयन् धर्मादीनामवरोधेन संग्रहेण प्राप्त्या हेतुनेति वा लोकं गृहेषु नियमयत्स्वेच्छाचारान्निवर्त्य शास्त्राचारे नियमितवानित्यर्थः। अडभाव आर्षः। न्यरमयदिति पाठे नितरामरमयत्। धर्माद्याः स्पष्टाः आनन्दो भोगः प्रजा सन्ततिः अमृतं मोक्षः॥ १३॥ यद्यदिति। यतः यद्यत् शुभमशुभं वा कार्यं शौर्यरूपेण श्रेष्ठेनाचरितं तत्तदेव लोक इतरोऽपि जनः अनुवर्तते करोति॥ १४॥ यद्यपीति। यद्यपि सकलो धर्मो यस्मिंस्तत् ब्राह्मं गुह्यं वेदरहस्यं स्वेनैव विदितं तथापि ब्राह्मणैर्दर्शितमार्गेण तान् पृष्ट्वैव सामादिभिरुपायैर्जनतां जनसमूहमनुशशास शिक्षितवान्॥ १५॥

द्रव्येति। द्रव्यं व्रीह्यादि देशः पुण्यस्थलविशेषः कालो वसन्तादिः वयो यौवनम् "युवैव धर्ममन्विच्छेत्" इति वाक्यात् विविधोद्देशाः तैः नानादेवतोद्देशाः उपचितैः सर्वैरपि क्रतुभिर्यज्ञैर्यथोपदेशं यथाविधि शतकृत्वः यज्ञेशमियाज इष्टवान्॥ १६॥ भगवतेति। भगवता ऋषभेण परिरक्ष्यमाण एतस्मिन् वर्षेऽजनाभखण्डे कश्चनान्त्यजादियोनिं प्राप्तोऽतिनीचोऽपि पुरुषः भर्त्तरि ऋषभे अनुसवनं प्रतिक्षणं विजृम्भितो वर्द्धमानो यः स्नेहस्तस्यातिशय उत्कटता तदन्तरेण ततोऽन्यत् अन्तरेणेत्यव्ययं विनार्थे।

यद्वा। अन्तरेण अन्तरात्मना आत्मनोऽर्थे अन्यस्मात्सकाशात्किमपि अत्युत्कृष्टमपि वस्तु कर्हिचित्कस्मिंश्चिदपि काले कथञ्चन केनापि प्रकारेण न वाञ्छति न चावेक्षते न पश्यत्यपि इत्यर्थः। भर्त्तरि स्नेहमेव वाञ्छति नान्यत्किञ्चनेत्यर्थः। यथा अविद्यमानं खपुष्पादिकं यथा कश्चिदपि कदाचिन्न पश्यति न च वाञ्छति तथेत्यर्थः ॥ १७ ॥ स इति। स भगवानृषभः कदाचिद्भूमिमटमानः। शानजार्षः। ब्रह्मावर्तं गतो ब्रह्मर्षिप्रवरसभायां प्रजानां निशामयन्तीनां शृण्वतीनाम् अवहितात्मनः संयतचित्तान् प्रश्रयप्रणययोर्नम्रतास्नेहयोर्भरेण सुयन्त्रितान् वशीकृतानपि आत्मजान् पुत्रान् प्रजानुशासनार्थमुपशिक्षयन्निति वक्ष्यमाणं तत्त्वमुवाच ॥ १८ ॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्थोऽध्यायः ॥ ४ ॥



## अथ पञ्चमोऽध्यायः

ऋषभ उवाच

नायं देहो देहभाजां नृलोके कष्टान्कामानर्हते विड्भुजां ये।
तपो दिव्यं पुत्रका येन सत्त्वं शुद्ध्येद्यस्माद्ब्रह्मसौख्यं त्वनन्तम् ॥ १ ॥

पञ्चमे त्वृषभः पुत्रान् मोक्षधर्ममुपादिशत्। तस्येष्टचेष्टा च पद्यगद्यान्यत्रेषुवह्नयः ( ३५ ) ॥
द्वे उवाचेति पादाढ्याः त्रयःषष्टिरनुष्टुभः ( ६३। ) ॥ ५ ॥

नेति। हे पुत्रकाः ! नृलोके देहभाजां मध्ये अयं मनुष्यदेहः विड्भुजां श्वशूकरादीनामपि ये कामाः सन्ति तान् कष्टान् निन्दितान् कष्टप्रदान् वा कामान् विषयभोगान्नार्हते तद्योग्यो न भवति। तत्रार्थः। कामार्हत्वे मनुष्यशूकरयोस्तुल्यत्वापत्तेरित्यर्थः। किंतु अन्यदेहालभ्यं दिव्यमुत्कृष्टं तपोऽर्हति। येन तपसा सत्त्वमन्तःकरणं शुद्ध्येत् यस्माच्च शुद्धात् सत्त्वादनन्तमविनाशि ब्रह्मसौख्यं ब्रह्मानन्दो भवति। शालिनी छन्दः ॥ १ ॥ महत्सेवामिति। शिष्टाः महतां सेवां संसारविमुक्तेर्द्वारमाहुः। तथा योषितां ये सङ्गिनस्तेषां सङ्गः तमसः संसरणस्य द्वारमाहुः। तत्र ये समचित्ताः प्रशान्ताः शुद्धचित्ताः विमन्यवः क्रोधरहिताः सुहृदः सर्वेषां हितकारिणः साधवः परदोषाग्राहिणः भवन्ति ते महान्तो ज्ञेयाः ॥ २ ॥ ये वेति। ये मयि ईशे कृतं सौहृदं प्रेमैव अर्थः पुरुषार्थो येषां ते वा महान्तः वाशब्देनान्यनैरपेक्ष्यमाणस्य लक्षणत्वं दर्शयति। तथा देहं बिभर्तीति देहंभरं धनार्जनविषयभोगादिविषयमेव न धर्मविषयं वार्तिकं वार्त्ता येषु ते तथा। यद्वा। देहंभराणां भोजनाद्यासक्तानां या वार्त्तास्ताभिरेव दीव्यन्ति तेषु जाया आत्मजाः रातिर्धनं मित्र वा तद्वत्सु। जायात्मजरातिदेष्विति पाठे जायादिमत्सु गृहेषु च विद्यमानेषु अपि न प्रीतियुक्ताः तथा लोके यावदर्थं यावत्प्रयोजनमेवार्थो येषामिति देहनिर्वाहाधिकस्पृहारहिता इत्यर्थः। ते महान्त इत्यनुषङ्गः ॥ ३ ॥ कामान्नार्हत इति यदुक्तं तदुपपादयति—नूनमिति। यत् यदा इन्द्रियप्रीतये आपृणोति व्याप्रियते। "पृ प्रीतौ" स्वादिः धातूनामनेकार्थता। पृङो वा रूपम्। नुमस्तङभावश्चार्षः। तदा नूनं निश्चितं प्रमत्तः कर्त्तव्याकर्त्तव्यानुसन्धानरहितः सन् विकर्म पापमेव कुरुते तत्त्वहं साधु न मन्ये। यतः यस्मात्पापाचरणादेवायमसन्नपि आत्मनः क्लेशदः देह आस। यतः क्लेशोत्पत्तिस्तस्यैव पुनः करणं न योग्यमित्यर्थः ॥ ४ ॥ विकर्मवत् पुण्यकर्मापि क्लेशहेतुरित्याह—पराभव इति। यावदयमात्मतत्त्वं स्वयथार्थरूपं सच्चिदानन्दात्मकत्वं न जिज्ञासते न विचारयति विचारेण न प्रत्यक्षं करोति। तावदबोधजातः अविद्यया जातः आत्मनः पराभवः स्वरूपतिरस्कारो भवति। या वदज्ञ

तावन्न क्रियाऽव्यवच्छेदः यावत्क्रियास्तावदिदं मनः कर्मात्मकं कर्मस्वभावमेव भवति। येन कर्मस्वभावेन मनसा पुरुषस्य शरीरबन्धः शरीरप्राप्त्या संसारबन्धो भवति ॥ ५ ॥ एवमिति। एवमुक्तप्रकारेणाविद्ययाऽऽत्मनि उपधीयमाने देहेन्द्रियाद्यध्यासेनाच्छाद्यमाने सति इदं जीवन्मुक्तकर्मव्यावृत्तये ज्ञेयम्। कर्तृभूतं प्रवृत्तिस्वभावं मनः पुरुषं कर्मभूतं वशं प्रयुङ्क्ते अवश्यं कर्म कारयति। यद्वा। पूर्वकृतं कर्म कर्तृभूतं मनः कर्मभूतं वशं प्रयुङ्क्ते। अतो यावन्मयि वासुदेवे पुरुषस्य प्रीतिर्न जायते तावद्देहयोगेन न विमुच्यते ॥ ६ ॥ यदेति। विपश्चित् अपि यदा स्त्रीसङ्गिसङ्गात्तैः प्रोत्साहितः सन् गुणानामिन्द्रियाणाम् ईहां तत्तद्विषयोन्मुखतया प्रेरणलक्षणां चेष्टामयथा मिथ्या आत्मीया न भवति इति तापहेतुरिति वा पुरुषो न पश्यति। नु पश्यतीति पाठे अयथा आत्मीयत्वेनेत्यर्थः। तत्र तदा सहसा झटिति गतस्मृतिः स्वरूपस्मृतिशून्यः स्वस्यार्थे प्रमत्तः अज्ञः सन् मैथुन्यमगारं मैथुनसुखप्रधानं गृहमासाद्य प्राप्य तत्र गृहे तापान् विविधानि दुःखानि विन्दति ॥ ७ ॥ पुंस इति। पुंसः स्त्रियाश्च यो मिथुनीभावः परस्परमात्मत्वाभिनिवेशस्तमेतं तयोर्द्वयोर्मिथः परस्परं हृदययोर्ग्रन्थिमाहुर्विवेकिन इति शेषः। अत अस्मान्मिथुनीभावाज्जनस्य गृहादिभिर्निमित्तभूतैरहंममेत्ययं मोहो भवति। अयं भावः। पुंसः स्त्रियाश्च प्रत्येकं देहेन्द्रियादौ अहंममेतिरूपो हृदयग्रन्थिरस्त्येव तथापि इयं मे स्त्री अयं मे पतिरिति एतं मिथः स्यूतमन्यं हृदययोर्ग्रन्थिं दुर्भेदं वदन्ति प्रत्येकं हृदयग्रन्थिना तु देहेन्द्रियमात्रेऽहंममेति मोहः। अस्मात्तु मिथुनीभावात् गृहादिभिर्विषयभूतैर्महान् मोहो भवेदित्यर्थः। उपलक्षणमिदं पितापुत्रयोः सख्योरित्यादीनाम् ॥ ८ ॥ यदेति। यदाऽस्य जनस्य मनोलक्षणो दृढः कर्मभिः संचितैरनुबद्धः हृदयग्रन्थिराश्लथेत शिथिलो भवेत्तदा जनोऽस्मान्मिथुनीभावात् संपरिवर्त्तते विमुखो भवति। ततश्च हेतुमनर्थकारणमहंकारमतिहाय त्यक्त्वाऽनर्थाद्विमुक्तः जीवन्मुक्तः सन् परं पदं याति ॥ ९ ॥

हेतुमतिहायेत्युक्तं तत्र चतुर्भिः साधनान्याह—हंस इति चतुष्कम्। हे पुत्राः! हंसे हंसवद्विवेकवति गुरौ तथा मयि भगवति च भक्त्या सेवया अनुवृत्त्या तत्परतया च वितृष्णया विषयभोगाभिलाषत्यागेन द्वन्द्वतितिक्षया सुखदुःखादिद्वन्द्वसहनेन सर्वत्र इहामुत्र जन्तोर्जीवस्य व्यसनावगत्या दुःखानुसन्धानेन जिज्ञासया तत्त्वातत्त्वविचारेण तपसा व्रतोपवासाहारादिनियमेन ईहानिवृत्त्या काम्यकर्मत्यागेन ॥ १० ॥ हे पुत्राः! मयि समर्पितैः कर्मभिः मत्कथया मम कथाश्रवणेन नित्यं निरन्तरमित्यस्य सर्वत्रान्वयः। अहमेव देव आराधनीयो येषां मद्भक्तानां तेषां सङ्गात् मे मम गुणानां कीर्तनात् निर्वैरेण प्राणिषु वैरत्यागेन साम्येन सर्वेषां सुखदुःखादिसमानदर्शनेन उपशमेन चित्तशान्त्या देहेऽहमिति गेहे ममेति च याऽऽत्मनः स्वस्य बुद्धिस्तस्या जिहासया त्यागेच्छया ॥ ११ ॥ आध्यात्मयोगेन अध्यात्मशास्त्राभ्यासेन विविक्तसेवया निर्जनदेशवासेन प्राणस्य प्राणायामैः इन्द्रियाणां प्रत्याहारैः आत्मनो मनसा धारणयाऽभिजयेन वशीकारेण सम्यक् इत्यस्यापि सर्वत्र सम्बन्धः। सच्छ्रद्धया शास्त्रविहितानुष्ठानश्रद्धया ब्रह्मचर्येण यस्य यादृग्ब्रह्मचर्येण यस्य यादृग्ब्रह्मचर्यं विहितं तेन। यथा गृहस्थस्यर्तुभार्यागमनं ब्रह्मचर्यमेव शश्वत् सर्वदा असंप्रमादेन कर्त्तव्यस्यापरित्यागेन वाचांयमेन व्यर्थालापवर्जनेन ॥ १२ ॥ सर्वत्र मद्भावो मद्भावना तत्र विचक्षणेनातिनिपुणेन विज्ञानविराजितेन अनुभवपर्यंतेन ज्ञानेन योगेन समाधिना धृतिर्धैर्यम् उद्यमः प्रयत्नः सत्त्वं विवेकस्तैर्युक्तः अत एव कुशलो निपुणः पुरुषोऽहमाख्यं लिङ्गमहङ्काराख्यमुपाधिं संसारकारणभूतं व्यापोहेत् निरस्येदित्यर्थः ॥ १३ ॥ कर्मेति। कर्माण्याशेरते यस्मिंस्तं हृदयग्रन्थिलक्षणमात्मनो बन्धमविद्यया देहेन्द्रियाद्यध्यासलक्षणया आसादितं प्रापितमनेन पूर्वोक्तेन योगेनोपायेन यथोपदेशमनुष्ठितेन सम्यक् निर्वासनं व्यपोह्य निरस्य योगात् विमुक्त्युपायादुपरमेत्। तत्रार्षः। यद्यपि फले सिद्धे साधनोपरमः सिद्ध एव तथापि यावज्जीवं तदभ्यासशङ्कावारणायोक्तम् ॥ १४ ॥ पुत्रानिति। विमन्युः शिक्षितस्याकरणेऽपि क्रोधरहितः मदनुग्रह एवार्थो यस्य सः मल्लोककामः पिता गुरुर्नृपश्च क्रमेण पुत्रान् शिष्यान्प्रजाश्च इत्थमनु शिष्यात् शिक्षयेत्। अतज्ज्ञानतत्त्वम् अजानतोऽत एव तत्साधनबुद्ध्या कर्मसु मूढान् मौढ्येन प्रवृत्तान् पुनरत्र कर्मस्वेव न योजयेन्न प्रेरयेत् ॥ १५ ॥ कमित्यर्द्धम्। लोकं काम्यकर्मसु योजयन् अत एव नष्टदृशम् अज्ञानिनं गर्त्ते संसारकूपे पातयन् मनुजः कमर्थं किं फलं लभेत न कञ्चिदर्थं प्रत्युत पापभाग्येव स्यादित्यर्थः। यथा नष्टदृशमन्धं गर्त्तमार्गे गच्छन्तमयमेवेष्टदेशमार्गोऽनेनैव गच्छेति प्रेरणया गर्त्ते पातयन्न किञ्चित्फलं लभते किंतु प्रत्युत पापमेव लभते ॥ १६ ॥ तत्र हेतुः—लोक इति। लोकः प्राणी स्वयं श्रेयसि श्रेयःसाधने नष्टदृष्टिर्ज्ञानशून्यः यतः नितरां कामकामः भोगाभिलाषी निकाममतिशयेन कामो यस्येति वा यः अर्थान्भोग्यान् विषयान् समीहेत इच्छति। अत एव स मूढः सुखलेशस्य हेतोः अन्योऽन्यं वैरं यस्य सः तथाभूतः सन् परद्रोहजनितमनन्तं महत् नरकपातादिदुःखं न वेद ॥ १७ ॥ क इति। विवेकी सघृणः दयालुश्च अविद्यायामन्तरे वर्त्तमानमत एव कुबुद्धिं परद्रोहोपार्जितविषयेण स्वसुखमिच्छन्तं तं दृष्ट्वा पुनस्तं तत्रैव काम्यकर्मसु कः प्रयोजयेत् न कोऽपीत्यर्थः। यदा उत्पथगं गर्त्तमार्गे गच्छन्तमन्धं सघृणो विवेकी को वानेनैव गच्छेति प्रवर्त्तयेत्तथेत्यर्थः ॥ १८ ॥

गुरुरिति। समुपेतः संप्राप्तो मृत्युः जन्ममरणादिलक्षणः संसारो येन तं भक्तिमार्गोपदेशेन ततो यो न मोचयेत् स गुरुर्न स्यात् एवं स्वजनो न स्यादित्यादि दैवं देवसमूहः तथा च तादृशान् गुर्वादीन् बलिः शुक्रमिव विभीषणो रावणमिव प्रह्लादो हिरण्य-

कशिपुमिव भरतः कैकेयीमिव खट्वाङ्ग इन्द्रादिदैवतमिव याज्ञिकब्राह्मणी याज्ञिकब्राह्मणमिव त्यजेत्। यद्वा यतः यत्नं मोचयितुं न शक्नुयात्। अतः स तस्य गुर्वादिर्न स्यात् गुरुर्भवितुमन्यं न शिष्यान्नेच्छेत्। स्वजनो भवितुं बन्धुतां न दध्यात्। पिता भवितुं पुत्रोत्पत्तौ यत्नं न कुर्यात्। जननी भवितुं गर्भं न दध्यात्। दैवं भवितुं पूजां न गृह्णीयात्। पतिर्भवितुं पाणिं न गृह्णीयात् इति ॥ १९ ॥ एवं मोक्षधर्मानुपदिश्य भ्रातृशुश्रूषणं वक्तुमाह—इदमिति। इदं मनुष्याकारं मम शरीरं दुर्विभाव्यमवितर्क्यं स्वेच्छया गृहीतं नतु प्राकृतपुरुषवत्कर्माधीनम्। हि यस्मात्तत्त्वं परमार्थभूतं शुद्धसत्त्वात्मकमेव मे हृदयं यत्र मम हृदये धर्मस्तिष्ठति यत् यस्मात् मे मया अधर्म आरात् दूरादेव पृष्ठे कृत उत्सारितः। अत एव आर्याः वृद्धाः पित्रादयो मामृषभं प्राहुः ॥ २० ॥ तस्मादिति। तस्मान्मम सर्वश्रेष्ठत्वाद्भवन्तश्च सर्वे मम हृदयेन धर्मस्थानेन शुद्धसत्त्वमयेन जाताः। अतः आक्लिष्टबुद्ध्या शुद्धबुद्ध्या मत्सरादि-दोषं हित्वा महीयांसम् अतिमहान्तं सनाभं सोदरममुं भरतं भजध्वम्। तत् भरतस्य शुश्रूषणमेव प्रजानां भरणं पालनं भरतानु-गुणतयैव सर्वं कृतं स्यात्। यद्वा भरतेच्छयैव प्रजापालनं कर्त्तव्यं न स्वातन्त्र्येणेति भावः ॥ २१ ॥ ब्राह्मणाश्च सेव्या इत्याह—भूते-ष्विति। भूतेषु चेतनाचेतनेषु मध्ये विरोहन्तीति वीरुधः वृक्षादयस्ते मृत्पाषाणादिभ्य उत् उच्चैः अतिशयेनोत्तमास्तेभ्योऽपि ये सरी-सृपाः जङ्गमास्ते उदुत्तमा इति सर्वत्र संबन्धः। तेष्वपि सबोधा निष्ठा स्थितिर्येषां पश्वादीनां ते कीटादिभ्यः उदुत्तमाः ततस्तेष्वपि मनुष्याः ततोऽपि प्रथमा भूतप्रेतादयो देवयोनित्वादुदुत्तमाः। ततोऽपि गन्धर्वास्ततः सिद्धास्ततोऽन्ये विबुधानुगा ये किन्नरादयस्ते उदुत्तमाः ॥ २२ ॥ देवा इति। तेभ्यो विबुधानुगेभ्यः असुराः उदुत्तमाः असुरेभ्यो देवाः उदुत्तमाः। अत्र सन्धिरार्षः। देवाश्च मघवत्प्रधानाः मघवानिन्द्रः प्रधानम् उत्तमः येषां ते देवेभ्यः इन्द्र उत्तमः इत्यर्थः। ततोऽपि ब्रह्मसुता दक्षादय उत्तमाः तेषां ब्रह्मपुत्राणां मध्ये तु भवो महादेव परः श्रेष्ठः सभवो विरिञ्च्यो वीर्यं शक्तिः कारणं यस्य स विरिञ्चवीर्यः तज्जन्यत्वात्ततो विरिञ्च्यः श्रेष्ठ इत्यर्थः। अत्र ब्राह्मणभक्तेर्विधेयत्वाद्ब्राह्मणत्वांशेनैव विरिञ्च्यस्य भवाच्छ्रेष्ठत्वम्। ऐश्वर्येण तु भवस्यैव विरिञ्च्याच्छ्रेष्ठता इति ज्ञेयम्। स विरिञ्च्यो मत्परः अहं परः श्रेष्ठः पूज्यो यस्य सः ततोऽहं श्रेष्ठ इत्यर्थः। अहं च द्विजदेवदेवः द्विजेषु देवाः पूज्या द्विजदेवा ब्राह्मणा एव देवा यस्य सः मम पूज्यत्वाद् ब्राह्मणा मत्तोऽपि श्रेष्ठा इत्यर्थः ॥ २३ ॥

नेति। हे विप्राः! इति तत्रत्यब्राह्मणसंबुद्धिः। ब्राह्मणैरन्यद्भूतं न तुलये तुल्यत्वेन न गणयामि। अतो ब्राह्मणात्परं भूतं किं पश्यामि न किञ्चित्। चस्त्वर्थे क्वचित्तथा पाठोऽपि रहस्यज्ञैर्नृभिर्येस्मिन् ब्राह्मणमुखे श्रद्धया प्रहुतं भोजितमन्नादिकमहं यथाकामं यथेष्टं सन्तोषपूर्वकमश्नामि तथाग्निहोत्रे यज्ञादौ प्रहुतं नाश्नामि ॥ २४ ॥ धृतेति। इह प्राणिसमुदायमध्ये येन ब्राह्मणेन पुराणी चिरन्तनी उशती कमनीया वेदाख्या मे तनुः मूर्त्तिः अध्ययनादिना धृता यत्र च परमं पवित्रं सत्त्वं गुणः शमोऽन्तःकरणनिग्रहः दमो बाह्येन्द्रियनिग्रहः सत्यं यथार्थभाषणम् अनुग्रहः परदुःखनिवृत्तिप्रयत्नः तपः आहारादिनियमः तितिक्षा त्रिविधतापसहनम् अनुभवो वेदार्थज्ञानम् एतेऽष्टगुणाः सन्ति तैर्ब्राह्मणैरन्यद्भूतं न तुलय इत्यनुषङ्गः ॥ २५ ॥ मत्त इति। अनन्तात् अनन्तशक्तियुक्तादत एव परतो ब्रह्मादिभ्योऽपि परस्मादुत्कृष्टादत एव स्वर्गापवर्गाधिपतेर्भोगमोक्षदाने समर्थान्मत्तोऽप्यकिञ्चनानां भोगसम्पत्तिहीना-नामपि येषां न किञ्चित्प्रार्थनीयमस्ति तेषां मयि भक्तिभाजाम् इतरेण राज्यादिना किमु प्रयोजनं स्यात् न किमपीति तैर्ब्राह्मणैरन्यद्भूतं न तुलये ॥ २६ ॥ सर्वभूतसम्मानं विधत्ते—सर्वाणीति। हे सुताः! वो युष्माभिः तथा भवद्भिश्च सभास्थजनैः अतो न पौनरुक्त्यम्। सर्वैरेव विविक्ता मात्सर्यादिदोषरहिता दृक् येषां तथाभूतैः चराणि जङ्गमानि ध्रुवाणि स्थावराणि च सर्वाणि भूतानि मद्धिष्ण्यतया मम भगवतोऽधिष्ठानतया पदे पदे क्षणे क्षणे अवसरे संभावितव्यानि सम्माननीयानि। णिलोप आर्षः। तदु तदेव हि सर्वभूतसम्माननं मे मम ह यथावत् अर्हणं पूजनं न केवलं प्रतिमादिषु पूजनम् ॥ २७ ॥ सर्वकर्मणामीश्वरार्पणं विधत्ते—मन इति। मनोवचोदृशामन्येषां च करणानामिन्द्रियाणामीहितस्य देहव्यापारस्य मे परिबर्हणं मदाराधनमेव साक्षात्कृतं फलं हि यस्मात् येन मदाराधनेन विना कृतान्तस्य कालस्य पाशात् विमोहात् अहंममत्वात्मकात् आत्मानं विमोक्तुं पुमान्नैशेन्नैव समर्थो भवेत्। तङभावः शपः अलुक् आर्षः ॥ २८ ॥ एवमिति। महानुभावः परमसुहृत् ऋषभ इत्युपदेशो नाम यस्य स भगवान् स्वयमनुशिष्टान् स्वतःसुशिक्षितानथात्मजान् लोकानुशासनार्थम् अधिकारिजनस्य शिक्षार्थमेवं गृहस्थधर्माननुशास्य। इत्त्वाभाव आर्षः। महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यसंज्ञकं धर्ममुपशिक्षमाण उपशिक्षयिष्यन् धरणिपालनाय स्वतनयशते ज्येष्ठं परमभागवतं भरतं राज्येऽभिषिच्य भवने एव सर्वत्यागात् उर्वरितः अवशिष्टः शरीरमात्रं परिग्रहो यस्य सः अत एव गगनपरिधानः नग्नः प्रकीर्णाः केशा यस्य सः केशबन्धनेऽप्यनुसन्धानरहितः आत्मन्येव आरोपितः चिन्तया स्थापितः आहवनीयः अग्निर्येन सः अत एव उन्मत्त इव ब्रह्मावर्त्तात्स्वदेशात्प्रवव्राज निर्जगाम ॥ २९ ॥

जडेति। अवधूतस्येव मृदाद्यवगुण्ठितो वेषो यस्य सः जनानां मध्ये जडादिवद्वर्त्तमानस्तैर्भाष्यमाणो वाच्यमानोऽपि गृहीतमौनव्रतस्तूष्णीमेव बभूव ॥ ३० ॥ तत्रेति। तत्र तत्र पुरं पत्तनं राजस्थानं ग्रामा हट्टहीनाः आकरः खनिः खेटाः कृषीवलग्रामाः वाटः पुष्पादिवाटिका शिबिरं सेनाया वासस्थानं व्रजो गवां स्थानं घोषो गोपानां सार्थो यात्रिकजनसङ्घातः गिरयः पर्वताः

आश्रमाः ऋषीणां स्थानानि तेषु अनुपथं मार्गे मार्गे अवनिचरापसदैः पुरुषाधमैस्तर्जनादिभिः परिभूयमानोऽपि तर्जनं भर्त्सनं ताडनं प्रहारः अवमेहनमुपरि मूत्रणं ष्ठीवनं थूत्कृत्य श्लेष्मप्रक्षेपः ग्राव्णां शकृतो रजसश्च प्रक्षेपः पूतिवातोऽधोवायुः दुरुक्तं शापः असति मिथ्याभूते संस्थाने संनिवेशे देह इत्युपलक्षणमाकारो यस्य तस्मिन् सदित्यपदेशमात्रं यस्य तस्मिन् उभयोः स्थूलसूक्ष्मयोः सदसतोर्वा चिदचितोर्वा योऽनुभवस्तत्स्वरूपेण यत्स्वमहिम्नि अवस्थानं स्वरूपनिश्चयः तेन एतस्मिन् कार्यकारणसङ्घाते शरीरे असमारोपिताहंममाभिमानत्वात् अविखण्डितमानः अक्षुभितचित्तः तं परिभवमगणयन्नेवैकचर एकाको पृथिवीं परिबभ्राम। यथा मक्षिकाभिः परिभूयमानो वनस्थो गजः परिभवं न गणयति तथेत्यर्थः॥ ३१॥ अतीति। अतिसुकुमाराणि करचरणोरः-स्थलानि विपुलानि बाह्वंसयुगलानि च वदनं च एते येऽवयवास्तेषां विशिष्टो न्यासः संनिवेशो यस्य सः तथा प्रकृत्यैव सुन्दरः तथा स्वभावसिद्धो यो हासस्तेन शोभनं मुखं यस्य सः तथा नवनलिनदलवदाचरन्ती ये शिशिरतारे तापहारिकनीनिके अरुणे रक्ते आयते दीर्घे नयने ताभ्यां रुचिरः मनोहरः यथा सदृशा अन्यूनाधिकाः सुभगाश्च कपोलकर्णकण्ठनासा यस्य स भूमिं पर्यटन् विगूढस्मितं यद्वदनं तस्य महोत्सवेन विभ्रमेन पुरवनितानां मनसि कुसुमशरासनं काममुपदधान उद्दीपयन्नपि पराक् पुरतोऽव-लम्बमानाश्च ते कुटिलाः वक्राश्च ते जटिलाश्च ते कपिशाः पिशङ्गाश्च ये केशास्तेषां भूरिभारो यस्य सः अवधूतवदनादृतमत एव मलिनं निजशरीरं तेन ग्रहगृहीतः पिशाचाद्याविष्ट इवादृश्यत॥ ३२॥ यर्हीति। यर्हि वाव यदा तु स भगवानृषभ इमं लोकं जनसमूहं योगस्य अद्धा साक्षात्प्रतीपं प्रतिपक्षं नाशकमिवाचक्षाणः पश्यन् बभूव तत्प्रतिक्रियाकर्म तस्य लोकस्य योगविरुद्धाचार-निराकरणं च बीभत्सितं विवादग्रस्तत्वाच्चित्तोद्वेगकरत्वाच्च निन्दितमिति पश्यन् बभूव तदाऽऽजगरं व्रतमास्थितो जातः। अत एव उच्चरिते पुरीषे चेष्टमानो विलुण्ठन् तेनैव आदिग्धा आलिप्ता उद्देशा देहप्रदेशा यस्य सः। एकत्र शयान एवाश्नाति स्म पिबति फलादिकं खादति अवमेहति मूत्रयति हदति पुरीषमुत्सृजति स्मेति। तङ्भाव आर्षः। यदेकत्रैव स्थित्वा प्रारब्धकर्मोपभोगस्त-दाजगरं व्रतमिति दर्शितम्॥ ३३॥

भगवच्छरीरस्यैतद्बीभत्सितमाशङ्क्याह—तस्येति। तस्य पुरीषस्य सुरभिणा गन्धेन सौगन्ध्यं यस्य स एवंभूतो यो वायुः स समन्तात्सर्वतो दशयोजनपर्यन्तं तं देशं सुरभिं चकार॥ ३४॥ एवमिति। एवमाजगरव्रतमिव काकमृगगवामिव चरितं यस्य सः। काकमृगगोचरित इति पाठे काकमृगाणां पशुतुल्यलोकानां गोचरितः तादृक्स्वभावत्वेन दृष्टिविषयीभूत इति व्याख्यान्तरमपि गोमृगकाकचर्यया व्रजन् गच्छन् तिष्ठन्नासीनः शयान एव पिबति खादत्यवमेहति स्म॥ ३५॥ इतीति। हे नृप! इत्येवं मुमुक्षुभिः योगविघ्नकर्तृजनसंघर्षपरिहारार्थमेवं वर्त्तितव्यमिति शिक्षार्थं नाना योगचर्या आचरति। तथोक्तः स भगवान् कैवल्यपतिर्मोक्षदाता एतेन अन्येभ्योऽपि कृपया यः कैवल्यं ददाति तस्येयं लीला ध्येयैव नतु अनुचिकीर्षणायेति सूचितम्। अविरतः निरन्तरः परममहान् उपनिषत्सु उत्तरोत्तरशतगुणत्वेनोक्तो य आनन्दस्तदनुभवरूपः सर्वेषां भूतानामात्मभूते अत एवात्मनि सर्वव्यापके वासुदेवे भगवति आत्मनः स्वस्याव्यवधानेन अभेदेन न विद्यते अन्तरा मध्ये उदरस्य देहोपाधेर्यो भावस्तेन निरस्तदेहाद्युपाधित्वेनैव सिद्धैः समस्तैरर्थैः फलैः परिपूर्णः भगवान् ऋषभो यदृच्छया सङ्कल्पं विनैव अञ्जसा साक्षात्प्रत्यक्षतयोपगतानि प्राप्तान्यपि वैहायसं खेचरत्वं मनोजवं मनस इव देहस्य वेगः अन्तर्द्धानं परकाये प्रवेशः दूरग्रहणं दूरस्थवस्तुदर्शनम् आदिपदेनैकादशस्कन्धोक्ता-नामवशिष्टानामणिमादीनां संग्रहः तानि योगैश्वर्याणि हृदयेन मनसा नाभ्यनन्दत् नाङ्गीचकार॥ ३६॥

इति श्रीभागवते पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चमोऽध्यायः॥ ५॥

—:❀:—

# अथ षष्ठोऽध्यायः

## राजोवाच

न नूनं भगव आत्मारामाणां योगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणि पुनः क्लेशदानि भवितुमर्हन्ति यदृच्छयोपगतानि ॥ १ ॥

षष्ठे तु ऋषभं त्यक्तराज्यं त्यक्ताभिमानकम्। वनाग्निरदहत्तत्र गद्यानामूनविंशतिः ( १९ ) ॥ द्वे ( २ )

उवाचेति पादोनाः षट्त्रिंशच्चानुष्टुभः ( ३५ ॥ ) ॥ ६ ॥

नेति। हे भगवः भगवन्! आर्षः। योगेन समीरितं समुद्दीपितं यज्ज्ञानं तेनावभर्जितानि दग्धानि कर्मबीजानि रागादीनि येषामत एवात्मारामाणां क्लेशबीजाहंममाभिमानाभावात् यदृच्छयोपगतानि प्राप्तानि योगैश्वर्याणि पुनः क्लेशदानि भवितुं नार्हन्ति। नूनं निश्चितमेतदतस्तानि कुतो नाभ्यनन्ददिति शेषेणान्वयः ॥ १ ॥ सत्यमिति। त्वया सत्यमुक्तं किंतु परन्तु इह योगमार्गे एके मुख्या विवेकिनः अनवस्थानस्य प्रतिक्षणं प्राप्तनानादशाकस्य अतिचञ्चलस्य मनसो विश्रम्भं विश्वासं नैव सन्नच्छन्ते सम्यक् नैव प्राप्नुवन्ति। सकर्मकात्तङार्षः। यथा शठे धूर्त्ते किराते नीचजातौ च लोको न विश्वसिति। धूर्त्तः सौहार्दं प्रदर्श्य हन्ति। नीचः अस्तेयादिधर्ममध्यापितोऽपि कोषाधिकारप्राप्तौ चौर्यादि करोति। मनश्च कामाद्यनभिभवरूपां स्वशुद्धिं प्रदर्श्य ततः कामादिनैवाजः पातयति। यद्वा प्रथमान्तत्वे शठो वञ्चकः किरातो व्याधो यथा धूर्तेऽपि मृगे विश्वासं न गच्छति। सप्तम्यन्ते शठे किराते ततो विमुक्ता मृगा यथा विश्वासं न गच्छन्ति तथा किराट इति पाठान्तरे यथा शठः किराटो वणिक् यथा व्यवहर्त्तरि अस्मिन्वा व्यवहर्त्ता विश्वासं न यातीत्यर्थः। पाक्षिकोऽपि दोषो वर्जनीय इत्युपदेष्टुं नाभ्यनन्दत् इति भावः ॥ २ ॥ तथेति। तथा च अत्र विषये शिष्टैरित्थमुक्तं तदाह—नेति। मनसि ह्यनवस्थिते चञ्चले सति कर्हिचित्कदाचिदपि केनापि सह सख्यं मैत्रीं न कुर्यात्। यस्य मनसो विश्रम्भात् विश्वासात् ऐश्वरमीश्वराणां मोहिनीदर्शनादिभिः रुद्रादीनामपि सम्बन्धि ईश्वराणां सोभरिप्रभृतीनां वा चिराचीर्णं बहुकालसञ्चितं तपश्चस्कन्द सुस्राव ॥ ३ ॥ नित्यमिति। कृतं मैत्रं विश्वासो येन तस्य योगिनो विश्वसितं मनो नित्यं सर्वदा तं भ्रंशयितुं कामस्य विषयभोगाभिलाषस्य ये च तं काममनुवर्त्तन्तेऽरयः शत्रवस्तेषां च छिद्रं प्रवेशावकाशं ददाति यथा पुंश्चली जाया कृतविश्वासस्य पत्युर्घाताय जाराणामवकाशं ददाति तथा ॥ ४ ॥ काम इति। कामादयः कर्मणा बन्धश्च अयं सर्वोऽपि शत्रुसमूहो यन्मूलः मनोनिमित्तो भवति। तन्मनः को नु बुधः स्वीकुर्यात्स्वाधीनं मन्येत ॥ ५ ॥ अथेति। एवं पूर्वोक्तप्रकारेण भवल्लक्षणादिमत्वेनाखिललोकपालानां ललामो मण्डनभूतोऽपि अथानन्तरं योगिनां साम्परायविधिं देहत्यागप्रकारमनुशिक्षयन् लोकविलक्षणैरनेकप्रकारैर्जडवदवधूतवेषभाषाचरितैर्न विलक्षितः नाभिव्यक्तो भगवत्प्रभावो यस्मिन् सः स्वकलेवरं देहं जिहासुः त्यक्तुमिच्छुः आत्मनि परमात्मनि भगवति आत्मानमर्थान्तरभावेन देहाद्यर्थान्तरकृतभेदानिरासेन इदं चाधाराधेयभावव्यावृत्त्यर्थम् असंव्यवहितं व्यवधानशून्यमेकतां प्राप्तमन्वीक्षमाणः पश्यन् अत एव उपरता बाधिता देहाद्यभिमानानुवृत्तिस्मात्स उपरराम। संसारादुपरतो जातस्तदनुसन्धानशून्यो जातः ॥ ६ ॥ तस्येति। तस्य भगवतः ऋषभस्यैवं मुक्तलिङ्गस्य त्यक्तदेहाभिमानस्यापि देहो योगमायावासनया जातेनाभिमानाभासेन जगतीं पृथिवीमभिचङ्क्रममाणः पर्यटन् कोङ्कादिदेशान् यदृच्छयोपगतः सन् यथा आवधूत्यलीलेच्छासंस्कारेणातिबालः यद्यत्प्राप्नोति तत्तन्मुखे क्षिपति तथा आस्ये कृतः अश्मकवलो येन सः मुक्ता मूर्द्धजा यस्य सः असंवीतः नग्न एव अत एव उन्मादः वातादिना विक्षिप्त इव। यद्वा सप्तम्यन्तमिदम्। उन्मादे सति पुमान् यथा चेष्टते यद्वदिति। कुटकाचलस्योपवने विचचार। मनसा स्वयं त्यक्तेऽप्यभिमाने केनापि संस्कारेण देहः प्रचलति। यथा दण्डापनयेऽपि कुलालचक्रम्। सोऽयमभिमानाभासः। स च जीवन्मुक्तानामविद्यावासनया भवति भगवत ऋषभस्य तु योगमायावासनयेति विशेषः ॥ ७ ॥

अथेति। समीरस्य वेगेन विधूतानां कम्पितानां वेणूनां विघर्षणेन जात उग्रो दावानलस्तद्वनमालेलिहानः सर्वतो ग्रसमानस्तेनर्षभेण सह ददाह। अत्र वनवर्तितरुमृगादीनां स्थूलशरीराणि वह्निर्ददाह। सूक्ष्मं शरीरं तु ऋषभ इति तद्वनवर्त्तिनो मुक्ता बभूवुरित्यर्थः ॥ ८ ॥ यस्येति। अवधूतवेषेण कोङ्कादिदेशान् गतस्य यस्यर्षभस्य किलाश्रमातीतं पारमहंस्यमनुचरितं

तद्देशवासिभ्यः शास्त्रद्वारा च उपाकर्ण्य श्रुत्वा मन्दः कलौ अधर्मे उत्कृष्यमाणे वर्द्धमाने सति भवितव्येन प्राणिनां दुरदृष्टफलेन विमोहितः। अर्हन्निति नाम यस्य सः कोङ्कादीनां राजा स्वयमुपशिक्ष्य ऋषभचरिताचरणेन वयमपि तादृशा भवामेति मत्वा अकुतोभयं शास्त्रानुमतत्वात्सर्वतो भयनिवर्त्तकं स्वधर्मपथं स्वधर्ममार्गमपहाय त्यक्त्वा कुपथश्चासौ पाखण्डश्च तत् अत एवासमञ्जसं वेदविरुद्धत्वान्नरकपातादिदुःखकारणं मतं निजमनीषया वेदविचारमन्तरेणैव संप्रवर्तयिष्यते॥ ९॥ येनेति। येन प्रवर्त्तितपाखण्डमतेन वाव एव कलौ मनुजापसदा मनुजेष्वतिनिकृष्टाः स्वविधिना स्ववर्णाश्रमानुरूपशास्त्रेण नियोगो यस्मिन् शौचचारित्रे शोधककर्मणि तद्विहीनाः देवस्य भगवतो मायया मोहिताः अत एवाधर्मो बहुलो यस्मिंस्तेन कलिना उपहता तिरस्कृता धीर्विवेको येषां ते जनाः देवहेलनानि देवानामवज्ञारूपाण्यस्नानादीनि अपव्रतानि निजेच्छया गृह्णानाः ब्रह्मादीनां विदूषका भविष्यन्ति॥ १०॥ ते चेति। ते च पाखण्डिनः निजलोकयात्रया पाखण्डिजनप्रवर्त्तितया अत एव सर्वमूलानादिवेदप्रमाणशून्यत्वादर्वाक्तनया प्रवृत्त्या स्वतः कृतविश्वासाः स्वयमन्धे तमसि दुःखभोगातिरिक्ततरणोपायरहिते नरक एव प्रपतिष्यन्तीत्यन्वयः। तत्र दृष्टान्तमाह। अन्धपरम्परयेति। यथा वञ्चनपरैः धनादिलोभेन वयं मार्गं पश्याम इति वदद्भिरन्धैः सह गच्छन्नन्धोऽन्धे कूपे पतति तथा॥ ११॥ ननु तर्ह्यनर्थकारी किमर्थोऽयमवतारस्तत्राह—अयमिति। अयमवतारो रजसा उपप्लुतानां व्याप्तानां मोक्षमार्गोपशिक्षणार्थ एव पाखण्डमार्गप्रवृत्तिस्तु प्राणिदुरदृष्टवशादित्युक्तमेव॥ १२॥ तस्य कैवल्योपशिक्षणस्यानुगुणान् अनुरूपान् श्लोकान् गायन्ति—अहो इति। अहो आश्चर्यम्। सप्तसमुद्रवत्या भुवो ये द्वीपास्तेषु तेषां वर्षेषु च मध्ये एतद्भारतं वर्षमधिपुण्यमधिकं पुण्यं यस्मिंस्तत्कुतो यतः भद्राणि मोक्षप्रदानि मुरारेर्ऋषभाद्यवतारवन्ति कर्माणि यत्रत्या जना गायन्ति॥ १३॥ अहो इति। प्रैयव्रतो वंशो यशसा सत्कीर्त्या अहो अवदातः अतिशुद्धः यत् यस्मात् पुरुषः सर्वान्तर्यामी आद्यः सर्वकारणं यः पुराणः पुमान् भगवान् स यत्र वंशे कृतावतारः सन् अकर्मा कर्माप्राप्यो मोक्षस्तस्य हेतुं धर्मं चचार॥ १४॥

को न्विति। अभवस्य संसारातीतस्य अस्य ऋषभस्य काष्ठां दिशम् अपि अपरो योगी मनोरथेनापि किम्पुनः कर्मणो को नु गच्छेत्। यो योगो ऋषभोऽस्मान् स्वीकरोतु इति सेवितुं कृतः प्रयत्नो याभिस्तथाभूता अपि येन ऋषभेण असत्तया तुच्छत्वेन उदस्तास्त्यक्ता हिं एव योगमायाः योगसिद्धीः स्पृहयति वाञ्छति। यद्वा। कृतः प्रयत्नो यासु इति योगसिद्ध्यर्थं प्रयत्नमपि करोतीति स्पृहाविक्यानुगुणं विशेषणम्॥ १५॥ इतीति। इत्येवं ह स्फुटतया सकलवेदादीनां परमगुरोः रक्षकस्य भगवत ऋषभाख्यस्य विशुद्धे आचरिते यत् ईरितं तत् वक्तृश्रोत्रोः समस्तं दुश्चरितमभितो हरतीति तथा परममहामङ्गलानामतिदुर्लभफलानामप्ययनम्। यद्वा। ऋषभाख्यस्य विशुद्धाचरितं तथा ईरितम् "नायं देहो देहभाजाम्"। इत्यादि कथितं वाक्यं च समस्तदुरिताभिहरणं परममङ्गलायनं चेति तदिदमवहितः सावधानः सन्नुपचितया श्रद्धयाऽनुवारं शृणोत्याश्रावयति वा तयोरनयोः श्रोतृश्रावयित्रोः अविकारात्स्मर्तुरनुमोदयितुश्च तस्मिन्सर्वशास्त्रप्रसिद्धे भगवति वासुदेवे एकान्ततः फलाभिसन्धानशून्या भक्तिः समनुवर्त्तते उत्पद्यते॥ १६॥ यस्यामिति। यस्यां भक्तावेव सुधासरिति नतु योगादिपल्वले। अनुसवनं प्रतिदिनं तत्राप्यविरतं निरन्तरं प्रतिक्षणं विविधानि वृजिनानि दुःखानि यस्मिन् तस्मिंस्तिर्यगादियोनिषु भ्रमणात्मके संसारे तापैर्दुःखैरुपतप्यमानमभिभूयमानमात्मानं स्नापयन्तस्तया भजनोत्पन्नया परया सर्वोत्कृष्टया निर्वृत्या आनन्देन पूर्णाः भगवदीयत्वेन भगवता स्वकीयत्वेनाङ्गीकारेणैव परिसमाप्ताः परिपूर्णाः सर्वेऽर्था मनोरथा येषां ते भगवदीयत्वेनेत्यत्र दत्वमार्षम्। कवयः स्वयमासादितमाकाङ्क्षां विनापि भगवतैव प्रापितमात्यन्तिकं जन्ममरणादिदोषवर्जितमत एव परमपुरुषार्थरूपमपवर्गमपि नो एवाद्रियन्ते नैवाङ्गीकुर्वन्ति॥ १७॥ राजन्निति। अङ्ग हे राजन्! भवतां पाण्डवानां यदूनां यादवानां च पतिः रक्षकः गुरुः धर्मोपदेष्टा दैवमुपास्यः फलदश्च प्रियः मित्रं कुलपतिः गणमुख्यः कार्यनियन्ता किं बहुना क च कदाचित् दौत्यादौ वः पाण्डवानां किङ्कर आज्ञाकार्यपि जातो न तु यदूनामिति। यदुभ्योऽपि भवतामाधिक्यमेव तदेवमलमस्तु नामैवं तथापि अन्येषां नित्यं भजतामपि भगवान् मुकुन्दः कर्हिचिन्मुक्तिं ददाति स्म। भक्तियोगं प्रेमलक्षणं तु नैव ददाति स्म॥ १८॥ नित्येति। नित्यमनुभूतं यन्निजं रूपं स एव लाभस्तेन निवृत्ता तृष्णा यस्य सः। सः यः ऋषभः आत्मा तत्पदवाच्यः तद्व्यतिरिक्तं देहादि अतत् तदर्थो या रचना लौकिको व्यवहारस्तया श्रेयसि भगवद्भजने चिरं बहुकालतः सुप्ता लुप्ता बुद्धिर्यस्य लोकस्य प्राणिजातस्य करुणया अभयं संसारभयनिवर्त्तकमात्मा चासौ लोकः सर्वोपद्रवरहितनिवासश्च तमात्मतत्त्वमाख्यात् उपदेशेनाचारेण च प्रकटितवांस्तस्मै भगवते ऋषभाय नमः॥ १९॥

इति श्रीभागवते पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां षष्ठोऽध्यायः॥ ६॥



# अथ सप्तमोऽध्यायः

श्रीशुक उवाच

भरतस्तु महाभागवतो यदा भगवताऽवनितलपरिपालनाय संचिन्तितस्तदनुशासनपरः पंचजनीं विश्वरूप-दुहितरमुपयेमे ॥ १ ॥

सप्तमे भरतो यज्ञैर्हरिमिष्ट्वा गृहाद्गतः । हरिक्षेत्रेऽभजत्तत्र गद्यानि स्युश्चतुर्दश ( १४ ) ॥

उवाचेत्येकं ( १ ) सपादास्त्रिंशदुक्ता ( ३० ) अनुष्टुभः ॥ ७ ॥

भरत इति । महाभागवतो भरतस्तु यदा भगवता ऋषभेणावनितलपरिपालनाय संचिन्तितः विचारेण राज्ये स्थापितस्तदा तदनुशासनपरः तस्याज्ञानुसारी सन् विश्वरूपदुहितरं पञ्चजनीमुपयेमे विवाहितवान् ॥ १ ॥ तस्यामिति । तस्यां पञ्चजन्यां भार्यायामात्मनः स्वस्य कात्स्न्र्येन सर्वप्रकारेणानुरूपान् बुद्धिनैपुण्यादिगुणैर्योग्यानेव पञ्चात्मजान् जनयामास । सन्ततिवृद्धौ दृष्टान्तः । यथा भूतादिस्तामसाहङ्कारः स यथा भूतसूक्ष्माणि भगवत्प्रेरित उत्पादयति तथेत्यर्थः ॥ २ ॥ सुमतिमिति । सुमत्यादीन् पुत्रान् जनयामास । अजनाभनाम्ना पूर्वं प्रसिद्धमप्येतद्वर्षं यतो भरतादारभ्य सर्वे जना भारतमिति व्यपदिशन्ति स्वनाम्ना ख्यापकत्वेन धर्माद्यतिशयः सूचितः ॥ ३ ॥ स इति । स महीपतिः बहुवित्सर्वशास्त्ररहस्यज्ञोऽत एव स्वधर्ममनुवर्त्तमानः अनुतिष्ठन् स्वे स्वे कर्मणि वर्त्तमानाः प्रजा उरुवत्सलतया अतिप्रीत्या पितृपितामहवत् पर्यपालयत् सर्वतः पालयामास ॥ ४ ॥ ईजे चेति । आहृताः स्वाधिकारेणात्मसात्कृताः येऽग्निहोत्रादयस्तेषां प्रकृतिविकृतिभिरग्निहोत्रादयो द्विविधाः सकलाङ्गयुक्ताः प्रकृतयः विकलाङ्गयुक्ताः विकृतयः तैर्द्विविधैरपि उच्चावचैः महद्भिरल्पैश्च क्रतुभिर्यज्ञैः होत्रोपलक्षिताश्चत्वारः ऋत्विजस्तैरनुष्ठेयं कर्म चातुर्होत्रं तत्र यो विधिः प्रकारस्तेन यज्ञाः अयूपाः क्रतवः सयूपाः तद्रूपं भगवन्तमनुसवनं तस्मिंस्तस्मिन् योग्ये काले श्रद्धया ईजे च । अनुसवनमित्यन्तं चातुर्होत्रविधिनेत्यन्तं वा गद्यम् ॥ ५ ॥ संप्रचरत्स्विति । विरचिता अनुष्ठानेन सम्पादिता अङ्गक्रिया येषां तेषु नानायागेषु संप्रचरत्सु प्रवर्त्तमानेषु अध्वर्युभिः बहुत्वं नानाकर्माभिप्रायेण हविःषु गृह्यमाणेषु सत्सु स यजमानो भरतो यागजनितं सूक्ष्मरूपेणोत्पन्नं फलं क्रियाफलं तथा धर्माख्यं कालान्तरे फलजनकं शक्त्यात्मकमदृष्टशब्दवाच्यं चेति द्विविधं यदपूर्वं तत् परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां तत्तद्देवताप्रकाशकानां मन्त्राणां येऽर्था इन्द्रादिदेवतास्तेषां नियामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेवे एव धावयमानश्चिन्तयन् यज्ञभाजो ये देवाः सूर्यादयस्तान् पुरुषस्य वासुदेवस्यावयवेषु चक्षुरादिष्वेवाभ्यध्यायन्न पृथक्तया सूर्याय स्वाहेत्युक्ते भगवन्नेत्रपूजेयमिति भावयामासेत्यादि तत्रापूर्वे ह्यस्ति मीमांसकानां पक्षद्वयम् । तदानीमेव सूक्ष्मरूपेणोत्पन्नं फलमेवापूर्वं कालान्तरफलोत्पादिका कर्मशक्तिर्वेति तदुक्तम्—"यागादेव फलं तद्धि शक्तिद्वारेण सिद्ध्यति । सूक्ष्मं शक्त्यात्मकं वापि फलमेवोपजायते ॥" तदेवाह । क्रियाफलं धर्माख्यमिति च । ननु यदि कर्मप्रधानं देवताश्च तदङ्गं तदा कर्मजन्यापूर्वं कर्तृनिष्ठं भवति । यदि तु देवताराधनार्थं तदा तु देवताप्रसादरूपत्वादपूर्वस्य देवताश्रयत्वमेव युक्तम् । अतः कथं वासुदेवाश्रयत्वभावनं इति चेत् यदि कर्मप्रधानपक्षेऽपूर्वस्य कर्त्राश्रयत्वमिष्टं तदा वासुदेवस्यान्तर्यामिणः प्रवर्तकत्वेन मुख्यकर्तृत्वात्तदाश्रयमेवापूर्वं युक्तं न तत्प्रयोज्ययजमानाश्रयं शास्त्रफलं प्रयुक्तरीतिन्यायात् । अन्यथा ऋत्विजामप्य-पूर्वाश्रयत्वप्रसङ्गात् । तदेतदुक्तं साक्षात्कर्तरीति । यति तु देवताप्रधानपक्षेऽपूर्वस्य देवताश्रयत्वमिष्टं तदा तु वासुदेवस्य परदेवता-त्वात्सुतरामेव तदाश्रयत्वं युक्तमित्याह । परदेवतायामिति ॥ ६ ॥

एवमिति । एवं भगवति फलादिभावनया या कर्मणां विशुद्धिरवैगुण्यं तया विशुद्धं सत्त्वमन्तःकरणं यस्य तस्य भरतस्य अन्तर्हृदये य आकाशः स शरीरमभिव्यक्तिस्थानं यस्य तस्मिन महापुरुषरूपस्योपलक्षणमाकारो यस्य तस्मिन् पुरुषोत्तमे अत एव श्रीवत्सादिभिरुपलक्षिते युक्ते तत्र श्रीवत्सो रोमावर्तविशेषः कौस्तुभाख्यो मणिः वनमाला अनेकवर्णपुष्पग्रथिता माला अरि चक्रं दरः शङ्खः गदा कौमोदकी निजपुरुषाणां नारदादीनां हृदि लिखितवन्निश्चलतया स्थितेन आत्मनि स्वान्तःकरणे पुरुषरूपेण विरोचमाने शोभमाने भगवति वासुदेवे अनुदिनमेधमानो रयो वेगः प्रकर्षो यस्यास्तथाभूता अत एवोच्चैस्तरामत्युत्कटा

भक्तिरजायत ॥ ७ ॥ एवमिति । एवं पूर्वोक्तप्रकारेण गृहेषु वर्तमानो वर्षाणामयुतानि तेषां सहस्रं तत्पर्यन्ते काले अवसितो निश्चितः कर्मनिर्वाणावसरः राज्यभोगादृष्टसमाप्तिसमयो येन सः अधिकृत्य भुज्यमानं पितृपितामहपरम्परयाऽऽगतं रिक्थं धनं स्वतनयेभ्यो यथादायं यथाविभागं विभज्य विभागेन दत्त्वा स्वयं सकलसम्पदां निकेतात्स्थानात् स्वनिकेतात्पुलहाश्रमं हरिक्षेत्रं प्रवव्राज जगामेत्यर्थः ॥ ८ ॥ यत्रेति । यत्र क्षेत्रे विद्याधरकुण्डे वा वात्सल्यं भक्तेषु कृपा तेन कर्त्रा तत्रत्यानां निजजनानां भगवद्भक्तानाम् इच्छारूपेण भक्तानामपेक्षितेन रूपेण भगवान् हरिरद्यापि सन्निधाप्यते संनिहितः क्रियते ॥ ९ ॥ यत्रेति । यत्र क्षेत्रे चक्रनदी सरित्प्रवरा गण्डकीति प्रसिद्धा आश्रमपदानि ऋषीणां स्थानानि उभयत उपर्यधश्च नाभिर्येषां तैर्दृषच्चक्रैः शिलामध्यगतैश्चक्रैः शालग्रामैः सर्वतः पवित्रीकरोति ॥ १० ॥ तस्मिन्निति । तस्मिन् हि पुलहाश्रमोपवने उपभृतः संप्रवृद्ध उपशमो यस्य स उपरतो निवृत्तो विषयाभिलाषो यस्य स विविक्तः शुद्धचित्तः एकलः एकान्तस्थः निश्चयेन विविधकुसुमादिभिर्भगवत आराधनमेव समीहमानः कुर्वाणः परां निर्वृतिं परमानन्दमवाप । किसलयाः कोमलपल्लवाः उपहाराः नैवेद्यानि ॥ ११ ॥ तयेत्थमिति । तया इत्थं वर्णितप्रकारया अविरतया निरन्तरया पुरुषस्य भगवतः परिचर्यया पूजया तस्मिन् भगवति प्रवर्द्धमानो योऽनुरागस्तस्य भरेण द्रुतं द्रवीभूतं यद्धृदयं तस्मिन् शैथिल्यमनुद्यमो यस्य सः प्रहर्षवेगेनात्मनि देह उद्भिद्यमानं रोमपुलककुलकं रोमाञ्चवृन्दं यस्य सः । कप्समासान्तः । औत्कण्ठ्यात्प्रवृत्तेन प्रणयबाष्पेण प्रेमाश्रुणा निरुद्धोऽवलोको ययोस्ते नयने यस्य सः एवं निजरमणस्य स्वप्रीतिदातुर्भगवतो ये अरुणे चरणारविन्दे तयोरनुध्यानेन परिचितः समृद्धो यो भक्तियोगस्तेन परिप्लुतः सर्वतो व्याप्तः परम उत्कृष्ट आह्लाद आनन्दो यस्मिन् गम्भीरे हृदयरूपे ह्रदे तस्मिन्नवगाढा निमग्ना धिषणा बुद्धिर्यस्य स भरतः तामपि क्रियमाणां भगवतः सपर्यां पूजां न सस्मार कदाचिद्विस्मृतवानित्यर्थः ॥ १२ ॥ इत्थमिति । इत्थं धृतानि भगवद्व्रतानि येन सः अत एण्या हरिण्या अजिनमैणेयं तदेव वासस्तेन तथा अनुसवनं त्रिकालं योऽभिषेकः स्नानं तेनार्द्राः कपिशाश्च याः कुटिला जटाः तासां कलापेन समूहेन च विरोचमानः सूर्यर्चा सूर्यप्रकाशकया "तत्सवितुः" इत्यनया ऋचा हिरण्मयं "ध्येयः सदा सवितृमण्डल-मध्यवर्ती" इत्यादिनोक्तं भगवन्तं पुरुषं पूर्णमपि उज्जिहाने उद्गच्छति सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदु होवाच । उज्जिहास इति पाठे सन्नन्तात्पचाद्यच् । उदेतुमिच्छति सतीत्यर्थः ॥ १३ ॥ पर इति । रजसः प्रकृतेः परमिति परोरजः पृषोदरादित्वात् सुट् । जातं वेदो धनं कर्मफलं यस्मात्कर्मफलदातात् यन्मनसा सङ्कल्पमात्रेणैवेदं विश्वं जजान ससर्ज । "जन जनने" इति वैदिकधातोः रूपम् । यच्च सृष्टमदः विश्वं सुरेतसा चिच्छक्त्या सु इति स्वेति च पाठः । अन्तर्यामिरूपेण प्रविश्य गृध्राणं सुखमाकाङ्क्षन्तं हंसं जीवं विचष्टे पश्यति । नृषु प्राणिषु सीदन्ति उपाधितया तिष्ठन्तीति नृषदो बुद्धीन्द्रियप्राणादयस्तेषां रिङ्गिं गतिं राति ददातीति नृषद्रिङ्गिराम् । डप्रत्यये वा छन्दसीत्यमिपूर्वरूपत्वाभावः क्विवन्तस्य वा रूपम् । तत्र क्लीवे ह्रस्वप्राप्तिः । तत् देवस्य द्योतनात्मकस्य सवितुः परमात्मनः सूर्यस्य वा भर्गः तेजः सान्तो भर्गः शब्द इमः शरणं व्रजामः । छन्दोभङ्गः ॥ १४ ॥

इति श्रीभागवते पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तमोऽध्यायः ॥ ७ ॥

—:❀:—

## अथाष्टमोऽध्यायः

श्रीशुक उवाच

**एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्तत्रयमुदकान्त उपविवेश ॥ १ ॥**

अष्टमे भरतो विष्णुं भजन्नप्येणसङ्गतः । एणत्वं गतवांस्तत्र द्वात्रिंशद्गद्यजा ( ३२ ) मितिः ॥

उवाचेत्येकमङ्घ्रयूना पष्टिसंख्या ( ५६।।। ) अनुष्टुभः ॥ ८ ॥

एकदेति । एकदा तु महानद्यां गण्डक्यां कृतोऽभिषेकः स्नानं नैयमिकं नित्यनैमित्तिकविधिप्राप्तम् आवश्यकमर्थप्राः मूत्रोत्सर्गादि च येन क्रमोऽत्र न विवक्षितः । अभिषेकस्याल्पाच्तरत्वात्पूर्वनिपात इत्येके । यद्वा कृतोऽभिषेकः नैयमिकं नियमप्राप्तमावश्यकं सन्ध्यावन्दनादि च येनेति ब्रह्माक्षरं प्रवणमभिगृणानो जपन् । शानजार्षः चानच् वा । मुहूर्त्तत्रयमुदकान्ते नद्यास्तीर उपविवेश ॥ १ ॥ तत्रेति । हे राजन् ! तत्र तस्मिन् स्थाने तदा जलाशयाभ्याशं नद्याः समीपं पिपासया जलपानेच्छया एकैव स्वगणाद्वियुक्ता हरिण्युपजगाम ॥ २ ॥ तयेति । तया हरिण्या उदके पेपीयमानेऽत्यासक्त्या पेपीयमाने सति तावदेव तत्क्षणमेवाविदूरेण समीप एव तदतो मृगपतेः सिंहस्य लोकभयङ्कर उन्नादो महान्नाद उदपतत् उद्गतः ॥ ३ ॥ तमिति । तन्नादमुपश्रुत्य सा मृगवधूः हरिणी प्रकृत्या स्वभावत एव विक्लवा व्याकुलचित्ता चकितनिरीक्षणा सुतरामपि तु हरेः सिंहात् यद्भयं तस्याभिनिवेशेन व्यग्रं व्याकुलं हृदयं यस्याः सा अत एव पारिप्लवदृष्टिः परिभ्रान्तनेत्रा अगततृषा न गता तृषा यस्याः सा तथाभूताऽपि सहसैवोच्चक्राम नदीमुल्लङ्घितवती ॥ ४ ॥ तस्या इति । तस्य अन्तर्वत्न्या गर्भिण्या उत्पतन्त्या नदीमुल्लङ्घयन्त्या उरुभयेनावगलितः स्थानाद्विचलितो योनेर्वहिर्निर्गतः सन् गर्भः स्रोतसि प्रवाहे निपपात ॥ ५ ॥ तदिति । तत्प्रसवो गर्भपातः उत्प्रसव इति पाठे उच्चाकाशादेव गर्भपातः उत्सर्पणं नद्युल्लंघनं भयं च तैरेतैर्यः खेदस्तेनातुरा पाडिता स्वगणेन च वियुज्यमाना कृष्णसारसती मृगवधूः कस्यांचिद्दर्यां गिरिगुहायां निपपात । अथानन्तरमेव ममार च ॥ ६ ॥ तमिति । स्रोतसा प्रवाहेणानूह्यमानमपविद्धं बन्धुभिस्त्यक्तं मृतमातरं च । कवभाव आर्षः । अत एव कृपणं दीनं तं त्वेणकुणकं हरिणबालकम् अभिवीक्ष्य बन्धुरिव एतैः कृपणत्वादिहेतुभिर्याऽनुकम्पा तया राजर्षिर्भरत आदाय गृहीत्वा स्वाश्रमपदमनयत् ॥ ७ ॥ तस्य हेति । एतस्मिन्नेणकुणके उच्चैरतिशयेन कृता निजः स्वीय इत्यभिमानो येन तस्य भरतस्य अहरहः तस्य मृगस्य पोषणं तृणादिदानं पालनं वृकादिभ्यो रक्षणं लालनं चुम्बनादिना तैः प्रीतिजननं कण्डूयनादिना एतैर्यदनुध्यानं तस्मिन्नासक्तिस्तेनात्मनः स्वस्य पुरुषपरिचर्या भगवत्पूजा आदिर्येषां स्नानशौचजपपाठादीनां ते सर्वे नियमाः सहयमाः यमैरहिंसादिभिः सहिताः प्रत्यहमेकैकशो वियुज्यमानाः सन्तः कतिपयेनाहर्गणेन सर्व एव किलोदवसन् उत्सन्ना बभूवुः ॥ ८ ॥ आसक्तिं प्रपञ्चयति—अहो इति । अयं हरिणकुणकः मृगबालकः कृपणः दीनः यत ईश्वररथचरणः कालचक्रं तस्य परिभ्रमणवेगेन स्वगणसुहृद्बन्धुभ्यः परिवर्जितः भ्रंशितः मा मां च शरणमुपसादितः प्रापितः । अतो मामेव मातापितरो भ्रातृज्ञातीन् यौथिकान् यूथसंघातिनश्च मत्वोपेयाय प्राप्तोऽन्यं कंचनापि नैव वेद नैव जानाति । मय्यतिविश्रब्धः कृतातिविश्वासश्चात एव मयाऽपि शरण्यस्य शरणागतस्योपेक्षायां दोषं विदुषा । यद्वा शरण्यः शरणार्हो रक्षकस्तत्कर्तृकोपेक्षादोषविदुषा अनसूयिना एतन्निमित्तं मम स्वार्थो भ्रश्यतीति दोषदृष्टिमकुर्वताऽस्य मत्परायणस्य शरणागतस्य पोषणाद्यनुष्ठेयम् ॥ ९ ॥

नूनमिति । अतो नूनं हि निश्चितमेवार्याः शिष्टाः साधवः सज्जनाः उपशमशीलाः सर्वतो विरक्ता अपि कृपणसुहृदः दीने दयायुक्ताः सन्त एवंविधेऽर्थे परोपकारप्रसङ्गे प्राप्ते गुरुतरान्महतोऽपि स्वार्थानुपेक्षन्ते स्वार्थानुपेक्ष्य परोपकारे यतन्त इत्यर्थः ॥ १० ॥ इतीति । इत्येवं कृतोऽनुषङ्गः मृग आसक्तिर्येन स आसनादिषु मृगापत्येन सह स्नेहेनानुबद्धं हृदयं येन स तथाभूत एवासीदित्यर्थः ॥ ११ ॥ कुशेति । कुशाद्याहरिष्यमाणो यदा वृकाः प्रसिद्धाः शालावृकाः कपिक्रोष्टुश्वानः तदादिभ्यो भयमाशंसमान आशङ्कमानो भवति । तदा हरिणकुणकेन सहैव तमादायैव वनं समाविशति ॥ १२ ॥ पथिष्वति । यदा च मुग्धभावेन बाल्यस्वभावेन स पथिषु मार्गे मार्गे तत्र तत्र कर्दमोपरितने कोमलतृणादौ कर्दमे निमङ्क्ष्यामीति ज्ञानरहितो विषक्तः स्थितो भवति । तदा तस्मिन्नतिशयितः

प्रणयस्य स्नेहस्य भरो यस्य तथाभूतं हृदयं यस्य सः राजा कार्पण्यात् स्नेहपारवश्यात् तं स्कन्धेनोद्वहति ॥ १३ ॥ एवमिति। एवमुत्सङ्गे उरसि चाधाय संस्थाप्य लालयन्परमां मुदमवाप ॥ १४ ॥ क्रियायामिति। क्रियायां भगवत्पूजादिरूपायां निर्वर्त्यमानायां क्रियमाणायामन्तराले तन्मध्येऽपि क गतो हरिणकुमार इत्युत्थायोत्थाय यदैनं मृगपोतमभिचक्षीत सम्यक् पश्यति। तर्हि वाव तदैव स वर्षपतिर्भरतः प्रकृतिस्थेन तद्दर्शनानन्दप्राप्त्या स्वस्थेन मनसा हे वत्स! ते तव सर्वतः स्वस्ति स्तात् भूयादिति त ा आशिष आशास्ते प्रार्थयते ॥१५॥ अन्यदेति। अन्यदा यदा मृगस्वभावात्स स्वस्थानाद्विनिर्गत तदा तददर्शनसमये भृशमुद्विग्नं व्याकुलं मनो यस्य सः तत्र। हेतुमाह। अतितर्षणात्यौत्सुक्येन हेतुना हरिणकुणकविरहेण विह्वले हृदये सन्तापो यस्य सः सकरुणं सदैन्यं यथा भवति तथा तमेवानुशोचन् किल महत्कश्मलं मोहमभिरम्भितः प्रापितः सन्निति वक्ष्यमाणं होवाच। यथा कृपणो धनं प्राप्य पुनस्तस्मिन्विनष्टे यथा मोहं प्राप्नोति तद्वदित्यर्थः ॥ १६ ॥ अपीति। अकृतसुकृतस्य निर्भाग्यस्य शठो वञ्चको यः किरातो व्याधः द्वन्द्वो वा तद्वद्वञ्चनपरा क्रूरा मतिर्यस्य तस्यात एवानार्यस्य दुर्जनस्य मम तत् शाठ्यादिकमगणयन् अचिन्तयन्स वै मृतहरिणीसुतः अत एव कृपणो दीन एणबालक आत्मप्रत्ययेन स्वान्तःकरणविशुद्ध्या कृतविश्रम्भः मयि कृतविश्वासः सन् किमागमिष्यतीति। यथा सुजनः स्वान्तःकरणविशुद्ध्या कृतविश्वासो दुर्जनकृतापराधमचिन्तयंस्तद्गृहमागच्छति तद्वत् ॥ १७ ॥

अपीति। अस्मिन् ममाश्रमस्योपवने क्षेमेण वृकादिबाधाराहित्येन शष्पाणि कोमलतृणानि चरन्तं देवेन भगवता गुप्तं द्रक्ष्यामि किम् ॥ १८ ॥ अपीति। अपि किं वृकः शालावृकः श्वाऽन्यतमो वानेकचरो यूथचरः सूकरादिरेक एव चरति यः क्रूरस्वभावो व्याघ्रादिर्वा न भक्षयतीति ॥ १९ ॥ निम्लोचतीति। ह खेदे। सकललोकस्य क्षेमो यस्मात्स उदयो यस्य सः। यतः वेदत्रयी आत्मा स्वरूपं यस्य स भगवान् सूर्यो निम्लोचति अस्तं याति मम मृगवध्वा न्यासो निक्षेपभूतस्त्वद्यापि नागच्छति ॥ २० ॥ अपिस्विदिति। विविधा रुचिराः अत एव दर्शनीया ये निजाः स्वीया मृगदारकविनोदाः तैः स्वानां स्वकीयानामस्माकमसन्तोषं खेदमपनुदन् हरिण एव राजकुमारः आगत्याकृतसुकृतं पुण्यहीनमपि मां किंस्वित्सुखयिष्यति ॥ २१ ॥ क्ष्वेलिकायामिति। क्ष्वेलिकायां क्रीडायां मृषा यः समाधिस्तेनामीलिते दृशौ येन तं मां चकितादपि चकितः सन्नागत्य प्रेमसंरम्भेण प्रणयकोपेन पृषत् जलबिन्दुस्तद्वदपरुषेण कोमलेन विषाणाग्रेण लुठति सङ्घट्टयति ॥ २२ ॥ आसादितेति। आसादितं स्थापितं हविर्यस्मिंस्तस्मिन् बर्हिषि दर्भे दन्ताकर्षणादिना दूषिते सति दूषित्वेति पाठे दूषणं कृत्वा स्थितश्चेदित्यर्थः। णिलोपस्त्वत्रार्षः। तदा आः किमरे करोषीति मयोपालब्धोऽधिक्षिप्तः सन् सपदि तत्क्षणमेव भीतादपि भीतः अत एवोपरतरासः त्यक्तक्रीडः अवहितः संयतः करणकलाप इन्द्रियसमूहो यस्य स तथा ऋषिकुमारवदास्ते ॥ २३ ॥ इति बहुधा विलप्य बहिर्गत्वा तत्खुरक्षुण्णं भूतलं दृष्ट्वाऽऽह—किमिति। अरे अहो! येयमवनिस्तयाऽनया तपस्विन्या महापुण्यया किं वा तप आचरितं यत् मया नाचरितमित्यर्थः। यस्मादियं सविनस्य संयतेन्द्रियस्य कृष्णसारतनयस्य मृगपोतस्य तनुतरा अतिसूक्ष्मा अत एव सुभगाः शोभमानाः शिवतमाः शुद्धिहेतुत्वान्मङ्गल-रूपाश्चाखराः कोमलाश्च खुरा येषु तेषां पदानां तत्र तत्राङ्कितानां पंक्तिभिर्द्रविणं मृग एव तेन विधुरो रहितः अत एवातुरो व्याकुलो योऽहं तस्य अत एव कृपणस्य दीनस्य मम द्रविणस्य तस्यैव पदवीं मार्गं सूचयन्ती अनया पदव्या त्वं मृगबालं प्राप्स्यसीति कथयन्तीव ताभिः पंक्तिभिरेव सर्वतः कृतकौतुकं कृतमङ्गलमात्मानं द्विजानां स्वर्गापवर्गकामानां देवयजनं यज्ञस्थानं करोति। "यस्मिन देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत।" इति स्मृतेरस्यापि कृष्णत्वं ज्ञेयम् ॥ २४ ॥ उदिते चन्द्रे तदङ्कभूतं मृगं संभाव्याह—अपि स्विदिति। किंस्विदेनं मृगपतेः सिंहस्य भयान्मृता माता यस्य तम्। कवभाव आर्षः। स्वाश्रमात् परिभ्रष्टं मृगबालकं कृपणजनेषु वत्सलः दयवान् भगवान् असावुडुपतिश्चन्द्रः कृपया परिपाति ॥ २५ ॥

किमिति। आत्मजः पुत्रत्वेनाङ्गीकृतो मृगपोत एव तस्य विश्लेषेण वियोगेन यो ज्वरस्तापः स एव दवदहनः वनवह्निस्तस्य शिखाभिर्ज्वालाभिरुपतप्यमाना हृदयरूपा स्थलनलिनी यस्य तम्। उपसृतः पुत्रत्वेनानुमतः प्राप्तो वा मृगीतनयो येन तं मां भगवां-श्चन्द्रः शिशिरं च तच्छान्तं सुखकरं च मय्यनुरागेण गुणितमावर्तितं पुनः पुनः स्रवद्यन्निजवदनसलिलं तदेवामृतमया गभस्तयस्तैः स्वधयति अमृतप्लुतं करोति। स्वधाशब्दोऽत्र देवभोज्यवाची अत एव देवनामसु। "स्वाहास्वधाक्रतुसुधाभुज आदितेयाः" इति हैमः। स्वधावन्तं करोति स्वधयति। "तत्करोति" इति णिच् "विन्मतोर्लुक्"। सारार्थसंदर्शिन्यां तु सुधयतीत्येव पाठः। लोके हि मन्त्रवादिनो वदनसलिलैस्तापं शमयन्तीति प्रसिद्धम्। उपसृत्य मृगीतनय इति पाठे मनोरथान्तरमेतत्। मृगीतनय उपसृत्य किं वा मां स्वधयतीति ॥ २६ ॥ एवमिति। एवमुक्तप्रकारेणाघटमानो दुःसम्पाद्यो यो मनोरथस्तेनाकुलं हृदयं यस्य स योगयुक्तस्तापसो भरतो मृगदारकाभासेन मृगदारकवदाभासमानेन वस्तुतस्तु स्वारब्धकर्मणा योगारम्भणतो योगचर्यातः भगवदाराधनलक्षणात्कर्मणश्च भ्रंशितः इतरथा यदि योगारम्भभ्रंशकं प्रारब्धकर्म न स्यात्तदा इत्यर्थः। निःश्रेयसस्य मोक्षस्य प्रतिपक्षतया बाधकतया प्राक् पूर्वं परित्यक्ता दुस्त्यजा हृदयाभिजाता औरसाः पुत्रा येन तस्य जात्यन्तरे विजातीय एणकुणके साक्षात्पुत्रवदासङ्ग आसक्तिः कथं स्यात्। एवमुक्तप्रकारेणान्तरायेण मृगासक्तिरूपेण विहतं योगारम्भणं यस्य तस्य तथा मृगार्भकस्य पोषणाद्यनुषङ्गेण। तत्राभिनिवेशेनात्मान-मविगणयतः आत्मचिन्तामकुर्वतः तस्य राजर्षेर्भरतस्य तावत्तदा दुरतिक्रम उपायसहस्रैरनुल्लङ्घनीयः यतः करालरभसः अतितीव्रवेगः

कालो मृत्युसमय आपद्यत प्राप्तः। यथा आखुबिलं प्राप्तोऽहिस्तस्य दुरतिक्रमो भवति तथा प्राणिनां कालोऽपि॥ २७॥ तदानीमिति। तदानीं मरणसमयेऽपि यथा पार्श्ववर्त्तिनमनुशोचन्तमात्मजमभिवीक्षमाण तत्राभिनिवेशितमना भवति तथा मृग एवाभिनिवेशितमना अतस्तेन मृगेण सहेमं लोकं देहं विसृज्य कलेवरं मृतमनु न मृता न विनष्टा पूर्वजन्मानुस्मृतिर्यस्य स तथा इतरवद्भगवद्बहिर्मुखवन्मृगशरीरमवाप॥ २८॥ तत्रेति। तत्रापि मृगजन्मनि आत्मनः स्वस्य मृगत्वकारणं मृगासक्तिरूपं भगवदाराधनस्य या समीहा अनुष्ठानं तदनुभावेन वा एवानुस्मृत्य भृशमनुतप्यमान आह स्म। स्वचित्ते इति शेषः॥ २९॥ अहो इति। अहो आश्चर्यं मम कष्टं जातम्। यत आत्मवतां धीराणां मुनीनामनुपथात् मार्गादहं भ्रष्टः यद्यस्मात् विमुक्तास्त्यक्ताः समस्ताः पुत्रादिसङ्गा येन तस्य विविक्तं जनसंघर्षरहितं पुण्यं पवित्रमरण्यं शरणं स्थानं यस्य तस्य आत्मवतो धीरस्याप्यबुधस्य मम मनः सर्वेषामात्मनामात्मन्यन्तर्यामिणि भगवति वासुदेवे तस्य भगवतो मननसंकीर्त्तनाराधनानुस्मरणेषु अभियोगः अभिनिवेशः तेनाशून्याः सम्बद्धाः सकला यामा यस्मिंस्तेन कालेन महता प्रयासेन समावेशितं स्थापितं समाहितं सम्यक् निश्चलतया स्थितं च यन्मम मनस्तत्तु पुनराद्दूरात्कात्स्र्न्येन सर्वांशेन मृगसुतमनु मृगसुताभिनिवेशात् परिसुस्राव अवगलितम्॥ ३०॥ इतीति। इत्येवं निगूढ आच्छन्नो निर्वेदो यस्य सः मातरं विसृज्य त्यक्त्वा यत्र हरिणो जातस्तस्मात् कालञ्जराख्यात् पर्वतात् भगवत्क्षेत्रम् उपशमशीलस्य मुनिगणस्य दयितं शालवृक्षोपलक्षितं ग्रामं शालग्रामाख्यं क्षेत्रं पुलस्त्यपुलहाश्रमं प्रत्याजगाम आगतः॥ ३१॥ तस्मिन्निति। तस्मिन्नपि क्षेत्रे कालमेव प्रतीक्षमाणः मृगसङ्गाद् भ्रंशितोऽतोऽन्यस्यापि सङ्गाद्भृशमत्यन्तमुद्विग्नः भीतः आत्मैव सहचरो यस्य सः एकाकी हिंसापरिहाराय शुष्कैरेव पर्णादिभिर्वर्त्तमानः शरीरनिर्वाहं कुर्वन् मृगत्वनिमित्तस्य मृगासक्तिजन्यदोषस्यावसानं समाप्तिमेव गणयन् तस्मिन् काले प्राप्ते तीर्थोदकेव क्लिन्नमार्द्रमर्धोदकस्थं मृगशरीरमुत्ससर्ज तत्याज॥ ३२॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायामष्टमोऽध्यायः॥ ८॥

---:❁:---

## अथ नवमोऽध्यायः

श्रीशुक उवाच

**अथ कस्यचिद्द्विजवरस्याङ्गिरःप्रवरस्य शमदमतपःस्वाध्यायाध्ययनत्यागसन्तोषतितिक्षाप्रश्रयविद्याऽनसूयात्मज्ञानानन्दयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणा नव सोदर्या अङ्गजा बभूवुर्मिथुनं च यवीयस्यां भार्यायाम्॥ १॥**

नवमे जडवद्विप्रो भरतोऽभूदमुष्य तु। कालीबलावप्यभीतिर्गीयान्यत्र तु दृग्हशः (२२)॥
उवाचेत्येकं (१) च सार्द्धा द्विपञ्चाशदनुष्टुभः (५२॥)॥ ९॥

अथेति। अथ शमदमतपःस्वाध्यायादियुक्तस्य त्यागोऽत्रातिथ्यादिभ्योऽन्नदानादि विद्या कर्मविद्या आत्मज्ञानं देहादिव्यतिरिक्तभोक्त्रात्मज्ञानम् आनन्दो धर्मसम्पत्तिजः अङ्गिरःप्रवरस्य आङ्गिरसगोत्रजानां मध्ये श्रेष्ठस्य कस्यचिद्द्विजवरस्य ब्राह्मणश्रेष्ठस्यात्मना सदृशाः श्रुतादयो गुणा येषां तथाभूताः सोदर्याः समानोदरा नव अङ्गजाः पुत्रा बभूवुः। यवीयस्यां कनिष्ठायां च भार्यायां तस्य मिथुनं स्त्रीपुरुषयुग्मं च बभूव॥ १॥ य इति। तत्र मिथुने यस्तु पुमांस्तुत्सृष्टं मृगशरीरं येन तं चरमशरीरेण विप्रत्वं गतं परमभागवतं राजर्षिप्रवरं भरतमाहुः॥ २॥ तत्रेति। तत्रापि कर्मबन्धविध्वंसनं श्रवणं स्मरणं गुणानां विवरणं कथनं च यस्य तस्य भगवतश्चरणारविन्दयुगलं मनसा विदधत् विशेषेण धारयन् भगवदनुग्रहेणानुस्मृता स्वपूर्वजन्मनामावलिर्येन सः स्वजनसङ्गादात्मनः प्रतिघातं पुनर्योन्यन्तरसंबन्धलक्षणमाशङ्कमानोऽत एव ततो भृशमुद्विजमानो भीतश्च तत्परिहाराय लोकस्य लोकम् उन्मत्तादिरूपेणात्मानं दर्शयामास॥ ३॥

तस्येति। तस्योन्मत्तादिवद्वर्त्तमानस्य अपि आत्मजस्य पुत्रस्नेहेनानुबद्धं मनो यस्य स विप्रः पितुः सकाशात् अनुशिक्षितेनैव पुत्रेण भाव्यमित्यभिप्रायेण जडस्य गार्हस्थ्यानधिकारं मत्वाप्यासमावर्त्तनान् तान् संस्कारान् यथोपदेशं विदधानस्तमुपनीयोपनीतस्य च पुनः शौचाचमनादींस्तस्यानभिप्रेतानपि कर्मनियमान् सम्यगशिक्षयत। शिक्षितवानेव न तूपेक्षितवान्॥ ४॥ स चेति। स च भरतः आत्मनिष्ठोऽपि पितुर्निर्बन्धात् पितृसन्निधौ स्थित एवासध्रीचीनमसमीचीनमिव तत्पितृशिक्षितं सर्वं करोति स्म॥ ५॥ छन्दांसीति। उपाकरणवेदव्रताद्यनन्तरं श्रावणादिमासेषु छन्दांसि वेदानध्यापयिष्यन्नादौ तावद्व्याहृतिभिः सह प्रणवशिरःसहितां त्रिपदीं सावित्रीं चैत्रादिग्रैष्मवासन्तिकांश्चतुरो मासानधीयानमप्यसमवेतरूपं यथा भवत्येव ग्राहयामास। तावतापि कालेन स्वरानुपूर्व्यादियुक्तं व्याहृत्यादिकमपि तस्य नागतमित्यर्थः॥ ६॥ एवमिति। पितुः सकाशात् सम्यगनुशिष्टेनैवावश्यं पुत्रेण भाव्यमित्यसन् अयोग्य आग्रहो यस्य सः एवमुक्तप्रकारेण आत्मन्यात्मत्वेनाभिमते स्वतनुजेऽनुरागेणावेशितं चित्तं येन सः अनभियुक्तानि तेनानादृतान्यपि शौचादीन्यौपकुर्वाणकस्य सावधिकब्रह्मचर्यवतः कर्माणि तं पुत्रं प्रत्यनुशास्यापि स्वयं तावदनधिगतमनोरथः नाधिगतः न प्राप्तः पुत्रपाण्डित्यलक्षणो मनोरथो येन सः स्वयं गृहे प्रमत्तः गृहकार्यासक्त एवाप्रमत्तेनानुल्लङ्घितमर्यादेन कालेनोपसंहृतो मृतः॥ ७॥ अथेति। अथ यवीयसी कनिष्ठा द्विजसती ब्राह्मणस्य तस्य भार्या स्वगर्भजातं मिथुनं सपत्न्यै उपन्यस्य समर्प्य। सपत्न्यामिति सप्तम्यन्तपाठेऽपि स एवार्थः। स्वयमनुसंस्थयाऽनुमरणेन पतिलोकमगात् गता॥ ८॥ पितरीति। एवं पितर्युपरते मृते सति त्रय्यां कर्मकाण्डविषयायां विद्यायामेव पर्यवसिता निश्चयं गता मतिर्येषां ते तथाभूता न परविद्यायामात्मविद्यायां पर्यवसितमतयः अतः न तस्य प्रभावमात्मारामत्वं विदन्ति ते तथाभूताः तद्भ्रातरो भरतं जडा लब्धा मतिर्यस्य स तथाभूतोऽयमित्येवं मत्वा भ्रातुरस्यानुशासने शिक्षणे यः पितुर्निर्बन्धो हठस्तस्मात् न्यवृत्सन् निवृत्ता जाताः। न्यवृत्सत इत्यपि पाठः। उभयथाऽप्यार्षः प्रयोगः॥ ९॥

स चेति। स च यदा प्राकृतैः नीचैः द्विपदपशुभिर्विवेकशून्यैर्मनुष्यैरुन्मत्तः जडः बधिर इत्येवं मत्वाऽभिभाष्यमाणो भवति तदा तदनुरूपाणि उन्मत्तादियोग्यान्येव वचनानि प्रभाषते। तैरेव स यदा कर्माणि कार्यमाणो भवति तदा परेच्छया तान्यपि करोति च विष्टिर्बलात्कर्मकारणं ततः वेतनं मूल्यसङ्केतः ततो वा याच्ञया याच्ञाद्प्रयत्नं विनैव आसादितं प्रापितमन्नं तदपि कदाचिदल्पं कदाचिद्बहु कदाचित् मिष्टं कदाचित्कदन्नं कुत्सितं परं केवलं देहनिर्वाहार्थमभ्यवहरति भुङ्क्ते। नेन्द्रियप्रीतिनिमित्तम्॥ १०॥ नित्येति। नित्यं सदा निवृत्तं निमित्तं यस्मात् स उत्पादकशून्यः अत एव स्वसिद्धः स्वयंप्रकाशः विशुद्धः केवलो योऽनुभवः स एव आनन्दरूपः स्वात्मा तस्य लाभ एवंभूतोऽहमिति ज्ञानं तस्याधिगमः प्राप्तिरस्ति यस्य सः अत एव द्वन्द्वानि सम्मानावमानशीतोष्णादीनि तन्निमित्तयोः सुखदुःखयोरप्यसंभावितोऽनारोपितो देहाभिमानो येन सः यस्मादेव-मिन्द्रियाद्यध्यासरहितस्तस्माच्चेन्द्रियप्रीतिनिमित्तमभ्यवहरति॥ ११॥ शीतेति। अत एव शीतोष्णादिषु वृष इवानावृताङ्गः वस्त्रकम्बलादिनाऽनावृतदेहः पीनः पुष्टः संहननाङ्ग इति संहन्यन्ते निबिडीभवन्ति स्वाङ्गानि यस्य स दृढावयवः स्थण्डिलसंवेशनं भूमिशयनम् अनुन्मर्दनं तैलादिसंस्काराभावः अकञ्जनं स्नानाभावस्तैर्यद्रजस्तेनानभिव्यक्तमप्रकटं ब्रह्मवर्चसं ब्राह्मं तेजो यस्य सः। तत्र दृष्टान्तः। रजसा वृतो महामणिर्यथाऽनभिव्यक्ततेजा भवति तथा कुत्सितेन मलिनेन पटेनावृता कटिर्यस्य उरुमषिणाऽतिमलिनेनोपवीतेन च द्विजातिरिति ब्रह्मबन्धुरिति च संज्ञया निन्दितनामग्रहणेन न तत्त्वतस्तं जानन्ति। ये तेऽतज्ज्ञास्तैर्जनैरवमतः सन् भूमिं चचार॥ १२॥ यदेति। यदा तु स्वदेहनिर्वाहार्थं कर्मवेतनतः कर्ममूल्येन परतः परेभ्य आहारमीहमानोऽपेक्षमाणो भवति तदा स्वभ्रातृभिरपि यद्यन्ये आहारमात्रदानेन कर्म कारयन्ति तर्हि वयमपि तथा कारयामः। अप्रतिष्ठा च तावती न भविष्यतीति विचार्य आहारप्रलोभनेन केदारकर्मणि शालिक्षेत्रे कर्दमविलोडनप्रक्षेपादौ निरूपितो नियुक्तः संस्तदपि करोति। किन्त्वत्र कर्दमप्रक्षेपे क्षेत्रं समं स्यादितः कर्दमोद्धरणे तद्विषमं स्यादित्यादिकं न वेद। आत्मनिष्ठत्वेन बहिर्वृत्त्यभावात् भ्रातृभिर्दत्तानि कणादीन्यप्यमृतवदभ्यवहरति भुङ्क्ते। कणाः चूर्णतण्डुलाः पिण्याकं तैलयन्त्रदुद्धृतं तिलकिट्टं फलीकरणं तुषः कुल्माषाः कीटदष्टा माषाः स्थालीपुरीषं स्थालीलग्नं दग्धान्नम्॥ १३॥ तस्य रागादिराहित्यमुक्त्वा मृत्यावप्यसम्भ्रममाह—अथेति। कदाचित्कश्चिद्वृषलपतिः शूद्रसामन्तश्चोरराजः अपत्यकामो भद्रकाल्यै पुरुषपशुमालभत आलब्धुं प्रवृत्तः॥ १४॥

तस्येति। तमिस्रायामिति तमसा वृतायां व्याप्तायां निशि तत्रापि निशीथसमयेऽर्द्धरात्रावसरे तस्य हि वृषलपतेः दैवान्मुक्तस्य हस्तान्निर्गतस्य मरणभयात्पलायितस्य पुरुषपशोः पदवीं मार्गं तस्यानुचराः परिधावन्तोऽप्यनधिगतपशवः आकस्मिको दैवनिर्मितो विधिः प्रकारस्तेन वीरासनेन ऊर्ध्वावस्थानेन मृगवराहादिभ्यः केदारान संरक्षमाणम्। शानजार्षः चानश् वा। अङ्गिरःप्रवरसुतं भरतमपश्यन्॥ १५॥ अथेति। अथ ते वृषलपत्यनुचरा एनमनवद्यलक्षणमवमृश्य स्थूलत्वादिगुणविशिष्टं ज्ञात्वा तेन च स्वभर्तृकर्मनिष्पत्तिं मन्यमाना अतः कार्यसिद्ध्या मुदा हर्षेण विकसितवदनाः सन्तस्तं रशनया रज्ज्वा बद्ध्वा चण्डिकाया भद्रकाल्या गृहमुपनिन्युरानीतवन्तः॥ १६॥ अथेति। अथ पणयश्चौराणां पुरोहिताः स्वविधिना स्वकल्पितप्रकारेण तमभिषिच्य

स्नानं कारयित्वाऽहतेन नूतनेन वाससाऽऽच्छाद्य भूषणालेपस्रक्तिलकादिभिरुपस्कृतमलङ्कृतं भुक्तवन्तं पुरुषपशुं धूपाद्युपेतया वैशससंस्थया हिंसाविधानेन महता गीतादिघोषेण च सह भद्रकाल्याः पुरत उपवेशयामासुः। लाजाः भ्रष्टधानाः किसलयाः नवपल्लवा अङ्कुराः यवदूर्वाद्यङ्कुरा उपहारो नैवेद्यम् ॥ १७ ॥ अथेति। अथ वृषलराजस्य पणिः पुरोहितत्वेन कल्पितश्चोरः पुरुषपशोर्भरतस्यासृगासवेन मादकरुधिरेण देवीं भद्रकालीं यक्ष्यमाणस्तर्पयंस्तदभिमन्त्रितं भद्रकालीमन्त्राभिमन्त्रितं स्वरूपेणात्यतिकरालं भयङ्करमसिमुपाददे गृहीतवान् ॥ १८ ॥ इतीति। रजस्तमोभ्यां व्याप्ता प्रकृतिर्येषां तेषां धनमद एव रजो यथार्थदर्शनप्रतिबन्धकं तेनोत्सिक्तं त्यक्तमर्यादं मनो येषां तेषां हिंसायामेव विहारः चित्तोल्लासो येषां ते तथा तेषाम्। अत एव भगवतः कला ऐश्वर्यादियुक्तं यद्वीराणां तेजस्विनां ब्राह्मणानां कुलं तत्कदर्थीकृत्य तुच्छीकृत्योत्पथेन मर्यादामार्गबहिर्भूतेन स्वैरं स्वेच्छया विहरतां प्रवर्त्तमानानां तेषां वृषलानाम् इत्येवं सूनायामापत्कालेऽनुज्ञातायामपि हिंसायामननुज्ञातमतिनिषिद्धमित्यर्थः। ब्रह्मर्षिसुतस्य तत्रापि साक्षाद्ब्रह्मभूतस्य ब्रह्मनिष्ठस्यात एव निर्वैरस्यात एव सर्वभूतानां सुहृदो हितचिन्तकस्यालम्भनं हिंसनमतिदारुणं दुःसहं कर्म तदुपलभ्य दृष्ट्वा ब्रह्मभूतस्यातिदुर्विषहेण तेजसा सहसैव दन्दह्यमानेन गर्हितं दह्यमानेन वपुषा हेतुना निर्गता सा देवी भद्रकाल्येवोच्चचाट प्रतिमां त्यक्त्वा बहिर्निर्गता ॥ १९ ॥

भृशमिति। भृशमत्यन्तम् अमर्षोऽपराधासहनं तद्धेतुको रोषश्च वपुषो दाहजन्यः क्रोधो वा यस्तयोरावेशस्तस्य रभसेन वेगेन विलसित उत्तम्भितो भृकुटिलक्षणो विटपः शाखा च कुटिला भयङ्करा दंष्ट्राश्च अरुणानीक्षणानि च तेषामाटोपः संभ्रमस्तेनातिभयानकं वदनं यस्याः सा स्वरूपभयानकत्वेनोत्प्रेक्षते। इदं विश्वं हन्तुकामा हन्तुमुद्यतेवेत्यतिसंरम्भेण कोपावेशेन महान्तमट्टहासं संनादं हासं विमुञ्चती ततस्तदनन्तरमेवोत्पत्य स्वेन तेनैव तद्धननार्थमभिमन्त्रितेनासिना विवृक्णानि छिन्नानि शीर्षाणि येषां तेषां पापीयसां दुष्टानां गलात्स्रवन्तमासवं मादकमत्युष्णमसृक् स्वगणेन परिवारेण सह निपीय तस्यातिपानेन यो मदस्तेन विह्वला विवशा स्वपार्षदैः सहोच्चैस्तरां जगौ ननर्त्त च। शिरांस्येव कन्दुकानि तेषां लीलया विजहार चिक्रीड च ॥ २० ॥ एवमिति। एवं सर्वत्र महत्स्वभिचारो मारणोद्योगरूपो योऽतिक्रमोऽपराधः स कार्त्स्न्येन सर्वांशेनात्मने एव फलति ॥ २१ ॥ न वा इति। हे विष्णुदत्त! विमुक्तो देहेन्द्रियाद्यात्मभावलक्षणः सुदृढो हृदयग्रन्थिर्यैस्तेषां सर्वेषु सत्त्वेषु प्राणिषु सुहृत् मैत्री युक्त उपकारचिन्तक आत्मा अन्तःकरणं येषां तेषां सर्वेषां सत्त्वानाम् आत्मनश्च ये तेषामिति वा अत एव निर्वैराणामिति अनिमिषः निमेषरहितः काल एवारिचक्रं वरं श्रेष्ठमायुधं यस्य तेन साक्षाद्भगवता तैस्तैर्भावैरन्तर्यामितया प्रवर्त्यमानैर्भद्रकाल्यादिरूपैः भक्तवात्सल्यदुष्टनिग्रहाद्यैर्वा परिरक्ष्यमाणानां न कुतश्चिद्भयं यस्मात्तदकुतश्चिद्भयं सर्वतो भयनिवर्त्तकं यत्तस्य भगवतः पादमूलं तदुपसृतानां भागवतपरमहंसानां स्वशिरश्छेदन आपतितेऽपि यदसम्भ्रमोऽव्याकुलत्वादि तदेतन्महदद्भुतमत्यन्तासंभावितं न वा नैव भवति ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां नवमोऽध्यायः ॥ ९ ॥

—:❀:—

# अथ दशमोऽध्यायः

श्रीशुक उवाच

अथ सिन्धुसौवीरपते रहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिबिकावाहपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्ध एष पीवा युवा संहननाङ्गो गोखरवद्धुरं वोढुमलमिति पूर्वविष्टिगृहीतैः सह गृहीतः प्रसभमतदर्ह उवाह शिबिकां स ह महानुभावः ॥ १ ॥

दशमे विप्रभरतो रहूगणकुवाच्यपि । न क्रुद्धस्तेनानुनीतो गद्यादीन्यत्र षड्दश: ( २६ )

श्रीण्युवाचेति पादोनाः सप्तवेदा ( ४६ ॥ ) अनुष्टुभः ॥ १० ॥

अथेति । अथ कदाचित् सिन्धुसौवीरदेशद्वयपतेः राज्ञो रहूगणनाम्नो ब्रह्मविद्यार्थं कपिलाश्रमं व्रजतः इक्षुमत्या नद्यास्तीरे तत्कुलपतिना तेषां शिबिकावाहानां कुलस्य नाथेन शिबिकावाहपुरुषान्वेषणसमये दैवेन केनचित्प्रारब्धेनोपसादितः प्रापितः स द्विजवर उपलब्धो दृष्टः । तदा च एष पीवा पुष्टः युवा संहननाङ्गः कठिनावयवशरीरोऽतो गौरिव खर इव च धुरं भारं वोढुमलं समर्थ इति मत्वा ये पूर्वं विष्टया बलाद्गृहीतास्तैः सहायमपि गृहीतोऽतदर्हः शिबिकावाहनायोग्योऽपि स महानुभावः प्रसभं बलात्तत्र नियोजितः सन् शिबिकामुवाह ॥ १ ॥ यदेति । हिंसापरिहारार्थमिषुमात्रप्रदेशावलोकमनु पश्चाद्गतिर्यस्य तस्य द्विजवरस्य गत्या सह यदा ह्यन्येषां पुरुषाणां गतिर्न समाहिता एकरूपा न जाता । यद्वा इषुमात्रावलोकस्यानु पश्चाद्या गतिस्ततो हेतोः पुरुषगतिर्न समाहितेति । तदा विषमगतामान्दोलितां स्वशिबिकामुपधार्योपलभ्य रहूगणो हे वोढारो ! यानं साधु यथा भवति तथातिक्रमत वहत । क्रमेर्दीर्घाभाव आर्षः किमिति विषममुह्यत इत्यधिवहतः पुरुषानाह स्म ॥ २ ॥

अथेति । अथ ते वोढारः पुरुषाः ईश्वरस्य दण्डसमर्थस्य राज्ञः सोपालम्भं साक्षेपं वच उपाकर्ण्य श्रुत्वा उपायतुरीयात् सामदामभेददण्डेषूपायेषु चतुर्थाद्दण्डलक्षणात् शङ्कितमनसः भीतचित्तास्तं स्वामिनं विज्ञापयांबभूवुः ॥ ३ ॥ नेति । हे नरदेव ! न वयं प्रमत्ताः अनवहितचित्ताः किन्तु भवन्नियमानुपथा भवदाज्ञानुसारिणः सावधानचित्ता एवातः साध्वेव यानं वहामः । अयमधुनैव विनियुक्तोऽतः श्रान्तिरहितोऽपि न द्रुतं शीघ्रं व्रजतीति यानं विषमं भवतीत्यनेन सह वयं वोढुं न पारयामः समर्था न भवामः ॥ ४ ॥ सांसर्गिक इति । उपासिताः सेविता वृद्धा ज्ञानिनो येन तथाभूतोऽपि निसर्गेण क्षत्रियस्वभावेन बलात्स्ववशीकृतः अत ईषदुत्थितो मन्युर्यस्य सः रजसाऽऽवृता मतिर्यस्य स राजा रहूगणः एवं कृपणानां वचो निशम्य नूनं सांसर्गिकः संसर्गनिमित्त एकस्यापि दोषः सर्वेषामेव संसर्गिणां भवितुमर्हतीति निश्चित्य न विस्पष्टं ब्रह्म तेजो यत्र तं जातवेदसं भस्मच्छन्नमग्निमिव स्थितं तं विप्रमुपालम्भवचनमाह स्म । यथा भस्मना च्छन्नमग्निमज्ञः पराभवितुं प्रवर्तते तथा ॥ ५ ॥ अहो इति । हे भ्रातः ! हे सखे ! तव अतिकष्टं जातम् । व्यक्तं निश्चितं त्वमुरु परिश्रान्तोऽसि इत्यादीनि विपरीतार्थानि षड्वाक्यानि दीर्घमध्वानं सुचिरं कालं त्वमेक एव यानमूहिवान् प्रापितवान् । कस्वन्तः वस्वेकाजितीट् । अपर एते संघट्टिनः सहचरा नो एव वहन्ति । भवान्नातिपीवा पुष्टो नास्ति न संहननाङ्गो जरसा वार्द्धकेन चोपद्रुतः इत्येवं बहु यथा भवति तथा विप्रलब्धो विपरीतलक्षणाव्यङ्ग्यवक्रोक्त्या तिरस्कृत उपहसितो वा तेन त्वं श्रान्तो नासि । अधुनैवात्र नियोजितः अतिपीवा दृढाङ्गो युवा चासि । एते तव सङ्गिनस्त्वद्विरुद्धगत्या वोढुं न शक्नुवन्ति । मयि राजन्यपि किं दुष्टत्वं प्रकाशयसीति व्यञ्जितोऽर्थः । अविद्यया विहितानि द्रव्याणि महाभूतानि गुणाः सत्त्वादय इन्द्रियाणि च कर्माणि पुण्यपापानि आशयोऽन्तःकरणं ये यस्मिन् तस्मिन् स्वचरकलेवरेऽवस्तुनि परमार्थवस्त्वात्मव्यतिरिक्ते संस्थान-विशेषे हस्तपादाद्याकारविशेषेण परिणते न अध्यारोपितोऽहंममेतिमिथ्याप्रत्ययोऽभिमानो येन स ब्रह्मभूतो भरतः तूष्णीमेव पूर्ववच्छिबिकामुवाह ॥ ६ ॥ अथेति । अथ पुनरपि स्वशिबिकायां विषमगतायां प्रकुपितो रहूगण उवाच ॥ ७ ॥

किमिति । अरे दुष्ट ! त्वं किमिदं करोषि यद्यानं विषमं नयसि । किं त्वं जीवन्नेव मृतोऽसि । मां कदर्थीकृत्यानादृत्य भर्तुः स्वामिनो मम शासनमाज्ञामतिचरसि अतिक्रामसि । प्रमत्तस्य च ते चिकित्सां दण्डं करोमि । यथा स्वां प्रकृतिं सावधानतां

भजिष्यसे। इडार्षः। यथा दण्डपाणिर्यमो जनसमूहस्य दण्डं करोति तेन च जनः शुद्धो भवति तथा इत्युवाचेत्यनुषङ्गः॥ ८॥ एवमिति। नरदेवोऽहमित्यभिमानो यस्य रजसा तमसा चानुविद्धेन संवर्द्धितेन मदेन तिरस्कृता अशेषाः बहवो भगवतः प्रिया निकेता भक्ता येन तम्। यद्वा तिरस्कृतम् अशेषाणां भगवत्प्रियाणां निकेतं येन तं पण्डितमानिनम् आत्मानं पण्डितं मन्यमानम् एवं बह्वबद्धमयुक्तं भाषमाणमपि राजानं ब्रह्मभूतः सर्वभूतानां सुहृत् आत्मा च योगेश्वराणां चर्यायां पराभिप्रायज्ञाने जडादिवदाचरणेऽतिव्युत्पन्ना निपुणा मतिर्यस्य विगतस्मयः ज्ञानित्वगर्वरहितः स भगवान् ब्राह्मणः स्मयमान इवेदं वक्ष्यमाणमाह स्म॥ ९॥ त्वयेति। हे वीर! त्वया विपरीतलक्षणया यदुदितमुक्तं तव श्रमादि नास्तीति तद्व्यक्तं सत्यमेवातो विप्रलब्धमुपालम्भो न भवति। यतः भर्तुर्वोढुर्देहस्य यो भारः स यदि मे ममात्मनः स्यात् तदा विप्रलम्भः स्यात्। अहं देहाद्भिन्नो वोढेव न भवामीति भावः। गन्तुर्गमनकर्तुर्देहस्य यदधिगम्यं प्राप्यं स्थानमध्वा मार्गश्च यदि मे स्यात्तदा तन्निमित्तः श्रमोऽपि मे स्यात्। अद्धेति पाठे साक्षात् परमार्थतः तच्च मे यदि स्यादित्यादि योज्यम्। अतस्तदभावाच्छ्रमो नास्तीति सत्यमेवोक्तं नोपालम्भ इति भावः। यद्वा। यदि भारो नाम कश्चित्स्यात्स च भर्तुर्देहस्य यदि स्यात् स च मे यदि प्रसक्तः स्यात् तर्हीदानीं भाराभावाद्विप्रलम्भः स्यान्न त्वेतदस्ति। भारस्य वोढुश्चानिरूप्यत्वात् मम च तत्संबन्धाभावात् यच्चोक्तं पीवेत्यादि तदपि भवतु मूर्खाणां तथा व्यवहारः विदामात्मानात्मविवेकवतां तु राशौ देहादिसङ्घात एव पीवेत्यादि प्रवादो नात्मनीति॥ १०॥ स्थौल्यमिति। स्थौल्यं पीनत्वं कार्श्यं दुर्बलत्वं व्याधयो रोगाः जरा वृद्धत्वम् एते देहधर्मा आधयो मानस्यः पीडाः भयमिष्टविघातकाद्भीतिः कलिः कलहः इच्छा विषयेषु रागः निद्रा प्रसिद्धा अरतिः ग्लानिः मन्युः क्रोधः अहं देहाद्यध्यासः मद. गर्वः अहङ्कारेण मदः गर्वः अहङ्कारेण मद इति वा। शुचः इष्टवियोगजास्तापाः एतेऽन्तःकरणधर्माः क्षुत्तृषौ प्राणधर्मौ अतः सर्वेऽप्येते देहे देहादिसङ्घात एव भवन्ति न जातस्य जन्मरहितस्य मे मम तु न सन्ति। यद्वा। देहेन सह तदभिमानेन जातस्य भवन्ति। मम तु निरभिमानस्य न सन्ति। यद्वा। देहे जाते यो जातस्तस्यैव तानि मम तु तत्र न जातस्य न सन्ति छन्दोभङ्गः सोढव्यः॥ ११॥

जीवदिति। हे राजन्! जीवन्मृत इति यदुक्तं तत्र यदि त्वयाहं देहाभिमानी निश्चितः तदा जीवन्मृतत्वं न केवलं ममैव किन्तु सर्वस्यैव विकृतस्य परिणामिनो देहादेर्नियमेन दृष्टं यत् यस्मात्सर्वमपि विकृतं प्रतिक्षणमाद्यन्तवत् उत्पत्तिविनाशवत् सर्वेषामेव भावानां प्रतिक्षणं परिणामित्वात् भर्तृशासनमतिचरसीत्युक्तं तत्राह। हे ईड्य! स्वं च भृत्यत्वं स्वाम्यं च स्वामित्वं तयोर्भावः सत्ता यत्र पक्षे ध्रुवो निश्चल एव स्यात् यदि व्यवस्थितः स्यादित्यर्थः। तर्ह्यसौ विधिकृत्ययोगः विधिकृत्ये शिबिकावाहनादिकर्मणि योगः यद्वा स्वामिनो विधिर्नियोगः भृत्यस्य कृत्यं कर्म तयोर्योगोऽपि ध्रुव उच्यते उचितः स्यात्। "उच समवाये" इति धातुः। तथा च स्वस्वामिभावस्यानित्यत्वात्तव राज्यभ्रंशे मम च तत्प्राप्तौ वैपरीत्यस्य संभवाद्वृथैव तवाहं राजेत्ययमभिमान इति भावः॥ १२॥ ननु यावदहं राजा तावत्स्वाम्येवेति चेत्तत्राह—विशेषेति। विशेषो राजभृत्यादिभेदस्तद्बुद्धेर्विवरमवकाशं यद्यदा व्यवहारतोऽन्यन्मनागीपदपि न पश्याम तत्र। तदा क ईश्वरो राजा किञ्चेशितव्यं भृत्यादि भवेत्। यद्यपि परमार्थतः न राजभृत्यादि तथापि हे राजन्! तव राजत्वाभिमानश्चेत्तर्हि ब्रूहि किं ते कार्यं करवामेति॥ १३॥ उन्मत्तेति। हे वीर! उनमत्तादिवद्वर्त्तमानस्य वस्तुतस्तु स्वसंस्थां स्वरूपभूतब्रह्मभावं गतस्य मे मम भवता चिकित्सितेन दण्डाद्युपायेन तथा शिक्षितेन वा कियानर्थः सेत्स्यति न कोऽपीत्यर्थः। मुक्तस्यार्थानर्थयोरसम्भवात्। यद्यहं तव दृष्ट्या न मुक्तः किन्तु स्तब्धः प्रमत्त एव तदापि मम तत्तु शिक्षादिकं पिष्टपेषणं व्यर्थमेव। न हि पिष्टं वस्तु पेषणेन अपिष्टं भवत्यपि तु अतिपिष्टम्। एवं प्रमत्तजडस्वभावः ताडनादिना पटूकर्तुं न शक्यते अपि तु अतिप्रमत्तो भवति॥ १४॥ एतावदिति। उपशमशीलः शान्तचित्तः उपरतं निवृत्तमनात्म्ये देहात्मभावे निमित्तमविद्यालक्षणं यस्य सः उपभोगेन आरब्धं कर्म व्यपनयन् क्षपयन् स मुनिवरः राजोक्तानुवादरूपया परिभाषया भाषणेनैतावत् प्रत्युदीर्य राजानं प्रत्युत्तरं दत्त्वा राजयानमपि तथा पूर्ववदेवोवाह॥ १५॥ स चेति। हे पाण्डवेय! ततः सम्यगिन्द्रियनिग्रहादिपूर्विका या श्रद्धा तया तत्त्वजिज्ञासायां तत्त्वविचारेऽधिकृतः प्राप्तोऽधिकारो येन सः यथा दर्शपूर्णमासाधिकृतस्यैव गोदोहनेन पशुकामस्यापः प्रणयेदिति गुणफलसंबन्धेऽप्यधिकारः एवं सात्त्विकश्रद्धायामधिकृतस्यैवास्यामधिकार इत्यर्थः। स सिन्धुसौवीराख्यदेशपतो रहूगणः बहुषु योगग्रन्थेषु श्रेष्ठत्वेन संमतम् अत एव हृदयरूपग्रन्थिविमोचनं तद्द्विजवच आश्रुत्य विगतोऽहं नृपाणां देवः पूज्य इति स्मयो गर्वो यस्य तादृशः सन् त्वरया शिबिकातोऽवरुह्य शिरसा तत्पादमूलमुपसृतः कृतदण्डवत्प्रणामस्तं क्षमापयन्नुवाच॥ १६॥ क इति। निगूढोऽलक्षितवर्णाश्रमाचारस्त्वं को वा विचरसि। द्विजानां दत्तात्रेयादीनां मध्ये त्वं कतमोऽवधूतः स्वरूपसंदेहेऽपि द्विजत्वे तु न संदेहः। यतः सूत्रमुपवीतं बिभर्षि अतो विशेषतो ब्रूहि त्वं कस्य पुत्रोऽसि कुत्रत्यः किंदेशवास्यसि इहास्मिन्स्थानेऽपि कस्माद्धेतोरागतोऽसि नोऽस्माकं क्षेमाय चेदिह प्राप्तस्तर्हि किं शुक्लः शुद्धसत्त्वमूर्त्तिः कपिलस्तु न भवसि। उतेति वितर्के॥ १७॥

नाहमिति। सुरराजस्येन्द्रस्य वज्रादहं न विशंके न बिभेमि तथा त्र्यक्षस्य रुद्रस्य शूलान्न बिभेमि यमस्य दण्डादपि न बिभेमि तथा अग्नेरर्कस्य सूर्यस्य सोमस्य चन्द्रस्यानिलस्य पवनस्य वित्तपस्य कुबेरस्य चास्त्रान्न बिभेमि। वज्रादिप्रहारान्न

बिभेमीत्यर्थः। किन्तु ब्राह्मणकुलावमानात् भृशमत्यन्तं शङ्के बिभेमि ॥ १८ ॥ तदिति। यस्मादेवं तत् तस्मात् निगूढं पिहितं विज्ञानरूपं वीर्यं प्रभावो येन अत एव तदाच्छादयितुमसङ्गः सर्वजनसङ्गरहितः वस्तुतोऽपारोऽचिन्त्यानन्तमहिमापि जडवद्विचरसि स त्वं क इति ब्रूहि। हे साधो! योगग्रथितानि युक्तिसहितानि वचांसि त्वद्वचनानि नोऽस्माभिर्मनसापि भेत्तुं भेदेन तदर्थविवेकेन धारयितुं न क्षमन्ते न शक्यन्ते। यद्वा त्वद्वचांसि कर्माणि भेत्तुं मनसा युक्ताः सूक्ष्मदृष्टयोऽपि न क्षमन्ते न शक्नुवन्ति। यद्वा वचांसि नोऽस्माकं मनसाऽपि भेत्तुं न क्षमं न शक्यम्। यद्वा नोऽस्मान् प्रति तत्र वचांसि योगिनोऽपि भेत्तुमुत्तरयितुं न क्षमन्तेऽतस्त्वमेवोत्तरयेति ॥ १९ ॥ अहमिति। अहं च योगेश्वरम् आत्मतत्त्वविदां मुनीनाम् अपि परमं गुरुं ज्ञानकलयाऽवतीर्णं ज्ञानस्य कलायै ज्ञापनायावतीर्णं वा साक्षाद्धरिं प्रति इह संसारे यदरणं शरणं तत् किमिति प्रष्टुं प्रवृत्तः ॥ २० ॥ स वा इति। अपिस्वित्किंस्वित्स कपिल एवाऽव्यक्तलिङ्गो लक्षितस्वरूपः सन् भवान् लोकनिरीक्षणार्थं विचरति। अन्धबुद्धिर्निर्विवेकः गृहे गृहोपलक्षिते लौकिके व्यापारेऽनुबन्धोऽभिनिवेशो यस्य स मादृक् जनः योगेश्वराणां युष्माकं गतिममुकोऽयमीदृक्प्रभाव इति तत्त्वं कथं विचक्षीत पश्येज्जानीयात् ॥ २१ ॥ अथ जडभरतवचांसि आक्षिपति—दृष्ट इति। आत्मनो मम युद्धादिकर्मतः श्रमो दृष्टो वै अतो भर्तुर्भारवोढुर्गन्तुर्भवतश्च श्रममनुमन्येऽनुमिमे। तथाहि भवान् भारवहनादिना श्रान्तः कर्तृत्वात् यः कर्त्ता सः श्राम्यति। यथाऽहं युद्धादिकर्त्तेति। नन्वेतद्व्यवहारमात्रमिति चेत्तत्राह। व्यवहारमार्गः प्रपञ्चोऽपि यथा यथावत् समूल इष्टः सप्रमाणक एव इष्टः असता घटादिना उदकानयनादेरभावात् प्रयोगश्चैवं प्रपञ्चः सत्यः सुखदुःखादिलक्षणार्थक्रियाकारित्वात्। यत्रार्थक्रियाकारित्वं तत्र यथार्थवस्तुपूर्वकत्वं यथा क्रीतघटादौ। यत्र यथार्थवस्तुपूर्वकत्वं नास्ति तत्रार्थक्रियाकारित्वमपि नास्ति। यथा मिथ्याघटादौ सत्योदकानयनाद्यभावः ॥ २२ ॥ स्थौल्यादय औपाधिका मे न सन्तीत्युक्तं तत्रौपाधिकत्वेऽपि सुखदुःखादिकरत्वं किन्न स्यादित्याह—स्थालीति। स्थाल्याम् अग्निना तापात्तन्मध्यवर्त्तिनः पयसः क्षीरस्याभितापस्तत्तापस्तण्डुलानां बहिर्भागस्य तापस्ततस्तद्गर्भगतस्य कणस्य रन्धिः पाको यथा भवति। न चात्र किञ्चिन्मिथ्या तथा अनुरोधात्। उपाधिधर्मानुवृत्तेः स्थाल्यादितापक्रमेण दृष्टान्तानुसाराद्वा देहेन्द्रियादिभिः संनिकर्षात्संबन्धात्तु तन्निमित्ता देहादिगताऽपि संसृतिः श्रमादिदुःखसन्ततिः पुरुषस्यात्मनस्तव वा मम वान्यस्य वा सर्वस्यापि स्यादेव। तथा हि निदाघादिना देहे तप्ते इन्द्रियाणां तापः ततः असूनां प्राणानां तत आशयस्य मनसः एवं प्रकृतेऽपि पूर्वं शिबिकादिभारेण देहस्य श्रमस्तत इन्द्रियाणि ततोऽसूनां ततो मनसः ततो जीवस्येति क्रमेण ॥ २३ ॥

स्वस्वाम्यभावोऽध्रुव इत्युक्तं तत्राह–शास्तेति। अध्रुवत्वेऽपि योऽच्युतस्य किङ्कर आज्ञानुवर्त्ती नृपतिः प्रजानामुत्पथगानामभितो शास्ता सन्मार्गस्थानामभितो गोप्ता च भवति स पिष्टं न पिनष्टि विफलं नैव करोति। यद्यतः प्रमत्तस्य रूढधत्वाद्यनपगमेऽपि श्रेयः प्रजापालनमेव राज्ञ इत्यादिभगवदाज्ञानुसारेण प्रजापालनादिस्वधर्माचरणमेवाच्युतस्याराधनमीहमानः कुर्वन्नृपतिरघौघं दोषसमूहं जहाति। ततो विमुच्यत इत्यर्थः ॥ २४ ॥ तन्म इति। यस्मात्त्वदुक्तं मम सर्वं विपरीतं प्रतिभाति। तत् तस्मात् नरदेवोऽहमित्यभिमानेन यो मदस्तेन तुच्छीकृतास्तिरस्कृताः सत्तमा भवादृशा येन तस्यात्यन्तापराधिनोऽपि मम भवान् मैत्रीदृशं स्नेहयुक्तां दृष्टिं कृषीष्ट करोतु। यथा सतां भवतामवध्यानमवज्ञानरूपमंहः पापमहं तरे तरिष्यामि। तद्भार्षः ॥ २५ ॥ नेति। विश्वस्य सुहृद्यासौ सखा च तस्य अत एव सर्वत्र साम्येन स्वदेहेऽपि वीताभिमतेः गताभिमानस्य तव ममापमानकृता विक्रिया नास्ति। तथापि स्वकृतान्महतां विमानान्मादृगपमानकर्त्ता शूलपाणी रुद्र इवातिसमर्थोऽप्यदूरात् क्षिप्रमेव विनङ्क्ष्यति ॥२६॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां दशमोऽध्यायः ॥ १० ॥

—:❀:—

# अथैकादशोऽध्यायः

ब्राह्मण उवाच

अकोविदः कोविदवादवादान्वदस्यथो नातिविदां वरिष्ठः । न सूरयो हि व्यवहारमेतं तत्त्वावमर्शेन सहामनन्ति ॥ १ ॥

एकादशे ज्ञानमदात् रहूगणमहीभृते । संदृष्टो विप्रभरतोऽत्र श्लोकाः सार्द्धंवारिदाः ( १७ ॥ ) ।

उवाचेत्येकमेवात्र जिनसंख्या ( २४ ) अनुष्टुभः ॥ ११ ॥

अकोविद इति । अकोविदोऽविवेक्येव त्वं कोविदानां विवेकिनां ये वादा यथार्थवचनानि तत्तुल्यान् युक्त्या भासमानानप्ययथार्थान् व्यवहारयथार्थत्वपरान् वादान् वाक्यानि एव वदसि । अथो तथापि त्वं व्यवहारेऽतिनिपुणोऽप्यतिविदां परमविवेकिनां मध्ये वरिष्ठः श्रेष्ठो न भवसि । हि यस्मात्सूरयो विवेकिन एतमहंताममतापूर्वकस्वामिभृत्यसुखदुःखादिव्यवहारं तत्त्वावमर्शेन परमार्थविचारेण सह नामनन्ति न वदन्ति किं त्वविचाररमणीयमेव अतो न सत्यः ॥ १ ॥ तथेति । हे राजन् ! यथा राजभृत्यादिव्यवहारास्तथैवोरवो गार्ह्या गृहसंबन्धिनो ये मेधा यज्ञास्तेषां वितानो विस्तारस्तद्विषयासु विद्यासु उरु अधिकं विजृम्भितेषु विलसितेषु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति ।" इत्यादिरूपार्थवादेषु यस्तत्त्ववादः स प्रायेण शुद्धो हिंसादिदोषशून्यः साधुः रागादिशून्य यथार्थश्च न चकास्ति न प्रकाशते । नु निश्चितमेवैतत् । "यथैवेह कर्मजितो लोकः क्षीयते । एवमेवामुत्र पुण्यजितो लोकः क्षीयते ।" इत्यादितर्कानुगृहीतश्रुतिविरोधेन सुकृतस्य तज्जन्यसुखस्य चाक्षय्यत्वासंभवात् भगवदर्पितकर्मणां परमपुरुषार्थहेतुत्वात्तद्व्यवृत्त्यर्थं प्रायग्रहणम् ॥ २ ॥ नेति । वरीयसीर्वरीयस्यः । पूर्वसवर्णदीर्घ आर्षः । सर्वप्रमाणश्रेष्ठा अपि वेदवाच तस्य पुरुषस्य साक्षात् यथावत्तत्त्वग्रहणाय न समासन् नैव भवन्ति । स्वप्ने या निरुक्तिः दृष्टान्तस्तेन यस्य पुरुषस्य गृहमेधिसौख्यं गृहसंबन्धियज्ञादि कर्मजन्यं सुखं स्वयमेव हेयमित्यनुमितं न स्यात् । अतः यः स्वप्नदृष्टान्तेन कर्मजन्यं सुखं हेयं निश्चिनोति तस्यैव वेदवाचोऽपि तत्त्वग्रहणायेति ॥ ३ ॥ यावदिति । यावत्पूरुषस्य मनोरजआदिभिर्गुणैरनुविद्धं वशीकृतं भवति तावन्निरङ्कुशं त्यक्तवेदमर्यादं स्वतन्त्रं सत् चेतोभिर्ज्ञानेन्द्रियैराकूतिभिः कर्मेन्द्रियैश्च स्वर्गनरकादिशरीरप्राप्तिकारणं कुशलं पुण्यमितरत्पापं वा चकारादुभयमिश्रं वा कर्म आतनोति विस्तारयत्येव ॥ ४ ॥ स इति । पुंस्त्वनिर्देश आत्मशब्दविशेषणत्वात् तन्मन इत्यर्थः । धर्माधर्मादिवासनायुक्त आत्मा वासनात्मा विकृतः कामादिविकारवान् विषयोपरक्तः विषयासक्तः गुणै रजआदिभिः प्रवाहो यस्य गुणैर्वशीकृत इत्यर्थः । षोडशात्मा षोडशकलासु पञ्चमहाभूतैकादशेन्द्रियरूपेषु आत्मा मुख्यः देवतिर्यङ्मनुष्यादिपृथङ्नामभिः सह पृथग्रूपभेदं बिभ्रत् देहत्यागसमये देवादिदेहान् चिन्तयन् । रेफलोपेऽपि दीर्घाभाव आर्षः । चिन्तया प्राप्तैः पुरैस्तैर्देहैरेवान्तर्बहिष्ट्वमुत्कृष्टत्वनिकृष्टत्वद्वारा वेदोक्ताचारेऽधिकारित्वमनधिकारित्वं च तनोति ॥ ५ ॥ दुःखमिति । मायया रचितोऽन्तरात्मा मनः स्वदेहिनं जीवमालिङ्ग्य चेतनं सन्तं संसृतिचक्रे संसारसमूहे कूटयति छलयतीति तथाभूतः सन् तापफलं दुःखं पुण्यफलं सुखं च व्यतिरिक्तं मोहं तीव्रं भोगमन्तरेणोपायान्तरेण दुर्निवारं कालोपयान्तरेण दुर्निवारं कालोपपन्नं धर्माधर्मादिविपाकहेतुना कालेन प्राप्तं फलमासर्वतो व्यनक्ति ॥ ६ ॥ तावानिति । यावन्मन इत्याद्युक्तप्रकारेण यावन्मनः संसारे पुरुषं भ्रमयति तावानेवायं क्षेत्रज्ञसाक्ष्यः साक्षिणो भावः साक्ष्यम् । ष्यञ् । क्षेत्रज्ञस्य साक्ष्यं यत्र सः क्षेत्रज्ञस्य दृश्यः जाग्रदवस्थायां स्थूलः स्वप्नावस्थायां च सूक्ष्मः सदाविः सन् इव प्रकाशमानो भवति । यद्वा आविः प्रकाशमानः सदा क्षेत्रज्ञस्य दृश्यो भवति यस्मादेवं तस्मादेव परावरस्योत्कृष्टापकृष्टयोनिसंबन्धस्य तथा गुणागुणत्वस्य बन्धमोक्षयोश्चादौ मन एव लिङ्गं कारणमिति विवेकिनो वदन्ति ॥ ७ ॥ गुणेति । जन्तोर्जीवस्य मनो यदा गुणानुरक्तं विषयासक्तं तदा तस्य व्यसनायोक्तप्रकारेण संसारदुःखाय भवति । अथो यदि तु नैर्गुण्यं निर्गुणं विषयविमुख्यं भवति । स्वार्थे ष्यञ् । तदा तु तस्य क्षेमाय मोक्षाय भवतीत्यर्थः । यदा प्रदीपो घृतवर्त्तिमश्नन् सधूमाः शिखा ज्वाला भजति । अन्यदा हि घृताद्यभावकाले तु स्वं स्वरूपं शुक्लभास्वररूपं महाभूतात्मत्वं वा भजति । अन्यदा काञ्चनपिण्डमश्नंस्तु स्वं पदं निर्धूमतेजःस्वरूपमिति वा ॥ ८ ॥ पदमिति । तथा मनोऽपि गुणेषु विषयेषु कर्मसु तदनुकूलक्रियासु चानुबद्धमासक्तं नातवृत्तीः श्रयते तद्रूपेण परिणमतेऽन्यत्र विषयादि विहाय भगवति स्थितिकाले तु तत्त्वं परमार्थं पदं स्वरूपं श्रयते । मनसो वृत्तयः आकूतयः क्रियाकाराः पञ्च धियो ज्ञानाकाराश्च पञ्च अभिमानश्चैकादशः इति एकादश आसन् ॥ ९ ॥

मात्राणीति सार्द्धम् । हे वीर ! मात्राणि गन्धाद्यानि पञ्च ज्ञानेन्द्रियाणां कर्माणि च पञ्च कर्मेन्द्रियाणां पुरं शरीरं गेहादिकं चैकाभिमानस्य इत्यासां वृत्तीनामेकादशैव भूमीर्विषयान् वदन्ति विज्ञाः । ता आह । गन्धश्चाकृती रूपं च स्पर्शश्च रसश्च श्रवः शब्दश्च तानि पञ्चमात्राशब्दवाच्यानि घ्राणादीन्द्रियद्वारा धीवृत्तीनां विषयाः विसर्गो मलत्यागः रतिः स्त्रीसम्भोगः अर्तिः गतिः अभिजल्पः भाषणं शिल्पं हस्तकार्यं ते कर्मशब्दवाच्याः पाय्वादि पञ्च कर्मेन्द्रियद्वारा क्रियाकारवृत्तीनां विषयाः । ममेत्यभिमानेन स्वीक्रियत इति स्वीकरणं शरीरगेहादि एकादशमभिमानस्य विषयमाहुः । अयं भावः । शरीराद्यभिमानस्य गन्धादिवन्नज्ञेयतया विषयः नापि विसर्गादिवत् कार्यतया तद्विषयः किंतु भोगसाधनत्वेन ममेति स्वीकार्यतया तद्विषय इति । एके त्वात्मानात्मविवेकवतामेव शरीरं ममत्वाभिमानविषयः अतो विवेकिनां तथास्तु । अविवेकिनां त्वहङ्कारं द्वादशं वृत्त्यन्तरं तस्य च शरीरमेव शय्यासंज्ञं द्वादशं विषयमाहुरित्यन्वयः । शरीरे हि जीवोऽहङ्कारेण शेते इति तस्य शय्यापदवाच्यत्वं बोध्यम् । अत एव पुरि शयनाज्जीवस्यापि पुरुषपदवाच्यत्वं ज्ञेयम् । यद्वा । एके आचार्या अभिमानस्य द्वैविध्यात् ममेति ममकारस्य शय्यां विषयं गेहादिकमेकादशम् अहमिति अहङ्कारस्य शय्यां देहं द्वादशमाहुः ॥ १०–११ ॥ तासां वृत्तीनामवान्तरभेदैरानन्त्यमाह—द्रव्येति । द्रव्यस्वभावादिभिर्निमित्तभूतैरमी एकादश मनसो विकारा वृत्तय एव प्रथमं शतशस्ततः सहस्रशस्ततः लक्षशः कोटिशश्च स्युः । द्रव्याणां विषयाणां चन्दनस्वर्णादीनामानन्त्यात् । गन्धादिः कोऽपि कस्मैचिद्रोचते इति स्वभावानन्त्यात् आशयः संस्कारोऽन्तःकरणं वा तस्यादुष्टतादुष्टताभ्यां कर्म अदृष्टं तद्वशादपि कालो बाल्ययौवनादि ततोऽपि प्रत्येकमनन्ता एव गन्धादय इति ते च क्षेत्रज्ञतो जीवान्न स्युः तस्याविकारित्वात् । न स्वतः आत्माश्रयापत्तेः नापि मिथो भवन्त्यन्योन्याश्रयापत्तेः अतो मिथ्याभूता एव । यद्वा । कोटिशो भवन्ति अतस्ताः क्षेत्रज्ञतः अचिन्त्यशक्तेः परमेश्वरादेव तत्सत्तयैव सत्तां लभेरन् न मिथः न च स्वतः ॥ १२ ॥ गुणकर्मानुबद्धं मनोवृत्तीः श्रयत इति प्रपञ्चितम् । अन्यदा तत्त्वं श्रयत इत्युक्तं तदाह—क्षेत्रज्ञ इति । अविशुद्धं संसारबन्धकारणं कर्म करोति तथा तस्य मायया रचितस्य अहंममाध्यासेन स्थितस्य जीवस्य जीवोपाधेर्मनसः एताः अनन्तरोक्ताः नित्याः प्रवाहरूपेणाविच्छिन्ना आविर्हिता जाग्रत्स्वप्नयोराविर्भूताः । धात्रः क्तः हिरादेशः । क्वापि सुप्तिसमाध्यादौ तिरोहितास्तिरोभूताश्च विभूतीर्वृत्तीः शुद्धः क्षेत्रज्ञोऽवस्थात्रयसाक्षी केवलो विचष्टे पश्यति सः क्षेत्रज्ञ एवात्मतत्त्वमित्यर्थः ॥ १३ ॥ क्षेत्रज्ञो द्विधा । जीव ईश्वरश्च । तत्राद्यो निरूपितस्तत्प्राप्यमीश्वरं निरूपयति क्षेत्रज्ञ इति । क्षेत्रज्ञ आत्मा व्यापो पुराणः जगत्कारणं पुरुषः पूर्णः साक्षादपरोक्षः स्वयंज्योतिः अजः परेषामपीशः नारायणः भगवान् वासुदेवः स्वमाययाऽचिन्त्यशक्त्यात्मनि जीवे अवधीयमानः अवस्थाप्यमानः । कर्मकर्त्तरि प्रयोगः । स्वेच्छया तन्नियन्तृत्वेन वर्त्तमान इत्यर्थः ॥ १४ ॥ यथेति । अनिलः पवनो यथा बहिःस्थितोऽप्यात्मस्वरूपेण प्राणरूपेण स्थावरजङ्गमानामन्तर्निविष्टः संस्तानीशेत् नियमयति । शब्लुक् तङभावश्चार्षः । एवं परः प्रपञ्चाद्बहिरपि सन् भगवान् वासुदेवः क्षेत्रज्ञः साक्षी आत्मा व्यापकश्चापि इदं विश्वमनुप्रविष्टः सन् तन्नियमयति ॥ १५ ॥ नेति । हे नरेन्द्र ! विमुक्तसङ्गः जिताः षट् ज्ञानेन्द्रियमनोरूपाः सपत्नाः शत्रवो येन सः तनुभृद्देही शास्त्रश्रवणादिना वयुनोदयेन ज्ञानोत्पत्त्या एतामात्मावरणभूताहंममाध्यासकारणभूतां मायामविद्यां विधूय निरस्य यावदात्मतत्त्वं न वेद साक्षात्कारं न कुर्यात्तावदिह संसारे भ्रमति ॥ १६ ॥ नेति आत्मनो लिङ्गमुपाधिभूतमेतन्मन एव जनस्य प्राणिनः संसारतापानामावपनं क्षेत्रं कारणमिति यावन्न वेद तावद्विषयविरक्त्यभावादिह भ्रमतीत्यनुषङ्गः । यन्मनः शोकमोहादीनामनुबन्धमनुवृत्तिं ममतां च विधत्ते ॥ १७ ॥ भ्रातृव्यमिति । अदभ्रवीर्यं महाबलम् उपेक्षया अध्येधितमतिप्रवृद्धं व्यलीकं मिथ्याभूतं तथापि आत्ममोषं स्वरूपाच्छादकम् एनं मनोलक्षणं भ्रातृव्यं शत्रुं गुरोर्हरेश्च चरणोपासनमेवास्त्रं यस्य तथाभूतः त्वं स्वयमप्रमत्तः सन् जहि नाशय ॥ १८ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायाम् एकादशोऽध्यायः ॥ ११ ॥

—:*:—

## अथ द्वादशोऽध्यायः

रहूगण उवाच

नमो नमः कारणविग्रहाय स्वरूपतुच्छीकृतविग्रहाय । नमोऽवधूतद्विजबन्धुलिङ्गनिगूढनित्यानुभवाय तुभ्यम् ॥ १ ॥

द्वादशे विप्रभरतः पृष्टः सर्वानपानुदत् । रहूगणस्य संदेहांस्तत्र पद्यानि षोडश ( १६ ) ॥

उवाचेति वचोयुग्मं द्वाविंशतिरनुष्टुभः ( २२ ) ॥ १२ ॥

नम इति । कारणमीश्वरस्तस्येव लोकरक्षणार्थो विग्रहो देहो यस्य यद्वा कारणेन जनोद्धारहेतुना विग्रहो यस्य तस्मै तथास्वरूपेणात्मानन्दानुभवेन तुच्छीकृतो विग्रहो भेदो येन तस्मै तुभ्यं नमो नमः । अवधूतं सम्मानत्यागेन मलिनं यद्द्विजबन्धुलिङ्गं ब्राह्मणशरीरं तेन निगूढ आच्छादितो नित्यः स्वानन्दानुभवो येन तस्मै नमः । अवधूतेति संबोधनं वा ॥ १ ॥ ज्वरेति । हे ब्रह्मन् ! ज्वर एवामयो रोगस्तेनार्त्तस्य पीडितस्य यथा सत्तच्छान्तिकरं स्वादु वाऽगदमौषधं यथा च निदाघेन दग्धस्य संतप्तस्य हिमाम्भः तापशान्तिकरं शीतलमुदकं गङ्गोदकं वा तथा कुत्सिते विष्ठादिपूर्णे देहे यो मानः सर्वोत्कृष्टो नरदेवोऽहमित्यहङ्कारः स एवाहिस्तेन विशेषेण दष्टः विनष्टा दृष्टिर्विवेकलक्षणा यस्य तस्य मे मम ते तवेदं वचोऽमृततुल्यमौषधं विवेकसम्पादकत्वात् ॥ २ ॥ तस्मादिति । यस्मादेवं तस्मात् भवन्तं सर्वज्ञं मम संशयविषयमर्थं पश्चात् प्रक्ष्यामि । अधुना तु अध्यात्मयोगैः अतिसूक्ष्मात्मावबोधानुकूलयुक्तिभिः ग्रथितं तवोक्तं वचः सुबोधं यथा स्यात्तथा कौतूहलचेतसः चकितचित्तस्य मे ममाख्याहि ॥ ३ ॥ यदिति । हे योगेश्वर ! प्रत्यक्षादिभिर्दृश्यमानमतः सद् अबाधितमपि लौकिकालौकिकक्रियाफलं दुःखसुखादिव्यवहारमूलमेवास्ति । अञ्जसा परमार्थत तत्तत्त्वविमर्शनाय तु क्षमं नैव भवतीति यद्भवानाह अमुष्मिन्नर्थे मे मम मनो भ्रमते । तन्नार्षः । यद्यपि स्वप्नदृष्टान्तेन लौकिकसुखस्य मिथ्यात्वं प्रतिपादितं तथापि स्वप्नपदार्थस्य मिथ्यात्वेऽपि जाग्रदवस्थायां सर्वपदार्थानां सत्यत्वात्सुखादेः कथं मिथ्यात्वमिति भावः ॥ ४ ॥

अबाधितत्वमसिद्धमित्याह—अयमिति । हे पार्थिव ! यः पार्थिवः पृथिवीविकारः स एव कस्य हेतोः कुतश्चित्कारणात् पृथिव्यां चलन्नयं भारवाहकादिर्जनो नाम प्रसिद्धः यस्तु न चलति स पाषाणादिरित्येतावानेव भेदः । तस्य च जडत्वान्न भारः श्रमश्च । वस्तुतः अवयवव्यतिरेकेण श्रमास्पदस्यावयविनोऽनिरूपणादपि स नास्ति इत्याह । तस्यापि देहत्वेनाभिमतस्य पृथिवीविकारस्यापि अङ्घ्र्योरधि उपर्युपरि गुल्फादयोऽवयवाः सन्ति । उरसः सलोप आर्षः ॥ ५ ॥ शिबिकायां त्वय्यपि चावयवी नास्तीत्याह—अंस इति । अंसे स्कन्धे चाधिष्ठिता दार्वी शिबिकाऽस्ति यस्यां सौवीरराज इत्यपदेशो नाममात्रं यस्य वस्तुतस्तु पृथिवीविकार एव स भवदेह आस्ते । यस्मिन् देहे सिन्धुदेशेष्वहं राजाऽस्मीत्येवं यो दुष्टो मदस्तेनान्धः भवान् रूढनिजाभिमानः कृतात्मध्यासोऽस्ति न वस्तुतः । अत्रायमाशयः । अत्र पृथिव्यादीनां शिबिकान्तानां भारवहनात् किं सर्वेषां श्रमः उत कस्यचित नाद्यः । पृथिवीशिबिकयोः श्रमादर्शनात् नान्त्यःअङ्घ्र्यादीनां शिबिकाया अभावे गुल्फादिभारवाहिनामपि तेषां श्रमानुपलब्धेः अङ्घ्र्यादेरवयविनः शिबिकादिवहनाच्छ्रम इति चेदवयवेभ्यः पृथगवयविनः श्रमाश्रयस्यानिरूपणात् । ननु श्रमोऽनुभूयत एवेति चेत् अतिसुकुमार्या अलङ्कारवहने स्वबालकवहने च श्रमानुपलब्धेः तस्मादभिमानविशेषेणैव दुःखं सुखं च तवाप्यभिमानेनैव राजास्मीति सुखं निरभिमानानां तु न सुखदुःखे ॥ ६ ॥ शोच्यानिति । अधिकेन कष्टेन दीनान् इमान् शोच्यान् एतेषां शिवं कथं स्यादिति चिन्तयाऽनुग्रहपात्रभूतान् विष्ट्या बलात्कारेण निगृह्णंस्त्वं निरनुग्रहो दयारहितोऽसि । अतः धृष्टः अन्तर्धूर्तस्त्वम् अहं जनस्य गोप्ताऽस्मीति विकत्थमानो मुधैवात्मानं श्लाघमानो वृद्धानां विवेकिनां सभासु न शोभसे ॥ ७ ॥ उत्तरोत्तरावयवभारः पूर्वपूर्वावयवानां स्यादित्यपि नेत्याह—यदेति । यदा चराचरस्य कार्यजातस्य देहस्य क्षिताविव निष्ठां वर्तमानकाले स्थितिं विनाशानन्तरं लयं च तत एव च प्रभवमुत्पत्तिं च नित्यं नियमेन व्यवहारावस्थायां विदाम विद्मः । आर्षः प्रयोगः । तत्तदा नामतस्तत्तन्नाम्ना व्यवह्रियमाणात्पृथिवीपदार्थादन्यत् यत्क्रियया उदकाहरणादिकर्मणा सत् सत्यमित्यनुमेयं व्यवहारस्य मूलं कारणं किं वस्त्वस्ति तन्निरूप्यताम् । अतः अवयवव्यतिरिक्तस्यावयविनोऽसत्त्वात् तेन चात्मनः सम्बन्धाभावादध्यासेनैव श्रमादिसिद्धिर्न तु परमार्थतः ।

अन्यथा गुल्फाद्युत्तरोत्तरावयववाहकानामंघ्र्यादीनामपि तच्छ्रमप्रसङ्गः स्यादिति भावः ॥ ८ ॥ एवमिति । असत्स्वतिसूक्ष्मेषु स्वकारणभूतेषु परमाणुषु निधानात् लयात् तद्व्यतिरेकेण निरूपयितुमशक्यत्वात्। क्षितिशब्दस्य वृत्तं वाचकत्वेन वर्त्तनं यदस्ति तदपि वस्त्वेवं देहवत्स्वावयवव्यतिरेकेणासत्त्वेन निरुक्तम् । अतः परमाणुव्यतिरेकेण क्षितिर्नास्ति परमाणूनामपि अतिरिक्तत्वं नास्तीत्याह । येषां समूहेन विशेषः पृथिवीबुद्ध्यालम्बनपदार्थः कृतः अवयविनो निरस्तत्वात्समूहेनेत्युक्तम्। ते परमाणवोऽपि अविद्यया अज्ञानेन हेतुना मनसा कार्यानुपपत्तिबलेन वादिभिः कल्पिताः वस्तुतः असद्रूपा एव ॥ ९ ॥ एवमिति । एवं पृथिवी-वदन्यदपि यत् कृशत्वादिधर्मकं बुद्ध्या प्रतीतं द्वितीयं द्वैतं तद्द्रव्यादिनाम्ना व्यवह्रियमाणया अजया मायया कृतमवेहि जानीहीत्यन्वयः । तत्र कृशं ह्रस्वं स्थूलं तत्प्रतियोगि अणु स्वल्पं बृहत् महत् असत्कारणं सत्कार्यं जीवं चेतनम् अजावं जडं द्रव्यं महाभूतादिस्वभावः तत्तद्वस्तुपरिणामहेतुः आशयः संस्कारः कालो गुणक्षोभहेतुः कर्म धर्माधर्माख्यमदृष्टम् ॥ १० ॥ तर्हि किं सत्यं तदाह—ज्ञानमिति । ज्ञानमेव सत्यं व्यवहारिकसत्यत्वं व्यावर्त्तयति । परमार्थमबाधितं वृत्तिज्ञानं व्यवच्छिनत्ति विशुद्धं तत्त्वाविद्यकम् एकं तत्तु नाना अनन्तरम् अबहिश्चेति व्यापकतया बाह्याभ्यन्तरभावरहितं तत्तु विपरीतं ब्रह्म परिपूर्णं तत्तु परिच्छिन्नं तत्तु विषयाकारं प्रशान्तं निर्विकारं तच्च भगवच्छब्दवाच्यं यत् कवयो वासुदेवमिति वदन्ति तत्स्वरूपज्ञानमेव सत्यम् ॥ ११ ॥

रहूगणेति । हे रहूगण ! महतां पादरजसा य आत्मनोऽभिषेकः स्नानं तद्विनैतदुक्तमात्मतत्त्वं केवलेन तपसा पुरुषो न याति न लभते । एवं तपसा वानप्रस्थधर्मेण इज्यया यज्ञादिकर्मणा निर्वपणात् अन्नादिसंविभागात् गृहाद्वा तन्निमित्तपरोपकारात् छन्दसा वेदाध्ययनादिब्रह्मचारिधर्मेण जलादिभिर्वा पासितैः जलाग्न्यादिकरणकतपसा वा ॥ १२ ॥ यत्रेति । यत्र येषु महत्सु उत्तमश्लोकस्य हरेर्गुणानुवादः लीलाकथा अज्ञाननिवर्तकत्वादेव ग्राम्यकथानां विघातो यस्मात्स तथाभूतः प्रस्तूयते निरन्तरं प्रवर्तते । स चानुदिनं निषेव्यमाण आदरपूर्वकं श्रूयमाणो मुमुक्षोः सतीं संसारतापोपशमनीं वासुदेवे भगवति मतिं भक्तिं यच्छति सम्पादयति । ततश्च तदनुग्रहेणैवमात्मतत्त्वं स्फुरतीत्यर्थः ॥ १३ ॥ विषयसङ्गाद्योगभ्रंश इति वदन् कस्त्वं निगूढ इत्यस्योत्तरमाह—अहमिति । अहं पुरा पूर्वं विमुक्तौ दृष्टश्रुताभ्यामिह लोकपरलोकाभ्यां सङ्गनिमित्तो बन्धो येन तथाभूतो भरतो नाम राजाऽभवम् । स चाहं भगवत आराधनमीहमानः कुर्वन् मृगसङ्गात् मृग आसक्तितः मृगोऽभवम् । एवं हतोऽर्थः प्रयोजनं यस्य सः पुनर्मृगदेहमुत्सृज्य ब्राह्मणो जातोऽस्मीति शेष. ॥ १४ ॥ सेति । हे वीर ! सा पूर्वजन्मविषया कृष्णार्चनात् प्रभव उत्पत्तिर्यस्याः सा स्मृतिर्मृगदेहेऽपि पशुत्वेन कर्त्तव्यानुसन्धानायोग्ये देहेऽपि मां नो जहाति न जहौ । अथो तस्मान्मृगासक्त्याऽहं भ्रष्ट इति स्मृतिसत्त्वादेवाहं जनसङ्गाद्वि-शङ्कमानो भीतः असङ्ग एकाकी सर्वतो विरक्तः अविवृतोऽप्रकटः स्वज्ञानादिकमाच्छादयंश्चरामि ॥ १५ ॥ तस्मादिति । तस्मादसङ्गाः सर्वतो विरक्ताः महान्तस्तैर्यः सुष्ठु प्रयत्नपूर्वकः सङ्गस्तेन जातम् । यद्वा असङ्गो व्यवहारानासक्तः सुसङ्गः साधुसङ्गस्ताभ्यां जातं ज्ञानं तदेवासिस्तेनेहैव जन्मनि विवृक्णः सञ्छिन्नो मोहः यस्य सः तस्य भगवतो या ईहा लीलास्तासां कथनस्मृतिभ्यां लब्धा स्मृतिरात्मतत्त्वसाक्षात्कारलक्षणा येन स एवाध्वनः संसारमार्गस्यातिशयितं श्रेष्ठं पारं हरिं याति नान्यः । यद्वा पारमेति अतिक्रम्य हरिं याति । "अतिरतिक्रमणे च" इति कर्मप्रवचनीयत्वाद्द्वितीया ॥ १६ ॥

इति श्रीभागवते पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां द्वादशोऽध्यायः ॥ १२ ॥

—:❀:—

# अथ त्रयोदशोऽध्यायः

ब्राह्मण उवाच

दुरत्ययेऽध्वन्यजया निवेशितो रजस्तमःसत्त्वविभक्तकर्मदृक्।
स एष सार्थोऽर्थपरः परिभ्रमन्भवाटवीं याति न शर्म विन्दति ॥ १ ॥

त्रयोदशे विरागस्य दाढर्यहेतोर्भवाटवीम्। उक्त्वाऽगाद्भरतस्तत्र पद्यगद्यानि षड्दश: (२६)॥
चतुष्टयमुवाचेति चत्वारिंशदनुष्टुभ: (४०)॥ १३॥

अध्वनः पारं यातीत्युक्तम् तमेवाध्वानमध्वनीनं च प्रसिद्धाध्वगसार्थरूपकेण वैराग्यदार्ढ्याय प्रपञ्चयति—दुरत्यय इति। रजस्तमःसत्त्वैर्विभक्तेषु कर्मस्वेव दृक् दृष्टिर्यस्य स तथा अर्थपरः विषयाभिलाषी एषः प्रसिद्धः सार्थो वणिक्समूह इव जीवसमूहः "सार्थो वणिक्समूहे स्यात्" इति मेदिनी। अजया भगवन्मायया दुरत्यये दुस्तरेऽध्वनि प्रवृत्तिरूपे मार्गे निवेशितस्तत्र भ्रमन् देवतिर्यगादियोनिषु गच्छन् भवाटवीं संसारवनमेव याति। तत्र च शर्म सुखं न विन्दति। अत्रागामिन्यध्याये व्याख्यास्यमानोप्यऽर्थो रूप्यरूपकयोर्यौगपद्येन सुखार्थमत्रापि व्याख्यायते॥ १॥ यस्यामिति। हे नरदेव! यस्यां भवाटव्याम् इमे षड् दस्यवः इन्द्रियनामानश्चौराः कुत्सितो नायको रक्षको बुद्धिलक्षणो यस्य तं सार्थं बलात् विलुम्पन्ति तस्य धर्म्यं धनमुपभोगेन मुष्णन्ति इत्यर्थः। यत्र प्रमत्तं स्वहिते प्रमाद्यन्तं कुटुम्बिनं त्वं मे भर्त्ता त्वं पितेत्येवं गृह इव चित्ते प्रविश्य गोमायुतुल्या दारपुत्रादयः सार्थिकं सार्थे स्थितमन्नवस्त्रादिसम्पुटं हरन्ति इतस्ततः कर्षन्ति यथा रक्ष्यमाणमप्युरणं मेषं वृका हरन्ति॥ २॥ प्रभूतेति। प्रभूतैर्बहुभिः वीरुधो लताः तृणानि गुल्मानि लतादिजालानि तैर्गह्वरस्थानवत्कामकर्मादिभिर्गह्वरे गृहाश्रमे कठोरैर्दंशैर्मक्षिकाविशेषैर्मशकैश्च तुल्यैर्दुर्जनैः क्वचिदुपद्रुतो भवति। प्रारब्धं विना गन्धर्वपुरवद्दुर्लभमघटमानं क्षणान्तरे दुःस्थं च देहगेहदारापत्यादिविषयजातं क्वचित्सत्यतया प्रपश्यति स्वीकर्तुमुपधावति च क्वचिच्च आशु रयो वेगो यस्य तम् उल्मुकग्रहम् उल्मुकाकारो ग्रहः पिशाचस्तद्वदप्राप्तौ मोहकरं प्राप्तौ च कलहाधर्मादिभिर्मरणनरकादिप्रापकं सुवर्णमादेयत्वेन पश्यति॥ ३॥ निवासेति। भो राजन्! निवासो वासस्थानं तोयं जलं द्रविणं धनमात्मा देह उपलक्षणमन्येषामपि दारपुत्राद्यभिलषितवस्तूनां तेषु बुद्धिर्यस्य निवासादिष्वात्मा स्वभावो यस्याः सा बुद्धिर्यस्येति वा निवासादिष्वात्मनो ममेदमिति बुद्धिर्यस्येति वा। सोऽटव्यां वने ततस्ततस्तत्र तत्र तत्तत्प्रयोजनसिद्धये धावति। क्वचिच्च रजस्वलाक्षः धूलिपिहितदृष्टिः रजोगुणपिहितदृष्टिश्च वात्या चक्रवातः सेव बहु भ्रमयन्ती या स्त्री तस्यामुत्थितैः पांशुसदृशैः दृष्ट्याच्छादकै रजोगुणकार्यैः रागादिभिः कन्दर्पवेगैश्चाप्रकाशमानः कर्मसाक्षिभूताः दिशः दिग्देवता न जानाति॥ ४॥ अदृश्येति। अदृश्यानां झिल्लीनां भृङ्गारिकासंज्ञानां कीटविशेषाणामिव परोक्षे अप्रियवक्तॄणां दुर्जनानां स्वनैः कर्णयोः शूलं व्यथा यस्य उलूकानाम् इव स्पष्टमप्रियवादिनां राजपुरुषादीनां वाग्भिर्व्यथितोऽन्तरात्मा यस्य क्षुधार्दितः सन् येषां छायापि पापहेतुस्ते अपुण्यवृक्षास्तत्तुल्यान् पापिनः भिक्षार्थं श्रयते सेवते। क्वचित् मरीचितोयवन्निष्फलत्वेन विज्ञातानपि विषयानभिधावति। यद्वा मरीचितोयानीव कृपणलोकान् अभिधावति॥ ५॥

क्वचिदिति। वितोयासु सरित्सु पतितस्य सद्यो गात्रभङ्ग उदकस्यालाभश्च तथेह क्वचित् वितोयाः सरितः इह परत्र च सुखरहितान् पाखण्डानभियाति। निरन्धः अन्नहीनः। निरन्न इत्यपि पाठः परस्परं दायादादिभ्यः अन्नमालषतेऽभिवाञ्छति। क्वचिद्दाववत्सन्तापकं गृहमासाद्य शोकाग्निना तप्तो निर्विद्यते विषीदति। क्व च यक्षराक्षसतुल्यै राजभिर्हृतमसुवत्प्रेष्ठं धनं यस्य सः मृततुल्यो मूर्च्छितो भवतीत्यर्थः॥ ६॥ शूरैरिति। क्व च क्वचिदन्यैरेव शूरैः प्रबलैर्हृतं स्वं वित्तं यस्य सः अत एव निर्विण्णं विषण्णं चेतो यस्य स शोचन् विमुह्यन् संभ्रमन् कश्मलं मूर्च्छां याति। क्वचिच्च गन्धर्वपुरं मनोरथोपगतं वस्तुतः सुखाजनकं पितृपुत्रादिसमाज प्रविष्टः सन् सर्वदा दुःखप्रतीकारं कुर्वन्नपि मुहूर्त्त सुखिवत् प्रमोदते॥ ७॥ चलन्निति। क्वचिन्नगारुरुक्षुः पर्वतारोहणवद्दुष्करं शास्त्रोदितकर्मानुष्ठातुमिच्छुः चलन् पूर्वमेव कण्टकशर्करादितुल्यैर्विघ्नैर्विद्धाङ्घ्रिरभिभूयमानः पदे पदे क्षणे क्षणे विमना इवास्ते विषण्णो भवति। अथ कौटुम्बिकः कुटुम्बे ममत्वाक्रान्तः अभ्यन्तरवह्निना जठराग्निनाऽर्दितः पीडितो बुभुक्षितः

सन् जनाय दारपुत्रादिजनेभ्यः क्रुद्ध्यति ॥ ८ ॥ क्वचिदिति। क्वचिदजगराहिना निद्रारूपेण निगीर्णो गिलितो विपिनेऽपविद्धः त्यक्तो जनः शव इव शेते न किञ्चिद्वेत्ति न जानाति। क्व च क्वचिच्च दन्दशूकादिवदतिक्रूरैर्जनैर्दष्टः पीडितः अन्धो नष्टविवेकः अन्धकूपवद्दुरुत्तमे मोहे पतितस्तमिस्रे तमसा वृते दुःखे शेते लीयते ॥ ९ ॥ कर्हीति। कर्हि स्म चित् कदाचित् क्षुद्ररसान् परदारादीन् विचिन्वन् तत्र मक्षिकाभिरिव तत्स्वामिभिः राजभिश्च विमानितः निहतो बद्धो वा व्यथितो भवति। तत्र यद्यतिकृच्छ्रमतिकष्टेन प्रतिलब्धमानः प्राप्तपरदारसम्भोगो भवति। तदा ततोऽन्ये बलिनो राजभृत्यादयो बलाद्विलुम्पन्ति तान्यदाऽभिभुङ्क्ते तदा ततोऽप्यन्ये हरन्ति। स तु भोक्तुं न शक्नोतीत्यर्थः ॥ १० ॥ क्वेति। क्वचिच्च शीतादीनां प्रतिक्रियां निवारणं कर्त्तुमनीशोऽसमर्थो विषण्ण आस्ते। क्वचिन्मिथः परस्परं विपणन् क्रयविक्रयादिभिर्व्यवहरन्। शाता आर्षः। यत्किंचित् उत अपि स्वल्पमपि धनमपहरन् वित्तशाठ्याद्धनवञ्चनाद्धेतोर्विषमृच्छति ॥ ११ ॥ क्वेति। क्वचित्तु तस्मिन् भवारण्ये क्षीणधनोऽत एव शय्यादिहीनोऽतः परं याचमानो यदा परादप्रतिलब्धकामोऽप्राप्तमनोरथस्तदा पारक्ये परकीये वस्तुनि दृष्टिरभिलाषो यस्य स ततोऽवमानं लभते। शय्या प्रसिद्धा आसनं कम्बलादि स्थानं गृहादि विहरन्त्यनेनेति विहारो यानादि ॥ १२ ॥ अन्येति। अन्योन्यं वित्तव्यतिषङ्गेण धनसाङ्कर्येण विनिमयेन वा परस्परजिघृक्षया वा वृद्धो वैरानुबन्धो यस्य तथाभूतोऽपि मिथः परस्परं विवहन् विवाहादि कुर्वन् भवति। अमुष्मिन्नध्वनि विहरन् भ्रमन् उरुभिः कृच्छ्रैः कष्टैर्वित्तबाधैश्चान्यैरुपसर्गैश्च रागद्वेषादिभिर्विपन्नो विपदं प्राप्तो मृतो वा भवति ॥ १३ ॥

अध्वनो दुरत्ययत्वं दर्शयति—तानिति। हे वीर! तांस्तान् विपन्नान् तत्र तत्र विहाय जातं नवीनं परिगृह्य स हि सार्थो विहरन्नत्र सार्थ कश्चिदतिसमर्थोऽपि यतः प्रस्थितः तं परमेश्वरं प्रति अद्यापि नावर्त्तते। अध्वनः पारं पारप्रापको यो योगस्तं च नोपैति न लभत इत्यर्थः ॥ १४ ॥ तदेवाह—मनस्विन इति। मनस्विनः शूराः निर्जिता दूरस्था अपि दिग्गजेन्द्रा यैस्तथाभूता अपि अनिर्जितनिकटस्थेन्द्रियाः वृथाशूराः ममेयं भूर्ममेयमिति भुवि निमित्तभूतायां बद्धं वैरं यैस्ते सर्वेऽपि मृधे शयीरन्। मृताः परंतु यदध्वनः पारं भगवत्पदं न्यस्तदण्डः सर्वभूताभयदो गतवैरोऽभियाति तत्तु न व्रजन्ति स्म ॥ १५ ॥ सिंहावलोकनेन पुनर्भवाटवीमनुवर्त्तयति—प्रसज्जति इति। क्वापि लतानां भुजाः शाखाः तत्तुल्यसुकुमारस्त्रीभुजाश्रयः सन् तदाश्रया अव्यक्तपदाः अस्फुटाक्षराः कलभाषिपक्षितुल्या ये पुत्रादयस्तेषु स्पृहा यस्य तत्पोषणादावासक्तो भवति। क्वचित्कदाचित् हरिचक्रतः सिंहसमूहादिव कालचक्रनिमित्ताज्जन्ममरणादेः त्रसन् ततो रक्षार्थं कैश्चित्प्रलोभितः बककङ्कगृध्रैरिव पाखण्डैः सख्यं विधत्ते तान्सेवते ॥ १६ ॥ तैरिति। तैः पाखण्डमार्गीयैः वञ्चितः श्रद्धया सेवमानोऽपि ततो रक्षामदृष्ट्वा हंसानां शुद्धानां ब्राह्मणानां कुलमाश्रयते तेषामपि शीलं प्रायश्चित्तपूर्वकं पुनरुपनयनादिकमाचारमरोचयन् अप्रियं पश्यन् वानरतुल्यान् यथेष्टचारिणः शूद्रप्रायान् उपैति तेषां जातिरासेन वानरजातिक्रीडया स्त्रिया सह मिथुनीभावेन सुनिर्वृतेन्द्रियः अत्यन्तं प्रसन्नमनाः स्त्रीपुरुषपरस्परमुखोद्वीक्षणेन विस्मृतोऽवधिर्मरणं येन तादृक् भवति ॥ १७ ॥ द्रुमेष्विति। द्रुमवत्केवलैहिकार्थेषु गृहेषु रंस्यन्। शतार्षः। व्यवायदीनः स्त्रीसंभोगेच्छया कृपणोऽत एव सुतदारवत्सलः पुत्रादिषु प्रीतियुक्तः अतस्तेष्वासक्त्या स्वस्य बन्धने प्राप्ते विवशो भवति। चरन् वने इति पाठे वने संसारे चरन् कचित्प्रमादादधिकान्नभक्षणादेः पापाचरणाद्वा गिरिकन्दरवदतिभयानके रोगादिदुःखे नरकादौ वा पतितस्तत्रापि कन्दरस्थगजवद्भयानकान्मृत्योर्भीतः सन् वल्लीतुल्यं स्वप्राचीनं कर्मावलम्ब्यास्ते ॥ १८ ॥ अत इति। हे अरिन्दम! अत आपदः स कथंचित् दुःखं भुक्त्वा विमुक्तोऽपि स्वर्गादिलोकं गतो वा पुनश्च सार्थं प्रविशति। यथा पूर्वं प्रवृत्तिमार्गे एव रमते न दुःखानुसन्धानेन ततो विरज्यते। अमुष्मिन्नध्वनि प्रवृत्तिमार्गेऽजया भगवन्मायया निवेशितो जनो भ्रमन् कश्चनातिसमर्थोऽप्यद्याप्यध्वनः पारं हरिं न वेद ॥ १९ ॥ रहूगणेति। हे रहूगण! हि यस्मात् त्वमप्यध्वनि निवेशित एवेत्यनुषङ्गः अतः संन्यस्तस्त्यक्तो भूतेषु दण्डः पीडा येन सः तथा कृता भूतेषु मैत्री कृपा येन सः तथा न सज्जितः विषयेषु आसक्त आत्मा मनो यस्य सः तथाभूतः सन्नित्यर्थः। हरिसेवया शितं तीक्ष्णीकृतं ज्ञानलक्षणमसिमादाय मायां छित्त्वास्याध्वनोऽतिशयितं पारं हरिमितितर गच्छेत्यर्थः। "छन्दसि परेऽपि" इत्यतः परत्वम् ॥ २० ॥

अहो इति। अहो अतिशयेनाखिलजन्मसु शोभनं नृजन्मैवेत्यन्वयः। अमुष्मिन् न परं श्रेष्ठं येभ्यस्तैरपरैर्देवादिजन्मभिरपि तु किं फलं नैव किंचित्फलं भवतीत्यर्थः। तथा अमुष्मिन् स्वर्गे वा जन्मभिः किं यत् येषु जन्मसु यत्र स्वर्गे वा हृषीकेशस्य यशसा कृतः शोधितः आत्माऽन्तःकरणं यैस्तेषां वो युष्माकं महात्मनां समागमः प्रचुरो न भवति ॥ २१ ॥ नेति। सर्वदोपासितैः त्वच्चरणाब्जरेणुभिर्हतमंहो यस्य तस्याधोक्षजे भगवति अमला भक्तिर्भवतीति नैवाद्भुतं नैवाश्चर्यम्। हि यस्मात् यस्य तव मुहूर्त्तमात्रभवत्समागममात्रादेव दुस्तर्केण बद्धमूलोऽपि मे ममाविवेकोऽपहतो विनष्टः ॥ २२ ॥ नम इति। महद्भ्यो वृद्धेभ्यो नमोऽस्तु। शिशुभ्यो बालेभ्यो नमोऽस्तु। युवभ्यो नमोऽस्तु। आवटुभ्यः बटवो ब्रह्मचारिणस्तानभिव्याप्य सर्वेष्वाश्रमेषु ये ब्रह्मविदस्तेभ्यः यद्वा ये वटवः क्रीडारतत्वादश्रद्धेयास्तानप्यभिव्याप्य सर्वेभ्यो नमोऽस्तु। ये ब्राह्मणा ब्रह्मविदोऽवधूतलिङ्गाः

अवधूतवेषेणासंभावितज्ञातिस्वरूपाः गां पृथिवीं चरन्ति तेभ्यो राज्ञां शिवं कल्याणमस्तु ॥ २३ ॥ इतीति । उत्तरा माता यस्य तत्सम्बोधनं हे उत्तरामातः ! कत्रभाव आर्षः । इत्येवं वै ब्रह्मर्षिसुतः सिन्धुपतये रहूगणाय विगणयतः । षष्ठी चतुर्थ्यर्थे । स्वापमानं कुर्वतेऽपि परमकारुणिकतया आत्मनः सतत्त्वं स्वरूपमुपदिश्य "शीलं सतत्त्वं संसिद्धिः" इति स्वरूपनामसु हैमः । तेन रहूगणेन सकरुणं सदैन्यं यथा भवति तथाऽभिवन्दितचरणः परानुभावः निभृताः उपशान्ताः करणानामूर्मयो यस्मिन् स आशयोऽन्तःकरणं यस्य सः आपूर्णोऽर्णव इव स इमां धरणीं विचचार ॥ २४ ॥ सौवीरेति । सौवीरपती रहूगणोऽपि सुजनात् तस्मात् भरतात् सम्यगवगतं परस्यात्मनः सतत्त्वं येन तथाभूतः संस्तदानीमेवात्मनि अविद्ययाऽध्यारोपितां तां देहात्ममतिं विससर्ज तत्याज । आश्चर्येण संबोधयति । हे नृप ! भगवदाश्रितो यो भरतस्तदाश्रितो यो रहूगणस्तस्याप्यनुभावः प्रभावः एवंभूतः सद्यो देहाद्यहंमम-भावत्यागसामर्थ्यलक्षणो जातः ॥ २५ ॥ य इति । हे महाभाग ! बत त्वया बहुविदा सर्वज्ञेनेह भरतरहूगणसंवादे पारोक्ष्येण वचसा वणिक्सार्थरूपकेण यो जीवलोकस्य भवाध्वा संसारमार्गोऽभिहितः कथितः स ह्यार्याणां विवेकिनां मनीषया बुद्ध्या कल्पिता विषयाः दस्युगोमाय्वादिस्थानीया इन्द्रियपुत्रादयो यस्मिंस्तादृशः अतोऽव्युत्पन्नस्य तादृक्कल्पनाशक्तिरहितस्य लोकस्याञ्जसा साक्षात् व्याख्यानं विना न समधिगमः सम्यगधिगम्यो न भवति । अथ तस्मात् तदेतदेव भवाध्वरूपं समवेतानुकल्पेन प्रस्तुते तत्तदनुरूपदार्ष्टान्तवाचकशब्दोपकल्पनेन निर्दिश्यतां निरूप्यताम् ॥ २६ ॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां त्रयोदशोऽध्यायः ॥ १३ ॥

—:❀:—

## अथ चतुर्दशोऽध्यायः

स होवाच

य एष देहात्ममानिनां सत्त्वादिगुणविशेषविकल्पितकुशलाकुशलसमवहारविनिर्मितविविधदेहावलिभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्य द्वारभूतेन षडिन्द्रियवर्गेण तस्मिन्दुर्गाध्ववदसुगमेऽध्वन्यापतित ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया जीवलोकोऽयं यथा वणिक्सार्थोऽर्थपरः स्वदेहनिष्पादितकर्मानुभवः श्मशानवदशिवतमायां संसाराटव्यां गतो नाद्यापि विफलबहुप्रतियोगेहस्तत्तापोपशमनीं हरिगुरुचरणारविन्दमधुकरानुपदवीमवरुन्धे ॥ १ ॥

चतुर्दशे भवारण्यरूपकव्याकृतिः कृता । राज्ञे शुकेनात्र गद्यपद्यान्यङ्गपयोधयः ( ४६ ) ।
उवाचेत्येकमेवाथो एकाशीतिरनुष्टुभः ( ८१ ) ॥ १४ ॥

स हेति । यः परीक्षिता पृष्टः स श्रीशुकः ह हर्षेणोवाचेति सूतो वदति । तत्र "दुरत्ययेऽध्वनि" इति व्याचष्टे—य इति । यथाऽयं एष प्रसिद्धो वणिजां सार्थः समूहोऽर्थार्जनपरः कुशकण्टकशर्करादिभिरसुगमे मार्गे पतितोऽटवीं याति तथाऽयं जीवलोको भगवत ईश्वरस्य विष्णोर्वशवर्तिन्या मायया मोहितोऽत एव तत्सुखार्थी सन् स्वदेहनिष्पादितानां कर्मणां दुःखादिफलद्वारेणानुभवो यस्य सः विफलाश्च बहुप्रतियोगाः बहुविघ्नाश्च ईहाश्चेष्टाः क्रिया यस्य तथाभूतः देहात्ममानिनामज्ञानां संबन्धिनो मोहकास्तदध्यासनिमित्तभूता ये सत्त्वादयो गुणविशेषास्तैर्विकल्पितानि भिन्नानि कुशलानि सत्त्वेन पुण्यानि अकुशलानि तमसा पापानि तेषां समवहारभूतानि रजसा मिश्राणीति यानि त्रिविधानि कर्माणि तैर्विनिर्मिताभिर्विविधप्रकाराभिर्देवतिर्यङ्मनुष्यादिदेहावलीभिर्वियोगसंयोगादिलक्षणो योऽनादिः संसारस्तदनुभवस्य द्वारभूतेन पञ्च ज्ञानेन्द्रियमनोलक्षणेन षडिन्द्रियवर्गेण तस्मिन् प्रसिद्धकण्टकादिभिर्दुर्गाध्ववत् प्रसिद्ध-

दुर्गमार्ग इव दुःखशोकश्रमधनव्ययादिसाध्यत्वेनासुगमेऽध्वनि प्रवृत्तिमार्गे आपतितः संसाराटव्यां गतोऽद्यापि तत्तापोपशमनीं तस्यां संसाराटव्यां ये आध्यात्मिकाद्यास्तापास्तेषामुपशमनीं नाशनीं हरिगुरुचरणारविन्देषु ये मधुकरा इव सेवकास्तेषामनुपदवीं तैरनुष्ठितं भक्तिमार्गं नावरुन्धे न प्राप्नोति ॥ १ ॥ "यस्यामिमे" इत्येतद्व्याचष्टे—यस्यामिति। यस्यां भवाटव्याम् ॥ २ ॥ तद्यथेति। तत् इन्द्रियाणां दस्युत्वं यथाऽस्ति तन्निबोधेति शेषः। कुनाथस्य कुबुद्धेरजितात्मनः अवशीकृतचित्तस्य पुरुषस्य यत्किंचिद्बहुना कृच्छ्रेणाधिगतं प्राप्तं साक्षाद्धर्मौपयिकं धर्मैकारणं धनं तद्धर्म्यं धर्मार्हं धनं योऽसौ साक्षात्फलाभिसन्धिमन्तरेणैव परमपुरुषस्य पुरुषोत्तमस्य भगवत आराधनलक्षणो धर्मः स एव धर्मत्वेनाभिप्रेतः। कुतो यतस्तं तु तमेव साम्पराये परलोके परमपुरुषार्थहेतुत्वेनोदाहरन्ति वृद्धाः कथयन्ति तद्धनमिन्द्रियाणि दर्शनादिभिर्यो गृहे ग्राम्य उपभोगस्तेन विलुम्पन्ति नाशयन्तीत्यन्वयः। तत्र दर्शनाद्याः पञ्च ज्ञानेन्द्रियाणां वृत्तयः संकल्पव्यवसायौ मनसः। यथा स्वामिहितचिन्ताशून्यैश्चौरैः सह कृतमैत्रः कुत्सितो नायको रक्षको यस्य तस्य अजितात्मनोऽसावधानचित्तस्य सार्थस्य धनं यथा चौरा विलुम्पन्ति तथेत्यर्थः ॥ ३ ॥

"गोमायवो यत्र हरन्ति" इत्येतद्व्याचष्टे—अथेति। अथ चेत्यर्थान्तरोपन्यासे। यत्र संसारमार्गे कौटुम्बिका नाम्ना दारपुत्रादयोऽपि कर्मणा तु वृकशृगाला एव। यत उचितधर्मस्वशरीरादिनिर्वाहार्थमपि धनव्ययमनिच्छतोऽपि कुटुम्बिन कदर्यस्यातिलुब्धस्य प्रयत्नेन रक्ष्यमाणमपि धनं तस्य मिषतः पश्यत एव त्वं मम भर्त्ता पिता त्वदीयमिदमस्मदर्थमिति वदन्तो हरन्ति। तत्र दृष्टान्तमाह - उरणकवदिति। यथा पालकेन स्वामिना संरक्ष्यमाणमप्युरणकं मेषं वृका बलाद्धरन्ति तद्वदित्यर्थः ॥ ४ ॥ "प्रभूतवीरुत्तृणगुल्मगह्वरे" इत्येतद्व्याचष्टे—यथा हीति। यथा हि अन्नक्षेत्रमनुवत्सरं प्रतिवर्षं हलादिना कृष्यमाणं कषणादिना तृणादिनिःसारणेन शोध्यमानमपि न दग्धानि बीजानि यस्मिंस्तथाभूतं सत् आवपनकाले पुनरेव गुल्मतृणवीरुद्भिर्गह्वरमिव भवत्येवमेवायं गृहाश्रमः कर्मक्षेत्रं यस्मिन् कदापि कर्माणि न ह्युत्सीदन्ति न शाम्यन्ति। तत्र हेतुमाह यदिति। यत् यस्मात् योऽयमावसथ आश्रय स एष कामानां नानाविधमनोरथानां करण्डो भाजनविशेषः। यथा कर्पूरादिभाजने कर्पूराद्यपगमेऽपि तद्वासना न हीयते तथैकमनोरथे सिद्धेऽपि तद्वासना न गच्छति। तथा च मनोरथासमाप्तेस्तत्प्रयुक्तकर्मासमाप्तिरित्यर्थः ॥ ५ ॥ "कठोरदंशैर्मशकैरुपद्रुतः" इत्यादिर्व्याचष्टे—तत्रेति। तत्र गृहाश्रमगतः क्वचिद्दंशकसमैः पीडाकरैरपसदैर्मनुजैः शलभशकुन्ततस्करमूषकादिभिश्चोपरुध्यमानः प्रपीड्यमानो बहिःप्राणः धनं यस्य "वित्तम् बहिश्चराः प्राणाः" इत्यभियुक्तोक्तेः। उपरुध्यमानबहिःप्राण इत्येकं पदम्। अस्मिन्नध्वनि प्रवृत्तिमार्गे परिवर्त्तमानः परिभ्रमन्नविद्यया कामकर्मभिश्चोपरक्तेन व्याप्तेन मनसा हेतुना मिथ्या प्रष्टिदर्शनं ज्ञानं यस्य स गन्धर्वनगरवदनुपपन्नार्थमनुपपन्नाः क्षणान्तरे दुःस्था अघटमानाश्च अर्थाः पदार्था यस्मिंस्तथाभूतं नरलोकमुपपन्नमनश्वरं सत्यमित्यनुक्षणं पश्यति ॥ ६ ॥ प्रपश्यतीति प्रशब्दसूचितमर्थं दर्शयति—तत्रेति। पानभोजनव्यवायादिषु व्यसनेन लोलुपो लम्पटः सार्थः आतपोदकनिभान् मृगतृष्णाजलतुल्यान् प्रारब्धं विना सर्वथा दुर्लभान् मिथ्याभूतांश्च विषयान् स्वीकर्तुं क्वचिदुपधावति सत्यान्मन्यते च ॥ ७ ॥ "क्वचित् क्वचिच्चाशुरयोल्मुकग्रहम्" इत्येतद्व्याचष्टे—क्वचिदिति। कचिच्चाशेषाणां दोषाणां हिंसापरस्त्रीगमनद्यूतमद्यपानादीनां निषदनं स्थानं कारणं पुरीषविशेषम् अग्नेर्विष्ठारूप सुवर्णमुपलक्षणतया परद्रव्यमात्रं तस्य सुवर्णस्येव लोहितो वर्णो यस्य रजोगुणस्य तेन निर्मिता उत्पादिता तद्विषया मतिर्यस्य सः उपादित्सति न्यायतोऽन्यायतो वा उपादातुमिच्छति। यथाऽरण्ये शीतनिवृत्त्येऽग्निकामेन कातरः परवशः अग्निवज्ज्वाज्वल्यमानं ततस्ततो धावन्तमुल्मुकसदृशं पिशाचमग्निबुद्ध्याऽनुधावति न च प्राप्नोति प्राप्तश्चेत्तेन भक्ष्यते। एवं सुवर्णं जिघृक्षुरन्न प्राप्नोति प्राप्नोति चेत्पापरतो नरकमनुभवति ॥ ८ ॥

"निवासतो यद्द्रविणात्मबुद्धिः" इत्येतद्व्याचष्टे —अथेति। अथ निवासो वासः स्थानं पानीयं द्रविणं च इत्यादिषु अनेकेषु आत्मनः स्वस्योपजीव्येष्वभिनिवेशो यस्य स एतस्यां संसाराटव्यामितस्ततः परिधावति ॥ ९ ॥ "कचिच्च वात्योत्थित" इत्येतद्व्याचष्टे—कचिच्चेति। कचिच्चित्कदाचिच्च वात्यया चक्रवातेन सह औपम्यमुपमा यस्याः चाञ्चल्येन मोहोत्पादकत्वेन च चक्रवातसदृश्या प्रमदया आरोहमङ्कमारोपितस्तस्मिन् काले यत् रजः कामवेगः तेन रजस्वलाक्षो विनष्टविवेकः अतिशयेन रजस्वला मतिर्यस्य सः कामान्धः अत एवासाधुमर्यादस्त्यक्तमर्यादो रजनोभूता इवादृश्याः सर्वतः सञ्चारिण्यस्तत्तत्कर्मसाक्षिभूता दिग्देवता न विजानाति। रजनीभूत इति पुंस्त्वपाठे तमोमय इत्यर्थः ॥ १० ॥ "मरीचितोयानभिधावति" इत्येतद्व्याचष्टे—कचिदिति। कचित् स्वयमेव सकृदवगतं विषयाणां वैतथ्यं विफलत्वं दुःखहेतुत्वं च येन स तथाभूतोऽपि पराभिध्यानेन देहात्माभिमानेन विभ्रंशिता स्मृतिर्यस्य सः तथैव विभ्रंशितया स्मृत्यैव स्मृतिभ्रंशादेवेत्यर्थः। दुर्लभत्वेन दुःखहेतुत्वेन मनोरथापूरकत्वेन च मरीचितोयतुल्यांस्तान् विषयानेवाभिधावति तत्प्राप्त्याऽपारक्लिष्टो भवतीत्यर्थः। कचिदातपोदकनिभानित्यत्र मिथ्याविषयेषु लम्पटत्वं निवासतोयेत्यत्र तदर्जनप्रयासः। अत्र बाधितेष्वपि पुनः प्रवृत्तिरुच्यते इत्यपौनरुक्त्यम्। वस्तुतोऽत्र पूर्वाध्यायक्रमोल्लङ्घनेन पौनरुक्त्येनापि चात्राध्याये व्याख्यानं न दोषाय। न हि महाटव्याः सर्वः पन्था ऋजूकरणीय एवेति नियमः ॥ ११ ॥

"अदृश्यझिल्ली" इत्येतद्व्याचष्टे—क्वचिदिति । क्वचिदुलूकझिल्लीस्वनवदतिपरुषः दुःसहः रभस उत्साहस्तेनाटोपः संभ्रमो यथा भवति तथा प्रत्यक्षं परोक्षं वा रिपूणां राजकुलस्य च निर्भर्त्सितेन दुर्वचनेनोतिव्यथितं कर्णमूलं हृदयं च यस्य तादृग्भवति । "अपुण्यवृक्षान्" इति व्याचष्टे—स इति । यदा दुग्धमुपभुक्तं पूर्वं सुकृतं पुण्यं येन स तथाभूतो भवति तदा कारस्करो विषतिन्दुः काकतुण्डश्च निषिद्धवृक्षविशेषस्तत्प्रमुखा येऽपुण्यद्रुमास्तथाविधा लताश्च विषोदपाना विषयुक्ताः कूपाश्च तद्वदुभयार्थशून्यद्रविणान् दृष्टादृष्टप्रयोजनशून्यधनान् जनान् अत एव जीवन्मृतान् स्वयमपि जीवन् म्रियमाण एव उपधावति विषयभोगार्थं धनाशया सेवते ॥ १२ ॥ "क्वचिद्वितोयाः सरितोऽभियाति" इत्यतद्व्याचष्टे-एकदेति । एकदा कदाचिदसतां यः प्रकृष्टः सङ्गस्तस्मात् निकृता वञ्चिता मतिर्यस्य स इह निन्दाहेतुत्वेन परत्र नरकपातादिहेतुत्वेन चोभयतोऽपि दुःखपाखण्डवेदविरुद्धमार्गमभियाति । यथा ह्रदकस्रोतसि निर्जलनदीगर्ते पतितस्य सद्यः शिरः स्फुटति पश्चादपि च तद्वेदना वर्त्तते न चोदकलाभो भवति एवमिह परत्र च दुःखदम् ॥ १३ ॥

"परस्परं चालषते निरन्धः" इत्येतद्व्याचष्टे—यदा त्विति । यदा तु भाग्यहीनत्वात् परकृतया शत्रुकृतया बालकृतया वा बाधया हेतुना परेषां बाधया पीडाप्रदया जीविकयापि वा आत्मने अन्धः अन्नं नोपनमति नोपतिष्ठति तदा पितृपुत्रबर्हिष्मतः पितुः पुत्राणां वा कुशादितृणवदतितुच्छमपि वस्तु येषु विद्यते तान् पितृपुत्रान् वा अपि स भक्षयति बलेन विवादादिना वा बाधते। पितृपुत्रबर्हिष्मानिति वा पाठः ॥ १४ ॥ "आसाद्य दावम्" इत्येतद्व्याचष्टे—क्वचिदिति । दाववत् ज्वलद्वनवत् प्रियार्थविधुरं प्रत्युत असुखं दुःखमुदर्कमुत्तरोत्तरफलं यस्मिंस्तथाभूतं गृहमासाद्य प्राप्य शोकाग्निना दह्यमानः क्वचिद्भृशमत्यन्तं निर्वेदमुपगच्छति विषादं प्राप्नोति ॥ १५ ॥ "क्व च यक्षैर्हृतासुः" इत्येतद्व्याचष्टे—क्वचिदिति । क्वचित्कालेन विषमितं प्रतिकूलतां नीतं यद्राजकुलं तदेव रक्षस्तेनापहृताः प्रियतमा धनरूपा असवो यस्य सः अत एव प्रमृतक इव विगतानि जीवलक्षणानि हर्षचेष्टादीनि यस्य स तथाभूतः शोकमूर्च्छितो वा आस्ते । "शूरैर्हृतस्वः" इत्येतदप्यनेनैव व्याख्यातमिति ज्ञेयम् ॥ १६ ॥ "क्वचिच्च गन्धर्वपुरं प्रविष्टः" इत्येतद्व्याचष्टे—कदाचिदिति । कदाचिन्मनोरथेनोपगतं प्राप्तं पितृपितामहादि असदपि मृतमपि सत् परलोकादागतमिति मत्वा दुःखदमपि सुखदं मत्वा वा स्वप्ननिर्वृतिलक्षणं स्वप्नसुखसदृशं सुखमनुभवति। पूर्वं गन्धर्वनगरवदटमानदर्शनमुक्तमिदानीं तन्निमित्तसुखासक्तिरिति भेदः ॥ १७ ॥ "चलन् क्वचित्" इत्येतद्व्याचष्टे—क्वचिदिति । गृहाश्रमे यः कर्मचोदनाः विधयः उपलक्षणं पुत्रविवाहादेः तासामतिभरोऽतिविस्तारः स एव गिरिस्तमारुरुक्षन् अनुष्ठानेन तदन्त गन्तुमिच्छन् पूर्वमेव प्रतिदिनभोजनाच्छादनादिव्यवहारानिर्वाहनिमित्तसञ्चितऋणादिना क्लिष्टः ततश्च लोके लोकव्यवहारे यद्व्यसनमभिनिवेशस्तेन कर्शितं वशीकृतं मनो यस्य सः प्रतिवेशिभिः कृतं महत्कर्म दृष्ट्वा एते महत्कुर्वन्ति अहं कथं न करोमीति क्षुभितचित्तः कण्टकशर्कराक्षेत्रं प्रविशन्निव क्वचित्सीदति ॥ १८ ॥ "पदे पदेऽभ्यन्तरवह्निनार्दितः" इत्येतद्व्याचष्टे—क्वचिदिति । क्वचिच्च दुःसहेन सोढुमशक्येन कायाभ्यन्तरवह्निना जाठराग्निना गृहीतसारः हृतधैर्यः स्वकुटुम्बाय दारपुत्रादिलक्षणाय क्षुधापीडितो विवशीभूतः क्रुध्यति ॥ १९ ॥ "क्वचिन्निगीर्णः" इत्येतद्व्याचष्टे—स एवेति । य एव दिवसे जाग्रदवस्थायां नानाव्यापारवान् स एव रात्रौ पुनर्निद्रारूपेणाजगरेण गृहीतो दष्टोऽतोऽन्धे तमसि अज्ञानरूपे मग्नः शून्येऽरण्येऽपविद्धस्त्यक्तः शव इव शेते नान्यत्किञ्चन वेदेत्यन्वयः ॥ २० ॥ "दष्टः स्म शेते क्व च दन्दशूकैः" इत्येतद्व्याचष्टे—कदाचिदिति । दुर्ज्जना एव पीडाकरत्वाद्दन्दशूका वृश्चिकादयस्तैर्भग्नो मान एव दंष्ट्रा पीडाकरत्वात् यस्य सः अत एव न लब्धो निद्रायाः क्षणोऽवसरोऽपि येन स व्यथितेन हृदयेन हेतुनाऽनुक्षणं क्षीयमाणं विज्ञानं यस्य सोऽन्धकूपसदृशे महामोहे पतति । तत्र दृष्टान्तमाह—अन्धकूपेऽन्धवदिति । यथान्धकूपे पतितस्यान्धस्य ततो निःसरणं दुर्घटं तथा मोहे निमग्नस्याज्ञस्य ततो निःसरणं दुर्घटमित्यर्थः ॥ २१ ॥

"कर्हि स्म चित् क्षुद्ररसान् विचिन्वन्" इत्येतद्व्याचष्टे—कर्हि स्म चिदिति । कदाचिच्च काममधुलवान् विचिन्वन् भोगजन्यानि मधुवदादौ मनोज्ञानि सुखान्यभिकांक्षन् यदा परदारपरद्रव्याणि परस्त्रीधनवस्त्रादीनि अवरुन्धान आहरन् भवति तदा राज्ञा तत्स्वामिभिर्वा हतोऽपारेऽनन्ते निरये नरके पतति कारागृहादिषु निबद्धो वा भवतीत्यपि ज्ञेयम् । मुक्तस्तत इत्यग्रे वक्ष्यमाणत्वात् ॥२२॥ अथेति । अथच यस्माच्चैवं तस्मादुभयथापि इहामुत्र वा पापं पुण्यं वा लौकिकं शास्त्रीयं च वा कर्मास्मिन् प्रवृत्तिमार्गे आत्मनो जीवस्य संसारावपनं जन्ममरणसंसारस्य कारणमुदाहरन्ति । ऋषयो वेदा वेति शेषः २३ ॥ "तत्रातिकृच्छ्रं प्रतिलब्धमानः" इत्येतद्व्याचष्टे—मुक्त इति । यदि कथंचित्ततो बन्धात् तत्स्वामिदत्तबन्धप्रहारादितः द्रव्यव्ययादिना मुक्तस्तदा तान्परदारान् ततः सकाशादेभ्यो देवदत्त उपाच्छिनत्ति बलादाहरति तस्मादप्यन्यो विष्णुमित्र आहरतीत्येवमनवस्थितिः आहरणपरम्परा भवति न त्वसौ भोक्तुं शक्नोति ॥ २४ ॥ "क्वचिच्च शीतातपे" इत्येतद्व्याचष्टे—क्वचिच्चेति । शीतादयोऽनेका आधिदैविकाद्या या दशा दुःखावस्थास्तासां प्रतिनिवारणेऽकल्पोऽसमर्थो दुरन्तया चिन्तया विषण्ण आस्ते ॥२५॥ "क्वचिन्मिथो विपणन्" इत्येतद्व्याचष्टे—क्वचिदिति । क्वचिन्मिथो यत्किंचद्धनं व्यवहरन् काकिणिकामात्रं विंशतिकपर्दिकामात्रं वा ततोऽपि न्यूनं वा यत्किञ्चिदन्येभ्योऽपहरन् भवति

तदा ततो वित्तशाठ्याद्धनवञ्चनाद्विद्वेषमेति ॥ २६ ॥ अध्वनीति । अमुष्मिन्नध्वनि प्रवृत्तिमार्गे इमे पूर्वोक्ता उरुकृच्छ्रवित्तबाधादयस्तथात्रोक्ताः सुखदुःखरागाद्यश्चोपसर्गाः ॥ २७ ॥ "व्युत्क्रमैः पुनरुक्तैश्च नानापाठैरतः परम् । दुर्गमोऽपि भवाध्वाऽयं संप्रदायेन तीर्यते । "प्रसज्जति क्वापि" इत्यादि व्याचष्टे—क्वापीति । क्वापि देवमायया स्त्रिया स्वभुजलताभ्यामुपगूढोऽतिवद्धः अत एव प्रस्कन्नमपगतं कार्याकार्यविवेकविज्ञानं यस्य सः अत एवाकार्ये प्रवृत्त इत्याह । यस्याः स्त्रिया विहारार्थं गृहारम्भ आकुलं हृदयं यस्य सः तस्याः स्त्रिया आश्रये गृहे अवसक्ताः संलग्नाः सुता दुहितरश्च कलत्रं च तत्सुतवधूः सैव स्त्री च तेषां भाषितावलोकविचेष्टितैरपहृतं हृदयं यस्य सः अजितात्मा एवं प्रवृत्त्या आत्मानमपारेऽन्धे तमसि प्रहिणोति दुरन्तरेऽत्यन्तदुःखहेतौ नरके प्रक्षिपति ॥ २८ ॥

"क्वचित्कदाचिद्धरिचक्रतस्त्रसन्" इत्येतद्व्याचष्टे—कदाचिदिति । कदाचित् ईश्वरस्य भगवतो विष्णोः परमाण्वादिर्द्विपरार्धोऽपवर्गः अन्तो यस्य सः काल उपलक्षणं नामान्तरं यस्य । कालोपलक्षणादिति पृथक्पदपाठे कालस्वरूपादित्यर्थः । परमाण्वादिद्विपरार्द्धापवर्गेण । कालेन उप आधिक्येन लक्षणं यस्य इति वा तस्मात् द्विपरार्द्धापवर्गात् रंहसा अतिवेगेन परिवर्तितेन परिभ्रमणेन वयसा बाल्ययुवादिक्रमेण । आब्रह्मत्यादयः कर्मणि षष्ठ्यः । ब्रह्माणमभिव्याप्य तृण स्तम्बादीनि भूतानि मिषन्त्येव हरतः संहरतः । यद्वा भूतानामायुर्हरत इत्यध्याहारेणान्वयः । अनिमिषतः निमेषमप्यकुर्वतः अप्रमत्तात् चक्रात् वित्रस्तहृदयः तमेवेश्वरं कालचक्रमेव निजमायुधं यस्य तं साक्षाद्भगवन्तं यज्ञपुरुषमनादृत्य कङ्कगृध्रबकप्रायाः कङ्कादयो यथा सिंहसमूहाद्रक्षितुमशक्तास्तथा पाखण्डदेवता अपि कालचक्रतो रक्षितुं सामर्थ्यहीना एवेत्यर्थः । अत एव आर्यसमये शिष्टाचारे परिहृताः सेव्यतया अनङ्गीकृताः पाखण्डदेवताः साङ्केत्येन मूलप्रमाणशून्येन पाखण्डिनिर्मितशास्त्रेणाभिधत्ते सेव्यतयाऽऽदरेण स्वीकरोति ॥ २९ ॥ "तैर्वञ्चित" इत्येतद्व्याचष्टे—यदा त्विति । यदा तु स्वरक्षासंदेहेन यथेष्टधनाद्यदानादात्मना वञ्चितैस्तैः पाखण्डिभिः कालतो रक्षां विनापि धनादिहरणादुरु अधिकं वञ्चितः स्वगणान्निःसारितस्तदा सुस्वभावानां ब्राह्मणानां कुलं समावसन् भवति तत्सङ्गत्या कालाभयमित्येतुमिच्छति । ततश्च तेषां तु शीलमुपनयनगुरुकुलवासादिश्रौतस्मार्तकर्मानुष्ठानेन भगवतः कालचक्रायुधस्य यज्ञपुरुषस्य सर्वकर्मफलदातुराधनमेव तस्य दुष्करत्वात्तदरोचयञ्छूद्रकुलं भजते आदरेणानुसरति । तत्र हेतुमाह । यस्येति । यस्य शूद्रकुलस्य निगमोक्ताचारे अशुद्धितः अधिकाराभावात् वानरजातेः यथा तथा केवलं स्त्रिया मिथुनीभावः कुटुम्बभरणं चैव व्यापारो नाग्निहोत्रसन्ध्योपासनादिः क्लेशावहः अतः शूद्रकुलमनुसरति । यद्वा निगमाचारे या अशुद्धिरुच्यते तयैव यस्य मिथुनीभावः विधवायाः सक्तधवाया वा परिणयः इत्यादि ॥ ३० ॥ "तज्जातिरासेन" इत्यादि व्याचष्टे—तत्रेति । तत्रापि शूद्रसमाजेऽपि प्रविष्टो निरवरोधः धर्ममर्यादादिप्रतिबन्धरहितः अत स्वैरेण स्वेच्छया विहरन् क्रीडन् स्त्रीपुरुषान्योन्यमुखनिरीक्षणादिना ग्राम्यकर्मणा तत्तद्विषयभोगोपयोगिव्यापारेण च विस्मृतः कालावधिर्मृत्युकालो येन स तथाभूतो भवतीति शेषः ॥ ३१ ॥ "द्रुमेषु रंस्यन्" इत्येतद्व्याचष्टे—क्वचिदिति । क्वचिद्द्रुमवद्दैहिकार्थेषु ऐहिकसुखप्रयोजनकेषु गृहेषु रंस्यन् रममाणः । शता आर्षः । सुतदारवत्सल सुतदारादिषु प्रीतियुक्तो व्यवायक्षणः स्त्रीसंभोगलब्धोत्सवः संसारबन्धादात्मानं विमोक्तुं न शक्नोतीति शेषो बोध्यः । विवशः स्वबन्धन इत्युक्तत्वात् तत्र दृष्टान्तमाह । यथा वानर इति । स्त्रीसंभोगासक्तः प्रमत्तो द्रुमेषु रममाणो वानरो यथा लुब्धकेन गृहीत आत्मानं विमोक्तुं न शक्नोति ॥ ३२ ॥ "क्वचित्प्रमादाद्गिरिकन्दरे पतन्" इत्येतद्व्याचष्टे—एवमिति । अध्वनि प्रवृत्तिमार्गे एवं प्रमादेन कर्तव्यं भगवदाराधनं परित्यज्य विषयासक्त्या पापमाचरंस्तत्फलानि विविधदुःखान्यवरुन्धानोऽनुभवन् गिरिकन्दरप्राये तमसि रोगादिमहत्यापदि पतितो मृत्युरूपगजभयात्कम्पितहृदय आस्ते । यद्वा मृत्युभयात्तमसि महारोगोपशमार्थकर्मणि अवरुन्धानः आत्मानमवरुन्धन् भवति ॥ ३३ ॥

प्राग्व्याख्यातमपि वैराग्यार्थं पुनः क्वचिच्छीतेत्यादि व्याचष्टे—क्वचिदिति । शीतवातादिजन्यानि यान्यनेकविधानि दैविकादीनि दुःखानि तेषां प्रतिनिवारणे अकल्पः असमर्थोऽतो दुरन्तविषयविषण्ण आस्ते दुरन्तचिन्तया व्याकुलस्तिष्ठतीत्यर्थः । तत्र शीतातपवातवर्षादिजन्यं देवनिमित्तं दुःखं दैविकं चोरशत्र्वादिप्राणिकृतं भौतिकं शरीरनिमित्तं रोगादिजन्यमात्मीयं तत्रापि हेतूनामनेकविधत्वाद्दुःखानामनेकविधत्वम् ॥३४॥ तदेवं सिंहावलोकनन्यायेनोक्तमर्थं यथास्थानामपकृष्य व्याख्याय क्रमस्थमनुवर्तयितुं पूर्वोक्तमनुवदति—क्वचिदिति । क्वचिन्मिथो व्यवहरन् वित्तशाठ्येन परधनवञ्चनेन यत्किञ्चिद्धनमुपयाति प्राप्नोतीत्यनेनापि दोषवत्त्वं सूचितम् ॥३५॥ "क्वचित्क्वचित् क्षीणधनस्तु" इत्येद्व्याचष्टे—क्वचित् क्षीणधन इति । क्षीणधनत्वादेव शय्याद्युपभोगविहीनः यावत् यदा याच्ञया प्रतिलब्धं यन्मनोरथेनोपगतं वाञ्छितं तस्यादानेऽन्यायेनापि स्वीकारेऽवसिता निश्चिता मतिर्यस्य तथाभूतः सन् यस्य यस्य धनादि स्वीकर्तुं प्रवर्तते तदा ततस्ततो जनादवमानादीनि सर्वतो लभते ॥ ३६ ॥ "अन्योन्यवित्तव्यतिषङ्ग" इत्येतद्व्याचष्टे—एवमिति । एवमनर्थान्तरं शृणिवति शेषः । अन्योन्यं वित्तस्य व्यतिषङ्गे साङ्कर्येणापहारेण तच्छङ्कया वा विवृद्धो वैरानुबन्धो यस्य तथाभूतोऽपि पूर्ववासनया प्रारब्धवशान्मिथ उद्वहति विवाहादिसंबन्धं करोति । अथानन्तरं पुनर्वैरानुसन्धानेनापवहति संबद्धानपि त्यजति ॥ ३७ ॥ "अध्वन्यमुष्मिन्" इत्यादि व्याचष्टे—एतस्मिन्निति । एतस्मिन् संसाराध्वनि जन्ममरणादिसंसारकारणभूते

प्रवृत्तिमार्गे नानाविधैः क्लेशोपसर्गैः पूर्वोक्तैर्बाधितः पीडितः सन् यत्र य आपन्न आपदं प्राप्तो विपन्नो विनष्टो मृतो वा तमितरस्तत्रैव विसृज्य त्यक्त्वा दग्ध्वा वा जातं जातं पुत्रादिकमादाय स्वीकृत्य पुत्रकलत्रादीनां मरणेन शोचन् पुनर्जातजातपुत्रादिग्रहणेन संहृष्यन् हर्षेण गायन् पुनस्तेषां मरणाद्यनुसन्धानेन बिभ्यत् यथा मरणादि न स्यात्तथा तत्तदुपाये विवदन् क्रन्दंश्चैवं मुह्यन् नह्यमानः बध्यमानः साधुभिर्वर्जितः साधुव्यतिरिक्तो वा साधुस्तु तरतीति भावः। यत एष नरलोकसार्थो वेदतिर्यङ्मनुष्यादिसर्गे आरब्धः प्रवृत्तो यं चाध्वनः संसारमार्गस्य पारमुपदिशन्ति वेदा ऋषयो वा वदन्ति तं सर्वकारणकारणं भगवत्पदमद्यापि नैवावर्तते नैव प्राप्नोति ॥ ३८ ॥ यदिति। यदिदं योगानुशासनं भक्तियोगं यच्च भक्तियोगैकगम्यं परं पदं न्यस्तदण्डास्त्यक्तप्राणिद्रोहाः मुनयः मननपराः उपशमशीलाः शान्तचित्ताः उपरतात्मानः सांसारिकविषयविरक्तान्तःकरणा समवगच्छन्ति अनायासेन प्राप्नुवन्ति। एतन्नावरुन्धे न प्राप्नोति ॥ ३९ ॥

यदिति। यदपि यद्यपि येऽपि इति वा यत् यतो ये वै राजर्षयो दिगिभजयिनो यज्विनः यज्ञानुष्ठातारः। आर्षः प्रयोगः। तथापि तेऽपीति वा तत्पदं प्राप्नुवन्ति किन्तु अस्यां भूमौ निमित्तभूतायां ममेयं न तवेति कृतपरस्परवैरानुबन्धाः यां भूमिं विसृज्य स्वयमुपसंहृता मृताः सन्तः परं केवलं मृधे युद्धभूमौ शयीरन् ॥ ४० ॥ "प्रसज्जति इत्यादि गिरिकन्दर इत्यन्तमपकृष्य व्याख्यातं ग्रन्थं प्रतिक्रम्य वल्लीं गृहीत्वा" इत्येद्व्याचष्टे—कर्मेति। आपदि नरके वा पतितस्तत्र प्राचीनकर्मरूपां वल्लीमवलम्ब्य स्थितः कथंचित् दुःखभोगानन्तरं तत आपदो नरकाद्वा विमुक्तः पुनरपि संसाराध्वनि प्रवृत्तिमार्गे वर्तमानो नरलोकसार्थमेवोपयाति अनुसरति न संसारविमोक्षार्थं यतते। एवमुपरि देवलोकं गतोऽपि तत आगत्य नरलोकसार्थमेवोपयाति ॥ ४१ ॥ तस्येति। तस्य भरतस्येदं माहात्म्यं शिष्टाः श्लोकैः उपगायन्ति। राजर्षेः महात्मनः आर्षभस्य ऋषभपुत्रस्य भरतस्यानुवर्त्मेह भूर्लोकेऽन्यो नृपो मनसापि नार्हति भरतानुष्ठितं कर्म कर्तुं नैव शक्नोति किमुत कर्मणा। यथा मक्षिका गरुत्मतो गरुडस्य वर्त्मानुगन्तुं न शक्नोति तद्वदित्यर्थः ॥ ४२ ॥ य इति। उत्तमश्लोकलालसः युवा एव यो दुस्त्यजान् हृदिस्पृशः मनोज्ञान् दारादीन् सुहृद्राज्ययोर्द्वन्द्वैक्यम्। मलवद्विष्ठामिव जहौ तस्यार्षभस्येति सम्बन्धः। यथा मलस्य त्यागे एव सुखम् अत्यागे कष्टं स्मरणेऽपि जुगुप्सा तथैवेत्यर्थः ॥४३॥ य इति। यो नृपो भरतो दुस्त्यजान् क्षीत्यादीन् सुरवरैः प्रार्थ्यां सदयावलोकां भरतस्य दयापि भवत्वित्यवलोकवतीमित्यर्थः। परिजनावलोकः श्रियामुपचर्यते ताम्। यद्वा भरतो वैराग्येण शरीरं कष्टं मा स्वीकरोतु मया लालितो गृह एव तिष्ठतु इति सदयोऽवलोको यस्यास्तां श्रियं च नैच्छत् त्यक्तवानिति यत्तत्तस्योचितमेवेति संबन्धः। तत्र हेतुः महतामिति। यतो मधुद्विषः सेवायामनुरक्तं मनो येषां तेषां महतामभावो मोक्षोऽपि फल्गुस्तुच्छ एवेति ॥ ४४ ॥ यज्ञायेति। यज्ञाय यज्ञरूपाय धर्मपतये यज्ञादिफलदात्रे विधौ नैपुणं निपुणता यस्य तस्मै सर्वकर्मप्रवर्तकाय तदनुष्ठात्रे च योगाय अष्टाङ्गयोगलभ्याय साङ्ख्यशिरसे साङ्ख्यशास्त्रप्रतिपाद्याय प्रकृतीश्वराय प्रकृतिनियन्त्रे नारायणाय नारं जीवसमूहः सोऽयनमाश्रयो यस्य जीवनियन्त्रे हरये नम इत्युदारमुच्चैर्यो मृगत्वं हास्यन् मृगशरीरं त्यक्ष्यन् व्याकुलतादशायामपि समुदाजहार सम्यगुच्चरितवान्। अत्र त्रिभिः पादैः क्रमेण कर्मज्ञानदेवताकाण्डैः प्रतिपादितत्वम्। तस्य भरतस्यानुवर्त्मान्यो नृपो नार्हतीति पूर्वेणैव संबन्धः ॥ ४५ ॥ य इदमिति। भागवतैः सभाजिता सत्कृता भागवतेऽत्र ग्रन्थे स्तुता वा यतोऽवदाताः शुद्धाः गुणाः परोपकारस्वभावादयः कर्माणि च भगवत्परिचर्यादीनि यस्य तस्य राजर्षेर्भरतस्य इदं स्वस्त्ययनं पुत्रोत्पत्त्यादिकारणम् आयुष्यमायुर्वृद्धिकरं धन्यं धनवृद्धिकरं यशस्यं यशोविस्तारकं स्वर्ग्यापवर्ग्यं स्वर्गप्रदं मोक्षप्रदं च अनुचरितं योऽनुश्रृणोत्याख्यास्यत्यभिनन्दति च स आत्मनः एव सकाशात्सर्वा आशिषः कामान् आशास्ते स्व एव प्राप्नोति न तु काञ्चिदप्याशिषं परतः परस्मादाशास्ते ॥ ४६ ॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्दशोऽध्यायः ॥ १४ ॥



# अथ पञ्चदशोऽध्यायः

श्रीशुक उवाच

भरतस्यात्मजः सुमतिर्नामाऽभिहितो यमु ह वाव केचित्पाखण्डिन ऋषभपदवीमनुवर्तमानं चानार्या अवेदसमाम्नातां देवतां स्वमनीषया पापीयस्या कलौ कल्पयिष्यन्ति ॥ १ ॥

अथ पञ्चदशे प्रोक्ता भूपा भरतवंशजाः। चरमे विरजो यत्र गद्यपद्यानि षोडश (१६)॥
उवाचेत्येकं (१) सपादा ऋक्षमाना (२७) अनुष्टुभः॥ १५॥

भरतस्येति। भरतस्यात्मजः पुत्रः सुमतिर्नामाभिहितः कथितो यमु ह वाव यमेव ऋषभपदवीं जीवन्मुक्तमार्गमनुवर्तमानं श्रुत्वा दृष्ट्वा इति वा शेषः। केचित्पाखण्डिनो वेदाचारविमुखा अनार्या दुर्जनाः पापीयस्या पापाचरणतत्परया स्वमनीषया अवेदसमाम्नातां पाखण्डिकपोलकल्पितामिष्टदेवतां कलौ कल्पयिष्यन्ति मंस्यन्ते। यद्वा। यं सुमतिमेव अवेदसमाम्नातां देवतां कल्पयिष्यन्ति। बुद्धोऽयं साक्षादवतीर्ण इति मंस्यन्त इत्यर्थः। अस्माकं सुमतिरेव देवता यथा बुद्ध इति बौद्धसंप्रदायाद्विच्छिद्य कल्पयिष्यन्तीति परे व्याचख्युः॥ १॥ तस्मादिति। तस्मात्सुमतेः वृद्धसेनायां भार्यायाम्॥ २॥ अथेति। अथानन्तरमासुर्याम् आसुरीनाम्न्यां भार्यायां तत्तनयो देवताजितः पुत्रो देवद्युम्नो जातः ततो देवद्युम्नात् धेनुमतीसंज्ञायां परमेष्ठी सुतो जातः। तस्य परमेष्ठिनः सुवर्चलायां प्रतीहः पुत्रः उपजातः॥ ३॥ य इति। यः प्रतीहो बहुभ्यः आत्मविद्यामाख्याय उपदिश्य व्याख्यानेनैव स्वयं संशुद्धः निवृत्तकर्मबन्धनो महापुरुषं भगवन्तमनुसस्मार अपरोक्षतयाऽनुभूतवान्॥ ४॥ प्रतीहादिति। प्रतीहात्सुवर्चलायां प्रतिहर्त्ता प्रस्तोता उद्गातेति त्रयः इज्याकोविदाः यज्ञनिपुणाः सूनवः आसन्। प्रतिहर्त्तुः स्तुत्याम् अजभूमानौ अजनिषातां जातौ॥ ५॥ भूम्न इति। भूम्नः ऋषिकुल्यायाम् उद्गीथः हृदयजः पुत्र आसीत्। ततः उद्गीथात् देवकुल्यायां प्रस्ताव आसीत्। प्रस्तावान्नियुत्सायां विभुरासीत्। विभोः रत्यां पृथुषेणः तस्मात्पृथुषेणादाकूत्यां नक्तः जज्ञे। नक्तात् द्रुतिसंज्ञायां पुत्रो गयो नामासीत्। स च राजर्षिप्रवरः उदारश्रवाः पुण्यकीर्त्तिः जगतो रिरक्षिषया रक्षितुमिच्छया गृहीतं सत्त्वं गुणो येन तस्य भगवतो विष्णोः साक्षात्कला अंशावतार इत्यर्थः। अत एव लोकसंग्रहार्थमात्मयत्त्वादिलक्षणेन ज्ञानित्वादिना महापुरुषतां सर्वजनश्रेष्ठतां प्राप्तः॥ ६॥ स वै इति। राज्ञश्च धर्मो द्विविधः। अभिषिक्तत्वात्प्रजापालनादिरूपः एकः गृहस्थत्वाच्च यज्ञानुष्ठानादिरूपश्चापरः। तत्र प्रजानां पालनं दुष्टेभ्यो रक्षणं पोषणम् अन्नादिभोग्यसम्पादनेन पुष्टीकरणं प्रीणनं प्रियवस्तुदानेन सन्तोषजननम् उपलालनां मधुरवाक्यादिना हर्षोत्पादनम् अनुशासनं शिक्षया सन्मार्गे प्रवर्त्तनम् इत्यादिः। यज्ञादिश्चेति द्विविधोऽपि सर्वात्मनि महापुरुषे परे उत्कृष्टा ब्रह्मादयः अवरे अपकृष्टा यस्मात्तस्मिन्नित्यर्थः। ब्रह्मणि भगवति समर्पितः सन् परमार्थलक्षणः परमपुरुषार्थसाधको भवति तेन तथा ब्रह्मविदां चरणानुसेवया सम्पादितो यो भगवद्भजनमिज्या च तदादिर्यो भक्तियोगस्तेन चाभीक्ष्णशो निरन्तरं परिभाविता संस्कृता अतोऽतिशुद्धा मतिर्यस्य अत एवोपरतमनात्म्यं देहेन्द्रियाद्यहंभावो यस्मिंस्तस्मिन्नात्मनि अन्तःकरणे स्वयमेवोपलभ्यमानं यद्ब्रह्म तस्मिन्नात्मानुभवो यस्य तादृशोऽपि निरभिमान एवावनिमजूगुपत् पालयामास॥ ७॥

तस्येति। हे पाण्डवेय! तस्य गयस्येमां गाथां माहात्म्यकथां पुराविदः उपगायन्ति॥ ८॥ गयमिति। यज्वा यज्ञाद्यनुष्ठाता अभि सर्वतः मानो संमानास्पदीभूतः मनस्वी वा बहुवित् अनेकशास्त्रमतज्ञाता धर्मगोप्ता प्रजापालनानुशासनादिना सर्वरक्षकः समागता सम्प्राप्ता श्रीर्येन सः सदसः सभायाः पतिः सतां सेवकः एवं सर्वगुणसम्पन्नोऽपि भगवत्कलामृते भगवदवतारं विनाऽन्यो यज्वादिरूपोऽपि गयं नृपं कर्मभिः कः प्रतियाति सदृशो भवितुमर्हति न कोऽपि॥ ९॥ यमिति। सत्या यथार्थाः आशिषो यासां ताः यतः सतीः सत्यः पतिव्रताः। पूर्वसवर्णदीर्घ आर्षः। दक्षकन्याः श्रद्धामैत्रीदयाद्याः यं गयं सरिद्भिः सत्सरिज्जलैरभ्यषिञ्चन्। यस्य प्रजापालनानुशासनादिगुण एव वत्सस्तेन स्नुतमूधो यस्या गोरूपायाः सा धरा पृथिवी यस्य निराशिषो निष्कामस्यापि प्रजानामाशिषः सर्वान् कामान् दुदुहे प्रपूरयामास। तं गयं कः प्रतियातीति सर्वयच्छन्दानां पूर्वेणैव संबन्धः॥ १०॥ छन्दांसीति। यस्य अकामस्य कामनारहितस्यापि कामान् छन्दांसि वेदास्तद्विहितानि कर्माणि च दुदुहुः। दैर्घ्यमार्षम्। अथो तथा युधि

प्रत्यञ्चिताः बाणैः प्रतिपूजिता नृपाः यस्य बलिमाजह्नुः धनादिकमर्पयामासुः। तथा धर्मेण प्रजापालनदानादिलक्षणेन यदा विप्रादयः प्रजाः प्रत्यञ्चितास्तदा परेत्य लोकान्तरे आशिषां शुभकर्मफलानां षष्ठमंशमाजह्नुः। "पुण्यषड्भागमादत्ते न्यायेन परिपालयन्"। इति स्मृतेः ॥ ११ ॥ यस्येति। उरुसोमपीथे बहुसोमपाने यस्याध्वरे मघोनि इन्द्रे मार्घात मदं प्राप्नुवति सति श्रद्धया विशुद्धो योऽचलो भक्तियोगस्तेन समर्पितमिज्याफलमध्वरात्मा यज्ञमूर्त्तिर्भगवानाजहार प्रत्यक्षतोऽर्हणमिव स्वयं स्वीकृतवानित्यर्थः ॥ १२ ॥ यदिति। यत् यस्य भगवतः सर्वात्मनः प्रीणनात् आविरिञ्च्यात् ब्रह्माणमभिव्याप्य देवतिर्यगादि तृणान्तं सर्वं सद्यः प्रीयेत प्रीतिं गच्छेत्। सह विश्वं जीवयतीति विश्वजीवः सर्वान्तर्यामी स्वयं प्रीतः सर्वदा प्रसन्नचित्तोऽपि गयस्य बर्हिषि यज्ञे प्रीतिमगात्। हे राजंस्तव पूजयाऽहं तृप्तोऽस्मि प्रसन्नोऽस्मीत्युक्तवान् ॥ १३ ॥ गयादिति। द्वौ स्पष्टौ ॥ १४-१५ ॥ तत्रायं श्लोकः प्रैयव्रतमिति। चरमोद्भवः प्रियव्रतवंशे अन्ते जातो विरजः स्वकीर्त्या पुण्ययशसा इमं प्रैयव्रतं वंशमत्यलमकरोत् अतिशयेन भूषितवान्। यथा सुरोत्तमो विष्णुः स्वतेजसा विजयसम्पादनात्सुरगणमत्यलंकरोति तद्वत् ॥ १६ ॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धे पं० गङ्गासहायकृतायामन्वितार्थप्रकाशिकायां पञ्चदशोऽध्यायः ॥ १५ ॥



## अथ षोडशोऽध्यायः

राजोवाच

उक्तस्त्वया भूमण्डलायामविशेषो यावदादित्यस्तपति यत्र चासौ ज्योतिषां गणैश्चन्द्रमा वा सह दृश्यते ॥१॥

षोडशे मेरुर्द्धराब्जकर्णिकास्त्राङ्गसंयुता। जम्बूद्वीपे वर्णितोऽत्र त्रिंशद्गद्यमितिर्भवेत् ( ३० ) ॥

द्वे ( २ ) उवाचेति पादोना द्विपञ्चाशदनुष्टुभः ( ५१॥। ) ॥ १६ ॥

उक्त इति। त्यावदादित्यस्तपति प्रकाशयति तत्पर्यन्त इति यत्र च ज्योतिषां गणैर्नक्षत्रसमूहैः सह चन्द्रमा दृश्यते तावान् तत्पर्यन्तश्च भूमण्डलस्य आयामविशेषो विस्तारविशेषस्त्वयोक्तः ॥ १ ॥ तत्रेति। हे भगवन्! तत्रापि भूमण्डले प्रियव्रतस्य सूर्यस्य पृष्ठतो मेरुं प्रदक्षिणीकुर्वतो रथचरणेन रथचक्रेण परितः सर्वतः खातैर्गतः सप्तभिः सप्तसिन्धव उपक्लृता उक्ताः यतो येभ्यः सप्तभ्य सिन्धुभ्य एव तस्या भुवः सप्तद्वीपविशेषविकल्पः सप्तद्वीपरचनाविशेषस्त्वया खलु निश्चये सूचितः सामान्यतः प्रदर्शितः। एतत्सामान्यत उक्तमेवाखिलं मानतः लक्षणतः असाधारणचिह्नतश्च सर्वं विशेषतो जिज्ञासामि ज्ञातुमिच्छामि। तङभाव आर्षः ॥ २ ॥ भगवत इति। हे गुरो! हि यस्मात् भगवतः गुणमये स्थूलरूपे विराड्विग्रहे आवेशितं स्थिरीकृतं मनः सूक्ष्मतमे दुर्दर्शे आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये अगुणेऽपि आवेशितुं स्थिरीकर्त्तुम्। णिलोपः आर्षः। क्षमं योग्यं भवति तत्तस्मात् उ ह एव एतत् ब्रह्माण्डात्मकं स्थूलं रूपं कृपया वर्णयितुमर्हसि। तथा च नाहं बहिर्मुखतया चित्तचमत्कारार्थं श्रोतुमिच्छामि किन्तु भगवत्परतया तस्मिन्मनः समाधानार्थमेवेत्याशयः। परे त्वत्र मयेति कर्तृपदानुक्त्या अत्रत्यानां मनोनिधित्सयैव मया पृच्छयते। मम तु त्वन्मुखोद्गतभगवद्गुणश्रवणमेव तत्प्राप्तिसाधनमिति द्योतितमित्याहुः ॥ ३ ॥ न वै इति। हे महाराज! भगवतो मायया ये गुणाः सत्त्वादयस्तेषां विभूतेर्विस्तारस्य काष्ठामन्तं विबुधा देवास्तेषामप्यायुषा पुरुषो मनसाऽधिगन्तुं ज्ञातुं वचसा वक्तुं वा यस्मान्न वै अलं नैव समर्थः तस्मात्प्राधान्येनैव भूगोलकविशेषं नामतः रूपतः सन्निवेशतः मानतः विस्तारतो लक्षणतः असाधारणचिह्नतश्च व्याख्यास्यामः विशेषेण प्रकथयिष्यामः ॥ ४ ॥ यो वा इति। कुवलयं भूमण्डलं तदेव कमलं तस्य कोशा इव सप्त द्वीपास्तेष्वभ्यन्तरकोशो यो वाऽयं प्रथमो जम्बूद्वीपः स नियुतयोजनविशालो लक्षयोजनविस्तीर्णः समवर्तुलः सर्वतः समपरिमाणो बर्तुलश्च यथा पुष्करपत्रम् ॥ ५ ॥

यस्मिन्निति । यस्मिन् जम्बूद्वीपेऽष्टाभिर्मर्यादागिरिभिः सुविभक्तानि पृथक्कृतानि नव वर्षाणि रम्यकहिरण्मयादीनि प्रत्येकं नवयोजनसहस्रमायामो येषां तथाभूतानि भवन्ति । आयामोऽत्र विस्तारः । वर्षाणां सन्निवेशस्तु वायुपुराणे उक्तः । "धनुर्वत्सं स्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे । दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम् ।" इति दक्षिणोत्तरे दक्षिणोत्तरप्रान्तस्थिते भारतोत्तरकुरुवर्षे चत्वारि किम्पुरुषहरिवर्षरम्यकहिरण्मयानि । केचित्तु नीलनिषधयोस्तिरश्चीनीभूय समुद्रं प्रविष्टयोः संलग्नत्वमङ्गीकृत्य भद्राश्वकेतुमालयोरपि धनुराकृतित्वम् । अत एव तयोर्दैर्घ्यत एव मध्ये सङ्कुचितत्वेन नवसहस्रायामत्वम् । इलावृतस्य तु मेरोः सकाशाच्चतुर्दिक्षु नवसहस्रायामत्वं भवेत् इत्याहुः ॥ ६ ॥ एषामिति । एषां वर्षाणां मध्ये इलावृतं नामाभ्यन्तरं वर्षं तस्य नाभ्यां मध्ये सर्वतः सौवर्णः सुवर्णमयः कुलगिरीणां श्रेष्ठत्वेन गणितानां पर्वतानां राजा द्वीपायामसमुन्नाहः जम्बूद्वीपस्य आयामो विस्तारो यावां स्तावान् लक्षयोजनं समुन्नाह उच्छ्रायो यस्य मेरुः कुवलयकमलस्य कमलसदृशस्य भूमण्डलस्य कर्णिकाभूत इवावस्थितोऽस्ति । मेरोर्विस्तारं वदन् कर्णिकात्वं सम्पादयति—मूर्धनीति । मूर्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडशसहस्रयोजनविततः तावता षोडशसहस्रयोजनमानेन भूम्यामन्तःप्रविष्टश्चतुरशीतियोजनसहस्रमानेन बहिर्दृश्यते । एवं लक्षयोजनोन्नाहः ॥ ७ ॥ उत्तरेति । इलावृतमुत्तरोत्तरेण इलावृतस्योत्तरात्तरतः क्रमेण स्थिता नीलः श्वेतः शृङ्गवानिति त्रयः क्रमेण स्थितानां रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयो विभाजकाः पर्वताः प्रागायताः पूर्वपश्चिमतो दीर्घा उभयतः क्षारोदः समुद्र एवावधिर्येषां ते तथोभयतः समुद्रलग्ना द्विसहस्रपृथवः पृथुत्वे द्विसहस्रयोजनविस्तीर्णाः अयुतयोजनोत्सेधा इत्यपि ज्ञेयम् । पूर्वस्मात्पूर्वस्मात् दक्षिणतो दक्षिणतः स्थितात् उत्तरोत्तरस्थित एकैकशो दशांशादीपदधिको योंऽशस्तेन दैर्घ्य एव ह्रसन्ति न तूच्चत्वे पृथुत्वे वा । यथोक्तं विष्णुपुराणे—"लक्षप्रमाणौ द्वौ मध्ये दशहीना स्तथापरे ।" इति इदमपि स्थूलं मध्ययोरपि यथावन्मध्यगत्वाभावेन लक्षप्रमाणत्वाभावात् द्वीपस्य मण्डलाकारत्वात् ॥ ८ ॥ एवमिति । यथा नीलादय उक्ताः एवं दक्षिणेनेलावृतमिलावृतस्य दक्षिणतो दक्षिणतः क्रमेण निषधो हेमकूटो हिमालय इति त्रयः प्रागायताः पूर्वपश्चिमतो दीर्घा उभयतः समुद्रसंलग्नाः द्विसहस्रयोजनपृथवः अयुतयोजनमुत्सेध उच्छ्रायो येषां ते अयमुत्सेधो नीलादीनामपि ज्ञेयः । नीलादीनामिव पृथुत्वमेषामपि द्रष्टव्यं तथा क्रमेण स्थितानां हरिवर्षकिंपुरुषभारतसंज्ञानां वर्षाणां यथासंख्यं मर्यादागिरयः । तत्राप्युत्तरत उत्तरतः स्थितादक्षिणतो दक्षिणतः स्थित एकैकशो दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति न तूच्चत्वे पृथुत्वे वेति पूर्ववत् ज्ञेयम् ॥ ९ ॥

तथेति । तथैवेलावृतमपरेण पूर्वेण च इलावृतस्य पश्चिमतः पूर्वतश्च यथाक्रमेण स्थितो आनीलनिषधायतौ उत्तरतो नीलपर्वतपर्यन्तं दक्षिणतो निषधपर्वतपर्यन्तं च दीर्घौ चतुस्त्रिंशत्सहस्रयोजनदीर्घावित्यर्थः । माल्यवद्गन्धमादनौ मर्यादापर्वतौ द्वियोजनसहस्रं पप्रथतुर्विस्तीर्णौ भवतः । तङ्भाव आर्षः । अयुतयोजनोत्सेधावित्यपि ज्ञेयम् । तौ इलावृतस्य पश्चिमतः पूर्वतश्च स्थितयोः केतुमालभद्राश्वयोर्वर्षयोः सीमानं विदधाते ॥ १० ॥ मन्दर इति । अयुतयोजनपरिमाणौ विस्तारोन्नाहौ येषां ते तथाभूताः । विस्तारोऽत्र दैर्घ्यं मेर्वादयश्चत्वारो गिरयो मेरोश्चतुर्दिशं तस्यावष्टम्भभूता उपक्लृप्ताः परमेश्वरेण रचिताः सन्ति । तेषां च सुवर्णमयत्वं मन्थानाकृतित्वम् च बहूनमरदानवान् "चूर्णयामास महता भारेण कनकाचल" इत्यष्टमस्कन्धे वक्ष्यमाणेन मन्दरस्य मन्थानत्वकरणेन च ज्ञेयम् ॥ ११ ॥ चतुर्ष्विति । एतेषु मन्दरादिषु चतुर्षु चूतादयश्चत्वारः अधिसहस्रमेकादशशतानि योजनान्युन्नाह उच्छ्रायो येषां तावती एकादशशतयोजनप्रमाणा विटपविततिर्येषां शतयोजनं परिणाहो विस्तारः परितः स्थौल्यं येषां तथाभूताः पादप्रवराः पर्वतानां तेषां केतव इव स्थिताः सन्ति ॥ १२ ॥ ह्रद इति । हे भरतर्षभ ! जलस्थाने मध्वादयो येषु तथाभूताश्चत्वारो ह्रदाश्च प्रत्येकं चतुःषु पर्वतेषु सन्ति । यदुपस्पर्शिनो यत्सेविन उपदेवगणाः स्वाभाविकानि योगप्रयत्नं विनैव सिद्धानि अणिमाद्यैश्वर्याणि धारयन्ति ॥ १३ ॥ देवेति । नन्दनादीनि चत्वारि देवोद्यानानि च तेषु चतुर्षु भवन्तीत्यर्थः ॥ १४ ॥ येष्विति । सुरललना देवस्त्रियस्तासामपि ललामानि भूषणभूता याः श्रेष्ठाः स्त्रियस्तासां यूथपतय उपदेवगणैर्गन्धर्वादिभिरुपगीयमानो महिमा येषां तेऽमरपरिवृढा विबुधश्रेष्ठास्ताभिः सह संभूय येषु विहरन्ति ॥ १५ ॥ मन्दरेति । मन्दरस्योत्सङ्ग एकादशशतयोजनमुत्तुङ्गो यो देवचूतनामक आम्रवृक्षस्तस्य शिरसः सकाशात् गिरिशिखरवत्स्थूलानि अमृततुल्यानि मिष्टानि फलानि पतन्ति । फलप्रमाणं वायुपुराणे । "अरत्नीनां शतान्यष्टावेकषष्ट्यावेकषष्ट्यधिकानिच । फलप्रमाणं निर्दिष्टं मुनिभिस्तत्त्वदर्शिभिः ।" इति ॥१६॥ तेषामिति । तेषां फलानामुच्चनिपातेन विशीर्यमाणानां योऽतिमधुरश्चासौ स्वतः सुरभिश्चासौ सुगन्धिः अन्येषां गन्धैरधिवासितश्च बहुलश्चारुणश्च रसः स एवोदमुदकं तेन जाता अरुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्वेण पूर्वदिशि इलावृतमुपप्लावयति व्याप्य वहति ॥ १७ ॥ यदिति । यदुपजोषणात् यस्य रसस्य पानात् । स्पष्टं शेषम् ॥ १८ ॥

एवमिति । अत्युच्चदेशान्निपातेन विशीर्णानाम् अनस्थिप्रायाणामतिसूक्ष्मबीजानाम् इभकायनिभानां हस्तिदेहतुल्यानां जम्बूफलानां रसेन जाता जम्बू नाम नदी यत्र निपतन्ती भवति । तत आरभ्य दक्षिणेनात्मानमात्मनो दक्षिणतः यावत् सर्वमिलावृतमभिव्याप्योपस्यन्दयति प्रवहतीत्यर्थः । तथा च यावदिलावृतं तावदात्मानं वर्द्धयन्ती नवयोजनसहस्रं निःसृतेति ॥ १९ ॥

तावदिति । तस्या उभयोरपि रोधसोस्तटयोर्या मृत्तिका तस्या रसेनानुविध्यमाना विक्लिद्यमाना तावत्सर्वतः वाय्वर्कसंयोगाद्विपाकेन सदा सर्वदाऽमरलोकाभरणं जाम्बूदं नाम सुवर्णं भवति ॥ २० ॥ यदिति । यत्सुवर्णं विबुधादयो युवतिभिः सह मुकुटाद्याभरणरूपेण धारयन्ति ॥ २१ ॥ य इति । यस्तु सुपार्श्वनिरूढो महाकदम्बस्तस्य कोटरेभ्यो विनिःसृता याः पञ्चायामपरिणाहाः आयामोऽत्र व्यामः स च "व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।" इत्युक्तलक्षणः पञ्च व्यामाः परिणाहः स्थौल्यं यासां तथाभूताः केचित् पञ्चव्यामपरिणाहा इत्येव पठन्ति । पञ्च मधुधारा सुपार्श्वशिखरात्पतन्त्योऽपरेणात्मानमात्मनः पश्चिमत इलावृतमनुमोदयन्ति शोभयन्ति । तत्रत्यं प्राणिजातं हर्षयन्तीति वार्थः ॥ २२ ॥ या इति । उपयुञ्जानानां सेवमानानां प्राणिनाम् ॥ २३ ॥ एवमिति । मुकुदे निरूढो यः शतस्कन्धत्वात् शतवल्शो नाम वटः तस्य स्कन्धेभ्यः नीचीना अधोमुखाः पयआदिप्रवाहिणः सर्व एव कामदुघाः सर्वमनोरथपूरका नदाः कुमुदाग्रात्पतन्तस्तमुत्तरेणात्मन उत्तरत इलावृतं योजयन्ति उत्तरदिशि प्रवहन्तीत्यर्थः ॥ २४ ॥ यानिति । यान् नदसंबन्धिपदार्थान् पयआदीनुपजुषाणानामुपभुञ्जानानाम् । मुगभाव आर्षः । प्रजानां कदाचिदपि वलीपलितादय उपसर्गादयस्तापविशेषाश्च न भवन्ति । किंतु यावज्जीवं निरतिशयं सर्वोत्कृष्टं सुखमेव तिष्ठन्तीत्यन्वयः । वली शरीरत्चर्मसंकोचः पलितं केशशौक्ल्यं क्लमः शरीरे श्रान्तिः स्वेदादयः प्रसिद्धाः मृत्युः अपमृत्युःउपसर्गादयः पूर्वं मूल एवोक्ता विवृताश्च ज्ञेयाः ॥२५॥ कुरङ्गेति । स्पष्टम् ॥ २६ ॥

जठरेति । मेरुं पूर्वेण मेरोः पूर्वतः जठरदेवकूटसंज्ञौ पर्वतौ भवतः तिष्ठत इत्यर्थः । अष्टादशयोजनसहस्रप्रमाणमुदगायतौ दक्षिणोत्तरतो दीर्घौ द्वियोजनसहस्रं पृथू तुङ्गौ च एवमपरेण मेरोः पश्चिमतः पवनपारियात्रसंज्ञौ तिष्ठतः तावपि दक्षिणोत्तरतोऽष्टादशयोजनसहस्रं दीर्घौ द्वियोजनसहस्रं पृथू तुङ्गो च तथा मेरोर्दक्षिणतः कैलासकरवीरो प्रागायतौ पूर्वपश्चिमतोऽष्टादशयोजनसहस्रं दीर्घौ द्वियोजनसहस्रं पृथू तुङ्गौ च तथा मेरोर्दक्षिणतः कैलासकरवीरो प्रागायतौ पूर्वपश्चिमतोऽष्टादशयोजनसहस्रं दीर्घौ द्वियोजनसहस्रं पृथू तुङ्गौ च भवतः । एतेषां जठरादीनां रजतमयत्वं कैलासस्य राजतत्वप्रसिद्धया तत्साद्दश्येन ज्ञेयम् । चतुर्दिक्षु मेरुमूलाद्योजनसहस्रं त्यक्त्वाग्नेः परितः परिधय इव जठरदेवकूटादयस्तिष्ठन्ति अतोऽष्टादशसहस्रयोजनप्रमाणमत्रोक्तम्—"वैष्णवादिपुराणेषु परिमाणादि यत्पुनः । अन्यथा वर्णितं तत्तु कल्पभेदाद्यपेक्षया" । इति स्वामिपादाः एतैरष्टाभिर्गिरिभिः परितः परिस्तृतः आवृतः काञ्चनगिरिर्मेरुः परिधिपरिस्तृतः कुण्डे ज्वलन्नग्निरिव चकास्ति ॥ २७ ॥ मेरोरिति । मेरोर्मूर्द्धनि मध्यतः उपक्लृप्तां भगवत आत्मयोनेर्ब्रह्मणः पुरीं समचतुरस्रां शातकौम्भीं सुवर्णमयीं मनोवतीं नाम सहस्राणि परिमाणं यस्याः सा साहस्री । शतमानेऽत्यणन्तान्ङीप् । अयुतयोजना चासौ साहस्री च अयुतयोजनसाहस्रीं वदन्ति । सहस्रशब्देन विष्णुपुराणानुसारेण चतुःसहस्री गृह्यते तेन चतुर्दशसहस्रविस्तृता । यदि तु सहस्रशब्दः सामान्यतः प्रमाणवाच्येव व्याख्यायते तदा अयुतयोजनप्रमाणामित्यर्थः । विष्णुपुराणे तु–"चतुर्दशसहस्राणि योजनानां महापुरी । मेरोरुपरि मैत्रेय ब्रह्मणः प्रथिता दिवि" । इति ॥ २८ ॥ तामिति । तां ब्रह्मपुरीमनु परितोऽन्येषामष्टानां लोकपालानां यथादिशं प्राच्यादिदिक्षु यथारूपं यथाऽनुरूपं तुरीयमानेन ब्रह्मपुरीविस्तारस्य चतुर्थभागप्रमाणेन सार्धत्रिसहस्रयोजनविस्तारेणाष्टौ पुर उपक्लृप्ता रचिताः सन्ति । तासां नामानि तु–"मेरौ नव पुराणि स्युर्मनोवत्यमरावती । तेजोवती संयमनी तथा कृष्णाङ्गना परा । श्रद्धावती गन्धवतो तथा चान्या महोदया । यशोवतो च ब्रह्मेन्द्रहुताशयमरक्षसाम् । वरुणानिलयोः श्रीदेशानयोश्च यथाक्रमम्" । अत्र तुरीयमानेनेत्यस्य सार्द्धद्विसहस्रप्रमाणेनेति प्राचां व्याख्यानम् । ब्रह्मपुर्या अयुतयोजनमात्राभिप्रायं साहस्रशब्दस्तत्र प्रमाणमात्रार्थः । पूर्वं तु अयुतयोजनसाहस्रोमित्यत्र साहस्रोशब्दवैयर्थ्यभयाद्विष्णुपुराणानुसारेण चतुर्दशसहस्रपरतया व्याख्यातम् इत्यलम् ॥ २९ ॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धे पं० गङ्गासहायकृतायामन्वितार्थप्रकाशिकायां टीकायां षोडशोऽध्यायः ॥ १६ ॥

—॥❀॥—

# अथ सप्तदशोऽध्यायः

श्रीशुक उवाच

तत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टा या बाह्यजलधारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरंजिताखिलजगदघमलापहोपस्पर्शनाऽमला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोऽभिधीयमानाऽतिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्धन्यवततार यत्तद्विष्णुपदमाहुः ॥ १ ॥

अथ सप्तदशे गङ्गाया गतिर्मेरोश्चतुर्दिशम् । स्तौति संकर्षणं रुद्रोऽनुष्टुभोऽत्र खमार्गणाः ( ५० ) ॥
तत्त्वानि ( २५ ) गद्यादीनि स्युः द्वे उवाचेति कीर्तिते ॥ १७ ॥

तत्रेति । तत्र यदा वामनावतारो जातस्तदा यज्ञलिङ्गस्य बलेर्यज्ञे लिङ्गं वामनमूर्तिर्यस्य तस्य साक्षाद्भगवतो विष्णोर्विक्रमतो दक्षिणेन पदा भुवं क्रान्त्वा वामं पादमुत्क्षिपतः । शता दीर्घाभावश्चार्षौ । वामपदाङ्गुष्ठनखेन निर्भिन्नमूर्ध्वमुपरि भागो यस्य तस्याण्डकटाहस्य विवरेणान्तःप्रविष्टा त्रिसाम्यसदनादुरुकम्पयानमिति ब्रह्मोक्तौ तस्य प्रकृत्यावरणपर्यन्तं प्राप्तिश्रवणात् । बाह्या पृथिव्याद्यष्टावरणबहिर्भूता कारणार्णवसम्बन्धिनी चिन्मयी या जलधारा तस्य भगवतश्चरणपङ्कजस्यावनेजनं प्रक्षालनं तेनारुणं यत्तद्गतं कुङ्कुमं तदेव किञ्जल्काः केसरास्तैरुपरञ्जिता अखिलानां सर्वेषां स्वसम्बन्धिनां जगतां प्राणिनामघान्यन्तःपापानि मलानि बहिष्ठान्यपहन्तीति तथाभूतमुपस्पर्शनं यस्याः सा अमला अन्येषां पापमलादिनिराकरणेऽपि स्वयं तत्संसर्गरहितैव साक्षात् भगवत्पदसम्बन्धाद्भगवत्पदीति यदनुपलक्षितं जाह्नवी भागीरथीत्यादिनाम्नां भूम्यवतरणानन्तरजातत्वात्तत्समये तदुपलक्षणरहितं यद्वचो नाम तेनाभिधीयमाना भगवत्पदीति नाम्ना व्यवह्रियमाणा युगसहस्रोपलक्षणेन अतिमहता कालेन दिवो मूर्द्धनि ध्रुवलोकेऽवततार । तथा च चतुर्युगसहस्रग्रहणे ब्रह्मणो दिनपरिमितकालोक्त्या तस्य रात्रौ ध्रुवलोके गङ्गावतरणं सिद्ध्यति । तस्यापि दिवो मूर्द्धत्वोक्त्या त्रिलोक्या बहिष्ठत्वेन प्रलये नाशाभावात् । यथा श्रुतयुगसहस्रग्रहणे तु तद्दिन एव तत्र गङ्गावतरणं संभवतीत्यपि ज्ञेयम् । कोऽसौ दिवो मूर्धा तमाह । यदिति । यत्तत् प्रसिद्धं दिवो मूर्द्धरूपं विष्णुपदमाहुः ॥ १ ॥ यत्रेति । यत्र लोके ह वाव परमभागवतः अनुसवनं प्रतिक्षणमुत्कृष्यमाणः संवर्द्धमानो यो भगवद्भक्तियोगस्तेन दृढमत्यन्तं क्लिद्यमानमन्तर्हृदयं यस्य सः अत एवौत्कण्ठ्येन विवशमामीलितं यल्लोचनयुगलं तदेव कुड्मले ताभ्यां विगलितममलं बाष्पं तस्य कलया सहाभिव्यज्यमानं रोमपुलकानां कुलकं यस्य स वीरव्रतः दृढसंकल्पः औत्तानपादिः ध्रुवोऽस्मत्कुलदेवताया भगवतश्चरणारविन्दोदकमिति निश्चयेनाद्यापि यां गङ्गां परमादरेण शिरसा बिभर्ति साऽवततारेति पूर्वेणान्वयः । पुलककुलक अधुनाऽपीत्यार्षः पाठः । कुलकोऽधुना इति तु साधुरेव ॥ २ ॥ तत इति । ततोऽधस्तात् तस्याः गङ्गायाः प्रभावस्याभिज्ञाः ननु तपस आत्यन्तिकी परमोत्कर्षापन्ना सिद्धिः फलमेतावती भगवच्चरणोदकप्राप्तिरेव नातोऽधिकास्तीत्यभिप्रायवन्तः भगवति सर्वात्मनि वासुदेवेऽनुपरतो निरन्तरो यो भक्तियोगस्तस्य लाभेनैव कृतार्थत्वेनोपेक्षिता अन्ये धर्मादयः पुरुषार्था आत्मगतिरात्मज्ञानं च यैस्ते सप्तर्षयो यां गङ्गां सबहुमानं यथा तथाऽद्यापि जूटाजूटैरुद्वहन्ति धारयन्ति । यथा प्रत्यक्षत आगतां मुक्तिं मुमुक्षवो जना यथा बहुमानेनाङ्गीकुर्वन्ति तथेत्यर्थः ॥ ३ ॥ तत इति । ततः सप्तर्षिस्थानादनेकसहस्रकोटीनां विमानानामनीकैः सङ्कुलेन व्याप्तेन देवयानेन देवलोकमार्गेणाकाशमार्गेणावतरन्ती चन्द्रमण्डलमावार्य आप्लाव्य मेरुमूर्द्धस्थे ब्रह्मसदने निपतति । अत्र न कर्मभिस्तां गतिं प्राप्नुवन्ति । "विद्यातपोयोगसमाधिभाजम्" इत्युक्तानुसारेण सप्तर्षिभ्योऽर्वागेव प्रायशः कर्मिणां गतिरिति ततोऽर्वागेव तद्विमानसङ्कुलत्वमुक्तमिति ज्ञेयम् ॥ ४ ॥ तत्रेति । अभिस्यन्दती अभितो गच्छन्ती । नुमभावः शता चार्षौ । स्पष्टमन्यत् ॥ ५ ॥ सीतेत्यादीनि चतसृणां नामानि केसराचलानां मेरुसमानोच्छ्रायत्वात् समीपत्वाच्च । सीता तु ब्रह्मसदनात् प्रथमं तेषामादिशिखरेषु मुख्यशृङ्गेषु पतित्वा तेभ्योऽधोऽधः प्रस्रवन्ती सती गन्धमादनस्य मूर्द्धसु पतित्वा ततो भद्राश्ववर्षमन्तरेण भद्राश्वखण्डस्य मध्यतः पतित्वा इलावृतमुल्लङ्घ्येत्यर्थः । प्राच्यां दिशि क्षारसमुद्रमभिविशति ॥ ६ ॥

एवमिति । एवं चक्षुःसंज्ञापि ब्रह्मसदनात् केसराचलादिशिखरेषु पतित्वा ततो माल्यवच्छिखरे निपत्य अनुपरतवेगा सती ततः केतुमालवर्षमभिलक्ष्य केसराचलात्तदभिमुखं निपतन्ती तन्मध्येन प्रतीच्यां दिशि सरित्पतिं समुद्रं प्रविशति ॥ ७ ॥

भद्रेति। भद्रा चोत्तरतो मेरुशिरसः केसराचलादिगिरिशिखरे पतित्वा तत उच्चलन्ती नीलगिरिशिखरं निपत्य तत उच्चलिता श्वेतगिरिशिखरं पतित्वा तदप्यतिहाय त्यक्त्वा शृङ्गवतः शृङ्गं प्राप्य इलावृतादिवर्षत्रयमुल्लङ्घ्य इत्यर्थः। ततस्तूत्तरान् कुरूनभिलक्ष्याभितोऽवस्यन्दमाना प्रस्रवन्ती उदीच्यां दिशि जलधिमभिप्रविशति॥ ८॥ तथेति। तथैवालकनन्दापि दक्षिणतो ब्रह्मसदनात्पतिता बहूनि केसराचलादिकैलासनिषधादीनि गिरिकूटान्यतिक्रम्य हेमकूटं गिरिं प्राप्य ततोऽप्यतिरभसतररंहसाऽस्खलिततीव्रतरवेगेन हिमालयसम्बन्धीनि कूटानि हैमकूटानि लुठयन्ती भारतं वर्षमभिगम्य दक्षिणस्यां दिशि जलधिमभिप्रविशति॥ ९॥ यस्यामिति। यस्यां गङ्गायां स्पष्टं शेषम्॥ १०॥ अन्य इति। मेर्वादिगिरीणां दुहितरस्ततः प्रसूताः बहुशो बहुप्रकाराः शतशोऽन्येऽपि नदा नद्यश्च वर्षे वर्षे सन्ति॥ ११॥ तत्रेति। तत्र भारतमेव वर्षं कर्मक्षेत्रं दिव्यभौमबिलभेदेन स्वर्गस्य त्रिविधत्वादन्यान्यष्टवर्षाणि भौमानि स्वर्गपदानि व्यपदिशन्ति। तानि च पुण्योत्कर्षेण ये स्वर्गं गच्छन्ति तेषां तत्र पुण्यफलोपभोगेन येषां पुण्यशेषो भवति तत्फलोपभोगस्थानानि॥ १२॥ एष्विति। एषु वर्षेषु अयुतं पुरुषस्य मानेनायुषो वर्षाणि येषां तेषामयुतवर्षजीविनां देवकल्पानां नैरोग्यादियुतानां नागायुतस्य हस्तिदशसहस्रस्य प्राणो बलं येषां तेषां वज्रवत्संहननं दृढं यच्छरीरं तस्मिन् ये बलवयोमोदास्तैः प्रमुदितानि यानि महासौरतानि मिथुनानि तेषां व्यवायापवर्गे संभोगावसान एकवर्षशेष आयुषि धृत एको गर्भो यैस्तादृशानि कलत्राणि येषां तेषामित्यर्थः। अनेन स्त्रीणां पुत्राद्युत्पत्त्या शरीरशैथिल्येन सम्भोगे वैरस्यं निरस्तम्। तत्र तु त्रेतायुगसमः कालो वर्त्तते विषयसुखोत्कर्षात्। कृतयुगे हि प्रायो ध्याननिष्ठाः द्वापरादौ दुःखबहुलाः॥ १३॥

यत्र हेति। यत्र येषु हि वर्षेषु सर्वेषु ऋतुषु कुसुमस्तबकादीनां श्रिया समृद्ध्या आनम्यमाना अत्यन्तं नम्यमाना विटपास्तदाश्रिता लताश्च येषु तैर्विटपिभिर्वृक्षैरुपशुम्भमानानि रुचिराणि प्रीतिकराणि काननानि येषु तेष्वाश्रमेषु आयतनेषु वर्षगिरयो वर्षमध्यवर्तिनः वर्षख्यातिकरा वा गिरयस्तेषां द्रोणीषु पर्वतद्वयान्तरालेषु उन्नतपार्श्वद्वयान्तरालदेशेषु वा तथा विकचानि प्रफुल्लानि यानि विविधानि नवानि वनरुहाणि नीरजानि तेषामामोदेन मुदितैः राजहंसादिभिः पक्षिभिर्मधुकरनिकराणां चाकृतिभिर्जातिविशेषैरुपकूजितेषु। अधिकरणे निष्ठा षष्ठ्यभाव आर्ष इति चक्रवर्ती। भृङ्गैर्नादितं पद्ममितिवत्कर्मण्येव वा क्तः। कर्मवचनान्तात् "तत्करोति" इति णिच् ततः क्तो वा। अमलजलाशयेषु सुललिताः मनोहरा याः सुरसुन्दर्यो देवाङ्गनास्तासामुद्बुद्धो यः कामस्तेन कलिलः सञ्जातो विलासः क्रीडा हासश्च लीलया कटाक्षेणावलोकश्च तैराकृष्टं क्षुभितं मनो दृष्टिश्च येषां ते देवपतय इन्द्रादयोऽपि स्वैः स्वैर्गणनायकैः सेवकगुरुषु मुख्यैर्विहितमहार्हणाः समर्पितस्रक्चन्दनादिमहोपचाराः सन्तः स्वैरं यथेष्टं जलक्रीडादिभिर्विचित्रविनोदैः स्त्रीभिः सह विहरन्ति॥ १४॥ नवस्विति। नवस्वपि वर्षेषु भगवान्नारायणः महापुरुषः पुरुषाणां स्वभक्तानां तदनुग्रहाय स चासौ प्रसिद्धः वक्ष्यमाणानुग्रहश्च तत्तत्पुरुषार्थदानलक्षणस्तदर्थमात्मतत्त्वव्यूहेनात्मनस्तत्त्वानां गुणानां व्यूहः समूहो यत्रा तेनात्मना स्वमूर्तिसमूहेन रूपेणाद्यापि सनिधीयते संनिहितो भवति। अत्र उपास्यदेवताः वर्षेषु भगवन्मूर्त्तयः प्रायः प्रतिमारूप एव ज्ञेयाः। आविराविर्भवेति वक्ष्यमाणप्रह्लादोक्तेः॥ १५॥ इलावृते त्विति। इलावृते तु भगवान् भव एक एव पुमानस्ति न हि ततोऽन्योऽपरो जनः कोऽपि भवान्याः शापनिमित्तज्ञः पुमां तत्र प्रविशति। यस्मिन् प्रवेक्ष्यतः पुंसः स्त्रीभावो भवति। तच्छापस्य कारणं पश्चान्नवमस्कन्धे वक्ष्यामीत्यर्थः। अत्र प्रवेक्ष्यत इति लृट्। यः प्रवेक्ष्यति स स्त्री भविष्यति इति शापाभिनयप्रदर्शनार्थः। न त्वत्र शुकोक्तावुपयुक्तः अयं च शापः कैलासकरवीरयोः पर्वतयोर्मध्ये इलावृतैकदेशविशेषे ज्ञेयोऽन्यथा सर्वस्येलावृतस्य शप्तत्वे तु मेर्वादौ देवस्थितिर्भौमादीनामैन्द्रामरस्थानहरणार्थगमनं दशमे वक्ष्यमाणं यत्र देवपतयः स्वैरं विहरन्तीत्युक्तं च बाधितं स्यादिति ज्ञेयम्॥ १६॥ भवानीति। भवानी नाथा स्वामिनी येषां तैः स्त्रीगणानामर्बुदसहस्रैरवरुध्यमानः सर्वतः सेव्यमानो भवः वासुदेवप्रद्युम्नानिरुद्धसंकर्षणसंज्ञाश्चतस्रो मूर्तयो यस्य तस्य भगवतो महापुरुषस्य तुरीयां चतुर्थीं सङ्कर्षणसंज्ञात्मनः स्वस्य शिवस्य प्रकृतिं तामसत्वात्कारणभूतां तामसीं मूर्तिमात्मसमाधिरूपेण मनःसमाधानलक्षणेन ध्यानेन सन्निधाप्य सन्निधानमानीय एतद्वक्ष्यमाणं मन्त्रस्तोत्रादिकमभिगृणन् जपन्नुपधावत्युपास्ते। अत्र तामसीमिति बहिरेव तमःप्रदर्शनं न यस्य मायेत्यादि वक्ष्यमाणत्वात्॥ १७॥

ॐ नम इति। सर्वेषां गुणानां गुणकार्याणां सङ्ख्यानं प्रकाशो यस्मात्तस्मै। स्पष्टम् शेषम्॥ १८॥ भज इति। भजनमर्हतीति हे भजन्य भजनीय! "तदर्हति" इति यत्। अरणं भक्तानां भयाद्रक्षकं पादपङ्कजं यस्य तम्। अत्र नितराम् आ सम्यगेव अरणं शरणं पादपङ्कजं यस्य तं भजे भजे इति हर्षाद् द्विरुक्तिरिति विवृण्वन् चक्रवर्ती भजे भजे इति पाठमभिप्रैति। कृत्स्नस्य भगस्य ऐश्वर्यादिषाड्गुण्यस्य परायणमाश्रयं परं श्रेष्ठं भक्तेष्वलमत्यर्थं भावितं प्रकटितं भूतभावनं भक्तपालकं निजं रूपं येन तं भक्तेषु अलम् अलङ्कारवद्वर्तमानमिति भिन्नं विशेषणं वा। भयापहं भक्तानां मोचकस्तथा अभक्तानां भवं भावयतीति भवभावस्तम् ईश्वरं त्वामहं भजे॥ १९॥ तामसत्वेन प्रसक्तमनादरं वारयति—नेति। यस्य हि ईशनं नियमनम्। ईट् तस्यै। सम्पदादित्वाद्भावे क्विप्। निरीक्षतो निरीक्षमाणस्यापि। शता आर्षः। मायागुणैस्तत्तद्विषयैश्चित्तवृत्तिभिः करणैश्च दृष्टिरण्वपि ईषदपि नाज्यते न लिप्यते। तत्र वैधर्म्ये दृष्टान्तः। यथेति। न जितं मन्युरंहः क्रोधवेगो यैस्तेषां नोऽस्माकं यथा विषयैर्दृष्टिरज्यते तथा यस्य नाज्यत

इत्यर्थः। तमीश्वरम् आत्मनः देहेन्द्रियप्राणादीनात्मत्वेनाभिमतान् जिगीषुः वशीकर्तुमिच्छुः को न मन्येत को वा न सेवेत ॥ २० ॥ असदिति। यो भगवान् असती दृक दृष्टिर्यस्य तस्य स्वमायया क्षीबा मत्त इव भयङ्करो भाति तथा मधु सुरा आसवस्तामादि-रसस्ताभ्यामाताम्रे अतिरक्ते लोचने यस्य स इव च भाति। यद्वा यः असद्दृशः कुबुद्धीन् प्रति मायया क्षीबा मत्त इव भाति। यथान्यः क्षीबा मध्वासवाभ्याम् आताम्रविलोचनो विवेकहीनो भवति तथेत्यर्थः। अतः स नादरेण भजति तथा प्रथमवन्दनादौ यस्य पादयोः स्पर्शनेन धर्षितं मोहितमिन्द्रियं मनो यासां ताः। नागवध्वो ह्रिया अस्माकमन्तःक्षोभमयं जानातीति लज्जया यस्यार्हणे पूजायां न ईशिरे समर्था न जाताः। आमभाव आर्षः। कस्तन्न मन्येतेति सर्वयच्छब्दानां पूर्वेणैवान्यस्तस्मै नम इत्यग्रे पञ्चमेन वाऽन्वयः ॥ २१ ॥ यमिति। ऋषयः ऋकारो देवमाता लक्ष्मीः अदितिर्वाः ऋनामा त्वदितिरिति त्रिकाण्डशेषः। सा च ऋषयश्चेति द्वन्द्वः। ह्रस्वपाठे छन्दोभङ्गः आर्षः। अस्य विश्वस्य स्थितिजन्मसंयमाः तत्कारकम्। तत्करोतीति णिच्। यमाहुः तथा त्रिभिर्जन्मा-दिभिर्गुणैर्वा विहीनं च यमाहुः। मूर्द्धसहस्रमेव धामानि स्थानानि तेषु क्वचिदेकदेशे स्थितं भूमण्डलं सिद्धार्थमिव सर्षपमिव यो न वेद तस्य भारं महत्त्वं च न गणयति तस्मै नमः ॥ २२ ॥ यस्येति। यस्य गुणनिमित्तो महान्नामाऽऽद्यो विग्रहः महत्तत्त्वम् आसीत्स च विज्ञानधिष्ण्यः चित्तरूपत्वेन सत्त्वप्रधानत्वात् विज्ञानस्य चैतन्यस्य प्रकाशस्याश्रयभूतः स एव किलाधिदेवो वासुदेवा-भेदविवक्षया भगवान् अजो ब्रह्माख्यः यद्यस्माद्ब्रह्मणः संभवो जन्म यस्य सोऽहं रुद्रः त्रिवृता गुणत्रयकार्यमहत्तत्त्वतो जातत्वात्त्रि-विधेन स्वतेजसा स्वशक्तिरूपेणाहङ्कारेण वैकारिकं सात्त्विकं देवतावर्गं तामसं पञ्चमहाभूतवर्गमैन्द्रियं राजसमिन्द्रियवर्गं च सृजे सृजामि। तङार्षः ॥ २३ ॥ एते इति। महान् महत्तत्त्वम् अहम् अहङ्कारः वैकृतः तामसश्च ऐन्द्रियश्चेति एते वयं सूत्रेण क्रिया-शक्तिप्राणेन यन्त्रिता निबद्धाः सन्तः सूत्रेण निबद्धाः शकुन्ताः पक्षिण इव महात्मानो यस्य वशे स्थिताः सन्तो यदनुग्रहादेवेदं विश्वं सृजामः न तु स्वयं समर्थाः ॥ २४ ॥ यदिति। येन निर्मितां कर्माण्येव पर्वाणि बन्धहेतुत्वाद् ग्रन्थयस्तानि नयति प्रापयतीति तथा ताम्। "एरनेकाच्" इत्यनेन यणभाव आर्षः। मायामेव तावत् गुणानां सत्त्वादीनां सर्गः देहादिपुत्रादिरूपो रसादिरूपश्च तत्र विमोहितः आसक्तः अयं जनोऽञ्जसा तत्कृपां विना कर्ह्यपि न वेद न जानाति। ततो निस्तारणयोगं मुक्त्युपायं सुतरां न जानाति तस्मै विलीयतेऽस्मिन्निति विलयः उदेत्यस्मादित्युदयः विलयश्चासावुदयश्चात्मा स्वरूपं यस्य तस्मै ते तुभ्यं नमः ॥ २५ ॥

इति श्रीमद्भागवते पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तदशोऽध्यायः ॥ १७ ॥

—:※:—

# अथाष्टादशोऽध्यायः

श्रीशुक उवाच

तथा च भद्रश्रवा नाम धर्मसुतस्तत्कुलपतयः पुरुषा भद्राश्ववर्षे साक्षाद्भगवतो वासुदेवस्य प्रियां तनुं धर्ममयीं हयशीर्षाभिधानां परमेण समाधिना सन्निधाप्येदमभिगृणन्त उपधावन्ति ॥ १ ॥

अष्टादशे वर्षषट्के सेव्यसेवकवर्णने। मन्त्राः स्तुतिः श्लोकयुक्ता गद्यपद्यानि गोऽग्नयः ( ३९ ) ॥
उवाचद्वितयं सार्द्धा पञ्चषष्टिरनुष्टुभः ( ६५ ) ॥ १८ ॥

तथा चेति। यथा संकर्षणं रुद्र उपास्ते तथैवेत्यर्थः। भद्राश्ववर्षे भद्रश्रवा नाम वर्षपतिस्तत्कुलपतयः तस्य सन्तानमुख्याः सेवका गणमुख्याश्च साक्षाद्भगवतो वासुदेवस्य हयशीर्षाभिधानां धर्ममयीं प्रियां तनुं मूर्तिं परमेण समाधिना सन्निधाप्य सन्निधिमानीयेदं मन्त्रादिकमभिगृणन्त उच्चारयन्त उपधावन्ति उपासते ॥ १ ॥ भद्रश्रवस ऊचुरिति। भद्रश्रवःशब्देन अजहत्स्वार्थलक्षणया तद्गणोऽप्युच्यते। तेन "प्राणभृत उपदधाति" इतिवत् गणिषु लिङ्गसमवायन्यायेन बहुवचनम्। ॐ नम इति स्पष्टम् ॥२॥ अहो इति। अहो भगवतः विचेष्टितं लीलाविचित्रमतर्क्यं यतोऽयं जनो घ्नन्तं हिंसन्तं मृत्युं मिषन् पश्यन्नपि न पश्यति नानुसन्धत्ते। यर्हि यतोऽसत्तुच्छं विषयसुखं सेवितुं विकर्म पापमेव ध्यायन् मृतं पुत्रं स्वेन जनितं बालं पितरं स्वस्य जनकं वृद्धं च निर्हृत्य दग्ध्वा तन्मध्यवर्त्ती जनको जनितश्च सन् तन्मरणेन स्वस्य मरणं नियतं जानन्नपि स्वयं जिजीविषति जीवितुमिच्छति। जिजीविषुरिति जिजीविषन्निति च छन्दोऽनुरोधिनी पाठान्तरे। ननु भद्राश्वादिवर्षाणां भौमस्वर्गरूपत्वात् तद्वासिनां युगपत्पितुः पुत्रस्य च मृत्युदर्शनं न घटते। सत्यम्। उपदेशार्थत्वाच्छास्त्रस्य सर्वा एव वाचः कर्मभूमिं भारतवर्षमधिकृत्यैवोच्यन्ते वयमधन्याः पशुवत् भद्राश्वादिषु वर्त्तामहे। ये तु मोक्षमपि साधयितुं शक्नुवन्ति ते भारतवासिनः कथमहो मुह्यन्ति इति ॥ ३ ॥ वदन्तीति। हे अज! यद्यपि कवयो विवेकिनोऽध्यात्मविद उपनिषद्विदो विपश्चितो ज्ञानिनो विश्वं नश्वरं वदन्ति शास्त्रतः पश्यन्ति च तथापि तव मायया मुह्यन्ति तन्नाशानतुसन्धानेन नित्यत्वबुद्ध्या तत्रासक्ता भवन्ति। एवं विपश्चितामपि मायया मोहकं तव कृत्यं कार्यं चरितं सुविस्मितमतिविचित्रमेव। अतः सर्वसाधनमश्रमं विहाय त्वामजमहं नतोऽस्मि। पूर्वमूचुरिति बहुत्वेऽपि प्रत्येकाभिप्रायकं नतोऽस्मीत्येकत्वम् ॥ ४ ॥

विश्वेति। अपगता आवृत् मायावरणं यस्मात्तादृशस्य अकर्तुरपि ते तव यद्विश्वोद्भवादि कर्म वेदेनाङ्गीकृतं तत् कर्म कार्यकारणरूपे मायया कार्यस्य कारणे स्रष्टरि इति वा सर्वात्मनि वस्तुतः सर्वतोऽतिरिक्ते च त्वयि चित्रमसम्भावितं नास्ति किन्तु तत्कर्म युक्तमेव ॥ ५ ॥ वेदानिति। युगान्ते प्रलये तमसा निद्रादोषेण तिरस्कृतान् ब्रह्मणो मुखतो विगलितान् सृष्ट्यादौ जातेन तमसा मधुदैत्यरूपेण हृतान्वा वेदान् यो भगवान् नृतुरङ्गविग्रहः ना च तुरङ्गश्च नृतुरङ्गौ तद्रूपो विग्रहो यस्य तथाभूतः संस्तं दैत्यं हत्वा रसातलादानीय अभियाचते कवये ब्रह्मणे प्रत्याददे समर्पितवांस्तस्मै अवितथे हिताय सत्यसङ्कल्पाय ते तुभ्यं नमः। इतिशब्दो मन्त्रस्तोत्रसमाप्त्यर्थः एवमग्रेऽपि ॥ ६ ॥ हरिवर्षे चेति। हरिवर्षे चापि भगवान् नरहरिरूपेणास्ते तस्य तथाभूतस्वरूपग्रहणस्य निमित्तमुत्तरत्र सप्तमस्कन्धेऽभिधास्ये कथयिष्यामि। तदपि आत्मनः दयितं प्रियं रूपं महापुरुषाणां ये गुणाः करुणामैत्र्यादयस्तेषां भाजनः पात्रम्। पुंस्त्वमार्षम्। महाभागवतः दैत्यदानवकुलानामन्येषामपि तीर्थीकरणं शीलमाचरितं च यस्य तथाभूतः प्रह्लादः अव्यवधानो निरन्तरः फलसङ्कल्पव्यवधानशून्यो वा स चासौ अनन्यः अव्यभिचारो च यो भक्तियोगस्तेन तद्वर्षपुरुषैः सह उपास्ते। इदं च मन्त्रस्तोत्रादिकमुदाहरति जपति ॥ ७ ॥ ॐ नम इति। भगवते नरसिंहाय नमः। तेजसामग्न्यादीनामपि तेजसे प्रकाशकाय नमः। हे वज्रनख वज्रदंष्ट्र! त्वमाविराविर्भव प्रकटो भव। वीप्सा आदरार्था। कर्माशयान् जन्ममरणादिहेतुभूताः कर्मवासनाः। कर्माश्रयानिति पाठे रागादीन् रन्धय रन्धय निर्दह निर्दह। तमोऽज्ञानं ग्रस दूरीकुरु। तङ्भाव आर्षः। तेन चात्मनि जीवेऽभयमभयं यथा स्यात्तथा त्वं भूयिष्ठाः भूयाः। आर्षः। उभयत्र वीप्साऽऽवश्यकत्वद्योतनार्था। स्वाहापदं कर्मसमर्पणार्थम्। क्ष्रौमिति श्रीनृसिंहबीजम् ॥ ८ ॥ स्वस्तीति। विश्वस्य सर्वस्य जगतः स्वस्ति मङ्गलमस्तु। ननु सर्वस्य स्वस्तिप्रार्थने खलस्यापि

भवेत् तत्र साधुपीडां विना न भवेत अत आह। जगदमङ्गलहेतुः खलः प्रसीदतां क्रौर्यं त्यजतु। तत्कार्यः। मिथो वैरिणां मिथो घातं विना स्वस्ति न स्यादत आह। सर्वाण्येव भूतानि मिथः परस्परं शिवं मङ्गलमेव ध्यायन्तु न द्रोहं तेषां सर्वेषां मनश्च भद्रमुपशमादिकं भजतात् तथा नोऽस्माकं सर्वेषां मतिरप्यहैतुकी निष्कामा सती अधोक्षजे आवेश्यताम्। कर्मणि कर्मकर्त्तरि वा लोट्। आद्ये अधोक्षजेनेति शेषः। एवं विश्वस्य स्वस्ति स्यात्। न चैवं क्रमेण सर्वमुक्तौ ब्रह्माण्डानि शून्यानि स्युरिति वाच्यम्। जीवशक्तिमायाशक्त्योर्नित्यत्वात्पुनरनन्तानां जीवानां प्रसवादित्याहुः ॥ ९ ॥

मा इति। नोऽस्माकं सर्वेषां प्राणिनाम् अगारे गृहे दारादिषु च उपलक्षणतयाऽन्यत्रापि च सङ्गो मा स्यात्। यदि कथंचित्सङ्गः स्यात्तर्हि भगवत्प्रियेष्वेव स्यात्। यद्वा। सङ्गः क्वापि मा स्यात् यदि स्यात् तदा अगारादिषु मा स्यात् किन्तु भगवत्प्रियेष्वेव। यद्वा। यदि भगवत्प्रियेषु सङ्गः स्यात् तदा अगारादिषु सङ्गो माऽस्तु। यः भगवद्भक्तसङ्गी केवलं प्राणवृत्त्या प्राणादिस्थितिहेत्वाहारमात्रेण परितुष्टः आत्मवान् वशीकृतमनाः स यथा अदूरात् शीघ्रमेव सिध्यति कृतकृत्यो भवति तथा इन्द्रियप्रियः गृहविषयाद्यासक्तो न सिद्ध्यति किन्तु दुःखमेव लभते ॥ १० ॥ यत्सङ्गेति। येषां भगवद्भक्तानां सङ्गात् लब्धं निजमसाधारणं वीर्यवैभवं भगवदाविर्भावहेतुप्रभावातिशयो यस्य तं मुकुन्दस्य विक्रमं यशःश्रुतिभिः श्रवणकीर्त्तनस्मरणैः मुहुर्निरन्तरं संस्पृशतां सेवमानानां पुंसामन्तर्हृदि गतोऽजा भगवान्मानसं मलं हरति विनाशयति। पुष्करादितीर्थं तु मुहुः संस्पृशतामपि अङ्गजमेव मलं पापं हरति नतु मनोगतास्तद्वासनाः। अतस्तान् भगवद्भक्तान् को विवेकी न सेवेत अपि तु सर्वोऽपि। यद्वा। तीर्थरूपं मुकुन्दविक्रमं संस्पृशतां हृदि गतो भगवान् मानसम् अंगजं च मलं हरति। शेषं प्राग्वत् ॥ ११ ॥ यस्येति। यस्य भगवति अकिञ्चना निष्कामा भक्तिरस्ति भवति तत्र तस्मिन्नेव धर्मज्ञानवैराग्यादिभिः सर्वैर्गुणैः सह सर्वे सुरा देवाः सम्यगासते नित्यं वसन्ति। विषयासक्तस्य हरावभक्तस्य असति अतितुच्छे विषयसुखे मनोरथेन बहिः संसारे धावतस्तु कुतो महतां गुणाः धर्मादयो भवन्ति न कुतोऽपीत्यर्थः ॥ १२ ॥ हरिर्हीति। हि यस्मात् यथा झषाणां मीनानामीप्सितं तोयमेव जीवनहेतुस्तथा भगवान् हरिः सर्वदेहिनां साक्षादात्मा जीवनहेतुरस्ति तं हरिं हित्वा महानतिप्रसिद्धोऽपि यदि गृहे गृहोपलक्षितेषु विषयेषु सज्जते आसक्तो भवति। तदा तस्य दम्पतीनां मिथुनानां केवलं शूद्रादिषु प्रसिद्धं वयसा एव पश्वादीनामिव महत्त्वं नतु धर्मज्ञानादिगुणप्रयुक्तम्। मिथुनेषु पूरुषमनेषु स्त्रीभ्यः पुंसां महत्त्वम्। बालमिथुनेभ्यश्च वृद्धमिथुनानां वयसैव यथा महत्त्वं तथेत्यर्थः ॥ १३ ॥ तस्मादिति। तस्मात् हे दैत्याः! रजस्तृष्णा रागोऽभिनिवेशः शोषाः स्पष्टाः। रजआदीनां मूलं कारणमत एव संसृतीनां जन्ममरणादीनां चक्रवालं मण्डलमविच्छेदो यस्मात्तथाभूतं गृहं हित्वाऽकुतोभयं न कुतोऽपि भयमुपासकानां यस्मात्तथाभूतं नृसिंहपादं भजत ॥ १४ ॥ केतुमाल इति। केतुमाले भगवान् प्रद्युम्नाख्यः लक्ष्म्याः प्रियचिकीर्षया तथा पुरुषायुषा पुरुषवर्षशतेन यान्यहोरात्राणि तैः परिसङ्ख्यानं गणना येषां तेषां षट्त्रिंशत्सहस्रसङ्ख्यानां "प्रजापतेः संवत्सरो वै प्रजापतिः" इति श्रुतेः। प्रजापतिः संवत्सरस्तदभिमानी देवस्तस्य दुहितरो रात्र्यभिमानिन्यो देवताः पुत्राश्च दिवसाभिमानिनो देवास्तेषां तद्वर्षपतीनां च प्रियचिकीर्षया कामदेवस्य स्वरूपेणास्ते। यासां पतिमतीनां दुहितॄणां दिवससहितानां रात्रीणामित्यर्थः। महापुरुषस्य विष्णोर्यन्महास्त्रं कालचक्रं तस्य तेजसा उद्वेजितमनसां विध्वस्ता अतो व्यसवो मृताः सन्तो गर्भाः संवत्सरान्ते विनिपतन्ति। अत्र गर्भाः क्षणलवाद्याः कालाः। यद्वा। वर्षभोग्यानि प्रारब्धफलान्येव ता रात्रीर्निमित्तीकृत्योद्भूतत्वात्तासामेव गर्भा इत्युत्प्रेक्ष्यन्ते तेषां संवत्सरान्ते भोगेन क्षय एव गर्भपातत्वेनोत्प्रेक्षितः ॥ १५ ॥

अतीवेति। अतीव सुललितया गत्या यो विलासो विहारस्तेन विलसितो यो रुचिरो हासलेशो मन्दस्मितं तत्सहितोऽवलोक एव लीला तया किञ्चिदुत्तम्भितमुत्तुङ्गितं यत्सुन्दरं भ्रूमण्डलं तेन सुभगमतिरमणीयं वदनारविन्दं तस्य श्रिया शोभया रमां लक्ष्मीं रमयन् स्वीयानीन्द्रियाणि रमयते ॥ १६ ॥ तदिति। तद्भगवतो मायामयं राजसं रूपं रात्रिषु प्रजापतेः संवत्सरस्य दुहितृभिः रात्र्यभिमानिदेवताभिस्तथाऽहःसु दिवसेषु च तद्भर्तृभिर्दिवसाधिष्ठातृदेवताभिरुपेता मिलिता समाधियोगेन चित्तैकाग्रतालक्षणोपायेन रमा देवी उपास्ते सेवते। इदं च मन्त्रादिकमुदाहरति उच्चारयति ॥ १७ ॥ ओमेति। ह्रीमित्यादिबीजत्रयम्। भगवते हृषीकाय सर्वैस्तेजस्वित्वादिभिर्गुणविशेषैर्विलक्षित आत्मा आदित्यादिमूर्तिर्यस्य तस्मै इन्द्रियनियामकतत्तद्देवतारूपाय। यद्वा सर्वैर्गुणविशेषैः श्रेष्ठवस्तुभिः विलक्षितो लक्षीकृत आत्मा यस्य आकूतीनां वागादीन्द्रियाणां चित्तीनां चक्षुरादिबुद्धीन्द्रियाणां चेतसा चतुर्णामन्तःकरणभेदानां विशेषाणां पृथिव्यादीनां चाधिपतये एकादशेन्द्रियपञ्चमहाभूतरूपाः षोडश कलाः यस्य तस्मै छन्दोमयाय अन्नं मनुष्यभोज्यममृतं देवभोज्यं तन्मयाय अतः सर्वमयाय। यद्वा छन्दोमयाय वेदोक्तकर्मप्राप्याय अन्नमयाय अन्नोपष्टम्भत्वात् अमृतमयाय परमानन्दाविष्कारत्वात् सर्वमयाय सर्वविषयत्वात् सहसे ओजसे बलाय इति अन्तःकरणेन्द्रियदेहसामर्थ्यरूपाय कान्ताय भर्त्रे ते तुभ्यम् उभयत्र इह लोके परलोके च नमः भूयात् ॥ १८ ॥ स्त्रिय इति। पतिकामानां हि कामाराधनं व्रतेषु प्रसिद्धम्। अतः लोके हि याः स्त्रियो व्रतैः स्वतः स्वतन्त्रतया हृषीकाणामिन्द्रियाणामीश्वरं पतिम्। ह्रस्व आर्षः। त्वामाराध्य

त्वत्तोऽन्यं पतिमाशासते प्रार्थयन्ते। ते च पतयस्तासामपत्यं धनानि आयूंषि अन्यच्च प्रियवस्तु न वै परिपान्ति नैव रक्षितुं शक्नुवन्ति। यतो यस्मात्ते पतयः अस्वतन्त्राः कालकर्मगुणाद्यधीना न ह्यनुगरगृहीतोऽन्यान् गोप्तुं शक्नोतीति॥ १९॥ अतस्ते प्रागुक्ताः पतयो न भवन्तीत्याह–स वा इति। यः स्वयमकुतोभयः न कुतोऽपि कालादितो भयं यस्य स तथा सर्वतो निर्भयः सन् भयातुरं कालादिभयेन व्याकुलं जनं समन्ततः सर्वतः पाति स वै पतिः स्यात्। स एव यथार्थपतिशब्दवाच्यः स्यात् स एवंभूतः पतिर्भवानेक एव नान्यः। यतोः भवान् आत्मलाभात् परमानन्दरूपात् परमन्यदधिकं न मन्यते अन्यस्य तु इतरथा आत्मदर्शनाभावेन अन्याधीनसुखस्य न स्वतन्त्रता। स्वतन्त्रनानात्वे च मण्डलेश्वराणामिव मिथो भयं भवति। यद्वा इतरथा प्रकारान्तरेण पतिशब्दव्याख्यायां सप्तम्यर्थ एव वा थाल्। उतरत्र मण्डलेश्वराणामिव स्वप्रजापालकानामपि मिथो भयं ततश्च प्रजानामपि भयं तद्पालनमेव वस्तुतः अत एवात्मनस्तव लाभदधि अधिकं वस्तु न मन्यते। शास्त्रज्ञैरिति शेषः। त्वत्प्राप्त्यपेक्षया अन्यप्राप्तिर्नेवाधिकाऽतः त्वमेव वस्तुतः पतिशब्दवाच्यः॥ २०॥

येति। या स्त्री तस्योक्तलक्षणस्य ते तव पत्युः पादसरोरुहस्यार्हणं पूजामेव नितरां कामयेन्न फलान्तरम्। तद्भाव आर्षः। साऽखिलेषु कामेषु लम्पटा सर्वानेव कामान् प्राप्नोतीत्यर्थः। निष्कामपदवीं कीर्तिं च प्राप्नोतीति ईप्सितं प्रति ईप्सितः फलान्तरं प्राप्तुमपेक्षितः सन्नर्चितश्चेत्तर्हि तदेकैकमोप्सितं फलं रासि ददासि न तु नित्यम्। यत् यतः पुनः फलभोगानन्तरं भग्ना याच्ञा याचितोऽर्थो यस्याः सा प्रतप्यते दुःखं प्राप्नोतीत्यर्थः। सकामपदवीं दुर्यशश्च प्राप्नोतीति। यद्वा या स्त्री तव पादार्हणं निकामयेत् निरन्तरं कामाप्त्यै कुर्यात् साऽखिलकामेषु एव लम्पटा आसक्ता भवति। तत्र ईप्सितं फलं प्रतीक्षितस्त्वं तदेकमेवेप्सितं ददासीत्यादि॥ २१॥ मदिति। हे अजित! ऐन्द्रिये इन्द्रियविषये एव धीर्येषां ते। अलुक्समासः। अजः ब्रह्मा ईशः शिवः सुराः सुरादयश्च सव यद्यपि मत्प्राप्तये उग्रं तपस्तप्यन्ते कुर्वन्ति तथापि भवत्पादपरायणादृते मां न विन्दन्ति मत्कटाक्षविलसिताः विभूतीः न प्राप्नुवन्ति। यतः अहं त्वय्येव हृदयं यस्यास्तादृशी अस्मि अतः त्वद्भक्तानेवानुगृह्णामि नान्यम्॥ २२॥ स त्वमिति। हे अच्युत! येन त्वत् त्वया वन्दितं सर्वैः स्तुतं यत्कराम्बुजं स्वहस्तकमलं सात्वतां शीर्ष्णि अधायि कृपया न्यस्तं सः सर्वपुरुषार्थदो मद्धृदयवर्त्ती त्वं तत्कराम्बुजं ममापि शीर्ष्णि निधेहीति शेषः। हे वरेण्य! मा मां तु केवलं मायया मदाश्वानार्थं कपटेनैव लक्ष्म वक्षसि स्वर्णरेखाचिह्नरूपं बिभर्षि मयि केवलमादरमात्रं परमा कृपा तु भक्तेष्वेवेति भावः। यत ईश्वरस्य तव ईहितम् आशयम् ऊहितुं ज्ञातुं को नाम प्रभुः॥ २३॥ रम्यक इति। रम्यके च वर्षे तद्वर्षपुरुषस्य तस्य वर्षस्य स्वामिनः सत्यव्रतस्य राज्ञो मनोरिदानीं मनुत्वेन वर्त्तमानस्य श्राद्धदेवसंज्ञस्य प्राक् चाक्षुषमन्वन्तरान्ते प्रलये राजावस्थायां भगवता यन्मात्स्यं रूपं प्रदर्शितं तद्भगवतोऽवताररूपमात्मनः प्रलये रक्षकत्वात्प्रियतमं स मनुरिदानीं मन्ववस्थायामपि महता भक्तियोगेनाराधयतीदं च मन्त्रादिकमुदाहरति जपति॥ २४॥ ओमिति। भगवते सत्त्वाय सत्त्वप्रधानाय मुख्यतमाय सर्वेन्द्रियनियन्त्रे प्राणाय सूत्रात्मने ओजआदिहेतवे महामत्स्याय नमः॥ २५॥ अन्तरिति। यथा दारुमयीं स्त्रियं नरः सूत्रेण वशयति तथा उरुस्वनः वेदात्मकमहानादयुक्तः यस्त्वं विधिनिषेधालम्बभूतेन ब्राह्मणादिनाम्ना इदं विश्वं वशे अनयत् नियमितवान् स एवेश्वरस्त्वमखिललोकपालकैर्ब्रह्मेन्द्रादिभिरप्यदृष्टरूपः सन् प्राणरूपेण सर्वस्यान्तर्वायुरूपेण बहिश्च विचरसि॥ २६॥

यमिति। यं त्वां हित्वा विहाय मत्सरः ईर्ष्यैव ज्वरो येषां ते लोकपाला ब्रह्मेन्द्रादयः पृथक् स्थिता वा सन्तः समेत्य परस्परं मिलिताः वा सन्तः द्विपदो मनुष्यादयः चतुष्पदो गवादयः सरीसृपं जङ्गमं स्थाणु स्थावरं च यदत्र दृश्यते तत्किंचिदपि पातुं न शेकुः न शक्ता भवन्ति स्म। स प्राणरूपेण पालकः सर्वेश्वरस्त्वमेवेति शेषः। तथा च श्रुतिः। "ता अहिंसन्ताहमुकमस्म्यहमुकस्मीति" अस्यार्थः—ता देवताः अहिंसन्त समत्सरा बभूवुः उ भोः अहं कमाश्रित्य अस्मि वर्त्ते न कमपीत्यर्थः॥ २७॥ भवानीति। ऊर्मीणां मालाऽस्यास्तीति तथाभूते युगान्तार्णवे प्रलयसमुद्रे ओषधीनां वीरुधां च निधिमाश्रयभूतामिमां दृश्यमानां क्षोणीं पृथिवीं मया सह मत्सहितां नौरूपां मत्स्यरूपेण स्वशृङ्गे बद्ध्वा उरु बहुधा ओजसा वेगेन यो भगवान् अजः क्रमते विचरति स्म। यद्वा पातुमित्यनुषङ्गः। क्षोणीं पातुं क्रमते उत्सहते इत्यर्थः। अतो वृत्तिसर्गतेति तद्प्युपपन्नः। तस्मै जगतः प्राणगणस्यात्मने नियन्त्रे सूत्रात्मने नमः॥ २८॥ हिरण्मय इति। हिरण्मये वर्षेऽपि भगवान् कूर्मतनुं बिभ्राणो निवसति। तस्य भगवतस्तत् तामात्मनः प्रियतमां तनुं पितृगणाधिपतिरर्यमा तद्वर्षपुरुषैः सहोपधावति सेवते। इमं वक्ष्यमाणं मन्त्रं चानु निरन्तरं जपति॥ २९॥ ओमिति। भगवते अकूपाराय कूर्मरूपाय सर्वः सत्त्वगुणो विशेषणं यस्य तस्मै सत्त्वप्रधानाय वारिचरत्वात्सर्वान्तर्यामित्वाद्वा नः उपलक्षितं प्रत्यक्षं स्थानं यस्य तस्मै वर्ष्मणे वर्षीयसे कालानवच्छिन्नाय भूम्ने सर्वगताय अवस्थानाय सर्वाधारभूताय नमः॥ ३०॥ यद्रूपमिति। निजया माययाऽर्पितं प्रकाशितम् अर्थस्वरूपं सर्वपदार्थरूपं बहुभी रूपैः रूपितं निरूपितम् एतत् सर्वमपि पृथिव्यादि यस्यैव रूपमस्ति यतः पृथङ् नास्ति तथा अयथोपलम्भनात् अयथा मिथ्यैवोपलम्भाद्धेतोः यस्य परमेश्वरस्य सङ्ख्या सम्यग् ज्ञानं नास्ति। न हि मरीचिजलमेतावदिति सङ्ख्यातुं शक्यते। तस्मै अव्यपदेशरूपिणे अनिरुक्तप्रपञ्चाकाराय नमस्ते॥ ३१॥ जरा:

युजमिति। जरायुणा गर्भे वेष्टितं सत्ततो जायत इति तथा मनुष्यादि स्वेदाज्जायत इति तथा मत्कुणादि अण्डाज्जायत इति तथा पद्यादि ऊर्ध्वं भित्त्वा जायत इत्युद्भिदं वृक्षादि तत्रापि चरं जङ्गमं मनुष्यादि अचरं वृक्षपर्वतादि देवा इन्द्रादयः ऋषयो वसिष्ठादयः पितरः अर्यमादयः भूतानि आकाशादीनि ऐन्द्रियमिन्द्रियवर्गः द्यौः स्वर्गः खमन्तरिक्षं भुवर्लोकः क्षितिः भूर्लोकः शैलाः पर्वताः सरितो नद्यः समुद्राः क्षारोदादयः द्वीपा जम्ब्वादयः ग्रहाः आदित्यादयः ऋक्षाणि अश्विन्यादीनि नक्षत्राणि इत्येवं तत्तन्नाम्नाऽभिधेय-स्त्वमेक एव न तद्व्यतिरिक्तं किंचिदप्यस्ति। "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतेः ॥ ३२ ॥ यस्मिन्निति। असङ्ख्येया अनन्ता विमेषा येषां तानि नामानि रूपाणि आकृतयश्च यस्य तादृशे यस्मिंस्त्वयि प्रपञ्चात्मके कविभिः साङ्ख्याचार्यैः कपिलादिभिर्याः इयं चतुर्विंश-त्यादिसङ्ख्या विवेकाय कल्पिता सा यया तत्त्वदृशा येन तत्त्वज्ञानेनापनीयते तस्मै साङ्ख्यशास्त्रेण निदर्शनं प्रतिपादनं यस्य तस्मै साङ्ख्यसिद्धान्तरूपाय परमार्थरूपाय वा ते तुभ्यं नमः ॥ ३३ ॥

उत्तरेष्विति। उत्तरेषु कुरुषु च यज्ञपुरुषो हि भगवान् कृतवराहरूप आस्ते। तं तु एषा भूः देवी भूम्यभिमानिदेवता-रूपा कुरुभिः कुरुखण्डवासिपुरुषैः सहास्खलितभक्तियोगेनोपधावति इमां च परमामुपनिषदं वक्ष्यमाणां मन्त्राद्यात्मिकामावर्त्तयति निरन्तरमभ्यासेन जपति ॥ ३४ ॥ ओमिति। तन्त्रैस्तत्त्वेन लिङ्गयते ज्ञायत इति मन्त्रतत्त्वलिङ्गस्तस्मै यज्ञक्रतवे यज्ञाः अयूपाः क्रतवः सयूपास्तद्रूपाय अत एव महान्तोऽध्वरा अवयवा यस्य स तथा तस्मै महापुरुषाय कर्मणां शुक्लं शुद्धफलं यस्मात्तस्मै कर्मणां शुद्धाय यज्ञानुष्ठात्रे वा कर्मभिः चरितैः त्रिषु युगेषु धर्मप्रचारात्त्रियुगमूर्त्तये कृतयुगे यज्ञाभावात् कलौ छन्नत्वाद्वा त्रीणि युगानि युगलानि यस्य ऐश्वर्यादिभगषट्कयुताय इति वा ते तुभ्यं नमः ॥ ३५ ॥ यस्येति। गुणेषु देहेन्द्रियादिसङ्घातेषु गुणकार्येषु क्रियाभिः कर्मभिरर्थैस्तत्फलैश्च गूढं यस्य स्वरूपं मथ्ना साधनभूतेन वशीकृतेन मनसा विपश्चितः विवेकिनः दिदृक्षवः जिज्ञासमानाः कवयः अभिज्ञाः मथ्नन्ति विविच्य निष्कर्षन्ति। यथा काष्ठेषु निगूढं जातवेदसमग्निं विवेकिन एव निर्मन्थनेन निष्कर्षन्ति नान्ये तथेत्यर्थः। एवं मन्थनेनेरितः प्रकटित आत्मा स्वरूपं यस्य तस्मै नमः ॥ ३६ ॥ मथनमेवाह—द्रव्येति। अन्वीक्षया विचारेण अङ्गैर्यमनियम-श्रवणमननादिसाधनैरतिशययुक्तो विवेकसमर्थ आत्मा स्वरूपं यस्याः सा निश्चयवती बुद्धिर्येषां तैः पुरुषैः द्रव्यं विषयः क्रिया इन्द्रिय-व्यापारः हेतु तद्देवता अयनं देहः ईशः कालः कर्ताऽहङ्कारः एतैर्मायागुणैः प्रकृतिगुणकार्यैरुपलक्षणैर्वस्तुत्वेन निरीक्षितो य आत्मा तस्मै निरस्ता माया निमित्ता आकृतिर्यस्मात्तस्मै नमः ॥ ३७ ॥ निर्गुणरूपेण नत्वा परमेश्वररूपेण प्रणमति—करोतीति। यस्ये-प्सितुर्भगवतः जीवार्थमीप्सितम् अत्यन्तानिच्छायामीक्षणायोगात् स्वार्थं तु नेप्सितं विश्वस्य स्थितिसंयमोदयं जडाऽपि माया स्वगुणैः करोति। यथा ग्राव्णः अयस्कान्तान्निमित्तात्तदाश्रयं तत्सन्निहितं जडमपि अयो लोहं भ्रमति तथा भगवदीक्षणमात्रेणैव माया प्रवर्तते तस्मै गुणानां कर्मणां जीवादृष्टानां च साक्षिणे ते नमः ॥ ३८ ॥ प्रमथ्येति। यो जगतामादिः कारणभूतो भगवान् सूकरः सन् रसातलं गतां मां पृथिवीमग्रदंष्ट्रे दंष्ट्राग्रे कृत्वा ततो रसायाः रसातलोपलक्षितगर्भोदादारभ्योदन्वतः प्रलयार्णवात् निर-गात्। यथा इभः गजो दंष्ट्राग्रे पद्मिनीं कृत्वा क्रीडन् जलान्निःसरति न चैवं श्रान्तो भवति तथेति। ततश्च प्रतिवारणं प्रतिगजतुल्यं दैत्यं हिरण्याक्षं मृधे युद्धे प्रमथ्य हत्वा स्थितस्तं विभुं समर्थं परमेश्वरमहं प्रणतोऽस्मि ॥ ३९ ॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायामष्टादशोऽध्यायः ॥ १८ ॥

—:❀:—

# अथैकोनविंशोऽध्यायः

श्रीशुक उवाच

किंपुरुषे वर्षे भगवन्तमादिपुरुषं लक्ष्मणाग्रजं सीताभिरामं श्रीरामं तच्चरणसन्निकर्षाभिरतः परमभागवतो हनुमान्सह किंपुरुषैरविरतभक्तिरुपास्ते ॥ १ ॥

ऊनविंशे किंपुरुषैर्भारते सेव्यसेवकाः । भारतस्य श्रैष्ठ्यमत्र गद्यपद्यानि भूगुणाः ( ३१ ) ॥
द्वे ( २ ) उवाचगिरौ सार्द्धाः षट्पञ्चाशदनुष्टुभः ( ५६॥ ) ॥ १९ ॥

किम्पुरुषे इति । किम्पुरुषे वर्षे भगवन्तमादिपुरुषं लक्ष्मणस्याग्रजं सीताया अभिरामं पतिं श्रीरामं तस्य रामस्य चरणयोः सन्निकर्षे सेवायामेवाभिरतो नान्याभिलाषी परमभागवतः अविरतं विघ्नैरप्रतिहतं यथा स्यात्तथा भक्तिर्यस्य स हनूमान् किम्पुरुषैः तद्वर्षवासिभिः सह उपास्ते ॥ १ ॥ आर्ष्टिषेणेनेति । गन्धर्वैरनुगीयमानां परमकल्याणीं भर्तृभगवत्कथां भर्त्ता चासौ भगवांश्च तस्य कथामार्ष्टिषेणनामकेन किंपुरुषमुख्येन सह सम्यक् सावधानतया उपशृणोति स्वयं चेदं मन्त्रादिकं गायति ॥ २ ॥ ॐ नम इति । भगवते उत्तमश्लोकाय आर्याणां श्रेष्ठानां लक्षणानि शीलं सुस्वभावः व्रतमाचारश्च यस्य तस्मै उपशिक्षितो वशीकृत आत्मा मनो येन तस्मै उपासितोऽनुसृतो लोको येन तस्मै लोकानुरञ्जनाय साधुवादो लोके साधुत्वप्रसिद्धिस्तस्य निकषणाय स्वर्णसाधुत्वनिर्धारणार्थनिकषाश्मवन्निर्धारणस्थानाय परमसोम्ने इत्यर्थः । यद्वा । साधुवादा ब्रह्मण्यत्वादयस्तेषां परमोत्कर्षप्रापकाय लोका हि साधुवादैरुत्कृष्यन्ते रामं प्राप्य तु साधुवादा उत्कृष्टा भवन्तीति ब्रह्मण्यः लोकसङ्ग्रहार्थं ब्राह्मणभक्तश्चासौ देवः परमेश्वरश्च तस्मै महापुरुषाय महाराजाय नमः ॥ ३ ॥ यदिति । यत् विशुद्धश्चासावनुभवश्च स एव मात्रा स्वरूपं यस्य तत् वेदान्तेषु प्रसिद्धम् एक स्वतेजसा स्वरूपप्रकाशेनैव ध्वस्ता दूरतो निरस्ता गुणानां विविधा जाग्रदाद्यवस्था यस्मिंस्तत् प्रत्यक् दृश्यादन्यत् साक्षिमात्रं प्रशान्तं सुधिया शुद्धचेतसा पुरुषेण उपलभ्यत इति उपलम्भनं शुद्धचित्ते ब्रह्मत्वे नैवोपलभ्यत इत्यर्थः । अनामरूपं निरहम् अहङ्कारशून्यं तत्प्रपद्ये ॥ ४ ॥ मर्त्येति । विभोः श्रीरामस्य मर्त्याकारावतारस्तु रक्षसो रावणस्य वधाय तस्य मनुष्यादन्यतोऽवध्यत्वात् न केवलमेतावत् किं त्विह संसारे मर्त्यानां शिक्षणं पितुराज्ञा पाल्या साध्वी भार्या नोपेक्ष्या तदर्थं दुःखानि सोढव्यानि लोकापवादाद्भेतव्यम् इत्यादिकम् अपि तत्प्रयोजनम् । अन्यथा शिक्षार्थत्वानङ्गीकारे स्वे स्वरूपे रममाणस्य सर्वात्मनः परमेश्वरस्य सीताविरहकृतानि व्यसनानि दुःखानि कुतः स्युः । स्यादिति पाठे वचनव्यत्यय आर्षः ॥ ५ ॥ न वा इति । आत्मा व्यापकः आत्मवतां धीराणां सुहृत्तमः हितकरः आत्मवतामात्मा सुहृत्तमश्चेति वाऽन्वयः । भगवान् वासुदेवः श्रीरामस्त्रिलोक्यां क्वापि विषये नैवासक्तोऽतः स्त्रीकृतं कश्मलं सीतावियोगकृतमोहेन दुःखं नाश्नुवीत नैव प्राप्नुयात् लक्ष्मणं चापि विहातुं नार्हति । देवदूतेन श्रीरामं मन्त्रयता विज्ञापितम् आवयोः संवदतोरत्र कश्चिदागतश्चेत्स त्वया वध्यः स्यादिति श्रीरामेण तथाऽस्त्विति प्रतिज्ञातं तदान्तः कश्चिन्मा प्रविशत्विति लक्ष्मणं द्वारि संस्थाप्य मन्त्रयामास । तदा दुर्वासा आगतः तच्छापभयात् विज्ञापयितुं लक्ष्मणः प्रविष्टः । ततो भ्रातुर्वधमनुचितं मन्वानो रामः लक्ष्मणं हन्तुं नैच्छत् । पुनर्वसिष्ठवाक्यात् तं तत्याजेति वाल्मीकीये प्रसिद्धम् । तच्च सत्यसंकल्पत्वब्रह्मण्यत्वादिशिक्षार्थमेवान्यथा तत्कर्त्तुमपि स नार्हति ॥ ६ ॥

नेति । नूनं महतः श्रीरामस्य सन्तोषहेतुः सत्कुले जन्म सौभगं सौन्दर्यं वाक् वाङ्माधुर्यं बुद्धिर्बुद्धिनैपुण्यम् आकृतिर्जातिः इत्यादिकं न भवति । यत् यस्मात् लक्ष्मणाग्रजः श्रीरामः तैः गुणैर्विसृष्टान् त्यक्तानपि नोऽस्मान् वनौकसो वानरान् सख्ये चकार सखित्वेनाङ्गीकृतवान् । सुग्रीवमुपलक्ष्योक्तिः ॥ ७ ॥ सुर इति । अथ तस्मात् सुरो देवः असुरो वानरो नरो मनुष्यः अनरो नरेतरः पशुपक्ष्यादिर्यः कोऽपि वा सर्वात्मना सर्वप्रकारेण सुकृतज्ञम् अल्पीयस्यपि भजने बहुमानिनं मनुजाकृतिं हरिं रामं भजेत । यः कोशलानयोध्यावासिनः सर्वान् पशुपक्ष्यादींस्तिर्यग्योनिगतानपि जीवान् दिवं ब्रह्मलोकादुपरि वर्त्तमानं क्रममुक्तिस्थानं सान्तानिकं नाम लोकमनयत् । यथोक्तं वाल्मीकीये—"लोकान् सान्तानिकान्नाम यास्यन्तीमे समागताः" । इति ॥ ८ ॥ भारतेऽपीति । भारतेऽपि वर्षे अव्यक्तगतिर्भगवान्नरनारायणाख्यः अनुकम्पया आत्मवतां भक्तानामनुग्रहाय तपःशिक्षारूपाय नतु स्वार्थम् ईश्वरत्वात्

आकल्पान्तं कल्पपर्यन्तं करिष्यामीति सङ्कल्पविषयम् उपचितैर्धर्मज्ञानादिभिरात्मा उपलभ्यते येन तत् तपश्चरति उपशम इन्द्रियाणां संयमः उपरमो निरहङ्कारिता अत्रानुग्रहस्तपसि प्रयोजनम् अनुकम्पा तत्कारणमित्यपौनरुक्त्यम् ॥ ९ ॥ तमिति । तं भगवन्तं भगवत्प्रोक्ताभ्यां साङ्ख्ययोगाभ्यां सह भगवदनुभाव उपवर्ण्यते । येन तत् पञ्चरात्रं सावर्णेः सावर्णिं भाविनं मनुम् । शेषे षष्ठी । उपदेक्ष्यमाणः भगवान् नारदः वर्णाश्रमवतीभिर्भारतवर्षनिवासिनीभिः प्रजाभिः सह परमभक्तिभावेनोपसरति सेवते । इदं च मन्त्रात्मकं गद्यमभिगृणाति ॥ १० ॥ ॐ नम इति । उपरतं नित्यनिवृत्तमनात्म्यमहन्तादिकं यस्मात् अकिञ्चनानां विरक्तानां वित्ताय ऋषिषु ऋषभाय श्रेष्ठाय । शेषं स्पष्टम् ॥ ११ ॥ गायतीति । इदं वक्ष्यमाणं गायति च । कर्त्तेति । अस्य विश्वस्य सर्गादिषु कर्त्ताऽपि यो न बध्यते अहं कर्त्तेति न मन्यते इति तेभ्यो विविक्तत्वं देहगतोऽपि दैहिकैरिन्द्रियादिभिः क्षुत्पिपासादिभिश्च यो न हन्यते नाभिभूयते इत्यसंसक्तत्वम् । यस्य द्रष्टुरपि सतो गुणैर्विषयैर्दृग् दृष्टिर्न विदूष्यते न विक्रियते इति साक्षित्वम् । एवमसक्तश्चासौ विविक्तश्च साक्षी च तस्मै नमः ॥ १२ ॥

इदं हीति । हे योगेश्वर ! यद्भगवान् हिरण्यगर्भो योगस्य नैपुणं जगाद उक्तवांस्तदिदं हि इदमेव किं तत् तदाह । यत् उज्झितं त्यक्तं दुष्टं संसारदुःखकारणं कलेवरं तत्राहंममाभिमानो येन तथाभूतः सन्नन्तकाले निर्गुणे त्वयि भक्त्या मनो दधीत धारयेत् । यद्वा यदिति शत्रन्तम् । अन्तकाले यत् गच्छत् चपलं मन इति ॥ १३ ॥ यथेति । ऐहिकामुष्मिककामेषु लम्पट आसक्तः अज्ञः सुतादिषु योगक्षेमं चिन्तयन् मयि मृते एते कथं वर्त्तेरन्निति चिन्तां कुर्वन् कुत्सितस्य विष्ठादिमलपूर्णस्य दुःखमूलस्यापि कलेवरस्यात्ययान्नाशाच्छङ्कते बिभेति तथैव चेद्विद्वानपि शङ्केत तदा तस्य सर्वसाधनप्रयत्नः केवलं श्रम एव ॥ १४ ॥ तदिति । हे प्रभो ! हे अधोक्षज ! यतो विदुषामपीयं दशा तस्मात् त्वमेव त्वयि स्वभावजं सहजवासनारूपं निरुपाधिकं प्रेमलक्षणं योगं नोऽस्माकं विधेहि सम्पादय । येन योगेन त्वन्मायया मोहितैर्नोऽस्माभिः कुकलेवरे मलपूर्णत्वादिहेतुना निन्दिते शरीरेऽर्पितम् अनेकजन्मस्वनुवर्तिताम् अत एव सुदुर्भिदाम् उपायान्तरैः सर्वथा त्यक्तुमशक्याम् अहंममतां वयमाशु शीघ्रमेव भिन्द्याम त्यजेम ॥ १५ ॥ भारतेऽपीति । इलावृतवत् भारतेऽपि सरितः शैलाश्च बहवः सन्ति तत्र तत्र शैला मलय इत्यादयः । तेषां नितम्बप्रभवाः तटेभ्यः सम्भूताः शेषं स्पष्टम् ॥ १६ ॥ एतासामिति । नामभिरेव पुनन्तीनाम् । नुमार्षः । एतासां नदीनाम् अपः भारत्यः प्रजाः आत्मना च देहेनाप्युपस्पृशन्ति ॥ १७ ॥ चन्द्रवशेति । अन्धो ब्रह्मपुत्राख्यो नदः । शेषं स्पष्टम् ॥ १८ ॥ अस्मिन्निति । अस्मिन् भारते वर्षे एव लब्धं जन्म यैस्तैः पुरुषैः स्वारब्धेन स्वानुष्ठितेन शुक्ललोहितकृष्णवर्णेन सात्त्विकराजसतामसेन पुण्यमिश्र-पापेन वा कर्मणा आनुपूर्व्येण सात्त्विकादिकर्मानुसारेण आत्मनः बह्व्यः दिव्यमानुषनारकादिगतयो विधीयन्ते साध्यन्ते । हि यस्मादानुपूर्व्येण कर्मानुसारेण सर्वा एव गतयः सर्वेषामेव भवन्ति । यथा वर्णविधानं यस्य वर्णस्य यद्विधानं मोक्षप्रकारः संन्यासवनस्थत्वगृहस्थत्वादि तदनतिक्रमेणास्मिन्नेव वर्षे नृणामपवर्गो मोक्षश्च भवति । एतच्च कर्मादिबहुसाधनसम्भवाभिप्रायेणोक्तम् । न त्वन्यत्रापवर्गाभावाभिप्रायेण तदुपर्यपि बादरायणः संभवादिति देवानामपि मोक्षस्य सूचितत्वात् । युगधर्मप्रवृत्तिरप्यत्रैव बोध्या नान्यत्र । उक्तं च वैष्णवे । "चत्वारि भारते वर्षे युगान्यत्र महामुने । कृतं त्रेता द्वापरं च कलिश्चान्यत्र न क्वचित् ।" इति । तत्रापि सहस्रयोजनप्रमाणे प्रदेश एवेति ज्ञेयम् । यतः भारतस्याप्यवान्तरदेशप्रभेदास्तत्रैव दर्शिताः । "भारतस्यास्य वर्षस्य नव भेदान्निशामय । इन्द्रद्वीपः कशेरुश्च ताम्रपर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वरुणः । अयं तु नवमस्तेषां द्वीपः सागरसंवृतः । योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरात् ।" इति सागरसंवृतः समुद्रप्रान्तवर्त्तीति वैष्णवे । स्वामिपादाः अस्य नवमस्य खण्डस्य नामकथनात् "नाम्नाऽपि नवद्वीपोऽयम्" इति गम्यते इत्याहुः । यद्वाऽस्य नाम कुमारिकेति वर्णव्यवस्थिति-रिहैव कुमारिकाख्ये । "शेषेषु चान्त्यजजना निवसन्ति । सर्वे" इति सिद्धान्तशिरोमण्युक्तेः ॥ १९ ॥

अपवर्गस्वरूपं तत्कालं चाह—य इति । यदा ह्यनेकजन्मसुकृतपरिपाकदशायां महापुरुषस्य भगवतः पुरुषैर्भक्तैः सह प्रकृष्टः सङ्गः स्यात्तदा नानाविधदेवतिर्यङ्मनुष्यादिगतीनां कामकर्मादिद्वारा निमित्तभूतो योऽविद्यालक्षणो ग्रन्थिः बन्धनं तस्य रन्धनं निरासस्तद्द्वारेण योऽसौ भगवति सर्वभूतानामात्मनि आत्मनि भवम् आत्म्यं रागादि तच्छून्ये अनिरुक्ते वाचामगोचरे अनिलयने प्रलयरहिते अनाधारे वा परमात्मनि वासुदेवे अनन्यनिमित्तः फलाभिसन्धिशून्यो भक्तियोगलक्षणः सर्वाधिकप्रेम-प्रवाहरूपः स भवतीत्यनुषङ्गः । अत्र भक्तेरपवर्गशब्दवाच्यता ॥ २० ॥ एतदिति । एतदेव मानुष्यमेव सर्वपुरुषार्थसाधनं गायन्ति । अत इति । यैर्भारताजिरे भारताङ्गणे मुकुन्दसेवायामौपयिकम् उपायरूपं नृषु जन्म लब्धं यस्मिन्नोऽस्माकमपि केवलं स्पृहैवास्ति न प्राप्त्याशा तैरमीषाममोभिः । शेषे कर्त्तरि षष्ठी । किमाश्चर्यभूतं शोभनं सुकृतम् अकारि कृतम् उतस्वित् अथवा स्वयं साधनं विनैवैषां हरिः प्रसन्नोऽभूत् । एवंभूतस्य पुण्यस्य दुष्करत्वात् । "यमेवोन्निनीषति तं साधु कर्म कारयति" इति श्रुतेः ॥ २१ ॥ स्पृहामेवाह— किमिति । दुष्करैरपि क्रत्वादिभिः नोऽस्माकं फल्गुना तुच्छेन द्युजयेन स्वर्गप्राप्त्याऽपि किं फलं जातं न किंचिदपीत्यर्थः । यत्र स्वर्गे नारायणस्य पादपद्मयोः स्मृतिर्नास्ति प्रत्युत सा स्मृतिः अतिशयितादिन्द्रियोत्सवात् विषयभोगात् प्रमृष्टा विलुप्तेत्यर्थः ॥ २२ ॥

ब्रह्मलोकादपि भारतभूमेरुत्कर्षमाहुः—कल्पेति। पुनर्भवात् पुनरावृत्तियुक्तात् कल्पायुषां ब्रह्मादीनामपि स्थानजयात् ब्रह्मलोकप्राप्तेः सकाशात् क्षणमल्पमायुर्येषां तेषां स्थानं यद्भारतभूलक्षणं तस्य जयो वरः श्रेष्ठः। यत्र मर्त्येन क्षणभङ्गुरेणापि देहेन क्षणेनैव कालेन कृतं कर्म संन्यस्य हरौ समर्प्य मनस्विनो धीरा अभयं सर्वतापविवर्जितं हरेः पदं स्थानं सम्यक् पुनरावृत्तिवर्जं यान्ति॥ २३॥

नेति। यत्र वैकुण्ठस्य भगवतः कथा एव सुधापगा अमृतनद्यो न सन्ति। यत्र च तदाश्रयाः कथासुधापगाश्रयाः भगवदाश्रया वा भागवताः साधवश्च न सन्ति। यत्र च महान्तो नृत्याद्युत्सवा येषु ते यज्ञेशस्य भगवतः मखाः संकीर्त्तनबहुलाः पूजा न सन्ति स एवंभूतः सुरेशस्य ब्रह्मणो लोकश्चेत्तदाऽपि न वै सेव्यतां नैवाश्रीयतां विवेकिभिः॥ २४॥ प्राप्ता इति। ज्ञानानि ज्ञानेन्द्रियाणि चक्षुरादीनि क्रियाः कर्मेन्द्रियाणि द्रव्याणि पञ्च महाभूतानि तेषां कलापेन संभृतामविकलदेहेन्द्रियादिसम्पन्नाम्। यद्वा ज्ञानं तदर्थाः क्रियाश्च तदर्थानि द्रव्याणि तेषां कलापेन संभृता नृजातिमिह भारतवर्षे प्राप्ता अपि ये तु जन्तवः प्राणिनः अपुनर्मृतायोक्तलक्षणमोक्षाय न यतेरन् प्रयत्नं न कुर्वन्ति ते वै भूयः पुनरपि बन्धनमेव यान्ति। यथा वनौका वनौकसः पक्षिणो लुब्धकान्मुक्ता अपि यदि फललोभेन तत्रैव वृक्षे विहरन्ति तदा पुनर्बध्यन्ते तद्वत्॥ २५॥ यैरिति। यैर्भारतवासिभिरधिकारिभिर्बर्हिषि यागे श्रद्धया पृथगिन्द्रादिनामभिराहुतः आहूतः। दीर्घाभाव आर्षः। आशिषां चतुर्विधपुरुषार्थानां प्रभुर्दाता अत एव स्वयं पूर्णोऽपि हरिरागत्य विधिना प्रकारेण मन्त्रेण वस्तुतश्चरुपुरोडाशादिभेदेनेष्टं तत्तद्देवतायोग्यमग्नये जुष्टं निर्वपामि। इन्द्राय जुष्टं निर्वपामीत्येवं भागशो निरुप्तं पृथक्कृतं हविर्मुदा गृह्णाति॥ २६॥ सत्यमिति। तत्र द्विविधभक्तानां मध्ये सकामानां नृणां तैरर्थितः प्रार्थितः सन्नर्थितं फलं दिशति ददातीति सत्यं तथापि अर्थदः परमार्थफलदो नैव भवति। यत् यस्मात् दत्तस्य भोगेन क्षयादनन्तरं पुनरप्यर्थिता भवति निष्कामानां तु परमार्थदो भवत्येव। यतस्तेषामनिच्छतामपि भजतामिच्छानां पिधानमाच्छादकं सर्वकामपूरकं सर्वकामनिवर्तकं वा निजपादपल्लवं स्वयमेव विधत्ते सम्पादयति। भक्तिरसिकास्त्वाहुः। नृणां भजतामर्थितं वस्तु अर्थितः प्रार्थितः भगवान् दिशतीति सत्यं किन्तु यत् यथा पुनरर्थिता भोगान्ते याचकत्वं स्यात्तथा नैवार्थदः। यतः निजपादपल्लवमनिच्छतामपि भजतां स्वयमेव ध्रुवादीनामिव इच्छापिधानं सर्वकामाच्छादकं तदेव निजपादपल्लवं विधत्ते कृपया ददाति। निजापादपल्लवं स्वयमेव बलाद्दत्त्वा इच्छायाः पिधानं विधत्ते करोतीति वा ततश्चानीप्सितामपि तां पितुः सकाशात् प्राप्य शिशवो यथा मृदि स्पृहां त्यजन्ति तथा सकामभक्ताः कामानपीत्यर्थः। अत एव "अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्।" इत्युक्तम्॥ २७॥ यदिति। यदि अत्रास्मिन् काले नोऽस्माकं स्विष्टस्य सम्यग्यजनस्य सूक्तस्य प्रवचनस्य कृतस्यान्यस्य वा कर्मणः स्वर्गसुखादुपभुक्तादवशेषितं शोभनं सुकृतं किञ्चिदस्ति तर्हि तेनाजनाभे वर्षे स्मृतिमत् हरिरेव सेव्यो नान्यदित्यनुसन्धानयुक्तं नोऽस्माकं जन्म स्यात्। यत् यस्मात् हरिर्भजतां शं स्वानुभवसुखं तनोति। भारते भजनसम्भवात्स्वर्गे तत्प्रतिबन्धकबाहुल्याच्च॥ २८॥ जम्बूद्वीपस्येत्यादि स्पष्टम्॥ २९-३१॥

इति श्रीभागवते पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायामेकोनविंशोऽध्यायः॥ १९॥

—:❀:—

# अथ विंशोऽध्यायः

श्रीशुक उवाच

अतः परं प्लक्षादीनां प्रमाणलक्षणसंस्थानतो वर्षविभाग उपवर्ण्यते ॥ १ ॥

विंशे प्लक्षादिषड्द्वीपस्थितिमाह सहार्णवैः । लोकालोकस्थितिं चात्र गद्यपद्यानि नन्दषट् ( ६९ ) ॥

द्वे ( २ ) उवाचेत्यर्द्धंयुक्ताश्चतुर्नगा ( ६४ ) अनुष्टुभः ॥ २० ॥

अत इति । प्रमाणं योजनानि लक्षमणसाधारणं चिह्नं नाम हेतुः प्लक्षादि संस्थानं मण्डलाकारतिरश्चीनाकारादि स्पष्टं शेषम् ॥ १ ॥ जम्ब्विति । अयं जम्बूद्वीपो यावत्प्रमाणविस्तारः यावता लक्षयोजनेन प्रमाणेन विततस्तावता लक्षयोजनविस्तृतेन क्षारोदधिना स्वयं परिवेष्टितः । तत्र दृष्टान्तः । यथा मेरुर्जम्ब्वाख्येन द्वीपेनेति वेष्टितत्वमात्रे दृष्टान्तो न समप्रमाणत्वेऽपि षोडशसहस्रयोजनमेरुप्रमाणोक्तिविरोधात् ॥ ॥ २ ॥ लवणेति । परिक्षिप्तः वेष्टितः ॥ ३ ॥ प्लक्ष इति । जम्बूप्रमाण एकादशशतयोजनोच्छ्रायः शाखाभिरेकादशशतयोजनविततः शतयोजनस्थूलश्च प्लक्षो वृक्षः । द्वीपाख्याकरो महाप्रमाणप्लक्षवृक्षवत्त्वात् प्लक्ष इति द्वीपनाम निरुक्तिहेतुरस्ति । यत्र द्वीपे प्लक्षे वा उत्थितः अतिप्रज्वलितो हिरण्यमयः प्रकाशमानः सप्तजिह्वः अग्निः उप समीपे इव आधिक्येन वा आस्ते तिष्ठति ॥ ४ ॥ तस्येति । तस्य द्वीपस्य आकलय्य दत्त्वा ॥ ५ ॥ शिवमित्यादीनि सप्त वर्षनामानि पुत्रनामानि च तेषु प्लक्षद्वीपवर्षेषु गिरयो मर्यादापर्वता नद्यश्चाभिज्ञाताः प्रसिद्धाः सप्तैव अन्ये च पर्वता नद्यश्च सहस्रशः सन्तीत्यर्थः । सर्वेषां द्वीपानां मण्डलाकारत्वात् । पुष्करद्वीपे च मानसोत्तरेणैकेनैवाद्रिणा भागद्वयोक्तेर्मानसोत्तरोऽपि मण्डलाकारः अन्यथा एकेनाद्रिणा मण्डलाकारस्य विभागासम्भवः प्लक्षादिषु पञ्चसु द्वीपेषु तु तत्तद्वर्षविभाजकाः अद्रयस्तिर्यग्रेखाकारा उभयतोऽब्धि स्पृशन्तः सन्तीति ज्ञेयम् । अन्यथा सप्तभिः सप्तवर्षविभागासम्भवात् वैष्णवे वर्षाणां पूर्वादिक्रमोक्तेश्च ॥ ६ ॥ मणीति द्वयम् । स्पष्टम् ॥ ७–८ ॥ यासामिति । यासां नदीनां जलोपस्पर्शनस्नानादिना विधूतं निरस्तं रजस्तमश्च येषां ते सहस्रं वर्षसहस्रमायुर्येषां ते विबुधोपमं संदर्शनं क्लमस्वेदादिरहितं रूपं प्रजननमपत्योत्पादनं च येषां ते हंसादयो ब्राह्मणादिस्थानीयाश्चत्वारो वर्णास्त्रय्या वेदत्रयात्मिकया विद्यया स्वर्गद्वारं स्वर्गप्रदं त्रयीमयं वेदप्रतिपाद्यम् आत्मानमन्तर्यामिणं भगवन्तं सूर्यं यजन्ते ॥ ९ ॥

मन्त्रमाह—प्रत्नस्येति । सत्यादीनामात्मानमधिष्ठातारं प्रत्नस्य पुराणस्य विष्णोरेव रूपं सूर्यम् ईमहि शरणं व्रजेम । आर्षः प्रयोगः । तत्र सत्यम् अनुष्ठीयमानो धर्मः ऋतं प्रमीयमाणो धर्मः ब्रह्म तद्बोधको वेदः अमृतं शुभफलं मृत्युः अशुभफलम् ॥ १० ॥ प्लक्षेति । औत्पत्तिको स्वाभाविकी अविशेषेण समानत्वेन ॥ ११ ॥ प्लक्ष इति । यथा प्लक्षः प्लक्षद्वीपः स्वसमानेन द्विलक्षयोजनविस्तारेण इक्षुरसोदेनावृतस्तथा ततो द्विगुणविशालश्चतुर्लक्षयोजनविस्तृतः शाल्मलीद्वीपोऽपि स्वसमानविस्तारेण सुरोदेनावृतः परिवृङ्क्ते सर्वतो विराजते ॥ १२ ॥ यत्रेति । यत्र द्वीपे हि प्लक्षायामा शतयोजनस्थूला एकादशशतयोजनोच्छ्रिता सा वै प्रसिद्धा शाल्मली वृक्षः द्वीपस्य हूतये नामनिरुक्त्यै उपलक्ष्यते दृश्यत आस्ते । यस्यां शाल्मल्यां "सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरः" इति श्रुतेश्छन्दोभिः स्वावयवैर्भगवन्तं स्तौतीति छन्दस्स्तुत् तस्य भगवतः पतत्त्रिराजस्य गरुडस्य निलयं स्थानमाहुः ॥ १३–१४ ॥ वर्षाण्याह—सुरोचनमिति ॥ १५–१६ ॥ पर्वतानाह—स्वरस इति ॥ १७ ॥ नदीराह—अनुमतिरिति ॥ १८ ॥ तदिति ॥ १९ ॥ मन्त्रमाह—स्वेति । यः स्वस्य गोभिः किरणैः । टजभाव आर्षः । कृष्णशुक्लपक्षयोः क्रमेण पितृदेवेभ्योऽन्धः अन्नं विभजन् वर्त्तते सर्वासां प्रजानां राजा स सोमो नोऽस्माकम् आस्तु आभिमुख्येन भवतु । ह्रस्वपाठस्त्वार्षः ॥ २० ॥ एवमिति । यथा पूर्वः शाल्मलिद्वीपः स्वसमानेन सुरोदेनावृत एवं सुरोदाद्बहिस्ततो द्विगुणोऽष्टलक्षयोजनविस्तृतः कुशद्वीपोऽपि स्वसमानेनाष्टलक्षयोजनवितितेन घृतोदेनावृतोऽस्ति ॥ २१ ॥ यस्मिन्निति । यस्मिन् द्वीपे तस्य द्वीपस्य आख्याकरः नामनिरुक्तिकरः अपरः द्वितीयः ज्वलनः अग्निरिव प्रकाशमानः देवकृतः परमेश्वरेण रचितः कुशस्तम्बः स्वशष्पाणां कोमलशिखानां रोचिषा दीप्त्या सर्वा दिशो विराजयति प्रकाशयति ॥ २२ ॥ तद्द्वीपेति । वसुः वसुदानः दृढरुचिः नाभिगुप्तः स्तुत्यव्रतः विविक्तः वामदेव इति नामानि येषां तेभ्यः स्वपुत्रेभ्यो यथाभागं विभज्य विभागेन दत्त्वा स्वयं च तप आतिष्ठत तपः कर्त्तुं प्रतिज्ञातवान् । "प्राङः प्रतिज्ञायाम्" इति तङ् । स्पष्टं शेषम् ॥ २३–२४ ॥

गिरीनाह—चक्र इति ॥ २५ ॥ नदीराह—रसकुल्येति ॥ २६ ॥ यासामिति । यासां नदीनां पयोभिर्जलैर्विशुद्धाः सन्त इति शेषः । कुशलाख्याः संज्ञा येषां ते ब्राह्मणादिस्थानीयाश्चत्वारो वर्णाः जातवेदा अग्निस्तत्स्वरूपिणं भगवन्तं कर्मकौशलेन यज्ञादिकर्मानुष्ठाननैपुण्येन यजन्ते ॥ २७ ॥ मन्त्रमाह—परस्येति । हे जातवेदः ! त्वं साक्षात् परस्य ब्रह्मणो भगवतो मुखरूपो हव्यवाडसि । अतो देवानां यज्ञेन पुरुषं भगवन्तं हरिमेव यज । अङ्गानां नाम्ना दत्तमङ्गिने समर्पयेत्यर्थः ॥ २८ ॥ तथेति । द्विगुणः षोडशलक्षयोजनविततः स्वसमानेन क्षीरोदेन परित उपक्लृप्ता वेष्टितोऽस्तीति शेषः । वृत इति परत्रान्वितम् । यथा कुशद्वीपो घृतोदेन वृतः ॥ २९–३० ॥ य इति । गुहस्य कार्त्तिकेयस्य प्रहरणेन शस्त्रेण शक्तिरूपेण उन्मथिताः नितम्बाः तटभागाः कुञ्जानि च यस्य स तथाभूतोऽपि विभयः विगतभयः स्पष्टं शेषम् ॥ ३१ ॥ तस्मिन्निति । स्वयं भगवान् ज्ञानी तस्याधिपतिः प्रैयव्रतः प्रियव्रतपुत्रो घृतपृष्ठो नाम सोऽपि तस्मिन् स्वे द्वीपे सप्त वर्षाणि विभज्य तेषु पुत्रनामसु पुत्राणां नामान्येव नामानि येषां तेषु वर्षेषु सप्त रिक्थादीन् स्वपुत्रान् वर्षपान् प्रजापालकान् निवेश्य भगवतः परमकल्याणं यशो यस्य तस्य आत्मभूतस्य हरेश्चरणारविन्दध्यानार्थं वनमुपजगाम ॥ ३२ ॥ पुत्रानाह—आम इति ॥ ३३ ॥ गिरीनाह—शुक्ल इति ॥ ३४ ॥ नदीराह—अभयेति ॥ ३५ ॥ यासामिति । अमलं निर्मलं यासामम्भो जलमुपयुञ्जानाः सेवमानाः पुरुषादिसंज्ञका ब्राह्मणादिस्थानीया वर्षपुरुषाः आपोमयमम्भमयम् । अत्र आपस्शब्दः सकारान्तः । देवं भगवन्तमपामपोभिः पूर्णनाञ्जलिना यजन्ते पूजयन्ति ॥ ३६ ॥ मन्त्रमाह—आप इति । हे आपः ! पुरुषवीर्याः स्थ ईश्वराल्लब्धसामर्थ्याः भवथ अत एवात्मना स्वरूपेणैवाऽमीवघ्नीः पापहन्त्र्यः । पूर्वसवर्णदीर्घ आर्षः । भूर्भुवः स्वस्त्रैलोक्यान्पुनन्तीः पुनन्त्यः । पूर्वसवर्णदीर्घो नुम् चार्षः । ता यूयं नोऽस्माकं स्पृशतां स्पर्शनं कुर्वतां भुवः शरीराणि पुनीत । यद्वा । आत्मना शरीरेण भुवः भूमिप्रदेशान् स्पृशतां दण्डवत्प्रणमतां नोऽस्माकम् । शेषे षष्ठी । पुनीत ॥ ३७ ॥

एवमिति । एवं क्रौञ्चद्वीपवत्क्षीरोदात् परस्तात् दध्नो मण्डं रसः स एवोदकं यस्य तेन स्वसमानविस्तारेण समुद्रेण परिवेष्टितो द्वात्रिंशल्लक्षयोजनमायामो विस्तारो यस्य तथाभूतः शाकद्वीपः परितः सर्वत उपवेशितो रचितोऽस्ति ॥ ३८ ॥ यस्मिन्निति । स्वक्षेत्रव्यपदेशको द्वीपनामनिरुक्तिहेतुः शाको नाम वृक्षः । यस्य पर्णान्यन्तः खरस्पर्शानि बहिर्मृदुस्पर्शानि सोऽस्ति । स्पष्टं शेषम् ॥ ३९–४२ ॥ पर्वतानाह—ईशान इति ॥ ४३ ॥ नदीराह—अनघेति ॥ ४४ ॥ तदिति । तेषु वर्षेषु ऋतव्रतादिनामानो ब्राह्मणादीवर्णस्थानीयाः पुरुषाः प्राणायामेन विधूतं रजस्तमश्च येषां ते परमसमाधिना वाय्वात्मकं भगवन्तं यजन्ते ध्यायन्ति ॥ ४५ ॥ मन्त्रमाह—अन्तरिति । योऽन्तः प्रविश्य स्थावरजङ्गमात्मकानि भूतानि आत्मकेतुभिः प्राणादिवृत्तिभिर्बिभर्त्ति धारयति पोषयति च अत एव साक्षादन्तर्यामी ईश्वर एव यस्य वशे स्फुटमेव सर्वं जगद्वर्त्तते स नोऽस्मान् पातु ॥ ४६–४७ ॥ यस्मिन्निति । ज्वलनोऽग्निस्तच्छिखावदमलानां कनकपत्राणामयुतानामयुतानि यस्य तत् भगवतः कमलासनस्य ब्रह्मणः अध्यासनभूतं पुष्करं परिकल्पितम् ॥ ४८ ॥ तदिति । तद्द्वीपमध्ये मानसोत्तरनामा एकः पर्वतोऽष्टसु दिक्षु परितो द्वीपवन्मण्डलाकारः अतस्ते उभयपार्श्ववर्त्तिनी द्वे वर्षे अपि अष्टसु दिक्षु मण्डलाकारे ज्ञेये । अयुतयोजनमुच्छ्राय आयामो विस्तारश्च यस्य स तथाभूतोऽस्ति । यत्र च पर्वते लोकपालानामिन्द्रादीनां पुराणि सन्ति ॥ ४९ ॥ यदिति । देवानामहोरात्राभ्यामुत्तरायणदक्षिणायनाभ्यामित्यर्थः । स्पष्टमन्यत् ॥ ५० ॥

एतदिति । एतस्यात्मजौ सुतौ स तत्र वर्षपती नियुज्य संस्थाप्य स्वयं भगवत्कर्मणि तत्परिचर्यायां शीलं यस्य स तथाभूत इत्येवं तत्सेवापरतयैवास्ते स्म । स्फुटमन्यत् ॥ ५१ ॥ तदिति । तद्वर्षाणां पुरुषाः सकर्मकेण अनेकजन्मानुष्ठितस्वकर्मसंस्कारपूर्वकेण ब्रह्मसालोक्यादिसाधनेन कर्मणा ब्रह्मरूपिणं कमलासनमूर्त्तिमाराधयन्ति ॥ ५२ ॥ इदमिति । इदं च मन्त्रात्मकं पद्यमुदाहरन्ति जपन्ति । यत्तत्सृष्टिकर्त्तृत्वेन प्रसिद्धं कर्ममयं स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरञ्चितामेतीति कर्मफलरूपं ब्रह्म लिङ्ग्यते प्राप्यते यस्मात्तत् एकस्मिन्नेव परमेश्वरे अन्तो निष्ठा यस्य तत् एकान्तम् अत एव वस्तुतः अद्वयं शान्तं लिङ्गं मूर्त्तिं श्रेयोऽर्थी जनोऽर्चयेत् तस्मै भगवते नमः ॥ ५३ ॥ तत इति । ततः शुद्धोदात् लोकः सूर्याद्यालोकवान् देशः अलोकस्तद्रहितो देशः तयोरन्तराले मध्ये तयोऽर्विभागार्थं लोकालोकनामाचलः परितः अष्टसु दिक्षु मण्डलाकारतया उपक्षिप्तः परमेश्वरेण स्थापितोऽस्ति ॥ ५४ ॥ ततः परस्तादित्युक्तेस्तदेव कियताऽन्तरेणेत्यपेक्षायां तदन्तर्वर्तिनीं भूमिमाह—यावदिति । यावन्मानसोत्तरमध्यान्मेरुमध्यान्तं स्थलं सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटिपरिमितं तावती भूः शुद्धोदात्परतोऽस्ति । तत्र प्राणिनोऽपि सन्ति । ततः परं लोकालोकसंलग्ना आदर्शतलोपमा दर्पणसदृशी काञ्चनी अन्याऽस्तीत्यन्वयः । ततः परं लोकालोकः पर्वत इत्यर्थः । अत्रान्येत्युक्तेः कुतोऽन्येति प्रतियोग्यपेक्षातः या शुद्धोदात्परतः प्रथममुक्ता ततोऽन्या ज्ञेया । सा च एकोनचत्वारिंशल्लक्षोत्तरकोट्यष्टकपरिमिता एवं सति मेरुलोकालोकयोरन्तरं सार्द्धद्वादशकोटिमितमुपपन्नं ज्ञेयम् । इति स्वामिपादाः । चक्रवर्त्ती तु शुद्धोदात्परतः काञ्चनी भूरन्याऽस्ति सा च मानसोत्तरमेर्वोर्यावदन्तरं सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटिपरिमितं तावती ज्ञेया । ततः परं लोकालोकाचल इति व्याख्यानमभिप्रैति । यत्तु चक्रवर्त्तिटीकापुस्तके यावन्मानसेति गद्यटीकायां मानसोत्तरमध्यान्मेरुमध्यपर्यन्तं स्थलं सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटिपरिमितं तावती भूः शुद्धोदात्पराऽस्ति तत्र प्राणिनोऽपि सन्ति । ततः परा काञ्चनी भूरन्याऽस्ति इति स्वामिपादसम्मतमिव दृश्यते तत्तु प्रक्षिप्तं प्रतिभाति । तदीयाग्रेतनग्रन्थेन महाविरोधात् । यस्यामिति । यस्यामादर्शतलोपमायां

प्रहितोऽवगलितः पदार्थो न कथंचित्पुनः प्रत्युपलभ्यते यस्मादेवं तस्मात्सर्वसत्त्वपरिहृता सर्वप्राणिवर्जिता आसीदस्ति। लटः स्थाने लङार्षः। देवक्रीडार्थत्वोक्त्या देवविहारोऽस्त्येव ॥ ५५–५६॥ लोकालोक इति। यत् यस्मादनेन लोकालोकप्रदेशस्य मध्यवर्त्तिनाऽचलेन तदवस्थाप्यते। अयं लोकमयो देशः अयमलोकमयो देश इति व्यवहारः संपाद्यते तस्मादस्य लोकालोक इति समाख्याव्यपदेशः॥ ५७॥

स इति। स लोकालोकाचलो लोकत्रयस्य भूर्भुवः स्व इत्यस्य अन्ते परितः अष्टसु दिक्षु मण्डलाकारतया त्रिलोकीव्यवहार-मर्यादारूप ईश्वरेण विहितो रचितस्त्रिलोकीमर्यादारूपत्वोक्त्याऽत्युच्चत्वं सूचितं तत्स्पष्टयति। यस्मादिति। यस्मात्प्रतिबन्धकीभूतात् पर्वतात् सूर्य आदिर्येषां ध्रुवः अपवर्गोऽन्तो येषां तेषां ज्योतिर्गणानां गभस्तयः किरणा अर्वाचीनास्तन्मण्डलान्तर्वर्त्तमानान् त्रीन् लोकाना-वितन्वानाः समन्तात् प्रकाशयन्तः कदाचिदपि पराचीना भवितुं नोत्सहन्ते परतो गन्तुं न शक्नुवन्ति। तावदुन्नहनमुत्सेध तदनुरूप आयामो विस्तारश्च यस्य स ध्रुवादप्युच्छ्रितत्वात् त्रिलोकीमर्यादाभूत इत्यर्थः॥ ५८॥ एतावानिति। लोकविन्यासः लोकविस्तारो मानादिभिः सहितः कविभिर्विवेकिभिर्व्यासादिभिश्चिन्तितो विचारेण निश्चित एतावान्॥ ५९ स त्विति। स त्वयं लोकविस्तारो मेरुमारभ्यैकतो यावल्लोकालोकाचलस्तावत्साकल्येन पञ्चाशत्कोटियोजनगणितस्य भूगोलकस्य तुरीयभागः चतुर्थोंऽशः सार्द्धद्वादश कोटियोजन इत्यन्वयः। यद्वा सोऽयं तु लोकालोकाचलः भूगोलकस्य भूसम्बन्ध्यण्डगोलकस्येत्यर्थः। सूर्यस्येव भुवोऽप्यण्डगोल-कयोर्मध्यवर्त्तित्वात् खगोलमिव भूगोलमपि पञ्चाशत्कोटियोजनं तस्य तुरीयभाग इति। एवं लोकालोकाद्बहिरप्यण्डकटाहपर्यन्तं सार्द्धद्वादशकोटियोजनपरिमिता अलोकभूमिः। एवं तत्समानसूत्रे मेरुमारभ्यान्यातोऽप्यण्डकटाहपर्यन्तं पञ्चविंशतिकोटियोजन-परिमिता भूमिः तथा च समानसूत्रे सर्वत्र कटाहान्तात् कटाहान्तपर्यन्तं पञ्चाशत्कोटियोजनत्वं सिद्धम्। लोकालोकमानसोत्तरयोः प्रमाणं तु अत्र स्वनिकटभूप्रमाण एवान्तर्भूतमतो न तस्य पृथग्गणनेति ज्ञेयम्॥ ६०॥ तदिति। तस्य लोकालोकस्योपरिष्टात् चतसृषु दिक्षु आत्मयोनिना स्वतःसिद्धेन जन्मादिविकाररहितेन सर्वकारणेनात एवाखिलस्य जगता गुरुणा स्वामिना पूज्यतमेन परमेश्वरेण सकललोकस्य स्थितिहेतवः ऋषभः पुष्करचूडः वामदेवः अपराजित इति चत्वारो द्विरदपतयः हस्तिश्रेष्ठाः अधिनिवेशिताः स्थापिताः आसते। हस्तिनां लोकस्थितिहेतुत्वं जलस्योपरिस्थिताया भुवो नमनोन्नमनादिप्रतिबन्धकत्वेन ज्ञेयम्॥ ६१॥ तेषामिति। परममहापुरुषः महाविभूतेः परमैश्वर्यस्य पतिः अन्तर्यामी भगवान्धर्मज्ञानादीनि भगशब्दवाच्यानि अणिमाद्योऽष्ट महासिद्धयश्चो-पलक्षणं यस्य तत् तथा निजानि स्वकीयानि वराणि श्रेष्ठानि आयुधानि सुदर्शनादीनि तैरुपशोभितैर्निजैर्दोर्दण्डैश्चोपलक्षितमात्मनः स्वस्य विशुद्धसत्वं रजस्तमोभ्याममिश्रविशुद्धसत्त्वात्मकं रूपं सन्धारयमाण आविष्कुर्वन् स्वपार्षदप्रवरैर्विष्वक्सेनादिभिः परिवारितः सर्वतः सेव्यमानो भगवान् तेषां दिग्गजानां तथा स्वविभूतानां निजा सभूतानां लोकपालानां महेन्द्रादीनां च विविध-वीर्योपबृंहणायानेकविधपराक्रमसिद्धये सकललोकानां स्वस्तये तस्मिन् लोकालोकाख्ये गिरिवरे एकयैव मूर्त्या समन्तादास्ते महाविभूतिपतित्वात्। अनेनैव तस्मिन् गिरावपि यथादिशमष्टलोकपालानामपि पुर्यः सन्तीति ज्ञेयम्॥ ६२॥

नन्वन्तर्यामिरूपेणैवैतत्कर्त्तुं शक्यं किं बहिः समन्तादवस्थानेनेत्याशङ्क्याह—आकल्पमिति। आत्मनो योगमायया विरचिता या विविधा लोकयात्रा तस्या गोपीथाय एष भगवान् आकल्पमेवंभूतवेषं गतो लीलया प्राप्त इति समन्ताद्बहिरास्थान-प्रयोजनम्॥ ६३॥ य इति। योऽयमन्तर्विस्तारः मेरुमारभ्यैकतो लोकालोकपर्यन्तः सार्द्धद्वादशकोटियोजनलक्षण उक्त एतेनैवा-लोकस्यापि परिमाणं व्याख्यातं ज्ञेयम्। तथा च लोकालोकाद्बहिः समानसूत्रेऽण्डकटाहपर्यन्तमप्यष्टसु दिक्षु सार्द्धद्वादशकोटि-योजनपरिमिता भूमिर्ज्ञेयेत्यर्थः। चक्रवर्त्तिमते अलोकपरिमाणं द्वाविंशतिलक्षोत्तरं कोट्यष्टकं बहिः सर्वदिक्षु॥ ६४॥ तत इति। ततः अलोकात् परस्तात् योगेश्वराणामावरणाष्टकं भित्त्वा भगवत्पदं गन्तृणां गतिं द्विजपुत्रानयनेऽर्जुनाय श्रीकृष्णेन प्रदर्शितां विशुद्धामेतां गतिं भागवतीमिति द्वितीयस्कन्धोक्तामुदाहरन्ति वृद्धाः कथयन्ति॥ ६५॥ एवं विराट्पुरुषस्य कटिभागं भूमिं निरूप्य तत उपरि काञ्चीदाममणिवत्स्थितं सूर्यं निरूपयन् ब्रह्माण्डमध्यं दर्शयति—अण्डमध्यगतः सूर्य इति। किं तन्मध्यं तदाह। द्यावाभूम्योः पूर्वोत्तरकपालयोर्यदन्तरं सन्धानरूपं मध्यस्थानमन्तरिक्षं तथा च सूर्यश्च अण्डगोलश्च तयोर्मध्ये सर्वतः समानसूत्रे पञ्चविंशति-कोटियोजनानि स्युरित्यर्थः। सूर्यादूर्ध्वगोलपर्यन्तं यथा पञ्चविंशतिः कोट्यः तथा अधोगोलकपर्यन्तं चेत्याहुः॥ ६६॥ मृत इति। यत् यस्मात् मृते अचेतने एतस्मिन्नण्डे एष सूर्योऽभूत् सृष्टिसमये वैराजरूपेण प्रविष्टः ततो मार्त्तण्ड इति व्यपदेशः अस्य नाम यत् यस्माच्च हिरण्याण्डसमुद्भवः हिरण्मये प्रकाशबहुलेऽण्डे सम्यक् तत्प्रकाशकतया भवति वर्त्तत इति तथा ततो हिरण्यगर्भ इति व्यपदेशः। यद्वा मृते अचेतनेऽण्डे एष सूर्यः अभूत् प्रविष्टः ततो मार्त्तण्डः स एव। क इत्यत आह। हिरण्यगर्भः समष्टिजीव-सूक्ष्मोपाधिरूप यद्यत एव हिरण्याण्डस्य तदीयस्थूलदेहस्य संभवः सम्यग् विद्यमानता॥ ६७॥ सूर्येणेति। दिशः खं स्वगः महोभिदा पृथिवीगतभेदः महीति भिन्नं पदं वा मही तथा अन्याऽपि भिदा स्वर्गापवर्गौ भोगमोक्षदेशौ नरकाः रसौकांसि अतलादीनि सर्वशः सूर्येणैव विभज्यन्ते। सर्वोऽपि व्यवहारः सूर्येणैव सिद्ध्यतीत्यर्थः॥ ६८॥ देवेति। देवादीनां सर्वजीव-निकायानां सूर्य एवात्माऽन्तर्यामी आत्मत्वेनोपास्यो वा दृगीश्वरः नेत्राधिष्ठाता च॥ ६९॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां विंशोऽध्यायः॥ २०॥

# अथैकविंशोऽध्यायः

श्रीशुक उवाच

**एतावानेव भूवलयस्य सन्निवेशः प्रमाणलक्षणतो व्याख्यातः ॥ १ ॥**

एकविंशेऽन्वहं गत्या राशिसंचरणै रविः । लोकयात्रां करोतीति तत्र गद्यानि द्व्यष्टशः ( २५ ) ॥

उवाचेत्येकं ( १ ) च सार्द्धा एकत्रिंशदनुष्टुभः ( ३१॥ ) ॥ २१ ॥

एतावानिति । भूवलस्य संनिवेशः रचनाविशेषः प्रमाणतः पञ्चाशत्कोटियोजनविस्तारतः पञ्चविंशतिकोटियोजनोत्सेधतः लक्षणतः जम्ब्वादितत्तदसाधारणचिह्नतश्च व्याख्यातः कविभिः प्रकथितः ॥ १ ॥ एतेनेति । एतेन पञ्चाशत्कोटियोजनात्मकेन मानेन दिवो मण्डलमानं तद्विदः प्रमाणविद उपदिशन्ति । यथा निष्पावादीनां द्विदलधान्यविशेषाणां द्वयोर्दलयोर्मध्ये यथैकस्य मानेनापरस्यापि मानमुपदिश्यते तथा भूगोलकखगोलकयोर्वि-ारेण तुल्यमेव मानम् ॥ २ ॥ ते इति । ते अन्तरेण तयोर्मध्ये तदुभयसन्धितं ताभ्यां भूगोलद्युगोलाभ्यामुपर्यधोभागे उभयतः संलग्नमन्तरिक्षलोकम-ीति तच्च लक्षद्वयप्रमाणमाहुः । तद्विस्तारोत्रापि तावानेवेति भावः । सन्धानं सन्धा साऽस्य संजाता इति सन्धितम् । अङन्तात्सन्धाशब्दादितश् ॥ ३ ॥ यदिति । यस्यान्तरिक्षस्य मध्यगतो भगवान् तपतां प्रकाशवतां चन्द्रादीनां स्वरश्मिभिः पोषकत्वात्पतिः तपनः सूर्यः आतपेन ऊष्मणा त्रिलोकीं प्रतपति प्रतापयति आत्मनः स्वान्तःस्थस्य भगवतो भासा त्रिलोकीमवभासयति ॥ ४ ॥ स इति । स एष सूर्यः यथासवनं यथाकालमारोहणादिस्थानेषु मकरादिराशिष्वभिपद्यमानः प्राप्नुवन् सन्नुदगयनादिसंज्ञाभिर्मान्द्यादिभिर्गतिभिरहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते । मान्द्यशैघ्र्यशब्दौ स्वार्थष्यञन्तौ । तथा च उदगयनाम्न्या मन्दया गत्या आरोहणस्थाने यथाकालं प्राप्नुवन् मकरादिषु राशिषु अहानि क्रमेण दीर्घाणि रात्रीस्तु ह्रस्वा विधत्ते । दक्षिणायननाम्न्या क्षिप्रगत्या अवरोहेण कर्कटादिषु अहानि ह्रस्वानि विधत्ते रात्रीश्च दीर्घा विधत्ते । वैषुवतसंज्ञया उत्तरदक्षिणायनमध्यवर्त्तिन्या समानया गत्या मेषतुलयोरहोरात्रान् समानान् विधत्ते ॥ ५ ॥ तत् प्रपञ्चयति—यदेति । यदा मेषतुलयोः वर्त्तते प्रचलति तदाऽहोरात्राणि समानानि भवन्ति । अत्यन्तवैषम्याभावात्समानानीत्युक्तम् । सर्वथा साम्यं त्वेकस्यैवाहोरात्रस्येति ज्ञेयम् ॥ ६ ॥ यदेति । स्पष्टम् । यद्यपि वृषभमिथुनयोरेवाह्नां वृद्धिः कर्कटादिषु च ह्रासस्तथापि रात्र्यपेक्षयाऽधिकत्वाद्वर्द्धन्त इत्युक्तम् । एवं रात्रिवृद्धावपि द्रष्टव्यम् । दिनापेक्षया न्यूनत्वाद्ध्रसतेत्युक्तम् । वस्तुतस्तु मकरादिष्वह्नां वृद्धिप्रक्रमः कर्कटादिषु ह्रासप्रक्रमः एकैका घटिकेत्यपि स्थूलदृष्ट्यैवोक्तम् । वृद्धिह्रासयोः प्रतिदिनं वैषम्यात् ॥ ७ ॥ यदेति । विपर्ययाणि भवन्तीति अहानि न्यूनानि रात्रयश्चाधिका भवन्तीत्यर्थः ॥ ८ ॥

यावदिति । उत्तरायणाद्दक्षिणायनपर्यन्तं यावदुदगयनं तावद्दिनानि वर्द्धते पूर्वपूर्वदि-नापेक्षयोत्तराणि ह्रसन्तीत्यर्थः । दक्षिणायनादुदगयनपर्यन्तं यावद्दक्षिणायनं तावत्पूर्वपूर्वरात्र्यपेक्षयोत्तरोत्तरं रात्रयो वर्द्धन्ते । दिनानि तु पूर्वपूर्वदिनापेक्षयोत्तरोत्तराणि ह्रसन्तीत्यर्थः । अत्र उत्तरायणे ध्रुवेण रथयुगाक्षकोटिनिबद्धवायुपाशद्वयाकर्षणे रथस्यारोहणमभ्यन्तरमण्डलप्रवेशश्च । तथा गतिमान्द्यं दिनवृद्धिः रात्रिह्रासश्च । दक्षिणायणे च ध्रुवेण पाशप्रेरणाद्रथस्यावरोहणं बहिर्मण्डलप्रवेशो गतिशैघ्र्यं दिनह्रासो रात्रिवृद्धिश्च । वैषुवते तु पाशसाम्यात्समावस्थानं मध्यमण्डलप्रवेशो गतिसाम्यमहोरात्रसाम्यं च । तथोक्तं विष्णुपुराणे । "आकृष्येते यदा तौ तु ध्रुवेण समधिष्ठितौ । तदाऽभ्यन्तरतः सूर्यो भ्रमते मण्डलानि तु । ध्रुवेण मुच्यमानेन पुना रश्मियुगेन तु । तथैव बाह्यतः सूर्यो भ्रमते मण्डलानि च ।" इति । अत्रारोहणादिस्थानानि विशेषतो वायुपुराणे दर्शितानि । "सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः । स्थानं जरद्गवं मध्यं तथैरावतमुत्तरम् । वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः ।" इति तदपि मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथीत्रयेण त्रिधा भिद्यते त्रिभिस्त्रिभिरश्वन्यादिनक्षत्रैः । तथा हि नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयम् । आर्षभी गोवीथी जरद्गवी चेति वैषुवते मध्यमार्गे वीथित्रयम् । तदप्युक्तं तत्रैव । "अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता । रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते । पुष्याऽश्लेषा तथाऽदित्या वीथी चैरावती स्मृता । एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते । तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता । हस्तश्चित्रा तथा स्वातिर्गोवीथीति तु शब्दिता । ज्येष्ठा विशाखाऽनुराधा वीथी जारद्गवी मता । एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते । मूलाषाढोत्तराषाढा अजवीथ्यभि-

शब्दिता। श्रवणं च धनिष्ठा च मार्गी शतभिषक् तथा। वैश्वानरी भाद्रपदे रेवती चैव कीर्त्तिता। एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते।" अत्र याम्या भरणी आदित्या अदितिदेवताका पुनर्वसुः मार्गी मृगवीथीति ज्ञेयम्। अत्र पुराणरीत्या सुमेरुमूर्ध्नः ध्रुवाधःस्थानात् विलोकनयाऽश्विन्यादिषु भ्रमन् रविः क्षितिजात्प्रत्यहमारोहन्निव दृश्यते अत उच्चत्वसाधर्म्याद्गजवीथ्यादिनाम्ना व्यवहारः उत्तरध्रुवदिक्त्वादुत्तरमार्गव्यपदेशः। ततः मघादिषु किंचिदवरोहणाद्गजापेक्षयाऽल्पतुङ्गत्वसाम्याद्गोवीथ्यादिव्यवहारः मध्यमार्गव्यवहारश्च। एवं मूलादिषु ततोऽप्यवरोहणादजवीथ्यादिव्यवहारः। दक्षिणदिक्त्वात् दक्षिणमार्ग इति ज्योतिःशास्त्राविरुद्धा पुराणरीतिः। न चैवमारोहणावरोहणस्थानभेदेऽपि मेरुं प्रदक्षिणीकुर्वन् यावन्तं मार्गमेकतो दिवसे प्रचलति तावन्तमेवापरतोऽपि रात्रौ प्रचलतीति मार्गस्य समानत्वेऽप्यहोरात्रस्य वृद्धिह्रासादिवैषम्यं कथमिति शङ्कनीयं यतो मार्गस्य समानत्वेऽपि राशिप्रमाणयोर्भेदेन वैचित्र्यं घटते। तथा हि ज्योतिश्चक्रस्य द्वादशोंऽशः सपादनक्षत्रद्वयात्मक एकैको राशिः। तत्र च प्रायशो मीनमेषौ ह्रस्वौ वृषकुम्भौ ततः किञ्चिदधिकौ मकरमिथुने ततः किञ्चिद्दीर्घे सिंहवृश्चिकौ दीर्घतरौ कर्कचापे दीर्घतमे कन्यातुले समे। तत्रार्काक्रान्तराशिमारभ्य षड्राशिक्षेत्रदर्शनकालो दिनम्। इतरराशिषटकदर्शनकालो रात्रिः। तथा च राशीनां दीर्घह्रस्वत्वादिवैषम्याद्राशिप्रमाणाधीनावेव दिनरात्रवृद्धिह्रासावित्यादि ज्योतिःशास्त्रप्रसिद्धा प्रक्रिया पुराणाविरुद्धत्वात्राप्यनुसन्धेया। तथो चोक्तं विष्णुपुराणे। "एकप्रमाणमेवैष मार्गं याति दिवाकरः। अहोरात्रेण यो भुङ्क्ते समस्ता राशयो द्विज। षडेव राशयो भुङ्क्ते रात्रावन्याश्च षड् दिवा। राशिप्रमाणजनिता दीर्घह्रस्वात्मता दिने। तथा निशायां राशीनां प्रमाणैर्लघुदीर्घता। दिनादेर्दीर्घह्रस्वत्वं तद्भोगेनैव जायते।" इति। राशय इति राशोनित्यर्थः। यद्यपि राशिचक्रे राशयः समक्षेत्रा एव तथापि त्रिर्यक्स्थितस्य राशेरुदयोऽल्पकालेनेति स राशिर्ह्रस्व उक्तः। ऊर्ध्वस्थस्य राशेरुदयोऽनल्पकालेनेति स राशिर्दीर्घ उक्तः। अयमेवार्थः सिद्धान्तशिरोमणौ। "यो हि प्रदेशोपममण्डलस्य तिर्यक्स्थितो यात्युदयं तथाऽस्तम्। सोऽल्पेन कालेन य ऊर्ध्वसंस्थोऽनल्पेन तस्मादुदया न तुल्या।" इत्यनेनोक्तः॥ ९॥

एवमिति। एवं प्रागुक्तसूर्यभ्रमणप्रकारेण मानसोत्तरगिरौ मण्डलाकारे यत्सूर्यचक्रस्य परिवर्त्तनं परिभ्रमणं यस्य तन्मानसोत्तरमण्डलस्य परिमाणम्। योजनानां नव कोटय एकपञ्चाशल्लक्षाण्युपदिशन्ति। अयं भावः। सूर्यरथस्यैकोऽक्षो मेरौ निबद्धः स्वस्थानं न त्यजति द्वितीयेऽक्षे निबद्धं चक्रं तु अजस्रं मानसोत्तरगिरेर्मूर्ध्नि मण्डलाकारेण भ्रमति। तद्भ्रमणमार्गस्येदं प्रमाणम्। नव कोटय एकपञ्चाशल्लक्षाणि च योजनानीति तस्य चेयमुपपत्तिः। सुमेरुमध्यान्मानसोत्तरमध्यं व्यासार्द्धं तद्द्विगुणं व्यासः मानसोत्तरमध्ये रथनेमिरेखा परिधिः तत्र मण्डलमध्ये यो विस्तारो व्यासाख्यस्ततस्त्रिगुणं व्याससप्तमांशाधिकं स्थूलं व्यवहारयोग्यं मानं परिधिसंज्ञकस्य मण्डस्येति नियमः। मेरुमध्यान्मानसोत्तरमध्यप्रमाणं सार्द्धसप्तपञ्चाशल्लक्षाधिका कोटिः तद्द्विगुणं मेरोरुभयतः समानसूत्रे मानसोत्तराभ्यन्तरविस्तारः पञ्चदशलक्षाधिककोटित्रययोजनम्। तत्र त्रिगुणं व्याससप्तमांशाधिकं परिधिः स्यात्। तत्तु यद्यपि नवतिलक्षाधिका नव कोटयो लभ्यन्ते तथापि वस्तुतः मेरोर्मध्यमारभ्य सूर्यबिम्बान्तमेव व्यासार्द्धं विवक्षितम्। तस्यैवोदयास्ताद्यौचित्यात् मानसोत्तरकथनं रथचक्राधारबोधनाय। तथा च सूर्यबिम्बपर्यन्तमानाद्द्विगुणमानं लक्षद्वयासन्नाधिकं कोटित्रयम्। तदनुसारेण परिधिरुक्त इति। तस्मिन्निति। तस्मिन् मानसपर्यन्ते मेरोः पूर्वस्मात् पूर्वस्यां दिशि ऐन्द्रीं पुरीमुपदिशन्ति एवं दक्षिणस्यां याम्यां पश्चिमायां वारुणीमुत्तरस्यां सौम्यां च पुरीमुपदिशन्ति। मेरोश्चतुर्दिशं वर्त्तमानासु तासु पुरीषु भूतानां लौकिककर्मसु व्यवस्थया प्रवृत्तिनिवृत्तिनिमित्तानि समयविशेषेण कालविशेषेण उदयमध्याह्नास्तमयनिशीथा भवन्ति। चतुर्दिशमित्युक्तेर्यं मेरोर्दक्षिणे देशे तेषामैन्द्रीमारभ्य ये पश्चिमे तेषां याम्यामारभ्य ये उत्तरे तेषां वारुणीमारभ्य ये पूर्वदेशे तेषां सौम्यामारभ्य पूर्वादय इति ज्ञेयम्॥ १०॥ तत्रेति। तत्रत्यानां मेरुस्थानां प्राणिनां दिवसमध्यङ्गत एवादित्यस्तपति सव्येनेति नक्षत्राभिमुखतया स्वगत्या अचलं मेरुं सव्येन वामतः कुर्वन्नपि प्रदक्षिणावर्त्तप्रवाहाख्यवायुभ्रम्यमाणज्योतिश्चक्रवशात् प्रत्यहं दक्षिणतः करोति। सव्येन चलन्निति पाठान्तरम्। अतश्चक्रगतिवशादतिदूरतो भूसंलग्नस्येव दर्शनमुदयः। आकाशमारूढस्येव दर्शनं मध्याह्नः। भूमिं प्रविष्टस्येवादर्शनमस्तमयः। ततोऽतीवदूरगमने निशीथ इति समुद्रतीरस्थदृष्ट्या च "अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति" इति श्रुत्यादिव्यवहारः कल्पनीयः न वास्तवः। यत्रोदेति यस्मिन् देशे प्रथमतो दर्शनं याति तस्य समानसूत्रविषयीभूते देशे निपाते प्राप्ते सत्यां सूर्यो निम्लोचति अस्तं याति। उदयानन्तरं गच्छन् त्रिंशद्घटिकान्ते इति यत्र क्वचनाकाशमध्यस्थः स स्यन्देन स्वेदोद्गमनेनाभितपति। तस्य समानसूत्रनिपातविषयीभूते देशे निपाते सति एष सूर्यो जनान् प्रस्वापयति निशीथं करोति यस्मात् ये प्रथमं तमुदयास्ताद्यवस्थायां समनुपश्येरन्। तत्रार्थः। तदा तत्र गतं स्वसमानसूत्रनिपातदेशस्थं न पश्यन्ति। तथा च मेरोर्दिक्चतुष्टयस्थितेषु वर्षेषु मध्ये यदा यत्र सूर्यो दृश्यते तदैव तस्मात्पूर्ववर्षे मध्याह्नः पश्चिमे वर्षे निशीथ उत्तरे वर्षे निम्लोचः। एवं मध्याह्नदर्शनसमय एव पूर्ववर्षे निम्लोचः पश्चिमवर्षे उदय उत्तरवर्षे निशीथश्च तथा तद्दर्शनसम एव पश्चिमे मध्याह्नः पूर्ववर्षे निशीथ उत्तरे वर्षे उदयश्च ज्ञेयः। तथा निशीथसमये पश्चिमे निम्लोच उत्तरे मध्याह्नः पूर्ववर्षे प्रातःकालः। तदेवं सर्ववर्षस्था जना आत्मनो मेरोर्दक्षिणदेशस्थानेऽवमन्यमानाः स्ववर्षे सूर्यस्योदयमध्याह्ननिम्लोचनिशीथानि पश्यन्त एवान्येषु वर्षेषु तानि पूर्वोक्त-

विवेकेन जानन्ति। तथा च वैष्णवे। "उदयास्तसमये चैव सर्वकालं तु सम्मुखे। दिशास्वशेषासु तथा मैत्रेय विदिशासु च। यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः। तिरोभावं च यत्रैति तत्रैवास्तमनं रवेः। शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम्। विकर्णौ द्वौ विकर्णस्थस्त्रीन् कोणान् द्वे पुरे तथा"। अस्यार्थः। शक्राद्यन्यतमस्य पुरे तिष्ठन्पुरत्रयं दिक्त्रयं युगपत्स्पृशति द्वौ विकर्णौ कोणौ च तथा हि शक्रपुरे तिष्ठन् शक्रदिग्वर्षे मध्याह्नं दक्षिणदिग्वर्षे उदयम् उत्तरदिग्वर्षेऽस्तं करोतीति दिक्पुरत्रयस्पर्शः। अग्निकोणवर्षे प्रथमं याममीशानकोणवर्षे तृतीयं यामं करोतीति विकर्णद्वयस्पर्शः। विकर्णस्थः अग्न्याद्यन्यतमकोणस्थः सन् त्रीन् कोणान् द्वे पुरे दिशौ च स्पृशति। तथा अग्निकोणे तिष्ठन् अग्निकोणवर्षे मध्याह्नं नैर्ऋतकोणवर्षे उदयम् ईशानकोणेऽस्तमनम् इति कोणत्रयस्पर्शः। तथा दक्षिणदिग्वर्षे प्रथमो यामः पूर्वदिग्वर्षे तृतीयो यामः इति दिक्पुरद्वयस्पर्शः एवमन्यत्र। अत एवोक्तं तत्रैव। "तस्मादिश्युत्तरस्यां तु दिवारात्रिः सदैव हि। सर्वेषां द्वीपवर्षाणां मेरोरुत्तरतः स्थितिः"। यतो यत्र पश्यति सैव तस्य प्राची तस्य च वामतो मेरुस्तिष्ठतीति सिद्धान्तशिरोमणौ चायमर्थो भङ्ग्यन्तरेणोक्तः। "यत्रोदितोऽर्कः किल तत्र पूर्वा तत्रापरा यत्र गतः प्रतिष्ठाम्। तन्मत्स्यतोऽन्ये च ततोऽखिलानामुदक्स्थितो मेरुरिति प्रसिद्धम्"। इति॥ ११॥

यदेति। यदा च ऐन्द्र्याः पुर्याः सकाशात् याम्यां पुरीं प्रति प्रचलति तदा पञ्चदशघटिकाभिर्योजनानां सपादकोटिद्वयं साधिकानि पञ्चविंशतिसहस्राधिकानि सार्द्धद्वादशलक्षाणि चोपयाति गच्छति। एतानि हि योजनानि पूर्वोक्तस्य मानसोत्तरपरिवर्त्तनमार्गस्य एकपञ्चाशल्लक्षाधिकनवकोटियोजनप्रमाणस्य चतुर्थांशः पञ्चदशघटिकाश्चाहोरात्र चतुर्थांश इति। एवं ततो याम्याया यदा वारुणीं प्रतिगच्छति वारुण्या वा सौम्यां प्रति सौम्यायाश्चैन्द्रीं पुरीं प्रति गच्छति तदापि सर्वत्र पञ्चदशभिर्घटिकाभिः तावन्ति योजनानि गच्छति। एवं षष्टिघटिकात्मकाहोरात्रेण पुरीचतुष्टयाऽऽक्रान्त्या मानसोत्तरपरिमण्डलमार्गः समाप्यते। दिनान्तरे च पुनस्तथेति॥ १२॥ अन्ये चेति। सह वा सहैव यद्यपि सूर्यस्यापि नक्षत्रैः सहैवोदयास्तौ तथापि तस्य तत्साहित्यादर्शनात् सोमादीनामेव तत्साहित्यमुक्तं स्पष्टमन्यत्॥ १३॥ एवमिति। तत एकपञ्चाशल्लक्षाधिकनवकोटियोजनपरिमितस्य पूर्वोक्तमार्गस्य त्रिंशत्तमो भागः सप्ततिसहस्राधिकैकत्रिंशल्लक्षयोजनात्मक एकमुहूर्त्तगमनयोग्यो भवति। मुहूर्त्तस्य दिनत्रिंशत्तमभागत्वात्। अत्र चाष्टशताधिकचतुस्त्रिंशल्लक्षयोजनोक्तिर्न पूर्वोक्तविरुद्धा। रथस्यावरोहणे वहिर्मण्डलप्रवेशेन मार्गस्याधिक्यात् गतेः क्षिप्रत्वाच्च। पुरीष्विति। एकेन मुहूर्त्तेनैतावन्ति योजनानि गच्छन् क्रमेण चतसृषु पुरीषु परिभ्रमति इत्यर्थः। त्रयीमय इत्याद्युपासनार्थम्॥ १४॥ यस्येति। द्वादश मासा अरा यस्य षट् ऋतवो नेमयो यस्य त्रीणि चातुर्मास्यानि नाभयो यस्य तत्॥ १५॥ तस्येति। तस्य सूर्यरथस्याक्षो दण्डविशेषः मेरोर्मूर्द्धनि मूर्द्धाधःप्रदेशे तैलयन्त्राक्षस्य तथा दृष्टेः कृत इतरभागो यस्य यत्र यस्मिन्नक्षे मानसोत्तरगिराविति ततो लम्बाद्धात् उपरि वायुवद्धभूमाविति ज्ञेयम्। चक्रं वा तावदुच्छ्रितम् अन्यथा मानसोत्तरस्यायुतयोजनमात्रोच्छ्रयत्वान्मेरोश्च चतुरशीतियोजनोच्छ्रायत्वादस्तस्य साम्यं न स्यात्। स च किञ्चिन्न्यूनसप्तपञ्चाशल्लक्षाधिककोटिप्रमाणः॥ १६॥ तस्मिन्निति। तस्मिन्नक्षे चक्रप्रान्तवर्त्तिनि कृतमूलः कीलितपूर्वभागस्तुर्यमानेन मेरुमानसोत्तरायतस्य सार्द्धसप्तपञ्चाशल्लक्षाधिकसार्द्धकोटिप्रमाणस्य प्रथमाक्षस्य चतुर्थभागेन सार्द्धसप्तत्रिंशत्सहस्राधिकैकोनचत्वारिंशल्लक्षमानेन संमितः इत्यक्षोऽयं लवणसागरसमानसूत्रपाते प्रथमाक्षप्रदेशे ग्रथित इति ज्ञेयम्। द्वितीयाक्षस्य प्रथमाक्षादल्पप्रमाणत्वात् तैलयन्त्राक्षवद्ध्रुवे कृतो वायुपाशेन निवद्ध उपरिभागो यस्य सः द्वितीयोऽक्षोऽस्तीति शेषः॥ १७॥ रथनीड इति। रथनीड उपवेशस्थानं षट्त्रिंशल्लक्षयोजनानि आयतो दीर्घः तत्तुरीयभागेन नवलक्षयोजनेन विशालो विस्तृतः तावानिति नवलक्षयोजनदीर्घ इत्यर्थः। चक्राच्चत्वारिंशत्सहस्रोपरितने स्थाने नीडमध्ये सूर्य उपविष्टो ज्ञेयः। यत्र युगेऽरुणेन गरुडभ्रातृत्वाच्छन्दोमयेन सारथिना योजिता गायत्र्यादिच्छन्दोनामानः सप्त हया आदित्यं देवं वहन्ति॥ १८॥

पुरस्तादिति। सौत्येऽश्ववाहनरूपे सूतकर्मणि नियुक्तोऽरुणः पूर्वमुखोपविष्टस्य सवितुः पुरस्तादग्रे पश्चात् पृष्ठप्रदर्शनदोषपरिहाराय तत्संमुखं प्रत्यङ्मुख आस्ते किलेति। एवं स्थितस्यापि सारथ्यकर्मनिर्वाहो दैवशक्तिवशादिति सूचयति। यद्वा यत्सूर्यस्य परस्तात्तस्य वै पश्चिमत्वात्पश्चादित्युक्तम्। अश्वस्थानं च वायुनोक्तम्। "सप्ताश्वरूपच्छन्दांसि वहन्ते वामतो रविम्। चक्रपक्षनिबद्धानि चक्रे चाक्षः समाहितः॥" इति॥ १९॥ यथेति। सूक्तवाकाय सुभाषिताय स्तुतय ईश्वरेण नियुक्ताः प्रत्यङ्मुखाः पुरतो गच्छन्तः सूर्यं संस्तुवन्ति। स्पष्टमन्यत्॥ २०॥ तथेति। तथा बालखिल्यवदन्ये चर्ष्योदय एकैकशश्चतुर्दशसङ्ख्याका द्वन्द्वशः सप्त गणाः सन्तो मासि मासि पृथङ् नानानामानः पृथक्कर्मभिर्मासि मासि नानानामानं भगवन्तमात्मानं सूर्यमुपासते। ग्रामण्यो यक्षाः यातुधाना राक्षसाः तत्तन्नामकर्मविवेचनं तु द्वादशस्कन्धे भविष्यति। "संयुक्तानामधीश्वरैः" इति द्वादशोक्तेः। स्वस्वपतिसाहित्येन द्वन्द्वं ज्ञेयम्॥ २१॥ लक्षोत्तरमिति। लक्षोत्तरं सार्द्धनवकोटियोजनपरिमण्डलं भूवलयस्य मानसोत्तरस्य तदुक्तं तन्मध्ये सगव्यूत्युत्तरं क्रोशद्वयाधिकं यथा भवति तथा द्विसहस्रं योजनानि क्षणेन स आदित्यो भुङ्क्त परिक्रामतीत्यन्वयः। गव्यूतिः क्रोशद्वयम्॥ २२॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायाम् एकविंशोऽध्यायः॥ २१॥

—:❀:—

# अथ द्वाविंशोऽध्यायः

## राजोवाच

यदेतद्भगवत आदित्यस्य मेरुं ध्रुवं च प्रदक्षिणेन परिक्रामतो राशीनामभिमुखं च प्रचलितं चाप्रदक्षिणं भगवतोपवर्णितममुष्य वयं कथमनुमिमीमहीति ॥ १ ॥

द्वाविंशे सोमशुक्रादेः स्थानमाहोत्तरोत्तरम् । इष्टानिष्टे तथा नृणां तत्रगद्यानि गोभुवः ( ११ ) ॥

उवाचद्वितयं साङ्घ्रि षट्त्रिंषत्स्युरनुष्टुभः ( ३६। ) ॥ २२ ॥

यदेतदिति । अमुष्य भगवत आदित्यस्य भगवता सर्वज्ञेन त्वया यदेतद्राशीनामभिमुखमप्रदक्षिणं प्रचलितमुपवर्णितं सव्येन चलन् दक्षिणेन करोति इति तद्वयं कथमनुमिमीमहि अनुमानात्मकतर्केण निश्चितं जानीमः । विरुद्धत्वादित्यर्थः ॥ १ ॥ स हेति । स श्रीशुकः ह स्पष्टमुवाच यथेति । सह भ्रमतां चक्रवैपरीत्येन चलतां प्रदेशान्तरेषु दृश्यमानगतिविरुद्धप्रदेशेषु नक्षत्रान्तरे पूर्वदिगवस्थितनक्षत्रे तथा राश्यन्तरे स्पष्टं शेषम् । चक्रवशात् स्वतश्च गतिद्वयमविरुद्धमिति वाक्यार्थः । अयं भावः । शिशुमार-चक्रप्रेरकप्रवाहवायुगतिरतिशीघ्रा ग्रहनक्षत्रादीन् पश्चिमाभिमुखं भ्रमयति । तथैव प्रतिदिनमुद्यन्तोऽस्तमयन्तश्च ते दृश्यन्ते । ग्रहादीनां स्वीया गतिश्च पूर्वाभिमुखैव सा तु स्फुटं न दृश्यते । कालान्तरे च पूर्वदिग्गतराशिनक्षत्रेषु तेषामुपलम्भात्साऽनुमीयत इति ॥ २ ॥ स एष इति । स प्रसिद्ध एष सूर्यः साक्षादादिपुरुषः सकलजगत्कारणीभूतो भगवान् बहुधा भवनसमर्थः अत एव कविभिरपि वेदेन च विजिज्ञास्यमानो वितर्क्यमाणो नारायण एव त्रयीमयं वेदत्रयप्रतिपाद्यं कर्म विशुद्धिनिमित्तं कर्मणां विशुद्धेः साद्गुण्यस्य निमित्तभूतं कर्मण तत्तत्कालाधीनत्वात्कालस्वरूपमात्मानं द्वादशधा विभज्य लोकानां सर्वप्राणिनां स्वस्तये वसन्तादिषु षट्सु ऋतुषु यथोपजोषं यथाकर्मभोगमृतुगुणान् शीतोष्णादीन् विदधाति ॥ ३ ॥ तमिति । तमेतमादित्यरूपं भगवन्तमिह मर्त्त्यलोके वर्णाश्रमाचारानुवर्त्तिनः पुरुषास्त्रय्या विद्यया आम्नातैरुच्चावचैः सन्ध्योपासनाग्निहोत्रादिकर्मभिरिन्द्रादिरूपं योगवितानैश्च ध्यानादिभिरन्तर्यामिरूपं श्रद्धया यजन्तः पूजयन्तः एवाञ्जसाऽनायासेनात्मनः श्रेयः कल्याणं समधिगच्छन्ति ॥ ४ ॥ अथेति । स एष लोकानामात्मा सूर्यो द्यावापृथिव्योरन्तरेण मध्ये यन्नभोवलयमन्तरिक्षं तस्य मध्ये यत्कालचक्रं तद्गतो राशिभिर्मेषादिभिः संज्ञा येषां तान् संवत्सरस्यावयवभूतान् मासान् भुङ्क्त इत्यन्वयः । भुक्तिरतिक्रमणं चैत्रादिसंज्ञास्तु चान्द्रमासानाम् ॥ ५ ॥ मास इति । पक्षद्वयं मास इति चान्द्रेण मानेन तदेव दिवानक्तं चाहोरात्रं च पितृणामिति शेषः । सपादर्क्षद्वयं सपादं महानक्षत्र-द्वयं मास इति तु सौरेण मानेन स्वगम्यस्य नभोमण्डलस्य यावता द्वादशमंशं भुङ्क्ते स कालो मास इत्यपि ज्ञेयम् । इत्युपदि-शन्तीति प्रमाणोक्तिः सर्वत्र संबध्यते ॥ ६ ॥ यावतेति । संवत्सरस्य षष्ठमंशं राशिद्वयम् ॥ ७ ॥ अथ चेति । अर्द्धेन यावता मासषट्केन नभोवीथ्यां प्रचरति तं कालम् अयनमाचक्षते ॥ ८ ॥ अथ चेति । अथ च अपि च भानोः मान्द्यादिगतिभिर्द्यावा-पृथिव्योर्मण्डलाभ्यां सह कात्स्न्र्येन नभोमण्डलं यावत् सह स हि प्रसिद्धः सूर्यः भुञ्जीत तं कालं भानोरेव निमित्तात्संवत्सरादि-संज्ञया समामनन्ति कथयन्ति वृद्धाः । द्यावापृथिव्योरिति द्युमण्डलभूमण्डलयोर्मध्यवर्त्तिनभोमण्डलेन तुल्यमेव ज्ञापितम् । न त्वर्थाधिक्यम् । तत्र यदा शुक्लपक्षप्रतिपदि संक्रान्तिर्भवति तदा सौरचान्द्रयोर्मासयोर्युगपदुपक्रमो भवति स संवत्सरः । ततः सौरमानेन वर्षे षड् दिनानि वर्द्धन्ते । चान्द्रमानेन च षड् दिनानि ह्रसन्तीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति । एवं पञ्च वर्षाणि गच्छन्ति तन्मध्ये द्वौ मलमासौ भवतः । वर्षाणां च यथाक्रमं संवत्सरादिसंज्ञा भवति ततः पुनः षष्ठः संवत्सरसंज्ञको वर्षः प्रवर्त्तते । एवमेवान्तरभेदो ज्ञेयः ॥ ९ ॥

एवमिति । अर्कगभस्तिभ्यः सूर्यमण्डलरूपेभ्यः लक्षे इति भूतलाद्द्विलक्ष इत्यर्थः । अर्कस्य संवत्सरभुक्तिं पक्षाभ्यां भुङ्क्ते तस्य मासभुक्तिं तु सपादर्क्षाभ्यां सपादनक्षत्रद्वयेन सपाददिनद्वयेन भुङ्क्ते यदि तु कदाचिदुग्रचारी भवति तदा द्रुततरगमनः सन्नेकेनैव दिनेनाहोरात्रात्मकेन पक्षभुक्तिं भुङ्क्ते । अन्यदा तु सार्द्धसप्तघटिकोत्तरेण दिनेन ॥ १० ॥ अथ चेति । आपूर्यमाणाभिश्च कलाभिः शुक्लपक्षेणामराणामहानि पूजादिनानि वितन्वानः । "तस्मादापूर्यमाणपक्षे यजन्त" इति श्रुत्या देवपूजायाः शुक्लपक्षे विधानात् तेन शुक्लपक्षेण पितृणां रात्रीश्च वितन्वानः क्षीयमाणाभिश्च कलाभिः कृष्णपक्षेण पितृणामहानि पूजादिनानि वितन्वानः

अपरपक्षे पितॄणामिति श्रुत्या कृष्णपक्षे पितृपूजाविधानात्। तदा च देवपूजाया अप्रशस्तत्वादेव तेषां रात्रीर्वितन्वान इत्युक्तम्। न हि शुक्लपक्षकृष्णपक्षाभ्यां देवानामहोरात्रं भवति। उत्तरायणदक्षिणायनाभ्यां तदहोरात्रस्य तृतीयस्कन्धे प्रतिपादितत्वादन्यथा तद्विरोधापत्तेः। सर्वेषां जीवनिवहानां प्राणिसमूहानां प्राणः सर्वौषधिपोषकत्वेनान्नमयत्वात् "अन्नं हि प्राणिनां प्राणाः" इति स्मृतेः। अत एव जीवनहेतुत्वाज्जीवश्चैकमेकं नक्षत्रं त्रिंशता मुहूर्तैरेकदिवसपरिमितकालेन भुङ्क्ते॥ ११ ॥ य इति। य एष षोडशकलः पुरुषः भगवान् मनोमयः दशेन्द्रियपञ्चमहाभूतमनआत्मकसङ्घातप्रधानमनोनियन्ता अन्नमयः अमृतमयश्च अतो देवपित्रादीनां प्राणनाप्यायनशीलत्वात्सर्वजीवनहेतुत्वात्सर्वमय इति वर्णयन्ति॥ १२ ॥ तत इति। ततश्चन्द्रमण्डलात् उपरिष्टात् त्रिलक्षयोजनतः-भूतलात्तु पञ्चलक्षतः कालायने कालचक्रे ईश्वरेण योजितानि उत्तराषाढाश्रवणसन्धादभिजिन्नक्षत्रं पृथक्कल्पितं तेन सहाष्टाविंशतिः नक्षत्राणि मेरुं दक्षिणेनैव गच्छन्ति न हि तेषां सूर्यादिवत्पृथगन्या गतिरस्ति॥ १३ ॥ तत इति। ततो नक्षत्रमण्डलात् उपरिष्टात् उशना शुक्रः द्विलक्षयोजनतः भूतलात्तु सप्तलक्षतः उपलभ्यते अर्कस्य पुरतः पश्चात्सहैव वा शैघ्र्यादिगतिभिरर्कवच्चरति। चकारो वाकारार्थः। सूर्येण सहास्य गतिसाम्यमेवाग्रपश्चाद्भावस्त्वतिचारवशात् स च वृष्टिविष्टम्भः स्तम्भनं यस्माद् ग्रहात्तमुपशमयतीति प्रायेण वर्षयन् वृष्टिं कुर्वन् लोकानां नित्यदाऽनुकूल एवास्ते चारेण क्रमस्थनक्षत्राद्यतिक्रमेण अनुमीयते च॥ १४ ॥ उशनसेति। उशनसा शुक्रेण बुधोऽपि व्याख्यात इति पुरतः पश्चात्सहैव वा चरतीत्यंशेन तुल्यतया निरूपित इत्यर्थः। विशेषमाह। ततः शुक्रादुपरिष्टाद्द्विलक्षयोजनतो भूतलात्तु नवलक्षतः इत्यादि स्पष्टम्॥ १५ ॥

अत इति। लक्षद्वितय इति भूतलादेकादशलक्षे यदि वक्रेण नाभिवर्तते तदा त्रिभिस्त्रिभिः पक्षैरेकैकशो द्वादशराशीन् भुङ्क्ते। वक्रेण वर्तमानस्तु अनियतगतिर्भवति अघशंसः दुःखसूचकः स्पष्टं शेषम्॥ १६ ॥ तत इति। द्विलक्षेति भूतलात्त्रयोदशलक्षे यदि वक्रो न स्यात्तर्हि परिसंवत्सरं चरति स्पष्टं शेषम्॥ १७ ॥ तत इति योजनलक्षद्वयात् भूतलात्पञ्चदशलक्षे पर्येति अनुक्रामति॥ १८ ॥ तत इति एकादशलक्षेति भूतलात्षड्विंशतिलक्षे यत्परमं पदं ध्रुवस्थानम्॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां द्वाविंशोऽध्यायः॥ २२ ॥



# अथ त्रयोविंशोऽध्यायः

श्रीशुक उवाच

अथ तस्मात्परतस्त्रयोदशलक्षयोजनान्तरतो यत्तद् विष्णोः परमं पदमभिवदन्ति। यत्र ह महाभागवतो ध्रुव औत्तानपादिरग्निनेन्द्रेण प्रजापतिना कश्यपेन धर्मेण च समकालयुग्भिः सबहुमानं दक्षिणतः क्रियमाण इदानीमपि कल्पजीविनामाजीव्य उपास्ते । तस्येहानुभाव उपवर्णितः ॥ १ ॥

त्रयोविंशे ध्रुवस्थानं ज्योतिश्चक्राश्रयं तथा । शिशुमारस्थितिश्चात्र गद्यानि स्युर्नवैव ( ९ ) तु ।

उवाचेत्येकमर्द्धाढ्या ( १ ) ऋक्षसंख्यया ( २७ ॥ ) अनुष्टुभः ॥ २३ ॥

अथेति । अथ तस्मादृषिस्थानात्त्रयोदशलक्षयोजनान्तरे यत्तत्प्रसिद्धं विष्णोः परमं पदमभिवदन्ति तदस्तीति शेषः । यत्र महाभागवत औत्तानपादिः ध्रुवः समकालमेव युज्यन्त इति तथा तैरग्न्यादिभिर्नक्षत्ररूपैः सबहुमानं दक्षिणतः क्रियमाणः कल्पजीविनामवान्तरकल्पे वर्तमानानां मर्त्यलोकान्तरिक्षलोकादिलोके जीवतामाजीव्यः महर्लोकाद्युपरितनस्थानां भूमेरधःस्थानां च तद्विनापि स्थितिसम्भवात् उपास्ते तिष्ठति । तस्य ध्रुवस्येह मनुष्यलोके योऽनुभावः भगवदाराधनराज्यपालनादिरूपः स तु चतुर्थस्कन्धे उपवर्णितः ॥ १ ॥ स हीति । स हि ध्रुवः अनिमिषेण विश्रान्तिरहितेन अव्यक्तं रंहो वेगो यस्य तेन भगवद्रूपेण कालेन भ्राम्यमाणानां सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनां स्थाणुरिवावष्टम्भ आलम्बनं प्रस्तुतकालचक्रस्यावष्टम्भो वा सर्वे कालचक्राधीना अयं तु कालचक्रमप्यधीनयतीति ईश्वरेण विहितः स्थापितः शश्वदवभासते ॥ २ ॥ यथेति । स्थलमध्यनिखाते मेढीस्तम्भे धान्याक्रमणपशवो बलीवर्दाः कृषीवलेन संयोजितास्त्रिभिः सवनैः प्रातरादिकालविभागैः मेढीस्तम्भनिकटमध्यदूरवर्त्तिभिर्विमार्गैर्वा यथास्थानं स्वस्वस्थानमनतिक्रम्य मण्डलानि चरन्ति । एवमेतस्मिन् कालचक्रे त्रिभिस्त्रिभिः उत्तरदक्षिणायनवैषुवतैः अन्तर्बहिर्योगेनोपर्यधःस्थानविभागेन चेश्वरेणायोजिताः सूर्यादयो भगणाः ध्रुवमेवावलम्ब्य वायुनोदीर्यमाणाः प्रवर्त्यमाना आकल्पान्तं भूमेरुपरि चंक्रमन्ति भ्रमन्ति । अदभाव आर्षः ॥ ३ ॥

नभसीति । कर्म सारथिः सहायो येषां ते स्पष्टमन्यत् ॥ ४ ॥ केचनेति । केचन ईश्वराधारतावादिनः शिशुमारः जलजन्तुविशेषस्तत्संस्थानेन तदाकारेण ज्योतिरनीकं ज्योतिश्चक्रं योगधारणायां स्थितमिति शेषः । स्फुटं शेषम् ॥ ५ ॥ यस्येति । आवाक्शिरसः कुण्डलीभूतदेहस्य यस्य शिशुमारस्य पुच्छाग्रे ध्रुव उपकल्पित इत्यादिलाङ्गूलेऽग्रादधोभागे यानि उदगयनानि अभिजिदादीनि पुनर्वस्वन्तानि चतुर्दश नक्षत्राणि तानि दक्षिणपार्श्वे दक्षिणायनानि पुष्यादीन्युत्तराषाढान्तानि चतुर्दश सव्ये वामे पार्श्वे कल्पयन्ति । तत्र दृष्टान्तमाह । यथेति । शिशुमारस्य सर्पविशेषस्य अजवीथीदक्षिणमार्गस्य प्रथमो भागः उक्तान्येव नक्षत्रस्थानानि विशेषेण विभज्य दर्शयति । पुनर्वसुपुष्यावित्यादिना पुनर्वसुरुदगयनान्त्यनक्षत्रं पुष्यो दक्षिणायनस्याद्यमार्द्राश्लेषे तयोर्निरन्तरे अभिजिदुत्तराषाढे उत्तरदक्षिणायनयोराद्यन्तनक्षत्रे श्रवणपूर्वाषाढे धनिष्ठा मूलं च तयोरप्युत्तरपूर्वे मघादीनि यान्यनुराधान्तान्यष्टौ दक्षिणायननक्षत्राणि तानि वामपार्श्ववंक्रिषु वामपार्श्वास्थिषु युञ्जीत प्रातिलोम्येन मृगशिरा रोहिणी कृत्तिकेत्येवं व्युत्क्रमेण पूर्वाभाद्रपदान्तानि यान्यष्टोदगयननक्षत्राणि तानि दक्षिणपार्श्ववंक्रिषु युञ्जीत । शतभिषज्ज्येष्ठे उत्तरदक्षिणायनयोर्ये अवशिष्टे ते स्कन्धयोः ॥ ६ ॥ उत्तरेति । अगस्तियमनारायणाश्विनस्तारा एव ककुदि गलपृष्ठे ॥ ७ ॥ एतदिति । भगवतः एतद्रूपमहरहः सन्ध्यायां निरीक्षमाण उपतिष्ठेत । उपस्थानमन्त्रं दर्शयति । नम इति । ज्योतिर्लोकाय ज्योतिषामाश्रयाय कालाय कालचक्ररूपाय अनिमिषां सूर्यादीनाम् । नुडभाव आर्षः क्विबन्तं वा । पतये महापुरुषाय नमो धीमहीति ॥ ८ ॥ ग्रहेति । यस्मादेतद्ग्रहर्क्षतारामयमाधिदैविकं सर्वदेवाधिदेवस्य भगवतो विष्णोः स्वरूपं त्रिकालं मन्त्रकृतां पूर्वोक्तं मन्त्रं जपतां पापापह पापनाशकं तस्मात् त्रिकालमेतत्स्मरतो नमस्यतो वा पुंसस्तत्कालजं पापमाशु नश्येत् । तङार्षः ॥ ९ ॥

इति श्रीभागवते पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां त्रयोविंशोऽध्यायः ॥ २३ ॥

—:❀:—

# अथ चतुर्विंशोऽध्यायः

## श्रीशुक उवाच

अधस्तात् सवितुर्योजनायुते स्वर्भानुर्नक्षत्रवच्चरतीत्येके ॥ १ ॥

चतुर्विंशे रवेरर्वाक् स्वर्भान्वादिस्थितिः क्रमात् । अतलादिस्थितिरपि तत्र गद्यानि भूयराः ( ५१ ) ॥

उवाचेत्येकं ( १ ) सपादास्त्रिसप्ततिरनुष्टुभः ॥ २४ ॥

अधस्तादिति । एके पौराणिका इत्येवं वदन्ति । केचिन्मौहूर्त्तिकास्त्वन्यथा वदन्तीत्यर्थः । स्वर्भानुः राहुः स्फुटमन्यत् ॥ १ ॥ य इति । स्वयम् असुरेषु अपसदो नीचः सैंहिकेयः सिंहिकापुत्रः योऽसौ राहुः अतदर्हः ग्रहत्वामरत्वयोरनर्होऽपि भगवदनुकम्पया स्वयममरत्वं ग्रहत्वं चालभत ॥ २ ॥ यस्येति । हे तात ! उपरिष्टात् षष्ठस्कन्धाष्टमस्कन्धयोः ॥ ३ ॥ यदिति । प्रतपतस्तरणेः सूर्यस्य यद्दो मण्डलं तद्विस्तरतो योजनायुतमाचक्षते । एवं सोमस्य द्वादशसहस्रयोजनं मण्डलमाचक्षते ॥ ४ ॥ तदिति । तद्व्यवधानकृत् अमृतपानसमये मध्यप्रवेशेन तयोः सूर्याचन्द्रमसोः व्यवधानं करोतीति तथा अत एवैवाभ्यां सूचितत्वात् वैरमनुबध्नातीति तथा । यो राहुः पर्वणि अमावस्यापौर्णमास्योः सूर्याचन्द्रमसावभि अभिभवितुं तयोर्भूतलस्थजनचक्षुषां व्यवधानं कर्तुं धावति ॥ ५ ॥ तदिति । तत्तस्य तयोरभिभवोद्योगं निशम्य ज्ञात्वा भगवता भागवतं स्वकीयं दयितं प्रियमस्त्रं सुदर्शनमुभयत्र सूर्ये चन्द्रे च रक्षणाय प्रयुक्तं तत् प्रसिद्धं पारवर्त्तमानं परिभ्रमत् दृष्ट्वेति शेषः । अभि अभिमुखं मुहूर्त्तमवस्थितः सन् उद्विजमानः भीतः अत एव चकितहृदयः कम्पितहृदयः आरात् दूरादेव निवर्त्तते ॥ ६ ॥ तदिति । तद्राहोर्मध्यस्थित्या व्यवधानेन सूर्याचन्द्रमसोरदर्शनमेव लोकाः प्राणिन उपरागं ग्रहणं वदन्ति । तत्र च ऋजुवक्रस्थितिभ्यामर्द्धग्राससर्वग्रासौ न तु ग्रासोऽस्ति दूरान्तरत्वात् ॥ ७ ॥ तत इति । तावन्मात्रे योजनायुते ॥ ८ ॥ तत इति । यावद्वायुः प्रवाति तीव्रो वाति तस्याप्युपरधिमाह । यावच्च मेघा उपलभ्यन्ते तदुपलक्षितं ग्रहहीनमन्तरिक्षमिति शेषः ॥ ९ ॥ पृथिव्या उपरि भूर्लोकावधिमाह—तत इति । यावद्धंसादयः पार्थिवा विकाराः ॥ १० ॥ उपवर्णितमिति ॥ ११ ॥

अवनेरिति । षोडशसहस्रयोजनं मेरोर्भूमिप्रवेशस्योक्तत्वात्तावान् भूकन्दो ज्ञेयस्ततोऽधस्तादधोऽवयवेष्वित्यर्थः । योजनायुतान्तरेण प्रत्येकमुच्छ्रिताः । यद्वा । योजनायुतावधिमित्यर्थः । "अन्तरमवकाशावधि" इत्यमरः । भूतलाद्योजनायुतावधौ अतलं तस्माद्योजनायुतावधौ वितलमित्येवम् आयामविस्तारेणेति कटाहस्य य आयामो विस्तारस्तावद्विस्तारेणेत्यर्थः । यद्वा । आयामविस्तारेणापि योजनायुतावधिना उपक्लृप्ताः दैर्घ्यविशालताभ्यां समा एवेति । उच्छ्रितत्वं तु यथासंभवं ज्ञेयम् । भूविवरा इति । "भूलोकः कल्पितः पद्भ्याम्" इत्युक्त्यनुरोधेन तेषां भूलोकान्तःपातित्वं दर्शितम् ॥ १२ ॥ तान् दर्शयति—अतलमिति ॥ १३ ॥ एतेष्विति । स्वर्गादपि अधिकः कामभोगश्च ऐश्वर्यानन्दश्च भूतिः प्रभावश्च विभूतिः सम्पत्तिश्च तैः समृद्धा भवनादयो येषु तेषु आक्रीडं मिथुनक्रीडास्थानम् आविहारः प्रकटविहारस्थानम् एतेषु विलस्वर्गेषु नित्यप्रमुदिताः परस्परमनुरक्ताश्च कलत्रादयो येषां ते ईश्वरादतिसमर्थादिन्द्रादेरप्यप्रतिहतः कामो येषां ते मायया यथेष्टं विनोदो येषां ते दैत्यादयो निवसन्ति ॥ १४ ॥ येष्विति । हे महाराज ! येषु विलस्वर्गेषु मायाविना मयेन विनिर्मिताः नाना ये मणिप्रवरास्तेष्वपि ये प्रवेका मुख्यास्तैर्विरचितैर्विचित्रैर्भवनादिभिः समलंकृताः । तत्र भवनानि प्रजानां गृहाः प्राकाराः प्रसिद्धाः गोपुराणि सभा राजोपवेशस्थानानि चैत्यानि देवालयाः चत्वराणि चतुष्पथाः आयतनानि प्रवासिजनविश्रामस्थानानि तथा नागश्चासुराश्च मिथुनीभूताः पारावतादयश्च तैराकीर्णाः सङ्कुलाः कृत्रिमा भूमयो येषु तैः । नानास्वनेति पाठे तु नानास्वनत्वं मिथुनविशेषणम् । तैः विवरेश्वराणां गृहोत्तमैश्च समलंकृताः पुरश्चकासति ॥ १५ ॥ उद्यानानीति । येषु अतितरां मनइन्द्रियानन्दिभिः कुसुमफलस्तबकाश्च सुभगकिसलयानि च तैरवनता रुचिरा विटपा येषां विटपिनां लतानामङ्गैरालिङ्गितानां तथा समिथुनाः सस्त्रीका विविधा विहङ्गमा येषु जलाशयेषु तेषाममलजलपूर्णानां च श्रीभिः झषकुलोल्लङ्घनेन क्षुभितं यज्जलाशयानां नीरं तस्मिन् यानि नीरजादीनि तेषां वनेषु कृतं निकेतनं यैस्तेषां पक्षिणामेकोऽखण्डो यो विहारस्तेनाकुलाश्च ते मधुराश्च ये विविधाः स्वनादयस्तैर्ये इन्द्रियोत्सवास्तैश्च साधनैः अमरलोकश्रियमति-

शयितानि उद्यानानि चकासति। समिथुनेत्यादेरुत्तरेणैव संबन्धः। इन्द्रियानन्दिभिरिति स्वनादिविशेषणम् इति स्वामिपादाः। पुंस्त्वमार्पमिति चक्रवर्त्ती वदन् श्रीविशेषणमभिप्रैति नीरजं सामान्येव कमलं लोहितशतपत्रं तद्विशेषः ॥ १६ ॥ यत्रेति। अत्र यदहोरात्रादिभिर्भयं तद्यत्र नोपलक्ष्यते सूर्याद्यभावात् ॥ १७ ॥

यत्रेति। मणिकृत एव प्रकाश इत्यर्थः ॥ १८ ॥ न वा इति। एतेषु बिलस्वर्गेषु वसतां प्राणिनां दिव्यौषध्यादिपानादिभिराध्यादयो नैव भवन्तीत्यन्वयः। आधयो मनोव्यथाः व्याधयो देहव्यथाः तथा द्विविधा वयोवस्थाश्च न भवन्ति। तत्र प्रथमावलीप्रभृतयः द्वितीया देहवैवर्ण्यादयः वली चर्मसङ्कोचः पलितमकाले केशशौक्ल्यं क्लमः श्रमः ग्लानिरुत्साहहानिः ॥ १९ ॥ न हीति। कल्याणानां मङ्गलरूपाणां चक्रापदेशात् सुदर्शननाम्नः विना ॥ २० ॥ यस्मिन्निति। यस्मिन् सुदर्शने प्रविष्टे पुंसवनानि गर्भाः भयात्स्रवन्ति पतन्ति च। "आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः"। इति ॥ २१–२२ ॥ येन मयेन ॥ २३–२४ ॥ तान् दर्शयति—स्वैरिण्य इति। सवर्णे रताः स्वैरिण्यः असवर्णेऽपि रताः कामिन्यः तत्राप्यतिचञ्चलाः पुंश्चल्य इति भेदः ॥ २५ ॥ या वा इति। बिलायनं बिलरूपमायतनं साधयित्वा सम्भोगसमर्थं कृत्वा स्वे ये असाधारणा विकासास्तत्पूर्वको योऽवलोकस्तेनानुरागयुक्तं यत्स्मितं तेन संलाप उपगूहनं च तदादिभिः स्वैरं यथेष्टं रमयन्ति ॥ २६ ॥ यस्मिन् हाटकाख्ये रसे उपयुक्ते सेविते सति ॥ २७–२८ ॥ भवयोर्भवस्य भवान्याश्च ॥ २९ ॥ यत्रेति। यत्र वितले चित्रभानुरग्निर्मातरिश्वना पवनेन समिध्यमानः प्रज्वलित ओजसा बलेन तद्वीर्यं पिबति संशोष्य कठिनीकरोति ॥ ३० ॥ तन्निष्ठ्यूय तं तेनाग्निना निष्ठ्यूतं दाहोत्तीर्णीकृतम्। यद्वा। भवभवानीभ्यां थूत्कृत्य त्यक्तं भूषणेन रत्नालङ्कारेण सह असुरेन्द्राणामवरोधेषु अन्तःपुरेषु पुरुषीभिः स्त्रीभिः ॥ ३१ ॥ तत इति। ततोऽधस्तात् सुतले उदारश्रवाः महायशाः पुण्यश्लोकः विरोचनस्यात्मजो बलिः अदितेः सकाशाल्लब्धकायो भूत्वा स्वरूपमाविष्कृत्य महेन्द्रस्य प्रियं चिकीर्षमाणेन बटुवामनरूपेण भगवता पराक्षिप्तं त्रिपदयाच्ञयाऽपहृतं लोकत्रयं यस्य सोऽपि भगवदनुकम्पया पुनर्भगवतैव तत्र प्रवेशितः इन्द्रादिष्वविद्यमानया सुसमृद्धया श्रियाऽभिजुष्टः सन् आराधनीयं तमेव भगवन्तं स्वधर्मेण भगवदुपदिष्टेनाराधयन् अपगतेन्द्रादिसाध्वसः अधुनाऽप्यास्ते ॥ ३२ ॥

सुतलराज्यं भूमिदानस्य फलं तु नेत्याह—नो इति। यत्तत् यद्बिलनिलये सुतले ऐश्वर्यं तत् अशेषाणां जीवनकायानां प्राणिसमूहानां जीवभूतश्चासावात्मभूतश्च तद्रूपे परमात्मनि तीर्थतमे सर्वजीवनियन्तरि आत्मारामे भगवति वासुदेवे पात्र उपपन्ने सति परया श्रद्धया परमादरसमाहितेन मनसा सम्प्रतिपादितस्य अत एव साक्षादपवर्गद्वारस्य भूमिदानस्य त्रिलोकीदानस्य अत एव साक्षादपवर्गद्वारस्य भूमिदानस्य त्रिलोकीदानस्य साक्षात्कारः फलं नो एव न भवत्येव ॥ ३३ ॥ यस्येति। त्रैलोक्यदानस्य तु का वार्त्ता क्षुतादिषु विवशोऽपि सकृदपि पुरुषो यस्य नामाभिगृणन् दुर्निवारमपि कर्मबन्धम् अञ्जसा विधुनोति ॥ ३४ ॥ यस्येति। यस्य कर्मबन्धस्य प्रतिबाधनम् अन्यथैव साङ्ख्ययोगाभ्यासमहाक्लेशैनैवोपलभन्ते तं कर्मबन्धं त्यजति ॥ ३५ ॥ तदिति। तत्तस्मात् तस्मिन् सर्वेषां प्राणिनामात्मनि भक्तानामात्मदे वशीभूयात्मानमपि दत्तवति आत्मवतां ज्ञानिनाम् आत्मतमे अत्यन्तमभिन्ने आत्मतयैव कृतस्य त्रिलोकीदानस्यैतत्फलं न भवतीति पूर्वेणैव सम्बन्धः ॥ ३६ ॥ न वा इति। नूनं निश्चितमेतत् अमुष्य अमुम् इन्द्रं भगवान् न वा अनुजग्राह स्वकीयपरमभक्तत्वेन नैवानुगृहीतवान् ॥ ३७ ॥ यदिति। यत् यस्मात्पुनरात्मनः स्वस्य भगवतोऽनुस्मृतिं मुष्णातीति तथाभूतं मायामयं प्रकृतिकार्यं भोगैश्वर्यमेवातनुत विस्तारितवानिति ॥ ३८ ॥ बलेस्त्वनुग्रहं कृतवानित्याह—यत्तदिति। यत् यस्मात् याच्ञां विना नाधिगतो न प्राप्तोऽन्य उपायो येन तेन भगवता याच्ञाछलेनैवापहृतं स्वशरीरमात्रावशेषितं लोकत्रयं यस्य स तथाभूतोऽपि वरुणपाशैश्च सम्यक् प्रतिमुक्तः निबद्धश्च गिरिदर्यामपविद्धः प्रक्षिप्तोऽपि इति वक्ष्यमाणमुवाच ॥ ३९ ॥ नूनमिति। योऽसौ भगवान् विद्वानपीन्द्रः स नूनं बत आर्थेषु स्वप्रयोजनेषु न निष्णातो न यस्येन्द्रस्य बृहस्पतिः सचिवः सहायः यत एकान्ततः परया भक्त्या तेन इन्द्रेण मन्त्राय मन्त्रविचारार्थं वृतः स बृहस्पतिरपि अर्थेषु न निष्णातः यतो भगवति प्रसन्ने सति स एव सेव्यतया वरणीयो नान्यत्। अयं तु स्वयं तं भगवन्तमतिहायोपेन्द्रेणैव द्वारभूतेनात्मानं मामात्मनः स्वस्य आशिषः लोकत्रयस्य भोगानेवायाचय। तद्दास्यं तु नो एवायाचततातो मूर्खं इत्यर्थः। चकार एवकारार्थः। यद्वा तं बृहस्पतिमतिहायेत्यर्थः। तथा च यदि तस्य त्रिलोक्यपेक्षा तर्हि बृहस्पतिं प्रेष्य तद्द्वारा कुतो न याचितवांस्तावन्मात्रं तु ब्राह्मणत्वात्तस्मा अप्यहं दद्यामेव तदर्थं तु भगवत्प्रेषणमत्यनुचितमेवेति भावः। अत तद्दास्यवरणमेवोचितं तदपेक्षयाऽतिगम्भीरः अनिवार्यो वेगो यस्य तस्य कालस्य यन्मन्वन्तरं तेन परिवृतं पर्यन्तमिदं लोकत्रयं कियत् ॥ ४० ॥

यस्येति अस्मत्पितामहः प्रह्लादस्तु स्वार्थे निपुण एव यतः खलु स्वपितरि उपरते सति स्वपित्र्यं पदमकुतोभयं निर्भयं भगवता दीयमानमपि भगवतः परमन्यदिति कृत्वा न तु वव्रे किन्तु किल निश्चये। यस्यानुदास्यमेव वव्रे ॥ ४१ ॥ ननु त्वमपि प्रह्लादसदृश एवेत्याशङ्क्य नेत्याह तस्येति। तस्य प्रह्लादस्य अनुपथमनुवर्त्म अमृक्षिता अक्षीणाः कृपया रागादयो यस्य सः परिहीणो भगवदनुग्रहो यस्य सः भगवदनुग्रहरहितः को वा अस्मद्विध उपगन्तुमिच्छति ॥ ४२ ॥ तस्येति। तस्य बलेरनुचरितमुत्तरस्माद्-

परिष्टादष्टमस्कन्धे विस्तरिष्यते विस्तरेण कथयिष्यते ॥ ४३ ॥ यस्येति । यस्य बलेर्द्वारि ब्रह्मादिस्थावरान्ताखिलजगद्गुरुः सर्वपूज्योऽपि भगवान् निजजने स्वभक्ते बलावनुकम्पितं कृतानुकम्पं हृदयं यस्य सः तद्रक्षार्थं गदापाणिः सन् स्वयमवतिष्ठते । येन श्रीनारायणेन दिग्विजये निमित्ते बलेर्द्वारे प्रविशन् दशकन्धरो रावणो राक्षसाधिपो विख्यातविजयः पदा तत्रापाङ्गुष्ठेनैव योजनायुतमुच्चाटितः प्रक्षिप्तः ॥ ४४ तत इति । लब्धं पदं स्थानं येन सः गतं सुदर्शनात् भयं यस्य सः महीयते पूज्यते स्फुटमन्यत् ॥ ४५ ॥ तत इति । नैकशिरसामनेकफणानां गणोऽस्ति ॥ ४६ ॥ कुहकेति । महाभोगवन्तः महाकायाः पुरुषवाहात् भगवद्वाहनात् गरुडादनवरतमुद्विजमानाः भीता अपि स्वकलत्रादिसङ्गेन कचित्प्रमत्तास्तद्भयानुसन्धानरहिता विहरन्ति ॥ ४७ ॥ तत इति । दैतेयादयः असुरभेदाः विबुधप्रत्यनीकाः देवशत्रवः सकलेष्वपि लोकेष्वनुभावो यस्य तस्यैव तेजसा सुदर्शनेन प्रतिहतो बलावलेपो वीर्यमदो येषां ते अत एव गरुडाद्भीता बिलेशयाः सर्पा इव रसातले वसन्ति ॥ ४८ ॥ ये वा इति । इन्द्रदूत्या सरमया प्रत्युक्ताभिर्मन्त्ररूपाभिर्वाग्भिरिन्द्राद्बिभ्यति । एवं हि वैदिकमाख्यानं पणिभिरसुरैर्निगूढां गामन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितां सन्धिमिच्छन्तः पणयः प्राहुः । किमिच्छन्तो सरमा इत्यादि । सा च सन्धिमनिच्छन्ती इन्द्रस्तुतिपूर्वकं तान् प्रति परुषमाह । हता इन्द्रेण पणयः शयध्वमित्यादि ते च तच्छ्रुत्वा बिभ्यतीति ॥ ४९ ॥ तत इति । महाभोगिनो महाकाया महाफणा वा पञ्चादिसङ्ख्यानि शीर्षाणि येषाम् ॥ ॥ ५०–५७ ॥

इति श्रीभागवते पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्विंशोऽध्यायः ॥ २४ ॥

—❀:—

## अथ पञ्चविंशोऽध्यायः

श्रीशुक उवाच

तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगवतस्तामसी समाख्यातानन्त इति ॥ १ ॥

पञ्चविंशे ततोऽधस्तादाह शेषस्य संस्थितिम् । यतो रुद्रोऽभवस्तत्र गद्यपद्यान्यगेन्दवः ( १७ ) ।

उवाचेत्येकमर्द्धाढ्याः द्वात्रिंशत्स्युरनुष्टुभः ( ३२ ॥ ) ॥ २५ ॥

तस्येति । तस्य पातालस्य मूलदेशेऽधस्तात् त्रिंशद्योजनसहस्रान्तरे या वै प्रसिद्धा भगवतस्तामसी तमःकार्यसंहारप्रवर्त्तयित्री नतु तमोमयी कला मूर्त्तिः अनन्त इति समाख्याता सा आस्ते ॥ १ ॥ सात्वतीया इति । सात्वतीयाः सात्वततन्त्रनिष्ठा भक्ता वासुदेवादिचतुर्व्यूहोपासने द्रष्टृदृश्ययोश्चेतनाचेतनयोर्जीवशरीरयोः भोक्तृभोग्ययोः सम्यक् कर्षणमेकीकरणं येन तं देहेन्द्रियादावहमस्य भोक्ता इदं मे भोग्यमित्यभिमानो लक्षणं चिह्नमधिष्ठातुर्यस्य अहङ्काराधिष्ठानेन दृग्दृश्यसङ्कर्षणात् सङ्कर्षण इत्याचक्षते वदन्ति । अभिमन्तुरहन्ताममतयोः शुद्ध्यर्थं तदधिष्ठातृत्वेन ध्यायन्तीति भावः ॥ २ ॥ यस्येति । सिद्धार्थ इव सर्षप इव यच्छन्दानां स एष भगवाननन्त इत्युत्तरेणान्वयः ॥ ३ ॥ यस्येति । कालेन प्रलयसमयेनोपलक्षितमिदं विश्वमुपसंजिहीर्षत उपसंहर्त्तुमिच्छतो यस्य मर्षेण क्रोधेन विरचिते कुटिलीकृते रुचिरे भक्तानां हृदयङ्गमे भ्रमन्त्यौ ये भ्रुवौ तयोरन्तरेण मध्यात् त्रिशिखं शूलमुत्तम्भयन्नुन्नयन् त्र्यक्ष एकादशव्यूहः साङ्कर्षणो नाम रुद्र उदतिष्ठत् । यथा सिसृक्षतः पुरुषस्य नाभेः कमलमुदभूत्तथा संजिहीर्षतो भ्रूमध्याद्रुद्र इति ॥४॥ यस्येति । यस्याङ्घ्रिकमलयुगलेऽरुणा विशदा नखा एव मणयः तेषां खण्डः समूहः तस्य मण्डलेषु अहिपतयः परिस्फुरतां कुण्डलानां प्रभामण्डलेन मण्डितानि गण्डस्थलानि येषु तानि स्ववदनानि विलोकयन्ति । स्पष्टं शेषम् ॥ ५ ॥ यस्येति । नागराजकुमार्यो हि आशिषो भोगानाशासाना अभिकाङ्क्षन्त्यो यस्य चारुणि अङ्गवलये अङ्गमण्डले विलसिताश्च ते विशदाश्च

धवलाश्च सुभगाश्च रुचिराश्च भुजा एव रजतस्तम्भास्तेषु अगुरुचन्दनकुङ्कुमानां पङ्क एवानुलेपोऽनुलेपसाधनं तेनावलिम्पमाना अवलिम्पन्त्य एव तेषामभिमर्शनेनोन्मथिते हृदये मकरध्वजस्यावेशे न रुचिरं च ललितं च स्मितं यासां तास्तस्यानुरागेण मदेन च मुदितं च तन्मदेन विघूर्णिते प्रचलिते च आ ईषदरुणे करुणावलोकयुक्ते नयने यस्मिंस्तद्वदनारविन्दं सव्रीडम् अस्मन्मनोविकारं भगवान् ज्ञातवानिति लज्जासहितं यथा भवति तथा विलोकयन्ति ॥ ६ ॥

स इति। उपसंहृतो मर्षस्यासहनस्य तथा रोषस्य वेगो येन स तथा तस्य प्रलयहेतुत्वेनेदानीं स्थितिसमयेऽनौचित्यात् ॥ ७ ॥ ध्यायमान इति। निरन्तरं सुरादिभिर्ध्यायमानश्चिन्त्यमानः अनवरतं निरन्तरम् मदेन मुदितश्चासौ विकृतविह्वललोचनश्च सः सुललितेन मुखरिकाऽमृतेन स्वपार्षदान् विबुधयूथपानां पतींश्चाप्यायमानो हर्षयन् नीले वाससी यस्य स एकं कुण्डलं यस्य सः हलस्य ककुदि पृष्ठे कृतः न्यस्तः सुभगश्च सुन्दरश्च भुजो येन सः उदारा भक्तानां मनोरथपूरिका लीला यस्य सः न परिम्लानो रागः कान्तिर्यस्यास्तस्या नवतुलसिकाया आमोदमध्वासवेन सुरभिमधुररसेन माद्यतां मधुकराणां ये व्राताः समूहास्तेषां मधुरगीतेन श्रीर्यस्यास्तां स्वां वैजयन्तीं चित्ररूपपुष्पग्रथितां वनमालां भगवान् बिभर्त्ति। माहेन्द्रो वारणेन्द्रः काञ्चनीं कक्षां वरत्रामिवेति ॥ ८ ॥ य एष इति। एवमुक्तप्रकारकोऽनुश्रुतो ध्यायमानश्च मुमुक्षूणामन्तर्हृदयं गतोऽनादिकालकर्मवासनादिभिर्ग्रथितं सत्त्वरजस्तमोमयम् अतः अविद्यामयं हृदयग्रन्थिमहङ्कारमाशु निर्भिनत्ति ॥ ९ ॥ तस्येति। सह तुम्बुरुणा तुम्बुरुनाम्ना गन्धर्वेण सह संश्लोकयामास वर्णयामास ॥ ९ ॥ उत्पत्तीति। अस्य जगतः उत्पत्तिस्थितिलयहेतवः सत्त्वाद्याः प्रकृतिगुणा यस्येक्षया कल्पाः स्वस्वकार्ये समर्था आसन् यदीक्षणं विना तु समर्था नासन्। यतः ध्रुवं नित्यम् अकृतमकृत्रिमं यत्पूर्वमेकमेव सदात्मनि स्वस्मिन्नेव नानाकार्यं प्रपञ्चमधात् संकल्पमात्रेणोत्पाद्य दधार तस्य ब्रह्मणो वर्त्म तत्त्वं प्राप्तिमार्गं वा तत्कृपां विना जनः कथमु ह वेद कथमपि नैव वेद। प्रहर्षिणीचतुष्कम् ॥ ११ ॥ मूर्त्तिमिति। यत्रेदं सदसत् स्थूलसूक्ष्मात्मकं कार्यंकारणात्मकं विश्वं विभाति स सच्चिदानन्दात्मको भगवान् नोऽस्माकं भक्तानां पुरुकृपया संशुद्धं सत्त्वं शुद्धसत्त्वात्मिकां मूर्त्ति बभार दधार। उदाराणि वीर्याणि यस्य स मृगपतिः सिंहः स्वजनानां मनांसि आदातुं वशीकर्त्तुं कृतामनवद्यां यस्य लीलामाददे अशिक्षत। यद्वा मृगपतिरिवोदारवीर्यः यत् यः स्वजनांसि आदातुं लीलाम् आददे ॥ १२ ॥

यन्नामेति। यस्य भगवतो नामान्यतः श्रुतमकस्माद्वा आर्त्तो दुःखितो दुःखनिवृत्त्यर्थं वा प्रलम्भनादुपहासाद्वा पतितो महापातक्यपि यद्यनुकीर्त्तयेत्तर्हि तन्नामश्रवणं कीर्तनं वा नृणामशेषमंहः पापं सपद्येव हन्ति अतो मुमुक्षुः भगवतः शेषादन्यं कमाश्रयेत् ॥ १३ ॥ मूर्द्धनीति। यस्य सहस्रमूर्ध्नः शेषस्यैकस्मिन्नेव मूर्द्धन्यर्पितं स्वेच्छया स्थापितं गिर्यादिसहितं भूगोलमणुवत्तिष्ठति तस्यानवसितविक्रमस्य अनन्तपराक्रमस्य भूम्नः आनन्त्याद्धेतोः वीर्याणि सहस्रजिह्वोऽपि को गणयेत् ॥ १४ ॥ एवमिति। भगवाननन्तः एवंभूतोऽचिन्त्यः प्रभावो यस्य स दुरन्तमनन्तं वीर्यं बलं यस्य। दुःशब्दो नञर्थः। उरवो बहवो गुणा ज्ञानवैराग्यैश्वर्यादयः अनुभावः शक्तिश्च यस्य स च स च अत एवात्मतन्त्रः आत्माधारः यो रसाया भूमेर्मूले स्थितः सन् लीलयाऽनायासेनैव जगत्-स्थितये क्ष्मां पृथिवीं बिभर्त्ति ॥ १५ ॥ एता इति। इह प्रवृत्तिमार्गे कामान्कामयमानैर्नृभिरुपगन्तव्याः यथाकर्म तत्तत्कर्मानुसारेण विनिर्मिताः गतय एता एव हि प्रसिद्धा यथोपदेशं मयाऽनुवर्णिताः ॥ १६ ॥ तस्यैव प्रपञ्चः—एतावतीरिति। हे राजन्! प्रवृत्तिलक्षणस्य धर्मस्य कर्मणो विपाकरूपाः फलभूताः या उच्चाः स्वर्गादिरूपाः अवचाः नीचाः पातालादिरूपाः तत्रासुरसर्पादीनां सुदर्शनादिभयस्य दर्शितत्वाद्विसदृशा मध्यमाः। क्लीवभाव आर्षः। मर्त्यलोकादिरूपाः दुःखसुखोभयस्य प्रबलत्वात् पुंसो गतयस्ता हि एतावतीः यथाप्रश्नं तव प्रश्नानुसारेणाह व्याचख्ये व्याख्यातवानस्मि। अन्यत् किं कथयाम तद्ब्रूहि इति शेषः। अथ प्रागुक्तभूगोलवर्षद्वीपादिविभागसूर्यादिग्रहर्क्षपातालादिवर्णनस्य निष्कर्षः। तत्र पुराणमते भूः पुष्करपलाशसमा चिपिटा चक्राकारा इति दृश्यत एव सेयं पञ्चाशत्कोटियोजनव्यासा तस्या मध्ये मेरुः मेरोर्मूले चतुर्षु दिक्षु अवष्टम्भगिरयः ततः परं मेरोः परितः केसराचलाः मेरुसमानोच्छ्रायाः तेषां स्थितिरवष्टम्भगिरिशून्यदेशे मेरोरव्यवधानेन अवष्टम्भस्थले तु अवष्टम्भगिरिशिरोऽधिरुह्य मेरुशिरः पर्यन्तमिति। अयं वा प्रथमं केसराचलाः ते चात्र मते मेरोरवयवभूता एव ततोऽवष्टम्भगिरयः इति। अथ ततः परं प्रतिदिशं द्वौ द्वावित्यष्टौ परिधिगिरय एवमवष्टम्भकेसरपरिधिगिरिभिश्चतुर्षु दिक्षु वेष्टितो मेरुः मेरोः सर्वत इलावृतवर्षम् इलावृतात्पूर्वस्यां गन्धमादननामा भद्राश्ववर्षसीमापर्वतः ततः समुद्रपर्यन्तं भद्राश्ववर्षं दक्षिणे च क्रमेण निषधगिरिः हरिवर्षं हेमकूटगिरिः किंपुरुषवर्षं हिमालयगिरिः भारतवर्षमिति पश्चिमायां माल्यवान् गिरिः ततः समुद्रपर्यन्तं केतुमालसंज्ञवर्षम् उत्तरतोऽपि क्रमेण नीलगिरिः रम्यकवर्षं श्वेतगिरिः हिरण्मयवर्षं शृङ्गवान् गिरिः कुरुसंज्ञवर्षमिति नववर्षात्मको जम्बूद्वीपः। तस्य परितः क्षारोदः ततः परं प्लक्षद्वीप इक्षुरसोदः शाल्मलद्वीपः सुरोदः कुशद्वीपः घृतोदः क्रौञ्चद्वीपः क्षीरोदः शाकद्वीपः दधिमण्डोदः पुष्करद्वीपः शुद्धोदः ततः प्राणिनिवासभूता काञ्चनी भूमिः ततः लोकालोकाचलः ततः अलोका भूमिरिति। एवं भूगोलादुपरि सूर्यः उपर्युपरि चन्द्रः नक्षत्राणि शुक्रः बुधः भौमः गुरुः शनिः सप्तर्षयः ध्रुवः महर्लोकः जनलोकः तपोलोकः सत्यलोकः वैकुण्ठलोकः

ततोऽण्डकटाहाख्योऽण्डगोलकः अण्डगोलक एव महादिक्सप्तावरणाष्टकसमूह उच्यते। भूमेरधोऽधः अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमिति क्रमेण सप्त पातालानि ततो गर्भोदः तन्मन्ये ऽधस्तात् कूर्म उपरि शेष इति गर्भोदात्परमण्डकटाहाख्योऽण्डगोलः इति लोकसंस्थानसङ्क्षेपः।

अथ जम्बूद्वीपस्य सर्वतो लक्षयोजनादिव्यवस्था। अत्र केचित्। वर्षाणां नवसहस्रयोजनमानत्वं मर्यादागिरिसहितानामेव तथा चलावृतस्योत्तरतः स्थितानां रम्यकहिरण्मयकुरुसंज्ञानां वर्षाणां सप्तविंशतियोजनसहस्रं मानं तथा तस्य दक्षिणतः स्थितानां हरिवर्षकिंपुरुषभारतसंज्ञानां वर्षाणां सप्तविंशतियोजनसहस्रम्. इलावृतस्य मेरुसहितस्य तु षट्चत्वारिंशद्योजनसहस्रम्। यतः षोडशसहस्रमूलस्य मेरोः परितः स्थितानामयुतायुतयोजनविस्ताराणामवष्टम्भगिरीणां स्थित्यनुरोधेन षट्चत्वारिंशत्सहस्रं मानमुचितम्। एवं दक्षिणोत्तरतो जम्बूद्वीपस्य लक्षयोजनविततत्वं भवति। पूर्वपश्चिमतस्तु तस्य जम्बूद्वीपस्येलावृतस्य पश्चिमतो नवयोजनसहस्रकं केतुमालसंज्ञं वर्षम्। तस्यैव पूर्वतो नवयोजनसहस्रकं भद्राश्वसंज्ञं वर्षं तयोर्मध्ये मेरुसहितं द्व्यशीतियोजनसहस्रकमिलावृतमिति लक्षयोजनविततत्वं भवतीत्याहुः। स्वामिपादादयस्तु रम्यकादीनां षण्णां वर्षाणां चतुष्पञ्चाशत्सहस्राणि योजनानि मेरुसहितस्येलावृतस्य चतुस्त्रिंशत्सहस्राणि योजनानि षण्णां नीलादिमर्यादागिरीणां द्वादश सहस्राणि योजनानि एवं दक्षिणोत्तररेखायां लक्षं योजनानि तथा पूर्वापररेखायामपि षोडशसहस्रं मेरुमूलं ततः सर्वतो नवसहस्रमिलावृतमिति मेरुसहितस्येलावृतस्य चतुस्त्रिंशत्सहस्राणि योजनानि मर्यादागिर्योर्माल्यवद्गन्धमादनयोश्चत्वारि सहस्राणि योजनानि केतुमालभद्राश्ववर्षयोस्तु शेषाणि द्विषष्टिसहस्राणि योजनानि एवं लक्षयोजनानि इत्याहुः। तेषामयमाशयः। पूर्वमते पूर्वापररेखायामिलावृतमानमत्यधिकम्। दक्षिणोत्तररेखायामपि मूले षोडशसहस्रमितो मेरुः तत उभयतो दशदशसहस्रपरिमित्या विंशतिसहस्रमितावष्टम्भगिरी षड्वर्षाणि चतुष्पञ्चाशत्सहस्रमितानि इत्येषां योगे नवतिः सहस्राणि अतः अवष्टम्भगिर्योः परित इलावृतं पञ्चपञ्चसहस्रमितविस्तारमेव क्वापि नवसहस्रता नायाति। तथा च मेरोश्चतुर्दिशं तत्र नवसहस्रविस्तृतम् इलावृतं महाभागेति विष्णुपुराणोक्तनवसहस्रमानविरोधः। किञ्च अवष्टम्भगिरीणां स्थितौ कल्पितायामपि केसरपरिधिगिरीणां तथाप्यगतेः। ननु तव मते तेषां का व्यवस्थेति चेत् अवष्टम्भगिरयस्तावत् मेरोः परितः सर्वं देशं नाक्रामन्ति अतः सान्तरालतया इलावृतान्तर्गता एव ते विस्तीर्णमूर्ध्नो मेरोरवष्टम्भत्वात् पूर्वपश्चिमौ गिरी दक्षिणोत्तरदीर्घौ दक्षिणोत्तरौ च पूर्वापरदीर्घौ ज्ञेयौ। पूर्वं विस्तारशब्देनात्र दैर्घ्यमेव ग्राह्यम्। "महापादास्तु चत्वारो मेरोरथ चतुर्दिशम्। यैर्धृतत्वान्न चलति सप्तद्वीपवती मही। दशयोजनसाहस्रआयामस्तेषु पठ्यते॥" इति वायुपुराणात् सर्वतो दशसहस्रविस्ताराङ्गीकारे दैर्घ्यं ततोऽप्यधिकमङ्गीकार्यमत इलावृतलोपात्पूर्वेलावृतमुपप्लावयतीत्यादिविरोधः स्यात्। केसराचला अपि सर्वे सान्तराला एव तिष्ठन्ति न त्विलावृतस्य देशं सर्वत आक्रामन्ति अतो वर्षान्तर्गता एव ते न तु पृथक्। विष्णुपुराणे च केसराचलविषये "मेरोरनन्तराङ्गेषु जठरादिष्ववस्थिताः।" इत्युक्तम्। मूलसमीपस्थानानि तान्येव जठरादीनि इति तत्र टीका। जठरदेवकूटादयोऽपि इलावृतान्तर्गता एव इलावृतवर्षस्यैव अवान्तरविभागहेतुत्वं तेषाम्। ननु भद्राश्वकेतुमालयोः प्रत्येकमेकत्रिंशत्सहस्रमानाङ्गीकारे नव वर्षाणि नवसहस्रयोजनायामानीति प्रत्येकनवसहस्रविस्तारबोधकवाक्यविरोधः। अत एव केचित् नीलनिषधयोः संलग्नाग्रयोः समुद्रप्रवेशेन संकुचितत्वात् तयोर्नवसहस्रविस्तारं क्लेशेनापि प्रतिपादयन्ति इति चेत् अत्र वाक्ये छत्रिन्यायेन सर्वेषां नवसहस्रविस्तारोक्तेः। अत एव विष्णुपुराणे वायुपुराणे च स्फुटतया नवसहस्रमानत्वं सप्तानामेवोक्तम्। भद्राश्वकेतुमालयोर्मानं नोक्तम् इति स्वामिपादनिष्कर्षः। इदं त्वत्र बोध्यम्। मेरोर्मूलदेशे प्रथममवष्टम्भगिरयः संलग्नाः ततः केसराचलाः ततः परं परिधिगिरय इति भागवते विष्णुपुराणे च। तेनैव क्रमेण पाठात् वायुपुराणेऽवष्टम्भगिरीणां मेरुमहापादत्वोक्तेश्च। अयुतयोजनमात्रोच्छ्रायवतामवष्टम्भगिरीणां चतुरशीतिसहस्रयोजनोच्छ्रितस्य मूलापेक्षया द्विगुणमूर्ध्नो मेरोरव्यवधानेन मूले स्थितिं विना अवष्टम्भत्वानुपपत्तेश्च। अन्यथा मूलभागान्मूर्द्धभागस्य द्विगुणविस्ताराद् गौरवेण भङ्गप्रसङ्गात् इति विष्णुपुराणटीकायां स्वामिपादोक्तेश्च।

अत एव तेषां विस्तारोऽपि मूले त्रिसहस्रयोजनतो न न्यूनः। केसराचलानां प्रथममङ्गीकारे तैर्मेरुसमानोच्छ्रायैर्व्यवधाने मेरुस्पर्शस्याप्यसंभवे न सुतरामवष्टम्भत्वं न सम्भवतीति प्रथममेवावष्टम्भगिरयः संलग्नाः। ते च प्रत्येकमयुतयोजनमात्रदैर्घ्यात् अल्पमेव मेरोर्मूलपरिधिं स्पृशन्ति न तु सर्वम्। केसराचलाश्च अवष्टम्भगिरिशून्यदेशे मेरुमूलात् मेरुशिरःपर्यन्तं संलग्नाः। अन्यत्र त्ववष्टम्भगिरीणां मूलादारभ्य तेषामुपर्यारुह्य च मेरुशिरःपर्यन्तसंलग्नाः सर्वत्र मेरुस्पर्शानङ्गाकारेऽत्युच्छ्रितानामल्पविस्ताराणां तेषां स्थितिरेव सम्यक् न स्यात्। विस्तारश्च तेषां न नियतः दैर्घ्यमपि। यद्यपि भागवते नोक्तं तथापि "मेरोरनन्तराङ्गेषु जठरादिष्ववस्थिता"! इति विष्णुपुराणवचनात् उन्नेतुं शक्यते। यद्यपि स्वामिपादैस्तत्र मूलसमीपस्थानान्येव जठरादीनि इति व्याख्यातं तथापि चाध्याहारेण मेरोरनन्तराङ्गेषु मूलदेशेषु तथा अवष्टम्भगिरिषु जठरादिषु परिधिगिरिषु च्यावस्थिता इत्यपि स्फुटोऽर्थः उन्नीयते। जठरशब्दस्य लाक्षणिकसमीपस्थानार्थापेक्षया जठराख्यपर्वतार्थस्यौचित्यात्। तथा च जठरादिपरिधिगिरिपर्यन्तं तेषां

दैर्घ्यं ज्ञेयम्। "जठराद्याः स्थिता मेरोर्येषां द्वौ द्वौ चतुर्दिशम्। मेरोश्चतुर्दिशं ये च प्रोक्ताः केसरपर्वताः। शीतान्ताद्या मुने तेषामतीव तु मनोरमाः। शैलानामन्तरे द्रौण्यः सिद्धचारणसेविताः"। इति विष्णुपुराणोक्तास्तत्र द्रौण्योऽप्युपपन्नाः। यदि च स्वामिपादानां सुमेरुणा सह केसरपर्वतानां सर्वत्र संलग्नतायामेव तात्पर्यमित्याग्रहस्तर्हि वयमपि तथैव स्वीकुर्मः। अवष्टम्भगिरीणां केसरगिरिभ्योऽग्रे स्थितिरस्तु न वयं स्वामिवचः प्रत्याख्यातुं पारयामः। अत्र पक्षे मेरोरवयवभूता एव केसराचलाः मेरोर्मूलदेशगावष्टम्भगिरिसमुच्छ्रयदेशादग्रे मूलासन्नदेशे वा तेषामारम्भः। परिधिगिरीणां च यद्यपि स्वामिपादैर्मेरुमूलाद्योजनसहस्रमात्र त्यक्त्वा स्थितिरुक्ता तथापि अष्टादशसहस्रमात्रदैर्घ्यैः परिधिगिरिभिः षोडशसहस्रमूलस्य मेरोरेकसहस्रयोजनमात्रान्तरस्थितावेव वेष्टनं सम्भवति नान्यथा इति यथा श्रुतं सम्यक् मत्वा एकसहस्रान्तरे तेषां स्थितिरिति स्वामिपादाभिप्रायः। इति कैश्चित्कल्प्यते न तु तेषामयमभिप्रायः सम्भवति। तथा हि "भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा। पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः"। इत्युक्त्वा "जठरो देवकूटश्च मर्यादापर्वतावुभौ"। इत्युक्तिः। त्रिश्रृङ्गो जारुधिश्च उत्तरौ वर्षपर्वतौ इत्युक्तिश्च तेषाम् इलावृतान्तेऽपि स्थितिं बोधयति। किं च पूर्वोक्तयुक्त्या अवष्टम्भगिरीणां केसराणां च मेरुमूलादव्यवधानेन स्थितौ निश्चितायामवष्टम्भगिरीणां विस्तारे सहस्रत्रयादन्यूने निश्चिते कथं मेरुमूलादेकसहस्रान्तरे परिधिगिरीणां स्थितिः सम्भवति। अतो मेरुमूलशब्देनावष्टम्भगिरिसहितमेव मेरुमूलं स्वामिपादोक्तौ गृह्यते। परिधिगिरिभिः सर्वमूलवेष्टनं तु न विवक्षितम्। एकयोजनसहस्रान्तस्थित्याभ्यन्तरपरिधिना वेष्टनसंभवेऽपि तावत्प्रमाणैर्गिरिभिर्बाह्ये वेष्टनासंभवात् किन्तु अवष्टम्भगिरिभिरिव सान्तरालं वेष्टनं विवक्षितम्। तथा च मेरुमूलाच्चतुःसहस्रयोजनेभ्योऽग्रे जठरपवनकैलासत्रिश्रृङ्गैः परिधिसप्तसहस्रयोजनेभ्योऽग्रे देवकूटपारियात्रकरवीरमकरैः परिधिरिति। नन्वेवं मर्यादापर्वतत्ववर्षपर्वतत्वोक्तिसामञ्जस्याय इलावृतान्तेऽष्टभिः जठराद्यैरेकः परिधिः स्वीक्रियतामिति चेत् चतुस्त्रिंशत्सहस्रविस्तीर्णस्य चतुष्कोणस्येलावृतस्य परिधिः षट्त्रिंशत्सहस्रोत्तरलक्षमितः जठरादीनां दीर्घतैक्यम्। चतुश्चत्वारिंशत्सहस्रोत्तरलक्षमितमिति तस्य नीलनिषधमाल्यवद्गन्धमादनैः सर्वतो रुद्धे स्थाने मातुमशक्यत्वात्तथा कल्पनम्। अनया कल्पनया एकस्य परिवेर्मेखङ्गतुल्यावष्टम्भकेसराचलसहितमेरुमर्यादात्वं द्वितीयस्येलावृते स्थित्या वर्षपर्वतत्वं चोपपन्नम्। एवं च एकैकदिशि द्विद्विपर्वतोक्तिरपि सङ्गच्छते। अन्यथा एक एव गिरिः षट्त्रिंशत्सहस्रमितो गण्येतेत्यलम्। यदि च नववर्षशब्दे छत्रिन्यायो नाङ्गीक्रियते तदा च मेरुमध्यादेकोनचत्वारिंशत्सहस्रयोजनाग्रतः पूर्वस्यां गन्धमादनः पश्चिमायां माल्यवान् इति भद्राश्वकेतुमालयोरपि भारतवर्षवन्नवसाहस्रविस्तारः धनुराकृतित्वं च। नन्वेवमिलावृतस्य दीर्घता जाता तथा च मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् इलावृतमिति प्रागुक्तवचनविरोधः। इलावृतं मेरोश्चतुर्दिशमस्ति तच्च नवसाहस्रविस्तृतमिति तदर्थात् तथा चोत्तरदक्षिणयोर्नवसहस्रविस्तारोऽस्त्येव दैर्घ्यं त्वन्यदिशि तत्तु सर्वेषु वर्षेष्विवेलावृतेऽपि भिन्नमेव। यद्वा। परिधिगिरिपर्यन्ताभिप्रायकं सर्वतो नवसहस्रवत्त्वमित्यलम्। अथ जिज्ञासुबालबोधाय मानचित्रं प्रदर्श्यते। तत्र स्पष्टप्रतिपत्त्यर्थमादाविलावृतस्य ततो जम्बूद्वीपस्य। अत्र केवलं परिचयमात्रमपेक्षितमतः सङ्क्षेपेण श्रीस्वामिपादमतेनैव लेखः। मतान्तराणि स्वयं बोद्धुं शक्यानि। तत्रेष्टविस्तारं समचतुरस्रं क्षेत्रं दिगङ्कितं कुर्यात् तन्मध्ये पूर्वापरां दक्षिणोत्तरां चेति द्वे मध्यमिलिते विन्द्वात्मिके रेखे कुर्यात् ततो बहिर्विस्तारमितां रेखां निर्माय तस्याश्चतुस्त्रिंशद्भागान् कुर्यात्। अस्या रेखाया एकैको भागः सहस्रयोजनपरिमाणो ज्ञेयः। अथ मध्यविन्दोरष्टभागपरिमितकर्कटेन वृत्तं कुर्यात् स सुमेरुः पर्वतो ज्ञेयः। मेरुमध्यविन्दोरष्टभागान्तादग्रे मेरुमूलपरिसंलग्नां पूर्वरेखागतमध्यां ततो दशभागदीर्घां दक्षिणोत्तरां रेखां कुर्यात्। तदग्रे मध्यादेकादशभागान्ते तादृशीमन्यां रेखां कुर्यात्। ते द्वे रेखे प्रान्ते रेखया मिलिते कार्ये। मन्दरो नामावष्टम्भगिरिस्त्रिसहस्रविस्तारोऽयुतयोजनदीर्घो भवति। एवमेव दक्षिणादिदिक्षु मेरुमन्दरादयोऽवष्टम्भगिरयः कार्याः। ततः केन्द्रात् द्वादशभागान्ते चतुर्दशभागान्ते च मध्यमरेखागतमध्ये उभयतो नवनवभागमिते द्वे रेखे कृत्वा प्रान्तौ रेखया संमिलितौ कुर्यात् अयं जठराख्यः। परिधिगिरिरष्टादशसहस्रयोजनायतः द्विसहस्रयोजनविस्तारः एवं स्वस्वदिक्षु चतुरः परिधिगिरीन् कुर्यात्। ततः केन्द्रात्पञ्चदशभागान्ते सप्तदशभागान्ते च तादृश्यौ रेखे कृत्वा प्रान्तौ मेलयेत्। अयं देवकूटाख्यः परिधिगिरिः। एवं स्वस्वदिक्षु पुनः परिधिगिरीन् कुर्यात् ततोऽवष्टम्भगिरिशून्यदेशे मेरुमूलात् तत्सहितदेशे चावष्टम्भगिरिमूलादारभ्य प्रथमपरिधिपर्यन्तदीर्घान् प्रतिदिशं पञ्च पञ्च केसराचलान् कुर्यात् ततो मेरौ ब्रह्मादीनां पुरीणां नामानि गङ्गाप्रवाहभेदान् औच्चयादियोजनसंख्याङ्कान् अन्यपर्वतेषु विस्तारोच्चयदैर्घ्याङ्कान्स्वनामसहितान् लिखेत्। इति पर्वतः सर्वत्र गोमूत्राकाररेखावेष्टितः नदीविन्दुकल्पितगोमूत्राकाररेखात्मिका ज्ञेया। अथ जम्बूद्वीपचित्रम्। तत्रेष्टव्यासार्द्धमितेन कर्कटेन वृत्तं दिगङ्कितं प्राग्वद्विन्द्वात्मकदिग्रेखाद्वययुतं कुर्यात्। बहिर्व्यासमितां च रेखां कृत्वा तस्याः शतं भागान् कुर्यात्। अत्राप्येको भागः सहस्रयोजनपरिमितो ज्ञेयः। तत्र केन्द्राद्दिग्रेखासु सप्तदशभागान्तेषु चिह्नानि कृत्वा तैश्चोभयतः सरलरेखैश्चतुस्त्रिंशद्भागमितं चतुर्भुजं समचतुरस्रं क्षेत्रं कुर्यात्। तदन्तर्मेरुप्रभृतिभिः संक्षिप्तमिलावृतं दर्शयेत्। ततः केन्द्रादुत्तरेखायां सप्तदशभागान्ते ऊनविंशतिभागान्ते च रेखे पूर्वापरायते समुद्रस्थानापन्नपरिधिपर्यन्तदीर्घे कुर्यात् प्रान्ते रेखया मेलयेच्च। अयं रेखाद्वयात्मको नीलनामा रम्यकवर्षस्य मर्यादापर्वतो द्विसहस्रयोजनविस्तारः। अतः केन्द्रात्तस्यामेव रेखायामष्टाविंशतिभागान्ते त्रिंशद्भागान्ते च प्राग्वद्रेखे कुर्यात्। अयं श्वेतनामा हिरण्मयवर्षस्य मर्यादापर्वतः ततः केन्द्रादेकोनचत्वारिंशद्भागान्ते एकचत्वारिंशद्भागान्ते च प्राग्वद्रेखे कुर्यात्।

अयं शृङ्गवान्नाम कुरुवर्षमर्यादापर्वतः। एवं दक्षिणरेखायामपि पूर्वोक्ततत्तद्भागान्तेष्वेव कृताभी रेखाभिः निषधहेमकूटहिमालय-नामकान् हरिवर्षकिम्पुरुषभारतवर्षमर्यादापर्वतान् कुर्यात्। ततः पूर्वदिग्रेखायां सप्तदशोनविंशतिभागान्ते रेखाद्वयेन नीलनिषधाख्य-धूर्वोक्तगिरिपर्यन्तदीर्घो गन्धमादननामा भद्राश्ववर्षसीमापर्वतः। एवं पश्चिमरेखायां पूर्वोक्तभागान्तकृतरेखाद्वयेन नीलनिषधपर्यन्तः माल्यवान्नाम केतुमालसीमापर्वतः। येषां मते भद्राश्वकेतुमालावपि नवसहस्रविस्तारौ अभीष्टौ तेषां मते पूर्वापररेखाभ्यां केन्द्रदेकोन-चत्वारिंशदेकचत्वारिंशद्भागान्ते नीलनिषधावधिके द्वे द्वे रेखे कुर्यात्। एताभ्यां जातौ गन्धमादनमाल्यवन्तौ भद्राश्वकेतुमाल-सीमापर्वतौ ज्ञेयौ। अथ शेषद्वीपादिसहितसर्वभूमिमानव्यवस्था। तत्र मेरुमध्यमारभ्यैकतो जम्बूद्वीपोऽर्द्धलक्षयोजनस्ततः क्षारोदः समुद्र एकलक्षयोजनः ततः प्लक्षद्वीपो द्विलक्षयोजनस्ततस्तावान् इक्षुरसोदः ततः शाल्मलीद्वीपश्चतुर्लक्षः ततस्तावान् सुरोदः ततः कुशद्वीपोऽष्टलक्षयोजनः ततः तावान् घृतोदः ततः क्रौञ्चद्वीपः षोडशलक्षः ततस्तावान् क्षीरोदः ततः शाकद्वीपो द्वात्रिंशल्लक्षः ततस्तावान् दधिमण्डोदः ततो मानसोत्तरपर्यन्तमर्द्धपुष्करद्वीपो द्वात्रिंशल्लक्षयोजनः। एवं मेरुमध्यमारभ्य मानसोत्तरपर्यन्तं सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटिपरिमिता भूमिस्ततो मानसोत्तरतोऽर्द्धपुष्करद्वीपो द्वात्रिंशल्लक्षयोजनः ततः शुद्धोदश्चतुःषष्टिलक्षयोजनः ततः सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटिपरिमिता प्राणिनिवासभूता काञ्चना भूमिः ततः अन्या काञ्चनीभू-मिरेकोनचत्वारिंशल्लक्षाधिकाष्टकोटिपरिमिता तथा च मेरुमारभ्य लोकालोकपर्यन्तं सार्द्धद्वादशकोटिपरिमिता भूमिर्भवति।

शैवतन्त्रेऽप्येवमेवोक्तं कोटिद्वयं त्रिपञ्चाशल्लक्षाणि च। ततः परं "पञ्चाशच्च सहस्राणि सप्त द्वीपाः ससागराः। ततो हेममयी भूमिर्दशकोट्यो वरानने। देवानां क्रीडनार्थाय लोकालोकस्ततः परः।" इति। अत्र दशकोटित्वमपि पूर्वोक्तप्राणिनिवास-भूम्या सह द्रष्टव्यम्। काञ्चन्या भूमेः परतो लोकालोकाचलः ततः अलोकमेरुभूमिरेकतः सार्द्धद्वादशकोटियोजनविस्तारा परतोऽपि तावती लोकाचलप्रमाणं त्वत्रान्तर्भूतमिति प्रागुक्तमेव पञ्चविंशतिकोटिमिता तदन्तर्भूमिस्तावतीति पञ्चशत्कोटियोजनमितो भूगोलः इति श्रीस्वामिपादमतनिष्कर्षः। चक्रवर्तिनिष्कर्षस्तु भूस्तु चतुस्त्रिंशल्लक्षोनपञ्चशत्कोटिप्रमाणा ज्ञेया। यथा मेरुमध्यान्मानसोत्तर-मध्यपर्यन्तं पूर्वोक्तमेव सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटिपरिमितं मानसोत्तरमध्यात्स्वादूदकसमुद्रपर्यन्तं षण्णवति लक्षयोजनानि ततः काञ्चनी भूमिः सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटियोजनप्रमाणा एवमेकतो मेरुलोकालोकयोरन्तरमेकादशलक्षाधिकचतुष्कोटिपरि-मितम्। अन्यतोऽपि तथा इति लोकालोकान्तरे तन्मण्डलान्तरव्यासरूपं द्वाविंशतिलक्षोत्तराष्टकोटिपरिमितं लोकालोकाद्बहिरप्येकत एतावदेव अन्यतोऽप्येतावदेव तयोरैक्यं षोडश कोटयश्चतुश्चत्वारिंशल्लक्षाणि पूर्वोक्तमानेन सह चतुस्त्रिंशल्लक्षोना पञ्चविंशतिकोटयः एकतो लोकालोकविस्तारः सार्द्धा द्वादशः कोटयः अन्यतोऽपि तथेति पञ्चविंशतिः कोटयो लोकालोकविस्तारः पूर्वमानेन सह चतुस्त्रिंशल्लक्षोनपञ्चाशत्कोटिमाना भूः साब्धिद्वीपपर्वता ज्ञेया। ततः परं सर्वतो दिक्षु सप्तदशलक्षयोजनावकाशे भुवः शेषनागेन धारणम्। दिग्गजैः स्थिरीकरणं सार्थकमिति सर्वथा मेरुमध्यादेकतः पञ्चविंशतिकोटियोजनपरिमिता भूः अन्योऽप्येवमिति। तथा च समानसूत्रे सर्वत्र कटाहान्तात्कटाहान्तपर्यन्तं पञ्चाशत्कोटियोजनत्वं सिद्धम्। अथ भूमेरुपरि लक्षयोजने सूर्यः ततो लक्षयोजने चन्द्रः ततस्त्रिलक्षयोजने नक्षत्राणि ततो द्विलक्षयोजने शुक्रः ततः क्रमाद्द्विलक्षयोजने बुधभौमगुरुशनयः। ततः एकादशलक्षयोजने सप्तर्षयः। ततः त्रयोदशलक्षयोजने ध्रुवः। एवं सूर्याद्ध्रुवपर्यन्तमष्टत्रिंशल्लक्षयोजनानि भवन्ति। ध्रुवादेककोटियोजने महर्लोकः ततः कोटिद्वययोजने जनलोकः तत उपरि योजनकोट्यष्टके तपोलोकः तत उपरि द्वादशकोटियोजनतः सत्यलोकः। तदुक्तं वैष्णवे "ध्रुवस्योर्ध्वं महर्लोको यत्र ते कल्पवासिनः। एकयोजनकोटिस्तु यत्र ते कल्पवासिनः। द्वे कोट्यौ तु जनो लोको यत्र ते ब्रह्मणः सुताः। सनन्दनाद्यास्तिष्ठन्ति मैत्रेयामलचेतसः। चतुर्गुणोत्तरे चोर्ध्वं जनलोकात्तपः स्मृतः। वैराजा यत्र ते देवाः स्थिता दोषवि-वर्जिताः। षाड्गुण्येन तपोलोकात्सत्यलोको विराजते। अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः।" ततोऽप्युपरिष्टादेककोटियोजनतो वैकुण्ठलोकः। तथोक्तं ब्रह्मवैवर्त्तकृष्णजन्मखण्डे। "वैकुण्ठं परमं धाम जरामृत्युहरं परम्। कोटियोजनमूर्ध्वं च ब्रह्मलोकात्सनात-नम्।" अवशिष्टानि द्विषष्टिलक्षयोजनानि तदुपर्यवकाशे ज्ञेयानि। ततोऽण्डकटाहाख्योऽण्डगोलकः। अण्डगोलक एव महादि-प्रकृत्यन्तावरणाष्टकसमूह उच्यते। एवं च सूर्यादुपर्यण्डकटाहपर्यन्तं पञ्चविंशतिकोटियोजनानि भवन्ति। चक्रवर्ती तु सत्यलोकाद्-द्विषष्टिलक्षयोत्तरायां कोटौ वैकुण्ठस्ततोऽण्डगोलक इत्याह। एवं सूर्याल्लक्षे भूतलं ततः सप्ततिसहस्रेषु सप्त पातालानि ततस्त्रिंशत्सहस्रेषु शेषः। एवं सूर्याल्लक्षद्वये गर्भोदः स च लक्षद्वयन्यूनपञ्चविंशतिकोटिपरिमितः तन्मध्येऽधस्तात्कूर्मस्तस्योपरि शेष इति ज्ञेयम्। एवं मिलित्वा ऊर्ध्वाधः पञ्चाशत्कोटिप्रमाणमण्डगोलक प्रथमावरणम्। ततोऽग्रेऽन्यान्यान्यावरणानि इति। ज्योतिःशास्त्ररीत्या तु भूः पुष्करपलाशवत्समा चिपिटा साधारा च नास्ति किन्तु कन्दुकवद्गोलरूपा निराधारा च। अस्या उपर्यधः पार्श्वेषु चेति सर्वतो नगरा-द्रिसमुद्राद्याः सन्ति न केवलमुपर्येवेति। भूगोलस्य परिधिः सप्ताङ्गनन्दाब्धि (४९६७) योजनानि। व्यासश्च कुभजङ्गसायकभू (१५८१) योजनानि किंचिदधिकानि पृष्ठक्षेत्रफलं च युगगुणत्रिंशच्चन्द्राष्टाद्रि (७८५३०३४ मितानि योजनानि इति। ननु भूमे-र्गोलाकारत्वे किं मानमिति चेत् सांयात्रिकैः पोतस्थितैर्दूरादागच्छतोऽन्यपोतस्य प्रथमं शिरोभागोऽवलोक्यते ततः क्रमादधोभाग इति। अत्र यदि सममेव समुद्रजलं स्यात्तर्हि स्थूलत्वात् प्रथममधोभागो दृश्यते।

एवं भुवः समत्वे अतिदूरतो हिमवदादीनां शिखराणीव मूलभागाः स्थूलाः सम्यग्दृश्येरन्। ननु भूः पिण्डवद्गोलाकारा चेत्तत्पृष्ठगतो जनः पर्वतवदुन्नतप्रदेशस्थमात्मानं मन्येत भूमिं च सर्वतः क्रमनिम्नां मन्येत नतु समाम् इति चेत् गोलस्य यावान् परिधिर्भवति तस्य शततमोंऽशः सम एव प्रतीयते। भूपृष्ठस्थो जनोऽतिखर्वतया भूपरिधिशतांशमितां पञ्चाशद्योजनतोऽपि न्यूनामेव स्वस्थानाद्भूमिं द्रष्टुं शक्नोति नाधिकाम्। तावती च प्रायः समैवातस्तस्य स सर्वा समैव भाति। तारादीनामिव निराधाराया भूमेः स्थितौ च न कोऽपि विरोधः प्रत्युताधारपरम्पराकल्पनायामनवस्थादोषः। ननु भूमेः सर्वतो ग्रामादिस्थितौ उपरिस्थितजनापेक्षयाऽधःस्थिता जना अधःशिरस्काः स्युस्ते च कथं व्यवहरेयुः कथं च न पतेयुरिति चेत् वस्तुतो देशस्य ऊर्ध्वाधस्तानां न काचिदप्यस्ति। यतः यो यत्र तिष्ठति स आत्मानमूर्ध्वस्थं मन्यते। भूपरिध्यर्द्धान्तरस्थं द्वितीयमधःशिरस्कं मन्यते। एवं द्वितीयोऽप्यात्मानमूर्ध्वस्थं प्रथमं चाधःशिरस्कं मन्यते एवं भूपरिधितुर्यान्तरस्थौ मिथस्तिर्यक्स्थौ मन्येते। वस्तुतः सर्वेऽपि स्वदृष्ट्या ऊर्ध्वस्था एव। किमत्र मानमिति चेत् यत्र स्थितो जन आत्मानमूर्ध्वस्थममन्यत स एव प्रतिदिनं सम्मुखदिशं गच्छन्महता कालेन भूपरिध्यर्द्धमितं दूरदेशं गतोऽपीषदप्यधःशिरस्कतां स्वस्य न मन्यत इति प्रतीतेरेव मानत्वात्। ननु भवतु प्रतीतिरेवं तथापि अवश्यं द्वयोर्मध्य एक उपरिस्थोऽन्योऽधस्तत्कथं न पततीति चेत् भूम्यादिषु सर्वेषु पदार्थेष्वाकर्षणशक्तिरस्ति तया आकृष्टा न न कुत्रापि पतन्तीत्यन्यत्र विस्तरः। न हि दृष्टेऽनुपपन्नं नामेति न्यायेन सर्वं समञ्जसम्। ननु पुराणेषु भूमेर्विस्तारः पञ्चाशत्कोटियोजनमितः कथितः त्वया तु भूमिगोलपरिधिः सप्ताङ्गनन्दाब्धि (४९६७) मित एवोक्तस्तत्र किं मानमिति चेत् भूमेर्गोलकारता तावत् सिद्धा भूमेः परिता व्योमापि गोलं व्योम्नि च भपञ्जरोऽपि गोलस्तत्र भूमानार्थं प्राचीनैर्भूपरिधेः षष्ट्युत्तरं शतत्रयमंशाः कल्पिताः। अत एकैकस्मिन् वृत्तपादे नवतिर्नवतिरंशा भवन्ति एवमाकाशस्यापि तथैवांशाः कल्पिताः। अथ सायनमेषारम्भदिने रविर्यत्र वृत्ते भ्रमति तद्विषुवद्वृत्तं तदधः पृथिव्यां कल्पितरेखाकारो निरक्षदेशः तत्र स्थिता जनः उत्तरध्रुवं दक्षिणध्रुवं च क्षितिजलसंलग्नवत्पश्यति। यत्राकाशो भूमिसंलग्न इव दृश्यते तत् क्षितिजाख्यवृत्तम्। ये पूर्वं भूपरिधेरंशाः कथितास्तेषामारम्भो निरक्षदेशादुत्तरदिशि दक्षिणदिशि च अयमस्मन्निवासदेशो निरक्षदेशादुत्तरदिशि अस्ति। अथ निरक्षदेशाद्यथा यथा जन उत्तरां दिशं गच्छति तथा तथा खमध्याद्विषुवद्वृत्तं नतम्। उत्तरध्रुवमुन्नतं पश्यति यत्र च खमध्यगतं ध्रुवं पश्यति तत्र निरक्षान्नतिरंशास्तत्रैव भूपरिधेश्चतुर्थांशः। एवं च ध्रुवोन्नतेरंशैस्तुल्या एवाक्षांशा भवन्ति तथा च स्वेष्टपुरेऽक्षांशान् ज्ञात्वा स्वेष्टपुरनिरक्षदेशमध्ययोजनानि च ज्ञात्वाऽनुपातः कार्यः। यदि एतैरक्षांशैरेतानि योजनानि लभ्यन्ते तदा षष्ट्युत्तरशतत्रयमितैरंशैः कियन्ति इति षष्ट्युत्तरशतत्रयेण योजनानि गुणयित्वा स्वेष्टाक्षांशैर्भजेत् ततः सप्ताङ्गनन्दाब्धियोजनमितो भूपरिधिर्लभ्यते। यद्वा कस्मिंश्चित्पुरेऽक्षांशान् ज्ञात्वा तस्मात्पुराच्छुद्धोत्तरतोऽन्यस्मिन् पुरे ज्ञेयाः। ततस्तेषामन्तरांशैः पुरान्तरयोजनैश्चानुपातः। यदि पुरयोः अन्तरांशैः पुरान्तरयोजनानि लभ्यन्ते तदा षष्ट्युत्तरशतत्रयमितैश्चक्रांशैः किमिति फलं भूपरिधियोजनानि (४९६७)। यथा अवन्त्यामक्षांशाः (२२।३०) अवन्तीनिरक्षदेशान्तरयोजनानि (३१०।२६।१५) चक्रांशैः (३६०) गुणीतानि (१११७५७।३०) अवन्त्यक्षांशैः (२२।३०) भक्तानि जातानि भूपरिधियोजनानि (४९६७) एवमन्यदूह्यम्। अक्षांशादिज्ञानार्थं पूर्वैर्यन्त्रं कल्पितम्। तथा हि आदौ दारुजं धातुजं वा समतल चक्रं कुर्यात्। तन्नेम्यां शिथिलं शृङ्खलादिकमाधारं कुर्यात् चक्रमध्ये च सूक्ष्मं छिद्रं कुर्यात्। तत्र आधारादारभ्य मध्यछिद्रस्पर्शिनीं द्वितीयप्रान्तपर्यंतां सरलां रेखां कुर्यात्। तस्या द्वाभ्यां प्रान्ताभ्यां नेम्यां सम्पातः। अथैतच्चक्रव्यासार्द्धादधिकेन कर्कटेन प्रान्तसम्पातद्वयाद्वृत्तद्वयं कुर्यात्। तयोर्वृत्तयोः सम्पातद्वयं यज्जायते तत् सम्पातद्वयं केन्द्रं च या स्पृशति तादृशीं प्रान्तद्वयस्पर्शिनीं रेखां कुर्यात्। एवं रेखाद्वयेन चक्रस्य शुद्धं भागचतुष्टयं स्यात्। तत्रैकैकस्मिन् भागे परिधिं नवत्या नवत्यंशैरङ्कयेत्। ततः आधारान्नवत्यंशेषु क्षितिजं प्रकल्प्य तत आरभ्याधारपर्यन्तमेकद्व्यादिनवत्यन्तानङ्कान् कुर्यात्। अथ केन्द्रस्थशङ्कुप्रोतमध्यां शिथिलां पट्टीं परिधिप्रान्तस्थितांशाङ्कस्पर्शिनीं यन्त्रे न्यसेत्। यद्वा चक्रतुर्यांशेनैव यन्त्रं कुर्यात् यत्र पुरेऽक्षांशा ज्ञातुमिष्यन्ते तत्र रात्रौ ध्रुववेधाय शृङ्खलाधारे लम्बमानं यन्त्रं धृत्वा यथा पट्टीमूलाग्रतया दृष्ट्या ध्रुवो दृश्येत तथा पट्टीं चालयेत्।

एवं कृते पट्ट्यग्रे नेमौ येंऽशास्ते सावयवा अक्षांशा ज्ञेयाः। यद्यपि ध्रुवशब्देन लोके ध्रुवाख्यतारैव गृह्यते तथापि नेयं ध्रुवस्थाने नापि स्थिरैव किन्तु ध्रुवस्थानात् किञ्चिदन्तरे भ्रमति। अतो यत्र काले ध्रुवः दक्षिणोत्तरवृत्ते परमनीचस्थो भवेत् यत्र च परमोच्चस्थो भवेत्तत्रोभयत्र वेधेन पृथगक्षांशानानीय तद्योगार्द्धमिता अक्षांशाः स्युरिति ज्ञेयम्। यद्यपि सिद्धान्तशिरोमणौ पुराणमते कश्चिद्द्वीपयं परिवर्त्य वपद्धोपादिविभागोऽप्युक्त तथाऽप्युपपत्त्येकशरणा ज्योतिर्विदस्तन्नाद्रियन्ते। केचिज्ज्योतिर्विद आर्यभट्टादयस्तु प्राहुः। भूमिरेव पूर्वाभिमुखं प्रत्यहमेकवारं परिवर्तते। परिवर्तनरूपया गत्या भ्रमन्त्या भूमेर्यः प्रदेशः सूर्यप्रकाशे भवति तत्र दिनम्। यश्च तत्प्रकाशगोचरो न भवति तत्र रात्रिः। भूमिपरिवर्तनेनैव सूर्यस्य नक्षत्रादीनां च पश्चिमगत्या उदयास्तमयौ दृश्येते। वस्तुतो नक्षत्रादीनि स्थिराण्येवेति समीचीनम्। अन्यथा प्रवहवातकृता एकाहोरात्रमात्रेण बहुकोटियोजनमिता तेषां सर्वेषां प्रत्यहं गतिरसंभाविता कल्पनीया स्यात् इति महद्गौरवम्।

भूमिपरिवर्तनाङ्गीकारे तु एकस्या भूमेरेकेनाहोरात्रेण सप्ताङ्गनन्दाब्धियोजनपरिवर्तनमात्रमिति महल्लाघवम्। ननु एवं भूमिर्भ्रमन्ती कथं न लक्ष्यते कथं वा सूर्यादयो भ्रमन्तो दृश्यन्ते इति चेदत्राहुः। यथा अनुलोमगतिर्नौस्थः अचलमपि तटं स्वसमीपमायान्तं विलोमगं पश्यति तथा द्रष्टा भूस्थो भ्रमन्नचलान्यपि भानि पश्चिमगानि पश्यति इति तदन्ये श्रीपत्यादयो न मन्यन्ते। तथा हि यदि भूमिर्भ्रमति तर्हि व्योम्नि उड्डीयमानाः पक्षिणः स्वनीडानि न प्राप्नुयुः। नीडानां भूप्रदेशेन सह पश्चिमदिशि बहुदूरं गतत्वात् व्योम्नि निक्षिप्तं शरादिकं क्षेपस्थानाद्दूरं पश्चिमे पतेत् मेवाः सदा पश्चिमां व्रजन्तो दृश्येरन् न च भूवेगेनैव तत्समीपस्थानां तदनुसारिणी गतिर्भवतीति वाच्यम्। अनुलोमगतेरेवं सम्भवेऽपि प्रतिलोमगतेरेवमसम्भवात् इति सङ्क्षेपः। ज्योतिःशास्त्ररीत्या भूमेः परं चन्द्रबुधशुक्ररविभौमगुरुशनिनक्षत्रकक्षाः क्रमेण सन्ति। सर्वेषां ग्रहाणां पूर्वाभिमुखा प्रत्यहं गतिः पादोनगोक्षधृतिभूमि ( ११८५८ ॥। ) तयोजनानि शीघ्रमन्दगामित्वं च ग्रहाणां स्वस्वकक्षायाः अल्पत्वमहत्त्वाभ्याम्। उक्तं हि "कक्षाः सर्वा अपि दिविषदां चक्रलिप्ताङ्किता ता वृत्ते लघ्व्यो लघुनि महति स्युर्महत्यश्च लिप्ताः। तस्मादेते शशिजभृजादित्येज्यमन्दा मन्दाक्रान्ता इव शशधराद्भान्ति यान्तः क्रमेण।" इति पृथ्वीगर्भात्सूर्यो नगनगाग्निनवाष्टरसयोजनानि ( ६८९३७७ ) दूरे चन्द्रश्च रसरसेषुमहीवाणाः योजनानि ( ५१५६६ ) एवं भौमः गोकुरसषण्नवसूयमितानि ( १२९६६१९ ) बुधः दन्ताभ्रषण्नृपमितानि ( १६६०३२ ) गुरुर्नागगुणपञ्चरसादिभूमिनागमितानि ( ८१७६५३८ ) शुक्रः सर्पगजखाब्धियमाब्धिमितानि ( ४२४०८८ ) शनिः भूसप्तखाङ्कमहीगुणनखमितानि ( २०३१९०७१ ) नक्षत्राणि नागपञ्चषड्भुजरसाग्निभूवेदमितानि ( ४१३६२६५८ ) योजनानि। किञ्च "काटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजङ्गेन्दुभि ( १८७१२०६९२०००००००० ) ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः तद्ब्रह्माण्डकटाहसम्पुटतटे केचिज्जगुर्वेष्टनं केचित्प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः। ब्रह्माण्डमेतन्मितमस्तु नो वा कल्पे ग्रहः क्रामति योजनानि। यावन्ति पूर्वैरिह तत्प्रमाणं प्रोक्तं खकक्षाख्यमिदं मतं नः।" इति। नन्वेवं पुराणोक्तभूमानविरोधः कथं समाधेय इति चेदत्र गोलदर्पणकारो यथामति समर्थयते। पृथिव्या आकारद्वयमस्ति। एको महापरिमाणको विशेषाकारः द्वितीयो ज्योतिःशास्त्रोक्तः स्वल्पपरिमाणको गोलाकार एव।

एवमेव परीक्षिता पृष्टे "पञ्चमे शुकेनाप्युत्तरं दत्तं भूगोलविशेषं नामरूपमानलक्षणतो व्याख्यास्यामः" इति भूगोलकपदेन ज्योतिःशास्त्रोक्तो गोलाकारो मार्तिकोऽण्डः विशेषपदेन मण्डलाकारः पुराणोक्तो हिरण्मयोऽण्डः। उक्तञ्च योगिनिर्णये द्वितीयस्कन्धे। "ततो विशेषं प्रतिपद्य निर्भयः" इति पञ्चमेऽप्युक्तम्। "काञ्चनी ततोऽन्याऽऽदर्शतलोपमा" इत्यादि। तृतीयेऽप्युक्तम्। "एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोद्धरैः।" इत्यादि। "यस्येदं क्षितिमण्डलं भगवतोऽनन्तमूर्तेः सहस्रशिरस एकस्मिन्नेव शीर्षणि ध्रियमाणं सिद्धार्थ इव लक्ष्यते" इति सिद्धार्थदृष्टान्तेन गोलाकारत्वं प्रतीयते। "प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान् स्वसंस्थया।" इति कर्दमविहारेऽप्युक्तम्। दशमे अष्टमाध्यायेऽपि "सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः। साद्रिद्वीपाब्धिभूगोलम्" इत्यादिप्रामाण्यात् पृथिवीद्वयम् अङ्गीकार्यम्। ननु स्वल्पा पृथिवी इयं चेत्तदन्या महती कुत्रास्ति। उच्यते। महती तु नक्षत्रकक्षाया ऊर्ध्वं प्रतिबिम्बरूपा। तन्मानं पञ्चमे। "लक्षोत्तरसार्धनवकोटियोजनं परिमण्डलं भूवलयस्य" इति स्थूलदृष्ट्या भकक्षोर्ध्वभाग एवायाति। अथ कथं प्रतिबिम्बवत् कथमेतदाकारा सा इति चेदुच्यते। पञ्चसहस्रयोजनात्मकस्य भूगोलस्य समन्तात् योजनान्तरितो वायुगोलस्तेन दूरकान्ताख्यकाचवत् स्वल्पाया अप्यस्या नक्षत्रकक्षाया उपरि या काञ्चनी भूमिः निर्मलाख्या तत्तेजोऽव्यवधानकारी तत्र महान् प्रतिबिम्बः समन्तात् यथा दूरकान्ते एकत्र महतोऽल्पत्वम् दृश्यते परत्राल्पस्य महत्त्वं एवं वाह्याङ्गानां चन्द्रादीनामल्पत्वम् अन्तर्गतस्य भूगोलस्य महत्त्वम्। ननु वायुगोले किं प्रमाणम् उच्यते। भूपृष्ठतः खगकक्षापर्यन्तमष्टौ पवना आवहादयः सन्ति। उभयोर्योगे जलगोलः। तदुक्तं पुलिशसिद्धान्ते। "भूवातोद्वहयोर्योगे जलगोलोऽस्ति काचवत्। दृश्यन्ते येन संलग्ना भिन्नाः सूर्यादिरश्मयः।" इति। सूर्यसिद्धान्तेऽपि "अत्यासन्नतया तेन ग्रीष्मे तीव्राः करा रवेः।" इति। अत्यासन्नत्वं दूरत्वं चानिलगोलप्रतिबिम्बकारकेण विना न संभवति। श्रीशुकैस्तु पुराणानुगैर्महत्प्रमाणमेव व्याख्यातं स्वल्पप्रमाणं तु सूचितमेव इति। अथ खगोलविरोधपरिहारोऽपि यथामति गोलदर्पणे उक्तः। "एतेन दिवोमानं तद्विद उपदिशन्ति" अस्यार्थः। एतेन भूगोलकेन्द्रेण दिवोमण्डलानां ग्रहनक्षत्रादिकक्षाणामौच्च्यपरिध्यादीनामिति। यथा "द्विदलयोर्निष्पावादीनामन्तरेणान्तरिक्षं तदुभयसन्धि" अस्यार्थः। भूगोलदिवोमण्डलयोः सन्धितमन्तरिक्षम् अन्तरेण मानं विना अन्तरिक्षं तु मानशून्यमित्यर्थः। यथा द्विदलयोर्निष्पावादीनां मानं नास्ति तद्वत् यन्मध्यगतो भगवांस्तपतां पतिः" इति। अस्यार्थः। यस्यान्तरिक्षस्य मध्यमिव मध्यं जलगोलः यथाऽन्तरिक्षस्य मध्याभावस्तथा गोलरूपत्वात् जलगोलस्यापि तत्र गतः प्रतिबिम्बरूपेण संस्थित इत्यर्थः। बिम्बस्वरूपेण तु भूकेन्द्रात्स पालदक्षयोजनेष्वस्ति एवं नव कोटय एकपञ्चाशल्लक्षाणि मानसोत्तरपरिवर्त्तनस्योपदिशन्ति इति अस्यार्थः। मानसश्चन्द्रस्तदपेक्षया उत्तरः परः शनिस्तन्मण्डलस्य मानं ज्यौतिषोक्तकरणार्थं शन्यंशयुतं जातं द्वादशकोटिमितम् अष्टषष्टिलक्षमिति। "सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः।" अस्यार्थः। सूर्यस्य बिम्बिताकस्य अण्डगोलो हिरण्मयोऽण्डपरिधिस्तयोर्मध्येऽन्तः पञ्चविंशतिकोट्यः स्युः इति। "अण्डमध्यगतः सूर्यो द्यावाभूम्योर्यदन्तरम्।" इति। अस्यार्थः। द्यावाभूम्योर्नक्षत्रकक्षभूम्योर्यदन्तरं तदेवाण्डस्य

हिरण्मयाण्डस्य तत्रान्तः सूर्यो जलगोलप्रतिबिम्बितार्को भवतीति ज्ञेयम्। भूप्रमाणविषये भारतभीष्मपर्वटीकायां नीलकण्ठचतुर्द्धरास्तु "अत्रेयं शास्त्रानुभवयोरविरोधेन भूकल्पना प्रतिभाति यथा हस्तमात्रस्य चतुरस्रस्य चतुर्विंशत्यंगुलानि परिणाह षण्णवत्यंगुलानि परिणाहः षण्णवत्यंगुलानि परिधिः किञ्चिन्न्यूनानि चतुस्त्रिंशदङ्गुलानि कर्णो भवति। एवम् अष्टादश सहस्राणि षट् शतानि च जम्बूपर्वतसंज्ञितायाः भुवः प्रमाणमुक्तम्। तदेवात्र परिधित्वेन चत्वारि सहस्राणि षट् शतानि पञ्चाशाच्च योजनान्येकैको भुजः।" इति तदेव समचतुरस्रस्य विष्कम्भप्रमाणम्। अस्य कर्णः शुल्बशास्त्रोक्तरीत्या षट् सहस्राणि पञ्च शतानि षट्सप्ततिश्च योजनानि। तस्यास्य भूचतुरस्रस्य चतुर्भिः समुद्रैर्वेष्टितस्य कोणा विदिक्षु वर्त्तन्ते तेन दक्षिणस्यां दिशि रामसेतौ द्वयोः समुद्रयोः सन्धिः एवमितरास्वपि दिक्षु समुद्रसन्धयो ज्ञेयाः। यस्त्वत्र ज्योतिर्विदां भूपरिधिः सप्ताङ्गनन्दाब्धि (४९६७) योजनसंमितोऽभिमतः स एवास्माकं चतुरस्रविष्कम्भः। खवाणरसवेदमितः (४६५०) यत्तु एतयोरन्तरं सप्तेन्दुराममितं (३१७) तदपि यजमानेनोर्ध्वबाहुना प्रपदाच्छ्रितेन वा उन्मितस्य सूत्रस्य यः पञ्चमोंशः स हस्त इति विकल्पस्य कात्यायनादिभिरुक्तत्वात् हस्तप्रमाणभेदकल्पनया योजनबहुत्वाल्पत्ववचनेन समाधेयम्। तथा भूमेश्चतुरस्रत्वेऽपि तन्मध्यस्थमत्युच्छ्रितं मेरुं प्रदक्षिणीकुर्वतः सूर्यस्य मार्गो मण्डलाकारोऽस्तीति न बौद्धाभिमतं सूर्यद्वयं कल्प्यं भवति। अन्यत्सर्वं युक्त्यविरुद्धं ज्योतिर्विन्मतमेवात्रानुसर्तव्यम्। यत्तु पुराणे पञ्चाशत्कोटियोजनं भूगोलप्रमाणमित्युक्तं तदपि "अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्।" इत्यनेनैव प्रत्युक्तम्। अव्यवस्थितत्वान्मतानामनिर्वचनीयवाद एव शरणीकरणीय इत्येवं परम्। यद्वा। सर्वत्र यत्प्रमाणं दृष्टं तद्दिशांशेन तद्बोध्यम्। तेन पञ्चाशत्कोटिस्थाने सार्धकोटिद्वयविस्तारा भूमिः लक्षस्थाने पञ्चसहस्रविस्तारो जम्बूद्वीपः नवसहस्रस्थाने सार्धचतुःशतयोजनायामं भरतखण्डमिति।

अस्मिन् पक्षे उदाहरिष्यमाणवैष्णवादिवाक्ये जम्बूद्वीपश्चतुर्दलकमलाकारः तस्य प्रान्तपरिधिः षट्शताधिकान्यष्टादशयोजनसहस्राणि त्रयस्त्रिंशच्छतानि मध्यव्यासः तेन फलतः पञ्चसहस्रव्यासता ज्ञेया। एवं सति यदा प्रागायतो हिमाचलः पूर्वपश्चिमसमुद्रौ स्पृशति तदाऽयं भारतवर्षस्त्रिकोणो भवति। तेन पृथिवी त्रिकोणेति लोकप्रवादोऽनुभवश्चानुसृतो भवति। अन्यथा भारतवर्षस्य धनुराकारत्वे भूमध्यरेखायाः लङ्कातः सेतुमार्गेण प्रस्थितायाः "पुरी रक्षसां देवकन्याऽथ काञ्ची सितः पर्वतः पर्युलीवत्सगुल्मम्। पुरी चोज्जयिन्याह्वया गर्गराटं कुरुक्षेत्रमेषा भुवो मध्यरेखा॥" इति स्मर्यमाणया मध्यरेखया कुरुक्षेत्रस्य रामसेतुः सन्निहितो द्वारका च दूरे स्यात् द्वारकासमीपे सेतुश्च दूरे इति प्रत्यक्षमुपलभ्यते। भारतवर्षं त्रिकोणमित्येषैव कल्पना साधीयसीति दिक् इत्याहुः। मया मन्दमतिनाऽप्यत्र किञ्चिद्वाच्यं तच्च श्रीमद्भागवतपर्यङ्के स्फुटीभविष्यति। ताराग्रहादिविन्यासः शिशुमारसंस्थानं च यद्यपि मूले लिखितं तथापि चित्रं विना तथारूपेण बोधयितुं न शक्यते। ताराणां ध्रुवकाः पुराणेषु नोपलभ्यन्तेऽतः सिद्धान्तशिरोमण्युक्तध्रुवकैश्चक्रे स्थानानि प्रकल्प्य प्रदर्श्यन्ते शराश्चात्र ध्रुवस्थानाभिमुखा एव लिखिताः। तारासंस्थानकल्पनेन शिशुमारसंस्थानं कल्प्यम्। इलावृतखण्डादिचित्राणि स्कन्धान्ते लिखितानि॥ १७॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चविंशोऽध्यायः॥ २५॥

—:❀:—

## अथ षड्विंशोऽध्यायः

### राजोवाच

**महर्षे एतद् वैचित्र्यं लोकस्य कथमिति ॥ १ ॥**

षड्विंशे तु ततोऽधस्तान्नरकस्थितिरुच्यते । पापिनां यातनां याम्या गद्यान्यत्राब्धिमार्गणाः ( ५४ ) ॥

चत्वार्युवाचेति पञ्चनवति ( ९५ ) स्युरनुष्टुभः ॥ २६ ॥

पुंसो गतयः उच्चावचाः विसदृश्य इति भोगवैचित्र्यमुक्तं तत्कुत इति । पृच्छति—महर्षे इति । हे महष ! लोकस्य एतद्वैचित्र्यं कथम् ॥ १ ॥ त्रिगुणत्वादिति । त्रिगुणत्वाद्धेतोः कर्त्तुः त्रिविधश्रद्धया कर्मगतयोऽपि पृथग्विधा अतस्ता गतयस्तारतम्येन सर्वा एव सर्वस्य भवन्ति । तथा हि सात्त्विकया श्रद्धया धर्म ततः सुखं राजस्या धर्माधर्मौ ततः सुखं दुःखं च । तामस्या पापं ततो दुःखमोहौ श्रद्धानां तारतम्याच्च सुखादीनामपि तारतम्यम् । तत्रापि कालादिभेदात्सर्वस्यैव सर्वा एवेति न हि कश्चित्सर्वदैव सात्त्विकश्रद्धावानेव तिष्ठति । एवं राजसश्रद्धावानेव वा अतः कालभेदेन सर्वविधस्य जीवस्य सर्वविधा गतयः ॥ २ ॥ तत्र धर्मस्य फलानि स्वर्गादीनि यथा तथा अधर्मस्य नरकादीनि दर्शयति—अथेति । न केवलं धर्मकर्तुरेव श्रद्धावैचित्र्यात्फलं दुःखमपि विसदृशं भवति । तथा हि प्रमादेनाधर्मकरणादल्पत्वं ज्ञानेन मध्यमत्वं नास्तिकत्वेन पूर्णत्वं तमस्त्रैविध्यस्यापि कारणत्वं दर्शयति ः या इति । अतो हि अनाद्यविद्यया अनादिजन्मपरम्परया देहादावहंममाध्यासेन कृतकामानां कृतमनोरथानां पुंसां संबन्धिन्यस्तत्परिणामलक्षणाः अधर्मफलभूताः सृतयो नरकाः सहस्रशः प्रवृत्ताः परमेश्वरेण विरचिताः सन्ति तासां मध्ये प्राचुर्येण बाहुल्येन कश्चित्प्रधाना अथेदानीं वर्णयिष्यामः ॥ ३ ॥ नरका इति । हे भगवन् ! नरका नाम किं भूमावेव देशविशेषा अथवा त्रिलोक्या। ब्रह्माण्डाद्बहिः आवरणेषु मध्ये सन्ति आहोस्वित्तदन्तराल एव भूभिव्यतिरिक्ते ॥ ४ ॥ अन्तराल इति । त्रिजगत्यास्त्रिलोक्यास्त्वन्तराले मध्य एव ते सन्ति तर्हि कुत्र सन्तीत्यपेक्षायामाह—दिशीति । भारतवर्षापेक्षया दक्षिणस्यां दिशि भूमेः सप्तपातालवत्याः अधस्ताज्जलाद्गर्भोदकसंज्ञकादुपरिष्टात् यत्त्रिंशत्सहस्रयोजनान्तरालमुक्तं तन्मध्ये यस्यां दिशि अग्निष्वात्तादयः पितृगणाः परमेण समाधिना भगवन्तं ध्यायन्तस्ततः स्वगोत्राणां प्राणिनां सत्या आशिषः कामभोगान् आशासानाः निवसन्तीत्यन्वयः । "कर्मणा पितृलोकः" इति श्रुतेः । "यत्र पितरो मादयन्ते" इत्याग्नीध्रप्रकरण उक्तत्वाच्च सुखभोगस्थानविशेषः पितृलोक उपर्यप्यस्तीति ज्ञेयम् । स तु चन्द्रमण्डल इत्याहुः ॥ ५ ॥ यत्रेति । यत्र ह वाव पितृराजो भगवान् वैवस्वतो रविपुत्रो यमः न उल्लङ्घितं भगवच्छासनं येन तथा परेतेषु मृतेषु स्वविषयं स्वदेशं दण्डस्थानं प्रापितेषु जन्तुषु प्राणिषु यथा कर्मावद्यं कर्मजन्यं पापमनतिक्रम्य दोषं तत्फलरूपं दुःखमेव दमं दण्डं धारयति । तादृश्या बिभीषिकया जीवान्भगवदुन्मुखीकर्तुम् इत्यर्थः । न च स किंचिदन्यथा कर्तुं शक्नोति ॥ ६ ॥ तत्रेति ॥ ७ ॥ तामिस्र इति ॥ ८ ॥ मतान्तरमाह—किं चेति ॥ ९ ॥ तत्रेति ॥ १० ॥ अनशनेति । अनशनादिभिर्यातनाभिर्यात्यमानः पीड्यमानो जन्तुर्यत्र तामिस्रप्रायेऽन्धकारबहुले स्थाने कश्मलं बहुदुःखमासादितः प्रापितः सन्नेकदैव तदैव मूर्च्छामुपयाति ॥ ११ ॥ एवमिति युग्मम् । यस्तु पुरुषं स्वामिनं वञ्चयित्वा तद्दारादीनुपभुङ्क्ते स एवमेवान्धतामिस्रे नरके बलान्निपात्यते । यत्र निपात्यमानः यातनास्थः शरीरी यथा वृश्च्यमानमूलश्छिद्यमानमूलः वनस्पतिस्तथा वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति तस्मात् अन्धत्वापादकान्धकारयोगात् तमन्धतामिस्रमुपदिशन्ति ॥ १२–१३ ॥ यस्त्विति । यस्त्विह वै एतच्छरीरमहमिति इदं धनापत्यकलत्रादि ममेति मत्वा भूतद्रोहेण केवलं कुटुम्बमेवानुदिनं पुष्णाति स तद्देहं कुटुम्बं चेहैव विहाय तदशुभेन प्राणिद्रोहजनितपापेन रौरवे निपतति। भूतद्रोहेणत्युक्त्या भूतद्रोहं विना तु केवलाहंममकाराभ्यां रौरवे न पतति इति बुध्यते ॥ १४ ॥

ये इति । रुरवो भूत्वा कर्माण्येव तथा परिणामं प्राप्य रुरुर्भारश्टङ्गाख्य इति स्वामिपादाः । रुरुशब्दस्य स्वयं मुनिनैव व्याख्यातत्वात् लोकेष्वप्रसिद्ध एवायमिति सन्दर्भः ॥ १५ ॥ रुरुरिति । सर्पादप्यतिक्रूरस्य सत्त्वस्य प्राणिविशेषस्य अपदेशः संज्ञा ॥ १६ ॥ एवमिति । यः प्राणिद्रोहेण केवलं देहंभरः स्वदेहपोषणपरस्तं यत्र महारौरवे पतितं पुरुष क्रव्येण निमित्तेन मांसार्थं

घातयन्ति। स्पष्टं शेषम्॥ १७॥ यस्त्विति। उग्रः क्रूरस्वभावः प्राणतः सजीवानुपरन्धयति पचति अपकरुणं निष्कृपम्॥ १८॥ यस्त्विति। तप्तखले तप्तसमे देशे॥ १९॥ यस्त्विति। अपगतः भ्रष्टः पाखण्डं वेदविरुद्धमार्गमुपगतः प्राप्तः। कशया वेत्रेण॥ २०॥ तत्रेति। तालवनस्यासिवद्वर्त्तमानैः पत्रैः हा हतोऽस्मीति वदन्निति शेषः। स्वधर्महा वेदविहितस्वधर्मत्यागी पाखण्डानुगतं पाखण्डमार्गस्वीकारात् प्राप्तम्॥ २१॥ यस्त्विति। अदण्ड्ये दण्डानर्हे निरपराधिनि ब्राह्मणे सापराधेऽपि शारीरदण्डं ताडनादि। ब्राह्मणस्य दैहिकदण्डनिषेधात्॥ २२॥ तत्रेति। तत्रातिबलैर्निष्पिष्यमाणावयवो यथैवेह इक्षुदण्डः शब्दं करोति तथा हा हतोऽस्मीत्यार्त्तस्वरेण स्वनयन् रुदन् कश्मलं मोहमुपगतः सन् कश्चिन्मूर्च्छितो भवति यथैवेहादृष्टदोषा निर्दोषास्तेनोपरुद्धा दण्डिताः सन्तो मोहमुपगता मूर्च्छिता भवन्ति स्म तथेत्यर्थः॥ २३॥ यस्त्विति। यस्त्विह वै पुरुषेणेश्वरेण पुरुषेण स्वयं वा ब्राह्मणादिभावेन वा विधिनिषेधपूर्वकम् उपकल्पिता वृत्तिर्यस्य विविक्ता ज्ञाता परव्यथा येन सः पापः ईश्वरेणैवोपकल्पिता मनुष्याणामन्नभक्षणवद्रक्तपानादिलक्षणा वृत्तिर्येषां तेषाम्। तथा न विविक्ता न विज्ञाता परव्यथा यैः अविवेकिभिस्तेषां भूतानां व्यथां पीडामाचरति स तेषामभिद्रोहेण द्रोहजनितपापेन परत्र परलोके यमपुरेऽन्धकूपसंज्ञके नरके पतति। अयं भावः। जलौकामत्कुणादीनां मनुष्यरक्तपानादिवृत्तिरीश्वरेणैव कल्पिता। न च ते परव्यथां जानन्ति नापि शास्त्राधिकारिणः। अतस्तेषां परपीडायां दोषाभावः। मनुष्यस्तु शास्त्राधिकारी अहिंसादिकं च तस्य शास्त्रेण विहितं तदतिक्रमात्तस्य नरकपातो भवत्येवेति॥ २४॥ तत्रेति। ये केचनानेन जन्तुदुःखाभिज्ञेन अभिद्रुग्धाः विहिंसितास्तैः पशुमृगादिभिः जन्तुभिः सर्वतोऽभिद्रुह्यमाणः अत एव विहता निद्रारूपा निर्वृतिः सुखं यस्य सः न लब्धमवस्थानं येन सः तमसि परिक्रामति॥ २५॥ यस्त्विति। यत्किञ्चन भक्ष्यादिकमुपनतं प्राप्तं तदसंविभज्यातिथिबालवृद्धादिभ्यो यथायोग्यविभागेनादत्त्वा स्वयमेवाश्नाति तथा न निर्मिताः पञ्चयज्ञा येन सः अत एव वायसैः काकैः संस्तुतः समत्वेन वर्णितः वायसतुल्यैर्जनैः स्तुतो वा कृमिभोजनसंज्ञके निपतति॥ २६॥ तत्रेति। अप्रमत्तसंविभक्तमप्रहुतं चात्तीति सः स्वयमपि कृमिभोजनः कृमीनेव भुञ्जानो यावत्तत् यावन्ति योजनानि तत् कृमिकुण्डं तावन्ति वर्षाणि। यद्वा। यावत् तदसंविभागादिनिमित्तं पापं यावदवधारणे इति समासः। तावदनिर्वेशमकृतप्रायश्चित्तमात्मानं यातयते पीडयति॥ २७॥ यस्त्विति। निष्कुषन्ति छिन्दन्ति। अनेनैव तस्य संदंश इति नामनिरुक्तिर्ज्ञेया॥ २८॥ यस्त्विति। तिग्मया तप्तया सूर्म्या प्रतिमया॥ २९॥ यस्त्विति। सर्वाभिगमः पश्वादीनप्युपगन्ता॥ ३०॥ अपाखण्डाः सत्कुलजाः सन्तः। अपाखण्डानिति पाठे सेतुविशेषणम्॥ ३१॥ तस्यामिति। स्वाघेन स्वकृतपापेन यस्यां मुह्यमाना आत्मना देहेनासुभिः प्राणैश्चावियुज्यमानाः स्वकर्मफलं स्मरन्त उपतप्यन्ते॥ ३२॥ विण्मूत्रेति नदीविशेषणं निरयपरिखाभूतायामित्युक्तमेव स्पष्टयति॥ ३३॥ ये त्विति। पशुचर्यां पशुवत्स्वेच्छाचारं कुर्वन्ति ते पूयादिपूर्णार्णवे पूयोदसंज्ञके नरके निपतन्ति॥ ३४॥

अतीर्थे विहितायज्ञश्राद्धादेरन्यत्र विध्यन्तीति प्राणनिरोधो दर्शितः॥ ३५॥ ये त्विति। दाम्भिका अनुष्ठानतत्त्वमज्ञात्वाऽपि स्वधार्मिकत्वप्रकाशनार्थं यज्ञानुष्ठाने प्रवृत्ताः विशसन्ति मारयन्ति निरयपतयः तदधिकारे स्थापिता यमपुरुषाः॥ ३६॥ रेतः पाययति वशीकरणकार्यविशेषार्थं रेतःपानं कारयति। यद्वा काममोहितत्वात् तस्या मुखमेव योनिं प्रकल्प्य रममाणच्युतं रेतः पाययति॥ ३७॥ ये त्विति। यमदूताः श्वानः संवत्सरदिनरात्रिरूपाः सरभसं ससंभ्रमं यथा भवति तथा तान् खादन्ति॥ ३८॥ यस्त्विति। द्रव्यविनिमयक्रयविक्रयादौ निरवकाशे निरालम्बे॥ ३९॥ अवीचिमच्छब्दार्थमाह—यत्रेति। वीचिस्तरङ्गः जलाभावेन वीचिरहितत्वादवीचिमदित्यर्थः। तिलश इति अत्युच्चनिपतनादिति शेषः॥ ४०॥ यस्त्विति। यस्तु विप्रस्तत्कलत्रं वा अन्यो वा व्रतस्थः सन् प्रमादतः मोहात्सुरां पिबति तथा राजन्यो वा वैश्यो वा इहास्मिन् जन्मनि यज्ञादौ प्रमादतः सोमपीथः कृतसोमपानो भवति तेषामित्यन्वयः। राजन्यवैश्ययोः सोमस्थाने फलचमसविधानात् सोमपाननिषेधाच्च। तथा च श्रुतिः। "न्यग्रोधस्तन्तीराहृत्य ताः संपिष्यता दधत्युपमृज्य तमस्मै भक्ष्यं संप्रयच्छेन्न सोममिति वह्निना द्रवत् कार्ष्णायसं लोहम्"॥ ४१॥ अथेति। आत्मसम्भावनेनेति अहं महान् विद्यादिगुणवान् सर्वश्रेष्ठ इत्यभिमानेनेत्यर्थः। वरीयसः संमानयोग्यान् श्रेष्ठान्न बहु मन्येत स जीवन्नपि मृत एव सन् मृत्वा क्षारकर्दमे लवणपङ्के पातितो दुरन्ता यातनाः अनवसानदुःखानि हि अश्नुते॥ ४२॥ ये त्विति। पुरुषस्य मेधेन हिंसया भैरवादीन् यजन्ते तान् पुरुषान् ताश्च स्त्रियः ये च पशव इह तैर्निहतास्ते कामरूपाः रक्षोगणा भूत्वा यातयन्तः पीडयन्तः सौनिका इव पशुमारका कसाई इति ख्याता इव स्वधितिना शस्त्रविशेषेणेति यथेह ते पुरुषादाः सन्तः पूर्वमनृत्यंस्तद्वत्॥ ४३॥ ये त्विहेति। अनागसोऽहिंस्रान् जन्तून् वैश्रम्भकैर्विश्वासोत्पादनोपायैः उपविश्रम्भय्य विश्वासमुत्पाद्य उपसृतानुगतान् कृतविश्वासान् शूलादिषु प्रोतान् कृत्वा तैर्जिजीविषून् क्रीडनकतया तान् क्रीडनकवत् यातयन्ति तेऽपि चेत्यादि स्पष्टम्॥ ४४॥ ये त्विति। उल्बणस्वभावा भयङ्करस्वभावाः॥ ४५॥ यत्रेति। बिलेशयान् मूषकान्॥ ४६॥ ये त्विति। अन्धावट निरुच्छ्वासबिलं कुशूलं धान्यगर्तम् आदिशब्दात् जलादिनिरोधग्रहणं सगरेण विषसहितेनाग्निना जातेन धूमेन सह निरुन्धन्ति॥ ४७॥ य इति। अतिथयोऽज्ञातपूर्वकाः अभ्यागताः ज्ञातपूर्वकाः तान् पापेन वक्रीकृतेन प्रसह्य हठात्॥ ४८॥ य इति। यस्त्विह वै आढ्याभिमतिः धनगर्वितः अहङ्कृतिः श्रेष्ठोऽहमित्यभिमानी तिर्यक्प्रेक्षणः वक्रदृष्टिः सर्वतोऽभिविशङ्की सर्वत्र

पितृगुर्वादिषु अपि अयं मे धनं चोरयिष्यतीति विशङ्कमानः हि यस्मात् अर्थविनाशचिन्तया परिशुष्यमाणं हृदयं वदनं च यस्य सः अत एव निर्वृतिं सुखमनवगतोऽप्राप्तः ग्रह इव ब्रह्मराक्षसवत्परार्थं धनं रक्षति अत एव तस्य धनादेरुत्पादने उत्कर्षणे संवर्धने संरक्षणे च शमलं पापं गृह्णातीति तथा सोऽपि सूचीमुखे नरके निपतति ॥ ४९ ॥ यत्रेति। वित्तग्रहं धनलुब्धं पापव्याप्तं पुरुषं वायकाः कन्थादिनिर्माणकर्त्तारः सूत्रैः परिवयन्ति सूत्रप्रोतान् कुर्वन्ति ॥ ५० ॥ एवंविधा इति। इतरत्र स्वर्गादौ सुखभोगस्थाने विशन्ति इह मनुष्यलोके भारतभूमौ वा पुनर्भवे पुनर्जन्मनिमित्तस्थाने उभयोर्धर्माधर्मयोः शेषाभ्यां निविशन्ते। आदावेव द्वितीय-स्कन्धादावेव वैश्वानरं यातीत्यादिनेति शेषः ॥ ५१ ॥ एतावानिति। चतुर्दशधा चतुर्दशभुवनप्रकारेण विकल्पितो भगवता रचितः पुराणेषु उपगीयते उपगेयमुपनिषद्गीतं रूपं श्रद्धाभक्तिभ्यां विशुद्धा बुद्धिर्यस्य अग्राह्यमपि निर्गुणं रूपमपि ॥ ५२ ॥ श्रुत्वेति। यतिः भगवतः स्थूलं सूक्ष्मं चेति द्वे रूपे यथा यथावच्छ्रुत्वा स्थूले निर्जितं स्थिरीकृतमात्मानं मनः धिया शनैः सूक्ष्मं रूपं प्रति नयेत् ॥५३॥ भूद्वीपेति। भूद्वीपादीनां संस्था या मया तव गीता तदिदं सकलजीवनिकायानां धाम आश्रयभूतमीश्वरस्याद्भुतं स्थूलं वपुरस्ति। भगणो ज्योतिर्गणः ॥ ५४ ॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धे पं० गङ्गासहायकृतायामन्वितार्थप्रकाशिकायां टीकायां षड्विंशोऽध्यायः ॥ २६ ॥

हे गोपबालक ! भवानवलम्ब्य लीलां चिक्षेप नः किमिति हन्त तमोऽन्धकूपे।
अस्यां महाविपदि सन्ततमर्दितांस्त्वं पश्यन् कदा नु करुणामवलम्बितासे ॥ १ ॥

**समाप्तोऽयं पञ्चमस्कन्धः ॥ ५ ॥**

